# अद्वैतसिद्धिः

बालबोधिन्याख्यया

व्याख्ययोद्भासिता

प्रथमो भागः

तारा पब्लिकेशन्स

वाराणसी

१९७१

प्राच्यभारती ग्रन्थमाला-१२

# अद्वैतसिद्धिः

डी. लिट्. इत्युपाधिधारिणा तर्कसांख्यवेदान्ततीर्थेन बागचीत्युपाह्वेन
महामहोपाध्यायश्रीमद्योगेन्द्रनाथदेवशर्मणा प्रणीतया

बालबोधिन्याख्यया

व्याख्ययोद्भासिता

मिथिलाशोधसंस्थाननिदेशकेन डी. लिट्. इत्युपाधिधारिणा
बागचीत्युपाह्वेन श्रीशीतांशुशेखरदेवशर्मणा सम्पादिता

प्रथमो भागः

तारा पब्लिकेशन्स
वाराणसी
१९७१

Prachya Bharati Series—12

# ADVAITASIDDHI

*With the Commentary*

# BĀLABODHINĪ

BY

MM. DR. YOGENDRANATH BAGCHI

*D. Litt., Tarka-Sāṁkhya-Vedāntatīrtha.*

EDITED BY

DR. SITANSUSEKHAR BAGCHI,

*M. A., LL. B., D. Litt.*

*Director, Mithila Research Institute, Darbhanga*

VOL. I

TĀRĀ PUBLICATIONS

VĀRĀṆASĪ

1971

# विषयानुक्रमणिका

# सम्पादकीयनिवेदनम्

ब्रह्मविदां वरिष्ठेन ब्रह्मभूयङ्गतेन वागचीत्युपाह्वेन महामहोपाध्यायश्रीमद्-योगेन्द्रनाथदेवशर्मणा प्रणीता बालबोधिनीनामधेयाऽद्वैतसिद्धेष्टीका मूलेन समायुता वेदान्तविद्यानुशीलनपरायणानां पुरत उपस्थाप्यते। सुविदित एवायमर्थो वेदान्तदर्शनपारावारीणानां यत् श्रीमन्मधुसूदनसरस्वत्या विरचिताऽद्वैतसिद्धिः नव्यवेदान्तप्रस्थाने मूर्द्धन्यभूता कृतिः। यदि नाम केनचित् बाह्यवस्तुनाऽयं महाग्रन्थ उपमीयेत, तर्हि शैलाधिराजस्य उत्तुङ्गतया वारांनिधेश्चागाधतया तुलामधिरुह्यात्। यथा वारिधिः, यथा च हिमवान् गिरिः अनन्तरत्नानां निधी तथैवायमनुत्तमो ग्रन्थाधिराज इति वेदान्त-विद्यानिष्णातैरभिमन्यते। न केवलं भारतवर्षस्य अपितु विश्वस्य दर्शनशास्त्रीय-मौलीभूतनिबन्धानां तुलनात्मिका समीक्षा इममेव सिद्धान्तं द्रढयति यत् तेषु एकोऽपि अतलस्पर्शत्वेन गाम्भीर्येण च अद्वैतसिद्धेः कक्षां गाहितुं नार्हति।

ग्रन्थस्यास्य टीकान्तरेषु सिद्धिव्याख्याप्रभृतिषु सत्स्वपि श्रीमद्गौडब्रह्मा-नन्दनिर्मिता लघुचन्द्रिका गुरुचन्द्रिका च अद्वैतिनां सम्प्रदाये भूयिष्ठमात्रया महीय्येते। अस्य कारणं तु अतिरोहितमेव। अद्वैतसिद्धेः व्याख्याच्छलेन लघुचन्द्रिकायां गौडब्रह्मानन्देन यादृशमपूर्वमेवं वैदुष्यं प्रख्यापितं तत् भारतीयदर्शनशास्त्रमधीयानान् चित्रीयते। अतः अस्त्येवास्या विप्रतिपत्तेः पर्याप्तः प्रसरः—यन्निरतिशयं गरिमाणं बिभ्राणा लघुचन्द्रिका गुरुचन्द्रिका चेति व्याख्याद्वयी यदा वर्तते, तदा बालबोधिन्याः प्रणयने न मनागपि प्रयोजनमुप-लक्ष्यते।

अत्रोच्यते। न विस्मर्तव्यं यद् बालबोधिनीकारः स्वकृतिसमाप्तेः प्रागेव विज्ञानघने ब्रह्मणि विलयं गतः। अतो नाहमद्य बालबोधिनीकारस्य निरुक्त-विमतेः निराकरणप्रतिवचनं स्वमनीषिकया उन्नेतुं प्रभवामि; तथापि बालबोधि-नीटीकायाः सम्पादनविधौ नियुक्तोऽहं सम्पादकस्य गुरुभारमपि न जिहासामि। अतः स्वमतिप्रभवं प्रदर्शितविप्रतिपत्तिव्युदासकं प्रत्युत्तरं वेदान्तविद्याभ्यासव्य-सनिनां समीपं सादरं उपकल्पयामि। अद्वैतसिद्धिं व्याचक्षाणा लघुचन्द्रिका गुरुचन्द्रिका च अद्वैतसिद्धिं खण्डयता न्यायामृततरङ्गिणीकारेण ये आक्षेपा उत्प्रेक्षिताः, व्यापारान्तरमुपसर्जनीकृत्य तानेव समादधाते। अतो विषयान्त-रविमर्शने श्रीमद्गौडब्रह्मानन्द उदास्त एव। साधु च सुष्ठु च तेन कृतम्। अन्यथाकरणे च न केवलं टीकाद्वयमतीव विपुलतामधिगच्छेत्, टीकाकारस्य च अकौशलं शस्यात्; स्वयं अभीष्टार्थोऽपि सिद्धिं न विन्देत। परन्तु बालबोधि-नीकारेण न परमतं विविदिषया, न वा स्वस्य निरतिशयं वैदुष्यं चिख्यापयिषया

टीकेयं निरमायि। किन्तु अद्वैतसिद्धेर्मूलस्य गूढातिगूढरहस्योद्घाटनप्रसङ्गे प्राचीननवीनोभयमतमनुसंदधानेन स्वसिद्धान्तसेतुना समबन्धि; उभयोर्मतयोः समन्वयश्च लोकोत्तरया प्रतिभया विशदं प्रादर्शि। अद्वैतसिद्धिकारस्योपजीव्यान् ग्रन्थान् अनन्यसाधारणधीषणया विनिर्मथ्य अद्वैतसिद्धिकारस्य स्वकीयचिन्तायां मौलिकत्वमेतावदेव इति स्पष्टमवाधारि। लघुचन्द्रिकायाः व्याख्यानमुद्धृत्योद्धृत्य सुखप्रतिपत्त्यर्थं तस्य सारांशो विशदीकारि। बालबोधिनीकारस्य इदं स्वमतं यत् अद्वैतसिद्धिकारः स्वकीयसिद्धान्तभेदान् विवरणाचार्येभ्य एव भूम्ना सञ्जग्राह। विवरणस्य भासैवाद्वैतसिद्धिर्विभाति। बहुना किमिहोक्तेन—अद्वैतसिद्धिः विवरणस्य नव्यसरणमनुसारिणी व्याख्या इत्येवावधार्यताम्।

अखण्डवङ्गदेशस्य पूर्वभागे मयमनसिंहेत्यभिधाने मण्डले सुसङ्गदुर्गापुरनामा महान् स्फीतो ग्रामवरः। अस्यैव ग्रामस्योत्तरेण गाडोइत्यभिधानशैलाभ्यन्तरात् प्रसन्नसलिला स्फटिकधाराकल्पा प्रवहति सोमेश्वरी नदी। तया स्रोतस्वत्या परिगतः ग्रामोत्तमः तपोनिर्धूतकल्मषाणां ब्राह्मणानां सदाचारपूतानां वर्णान्तराणाञ्च निवासभूमिरासीत्। तत्र शाण्डिल्यान्वयसम्भूतः ब्रह्मवर्चससम्पन्नः अवनितलामृतभुजां वरेण्यः त्रय्यां पारङ्गतः जगताम् आह्लादकः जगच्चन्द्रवागचीतिप्रथिताभिधानः वारेन्द्रब्राह्मणः। स तु कालक्रमेण स्वानुरूपायां जायायां श्रीमत्यां शारदासुन्दर्यां देव्यां शिखित्रयकल्पान् श्रुतिशास्त्रपारगान् त्रीन् तनूजोत्तमान् अजनयत्। तत्र ज्येष्ठः श्रीमच्छशधरः, मध्यमः श्रीमद्योगेन्द्रनाथः, कनिष्ठः श्रीमद्हेमेन्द्रचन्द्रः। अयमेव मध्यमः श्रीमद्योगेन्द्रनाथः बालबोधिनीकारः यस्य अष्टादशविद्याप्रस्थानेषु स्वातन्त्र्यं तेनैव विरचितग्रन्थराशय उद्घोषयन्ति। तस्य जीवनचरितवृत्तान्तः आ च सुसङ्गदुर्गापुराख्याद् ग्रामाद् आ च हरिद्वारात् परिव्याप्तः। अतस्तस्य पूर्णावयवविवरणं सहस्रपत्रग्रन्थेनापि ग्रन्थितुं न शक्यते। अत उपरम्यते बहुलायासकराद्व्यापारात् ग्रन्थवैपुल्याधायकत्वाच्च। यदि कालान्तरेऽस्यावसर आविर्भवेत् तर्हि तस्य जीवनचरितेतिवृत्तं साङ्गोपाङ्गं निबद्धाऽस्मि।

बालबोधिनीकारस्य नव्यन्याये विद्यागुरवः आसन् तर्कतीर्थोपाधिभाजः दिवङ्गताः महामहोपाध्यायाः श्रीमच्चण्डीदासभट्टाचार्याः श्रीमद्गोपालनाथभट्टाचार्याश्च। तस्य तु ब्रह्मविद्यागुरव आसन् दिवङ्गता महामहोपाध्यायाः द्रविडभूगीर्वाणशिरोमणयः श्रीमल्लक्ष्मणशास्त्रिमहोदयाः। बालबोधिनीकारः ब्रह्मविद्यागुरून् अधीतिबोधाचरणप्रचारणैः अष्टादशानां विद्याप्रस्थानानाम् अद्वितीयनिधानभूतान् अमन्यत। बालबोधिनीकारेण विरचितस्य भारतीयदर्शनशास्त्रसमन्वयाख्यस्य निबन्धस्य भूमिकाया अध्ययनेनैव विदुषामवगतिर्भवेत् यत् कीदृश्या स्वरसवाहिन्या श्रद्धया भक्त्या च ब्रह्मविद्यागुरवः उपासितास्तेन।

प्रसङ्गवशात् आयातः एको विषयः विशेषत उल्लेखार्हतां भजते। बालबोधिनीटीकायाः प्रत्येकप्रकरणसमाप्तौ या पुष्पिका निबद्धा, तस्याः पर्यालोचनेन अध्येतारः भारतीय-सभ्यताया अनन्यसाधारणवैशिष्टीं परिचिनुयुः। बालबोधिनीकारः महामहोपाध्यायः श्रीमद्‌योगेन्द्रनाथदेवशर्मा वङ्गदेशस्थवरेन्द्रभूमिवास्तव्यः कुलीनब्राह्मणः आसीत्। पक्षान्तरे च महामहोपाध्यायाः श्रीमल्लक्ष्मणशास्त्रिमहोदया द्राविडब्राह्मणाः इति प्रथितोऽयं विषयः। वङ्गदेशसम्भूत एको ब्राह्मणः निजनिर्मितटीकायाः प्रतिप्रकरणसमाप्तौ प्रत्येकपुष्पिकायां केवलं द्राविडब्राह्मणानामन्तेवासिरूपेण स्वात्मानं परिचाययन् कृतकृत्यतामन्वभवत्। ईदृश्यां बृहदायतनोपेतायां बालबोधिनीटीकायां न कुत्रापि वङ्गदेशस्य, पितुर्मातुर्वा नामोल्लेखोऽपि बालबोधिनीकारेण अकारि। अद्य प्रभृति सहस्रसम्वत्सरे व्यतीते बालबोधिनीमधीयानाः पुष्पिकासमीक्षणात् बालबोधिनीकारस्य केवलम् एतावन्मात्रमेव परिचयं लभेरन् यद्बालबोधिनीकारः महामहोपाध्यायानां श्रीमल्लक्ष्मणशास्त्रिद्राविडमहोदयानामेकः अन्तेवासी बभूव। एवमेव अखण्डं भारतवर्षं स्वकीयावासभूमिं मत्वा बालबोधिनीकारः स्वयं यस्य प्रदेशस्याधिवासी तस्याभिधानमनुल्लिख्य भारतवर्षस्य अखण्डतायां स्वकीयाम् अकुण्ठितां श्रद्धामप्रथयत्। तथैव ब्रह्मविद्यागुरूणामन्तेवासिरूपेण स्वकीयपरिचितिख्यापनातिरिक्तं परिचयान्तरप्रदानौचित्यं नान्वभवत्। इदमनौपम्यं वैशिष्ट्यं गुरुशिष्यपरम्परारूपाद्वैतवेदान्तविद्यावंशम् अपरिसीममहिम्ना मण्डयते। न केवलं विश्वस्य अपरापरभूमिभागे, अपि च भारतवर्षेऽपि सम्प्रदायान्तरे इयं मर्यादा सुदुर्लभा एव।

अपरमपि विषयं वेदान्ताध्वन्याः विदाङ्कुर्वन्तु। श्रीमद्‌योगेन्द्रनाथः प्रौढावस्थायाः प्रारम्भे एव बालबोधिनीं प्राक्रामत। प्रथमतः तेन अद्वैतसिद्धेः मिथ्यात्वसामान्योपपत्तिप्रकरणपर्यन्ता वङ्गभाषयोपनिबद्धा तात्पर्योपबृंहिता बालबोधिनीटीका व्यधायि। वेदान्तविद्याभिष्णातेन ब्रह्मत्वाधिगतेन श्रीमद्राजेन्द्रनाथघोषमहोदयेन[1] महता प्रयत्नेन सम्पाद्य प्रकाशिता। तदनन्तरं दीर्घकालोऽतिक्रान्तोऽभवत्। महामहोपाध्यायः श्रीमद्‌योगेन्द्रनाथोऽपि कालस्य विपरिवर्तनानुसारं क्रमशः वार्द्धक्यावस्थायामुपनीतोऽभवत्। कालपरिपाकवशात् अद्वैतसिद्धेः अध्ययनाध्यापनप्रवृत्ति दिनाद्दिनान्तरे तनूयमानामवलोक्य परमाराध्यतमाः श्रेयसां श्रेष्ठा अस्मद्‌गुरुचरणाः डाक्टरेत्युपाध्यलङ्कृताः श्रीमत्सातकडिमुखोपाध्यायमहाशयाः बालबोधिनीटीकायाः समाप्तिविधानाय श्रीमद्योगेन्द्रनाथं भूयोभूयः प्रार्थयन्ते स्म। अस्मिन् समये श्रीमतो योगेन्द्रनाथस्य वयः त्र्यःसप्ततिवर्षाणि अत्यक्रमत्। आदौ वार्द्धक्यावस्थायां वर्तमानः जराजीर्णदेहः

---

१. सन्यासाश्रमे तु चिद्घनानन्दपुरीत्यभिधीयेन—

श्रीमद्‌योगेन्द्रनाथः बालबोधिन्याः समाप्तिसम्पादने स्वकीयासामर्थ्यमेव प्रकटीकृतवान्; पश्चात् गुरुवर्याणां मुखोपाध्यायमहोदयानां व्यग्रतातिशयमवगम्य स्वकीयं वार्द्धक्यमविगणय्य बालबोधिनीं समाप्तिं निनीषुः पुनरपि लेखनीमदधात्। परन्तु बालबोधिनीविरचनान्तःपातिकाले एव जरसाभिभूतं शरीरं विहाय परंब्रह्माधिगतवान्। अतो बालबोधिनीटीका समाप्तिं नाप्नोत्। यावत्पर्यन्तेयं टीका तेन व्यरचि तावदेव अद्वैतसिद्धिम् अभिजिगांसूनां समक्षं संस्थाप्यते। अस्याः टीकायाः उपादेयत्वसम्बन्धे तूष्णीमेव आस्यते मया। केवलं महाकाल एव अस्य निर्णायकस्य आसने समासीनो वर्तते। तस्मिन्नेव निर्णेतरि विचारभारं समर्प्य अहं निवर्ते। अस्याः टीकायाः अध्ययनकाले न विस्मर्तव्यं सहृदयैः वेदान्तविद्याचणैः यत् त्रिसप्ततिवर्षेत आरभ्य पञ्चसप्ततिवर्षपर्यन्ते काले वर्षिष्ठः ब्राह्मणः अस्याः टीकायाः निर्मितिं व्यधात्। यदि नाम बालबोधिनीकारः प्रौढावस्थायामेव अस्याः टीकाया उत्तरार्द्धभागस्य विरचनां प्रारप्स्यत तदेयं समाप्तिमगमिष्यत्। वयमपि सम्पूर्णामेव टीकां वेदान्तविद्योपासकान् उपाहरिष्याम। अतो यावत्पर्यन्तं बालबोधिनी विहिता तावदेव तेषां पुरो निधीयते मया।

अद्वैतसिद्धिं अधीध्वमधीध्वमिति अधीयानानां सविधे विनयपुरःसरमिदं विज्ञापयामि—यत् प्राचीननवीनवेदान्तसिद्धान्तानुसारेणाऽविद्यास्वरूपं प्रतिपादयितुमेकं भागद्वयात्मकमतिप्रथीयांसं ग्रन्थं बालबोधिनीकारः वङ्गभाषया न्यबध्नात्। तं तु व्यासावधारणकुशला अवलोकयन्तु बालबोधिन्युपबृंहणार्थम्। विदितसकलवेद्यान् विनिवेदयामि यत् बालबोधिनीकारो मुद्रिताद्वैतसिद्धेर्मूलस्य पाठभेदमौचित्यानुसारं स्थले स्थले स्वीकृतवान्।

अस्त्येव अपरोऽपि वक्तव्यो विषयः यः खलु बालबोधिनीटीकायाः हस्तलिखितपुस्तकस्य यथोचितपरिरक्षणव्यापारेण साकमविच्छिन्नरूपेण सम्बद्धः। महामहोपाध्यायः श्रीमद्‌योगेन्द्रनाथः यावज्जीवं कठोरदारिद्र्येण सह असंग्रामयत। प्रयाणकालेऽपि स्ववासगृहव्यपदेश्यं तस्य किमपि नासीत्। अहमपि योगक्षेमनिर्वाहार्थं प्रवासे एव स्वजीवितसमयमतिवाहयन् वर्ते। यस्मिन् जीर्णावासे ब्रह्मसंस्थः बालबोधिनीकारः उषितवान् तत्र सुदीर्घकालं व्याप्य बालबोधिनीटीकायाः पाण्डुलिपेः रक्षणे न कथमपि मम साध्यायत्तमासीत्। मदीया सहधर्मिणी श्रीमती मायाबागची तदीयया अपरिसीमधैर्येण निरतिशयनिष्ठया च तस्याः श्वशुरेण विरचितस्य ग्रन्थराशेः रक्षाविधानं विदधती मया सह वार्द्धकावस्थाया द्वारे तिष्ठति। अद्य यदियं बालबोधिनी टीका सौरालोकं स्पृशति तत्तु पत्न्याः श्रीमत्याः मायादेव्याः दुष्करतपस एव फलम्। अस्य टीकाग्रन्थस्य प्रकाशनेन स्वीयश्वशुरस्य कीर्तिं शाश्वतिकीं कर्तुमिच्छन्त्याः तपश्चर्या सिद्धा एव। अद्य इयं हि महतो भारात् मुक्ता निरतिशयमानन्दमनुभवति।

विहारप्रदेशस्थशासनयन्त्रेण प्रतिष्ठापितस्य मिथिलाशोधसंस्थानस्य निदेशकस्य भारमुद्वहन् कार्यकालस्य परिसमाप्तिमपेक्षमाणोऽहमासे। विहारप्रदेशीयशिक्षाविभागस्य सञ्चालकैः मनीषिणामपि मान्यैः यैः साकं परिचयलभेनाहं कृतार्थः, तेषां स्मृतिसौरभं नैराश्यसहस्रेण समाकुलितमपि मम मानसमधिवासयति। अद्य खलु भारतीयसंस्कृतेः गोप्तुः मनीषिणामग्रेसरस्य प्रज्ञालोकनिधानस्य आई० सी० एस० इति उपाधिधारिणः श्रीमतः जगदीशचन्द्रमाथुरमहोदयस्य, विहारप्रदेशशासनयन्त्रस्य शिक्षाविभागीयभूतपूर्वोपसचिवस्य श्रीमहेशप्रसादनारायणशर्ममहाशयस्य, शिक्षाविभागीयोपसचिवस्य श्रीसिद्धेश्वरनाथमहोदयस्य, भागलपुरीयविश्वविद्यालयकुलसचिवस्य एम० एससी० इत्युपाध्यलङ्कृतस्य श्रीअमरेन्द्रनारायणअग्रवालमहोदयस्य च सकाशादधिगतम् उपकारं कृतज्ञतावर्जितचेतसा स्मारं स्मारं परां निर्वृतिमधिगच्छामि।

अवशिष्यते च अपरोऽपि विषयः यं भाषया प्रकाशयितुमहमसमर्थः। मदीयप्रेष्ठान्तेवासिना आयुष्मता डॉक्टरोपाध्यलङ्कृतेन श्रीमन्महेशप्रभुलालगोस्वामिना एवम् एम०ए० उपाधिकेन मेदिनीपुरमण्डलान्तर्गतमालञ्चग्रामवास्तव्येन आयुष्मता श्रीसिद्धेश्वरभट्टाचार्य्येण बालबोधिनीटीकायाः प्रकाशनाय यो महान् क्लेशः स्वीकृतः स तु सर्वथा मदीयया वाचा वर्णयितुमशक्य एव। अतो भीतभीतेयं सर्वथा मौनमेव शरणमवलम्ब्यते। केवलं तौ पौरुषेयेण आयुषा, निरामयेण शरीरेण, अनर्घ्या कीर्त्या उपपन्नौ भूयास्तामित्यहं दिवानिशं परमेश्वरं याचे। एवमेव आरामण्डलनिवासिना मदन्तेवासिना डॉक्टरोपाधिभूषितेन आयुष्मता श्रीयुतश्रीधरत्रिपाठिना मुद्रणार्हप्रतिलिपिनिर्मितौ प्रभूतं साहाय्यमकारि। एतत् प्रवृद्धम् ऋणमपनेतुं नाहमीशे। अतस्तस्मै स्नेहावर्जितमानसेन परःसहस्राः आशीर्वादाः वितीर्यन्ते।

यादवपुरविश्वविद्यालयस्य अध्यापकानां प्रवरः डॉक्टरोपाधिनालङ्कृतः विदुषामग्रेसरः विविधग्रन्थानां प्रणेता बालबोधिनीकारस्य प्रेष्ठान्तेवासी श्रीमत् सीतानाथगोस्वामिमहोदयः बालबोधिन्याः प्रतिलिपिनिर्माणविधौ आत्मानं बहुलायासस्य पदमुपनीतवान्। अतः श्रीमानयं स्वकीयविद्यागुरूणामेव अमोघाशीःप्रभावात् विद्यया यशसा च समेधताम्।

अन्ते च वाराणसीस्थतारामुद्रणशालायाः सत्त्वाधिकारिणं श्रीयुतरमाशङ्करपण्ड्यामहोदयं भारतीयविद्यायाः मूलाधारभूतानां गीर्वाणवाण्या निबद्धानां सुदुर्लभप्राचीनग्रन्थरत्नानां प्रकाशनं विदधतम्, भारतवर्षस्य ज्ञानविज्ञानालोकं विश्वे सम्प्रसारयन्तं सम्प्रति अद्वैतसिद्धेः बालबोधिनीं टीकां स्वकीयमुद्रायन्त्रे मुद्रयन्तं सहस्रेण साधुवादैरभिनन्दामि।

बालबोधिनीकारस्य अन्तेवासिनां प्रेष्ठः, महानुभावानां धौरेयः, सर्वविद्याप्रस्थानानां परमाचार्यः, शिष्टानामग्रणीः, सदाचाराणां प्रभवः, झोपाख्यः श्रीभद्रूपनाथदेवशर्मा मां रात्रिन्दिवं बालबोधिन्याः सम्पादनविधौ प्रोत्साहितवान्। नाहं वेद कथङ्कारम् एतस्य संशितव्रतस्य ज्ञानयोगिनः आनृण्यमुपैमि।

अन्ते च विज्ञापयामि यत् मिथिलाशोधसंस्थानस्य पुस्तकालयस्य अधीक्षकः आतुरपरिचर्यापरायणत्वादिगुणोपपन्नः झोपाह्वः श्रीमान् अमरेन्द्रनाथदेवशर्मा अद्वैतसिद्धेर्मूलं मुद्रायन्त्रापेक्षितैः सुविन्यस्ताक्षरैः लिखितवान्। प्रत्युपकर्तुमशक्नुवन्नहं श्रीमन्तं सर्वकामदुहः अभ्युदयाः स्पृशन्तु इति दिवानिशं प्रार्थये।

मुद्रायन्त्रस्य दवीयस्त्वात् कार्यान्तरव्याकुलत्वाच्च बालबोधिन्याः प्रथमावृत्तौ मम मानुष्यकाविनाभाविप्रमादजाः भूयांसः अशुद्धिदोषाः जाता एव। अतः सहृदयधुरामधिरोहतः अध्येतॄन् विनयपुरःसरं भूयो भूयोऽहमभ्यर्थये यत् तान् मम दृष्टिगोचरतामापाद्यानुगृह्णन्तु माम् इति द्वितीयावृत्तौ तान् साभ्यानुसारं परिमार्जयिष्यामि।

इति

विदुषां विधेयः

शीतांशुशेखरबागची

# ॥ अद्वैतसिद्धिः ॥

## प्रथमः परिच्छेदः

### मङ्गलाचरणम्

मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः
सत्यज्ञानसुखात्मकः श्रुतिशिखोत्थाखण्डधीगोचरः ।

---

### बालबोधिनी

॥ ॐ नमः परमात्मने ।

ॐ । ग्रन्थस्यास्य परब्रह्मैव विषयः प्रयोजनं च । मोक्षस्यापि ब्रह्मरूपत्वाद् ब्रह्मैव प्रयोजनम् । विषयप्रयोजनप्रदर्शनमुखेन विश्वसत्यत्व-प्रतिक्षेपणव्याजेन च मङ्गलमाचरन् अतएव न्यायामृतग्रन्थोक्तमङ्गलश्लोके "सत्याशेषविश्वस्य कारणम्" इति वदन्तं व्यासाचार्यं कटाक्षयन् द्वैतमात्रस्य मिथ्यात्वमावेदयन् परमार्थसत्यं ब्रह्म अनुसन्दधान आह मूलकारः—माया इत्यादि ।

तत्रायमन्वयः—मायाकल्पितमातृतामुखमृषाद्वैतप्रपञ्चाश्रयः सत्यज्ञान-सुखात्मकः मिथ्याबन्धविधूननेन विकल्पोज्झितः श्रुतिशिखोत्थाखण्डधीगोचरः विष्णुः परमानन्दैकतानात्मकं मोक्षं प्राप्त इव स्वयं विजयते इति ।

अत्र 'विष्णुः' इत्यन्तमुद्देश्यम्, शिष्टं विधेयम् । विष्णुः मोक्षं प्राप्त इव स्वयं विजयते इति सम्बन्धः । विष्णुपदमुद्देश्यसमर्पकम् । विष्णुविशेषण-पदान्युद्देश्यतावच्छेदकसमर्पकाणि ।

"विष्णुः" अत्र व्याप्तिगुणयोगाद् व्यापको जीवः । न तु योगरूढि-वृत्त्या नारायणः ईश्वरः, तस्यापि नित्यमुक्तत्वेन "मोक्षं प्राप्त इव" इत्यस्यान्वयायोगात् ।

स विष्णुः कीदृश इत्याकाङ्क्षायामाह—श्रुतिशिखोत्थाखण्डधी-गोचरः इति । "अखण्डधीः" नाम संसर्गाविषयकमनोवृत्तिविशेषः; तद्गोचरः—तद्विषयीभूतः । श्रुतीनां शिखा इव शिखा मुख्यं वाक्यं यत् तत्त्वमस्यादिमहावाक्यम्, तज्जन्या या अखण्डधीः निरुक्तरूपा, तद्विषय इत्यर्थः ।

मिथ्यावन्धविधूननेन परमानन्दैकतानात्मकं ।

पुनः कीदृशो विष्णुरित्याकाङ्क्षायामाह—मिथ्यावन्धविधूननेन विकल्पोज्झित इति। मिथ्यारूपो यो वन्धः ब्रह्मात्मैक्याज्ञानं मूलाऽविद्या, "सा च बन्ध उदाहृतः" इति वार्तिकात्, तस्य विधूननेन अस्तमयेन, "अविद्यास्तमयो मोक्षः" इति तत्रैवोक्तत्वात्, विधूननस्यास्तमयोऽर्थः। "विधूननेन" इति तृतीया ज्ञापकहेतौ। तेनाविद्यास्तमयज्ञाप्यं विकल्पराहित्यम्, विकल्पश्च अविद्याप्रयुक्तं दृश्यमात्रम्; तेन उज्झितः दृश्यशून्यः, अविद्यास्तमयेन दृश्यशून्य इत्यर्थः। अत्र वन्धस्य मिथ्यात्वोक्त्या वन्धोच्छेदो ज्ञानाधीन इति ज्ञापितम। ज्ञाननिवर्त्यस्यैव मिथ्यात्वात्। तथा च अविद्योच्छेदेन दृश्योच्छेदवान् विष्णुरित्यर्थः। अविद्याया मिथ्यात्वोक्त्या अविद्याप्रयुक्तदृश्यानामपि मिथ्यात्वं लब्धम्।

कीदृशः पुनः स विष्णुः—सत्यज्ञानसुखात्मकः। सत्यात्मकः ज्ञानात्मकः सुखात्मक अर्थात् सच्चिदानन्दस्वरूपः। "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः। अत्र सत्यत्वादिकं न ब्रह्मणः धर्म्मः तस्य निर्धर्मकत्वात्, किन्तु मिथ्यात्वाद्यभावरूपं सत्यत्वादिकम्; अधिकरणातिरिक्ताभावानभ्युपगमेन मिथ्यात्वाद्यभावरूपस्य सत्यत्वादेर्ब्रह्मस्वरूपाविरोधात। एतत्सर्वमग्रे प्रपञ्चयिष्यते।

स विष्णुः पुनः कीदृशः—मायाकल्पितमातृतामुखमृपाद्वैतप्रपञ्चाश्रयः। मायया कल्पितं—मायाकल्पितं मायाप्रयुक्तम्, न तु मायाजन्यम्। अनादिदृश्यानां जीवेश्वरभेदानां जन्यत्वानुपपत्तेः। अनादिद्वयेऽपि मायाप्रयुक्तत्वमक्षतमेव। मायानिवृत्त्या निवृत्तत्वादित्यर्थः। माया नाम अनादिभावरूपत्वे सति ज्ञाननिवर्त्या। मायाकल्पितम् अतएव मृषाभूतं यत् मातृतामुखं प्रमातृत्वप्रमाणत्वप्रमितित्वप्रमेयत्वरूपं द्वैतमात्रमात्मभिन्नम्, तदभिन्नो यः प्रपञ्चस्तदाश्रय इत्यर्थः।

स विष्णुः "मोक्षं प्राप्तः" इत्यस्य मोक्षसम्बन्धवान् इति मुख्योऽर्थः।

"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः"
"अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः"

इति वार्तिकात् मोक्षरूपस्य विष्णोः स्वातिरिक्तमोक्षाभावान्मुख्या

मोक्षं प्राप्त इव स्वयं विजयते विष्णुर्विकल्पोज्झितः ॥ १ ॥

प्राप्तिर्न सम्भवतीत्यतः प्राप्त इव इत्युक्तम्। सम्बन्धिनो भेदे हि सम्बन्धो घटते। प्रकृते तु सम्बन्धिनोः मोक्षविष्णुपदार्थयोः एकत्वात् प्रातीतिक एव तदुभयसम्बन्धः—इति द्योतनाय "इव" इत्युक्तम्। एवमानन्दावाप्तिस्थलेऽपि मुख्याऽवाप्तिर्न सम्भवति इति तत्राप्येषैव गतिः। "मोक्षं प्राप्त इव" इत्यस्य मोक्षप्राप्तसदृश इत्यर्थः। स्वयं विजयते—प्रकाशान्तरनिरपेक्षः प्रकाशते, स्वप्रकाश इत्यर्थः। "विजयते" पदस्य प्रकाशत इत्यर्थः।

न च "मोक्षं प्राप्त इव" इति "स्वयं विजयते" इति च विधेयद्वयमेकस्मिन्नुद्देश्ये विष्णौ अन्वयि, विधेयभेदाद् वाक्यभेदस्तु इष्ट एव, विशिष्टस्य विशेष्यविशेषणभावे विनिगमनाविरहात् गुरुतरविशिष्टविधेयद्वयविधाने महागौरवात्, वाक्यभेदस्यापौरुषेयवाक्य एव दोषाधायकत्वात्, वाक्यभेदस्थले आवृत्तेः कल्पनीयतया आवृत्तेस्तु पौरुषेयतया अपौरुषेये भगवति आम्नाये तदसम्भवात्, उक्तं हि कल्पतरुकृद्भिः—"पौरुषेयीमावृत्तिमपौरुषेयो वेदो न सहते" इति, लौकिके वाक्ये वाक्यभेदस्यादूषणत्वात्, सति प्रमाणे गौरवस्य अकिञ्चित्करत्वात्, प्रत्युत लौकिकस्थले वाक्यभेदस्य भूषणत्वात्—अन्यथा श्लेषालङ्कारस्योच्छेदप्रसङ्गादिति वाच्यम्? मोक्षप्राप्तसदृशत्वविशिष्टप्रकाशान्तरनिरपेक्षप्रकाशाभिन्न इति विशिष्टं विधेयम्, तेन न वाक्यभेदः। "सम्भवत्येकवाक्यत्वे वाक्यभेदो न युज्यते" इति न्यायात्। लोकवेदयोर्वाक्यार्थस्यैकरूपत्वाद् वेदे वाक्यभेदो दूषणं न तु लोके इत्यपि न युक्तम्। विशेष्यविशेषणभावे विनिगमनाविरहाद् विशिष्टस्य विधेयत्वे महागौरवमिति एतदपि न युक्तम्। "मोक्षं प्राप्त इव स्वयं विजयते" इति क्रमिकपदोपस्थितेरेव विनिगमकत्वात्। श्लेषस्थलेऽपि न वाक्यभेद इति चिन्तनीयम्। अतः विशिष्टमेव विधेयम्।

कीदृशं "मोक्षं प्राप्त इव" इत्याकाङ्क्षायामाह—परमानन्दैकतानात्मकम् निरतिशयापरिच्छिन्नसुखमात्रस्वरूपमित्यर्थः।

अत्र मृषाद्वैताश्रयत्वोक्त्या मुमुक्षावानधिकारी सूचितः। ग्रन्थविषययोः सम्बन्धस्तु स्वयमूहनीयः। विषयप्रयोजने तु प्रागेवोक्ते। एवम् एतन्मङ्गलश्लोके ग्रन्थस्यास्य अनुबन्धचतुष्टयमुक्तम् ॥ १ ॥

श्रीरामविश्वेश्वरमाधवानाम्
ऐक्येन साक्षात्कृतमाधवानाम् ।
स्पर्शेन निर्धूततमोरजोभ्यः
पादोत्थितेभ्योऽस्तु नमो रजोभ्यः ॥ २ ॥

बहुभिर्विहिता बुधैः परार्थं
विजयन्तेऽमितविस्तृता निबन्धाः ।

---

प्रथमश्लोकेन ग्रन्थस्य विषयप्रयोजने उक्त्वा गुरुपरम्पराप्रणतिरूपं मङ्गलमाचरन्नाह—श्रीरामेत्यादि । न च प्रथमश्लोके विष्णुपदस्य जीवपरतया विवृतत्वाद् इष्टदेवतोत्कर्षप्रतिपादनरूपमङ्गलाकरणाद् ग्रन्थकर्त्तुर्न्यूनतेति शङ्क्यम् ? विषयप्रयोजनकथनेनैव परममङ्गलरूपपरब्रह्मानुसन्धानात् परब्रह्माभिन्नजीवचैतन्यस्य ग्रन्थप्रतिपाद्यत्वेनोल्लेखात् शिष्टाचारपरिपालने अग्रणीर्मूलकार इति विभावनीयम् ।

अत्रान्वयः—ऐक्येन साक्षात्कृतमाधवानां श्रीरामविश्वेश्वरमाधवानां स्पर्शेन निर्धूततमोरजोभ्यः पादोत्थितेभ्यः रजोभ्यः नमोऽस्तु ।

मूलकारस्य परमगुरवः गुरवः विद्यागुरवश्च क्रमेण श्रीरामविश्वेश्वरमाधवा आसन् । तान् वन्दनक्रमानुरोधेन निर्दिशति । प्रथमतः परमगुरूणाम्, ततो गुरूणाम्, ततो विद्यागुरूणां वन्दनमिति शिष्टसमाचारः । ऐक्येन—स्वात्मैक्येन, स्वात्माभिन्नतयेत्यर्थः । साक्षात्कृतः—अपरोक्षीकृतः, माधवः—विष्णुः परमात्मा यैस्तेषां साक्षात्कृतमाधवानाम्, स्वात्माभिन्नतया प्रत्यक्षीकृतमाधवानाम्, श्रीरामविश्वेश्वरमाधवानां—परमगुरुगुरुविद्यागुरूणाम्, पादोत्थितेभ्यः रजोभ्यः मम नमोऽस्तु मम कोटिशः प्रणामाः सन्त्वित्यभिप्रायः । किंभूतेभ्यः रजोभ्य इत्याकाङ्क्षयामाह—स्पर्शेनेति । तेषां पादस्पर्शेन निर्धूते तमोरजसी येषां रजसां धूलीनां तेभ्यः—निर्धूततमोरजोभ्यः विशुद्धसत्त्वमयेभ्य इत्यर्थः । एतेन प्रणन्तुः निष्प्रत्यूहविज्ञानस्फूर्त्तिराशंसिता ॥ २ ॥

इदानीं ग्रन्थकारः ग्रन्थकरणे स्वकीयमौद्धत्यादिकं परिहरन् ग्रन्थारम्भं प्रतिजानीते—बहुभिरिति ।

मम तु श्रम एष नूनमात्म-
म्भरितां भावयितुं भविष्यतीह ॥ ३ ॥
श्रद्धाधनेन मुनिना मधुसूदनेन
संगृह्य शास्त्रनिचयं रचितातियत्नात् ।

---

अत्रान्वयः—बहुभिर्बुधैः परार्थं विहिता अमितविस्तृता निबन्धा विजयन्ते, तु मम इह एषः श्रम आत्मम्भरितां भावयितुं नूनं भविष्यति ।

बहुभिर्बुधैः श्रीहर्षानन्दबोधचित्सुखप्रभृतिभिः, परार्थं शिष्यजनबोधसम्पादनार्थं कुतार्किकाज्ञाननिवारणार्थम्, अतः विहिताः विरचिताः, अमितविस्तृता निबन्धाः खण्डन-मकरन्द-प्रत्यक्तत्त्वप्रदीपिकाप्रभृतयः सुविस्तराः ग्रन्थाः, विजयन्ते सर्वातिशायितया वर्तन्ते। अर्थात् तैरेव ग्रन्थैः परेषां प्रयोजनसिद्धेर्नास्माभिरत्र यतनीयम् । तु किन्तु, मम मूलकारस्य, इह अस्मिन् विषये अद्वैततत्त्वप्रतिपादकग्रन्थरचनायाम्, एषः श्रमः अयमद्वैतसिद्धिरचनारूपः श्रमः, आत्मम्भरितां मन्निष्ठामर्थबोधसम्पत्तिम्, भावयितुं सम्पादयितुम्, नूनं भविष्यति अवश्यमेव भविष्यति, स्वीयबुद्धिवैशद्याय एवैतद्ग्रन्थरचनमिति भावः ॥ ३ ॥

ग्रन्थनिर्माणस्य मुख्यं फलमुक्त्वा प्रासङ्गिकमाह श्रद्धाधनेनेति ।

अत्रान्वयः—श्रद्धाधनेन मुनिना मधुसूदनेन शास्त्रनिचयं संगृह्यातियत्नात् रचितेयमद्वैतसिद्धिः सत्वराणां बोधाय वादिविजयाय च बुधानां मुदे च अस्तु ।

श्रद्धाधनेन श्रद्धा एव धनं यस्य तेन, "श्रद्धावित्तो भूत्वा" इति श्रुतेः, श्रदिति अव्ययं सत्यनामसु पठ्यते, श्रत्पूर्वधाञ्धातोर्निष्पन्नं श्रद्धापदं सत्यधारणमाह, सत्यादरशालिनी बुद्धिः श्रद्धा ; मुनिनेति, मुनिः कस्मात् ? मननात्, मननशीलेनेत्यर्थः; "बाल्यं पाण्डित्यं च निर्विद्याथ मुनिरि"ति श्रुतेः; मधुसूदनेन ग्रन्थकारेण; शास्त्रनिचयं सूत्रभाष्यवार्तिकखण्डनमकरन्दादिकम्, संगृह्य संग्रहेण तेषां तात्पर्याण्यालोच्य, अतियत्नतः अनुक्तपुनरुक्तादिकं विभाव्य पूर्वपक्षिणां प्रत्यक्षरोद्धारं निराकृत्य च, इयम् एतद्ग्रन्थाधीना, अद्वैतसिद्धिः अद्वैतनिश्चयः, अत्र सिद्धि-

बोधाय वादिविजयाय च सत्वराणाम्
अद्वैतसिद्धिरियमस्तु मुदे बुधानाम् ॥ ४ ॥

तत्राद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात्

---

पदस्य निष्पत्तिरिति नार्थः, अद्वैतपदार्थस्य ब्रह्मणो नित्यनिष्पन्नत्वात्; अद्वैतसिद्धिर्नाम द्वैताभावोपलक्षितब्रह्मनिर्विकल्पकनिश्चयः; तेन तादृशनिश्चयबोधकमपि सिद्धिपदं ग्रन्थकर्तृसंकेतेन तादृशनिश्चयसाधकं ग्रन्थमपि बोधयति ; अथवा सिद्धिपदं लक्षणया साधकं ग्रन्थं ज्ञापयति। रचिता ग्रन्थद्वारा शिष्येभ्यः बलभद्रादिभ्यः प्रतिपादिता; एषा अद्वैतसिद्धिः सत्वराणां त्वरया विविदिषूणाम्, बोधाय ज्ञानाय, त्वरया विजिगीषूणां च वादिविजयाय च परपक्षनिर्जयाय; एवं बुधानां बोधवादिविजयनिरपेक्षाणां शास्त्रपारदृश्वानाम्, मुदे हर्षाय, अस्तु भवेत् ॥ ४ ॥

अद्वैतसिद्धिमारभमानेन सिद्ध्युपयोग्येव निरूपयितुमुचितम्। न तु तदनुपयोगिद्वैतमिथ्यात्वम्। अथ च मूलकृता सपरिकरं द्वैतमिथ्यात्वमेवादौ निरूपितम्, तदसङ्गतमेवेत्यत आह—तत्राद्वैतसिद्धेरित्यादि। तत्र तस्यामद्वैतसिद्धौ प्रारीप्सितायां द्वैतमिथ्यात्वमेव प्रथममुपपादनीयम्। यतः 'एकमेवाद्वितीयं ब्रह्म' इत्यादि श्रुत्या जायमानायाः द्वैताभावोपलक्षितब्रह्मनिर्विकल्पकनिश्चयरूपायाः अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात्। द्वैतमिथ्यात्वसिद्धौ क्रियमाणायामद्वैतं सूपपादमित्यर्थः। द्वैतमिथ्यात्वोपपादनस्य अद्वैतसिद्ध्यनुगुणत्वाद् आदौ द्वैतमिथ्यात्वनिरूपणं नासङ्गतम्। अत एव मूलकृता चतुर्थपरिच्छेदान्ते "अद्वैतसिद्धिरधुना चतुर्थी समजायत" इत्युक्तम्।

अत्र मूलकारः सिद्धिपूर्वकत्वादित्यन्तेन वाक्येन श्रुत्याऽद्वैतसिद्धिमात्रे द्वैतमिथ्यात्वनिश्चयस्य पूर्वभावित्वेन कारणत्वं सूचयति। यत्र यत्र श्रुत्या अद्वैतनिश्चयः तत्र सर्वत्र द्वैतमिथ्यात्वनिश्चयस्य पूर्वभावित्वम्। एतदभिप्रायेणैव द्वैतमिथ्यात्वोपपादने प्रवृत्तिर्मूलकारस्य।

श्रुत्या द्वैताभावोपलक्षितब्रह्मनिर्विकल्पकनिश्चये द्वैतमिथ्यात्वसिद्धिपूर्वकत्वं कथमिति चेत्? शृणु—

द्वैतमिथ्यात्वमेव प्रथममुपपादनीयम्॥ १ ॥

"एकमेवाद्वितीयं ब्रह्म"त्यादिश्रुतेः चैतन्यमात्रप्रतिपादनेन श्रुतेस्तात्पर्यम्। चैतन्यमात्रस्य स्वप्रकाशतया नित्यसिद्धत्वात् तन्मात्रप्रतिपादने श्रुतेरनुवादकत्वेनाप्रामाण्यप्रसङ्गात्। किन्तु द्वैताभावोपलक्षितब्रह्मप्रतिपादनपूर्वकचैतन्यमात्रप्रतिपादने तादृशश्रुतेस्तात्पर्यम्। द्वैताभावविशिष्टचैतन्यप्रतीतिपूर्वकत्वाद् द्वैताभावोपलक्षितचिन्मात्रप्रतीतेः। सा हि सर्वानर्थनिवृत्तिकरी इत्यग्रे प्रवेदयिष्यति। विशिष्टबोधानन्तरमेव हि उपलक्षितबोधो जायते। उपलक्ष्यधर्मिबोधे उपलक्षणीभूतधर्मविशिष्टबुद्धेः कारणत्वात्। यः खलु धर्मी येन धर्मेणोपलक्ष्यते तेन धर्मेण विशिष्टरूपतया स धर्मी यदि न प्रतीयेत, तर्हि नोपलक्षितबुद्धिर्जायेत। अत एव द्वैताभावोपलक्षितबुद्धौ द्वैताभावविशिष्टबुद्धेः द्वारत्वनिर्वाहः। द्वैताभावविशिष्टबुद्धेरपि अभावबुद्धित्वेन प्रतियोगिप्रसक्तिपूर्वकत्वात्। द्वैतवत्त्वबुद्धिपूर्वकत्वाद् द्वैताभाववत्त्वबुद्धेः। द्वैतप्रकारकबुद्धिं विना द्वैताभावप्रकारकबुद्धेरनुपपत्तेः। द्वैतवति ब्रह्मण्येव द्वैतवत्त्वकालावच्छेदेन द्वैताभाववत्त्वविषयकबुद्धेरुदयात्। यत्कालावच्छेदेन यत् प्रसज्यते तत्कालावच्छेदेनैव तन्निषिद्ध्यत इत्येव प्रतियोगिप्रसक्तिपूर्वकनिषेधबुद्धेर्मुद्रा।

तथा हि—अद्वैतप्रतिपादकं यत् "एकमेवाद्वितीयमि" ति वाक्यं तत्पूर्ववाक्ये "सदेव सोम्येदमग्र आसीदि" त्यस्मिन् इदं शब्देन द्वैततादात्म्यापन्नब्रह्मण उपस्थापकतया तस्मिन् द्वैततादात्म्यविशिष्टे ब्रह्मणि द्वैताभावबोधने द्वैतमात्रस्य मिथ्यात्वमायातम्। "सदेव सोम्ये"ति पूर्ववाक्यमुद्देश्योपस्थापकम्, "एकमेवाद्वितीयमि"ति विधेयसमर्पकम्। तेन 'इदं सत् द्वैताभाववदि'त्यर्थो लभ्यते। इदं शब्दोक्ते द्वैतसामान्यतादात्म्यापन्ने ब्रह्मणि "अद्वितीयमि"त्यनेन द्वैताभावबोधनात्। उद्देश्यसमर्पकपूर्ववाक्येन "सदेव सोम्येदमि"त्यनेन निषेधप्रतियोगिनः प्रसक्तिर्दर्शिता। प्रतियोगि द्वैतसामान्यं 'सदेव' इति वाक्येन ब्रह्मणि प्रसक्तं तदेव अद्वितीयमिति श्रुत्या निषिद्ध्यते।

उद्देश्यब्रह्मणि द्वैतसामान्यतादात्म्यस्य विशेषणत्वेनोद्देश्यतावच्छेदकत्वाद् उद्देश्यतावच्छेदककालावच्छिन्नत्वस्य च विना बाधकं विधेयगतत्वेन बोधस्य व्युत्पत्तिसिद्धत्वात्। अन्यथा 'गन्धप्रागभावविशिष्टो घटो गन्धवान्'

इति वाक्यस्य प्रमाणत्वापत्तेः । तथा च द्वैतवति ब्रह्मणि द्वैतवत्त्वकालावच्छेदेन द्वैताभावबोधने द्वैतसामान्यस्य मिथ्यात्वमायातम् ।

एककालावच्छेदेन प्रतियोग्यभावयोरेकाधिकरणवृत्तित्वं हि मिथ्यात्वम् । तच्च स्वावच्छेदकदेशकालावच्छिन्नस्वाश्रयनिष्ठस्वाभावप्रतियोगित्वरूपम् । अत्र "स्व" पदं मिथ्यात्वेनाभिमतपरम् ।

शाब्दबोधस्याहार्यत्वासम्भवेन द्वैतवति द्वैताभावबोधः शाब्दो न स्यादिति च न शङ्क्यम् । इदंशब्दोदितद्वैतस्य दृश्यत्वरूपेण, एवम् "अद्वितीयमि"त्यत्र द्वितीयपदेनात्मभिन्नत्वेन रूपेण, द्वैतसामान्यस्य बोधनान्नाहार्यत्वापत्तिः । द्वैतोद्देश्यतावच्छेदकद्वैताभावविधेयकशाब्दबोधस्य प्रदर्शितेन प्रकारेण आहार्यत्वानापत्तावपि विधेये उद्देश्यतावच्छेदककालावच्छिन्नत्वभानस्यासार्वत्रिकत्वात् प्रकृतवाक्यस्य तादृशबोधे तात्पर्ये मानाभावात् मिथ्यात्वनिश्चयो न सम्भवतीति न शङ्क्यम् । प्रकृतवाक्यस्य तादृशबोधे तात्पर्यानङ्गीकारे प्रकृतवाक्यस्यैव वैयर्थ्यात् । कालान्तरावच्छेदेन द्वैताभाववत्त्वविषयकबोधजनकस्य "ज्ञात्वा देवं मुच्यते सर्वपाशैरि"त्यादिश्रुत्यन्तरस्य विद्यमानत्वात् ।

तथा च "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयमि"ति श्रुत्या द्वैताभावोपलक्षितात्मनिर्विकल्पकनिश्चये जननीये द्वैतवति ब्रह्मणि द्वैतवत्त्वकालावच्छेदेन द्वैताभावनिश्चयपूर्वकत्वध्रौव्याद् अद्वैतसिद्धेर्द्वैतमिथ्यात्वपूर्वकत्वं सिद्धम् । इदमापाततः ।

परमार्थतस्तु एककालावच्छेदेन प्रतियोग्यभावयोरेकाधिकरणवृत्तित्वं न मिथ्यात्वम्, किन्तु मिथ्यात्वघटकाभावस्य सर्वकालावच्छेदेन सर्वदेशावच्छेदेन ब्रह्मणि विद्यमानत्वान्नावच्छिन्नवृत्तिकोऽभावः मिथ्यात्वघटकः, परन्तु अवच्छिन्नवृत्तिकान्यः सः । 'प्रतिपन्नोपाधौ अवच्छिन्नवृत्तिकान्याभावप्रतियोगित्वं मिथ्यात्वमि'ति द्वितीयमिथ्यात्वलक्षणे स्फुटी भविष्यति । मिथ्यात्वस्य एवंरूपत्वे योद्देश्यतावच्छेदककालावच्छिन्नत्वस्य विधेयांशेऽभानेऽपि न काचन वस्तुक्षतिः । श्रुतेस्तादृशबोधे तात्पर्यग्राहकाभावेऽपि च न कोऽपि दोषः । मिथ्यात्वघटकाभावस्य कालावच्छिन्नत्वानङ्गीकारात् । तथा च स्वाश्रयनिष्ठावच्छिन्नवृत्तिकान्यत्वविशिष्टस्वाभावप्रतियोगित्वं मिथ्यात्वं फलितम् । एवं च सदेव इति वाक्ये 'इदं सत् द्वैताभाववत्' इत्यर्थो लभ्यते ।

उपपादनं च स्वपक्षसाधनपरपक्षनिराकरणाभ्यां भवतीति, तदुभयं वादजल्पवितण्डानामन्यतमां कथामाश्रित्य सम्पादनीयम् ॥२॥

---

इदन्तादात्म्यापन्ने अर्थात् दृश्यसामान्यतादात्म्यापन्ने सति ब्रह्मणि, अद्वितीयपदेन द्वितीयाभाववत्त्वं द्वितीयपदस्यात्मभिन्नत्वेन दृश्यसामान्यपरतया तादृशदृश्यसामान्यस्यावच्छिन्नवृत्तिकान्याभाववत्त्वं लभ्यते। तथा च द्वैतमात्रस्य मिथ्यात्वं पर्यवस्यति। अत एव "एकमेवाद्वितीयमि"ति श्रुत्या अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वमायातम्।

एवं "यः सर्वज्ञः सर्वविदि"त्यादिब्रह्मलक्षणवाक्यानामपि द्वैताभावोपलक्षितनिर्विकल्पकब्रह्मनिश्चयजनकत्वात् तत्रापि द्वैतमिथ्यात्वसिद्धिपूर्वक एव तादृशो बोधो बोद्धव्यः। एवं महावाक्यजन्याद्वैतनिश्चयस्यापि द्वैतमिथ्यात्वसिद्धिपूर्वकत्वं विज्ञेयम्। तस्मात् सुष्ठूक्तं मूलकृता "अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वादि"ति। तथा च "द्वैतमिथ्यात्वमेव" द्वैतमात्रं पक्षीकृत्य तन्मिथ्यात्वमेव सदसत्त्वानधिकरणत्वादिरूपं प्रथमम् अद्वैतनिश्चयात् प्राक् ग्रन्थादौ, उपपादनीयम्—उपपत्त्या साधनीयमनुमेयमित्यर्थः ॥१॥

तच्च उपपादनं द्वैतमिथ्यात्वोपपादनं स्वपक्षसाधनपरपक्षनिराकरणाभ्यां स्थापनीयकोटिस्थापननिराकरणीयकोटिनिराकरणाभ्यां द्वैतस्य मिथ्यात्वस्थापनात् सत्यत्वनिराकरणाच्चेत्यर्थः; भवति द्वैतमिथ्यात्वोपपादनमिति शेषः। इति शब्दोऽत्र हेत्वर्थः। इति हेतोरिति यावत्। इतिशब्दसम्बन्धात् पूर्ववाक्ये 'यतः' इति पठितव्यम्। यतः मिथ्यात्वोपपादनं स्वपक्षसाधनपरपक्षनिराकरणाभ्यां भवतीति हेतोः तदुभयं स्वपक्षसाधनं परपक्षनिराकरणं च सम्पादनीयमिति अग्रेतनेनान्वयः। तत् स्वपक्षसाधनपरपक्षनिराकरणयोः कथासम्पादनीयत्वात्, कथायाश्च त्रिविधत्वेन, तिसृणां कथानां वादजल्पवितण्डानामन्यतमां कथां वादरूपां जल्परूपां वितण्डारूपां वा यां काञ्चित् कथामाश्रित्य सम्पादनीयम्। कथा नाम पञ्चावयवपरिकरोपेतं वाक्यम्। तत्त्वबुभुत्सुना सह कथा वादः; सा च तत्त्वनिर्णयावसाना। विजिगीषुणा सह कथा जल्पः; सा च विजयावसाना, वादिनिग्रहमात्रप्रयोजना। वितण्डा तु स्वपक्षस्थापनाहीना परपक्षखण्डनमात्रपर्यवसाना। जल्पवितण्डयोर्विजिगीषुकथारूपत्वात् ॥२॥

तत्र च विप्रतिपत्तिजन्यसंशयस्य विचाराङ्गत्वान्मध्यस्थेनादौ विप्रतिपत्तिः प्रदर्शनीया ॥३॥

यद्यपि विप्रतिपत्तिजन्यसंशयस्य न पक्षतासम्पादकतयो-

---

संशयजननद्वारा विप्रतिपत्तेर्विचाराङ्गत्वमाशङ्कते, तत्रेत्यादि। न्यायामृतकृद्भिः विप्रतिपत्तेर्विचारानुपयोगित्वस्य व्यवस्थापितत्वात् तन्निरासाय पूर्वपक्षतया तन्मतमुपन्यस्य विप्रतिपत्तेर्विचाराङ्गत्वं प्रतिपादयितुमिदमाह मूलकारः तत्र चेत्यादि। किन्तु न्यायामृतकृद्भिरुक्तम्—"इदं च विप्रतिपत्तिप्रदर्शनं तार्किकरीत्यैवोक्तं न तु वस्तुतः" इत्यादि। तेषामयमाशयः—विप्रतिपत्तेरुपयोगः किं संशयजननद्वारा? अथवा संशयमद्वारीकृत्य साक्षादेव पक्षप्रतिपक्षपरिग्रहफलकतया? नाद्यः; "वाद्यादीनां निश्चयवत्त्वेन संशयासम्भवात्" इत्यादिग्रन्थेन प्रत्युक्तत्वात्। न द्वितीयः, "त्वयेदं साधनीयम्, अनेनेदं दूषणीयमित्यादिग्रन्थेन प्रत्युक्तत्वादिति भावः। ग्रन्थस्यास्य तत्त्वनिर्णयावसानत्वेन वादकथारूपत्वात् मूलस्थितं तत्रेति तत्पदं वादकथां परामृशति। तेन "तत्रे"ति तस्यां वादकथायामित्यर्थः। तत्र वादकथायां विप्रतिपत्तिः प्रदर्शनीया इत्यन्वयः। विप्रतिपत्तिर्नाम संशयजनिका विरुद्धार्थप्रतिपादकवाक्यद्वयरूपा विवक्षिता। विरुद्धा प्रतिपत्तिर्यस्मादिति व्युत्पत्तेः। विप्रतिपत्तेः प्रदर्शनीयत्वे हेतुर्विचाराङ्गत्वम्। विचाराङ्गत्वाद्विप्रतिपत्तिः प्रदर्शनीयेत्यर्थः ॥३॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथशर्मविरचितायाम् अद्वैतसिद्धिबालबोधिन्यां ग्रन्थारम्भः।

तादृशसंशयस्य विचाराङ्गत्वं कथमिति पृच्छायां येन रूपेण संशयस्य विचाराङ्गत्वं तद्रूपं प्रदर्शयितुं पूर्वपक्षमाह यद्यपीति। विप्रतिपत्तिजन्यसंशयस्य पक्षतासम्पादकतया पक्षप्रतिपक्षपरिग्रहफलकतया वा यद्यपि नोपयोगः, तथापि व्युदसनीयतया विचाराङ्गत्वमस्त्येव इत्यग्रेतनेन सहान्वयः।

संदिग्धसाध्यकत्वस्य पक्षत्वेन तादृशसंशयस्य पक्षतासम्पादकतया कथं नोपयोगः? वादिना प्रतिवादिनं प्रति प्रतिवादिना वा वादिनं प्रत्यनुमाने प्रयुक्तेऽपि अनुमितिर्न स्यात्; सन्देहघटितपक्षताया अनुमितिजनिकाया अभावादित्यत आह—पक्षतायाः संशयघटितत्वान्न पक्षतासम्पादकतया

प्रयोगः, सिसाधयिषाविरहसहकृतसाधकमानाभावरूपायास्तस्याः संशयाघटितत्वात् ॥ ४ ॥

अन्यथा श्रुत्यात्मनिश्चयवतोऽनुमित्सया तदनुमानं न विप्रतिपत्तिजन्यसंशयस्योपयोगः। संशयं विनापि सिसाधयिषाविरहसहकृत-साधकमानाभावरूपस्य पक्षत्वस्य सम्भवात्।

ननु साधकमानाभावः पक्षतेति न सङ्गच्छते, सर्वत्रानुमानरूपसाधक-मानस्यैव सत्त्वादिति चेत् ? उच्यते। अत्र साधकमानपदस्य अनुमाना-तिरिक्तसाधकमानपरत्वात्। तथा च सिसाधयिषाविरहसहकृतानुमानातिरिक्त-साधकमानरूपविशिष्टस्याभावः सर्वत्रानुगतः।

तथा हि प्रात्यक्षिकसिद्धिस्थले सिसाधयिषासत्त्वे अनुमानातिरिक्तप्र-त्यक्षरूपसाधकमानरूपविशेष्यस्य सत्त्वेऽपि विशेषणस्य सिसाधयिषाविरहस्या-भावेन विशिष्टस्याभावोऽस्ति। "महानसे वह्निमनुमिनुयामि"ति सिसाध-यिषयाऽनुमानं प्रवर्तते। सिद्धेरसत्त्वे धूमलिङ्गकवह्न्यनुमितौ सिसाधयिषा-विरहरूपं विशेषणमस्ति। सिद्धिस्थले एव सिसाधयिषा न सर्वत्र। इच्छायाः ज्ञानसाध्यत्वमेव न तु अनुमित्यादिज्ञानरूपस्येच्छासाध्यत्वम्। सत्यां सामग्र्यामिच्छाभावेन ज्ञानानुदयाभावात्। अन्यथाऽनिच्छतोऽपि दुर्गन्धादिज्ञानं न स्यात्। तस्मादत्र विशेषणस्य सिसाधयिषाविरहस्य सद्भावेऽपि विशेष्यस्यानुमानातिरिक्तसाधकमानस्याभावाद् विशिष्टाभावः। एवमेव घनगर्जितादिस्थलेऽपि द्रष्टव्यम्। यथोक्तमनुमानप्रकाशे रुचिदत्तो-पाध्यायैः—"साधकमानपदमनुमानातिरिक्तसाधकमानपरं वा" इति। नव्यास्तु साधकमानपदं भावव्युत्पत्त्या सिद्धिपरम्। लाघवेन सिद्ध्यभावस्यैव पक्षपदप्रवृत्तिनिमित्तत्वाद् अनुमानातिरिक्तसाधकमानाभावस्य गुरुशरीरतया पक्षपदप्रवृत्तिनिमित्तत्वाभावादित्याहुः। अतः निरुक्तरूपायाः पक्षतायाः संशयाघटितत्वाद् विप्रतिपत्तिजन्यसंशयस्य न पक्षतासम्पादकतया उपयोगः ॥ ४ ॥

ननु साध्यसंशयरूपायाः पक्षताया अङ्गीकारे का हानिः ? इत्यत आह मूलकारः—अन्यथेत्यादि। अन्यथा निरुक्तरूपां पक्षता-मनङ्गीकृत्य साध्यसंशयरूपायाः पक्षताया अङ्गीकारे, श्रुत्या "श्रोतव्यः"

स्यात्, वाद्यादीनां निश्चयवत्त्वेन संशयासम्भवादाहार्यसंशयस्यातिप्रसञ्जकत्वाच्च ॥ ५ ॥

नापि विप्रतिपत्तेः स्वरूपत एव पक्षप्रतिपक्षपरिग्रहफलकतयोपयोगः, "त्वयेदं साधनीयम्", "अनेनेदं दूषणीयमित्यादि-

---

इति श्रुत्या, आत्मनिश्चयवतः—शाब्दबोधात्मकनिश्चयवतः पुरुषस्य, आत्मनिश्चयकाले, अनुमित्सया—आत्मानमनुमिनुयामितीच्छया, तदनुमानम् आत्मानुमितिः न स्यात् संशयघटितपक्षताया अभावात्, शाब्दबोधात्मकनिश्चयसत्त्वादिति भावः। साधकमानाभावरूपायाः पक्षताया अङ्गीकारे तु शाब्दबोधात्मकसिद्धिसत्त्वेऽपि अनुमित्सया यथा अनुमानं सम्भवति, तथोक्तं पुरस्तात्।

मध्यस्थप्रदर्शितविप्रतिपत्तिवाक्यस्य संशयजनकत्वमपि न सम्भवति। तादृशविप्रतिपत्तिवाक्याद् वादिप्रतिवादिमध्यस्थानां न संशयः, तेषां विशेषदर्शनसद्भावादित्याह मूलकारः—वाद्यादीनामित्यादि। वाद्यादीनां—वादिप्रतिवादिप्राश्निकानां निश्चायकप्रमाणरूपविशेषदर्शनसद्भावेन विशेषादर्शनरूपसंशयहेत्वभावात् न विप्रतिपत्तिवाक्यस्य वाद्यादिसंशयजनकत्वम्। अतस्तादृशविप्रतिपत्तिवाक्यतः पक्षत्वघटकसंशयोऽपि न वाद्यादीनां सम्भवति।

ननु विशेषदर्शनसद्भावेन वाद्यादीनां स्वारसिकसंशयासंभवेऽपि तेषामाहार्यसंशयो भविष्यति। स एवानुमितौ पक्षताघटकः, आहार्यज्ञानस्य विशेषदर्शनाप्रतिबध्यत्वादित्यत आह—आहार्यसंशयस्येत्यादि। आहार्यसंशयस्यानुमितिहेतुत्वेऽतिप्रसङ्गेन पक्षत्वाप्रयोजकत्वादित्यर्थः। अनुमित्युत्तरकाले सिद्धिस्थले सिसाधयिषाविरहदशायामपि आहार्यसंशयसम्भवेन पक्षत्वापत्त्या अनुमित्यापत्तिरत्रातिप्रसङ्गो बोध्यः। आहार्यसंशयस्य पक्षताघटकत्वे आहार्यपरामर्शादेरपि अनुमितिकारणतापत्तेः ॥ ५ ॥

विप्रतिपत्तेः संशयजननद्वारा विचाराङ्गत्वं निरस्येदानीं संशयमद्वारीकृत्य साक्षादेव विप्रतिपत्तेर्विचाराङ्गत्वं निरसितुमाह—नापि विप्रतिपत्तेः स्वरूपत इत्यादि। स्वरूपत इत्यस्य संशयमद्वारीकृत्येत्यर्थः। संशयमद्वारीकृत्य पक्षप्रतिपक्षपरिग्रहफलकतयाऽपि विप्रतिपत्तेर्नोपयोग इति भावः। वादिप्रतिवादिनोः परिग्रहद्वयस्य एकधर्मिकत्वलाभाय पक्षप्रतिपक्षपरि-

मध्यस्थवाक्यादेव तल्लाभेन विप्रतिपत्तिवैयर्थ्यात् ॥ ६ ॥

तथापि विप्रतिपत्तिजन्यसंशयस्यानुमित्यनङ्गत्वेऽपि व्युदसनीयतया विचाराङ्गत्वमस्त्येव ॥ ७ ॥

---

ग्रहः इत्यस्य यथाश्रुतमर्थं परित्यज्य पक्षे धर्मिणि प्रतिपक्षः प्रतिनियतपक्षः तस्य परिग्रह इत्यर्थो बोध्यः। वादिप्रतिवादिनोः भावाभावान्यतरकोटेरेकधर्मिणि प्रयोग इति यावत्। एकधर्मिणि प्रतिनियतपक्षपरिग्रहो न विप्रतिपत्तेः फलमन्यथासिद्धत्वात्। कथाबाह्येनापि "त्वयेदं साधनीयम्", "अनेनेदं दूषणीयमि"त्यादि मध्यस्थवाक्यादेव तल्लाभसम्भवात्। कथाबाह्यतया निग्रहानर्हेण मध्यस्थवाक्यादेव पक्षप्रतिपक्षपरिग्रहफलसिद्धौ "प्रमाप्रमातिरिक्ताऽबाध्यत्वे सति" इत्यादिवक्ष्यमाणं विशेषणं प्रक्षिप्य तत्प्रयोजनान्वेषणरूपकुसृष्टियुक्तविप्रतिपत्तिवाक्यस्य वैयर्थ्यात्। कथाबाह्यतया लौकिकवाक्यादितोऽपि तत्फलसम्भवाच्च। अतो विप्रतिपत्तिरन्यथासिद्धैव।

"नापि साध्योपस्थित्यर्थं विप्रतिपत्तिवाक्यम्; प्रतिज्ञावाक्येनैव तत्सिद्धेः" इत्यपि न्यायामृतकृद्भिर्विप्रतिपत्तिवैयर्थ्यप्रदर्शनायोक्तम्; इति विप्रतिपत्तेरवश्यप्रदर्शनीयत्वे पूर्वपक्षः ॥ ६ ॥

विप्रतिपत्तेर्विचाराङ्गत्वे पूर्वपक्षं प्रदर्श्य सिद्धान्तमाह—तथापीत्यादि। पूर्ववाक्ये यद्यपीति अभिसम्बन्धात् सिद्धान्तवाक्ये 'तथापी'त्युक्तम्। यद्यपि संशयजननद्वारा अनुमितेः पक्षतासम्पादकतया स्वरूपतएव पक्षप्रतिपक्षपरिग्रहफलकतया वा विप्रतिपत्तेर्न विचारे उपयोगः, तथापि विप्रतिपत्तिजन्यसंशयस्य व्युदसनीयतया विप्रतिपत्तेर्विचाराङ्गत्वमस्त्येवेत्यभिप्रायः। अत्रानुमित्यनङ्गत्वेऽपीत्यस्य पक्षतासम्पादकतया अनुमित्यनङ्गत्वेऽपीत्यर्थो बोध्यः। व्युदसनीयतयेत्यस्य विचारसाध्याभावप्रतियोगितया निरसनीयतयेत्यर्थः। विचारसाध्योऽभावः संशयाभावः। तस्य प्रतियोगी संशयः, तज्जनकत्वं विप्रतिपत्तिवाक्यस्य। विचारसाध्याभावप्रतियोगिसंशयजननद्वारा विप्रतिपत्तेर्विचाराङ्गत्वम्। तथा हि—संशयाभावरूपविचारफलज्ञानं विचारे प्रवृत्त्युपयोगि। संशयाभावरूपफलज्ञानस्य विशेषणज्ञानविधया कारणे ज्ञाने विषयत्वं संशयस्य। तथा च—विप्रतिपत्तिवाक्यात् संशये जाते "सन्देह्मि" इत्याकारकेण संशयरूपविशेषणज्ञानेन संशयाभावरूपज्ञानाधीनेच्छया विचारे प्रवृत्तिः। एवं रीत्या विचारे विप्रतिपत्तिवाक्यस्योपयोगः ॥ ७ ॥

तादृशसंशयं प्रति विप्रतिपत्तेः क्वचिन्निश्चयादिप्रतिबन्धादजनकत्वेऽपि स्वरूपयोग्यत्वात्, बाधादीनां च निश्चयवत्त्वे नियमाभावात् ॥ ८ ॥

"निश्चितौ हि वादं कुरुतः" इत्याभिमानिकनिश्चयाभि-

---

ननु वादिनोः स्वस्वकोटिनिश्चयकाले विप्रतिपत्तिवाक्यतः संशयासम्भवात् कथं विप्रतिपत्तिजन्यसंशयस्य व्युदसनीयतया विचाराङ्गता ? इत्यत आह तादृशसंशयं प्रतीत्यादि। तादृशसंशयं प्रति—विचाराङ्गसंशयं प्रतीत्यर्थः। क्वचिद्वादिनोः स्वस्वकोटिनिश्चयकाले। विप्रतिपत्तेः संशयं प्रत्यजनकत्वेऽपि स्वरूपयोग्यत्वात्। अत्राजनकत्वेऽपीत्यस्य फलानुपधायकत्वेऽपीत्यर्थः। स्वरूपयोग्यत्वात्—कारणतावच्छेदकधर्मवत्त्वात्। फलोपहितजातीयत्वादिति भावः। क्वचित् फलानुपधायकत्वेऽपि विप्रतिपत्तेः संशयं प्रति स्वरूपयोग्यत्वमक्षतमिति भावः। न च विप्रतिपत्तिवाक्यस्य संशयजनकत्वमसिद्धं प्रत्यक्षस्यैव संशयत्वनियमेन शाब्दबोधस्य संशयात्मकत्वासम्भवादिति वाच्यम्; प्राचीनैः शाब्दसंशयस्याप्यभ्युपगमात्। उक्तं च वेदान्तसूत्रमुक्तावल्यां "शाब्दे च संशयत्वमानुभविकम् अत एवाद्वैतस्यैव विप्रतिपत्तिवाक्यात् संशयमाहुः" इति। तन्मतानुसारेण यथाश्रुतोऽर्थः संगच्छते। प्रत्यक्षस्यैव संशयत्वमिति मते तु विप्रतिपत्तेः संशयं प्रति अजनकत्वेनेत्यस्य संशयकारणीभूतकोटिद्वयोपस्थापकपदघटितत्वेन निश्चयादिप्रतिबन्धात् क्वचित् फलानुपधायकत्वेऽपीत्यर्थो बोध्यः।

ननु बाधादीनां निश्चयवत्त्वध्रौव्येन विप्रतिपत्तेः क्वचिदपि बाधादिनिष्ठसंशयानुपधायकत्वेन तादृशसंशयं प्रति विप्रतिपत्तेः स्वरूपयोग्यत्वस्यापि अकल्पनात् क्वचित् फलोपहितजातीयस्यैव स्वरूपयोग्यत्वात्, इत्यत आह मूलकारः—बाधादीनां च निश्चयवत्त्वे नियमाभावात्। बाधादीनां निश्चयवत्त्वध्रौव्यमसिद्धं प्रमाणाभावादिति भावः ॥८॥

बाधादीनां निश्चयवत्त्वे प्रमाणाभावादिति यदुक्तं तदसङ्गतम्, "निश्चितौ हि वादं कुरुतः" इति तात्पर्यटीकायां वाचस्पतिमिश्रैरभिहितत्वात्, बाधादीनां विशेषदर्शनवत्त्वनियमो नासिद्धः, इत्यत आह—"निश्चितौ हि वादं कुरुतः" —इत्याभिमानिकनिश्चयाभिप्रायम्। उक्तमिश्रवाक्यम्

प्रायम् ; परपक्षमालम्ब्याप्यहंकारिणो विपरीतनिश्चयवतो जल्पादौ प्रवृत्तिदर्शनात् ॥ ६ ॥

तस्मात्समयबन्धादिवत् स्वकर्तव्यनिर्वाहाय मध्यस्थेन

---

"निश्चयवानस्मी"ति ज्ञापयन्तौ विवदेत इत्यर्थकम्। नन्वाभिमानिकत्वं भ्रमत्वम्। तथा सति भ्रमात्मकनिश्चयेनापि निश्चयवत्त्वनियमोऽव्याहत एव स्यात्। अतएवात्राभिमानपदं न भ्रमपरम्। वस्तुतः निश्चयशून्यावपि वादिप्रतिवादिनौ "निश्चयवानस्मी"ति ज्ञापयन्तौ विवदेते। तथा च विपरीतनिश्चयवतोऽहंकारिणः परपक्षमालम्ब्यापि जल्पादौ प्रवृत्तिरुपपद्यते। यथा शब्दाऽनित्यत्वाङ्गीकर्तुर्नैयायिकस्य कस्यचित् कदाचित् स्वोद्भटताख्यापनार्थं शब्दनित्यत्वव्यवस्थापनेऽपि प्रवृत्तिर्दृश्यते। वस्तुतस्तु कथातः प्राक् वादिप्रतिवादिनोर्निश्चयवत्त्वनियमाङ्गीकारे वादकथाया उच्छेदप्रसङ्गात्। तत्त्वबुभुत्सुकथायाः वादरूपत्वेन कथाप्रवृत्त्यनन्तरभावितत्त्वनिर्णयस्य कथातः प्रागेव जातत्वेन पुनः तत्त्वबुभुत्साया एवायोगादिति भावः। अतः वाद्यादीनां निश्चयवत्त्वनियमस्तु असिद्ध एव ॥ ९ ॥

ननु वादिनोः अन्येषां च सभास्थानां निश्चये संशयाभावमुद्दिश्य न वादिप्रतिवादिनोर्विचारे प्रवृत्तिः, किन्तु विजयादिकमुद्दिश्य, तत्र विप्रतिपत्तिर्नोपयुज्यते —इत्याशंक्य विप्रतिपत्तेरवश्यप्रदर्शनीयत्वमुपसंहरन्नाह— तस्मादिति। एतन्मूलस्थं वाक्यं विभज्य व्याख्येयम्। अन्यथा पूर्वापरसन्दर्भविरोधापत्तेः। वाक्यविभागश्च—"तस्मात् मध्यस्थेन विप्रतिपत्तिः प्रदर्शनीया एवे"ति एकं वाक्यम्, "समयबन्धादिवत् स्वकर्तव्यनिर्वाहाय च मध्यस्थेन विप्रतिपत्तिः प्रदर्शनीया एवे"ति अपरं वाक्यम्। इति मूलकारस्याभिप्रायः। तथा च विप्रतिपत्तिप्रदर्शने प्रयोजनद्वयमुक्तम्। तत्र प्रथमवाक्यस्यार्थः—यस्मात् कदाचित् वादिप्रतिवादिनोः सभास्थानां च तात्कालिके संशयाभावे निश्चितेऽपि निश्चयजन्यसंस्कारस्य कालान्तरे उच्छेदशङ्कया संशयोत्पत्तिसम्भवज्ञानेन कालान्तरेऽपि संशयाभावोऽनुवर्ततामितीच्छायाः सम्भवात् न विजयादिमात्रमुद्दिश्य विचारे प्रवृत्तिः, किन्तु कालान्तरेऽपि संशयाभावोऽनुवर्ततामिति संशयाभावमुद्दिश्यैव विचारे प्रवृत्तिः, तस्मात् विचारोद्देश्याभावप्रतियोगिसंशयजनकविप्रतिपत्तिर्मध्यस्थेन प्रदर्शनीयैव। अपरवाक्यार्थस्तु— यथा वा समयबन्धो मध्यस्थेन क्रियते, "एतन्मत-

विप्रतिपत्तिः प्रदर्शनीयैव ॥१०॥

तत्र मिथ्यात्वे विप्रतिपत्तिः—ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे

---

मालम्ब्यैव युवाभ्यां वादिप्रतिवादिभ्यां विचारणीयमि"ति, अन्यथा वादिप्रतिवादिनोः मतान्तरप्रवेशेऽव्यवस्थापत्तेः, तथा विप्रतिपत्तिरपि मध्यस्थेन प्रदर्शनीयैव। अन्यथा प्रासङ्गिकविषयमादाय वादिप्रतिवादिनोरेकस्य जयस्वीकारापत्त्या प्रकृतविषये वादिप्रतिवादिनोर्जयपराजयव्यवस्थापनरूपस्य मध्यस्थकर्तव्यस्यानिर्वाहात्। तस्मात् सार्वकालिकसंशयाभावप्रयोजकसंस्कारदार्ढ्यस्य जयपराजयव्यवस्थापनरूपस्य स्वकर्तव्यस्य च निर्वाहाय मध्यस्थेन विप्रतिपत्तिः प्रदर्शनीयैवेति लघुचन्द्रिकायामुक्तम् ॥ १० ॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथशर्मविरचितायाम् अद्वैतसिद्धिबालबोधिन्यां विप्रतिपत्तिजन्यसंशयस्य विचाराङ्गताव्यवस्थापनम्।

विप्रतिपत्तेरवश्यप्रदर्शनीयत्वमुक्तम्। प्रकृते च द्वैतमिथ्यात्वोपपादने बह्वीनां विप्रतिपत्तीनां सम्भवाद् विशिष्य विप्रतिपत्तिप्रदर्शनात् प्राक् सामान्यतो विप्रतिपत्तिं दर्शयितुमाह तत्रेत्यादि। मिथ्यात्वेन सिसाधयिषितानां यावतां विप्रतिपत्तिधर्मित्वेन निर्देशात् सामान्यतो विप्रतिपत्तिरियम्। तत्र—तासु विप्रतिपत्तिषु। मिथ्यात्वे विप्रतिपत्तिः—द्वैतमिथ्यात्वसिद्ध्यनुकूला सामान्यतो विप्रतिपत्तिः। ब्रह्मप्रमातिरिक्तेत्यादिविरुद्धार्थप्रतिपादकवाक्यद्वयरूपेत्यर्थः। एकधर्मिकविरुद्धकोटिद्वयप्रकारकज्ञानजनकवाक्यस्य विप्रतिपत्तिरूपत्वात्। विश्वं मिथ्या न वेत्यादिरूपेण विप्रतिपत्तिप्रदर्शने ब्रह्मालीकयोरपि विश्वशब्देन ग्रहणाद् बाधादिदोषापत्तेरादौ धर्मिणं निर्दिशन् विप्रतिपत्तिमाह—ब्रह्मप्रमेति। ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नमित्यन्तेन विप्रतिपत्तेर्धर्मिणो निर्देशः। 'प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि न वा' इत्यनेन प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वतदभावौ, विरुद्धे कोटी दर्शिते। [एतेन कोटिद्वयस्य निर्देशः]। अत्र विधिकोटिः सिद्धान्तीनां निषेधकोटिः द्वैतसत्यत्ववादिनाम्। अत्र ब्रह्मप्रमातिरिक्ताऽबाध्यत्वं, सत्त्वेन प्रतीत्यर्हत्वं च विशेषणे, चिद्भिन्नं विशेष्यम्।

सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं प्रतिपन्नोपाधौ त्रैकालिकनिषेध-

इदमत्रावधेयम्—अत्र धर्मिघटकपदानां विशेष्यविशेषणभावे विनिगमनाविरहात् यत्किमप्येकं विशेष्योपस्थापकम्, इतरद्वयं विशेषणोपस्थापकम्। अत्र चित्पदं ब्रह्मपरम्। तथा च ब्रह्मभिन्नमित्यर्थः।

अत्र शिष्यजनबुद्धिवैशद्यार्थं विप्रतिपत्तिघटकपदानां प्रयोजनानि निरुच्यन्ते। "चिद्भिन्नं मिथ्या न वा" इत्युक्ते शशविषाणादिरूपे अलीके बाधः स्यात्, अलीकस्यापि ब्रह्मभिन्नत्वात्। अतोऽलीके बाधवारणाय सत्त्वेन प्रतीत्यर्हमित्युक्तम्। सत्त्वेन प्रतीत्यर्हं—सत्त्वप्रकारकप्रतीतिविशेष्यमसद्विलक्षणमित्यर्थः। असतोऽलीकस्य सत्त्वप्रकारकप्रतीतिविशेष्यत्वासम्भवात, "शशविषाणं सदि"ति कुत्राप्यप्रतीतेः, तद्वारणम्। एतावन्मात्रोक्तौ अर्थात् "असद्विलक्षणत्वे सति ब्रह्मभिन्नमि"त्येतावन्मात्रधर्मिनिर्देशे शुक्तिरजतादौ सिद्धसाधनता स्यात्। शुक्तिरजतस्य सदसद्विलक्षणत्वाङ्गीकारात्।

सदसद्विलक्षणे शुक्तिरजतादौ मिथ्यात्वसाधने सिद्धान्तिनो मते सिद्धसाधनता स्यात्। अतस्तद्व्यावर्तनाय "ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सती"त्युक्तम्। ब्रह्मविषयिणी या प्रमा, तदतिरिक्ता तदन्या या प्रमा, तयाऽबाध्यत्वे सतीत्यर्थः। तथाच शुक्तिरजतादीनां ब्रह्मप्रमातिरिक्तशुक्तिप्रमया बाध्यत्वादबाध्यत्वं नास्ति। अतोऽबाध्यत्वविशेषणेन शुक्तिरजतादिवारणान्न सिद्धसाधनम्। ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सतीत्यस्य सप्रकारकज्ञानाबाध्यत्वे सतीति निष्कृष्टोऽर्थः। वेदान्तवाक्यजन्यब्रह्मविषयकनिर्विकल्पकज्ञानस्यव ब्रह्मप्रमात्वात्। सप्रकारकज्ञानमात्रस्यैव ब्रह्मप्रमात्वाभावात्। तथाच ब्रह्मणि आरोपितक्षणिकत्वे प्रातिभासिके मिथ्याभूते "ब्रह्मस्थायी"ति प्रमाबाध्ये ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सतीत्यादि विशेषणजातस्य सत्त्वेन तस्य विप्रतिपत्तिधर्मित्वप्राप्तौ तत्र मिथ्यात्वसाधने सिद्धान्तिनः सिद्धसाधनता स्यादित्यपि निरस्तम्। "ब्रह्मस्थायी"त्यस्य सप्रकारकज्ञानत्वेन ब्रह्मप्रमात्वाभावात्।

ब्रह्मप्रमाबाध्यत्वे सतीत्युक्त्यैव सामञ्जस्ये कथमभावद्वयगर्भमुपाचमिति चेत्? शृणु—वादिप्रतिवादिमतसाधारण्येन धर्मिनिर्देशस्यावश्यकतया सिद्धान्तिमते दोषानवतारेऽपि द्वैतसत्यत्ववादिमते विप्रतिपत्तिधर्मिणोऽसिद्धि-

प्रतियोगि न कः? पारमार्थिकत्वाकारेणोक्तनिषेधप्रतियोगि न

---

रेव स्यात्। तन्मते प्रपञ्चस्य सत्यत्वेन ब्रह्मप्रमाबाध्यत्वाभावात्। अभाव-द्वयप्रवेशे च नायं दोषः। प्रपञ्चसत्यत्ववादिमते प्रपञ्चस्य सर्वथाऽबाध्यत्वाद् ब्रह्मप्रमातिरिक्ताऽबाध्यत्वमपि अस्त्येव। सिद्धान्तिमते प्रपञ्चस्य ब्रह्मप्रमा-बाध्यत्वेन तदतिरिक्तप्रमयाऽबाध्यत्वमक्षतमेव। तथा च सिद्धान्तिमते प्रपञ्चस्य ब्रह्मज्ञानबाध्यत्वेन, प्रपञ्चसत्यत्ववादिमते प्रपञ्चस्य सर्वथाऽबाध्यत्वेनोक्त-विशेषणपर्यवसानं बोध्यम्।

नन्वत्र "प्रमापदं" किमर्थम्? ब्रह्मज्ञानान्यज्ञानाऽबाध्यत्वे सतीत्येवोच्य-माने को दोषः? इति चेत्? उच्यते—अधिष्ठानसाक्षात्कारेण ह्यारोपितं वस्तु बाध्यते, यथा रजताद्यधिष्ठानीभूतशुक्त्यादिसाक्षात्कारानन्तरं रजतादीनां बाधः। अधिष्ठानज्ञानञ्च ब्रह्मविषयकमेव। "सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते" इति वार्तिकोक्त्या सर्वेषां ज्ञानानां ब्रह्मविषयकत्वात् शुक्त्यवच्छिन्न-चैतन्यविषयकशुक्तिज्ञानस्यापि ब्रह्मविषयकत्वमप्यक्षतम्। तथाच शुक्तिज्ञान-मपि ब्रह्मज्ञानमेव। शुक्तिज्ञानस्य ब्रह्मज्ञानान्यज्ञानत्वाभावात्, शुक्तिज्ञान-बाध्ये प्रातिभासिकरजते ब्रह्मज्ञानान्यज्ञानाऽबाध्यत्वात् तस्य च मिथ्यात्वेन सिद्धत्वात् तत्र मिथ्यात्वानुमाने सिद्धान्तिमते सिद्धसाधनता स्यात्। अतः प्रातिभासिकस्य शुक्तिरजतादेर्विप्रतिपत्तिधर्मिकोटावप्रवेशाय ज्ञानपदमपहाय प्रमापदमुपात्तम्। वेदान्तवाक्यजन्यनिष्प्रकारकब्रह्मज्ञानस्यैव वस्तुगत्या प्रमात्वेनातथाभूतशुक्तिज्ञानस्य ब्रह्मज्ञानत्वेऽपि ब्रह्मप्रमात्वाभावात्। अतः "ब्रह्मप्रमान्येनाबाध्यत्वस्य" शुक्तिरजतेऽभावेन तस्य विप्रतिपत्तिधर्मिकोटाव-प्रवेशान्न सिद्धान्तिमते सिद्धसाधनता।

व्यावहारिकप्रपञ्चमेव विप्रतिपत्तिधर्मितया ग्रहीतुं ब्रह्मप्रमेत्यादि विशेषणमुक्तम्, तस्यैव सत्यत्वमिथ्यात्वाभ्यां सन्दिह्यमानत्वात् तत्रैव सिद्धान्तिना मिथ्यात्वमनुमेयम्। मिथ्यात्वसिद्ध्यनुकूला चेयं विप्रति-पत्तिः। अत्र च ब्रह्मप्रमेत्यादिविशेषणेन प्रातिभासिकशुक्तिरजतादीनां व्यावृत्तिः। सत्त्वेन प्रतीत्यर्हत्वविशेषणेनालीकस्य शशविषाणादेर्व्यावृत्तिः। चिद्भिन्नमित्यनेन ब्रह्मणो व्यावृत्तिः। तथा च प्रातिभासिकालीकब्रह्मभिन्नं दृश्यमात्रं व्यावहारिकः प्रपञ्चः। व्यावहारिकसत्ताया अद्याप्यसिद्धत्वात् व्यावहारिकः प्रपञ्चः मिथ्या न वा—एवं रूपेण धर्मिनिर्देशो न कृतः।

वेति ? ॥११॥

---

विप्रतिपत्तेर्धर्मिणं निर्दिश्य विधेयकोटिद्वयं निर्दिशति—प्रतिपन्नोपाधावित्यनेन । प्रतिपन्नः य उपाधिस्तन्निष्ठः यस्त्रैकालिको निषेधः तत्प्रतियोगि न वेति योजना । अत्र प्रतिपन्नपदस्य स्वसम्बन्धितया ज्ञात इत्यर्थः । तथा च स्वप्रकारकधीविशेष्य इत्यर्थः । अत्र स्वं मिथ्यात्वेनाभिमतपरम् । "उपाधि" पदस्याधिकरणं धर्मी वा अर्थः । तथा च प्रतिपन्नोपाधावित्यस्य स्वसम्बन्धितया ज्ञाते सर्वत्राधिकरणे धर्मिणि वा स्वप्रकारकधीविशेष्ये सर्वत्र धर्मिणि वा यस्त्रैकालिको निषेधस्त्रैकालिकः सर्वदा विद्यमानो यो निषेधः संसर्गाभावस्तस्य प्रतियोगी न वेत्यर्थः । तथाचात्यन्ताभावप्रतियोगी न वेत्यर्थो लब्धः । ध्वंसप्रागभावयोः सर्वदाविद्यमानत्वाभावात् । अत्र "सर्वत्र" इत्युक्त्या यावत्त्वं विवक्षितम् । अतः भ्रमप्रतिपन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगितामादाय न सिद्धसाधनम् । अत्र प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वं, तच्च द्वितीयलक्षणविवरणे स्फुटीभविष्यति । तादृशप्रतियोगी न वेत्युक्तेः मिथ्या न वा इत्यत्रैव पर्यवसानम् । मिथ्यात्वमेवोक्तप्रतियोगित्वरूपम् । एतेन प्रतिपन्नपदस्य ज्ञानविषयोऽर्थः, प्रतिपत्तिः ज्ञानम्, तद्विषयः प्रतिपन्नः, तथा च ज्ञानविषयतायाः केवलान्वयितया घटात्यन्ताभाववति ज्ञानविषयेऽधिकरणे तन्त्वादौ यस्त्रैकालिको निषेधः तत्प्रतियोगित्वस्य घटादौ सत्त्वात् सिद्धसाधनता स्यादित्यपि निरस्तम् । तन्त्वादीनां घटप्रकारकधीविशेष्यत्वाभावात् । प्रतिपन्नोपाधितया तन्त्वादीनां ग्रहणासम्भवात् । अत्र प्रतिपन्नत्वं प्रतीतत्वमात्रम् । तेन प्रमाप्रतिपन्नत्वं भ्रमप्रतिपन्नत्वमादाय न विरोधसिद्धसाधने सम्भवतः। सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वमात्रस्य मिथ्या[त्व]-लक्षणत्वे अलीकशशविषाणादौ अतिव्याप्तिः स्यात्, तस्य सर्वत्रासत्त्वात्, अतस्तद्वारणाय प्रतिपन्नोपाधावित्युक्तम्। अलीके शशविषाणादौ प्रतिपन्नोपाधेरेवाभावात् । अत्र निषेधपदं संसर्गाभावपरम् । त्रैकालिकः संसर्गाभावस्तु अत्यन्ताभाव एव । प्रागभावध्वंसव्यावर्तनाय त्रैकालिकेति निषेधविशेषणम् । निषेधस्योक्तविशेषणानुक्तौ प्रतिपन्नोपाधौ ध्वंसस्य प्रागभावस्य वा प्रतियोगित्वस्य घटादिरूपप्रपञ्चे सत्त्वेन सिद्धसाधनता स्यादित्यभिप्रायः । अत्र येन सम्बन्धेन यद्रूपविशिष्टसम्बन्धितया यज्ज्ञातं तत्सम्बन्धावच्छिन्नं तद्रूपावच्छिन्नं तन्निष्ठो-

अत्र च "पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धे-रुद्देश्यत्वात् पक्षैकदेशे साध्यसिद्धावपि सिद्धसाधनतेतिमते

---

क्ताभावस्य प्रतियोगित्वं बोध्यम् । अन्यथा सम्बन्धान्तरावच्छिन्नं रूपान्तरा-वच्छिन्नमुक्तनिषेधप्रतियोगित्वमादाय सिद्धसाधनतापत्तेः । अत्र तत्सम्बन्धा-वच्छिन्नत्वं तद्रूपावच्छिन्नत्वं प्रतियोगितायाः यदुक्तं तदापाततः । परमार्थतस्तु निरवच्छिन्नमेव प्रतियोगित्वं बोध्यम्, तच्च द्वितीयलक्षणे प्रदर्शयिष्यते ।

अत्र ये तु—येन रूपेण यत्सम्बन्धेन यत् यत्र सम्बद्धयते तेन रूपेण तेन सम्बन्धेन न तत्र तदभावो वर्तते, विरोधादिति पश्यन्ति तान्प्रति तुष्यतु दुर्जन इति न्यायेन विधेयान्तरं निर्दिशन्नाह—पारमार्थिकत्वाकारेणे-त्यादि । पारमार्थिकत्वावच्छिन्नं यदुक्तनिषेधप्रतियोगित्वं, तद्वत् न वा इत्यर्थः । अत्र पारमार्थिकत्वं ब्रह्मतुल्यसत्ताकत्वम् । पारमार्थिकत्वाकारेण इत्याकारपदं रूपपरम् । तेन पारमार्थिकत्वस्योक्तनिषेधप्रतियोगित्वावच्छे-दकत्वलाभः । अभावीयप्रतियोगितायाः व्यधिकरणधर्मावच्छिन्नत्वाङ्गीकारात् ।

एतेन प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वे साध्ये प्रपञ्चस्या-त्यन्तासत्तापत्तिरित्यपि निरस्ता । प्रपञ्चस्यासद्विलक्षणव्यावहारिकस्वरूपमनुप-मृद्य पारमार्थिकत्वाकारेण प्रपञ्चो नास्तीति साध्यते, अतो न दोषः ॥ ११ ॥

द्वैतमिथ्यात्वानुमानोपयोगिनी विप्रतिपत्तिः प्रदर्शिता, इदानीं विप्रति-पत्तिधर्मिविशेषणानां व्यावृत्तिप्रदर्शनायोपक्रमते—अत्र च पक्षतावच्छेदक-सामानाधिकरण्येनेत्यादि । अत्र च विप्रतिपत्तिधर्मिणि "ब्रह्मज्ञानेतराऽ-बाध्यत्वं" विशेषणमित्यग्रेतनेनान्वयः । तस्य च धर्मिणः प्रकृतानुमाने पक्षत्वात् पक्षविशेषणमित्युक्तम् । ब्रह्मज्ञानेतराऽबाध्यत्वं पक्षविशेषण-मुपात्तमिति शेषः । कुतः विशेषणमुपात्तम् ? इत्यत आह—"शुक्तिरूप्ये सिद्धसाधनवारणायेति । तथाहि अनुमितिर्हि कुत्रचित् पक्षतावच्छेदक-समानाधिकरणं साध्यमवगाहते, कुत्रचित् पक्षतावच्छेदकव्यापकीभूतं साध्यमवगाहते । यत्र यादृशी पक्षधर्मता हेतौ अवगाहते तत्र तादृशी अनुमितिरिति भावः । तत्रापि पुनः नवीनप्राचीनभेदेन मतभेदो वर्तते । अत्र सामानाधिकरण्येनानुमितिपक्षे नवीनमतानुसारेण "ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सती"ति प्रथमधर्मिविशेषणस्य सार्थक्यमुपपादयति । प्राचीनानां समान-विशेष्यत्वसम्बन्धेन बाधविशिष्टबुद्धयोः प्रतिबध्यप्रतिबन्धकभाववत् सिद्ध्यनु-

शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मज्ञानेतराबाध्यत्वं पक्षविशेषणम् ॥१२॥ यदि पुनः पक्षतावच्छेदकावच्छेदेनैव साध्यसिद्धि-

---

मित्योरपि समानविशेष्यत्वसम्बन्धेनैव प्रतिबध्यप्रतिबन्धकभावो युक्तः, युक्तितौल्यादित्यभिप्रायः। तथा च यद्धर्मविशिष्टे यस्मिन् धर्मिणि साध्यं सिद्धं तत्र नानुमितिर्भवति, तद्धर्मविशिष्टे धर्म्यन्तरे तु भवत्येव। एवं च प्राचीनमते सामानाधिकरण्येनानुमितौ सामानाधिकरण्येन सिद्धिर्न प्रतिबन्धिका।

नवीनानां मते तु यद्धर्मविशिष्टे क्वचित् धर्मिणि साध्यं सिद्धं तद्धर्मविशिष्टे धर्म्यन्तरेऽपि नानुमितिः। तथा च सामानाधिकरण्येनानुमितौ सामानाधिकरण्येन सिद्धेः प्रतिबन्धकत्वादाह—पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वात् पक्षैकदेशे साध्यसिद्धावपि सिद्धसाधनतेति मते। अत्र मते इति नवीनमते इत्यर्थः। अत्र विप्रतिपत्तेर्धर्मितावच्छेदकमेव प्रकृतानुमाने पक्षतावच्छेदकम्। तथाच "ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सती"ति धर्मिविशेषणानुक्तौ "सत्त्वेन प्रतीत्यर्हं चिद्भिन्नमि"त्येतावन्मात्रस्य धर्मित्वे सत्त्वेन प्रतीत्यर्हत्वविशिष्टचिद्भेदस्य धर्मितावच्छेदकतया तद्धर्मविशिष्टे शुक्तिरजतादौ प्रातिभासिके धर्मिणि मिथ्यारूपसाध्यस्य वेदान्तीनां मते सिद्धतयोक्तधर्मितावच्छेदकाक्रान्तशुक्तिरजतादेरन्यत्र पृथिव्यादौ व्यावहारिके प्रपञ्चेऽपि नानुमितिर्भवितुमर्हति। यद्धर्मविशिष्टे साध्यं सिद्धं तद्धर्मविशिष्टे व्यक्त्यन्तरेऽपि नानुमितिर्भवति, सिद्धेः प्रतिबन्धकत्वादित्यत आह मूलकारः—शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मज्ञानेतराऽबाध्यत्वं पक्षविशेषणम्। अत्र ज्ञानपदं प्रमापरम्। एतद्विशेषणोपादाने शुक्तिरजतादीनां पक्षकोटावप्रवेशात् न सिद्धसाधनतेति भावः। सुतरां नवीनमतानुसारेणैवैतद्विशेषणस्य सार्थक्यमिति मन्तव्यम्। प्राचीनमते तु एतद्विशेषणस्य सार्थक्यं नास्ति ॥१२॥

१३—इदानीं पक्षतावच्छेदकव्यापकीभूतं साध्यमनुमितेर्विषय इति द्वितीयपक्षे "ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सती"ति विशेषणस्य सार्थक्यं नास्तीति प्रतिपादयितुमाह—यदि पुनरित्यादि। नवीनमते पक्षतावच्छेदकव्यापकीभूतसाध्यानुमितौ पक्षतावच्छेदकाक्रान्ते कस्मिंश्चित् धर्मिणि साध्यसिद्धेरप्रतिबन्धकत्वात् तादृशानुमितौ शुक्तिरजतादिप्रातिभासिकवारकं "ब्रह्म-

रुद्देश्या, तदेकदेशे साध्यसिद्धावपि सिद्धसाधनताभावात् तद्वारकं विशेषणमनुपादेयम् ॥१३॥

इतरविशेषणद्वयं तु तुच्छे ब्रह्मणि च बाधवारणायादरणीयमेव । १४॥

प्रत्येकं वा विप्रतिपत्तिः—वियन्मिथ्या न वा, पृथिवी

---

प्रमातिरिक्ताऽबाध्यत्वे सती"ति पक्षविशेषणमनुपादेयम्, निरर्थकत्वात् । प्राचीनमते तु एतादृशानुमितावपि अंशतः सिद्धसाधनस्य दोषत्वादुक्तविशेषणमुपादेयमेव । अत्रायं निष्कर्षः—सामानाधिकरण्येनानुमितौ "ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सती"ति विशेषणस्य नवीनमते एव सिद्धसाधनवारकतया सार्थक्यम् । अवच्छेदकावच्छेदेनानुमितौ तु उक्तविशेषणस्य प्राचीनमते एवांशतः सिद्धसाधनवारकतया सार्थक्यम् ॥१३॥

१४—"ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सती"ति विप्रतिपत्तिधर्मिविशेषणस्य सार्थक्यं प्रदर्श्य सत्त्वेन प्रतीत्यर्हत्वचिद्भिन्नत्वयोर्विशेषणयोः सार्थक्यं प्रदर्शयितुमाह—इतरविशेषणद्वयन्त्वित्यादि । तत्र सत्त्वेन प्रतीत्यर्हत्वविशेषणं तुच्छे शशविषाणादौ बाधवारणाय, चिद्भिन्नत्वविशेषणं तु ब्रह्मणि बाधवारणाय बोध्यम् । सत्त्वेन प्रतीत्यर्हत्वचिद्भिन्नत्वयोरनुक्तौ "ब्रह्मप्रमातिरिक्ताऽबाध्यं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि न वे"ति विप्रतिपत्तिशरीरं पर्यवस्यति । तथा च ब्रह्मतुच्छयोः सर्वथाऽबाध्यत्वेन धर्मिकोटावनुप्रवेशादवच्छेदकावच्छेदेन मिथ्यात्वसिद्धेरुद्देश्यत्वे तुच्छे ब्रह्मणि च बाधः स्यात् । अतस्तद्वारणाय विशेषणद्वयमुपात्तम् । ब्रह्मप्रमातिरिक्ताबाध्यत्वावच्छेदेन मिथ्यात्वसिद्धेरुद्देश्यत्वे एव एतयोर्विशेषणयोः बाधवारकतया सार्थक्यम्, न तु ब्रह्मप्रमातिरिक्ताबाध्यत्वसामानाधिकरण्येन मिथ्यात्वानुमितौ बाधवारकतया सार्थक्यम् । अंशतो बाधस्य सामानाधिकरण्येनानुमितावदूषणत्वाद् ब्रह्मप्रमातिरिक्ताबाध्यत्वसामानाधिकरण्येन मिथ्यात्वानुमितिं प्रति ब्रह्मप्रमातिरिक्ताबाध्यत्वसामानाधिकरण्येन ब्रह्मतुच्छयोः मिथ्यात्वाभावज्ञानस्याविरोधित्वेनोक्तविशेषणद्वयस्य पक्षकोटौ प्रवेशे प्रयोजनविरहादिति भावः ॥१४॥

१५—मिथ्यात्वसिद्ध्यनुकूला सामान्यतो विप्रतिपत्तिः प्रदर्शिता । इदानीं लाघवान्मिथ्यात्वसिद्ध्यनुकूलां विशेषविप्रतिपत्तिं प्रदर्शयितुमाह—प्रत्येकं वेति । मिथ्यात्वेनाभिमतानां यावतां धर्मित्वेन निर्देशे सामान्या

मिथ्या न वेति ॥ १५ ॥ एवं वियदादेः प्रत्येकं पक्षत्वेऽपि न घटादौ सन्दिग्धानैकान्तिकता, पक्षसमत्वाद् घटादेः ॥१६॥ तथाहि

---

विप्रतिपत्तिः । मिथ्यात्वेनाभिमतं यं कञ्चित् धर्मित्वेन परिगृह्य या विप्रतिपत्तिः सा विशेषविप्रतिपत्तिः । विप्रतिपत्तिधर्मिणः साधारणत्वासाधारणत्वाभ्यां विप्रतिपत्त्योर्भेदः । **वियन्मिथ्या न वा पृथिवी मिथ्या न वेति**— पृथिवीत्वादिरूपेण पृथिव्यादिषु प्रत्येकं विप्रतिपत्तौ प्रदर्शितायामपि विप्रतिपत्तिधर्मितावच्छेदकपृथिवीत्वादिरूपेण न प्रकृतानुमाने पक्षनिर्देशः । किन्तु "वियन्मिथ्या न वा", "पृथिवी मिथ्या न वे"त्यनुगतधर्म्याश्रयाऽनुगता विप्रतिपत्तिरेव पक्षतावच्छेदिका । अननुगतानामपि विप्रतिपत्तीनां सत्यत्वमिथ्यात्वकोटिकविमतित्वेनानुगतीकृतानां पक्षतावच्छेदकत्वसम्भवात् । यथा चैतत्तथाऽग्रे उपपादयिष्यते ॥१५॥

१६—प्रदर्शितायाः प्रत्येकं विप्रतिपत्तेः मिथ्यात्वसिद्ध्यनुकूलत्वे विप्रतिपत्त्यनुसारेण "वियन्मिथ्या, दृश्यत्वात्" इत्येवमादिरूप एवानुमानप्रयोगः । तथा च वियदादीनां प्रत्येकं पक्षत्वे घटादौ सन्दिग्धानैकान्तिकता स्यादित्याशंक्य आह—एवमित्यादि । विशेषविप्रतिपत्तीनां मिथ्यात्वसिद्ध्यनुकूलत्वेन विशेषविप्रतिपत्त्यनुसारेण विप्रतिपत्तिधर्मिणां वियदादीनां प्रत्येकं मिथ्यात्वानुमाने पक्षत्वेऽपि न घटादौ सन्दिग्धानैकान्तिकता । कुतो न सन्दिग्धानैकान्तिकतेत्यत आह—**घटादेः पक्षसमत्वात्** । अयमत्र पूर्वपक्षिणामाशयः—वियदादीनां प्रत्येकं पक्षत्वेन निर्देशात् पक्षबहिर्भूतानां घटादीनां दृश्यत्वादिहेतुमत्तया निश्चितानां मिथ्यात्वरूपसाध्यसन्देहवत्त्वेन घटादौ सन्दिग्धानैकान्तिकता । निश्चितहेतुमति पक्षभिन्ने साध्यसन्देहे सन्दिग्धानैकान्तिकत्वात् । साध्यसाध्याभावसहचारनिश्चये सति हेतौ व्यभिचारनिश्चयः स्यात् । अत्र साध्याभावसहचारनिश्चयाभावात् सन्दिग्धव्यभिचारः । सिद्धान्तस्तु घटादीनां पक्षभिन्नत्वमसिद्धम्, वस्तुतः घटादीनां पक्षत्वमेव । पक्षे साध्यसन्देहस्यानुगुणत्वात् । घटादीनां पक्षत्वेऽपि पक्षसमत्वोक्तिर्यथा संगच्छते तथा मूलकृतैवाग्रे प्रदर्शयिष्यते । तथा च यथा तार्किकमते "क्षितिः सकर्तृका, कार्यत्वात्" इत्यनुमाने न जलादौ सन्दिग्धानैकान्तिकता, कार्यत्वेन हेतुना तत्रापि सकर्तृकत्वस्य सिषाधयिषितत्वादेवं प्रकृतेऽपीति भावः ॥१६॥

१७—घटादौ सन्दिग्धानैकान्तिकतां निराचिकीर्षुः प्रकृतसन्दिग्धा-

पक्षे साध्यसन्देहस्यानुगुणत्वात् पक्षभिन्न एव तस्य 'दूषणत्वं वाच्यम् ॥ १७ ॥ अतएवोक्तं "साध्याभावनिश्चयवति हेतुसन्देह एव सन्दिग्धानैकान्तिकते" ति ॥१८॥ प्रक्षत्वं तु साध्यसन्देहवत्त्वं साध्यगोचरसाधकमानाभाववत्त्वं वा; एतच्च घटादिसाधारणम्।

---

नैकान्तिकतां दिदर्शयिषुराह—तथाहीति। निश्चितहेतुमति साध्यसन्देहे न सन्दिग्धानैकान्तिकता। तथा सति निश्चितहेतुमति पक्षे सर्वत्र साध्यसन्देहे अनुमानमात्रोच्छेदप्रसंगः। प्रकृते च पक्षे साध्यसन्देहस्यानुमित्यनुकूलत्वान्न दोषः, किन्तु गुण एव। यतः प्राचीनतार्किकमते सन्दिग्धसाध्यवत्त्वमेव पक्षत्वम्। तच्चानुमितेः कारणम्। कुत्र तर्हि सन्दिग्धानैकान्तिकत्वमित्यत आह—पक्षभिन्ने एव विपक्षे इत्यर्थः ॥१७॥

१८—पक्षे साध्यसन्देहस्यानुगुणत्वात् पक्षभिन्ने विपक्षे सन्दिग्धहेतुमति तस्य सन्दिग्धानैकान्तिकस्य दूषणत्वं वाच्यम्। तथा च सन्दिग्धानैकान्तिकत्वं नोक्तरूपम्। किं स्वरूपं तर्हीति? पृच्छायां प्राचीनतार्किकोक्त्या सन्दिग्धानैकान्तिकतास्वरूपं प्रदर्शयन्नाह—अतएवोक्तमित्यादि। अतएवोक्तं प्राचीनतार्किकैरिति शेषः। किमुक्तम्? साध्याभावनिश्चयवति हेतुसन्देहे एव सन्दिग्धानैकान्तिकतेति। साध्याभावनिश्चयवति विपक्षे हेतुसन्देहे एव सन्दिग्धानैकान्तिकत्वं दोषः, न तु निश्चितहेतुमति साध्यसन्देहे। सपक्षे सन्दिग्धानैकान्तिकताया असम्भवात् पक्षे चानुमानमात्रोच्छेदप्रसङ्गात् विपक्षे निश्चितसाध्याभाववति साध्यसन्देहद्वारा दूपणस्यासम्भवात् हेतुसन्देहद्वारैव सन्दिग्धानैकान्तिकत्वं वक्तव्यम्। तदेव चोक्तं प्राचीनतार्किकैरिति भावः ॥१८॥

१९—न च यदि पक्षभिन्ने एव सन्दिग्धानैकान्तिकत्वं दोषः, तर्हि प्रकृतेऽपि घटादीनां पक्षभिन्नत्वात्तत्र सन्दिग्धानैकान्तिकता दोषः स्यादेव, वियदादीनां प्रत्येकं पक्षत्वेन निर्देशात्तद्भिन्नत्वाद् घटादीनामिति वाच्यम्। वियदादीनां प्रत्येकं पक्षत्वेऽपि यथा घटादीनां पक्षत्वनिर्वाहस्तथा प्रदर्शयितुं पक्षत्वं विवृन्वन्नाह—पक्षत्वं तु। प्रतिज्ञाविषयत्वमेव पक्षत्वं, तच्च घटादौ नास्तीति मतं व्यावर्तयितुं "तु" शब्दः। नोक्तरूपं पक्षत्वं किन्तु साध्यसन्देहवत्त्वं साध्यगोचरसाधकमानाभाववत्त्वं वा "पक्षत्वं" पक्षतापदार्थः। साध्यसन्देहवत्त्वं पक्षे साध्यसंशयः। साध्यजिज्ञासायाः

अतएव तत्रापि सन्दिग्धानैकान्तिकत्वं न दोषः ॥ १९ ॥ पक्षसमत्वोक्तिस्तु प्रतिज्ञाविषयत्वाभावमात्रेण ॥ २० ॥ न च तर्हि

---

अनुमितिकारणत्ववादिनां प्राचीनानां मतेनेदम्। नवीनानां मते तु साध्यगोचरसाधकमानाभाववत्त्वं पक्षत्वम्। साधकमानपदं सिद्धिपरम्। तथा च साध्यगोचरसाधकमानं साध्यगोचरनिश्चयः साध्यसिद्धिरित्यर्थः। तदभाववत्त्वं साध्यसिद्ध्यभावः, पक्षतेति भावः। प्राचीननवीनमतभेदेन पक्षतालक्षणद्वयमुक्तम्। एतच्च—साध्यसंशयरूपं साध्यसिद्ध्यभावरूपं वा पक्षत्वं घटादिसाधारणम्। वियदादीनां प्रत्येकं पक्षत्वेऽपि यथा वियति साध्यसन्देहः साध्यसिद्ध्यभावो वा वर्तते तथा घटादावपि साध्यसन्देहः सिद्ध्यभावो वा वर्तत एव। साध्यमत्र मिथ्यात्वमिति न विस्मर्तव्यम्। घटादावपि मिथ्यात्वसन्देहस्य मिथ्यात्वसिद्ध्यभावस्य वा सत्त्वात् पक्षत्वमक्षतमेव।

यत एव पक्षत्वं न प्रतिज्ञाविषयत्वं किन्तु साध्यसन्देहरूपं साध्यसिद्ध्यभावरूपं वा अत एव वियन्मिथ्या दृश्यत्वादित्यनुमाने घटादीनामपि पक्षत्वात् तत्रापि घटादौ न सन्दिग्धानैकान्तिकत्वं दोषः। पक्षभिन्ने एव तस्य दूषणत्वस्य वाच्यत्वात् घटादीनां पक्षभिन्नत्वाभावात् सन्दिग्धानैकान्तिकत्वदोषस्यासम्भवात्। न हि पक्षे व्यभिचारः दोषायेति भावः ॥१९॥

२०—ननु यदि घटादीनामपि वियदादिप्रत्येकपक्षकानुमाने पक्षत्वमेव, तत्कथं घटादेः पक्षसमत्वोक्तिः मूलकारस्य संगच्छते? पक्षभेदघटितत्वात् पक्षसमत्वस्येत्यत आह—पक्षसमत्वोक्तिस्त्वित्यादि। न हि घटादीनां पक्षभिन्नत्वात् पक्षसमत्वोक्तिः, किन्तु घटादीनां प्रतिज्ञाविषयत्वाभावात् पक्षसमत्वोक्तिरित्यभिप्रायः। विशेषतोऽनुमाने वियदादीनामेव प्रतिज्ञाविशेष्यत्वात्, घटादौ च तदभावात्, पक्षसमत्वोक्तिस्तु मूलकृतामुपपद्यत एव। अतएव मात्रेणेत्युक्तम्। प्रतिज्ञाविशेष्यत्वाभावादेव पक्षसमत्वोक्तिः, न तु पक्षभिन्नत्वात्। तथा च पक्षभिन्ने निश्चितहेतुमति साध्याभावसन्देहः दूषणमित्यत्र पक्षपदं पक्षतत्समोभयपरम्। पक्षसमत्वं च प्रतिज्ञाविषयभिन्नत्वे सति साध्यसन्देहवत्त्वं साध्यसिद्ध्यभाववत्त्वं वेति फलितम् ॥२०॥

२१—पक्षे पक्षसमे वा सन्दिग्धानैकान्तिकत्वं न दोषः, अन्यथाऽनुमानमात्रोच्छेदप्रसङ्ग इत्युक्तम्। तत्पक्षत्वं यदि प्रतिज्ञाविषयत्वं स्यात्, तर्हि

प्रतिज्ञाविषयत्वमेव पक्षत्वम्, स्वार्थानुमाने तदभावात् ॥ २१ ॥

एवं विप्रतिपत्तौ प्राचां प्रयोगाः—विमतं मिथ्या दृश्यत्वात्,

---

वियदादीनां प्रत्येकं पक्षत्वे प्रतिज्ञाविषयत्वरूपं पक्षत्वं वियदादिष्वेव, घटादौ तन्नास्तीति घटादिः पक्षतातिरिक्त एव, अतएव न पक्षसमः। तथा च पक्षपक्षसमयोः भिन्ने घटादौ निश्चितदृश्यत्वादिहेतुमति मिथ्यात्वरूपसाध्यसन्देहस्य वर्तमानत्वात् सन्दिग्धानैकान्तिकत्वदोषः स्यादित्याशङ्कायामाह मूलकारः न च तर्हि प्रतिज्ञाविषयत्वमित्यादि। प्रतिज्ञाविषयत्वमेव पक्षत्वं न भवतीत्यर्थः। किन्तु पक्षत्वमुक्तरूपमेव। कुतः प्रतिज्ञाविषयत्वं पक्षत्वं न भवतीत्यत आह—स्वार्थानुमाने तदभावात्। स्वार्थानुमाने न्यायवाक्यप्रयोगाभावात् न्यायावयवानां प्रतिज्ञादीनामप्यभावात् स्वार्थानुमाने पक्षत्वाभावप्रसङ्गात्। अतः स्वार्थपरार्थानुमानसाधारणपक्षत्वं साध्यसन्देहवत्त्वं साध्यगोचरसाधकमानाभाववत्त्वं वा पूर्वोक्तमेव बोध्यम्। तथा च घटादीनां प्रतिज्ञाविषयत्वाभावात् पक्षभिन्नत्वमेव, तत्र च सन्दिग्धानैकान्तिकता दोषः स्यादेवेति निरस्तम्। तथा च वियदित्येव पक्षनिर्देशोऽस्तु लाघवादिति सर्वं सुष्ठु ॥२१॥

२२—मिथ्यात्वसिद्ध्यनुकूला विप्रतिपत्तिः "ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि न वा? इत्यादिरूपा प्रदर्शिता, तत्र भावकोटिः वादिनां वेदान्तिनाम् अभावकोटिः प्रतिवादिनां द्वैतिनामित्यप्युक्तम्। विप्रतिपत्तिप्रदर्शनसमनन्तरं "किमत्र भावकोटौ प्रमाणम्"? इति भवति प्रतिवादिनां प्रमाणविषयिणी जिज्ञासा। तत एव स्वाभिमतकोटौ मिथ्यात्वेऽनुमानं प्रमाणमुपस्थापयन्नाह—एवं विप्रतिपत्तौ प्राचां प्रयोगाः इत्यादि-प्रदर्शितरूपायां विप्रतिपत्तौ सिद्धायामित्यर्थः। प्राचां न्यायमकरन्दकृतामानन्दबोधभट्टारकाणां प्रयोगाः न्यायवाक्यप्रयोगास्त्रयः। के ते? इत्याह—विमतं मिथ्या दृश्यत्वात्, विमतं मिथ्या जडत्वात्, विमतं मिथ्या परिच्छिन्नत्वात्; त्रिष्वप्युदाहरणमेकं शुक्तिरूप्यवदिति। एषु प्रयोगेषु विमतमिति पक्षनिर्देशः। विमतमित्यस्य विप्रतिपत्तिवाक्यजन्यसंशयविशेष्यमित्यर्थः। प्रदर्शिता या विप्रतिपत्तिः ब्रह्मप्रमातिरिक्ताऽबाध्यत्वादिरूपा। तज्जन्यः यः संशयः, तद्विशेष्यमित्यर्थः। तथा चोक्तविप्रतिपत्तिवाक्यजन्यसंशयस्यैव विशेष्यतासम्बन्धेन पक्षतावच्छेदकत्वं

जडत्वात्, परिच्छिन्नत्वात्, शुक्तिरूप्यवदिति। नात्रावयवेष्वाग्रहः ॥ २२ ॥ अत्र स्वनियामकनियतया विप्रतिपत्त्या लघुभूतया

---

बोद्धव्यम्। मिथ्येतिपदेन साध्यनिर्देशः। मिथ्यात्वं साध्यम्। तच्च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वादिरूपम्। एतच्चाग्रे स्फुटीभविष्यति। दृश्यत्वादिहेतुस्वरूपं हेतुनिर्वचनप्रस्तावे, शुक्तिरूप्यवदिति दृष्टान्तस्वरूपं दृष्टान्तनिरूपणप्रस्तावे च स्फुटीभविष्यति। एवं न्यायवाक्यप्रयोगे कति न्यायावयवाः प्रयोक्तव्याः ? इत्यत्राग्रहः इयत्तावधारणं नास्ति। यतस्तार्किकाणां प्रतिज्ञाहेतूदाहरणोपनयनिगमनानीति पञ्चावयववादित्वात् तान् प्रति पञ्चावयवाः प्रयोक्तव्याः। मीमांसकानां प्रतिज्ञाहेतूदाहरणेति त्र्यवयववादित्वादुदाहरणोपनयनिगमनानीति त्र्यवयववादित्वात् वा तान्प्रति त एव त्रयोऽवयवाः प्रयोक्तव्याः, बौद्धानामुदाहरणोपनयेति द्व्यवयववादित्वात् तान्प्रति तावेव द्वाववयवौ प्रयोक्तव्याविति भावः। अतएव नात्रावयवेष्वाग्रहः इत्युक्तं मूलकृता। तदुक्तम्—

> तत्र पञ्चतयं केचिद् द्वयमन्ये वयं त्रयम्।
> उदाहरणपर्यन्तं यद्वोदाहरणादिकम् ॥

केचित्—नैयायिकाः, अन्ये बौद्धाः, वयं मीमांसकाः, तार्किकबौद्धमीमांसकानां पञ्चद्वित्र्यवयववादित्वात् तान्प्रति यथामतमवयवाः प्रयोक्तव्याःइति भावः॥२२॥

२३—"विमतं मिथ्या" इति प्राचां प्रयोगे "विमतमि"त्यस्य विप्रतिपत्तिविशेष्यमित्यर्थ इत्युक्तम्। विप्रतिपत्तिश्च ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि न वेत्यादिरूपा। एतादृशविप्रतिपत्तिवाक्यजन्यसंशय एव "विमति" पदेनोच्यते। विमतेः संशयस्य विशेष्यं विमतम्। एतदेव प्राचां प्रयोगे पक्षत्वेन निर्दिष्टम्। तथा च विमतिरेव पक्षतावच्छेदिका। न तु विमतिमात्रं पक्षतावच्छेदकम्। विमतिमात्रस्य पक्षतावच्छेदकत्वे ब्रह्मधर्मिकायास्तुच्छधर्मिकाया वा, विमतेः सम्भवात्, ब्रह्मतुच्छयोरपि पक्षकोटावन्तर्भावापत्त्याऽतिप्रसङ्गात्। एतदतिप्रसङ्गवारणाय पक्षतावच्छेदिकाया विमतेरप्यवच्छेदकसापेक्षत्वेन ब्रह्मप्रमातिरिक्ताऽबाध्यत्वादि यदवच्छेदकमुच्यते, तस्यैव ब्रह्मप्रमातिरिक्ताबाध्यत्वादेः पक्षतावच्छेदकत्वमस्तु। ब्रह्मपक्षतावच्छेदकतावच्छेदकत्वेनाभिमतस्य पक्षतावच्छेदकत्वमस्तु। अलं ब्रह्मप्रमातिरिक्ताऽबाध्यत्वादिज्ञानाधीनज्ञानायाः विमतेः पक्षतावच्छेदकत्वोक्त्या,

पक्षतावच्छेदो न विरुद्धः ॥ २३ ॥ समयबन्धादिना व्यवधानात्तस्यानुमानकालासत्त्वेऽप्युपलक्षणतया पक्षतावच्छेदकत्वम् ॥ २४ ॥

---

व्यर्थत्वादित्याशंक्य पक्षतावच्छेदकशरीरलाघवात् विमतिरेव पक्षतावच्छेदिका भवितुमर्हतीत्याह मूलकारः—अत्र स्वनियामकनियतयेत्यादि ।

अत्र प्राचामनुमाने, स्वनियामकनियतया स्वस्याः पक्षतावच्छेदिकायाः विमतेः नियतविषयत्वे नियामकं यद् ब्रह्मप्रमातिरिक्ताऽबाध्यत्वादि, तन्नियतया ब्रह्मतुच्छप्रातिभासिकाविषयकत्वेन नियतविषयया विप्रतिपत्त्या विमत्या पक्षताया अवच्छेदो न विरुद्धः । तत्र हेतुः लघुभूतया । लघ्व्या विमत्यैव प्रकृतानुमाने पक्षताऽवच्छिद्यतां न पुनः ब्रह्मप्रमातिरक्ताऽबाध्यत्वादिना । प्रकृतानुमाने पक्षतावच्छेदिका विमतिर्यद्यपि नियतविषयत्वायावच्छेदकसापेक्षा, तथापि सावयवत्वसाधितेन लघुभूतेन कार्यत्वेन पृथिव्याः सकर्तृकत्वसाधनमिव, स्वनियामकनियतया लघ्व्या विप्रतिपत्त्या पक्षतावच्छेदो न विरुद्धः । तथाच ब्रह्मप्रमातिरिक्ताऽबाध्यत्वादिरूपेण परिचितायाः विमतिव्यक्तेः तद्व्यक्तित्वेनैव पक्षतावच्छेदकत्वं, प्रमाणोपन्यासे लघुभूतस्यैवादरणीयत्वात् । तद्व्यक्तित्वेन निवेशादेव न पक्षतावच्छेदकतावच्छेदकीभूतानां ब्रह्मप्रमातिरिक्ताऽबाध्यत्वादीनां निवेशः—इति भावः ॥२३॥

२४—ननु विमतेः पक्षतावच्छेदकत्वे पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरनुमानफलत्वात् पक्षतावच्छेदकीभूतायाश्च विमतेर्ज्ञानरूपायाः मध्यस्थकर्तृकसमयबन्धादिना व्यवहितत्वेनानुमानकालेऽभावात् नानुमानस्य पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरूपफलसिद्धिरित्याशंक्याह समयबन्धादिना इत्यादि । समयबन्धादिना विप्रतिपत्तिजन्यसंशयस्य व्यवहितत्वादतीतत्वात्, तस्यं विमतिरूपपक्षतावच्छेदकस्यानुमानकालेऽनुमितिसमयेऽसत्त्वेऽप्यवर्तमानत्वेऽपि नष्टत्वेऽपि इत्यर्थः । यद्यपि विमतिः समयबन्धादिना व्यवहितत्वात् नानुमानकालेऽस्ति, ज्ञानस्य तृतीयक्षणनाश्यत्वात्, तथाप्युपलक्षणतया सा विमतिरेव पक्षतावच्छेदिका । श्यामत्वोपलक्षितरक्तः इतिवत् विमतिविषयत्वेनोपलक्षितं विमतं मिथ्येति विमतेरुपलक्षणतया पक्षतावच्छेदकत्वं युक्तम् । समयबन्धश्च—अपशब्दः वर्जनीयः, एतावन्ति च निग्रहस्थानान्युद्भावनीयानि, "त्वयेदं साधनीयमनेनेदं दूषणीयमि"त्यादिमध्यस्थवाक्यरूपः । आदिपदेन सभ्यानुविधेयसंवरणं ग्राह्यम् ॥२४॥

यद्वा विप्रतिपत्तिविषयतावच्छेदकमेव पक्षतावच्छेदकम्। प्राचां प्रयोगेष्वपि विमतमिति पदं विप्रतिपत्ति—(–विमति–?) विषयतावच्छेदकावच्छिन्नाभिप्रायेणेत्यदोषः ॥ २५ ॥

ननु किमिदं मिथ्यात्वं साध्यते ? न तावन्मिथ्याशब्दः

---

२५—यद्यपि शरीरलाघवात् विमतिरेव पक्षतावच्छेदिकेत्युक्तम्, तथापि विमतेः शरीरलाघवेऽपि प्रतिपत्तिगौरवान्न पक्षतावच्छेदकत्वं युक्तम्, श[ा]ब्दगौरवापेक्षया प्रतिपत्तिगौरवस्य ज्यायस्त्वादित्यस्वरसादाह—यद् वा इति। अथ वा ब्रह्मप्रमातिरिक्ताऽबाध्यत्वादिरूपस्य विमतिपर्यायकतया प्रथमोपस्थितत्वात् ब्रह्मप्रमातिरिक्ताऽबाध्यत्वादिरूपमेव पक्षतावच्छेदकं युक्तमित्यत आह—यद् वा इत्यादि। अथ वा विमतेरुपलक्षणतया पक्षतावच्छेदकत्वे प्रमाणस्योद्देश्यतावच्छेदकविशेषणत्वावगाहित्वरूपनियमबाध एवाऽत्र दोषः स्यात्, इत्यस्वरसादाह यद्वेति। विप्रतिपत्तिविषयतावच्छेदकमेव प्रकृतानुमाने पक्षतावच्छेदकम्। विप्रतिपत्तिविषयतावच्छेदकञ्च ब्रह्मप्रमातिरिक्ताऽबाध्यत्व-सत्त्वेनप्रतीत्यर्हत्व-चिद्भिन्नत्वानि। तथाच "विमतं" विप्रतिपत्तिविषयतावच्छेदकावच्छिन्नं "ब्रह्मप्रमातिरिक्ताऽबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नमि"ति। तथा च पूर्वोक्तास्वरसादीनामनवकाश इति ॥२५॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथशर्मविरचितायाम् अद्वैतसिद्धिबालबोधिन्यां न्यायप्रयोगविवरणम्।

२६—विप्रतिपत्तिप्रदर्शनानन्तरं सिद्धान्तिना स्वाभिमतमिथ्यात्वकोटावनुमानं प्रमाणमुपन्यस्य विमतं मिथ्या दृश्यत्वादित्यादि प्राचां प्रयोग उपस्थापितः। तस्मिन् प्रयोगे साध्यप्रदर्शनाय यन्मिथ्यापदं प्रयुक्तं तदर्थस्य वक्ष्यमाणरूपेण दुर्घटत्वं मन्वानः द्वैतवादी पृच्छति—ननु. किमिदं मिथ्यात्वं साध्यत इत्यादि। मिथ्यात्वं मिथ्यापदार्थतावच्छेदकविशिष्टं साध्यते. तादात्म्यसम्बन्धेन पक्षविशेषणतया निर्दिश्यते। विमतं मिथ्या इति प्रयोगे मिथ्यापदं मिथ्यापदार्थतावच्छेदकविशिष्टप्रमितिं। इदमेव साध्यं प्रपञ्चरूपे पक्षे तादात्म्यसम्बन्धेन सिषाधयिषितम्। यत् प्रपञ्चरूपे पक्षे तादात्म्यसम्बन्धेन सिषाधयिषितं मिथ्यात्वं तत् किम् ?—इति द्वैतवादिनां प्रश्नः—ननु इति।

पृच्छतां द्वैतवादिनामयमाशयः—मिथ्यात्वं च न अत्यन्तासत्त्वम्,

"अनिर्वचनीयतावचनः" इति पञ्चपादिकावचनात् सदसत्त्वानधि-

---

सिद्धान्तिनामपसिद्धान्तापातात्; नापि सद्विविक्तत्वम्, सतोऽपि सदन्तरवि-विक्तत्वात्, नापि भ्रान्तिविषयत्वम्, ब्रह्मणोऽप्यधिष्ठानत्वेन भ्रान्तिज्ञान-विषयत्वात्; नाप्यनिर्वाच्यत्वम्, जगत्सत्यत्ववादिनाऽनिर्वाच्यवस्त्वनङ्गीकारेण [रात्] तं प्रति साध्याप्रसिद्धेरिति। एवं मिथ्याशब्दार्थाः बहवः द्वैतवादिभिः न्यायामृतकृद्भिः प्रदर्शिताः दूषिताश्च। तथा च मिथ्यात्वं दुर्घटम्। सिद्धा-न्तिनस्तु अनभिमतेषु अर्थेषु दोषसत्त्वेऽपि वक्ष्यमाणेषु पञ्चविधेषु स्वाभिमतेषु अर्थेषु न कोऽपि दोषावसर इति मत्वा प्रदर्शयन्तु द्वैतवादिनः स्वाभिप्रायं पश्चात् सर्वं समाधास्याम इति द्वैतवादिनां न्यायामृतकृतां सर्वा वाचोयुक्ती-रुपस्थापयन्त आहुः—न तावद् इत्यादि। मिथ्याशब्दार्थं निरूपयता-मतिप्राचीनानां पञ्चपादिकाकृतां पद्मपादाचार्याणां वचनं दूषयितुमुपन्यस्यति पूर्ववादी—मिथ्याशब्दोऽनिर्वचनियतावचन इति। अनिर्वचनी-यत्वं सदसत्त्वानधिकरणत्वरूपं न तावत् युक्तमिति शेषः। सदसदनधिकरणत्व-मिति पाठे तु सदसच्छब्दौ भावपरौ बोध्यौ।

कुतो न युक्तम्? इत्यत आह—तद्धि किम् इति। तत् हि—सदसत्त्वानधिकरणत्वं हि। सिद्धान्तिना हि पक्षान्तरनिषेधेन मिथ्यात्वं पञ्चधा निरुक्तम्। तत्र प्रथमं 'मिथ्याशब्दोऽनिर्वचनीयतावचनः' इति पञ्चपादिकारीत्या सदसत्त्वानधिकरणत्वरूपानिर्वाच्यत्वं मिथ्यात्वम्, द्वितीयम्—'प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य मिथ्यात्वस्य' इति पञ्चपादिकाटीकाकृतां विवरणाचार्य्याणां प्रकाशात्मश्रीचरणानां वचनानु-सारेण बाध्यत्वमनिर्व्वाच्यत्वम्, तच्च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि-त्वरूपम्, अथवा तृतीयम्—'अज्ञानस्य स्वकार्येणवर्त्तमानेन प्रवि-लीनेन वा सह ज्ञानेन निवृत्तिर्बाधः' इति पञ्चपादिकाटीकाकृतां विवरणाचार्य्याणां प्रकाशात्मश्रीचरणानां वचनानुसारेण, 'ज्ञानत्वेन ज्ञाननिव-र्त्यत्वरूपबाध्यत्वमेव मिथ्यात्वम्', चतुर्थं—'स्वसमानाधिकरणात्य-न्ताभावप्रतियोगित्वं मिथ्यात्वम्' इति तत्त्वप्रदीपिकाकृतां चित्सुखा-चार्य्याणां वचनानुसारेणोक्तरूपमेव मिथ्यात्वम्, पञ्चमन्तु—'सद्विविक्तत्वं मिथ्यात्वम्' इति न्यायमकरन्दकृतामानन्दबोधभट्टारकाणां वचनानुसारेण—'सद्रूपत्वाभावः' एव मिथ्यात्वमिति। तेषु पञ्चविधेषु निर्वचनेषु

करणत्वरूपमनिर्वाच्यत्वम् ॥ २६ ॥ तद्धि किं सत्त्वविशिष्टासत्त्वाभावः, उत सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपं धर्मद्वयम्, आहोस्वित् सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावरूपं विशिष्टम् ॥२७॥

---

आद्यं निर्व्वचनं सदसत्त्वानधिकरणत्वरूपमनिर्व्वाच्यत्वं मिथ्यात्वं न तावद्युक्तमिति भावः ॥ २६ ॥

२७—तदेतत् सदसत्त्वानधिकरणत्वमनिर्वचनीयत्वं त्रिधा विकल्प्य दूषयितुमाह—पूर्व्ववादी—तद्धि किम् इत्यादि । तद्धि सदसत्त्वानधिकरणत्वं हि, किम् 'सत्त्वविशिष्टासत्त्वाभावः' (१ ?) सत्त्वे सत्यसत्त्वरूपं यद्विशिष्टं तस्याभाव इत्यर्थः । सच तदसच्चेति सदसत्, तस्य भावः सदसत्त्वमिति कर्म्मधारयसमासमङ्गीकृत्याप्रसिद्धप्रतियोगिकाभावाभ्युपगमेनायं प्रथमः पक्षो बोध्यः, सत्त्वविशिष्टस्यासत्त्वस्य कुत्राप्यप्रसिद्धेः । सदसदनधिकरणत्वमिति वा पाठे सदसच्छब्दयोर्भावप्रधाननिर्द्देशात्सच्छब्दस्य सत्त्वपरतया तस्य च सत्त्वस्यासत्त्वविशेषणत्वेऽनधिकरणत्वस्य चाधिकरणत्वाभाववत्त्वे च सत्त्वविशिष्टस्यासत्त्वस्याभावे प्रथमविकल्पे पर्यवसानात् । उत अथ वा, 'सत्त्वात्यन्ताभावाऽसत्त्वात्यन्ताभावरूपं धर्मद्वयम्' (२ ?) सच असच्च सदसती तयोर्भावः सदसत्त्वम् । द्वन्द्वान्ते श्रूयमाणः त्वप्रत्ययोऽनधिकरणपदञ्च प्रत्येकमभिसम्बद्ध्यते । तथा च सत्त्वानधिकरणत्वमसत्त्वानधिकरणत्वञ्चेति धर्म्मद्वयं लब्धम्। अनधिकरणत्वस्य चाधिकरणत्वात्यन्ताभाववत्त्वरूपत्वे पर्य्यवसानेन सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्म्मद्वयं लभ्यत इति ध्येयम् । द्वन्द्वसमासमङ्गीकृत्यायं द्वितीयः पक्षः । आहोस्वित् अथ वा सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावरूपं विशिष्टम् (३ ?) । सति सप्तम्याः समानाधिकरणत्वार्थकत्वात् सत्त्वात्यन्ताभावसमानाधिकरणोऽसत्त्वात्यन्ताभावोऽर्थः। तथा च सदसत्त्वानधिकरणत्वमित्यत्र सत् पदं भावपरम्, एवञ्च सदनधिकरणत्वञ्च तदसत्त्वानधिकरणत्वञ्चेति मध्यपदलोपिकर्म्मधारयाश्रयणेन सत्पदोत्तरानधिकरणत्वपदस्य लोपात् सदसत्त्वानधिकरणत्वमिति पदं सिद्धम्। कर्मधारयसमासाश्रयणात्सत्त्वानधिकरणत्वासत्त्वानधिकरणत्वयोर्विशेषणविशेष्यभावे सिद्धे तृतीयः पक्षः प्राप्तः । सत्त्वात्यन्ताभावस्यासत्त्वात्यन्ताभावे विशेषणत्वमनङ्गीकृत्य द्वितीयः पक्षोऽङ्गीकृत्य च तृतीयः पक्ष इति विशेषः ॥२७॥

नाद्यः, सत्त्वमात्राधारे जगति सत्त्वविशिष्टासत्त्वानभ्युपगमात्, विशिष्टाभावसाधने सिद्धसाधनात् ॥ २८ ॥

न द्वितीयः, सत्त्वासत्त्वयोरेकाभावेऽपरसत्त्वावश्यकत्वेन व्याघातात्, निर्धर्मकब्रह्मवत् सत्त्वराहित्येऽपि सद्रूपत्वेनामिथ्या-

---

२८—एवं विकल्पत्रयम्प्रदर्श्येदानीं दूषयितुमाह—नाद्य इत्यादि। न सत्त्वविशिष्टासत्त्वाभावः सदसत्त्वानधिकरणत्वरूपमनिर्वाच्यत्वम्भवितुमर्हति; सिद्धसाधनदोषापातात्। माध्वमते सदेकस्वभावे जगति सत्त्वविशिष्टासत्त्वाभावस्य सिद्धत्वात्। सत्त्वे सत्यसत्त्वरूपविशिष्टस्य योऽभावस्तस्य सिद्धत्वात्। विशेष्यस्यासत्त्वस्य 'सत्तामात्राधारे जगति' अभावात् सत्त्वविशिष्टासत्त्वस्याभावः। विशेष्याभावाद्विशिष्टाभाव इति भावः। सत्त्वविशिष्टासत्त्वस्य प्रतियोगिनोऽप्रसिद्धिरपि नैयायिकादिमते दूषणं बोध्यम्। माध्वमतेऽलीकस्यैवात्यन्ताभावस्वीकारेणोक्तविशिष्टप्रतियोगिकाभावप्रसिद्धावपि नैयायिकादिमते तदप्रसिद्धिः॥ २८ ॥

२९—सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपं धर्मद्वयं सदसत्त्वानधिकरणत्वरूपमनिर्वाच्यत्वमिति द्वितीयं पक्षं व्याघातार्थान्तरसाध्यवैकल्यैः दूषयति—न द्वितीय इति। तेषु दूषणेषु प्रथमतस्तावद्व्याघातमाह—सत्त्वासत्त्वयोः इत्यादि। परस्परविरहरूपयोर्धर्मयोरेकतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् सत्त्वात्यन्ताभावे साध्येऽसत्त्वस्यैव प्राप्त्या पुनः असत्त्वात्यन्ताभावे साध्ये व्याघातः। परस्पराभावरूपत्वेन विरुद्धयोरेकत्र युगपन्निषेधायोगात्। एवमसत्त्वात्यन्ताभावे साध्ये सत्त्वस्यैव प्राप्त्या पुनः सत्त्वात्यन्ताभावे साध्ये पूर्ववदेव व्याघातः। सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभिमानेनेयमुक्तिः। व्याघातमुक्त्वाऽर्थान्तरमाह—निर्धर्मकेत्यादि। "केवलो निर्गुणश्चे"ति श्रुत्या यथा शुद्धे ब्रह्मणि बाध्यत्वाभावरूपं सत्त्वं धर्मो नाङ्गीक्रियते, सत्त्वधर्मराहित्यस्य सद्रूपत्वानुपमर्दकत्वात् ब्रह्मणि सत्त्वात्यन्ताभावो वर्तते; तथा ब्रह्मणि बाध्यत्वरूपमसत्त्वं यत् त्रैकालिकपारमार्थिकनिषेधप्रतियोगित्वं तद्धर्मोऽपि नास्ति, ब्रह्मणोऽपि बाध्यत्वेऽविद्यादीनां भासकत्वरूपसाक्षित्वं न स्यात्, तथा च जगदान्ध्यप्रसङ्गात्। तथा च निर्धर्मके ब्रह्मणि सत्त्वासत्त्वयोरभावेऽपि यथा तस्य सद्रूपत्वं सिद्धान्तिभिरङ्गीक्रियते, तथा प्रपञ्चस्यापि सत्त्वासत्त्वराहित्येन सद्रूपत्वं किं न स्यात्? प्रपञ्चस्य सद्रूपत्वे

त्वोपपत्त्याऽर्थान्तराच्च, शुक्तिरूप्येऽबाध्यत्वरूपसत्त्वव्यतिरेकस्य सत्त्वेऽपि बाध्यत्वरूपासत्त्वस्य व्यतिरेकासिद्ध्या साध्यवैकल्याच्च ॥ २९ ॥

अतएव न तृतीयः; पूर्ववत् व्याघातात्, अर्थान्तरात् साध्यवैकल्याच्चेति चेत् ? ३० ॥

---

च तस्य सद्रूपत्वविरोधिमिथ्यात्वाऽसिद्ध्याऽर्थान्तरमिति भावः। प्रपञ्चस्य सद्रूपत्वविरोधिमिथ्यात्वसाधनाय प्रवृत्तमनुमानं सद्रूपत्वाऽविरोधि यत्किमपि साध्यमादाय पर्यवसितमिति प्रकृतादर्थादन्यार्थकत्वेनार्थान्तरत्वमिति बोध्यम्। अर्थान्तरमुक्त्वा साध्यवैकल्यमाह—शुक्तिरूप्ये इत्यादि। शुक्तिरूप्यस्य बाध्यत्वेनाबाध्यत्वरूपसत्त्वस्याभावेऽपि बाध्यत्वरूपासत्त्वस्याभावासम्भवात् दृष्टान्तीकृते शुक्तिरजते सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयसाध्यस्याभावेन दृष्टान्तस्य साध्यविकलता। धर्मद्वयस्य साध्यत्वात् माध्वमते शुक्तिरूप्ये सत्त्वात्यन्ताभावस्य सत्त्वेऽप्यसत्त्वस्यैव सत्त्वेनासत्त्वात्यन्ताभावस्य शुक्तिरूप्येऽभावात् साध्यविकलता ॥ २९ ॥

३०—धर्मद्वयसाध्यरूपे द्वितीयकल्पे दूषणत्रयमुक्त्वा सत्त्वात्यन्ताभाववत्त्वे सति असत्त्वात्यन्ताभावरूपविशिष्टसाध्ये तृतीयकल्पे उक्तं दूषणत्रयं योजयन्नाह—अतएव न तृतीय इत्यादि। अत एव द्वितीयकल्पवदेव, न तृतीयः न तृतीयकल्पोऽपि समीचीनः। यथा द्वितीयः कल्पः दूषणत्रयग्रस्तत्वात् न समीचीनस्तथाऽयं तृतीयोऽपि कल्पः दूषणत्रयग्रस्तत्वादेव न समीचीनः। कल्पस्यास्य दूषणत्रयग्रस्तत्वं दर्शयति—पूर्ववद्व्याघातात् इत्यादिना। धर्मद्वयसाध्यपक्ष इव विशिष्टसाध्यपक्षेऽपि परस्परविरहरूपयोः सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावयोः धर्मयोर्विशेषणविशेष्यभावाऽयोगाद्व्याघातः। सत्त्वात्यन्ताभाववत्त्वेऽपि निर्द्धर्मकब्रह्मणः यथा मिथ्यात्वविरोधिसद्रूपता तथा प्रपञ्चस्यापि मिथ्यात्वविरोधिसद्रूपत्वेनाप्युपपत्त्याऽर्थान्तरात्। एवं दृष्टान्तस्य शुक्तिरजतस्य माध्वमतेऽसत्त्वेनासत्त्वात्यन्ताभावरूपविशेष्यांशस्य शुक्तिरजतेऽभावेन सत्त्वात्यन्ताभाववत्त्वे सति असत्त्वात्यन्ताभावरूपविशिष्टस्य साध्यस्याभावात् साध्यवैकल्यम् इति पूर्वपक्षः ॥ ३० ॥

## मिथ्यात्वनिरूपणे प्रथमलक्षणम्—सिद्धान्तपक्षः

मैवम्; सत्त्वात्यन्ताभावाऽसत्त्वात्यन्ताभावरूपधर्मद्वयविवक्षायां दोषाभावात् ॥ ३१ ॥

न च व्याहतिः; सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया वा, परस्परविरहव्यापकतया वा, परस्परविरहव्याप्यतया वा ॥ ३२ ॥

[तत्र] नाद्यः, तदनङ्गीकारात्। तथा हि अत्र त्रिकाला-

---

३१—पूर्वपक्षिणा सदसत्त्वानधिकरणत्वरूपमनिर्वाच्यत्वं त्रिधा विकल्प्य त्रिष्वेव कल्पेषु दोषाः प्रदर्शिताः। इदानीं सिद्धान्ती पूर्वपक्षिप्रदर्शितदूषणसमाधानाय आह—मैवमित्यादि। सत्त्वविशिष्टासत्त्वस्याभावं प्रथमकल्पं दुष्टत्वेन परित्यज्य द्वितीयं कल्पं सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयं निर्दुष्टत्वेनोपपादयन्नाह—सत्त्वात्यन्ताभावेत्यादि। दोषाभावात् व्याघातार्थान्तरसाध्यवैकल्यदोषाणामभावात् ॥ ३१ ॥ ३२—सत्त्वासत्त्वयोरेकाभावेऽपरसत्त्वस्यावश्यकत्वेन या व्याहतिरुक्ता, सा न च युक्तेत्याह—न च व्याहतिरित्यादि। उक्तां व्याहतिं त्रिधा विकल्प्य दूषयन्नाह—सा हीत्यादि। सा हि प्रदर्शिता व्याहतिः किं सत्त्वासत्त्वयोः परस्परविरहरूपतया? (१) सत्त्वस्याभावः असत्त्वमसत्त्वस्याभावः सत्त्वमिति परस्पराभावरूपतया व्याघात इत्यभिप्रायः। अथ वा (२) परस्परविरहव्यापकतया? सत्त्वाभावव्यापकमसत्त्वम्, असत्त्वाभावव्यापकं सत्त्वमित्यभिप्रायः। अथ वा (३) परस्परविरहव्याप्यतया? सत्त्वाभावव्याप्यमसत्त्वमसत्त्वाभावव्याप्यं सत्त्वमित्यभिप्रायः। प्रदर्शितरूपत्रयं किं व्याघातरूपतर्के हेतुरित्यर्थः ॥ ३२ ॥ ३३—व्याघातप्रयोजकं प्रथमं पक्षं परस्परविरहरूपं दूषयति—तत्र नाद्य इति। तदनङ्गीकारात् तस्य सत्त्वासत्त्वयोः परस्परविरहरूपत्वस्यानङ्गीकारादस्वीकारात्। कथमनङ्गीकार इत्यत आह—तथा हीति। अत्र सिद्धान्तिनः मते, त्रिकालाबाध्यत्वरूपं सत्त्वं तद्व्यतिरेकः—तादृशसत्त्वस्यात्यन्ताभावः

बाध्यत्वरूपसत्त्वव्यतिरेको नासत्त्वम्, किन्तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्; तद्व्यतिरेकश्च साध्यत्वेन

---

नासत्त्वं न सिद्धान्तिनाऽभ्युपगतमिति शेषः। तदभ्युपगमे हि परस्पराभाव रूपतया व्याघातः स्यात्। यदि सत्त्वासत्त्वयोः परस्परविरहरूपत्वं सिद्धान्तिना नाङ्गीक्रियते तर्हि सत्त्वमसत्त्वं च सिद्धान्तिनो मते कीदृगित्याह—किन्त्वित्यादि। त्रिकालबाध्यत्वं सत्त्वं प्रागेवोक्तमसत्त्वं तु "क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम्"—सत्त्वेन प्रतीयमानत्वानधिकरणत्वं—सत्त्वेन प्रतीयमानत्वाभावः—सत्तादात्म्याभाव इति यावत्। सत्तादात्म्यापन्ने वस्तुनि सत्त्वप्रकारकप्रतीतेरावश्यकत्वेन सत्तादात्म्यानापन्ने सत्त्वप्रकारकप्रतीतेरयोगात्। शशविषाणादीनां ब्रह्मण्यनारोपितत्वेन सत्त्वप्रकारकप्रतीतेर्विषयत्वाभावात्। घटादिदृश्यानां तु सद्रूपे ब्रह्मणि तादात्म्येनारोपितत्वात् सत्त्वप्रकारकप्रतीतिविषयत्वसम्भवात्। गुरुत्वादावतीन्द्रिये सत्त्वेन प्रत्यये मानाभावात् गुरुत्वादिकं सदिति प्रतीतेरभावात्। गुरुत्वादावतीन्द्रियेऽसत्त्वलक्षणस्यातिव्याप्तिमाशंक्य सत्त्वस्य विशेषणमाह—क्वचिदप्युपाधौ सत्त्वेनेति। क्वचिदप्युपाधौ यत् सत्त्वं तेन। तथा च किञ्चिद्धर्मिनिष्ठं यत् सत्त्वं तेन प्रतीयमानत्वाभावत्वमसत्त्वम्। एवं च गुरुत्वादेरपि घटतादात्म्यापन्ने सति ब्रह्मण्यारोपात् ब्रह्मगतसत्त्वस्य च गुरुत्वादावारोपात् घटादिगतगुरुत्वादिकं सदिति प्रत्ययोपपत्तेः। एवं च दृश्यमात्रस्य सद्वस्तुनि कल्पितत्वेन सर्वत्र दृश्ये सत्त्वप्रकारकप्रतीतियोग्यताऽस्ति। अलीकस्य च सद्रूपे ब्रह्मण्यकल्पितत्वेन सत्तादात्म्यविरहेण सत्त्वप्रकारकप्रतीतिविषयत्वाभावात् क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वमसत्त्वं सिद्धम्। तच्च शशविषाणादीनामिति भावः। तद्व्यतिरेकस्तयोः सत्त्वासत्त्वयोः व्यतिरेकः। त्रिकालाबाध्यत्वं सत्त्वं, क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वमसत्त्वं, तयोर्व्यतिरेकोऽभावः साध्यत्वेन विवक्षितः। तथा च सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभावेन

विवक्षितः ॥ ३३ ॥ तथा च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वरूपं साध्यं पर्यवसितम् ॥ ३४ ॥ एवं च सति न शुक्तिरूप्ये साध्यवैकल्यमपि; बाध्यत्व-

---

व्याघाताशंका निरस्ता ॥ ३३ ॥

३४—सत्त्वासत्त्वयोरेवं निर्वचने यादृक् साध्यं लभ्यते तत्पिण्डीकृत्य दर्शयति—तथा चेत्यादि। त्रिकालाबाध्यविलक्षणत्वे सतीत्यनेन, सत्त्वव्यतिरेकः, एवं क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वभागेनासत्त्वव्यतिरेकः प्रदर्शितः। तथा चोक्तरूपं धर्मद्वयात्मकं साध्यं पर्यवसितं—फलितम्। अत्र विलक्षणत्वं यदि भेदस्तर्हि सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यमिति वक्ष्यमाणेन पौनरुक्त्यं स्यात्। पौनरुक्त्यभिया यदि विलक्षणत्वं न भेदः, किन्त्वत्यन्ताभाव इत्युच्यते, तर्हि धर्मद्वयविवक्षायां दोषाभावादित्युपक्रम्य कथं त्रिकालाबाध्यविलक्षणत्वे सतीत्यनेन विशिष्टरूपं विवक्षितं साध्यं प्रदर्शितम्, प्रदर्शने च सत्त्वात्यन्ताभाववत्त्वे सतीति तृतीयकल्पेन पौनरुक्त्यं च स्यादिति? तन्न। अत्र विलक्षणत्वं अत्यन्ताभावः, तथा च त्रिकालाबाध्यविलक्षणत्वे सतीत्यत्र त्रिकालाबाध्यत्वं सत्त्वं, तद्विलक्षणत्वं तदत्यन्ताभावस्तस्मिन्, सत्त्वात्यन्ताभावे, यत् सत् विद्यमानं, त्रिकालाबाध्यत्वरूपसत्त्वस्यात्यन्ताभावः, एवमसत्त्वात्यन्ताभावरूपं सत्तादात्म्यमेतदुभयत्वं, तादृशोभयत्वाश्रयः सत्यन्त-भागस्यार्थो बोध्यः। तस्य च प्रतीयमानत्वेऽन्वयः। तथा च कालदेशा-वच्छिन्नं यद्बाध्यत्वं तदत्यन्ताभावः सत्तादात्म्यञ्चेत्युभयत्वं साध्यं पर्यवसितं, तथा सति न पूर्वोक्ताशंकावकाश इति लघुचन्द्रिकायां स्पष्टम् ॥ ३४ ॥

३५—पूर्वपक्षिणोभयाभावस्य साध्यत्वपक्षे शुक्तिरूप्ये दृष्टान्ते यत् बाध्यत्वरूपासत्त्वस्य व्यतिरेकासिद्ध्या साध्यवैकल्यमुद्भावितं तन्निराकरोति —एवं च सतीति। कुतो न शुक्तिरूप्ये साध्यवैकल्यमित्याह— बाध्यत्वरूपासत्त्वव्यतिरेकस्येत्यादि। असत्त्वं न बाध्यत्वरूपं, येन पूर्वपक्षिणैवमुपालभ्येमहि, किन्तु क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वमसत्त्वं

रूपाऽसत्त्वव्यतिरेकस्य साध्याप्रवेशात् ॥ ३५ ॥ नापि व्याघातः, परस्परविरहरूपत्वाभावात् ॥ ३६ ॥ अत एव न द्वितीयोऽपि, सत्त्वाभाववति शुक्तिरूप्ये विवक्षितासत्त्वव्यतिरेकस्य विद्यमानत्वेन

---

तदभावश्च साध्यकोटौ प्रवेशितः । तथा च सत्त्वेन प्रतीत्यर्हत्वमायातम् । तच्च शुक्तिरूप्ये वर्तत एव, शुक्तिरूप्यस्य सत्त्वप्रकारकप्रतीतिविषयत्वानपायात् । शुक्तिरजतं सदिति प्रतीतौ विवादाभावात् ॥३५॥

३६—यदुक्तं पूर्वपक्षिणा सत्त्वासत्त्वयोरेकाभावेऽपरसत्त्वावश्यकत्वेन व्याघातादिति तन्निराकरोति नापि व्याघात इति । सत्त्वासत्त्वयोः परस्परविरहरूपतया नापि शुक्तिरजते व्याघातः । सत्त्वासत्त्वयोः परस्परविरहरूपत्वं यथा न सम्भवति तथा इतः प्रागेवोक्तं "तत्र नाद्यः तदनङ्गीकारादि" ति ग्रन्थेन । सत्त्वासत्त्वयोः परस्परविरहरूपत्वानङ्गीकारात् यथा न प्रपञ्चे व्याघातस्तथा शुक्तिरजतेऽपि । सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभावेन प्रपञ्चे व्याघाताभावात् तद्रीत्या शुक्तिरजतेऽपि व्याघाताभावस्य अर्थात् लब्धत्वेऽप्युक्तिवैचित्र्यमात्रमपेक्ष्य सत्त्वासत्त्वयोः परस्परविरहरूपतया दृष्टान्तीकृतंशुक्तिरजतेऽपि न व्याघातसम्भावनेत्युक्तं—नापि व्याघात इति । व्याघाताभावे हेतुमाह—परस्परविरहरूपत्वाभावात् । यथा न एतयोः सत्त्वासत्त्वयोः परस्परविरहरूपत्वं तथोक्तं प्राक् ॥३६॥

३७—सत्त्वासत्त्वयोः परस्परविरहरूपतया व्याघातो न सम्भवतीत्युक्त्वा सत्त्वासत्त्वयोः परस्परविरहव्यापकतयाऽऽशंकितं व्याघातं निराकुर्वन्नाह—अतएव न द्वितीयोऽपीति । सत्त्वाभावस्य व्यापकमसत्त्वं न भवति, यतः त्रिकालाबाध्यत्वरूपसत्त्वस्याभाववति शुक्तिरजते बाध्यत्वरूपासत्त्वस्य विद्यमानत्वेन व्यापकतालाभेऽपि सिद्धान्तिना विवक्षितस्यासत्त्वस्य क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वस्य शुक्तिरजतेऽभावात् व्यापकताभङ्गः । शुक्तिरजते त्रिकालाबाध्यत्वरूपं सत्त्वं नास्ति, क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपासत्त्वमपि नास्ति । शुक्तिरजतं सदिति प्रतीतेः सर्वसिद्ध-

व्यभिचारात् ॥३७॥ नापि तृतीयः, तस्य व्याघाताप्रयोजकत्वात्, गोत्वाश्वत्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोः उष्ट्रादावेकत्र

---

त्वात्। सत्त्वाभाववति शुक्तिरजते यद्यसत्त्वं स्यात् तर्हि सत्त्वाभावव्यापकताऽसत्त्वस्य लभ्येत। सा तु नास्ति। तथा च सत्त्वाभावः शुक्तिरजतान्तर्भावेऽसत्त्वव्यभिचारी। यथा सत्त्वाभाववति शुक्तिरूप्ये विवक्षितासत्त्वाभावस्य विद्यमानत्वेन व्यभिचार उक्तस्तथा असत्त्वाभाववति ब्रह्मण्यबाध्यत्वरूपसत्त्वस्य विद्यमानत्वेन सत्त्वस्याप्यसत्त्वव्यभिचारित्वमपि बोध्यम्। तथा च परस्परविरहव्यापकत्वरूपः द्वितीयोऽपि विकल्पः सर्वथा निरस्तः ॥३७॥

३८—सत्त्वासत्त्वयोः परस्परविरहव्यापकतया व्याघातं परिहृत्य सत्त्वासत्त्वयोः परस्परविरहव्याप्यतया व्याघातं दूषयन्नाह—**नापि तृतीय** इति। सत्त्वासत्त्वयोः परस्परविरहव्याप्यत्वेऽपि न व्याघात इत्यर्थः। कुतो न व्याघातः? इत्यत आह—तस्येति। "तस्य"—परस्परविरहव्याप्यत्वस्य। व्याघाताप्रयोजकत्वादिति। सत्त्वासत्त्वयोः परस्परविरहव्याप्यत्वेऽप्येकस्मिन् धर्मिणि सत्त्वासत्त्वयोरभावे साध्ये न व्याप्यत्वाभावापत्तिः। ननु यदि सत्त्वासत्त्वयोः परस्परविरहव्याप्यत्वमङ्गीकृत्याप्येकस्मिन् धर्मिणि प्रपञ्चे सत्त्वासत्त्वयोरभावोऽभ्युपगम्येत तर्हि तयोः परस्परविरहव्याप्यत्वमेव भज्येत। यतः यो यदभावसमानाधिकरणस्वभावकः स न तदभावव्याप्यः इति व्याप्तेः सम्भवात्। तथा च परस्परविरहव्याप्यत्वस्य कुतो न व्याघातप्रयोजकता? इत्याशंक्य यो यदभावसमानाधिकरणेतिव्याप्तौ व्यभिचारमाह गोत्वाश्वत्वयोरित्यादि। यथा गोत्वाभावव्याप्यमश्वत्वमश्वत्वाभावव्याप्यं च गोत्वमेवं परस्परविरहव्याप्यत्वेऽपि गोत्वाभावाश्वत्वाभावयोः द्वयोरुष्ट्रादिषु सहोपलम्भादुष्ट्रादावेकस्मिन्नेव धर्मिणि गोत्वाभावस्याश्वत्वाभावस्य च दर्शनात् प्रदर्शितायाः व्याप्तेः व्यभिचारान्न व्याघातप्रयोजकता। तथा सत्त्वासत्त्वयोः परस्परविरहव्याप्यत्वेऽपि सत्त्वाभावासत्त्वाभावयोरेकत्र धर्मिणि प्रपञ्चे सम्भवान्न व्याघातः। तथा च व्याघातप्रयोजकीभूतव्याप्तेः व्यभिचारेण

सहोपलम्भात् ॥ ३८ ॥ यच्च निर्धर्मकस्य ब्रह्मणः सत्त्वराहित्येऽपि सद्रूपत्ववत्प्रपञ्चस्य सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तरमुक्तम्—तन्न, एकेनैव सर्वानुगतेन [सत्त्वेन] सर्वत्र सत्प्रतीत्युपपत्तौ ब्रह्मवत्

---

मूलशैथिल्यमिति भावः ॥३८॥

३९—पूर्वपक्षिणा यदर्थान्तरत्वमाशंकितं तदुद्धाराय पूर्वपक्षिवाक्यमनुवदति—यच्चेति। पूर्वपक्षिवाक्यं च पूर्वपक्षग्रन्थ एव कृतव्याख्यानमिति तत्रैव द्रष्टव्यम्। प्रपञ्चे सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावसाधकेऽपि ब्रह्मवत् प्रपञ्चस्य सद्रूपत्वसम्भवादिति पूर्वपक्षिणामाशयं दूषयति—तन्नेति। एकेनैवेति। एकेनैव सद्रूपेण ब्रह्मणा सर्वानुगतेन सर्वत्र घटादिषु तादात्म्यसम्बन्धेन सम्बद्धतया विशेषणतया भानयोग्येन सर्वत्र सत्प्रतीतिः घटः सन्नित्यादिरूपा या प्रतीतिः तस्याः उपपत्तौ सिद्धायां ब्रह्मणः सद्रूपत्वमिव प्रपञ्चस्य सद्रूपताकल्पने मानाभावात्। सत्त्वप्रकारकप्रतीतेस्तु सद्रूपब्रह्मणैवोपपादितत्वात्। तथापि प्रपञ्चस्य सत्स्वभावताकल्पने गौरवं स्यादिति भावः। प्रपञ्चे प्रत्यक्षयोग्यसत्त्वस्य निर्वक्तुमशक्यतया प्रपञ्चे सद्रूपत्वप्रतीतेर्भ्रमत्वस्याग्रे वक्ष्यमाणत्वाच्च। प्रपञ्चस्य सत्स्वभावताकल्पने साधकाभावमुक्त्वा बाधकमाह—अनुगतव्यवहाराभावप्रसङ्गाच्चेति। द्रव्यादिकं सत् जातिः सती समवायः सन्नित्याद्यनुगतप्रतीतिजन्यानुगतव्यवहाराभावप्रसङ्गादित्यर्थः। प्रतीतेर्विषयनियम्यत्वेन विषयवैलक्षण्येऽपि प्रतीतेरवैलक्षण्ये सदाकारवादिबौद्धमतप्रवेशापत्तेः। सद्वसदितिप्रतीत्यनुगत्यैव सत्सदितिव्यवहारानुगतिः। तत्रैव हि प्रतीतेरानुगत्यं यत्र विशेषणस्य विशेष्यविशेषणसम्बन्धस्यानुगतिः, प्रपञ्चान्तर्गतप्रत्येकवस्तुनः सत्स्वरूपताकल्पने विशेषणस्याननुगमः, सत्ताजात्यङ्गीकारपक्षे विशेषणानुगमेऽपि सम्बन्धस्याननुगमः। तथा हि सदाकारप्रतीतिर्यदा द्रव्ये गुणे कर्मणि वा तदा समवायेन सत्ता जातिर्विशेषणम्, यदा द्रव्यत्वादौ सदाकारः प्रत्ययस्तदा सामानाधिकरण्यसम्बन्धेन सत्ताजातिर्विशेषणमिति वक्तव्यम्। तथा च

प्रत्येकं प्रपञ्चस्य सत्स्वभावताकल्पने मानाभावात्, अनुगत-
व्यवहाराभावप्रसङ्गाच्च ॥ ३९ ॥

सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यम् ॥४०॥

तथा चोभयात्मकत्वेऽन्यतरात्मकत्वे वा तादृग्भेदा-

---

विशेष्यविशेषणसम्बन्धवैलक्षण्येऽपि प्रतीतेरविलक्षणत्वमनुपपन्नमेव। सम्बन्ध-वैलक्षण्येन प्रतीतिवैलक्षण्यस्यावश्यकत्वात् द्रव्यगुणकर्मसामान्यादिसाधारण-सत्प्रतीतेरनुगतायाः अनुपपत्तेः। वेदान्तिमते तु सद्रूपे ब्रह्मणि सर्वेषां द्रव्यादीनां तादात्म्येनाध्यस्ततयाऽऽध्यासिकसम्बन्धस्य च सर्वत्राविशेषात् सर्वत्र द्रव्यादिषु सत् सदित्यनुगतप्रतीत्युपपत्तौ न किञ्चित् बाधकम् ॥३९॥

४०—निर्धर्मके ब्रह्मणि सत्त्वधर्मराहित्येऽपि सद्रूपतया यथाऽमिथ्यात्वं तथा प्रपञ्चस्य सत्त्वधर्मराहित्येऽपि सद्रूपत्वेनामिथ्यात्वोपपत्त्याऽर्थान्तरत्वमुक्तं पूर्वपक्षिणा, समाहितं च सिद्धान्तिना। इदानीं सत्त्वधर्मराहित्येऽपि प्रपञ्चस्य सद्रूपतयाऽमिथ्यात्वोपपत्त्याऽर्थान्तरत्वमङ्गीकृत्याऽपि "तुष्यतु दुर्जनः" न्यायेन साध्यान्तरमाह सिद्धान्ती––सत्प्रतियोगिकासत्प्रतियोगिक-भेदद्वयं वा साध्यम्। भेदश्चात्रात्यन्तिकभेदो बोद्धव्यः। तथा च सदवृत्तिः सद्भेदः असदवृत्तिरसद्भेद इति भेदद्वयं साध्यम्। अयमाशयः—सत्त्वधर्मराहित्येऽपि सद्रूपत्वं प्रपञ्चस्य कथञ्चित् वक्तुमुत्सहेताऽपि प्रपञ्चे सत्प्रतियोगिकभेदसिद्धौ प्रपञ्चस्य सद्रूपत्वं वक्तुं न कथमपि शक्येत। सद्भिन्नोऽपि प्रपञ्चः सन्निति कथमनुन्मत्तः प्रभाषेतेति ॥ ४० ॥

४१—सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयं साध्यं परित्यज्य सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयस्य साध्यत्वे यथाऽर्थान्तरानवकाशः तथैव विवृणोति––तथाचेति––भेदद्वयस्य साध्यत्वविवक्षायां चेति। उभयात्मकत्वे प्रपञ्चस्योभयात्मकत्वे, सदसदात्मकत्व इत्यर्थः। अन्यतरात्मकत्वे––प्रपञ्चस्य सन्मात्रात्मकत्वेऽसन्मात्रात्मकत्वे वा इत्यर्थः। तादृग्भेदासम्भवेन––सदसदात्मकप्रपञ्चे सत्प्रतियोगिकासत्प्रतियोगिका-

सम्भवेन ताभ्यामर्थान्तरानवकाशः ॥ ४१

---

त्यन्तिकभेदद्वयासम्भवेन. प्रपञ्चस्य सन्मात्रात्मकत्वे सत्प्रतियोगिका सत्प्रतियोगिकभेदद्वयासम्भवेन, प्रपञ्चस्यासन्मात्रात्मकत्वे सत्प्रतियोगिकासत्प्रतियोगिकात्यन्तिकभेदद्वयासम्भवेनेत्यर्थः । ताभ्यामिति—उभयात्मकत्वान्यतरात्मकत्वाभ्यां, प्रपञ्चस्योभयात्मकत्वं सदसदात्मकत्वमादाय, प्रपञ्चस्यान्यतरात्मकत्वं सन्मात्रात्मकत्वं असन्मात्रात्मकत्वं वा आदाय अर्थान्तरानवकाशः—अर्थान्तरत्वस्यनावकाशः । पूर्वपक्षिभिः प्रपञ्चस्यामिथ्यात्वोपपत्त्याऽर्थान्तरत्वं वक्तुं न शक्यते ।

अयं भावः—तात्पर्यटीकाकृतां वाचस्पतिमिश्राणां मते शुक्तौ रजतभ्रमे परमार्थसत्ये धर्मिणि शुक्तिरूपे पारमार्थिकमेव रजतत्वमलीकसम्बन्धेन भासते । रजतत्वप्रतियोगिकशुक्त्यनुयोगिकसमवायस्यालीकत्वात् । अलीक एव सम्बन्धः सदुपरागेण भासते । सदनुपरक्तस्यैवालीकस्य संसर्गातिरिक्तरूपेण भानविरोधात् । तथा च भ्रमविषयीभूतालीकसंसर्गविशिष्टरूपेण प्रपञ्चोऽपि अलीकः । रूपान्तरेण तु प्रपञ्चः सन्नेव । तथा च टीकाकृन्मते प्रपञ्चः सदसदात्मकः । एवं च तन्मतानुसारेण सदसदात्मके प्रपञ्चे सत्प्रतियोगिकासत्प्रतियोगिकात्यन्तिकभेदद्वयरूपे साध्ये सिद्धे प्रपञ्चस्य बलात् मिथ्यात्वमेव पर्यवस्यति । न पुनरर्थान्तरतायाः अवकाशः । टीकाकृन्मत भ्रमविषयसंसर्गस्यालीकत्वेऽपि अन्यतार्किकादिमते भ्रमविषयीभूतोऽपि संसर्गः देशान्तरस्थत्वात् सत्य एवेति प्रपञ्चः सत्य एवेति प्रपञ्चस्य सदात्मकत्वे, सदात्मके प्रपञ्चे सत्प्रतियोगिकात्यन्तिकभेदसिद्धौ तादृशप्रपञ्चस्य मिथ्यात्वे एव पर्यवसानम् , न पुनरर्थान्तरतायाः अवकाशः । साकारवादिबौद्धमते विज्ञानात् व्यतिरिक्तः बाह्यः अर्थो नास्ति, विज्ञानमेव ज्ञेयरूपेण प्रतिभासते । विषयस्य विज्ञानात् भिन्नत्वे ज्ञेयत्वानुपपत्तेः विज्ञानातिरिक्तप्रपञ्चस्यासत्त्वमेव । तथा च प्रपञ्चस्यासदात्मकत्ववादिबौद्धमतेऽसत्प्रतियोगिकात्यन्तभेदे साध्ये सिद्धे तादृशप्रपञ्चस्य मिथ्यात्वमेवायाति, न पुनरर्थान्तरतायाः अवसरः । एवं च प्रपञ्चस्य

न चासत्त्वव्यतिरेकांशस्यासद्भेदस्य च प्रपञ्चे सिद्धत्वेनांशतः सिद्धसाधनमिति वाच्यम्; गुणादिकं गुण्यादिना भिन्नाभिन्नं

---

सदसदुभयात्मकत्ववादितात्पर्यटीकाकृन्मते सदसतोरन्यतरात्मकत्ववादिमाध्वादिनव्यतार्किकमते विज्ञानवादिबौद्धमते च प्रपञ्चे सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयरूपे साध्ये सिद्धे प्रपञ्चस्य मिथ्यात्वमेवायाति नार्थान्तरतायाः अवकाशः। सदसदादिकोटित्रयोत्तीर्णमेवानिर्वाच्यत्वं मिथ्यात्वमिति भावः। तथा च प्रपञ्चे सत्त्वधर्मराहित्यस्य प्रपञ्चस्य ब्रह्मवत् सद्रूपत्वानुपमर्दकत्वेऽपि सद्भेदस्य सद्रूपत्वोपमर्दकत्वोपपत्तेरिति साध्यान्तरानुधावने बीजमनुसन्धेयम् ॥४१॥

४२—सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयस्य साध्यत्वे सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयस्य साध्यत्वे वा नार्थान्तरतायाः अवकाश इत्युक्तम्। इदानीं निरुक्ते द्विविधेऽपि साध्ये पूर्वपक्षिणाऽऽशंकितं सिद्धसाधनमुद्धर्तुं तदीयवाक्यमनुवदन्नाह—न चासत्त्वव्यतिरेकांशस्येत्यादि।

अत्रेयमाशङ्का माध्वानां—सद्रूपे प्रपञ्चे साध्यान्तर्गतस्य केवलस्यासत्त्वात्यन्ताभावस्य साध्यान्तर्गतस्य केवलस्यासद्भेदस्य वा सिद्धत्वेनांशतः सिद्धसाधनता स्यात्। न च केवलस्यासत्त्वात्यन्ताभावस्यासद्भेदस्य वा प्रपञ्चे सिद्धत्वेऽपि प्रपञ्चेऽसिद्धेन सत्त्वात्यन्ताभावेन सद्भेदेन वा सहोच्यमानत्वात् सिद्धस्याप्यसत्त्वात्यन्ताभावस्यासद्भेदस्य चासिद्धत्वमेवेति नांशतः सिद्धसाधनतेति वाच्यम्। न हि सिद्धमसिद्धेन सहोच्चरितमसिद्धं भवति। असिद्धत्वे वा "पर्वतो वह्निमान् पाषाणवांश्च" इत्यत्रापि सिद्धसाधनता नोद्भाव्येत। न च एवं सति "पृथिवी इतरेभ्यो भिद्यते" इत्यत्रापि जलादित्रयोदशभेदानां साध्यत्वात् जलाद्येकैकान्योन्याभावानामपि "घटो न जलादिरि"ति प्रतीत्या घटत्वावच्छेदेन पृथिव्यां सिद्धत्वादंशतः सिद्धसाधनता स्यादिति "पृथिवी इतरेभ्यो भिद्यते" इत्यनुमानं दुष्टं स्यादिति वाच्यम्। "पृथिवीतरभिन्नेत्यत्र तु जलाद्येकैकान्योऽन्याभावोऽपि न पृथिवीत्वोपहिते

समानाधिकृतत्वादितिभेदाभेदवादिप्रयोगे ताार्किकाद्यङ्गीकृतस्य

सिद्ध—इति नांशतः सिद्धसाधनता, अतः नोक्तानुमानस्य दुष्टता। प्रकृते च तथात्वाभावादंशतः सिद्धसाधनता स्यादेवेति पूर्वपक्षिणां भावः।

तथा च सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयसाध्यस्य योंऽशः असत्त्वात्यन्ताभावः तस्य प्रपञ्चे पक्षे माध्वमते सिद्धत्वेनांशे सिद्धसाधनता एवं सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयरूपसाध्यस्य योंऽशः असत्प्रति-योगिकभेदः तस्य प्रपञ्चे पक्षे माध्वमते सिद्धत्वेनांशे सिद्धसाधनता स्यात्, साध्यतावच्छेदकधर्मस्य नानात्वात्। पक्षतावच्छेदकधर्मस्य नानात्वे साध्यता-वच्छेदकधर्मस्य वा नानात्वे अंशे सिद्धसाधनतायाः सम्भवादित्यर्थः।

सिद्धान्तस्तु नात्र साध्यतावच्छेदकनानात्वम्, येनांशतः सिद्धसाधन-ताशंका स्यात्, किन्तु सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयस्य सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयस्य वोभयत्वरूपेणानुमितेरुद्देश्यत्वात् प्रत्येकरूपेण सिद्धेरनुमानाप्रतिबन्धकत्वात्। एतदेव दृष्टान्तेन विस्पष्टयन्नाह "गुणादिकमि" ति। "गुणादिकं" गुणः, क्रिया, जातिः, विशिष्टरूपम्, अवयवी, अंशेति गुण्यादिना—गुणिना, क्रियावता, व्यक्त्या, केवलरूपेण अवयवेनांशेनेति, भिन्नाभिन्नं भेदाभेदोभयवत्। तथा च गुणः गुणिप्रतियोगिकभेदाभेदोभयवान्, क्रिया क्रियावत्प्रतियोगिकभेदाभेदोभयवती, जातिः व्यक्तिप्रतियोगिकभेदाभेदोभयवतीति रीत्या प्रयोगो बोध्यः। समानाधिकृतत्वादितीति। समानाधिकृतत्वं न तावदेकविभक्त्यन्तपदवा-च्यत्वं; "घटः कलसः" इत्यत्रैकविभक्त्यन्तपदवाच्यत्वेऽपि भेदाभेदोभयवत्त्वा-भावेन व्यभिचारापत्तेः। नापि विशेषणविशेष्यभावेन व्यवह्रियमाणत्वं, "भूतले घटः" इत्यत्र भूतलनिरूपितवृत्तितायाः घटविशेषणत्वेन व्यवहृतावपि भेदाभेदयोरभावात् व्यभिचारतादवस्थ्यात्। अतः समानाधिकृतत्वमभेद-संसर्गकधीविशेष्यत्वयोग्यत्वम्। तच्च "भूतले घटः" इत्यादौ नास्तीति न व्यभिचारशंकावसरः। अभेदसंसर्गकधीः प्रमारूपा ग्राह्या। तथा च अभेद-

भिन्नत्वस्य सिद्धावप्युद्देश्यप्रतीत्यसिद्धेर्यथा न सिद्धसाधनं, तथा प्रकृतेऽपि मिलितप्रतीतेरुद्देश्यत्वात् न सिद्धसाधनम् ॥ ४२ ॥

---

संसर्गकप्रमाविशेष्यत्वयोग्यत्वं समानाधिकृतत्वम्। अन्यथाऽभेदसंसर्गकभ्रममादाय "घटः पटः" इत्यत्र व्यभिचारप्रसङ्गात्। न च तार्किकादिमते गुणगुणिनोरभेदसंसर्गकप्रमायाः अप्रसिद्ध्या हेतोरप्रसिद्धिरिति वाच्यम्। अभेदसंसर्गकप्रमाशब्देनात्र तार्किकाद्यङ्गीकृतसमवायतादात्म्यभिन्ना ये संयोगादयः सम्बन्धास्तेषामन्यतमसम्बन्धेन गुण्यादिविशेषणिका या धीः तदन्या गुण्यादिविशेषणिका या धीः सैव मतद्वयसाधारणत्वाय विवक्षितेति भावः।

अयमर्थः—यथा हि भेदाभेदवादिप्रयोगे—भेदाभेदवादिभिर्बौद्धभट्टसांख्यपातञ्जलमाध्वादिभिस्तार्किकादीन् प्रति क्रियमाणे न्यायप्रयोगे तार्किकाद्यङ्गीकृतस्य भिन्नत्वस्य गुणगुण्याद्योः भिन्नत्वस्य साध्यांशस्य भिन्नाभिन्नमिति साध्ये भिन्नत्वविशेषणस्येति यावत्, सिद्धावपि निश्चितत्वेऽपि उद्देश्यप्रतीत्यसिद्धेः—उक्तन्यायप्रयोगतात्पर्यविषयीभूतायाः गुणादौ गुण्यादिप्रतियोगिकभेदाभेदोभयवत्ताप्रतीतेरसिद्धेः, भेदाभेदोभयवत्त्वप्रतीतेरुद्देश्यत्वेन, प्रत्येकरूपेण सिद्धेरप्रतिबन्धकत्वात् यथा न सिद्धसाधनं तार्किकादिभिः भट्टमाध्वादिकं प्रत्युद्भावयितुं शक्यं तथा प्रकृतेप्युक्तमिथ्यात्वसाधकन्यायप्रयोगेऽपि, मिलितप्रतीतेः सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपोभयवत्त्वप्रतीतेः सद्भेदासद्भेदरूपोभयवत्त्वप्रतीतेः "उद्देश्यत्वादु"क्तप्रयोगतात्पर्यविषयत्वात् "न सिद्धसाधनमु"भयत्वरूपेणानुमितौ प्रत्येकरूपेण सिद्धेरदूषणत्वात् न सिद्धसाधनं माध्वादिभिरुद्भावयितुं शक्यमन्यथा दृष्टान्तीकृतन्यायप्रयोगे माध्वसम्मतेऽपि सिद्धसाधनतादोषस्य दुष्परिहरत्वापत्तेः। माध्वैरपि गुणादीनां गुण्यादिभिर्भेदाभेदस्याङ्गीकृतत्वात्। उक्तं च प्रमाणपद्धतौ जयतीर्थाचार्यैः "गुणादीनां गुण्यादिभिरभेदेन समवायाभावादि"ति; तथा चात्र न साध्यतावच्छेदकधर्मनानात्वमिति भावः। उभयत्वस्यैव साध्यतावच्छेदकत्वात् ॥४२॥

यथा च तत्राभेदे [ तत्त्वाभेदे ] घटः कुम्भः इति सामानाधिकरण्यप्रतीतेरदर्शनेन मिलितसिद्धिरुद्देश्या, तथा

---

४३—भेदाभेदवादिप्रयोगदृष्टान्तेन प्रकृतानुमाने सिद्धसाधनतादोषं निरस्य पुनः प्रकृतानुमाने भेदाभेदवादिप्रयोगवैषम्यमाशंक्य समाधत्ते—यथा च तत्रेति। सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयसाधने सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयसाधने वा भेदाभेदानुमानदृष्टान्तो न युक्तः। भेदाभेदानुमाने हि तार्किकादिभिरङ्गीकृतं भेदांशं परित्यज्याभेदमात्रस्य साध्यत्वे समानाधिकृतत्वरूपहेतुं प्रत्यभेदरूपसाध्यस्य प्रयोजकत्वाभावप्रसङ्गभयेन हेतुं प्रति साध्यस्य प्रयोजकत्वलाभायैव भेदस्यापि साध्यकुक्षौ प्रक्षेपः। तथा हि गुणादिकं गुण्यादिनाऽभिन्नमित्येव प्रयोगे कृतेऽभेदरूपसाध्यवति घटः कलस इति प्रयोगादर्शनेन समानाधिकृतत्वहेतोस्तत्राभावात् अभेदरूपसाध्यस्य समानाधिकृतत्वरूपहेतुं प्रति प्रयोजकत्वाभावप्रसङ्गात् भिन्नाभिन्नमित्येव प्रयोगः कृतः। तथा च समानाधिकृतत्वरूपहेतुं प्रति साध्यस्याप्रयोजकत्वनिरासाय भेदाभेदोभयवत्त्वप्रतीतिस्तत्रोद्देश्या। घटः कलसः इत्यादौ समानाधिकृतत्वरूपहेत्वभाववति भेदाभेदरूपसाध्यस्याप्यभावात् नाप्रयोजकत्वशंका। प्रकृते तु सत्त्वात्यन्ताभावमात्रस्य सद्भेदमात्रस्य वा साध्यत्वे न दृश्यत्वहेतुं प्रति साध्यस्याप्रयोजकत्वशंका सम्भवति। दृश्यत्वस्य हेतोर्ब्रह्मभिन्नसकलनिष्ठत्वेन सत्त्वात्यन्ताभावमात्रस्य सद्भेदमात्रस्य वा दृश्यत्वप्रयोजकत्वसम्भवाच्च मिलितप्रतीतिरुद्देश्या भवितुमर्हतीति प्रकृते वैषम्यमाशंकमानं प्रति साम्यमुपपादयति—तत्रेत्यादि। भेदाभेदवादिप्रयोग इत्यर्थः। अभेदे अत्यन्ताभेदे। घटः कुम्भः इति सामानाधिकरण्यप्रतीतेरदर्शनेन "घटः कुम्भः" इत्याकारकभेदसमानाधिकरणाभेदसंसर्गविषयकप्रतीतेरदर्शनेन मिलितसिद्धिः मिलितस्य गुणादौ गुण्यादेर्भेदाभेदोभयवत्त्वस्य सिद्धिः प्रतीतिः उद्देश्या भेदाभेदवादिप्रयोगतात्पर्यविषयीभूता, समानाधिकृतत्वरूपहेतोः प्रयोजकतयेति शेषः।

प्रकृतेऽपि सत्त्वरहिते तुच्छे दृश्यत्वादर्शनेन मिलितस्य तत्प्रयोजकतया मिलितसिद्धिरुद्देश्येति समानम् ॥ ४३ ॥

---

समानाधिकृतत्वरूपहेतोः प्रयोजकतया भेदाभेदवादिप्रयोगे मिलितप्रतीतिरुद्देश्येति भावः। यथा भेदाभेदवादिप्रयोगे हेतुप्रयोजकतया मिलितसाध्यप्रतीतिरुद्देश्या तथा प्रकृतेऽपि सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयसाधनेऽपि सत्प्रतियोगिकासत्प्रतियोगिकभेदरूपधर्मद्वयसाधनेऽपि वा हेतुप्रयोजकतया मिलितसाध्यप्रतीतिरुद्देश्या। न सत्त्वात्यन्ताभावमात्रस्य सत्प्रतियोगिकभेदमात्रस्य वा साध्यत्वं सम्भवति। तादृशसाध्यस्य हेतुं प्रत्यप्रयोजकत्वापातात्। यथा च हेतुं प्रत्यप्रयोजकत्वं तथा दर्शयन्नाह—सत्त्वरहित इति। सत्त्वात्यन्ताभाववति सद्भेदवति वा तुच्छे अलीके शशविषाणादौ दृश्यत्वादर्शनेन दृश्यत्वस्य हेतोः अदर्शनेन अविद्यमानत्वेन मिलितस्य सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयस्य सत्प्रतियोगिकासत्प्रतियोगिकभेदरूपधर्मद्वयस्य वा तत्प्रयोजकतया तस्य हेतोः दृश्यत्वस्य प्रयोजकतयोपपादकतया व्यापकस्य व्याप्योपपादकत्वादिति भावः मिलितसिद्धिरुद्देश्या उभयत्वेन रूपेण साध्यप्रतीतिरुद्देश्योक्तप्रयोगतात्पर्यविषयीभूता, इति समानं—भेदाभेदवादिप्रयोगे इव सिद्धान्त्यभिमतप्रयोगेऽपि—हेतोरुपपादकतया मिलितसाध्यप्रतीतेरुद्देश्यत्वमिति समानम्।

अयं भावः—सिद्धान्त्यभिमतप्रकृतप्रयोगे सत्त्वात्यन्ताभावमात्रस्य सत्प्रतियोगिकभेदमात्रस्य वा साध्यत्वे सत्त्वाभाववति सद्भिन्ने वा तुच्छे शशविषाणादौ सत्यपि साध्ये दृश्यत्वस्य हेतोरविद्यमानत्वेन हेतुं प्रति तादृशसाध्यस्याप्रयोजकत्वं स्यादिति हेतुं प्रति साध्यस्याप्रयोजकत्वनिराशायासत्त्वात्यन्ताभावस्यासद्भेदस्य वा साध्यकोटौ प्रवेशः। तथा सति दृश्यत्वरूपहेत्वभाववति तुच्छे शशविषाणादौ सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयं सत्प्रतियोगिकासत्प्रतियोगिकाभावरूपधर्मद्वयं वा साध्यं नास्तीत्यप्रयोजकत्वशंका निराकृता ॥ ४३ ॥

अत्र एव सत्त्वात्यन्ताभाववत्त्वे सति असत्त्वात्यन्ताभावरूपं विशिष्टं साध्यमित्यपि साधु ॥४४॥ न च मिलितस्य विशिष्टस्य वा साध्यत्वे तस्य कुत्राप्यप्रसिद्ध्याऽप्रसिद्धविशेषणत्वं, प्रत्येकं

---

४४—यतः सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयस्य साध्यत्वपक्षे पूर्वपक्षिणोद्भावितस्य व्याघातार्थान्तरांशतः सिद्धसाधनसाध्यवैकल्याख्यदोषचतुष्टयस्य निरस्तत्वेनाभावद्वयात्मकसाध्यस्य साधुत्वं सिद्धम्, अत एव सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावरूपविशिष्टमपि साध्यं साध्वित्याह मूलकारः अतएवेत्यादि । व्याघातार्थान्तरसाध्यवैकल्यानां प्रदर्शितरीत्यैवास्मिन् पक्षेऽपि निराससम्भवादिति भावः । अभावद्वयस्य साध्यत्वे यथांऽशतः सिद्धसाधनतादोषस्य सम्भवः, न तु तथा विशिष्टस्य साध्यत्वे । विशिष्टस्यैकस्य साध्यत्वे साध्यतावच्छेदकैक्येन साध्यतावच्छेदकावच्छिन्नसाध्यस्यासिद्धेः नांशतः सिद्धसाधनतावकाशः । पक्षतावच्छेदकनानात्वे इव साध्यतावच्छेदकनानात्वेप्यंशतः सिद्धसाधनता सम्भवतीयुक्तम् । प्रकृते तु साध्यतावच्छेदकैक्यात् नांशतः सिद्धसाधनत्वमिति भावः । विशिष्टं न विशेषणाद्यात्मकं किन्त्वतिरिक्तमित्यभिप्रेत्येदं मन्तव्यम् । तथा च व्याघातार्थान्तरसाध्यवैकल्यानां पूर्वोक्तरीत्या परिहृतत्वादंशतः सिद्धसाधनताया्श्चासम्भवात् विशिष्टस्य साध्यत्वे न कोऽपि दोष इत्यत आह—इत्यपि साधुरिति ॥४४॥

४५—अभावद्वयस्य साध्यत्व इव विशिष्टाभावस्य साध्यत्वेऽपि पूर्वपक्षिप्रदर्शितदोषाणां परिहृतत्वात् परिहारममृष्यमाण इव पूर्वपक्षी कुशकाशावलम्बनन्यायेन द्विविधसाध्यसाधारणमप्रसिद्धविशेषणताख्यदोषान्तरं शंकते न चेति। मिलितस्यार्थात् सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयस्योभयस्य, अथ वा विशिष्टस्य सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावरूपविशिष्टस्य, साध्यत्वे तस्य द्विविधस्य साध्यस्य कुत्राप्यप्रसिद्ध्या सर्वत्राप्रसिद्ध्या सत्यसति वा एकस्मिन्नधिकरणेऽप्रसिद्ध्याऽप्रसिद्धविशेषणत्वं

प्रसिद्धचा मिलितस्य विशिष्टस्य वा साधने शशशृङ्गयोः

---

कस्मिन्नपि धर्मिणि साध्याप्रसिद्धिः साध्यरूपविशेषणस्याप्रमितत्वादन्वय-दृष्टान्ताभावेन व्याप्तिग्रहासम्भवात् व्याप्यग्रहपर्यवसितः दोष इति भावः।

ननु पूर्वपक्षिणामियमाशंका न युज्यते। यथा——सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयस्य साध्यत्वे सत्त्वात्यन्ताभावस्य शशविषाणादावसत्त्वात्यन्ताभावस्य च ब्रह्मणि प्रमितत्वेन न साध्याप्रसिद्धिः नानाधर्मस्य साध्यत्वे प्रत्येकप्रसिद्धया साध्यप्रसिद्धिः सम्भाव्यते। यथा "पृथिवी इतरभिन्ना पृथिवीत्वा"दित्यत्र पृथिवीतरजलादित्रयोदशपदार्थ-प्रतियोगिकान्योन्याभावानां प्रत्येकं प्रसिद्धया, पृथिवीतरभेदरूपसाध्यस्य कथञ्चित् प्रसिद्धिः सम्भाव्यते, एकाधिकरणवृत्तितया त्रयोदशभेदानां साध्यत्वेन विभिन्नेऽधिकरणे एकैकशः भेदानां प्रसिद्धावपि वस्तुतः साध्या-प्रसिद्धेः, तथा प्रकृतस्थलेऽप्युभयसाध्यतापक्षेऽपि प्रत्येकप्रसिद्धिमादाय साध्यप्रसिद्धिः सम्भाव्यते, तस्मान्नाभावद्वयसाध्यतापक्षे साध्याप्रसिद्धिः दोषः।

यद्यपि नानाधर्माणां साध्यत्वे प्रत्येकप्रसिद्धया साध्यप्रसिद्धिः सम्भाव्यते तथापि न विशिष्टस्य साध्यत्वे प्रत्येकप्रसिद्धया साध्यप्रसिद्धिः सम्भाव्येत। विशिष्टस्यैकत्वेन खण्डशः प्रसिद्धेरसम्भवादिति न्यायामृतकृतामाशयः।

अद्वैतसिद्धिकृतस्तु अभावद्वयसाध्यतापक्षे विशिष्टस्य साध्यतापक्षे चो-भयत्राप्युक्तसाध्याप्रसिद्धिदोषं योजयन्तः परिहरन्ति। तेषामयमाशयः— सत्त्वात्यन्ताभाववत्त्वे सत्यसत्त्वात्यन्ताभावरूपविशिष्टस्य साध्यत्वपक्षे यदि सत्त्वात्यन्ताभावस्यासत्त्वात्यन्ताभावस्य प्रत्येकं प्रसिद्धया साध्यप्रसिद्धिरुप-पाद्येत, तर्हि शशीयशृङ्गसाधनमपि स्यात्, शशीयत्वविशिष्टशृङ्गस्य संयोगादिसम्बन्धेन साध्यत्वे शशशृङ्गयोः प्रत्येकं प्रसिद्धया साध्यप्रसिद्धिः स्यात्। यदि वा सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयस्य साध्यत्वे सत्त्वात्यन्ताभावस्यासत्त्वात्यन्ताभावस्य च खण्डशः प्रसिद्धया साध्यप्रसिद्धि-

प्रत्येकं प्रसिद्ध्या शशीयशृङ्गसाधनमपि स्यादिति वाच्यम्; तथाविधप्रसिद्धेः शुक्तिरूप्ये एवोक्तत्वात् ॥४५॥

---

रूपपाद्येत, तर्हि शशीयशृङ्गसाधनमपि स्यात्, शशीयं शृङ्गं चेति द्वयोः तादात्म्यसम्बन्धेन साधनमपि स्यादित्यर्थः। यथा च तादात्म्यसम्बन्धेन शशीयस्य शृङ्गस्य च कुत्राप्यप्रमितत्वेन साध्याप्रसिद्धिस्तथा सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयस्य कुत्राप्यप्रमितत्वेनोभयस्य साध्यत्वपक्षेऽपि साध्याप्रसिद्धिरेव। तथा च मूलग्रन्थोक्तस्य शशीयशृङ्गसाधनमपि स्यादित्यस्य द्वावर्थौ। शशीयत्वविशिष्टशृङ्गस्य संयोगादिसम्बन्धेन साधनमित्येकोऽर्थः, तथा शशीयं शृङ्गं चेति द्वयोः तादात्म्यसम्बन्धेन साधनमपरोऽर्थः। तथा च साध्याप्रसिद्धिदूषणं न्यायामृतकृता यद्यपि विशिष्टस्य साध्यत्वे एवोक्तम्, तथापि सिद्धिकृद्भिरुभयसाध्यत्वपक्षेऽपि दृष्टान्तवाक्यस्यार्थद्वयमादाय योजितम्। एतेन पूर्वपक्षप्रदर्शनेऽपि न्यायामृतकृतां न्यूनत्वं सूचितम्।

न च मिलितस्येत्यादि शशीयशृङ्गसाधनमपि स्यादित्यन्तेन पूर्वपक्षिणां न्यायामृतकृतां साध्याप्रसिद्धेरुपवर्णनमुपस्थाप्य परिहरन्ति—तथाविधप्रसिद्धेः शुक्तिरूप्ये एवोक्तत्वात्। तथाविधप्रसिद्धेः—सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयस्य साध्यत्वपक्षे पूर्वपक्षिणा आशङ्कितस्य दृष्टान्तीकृतशुक्तिरजते साध्यवैकल्यस्य परिहारमुखेन शुक्तिरजतेऽभावद्वयरूपसाध्यस्य सिद्धेरुक्तत्वात्। "त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वरूपं साध्यं पर्यवसितम्, एवं च सति शुक्तिरूप्ये न साध्यवैकल्यमपि, बाध्यत्वरूपासत्त्वव्यतिरेकस्य साध्याप्रवेशादि"त्यादिग्रन्थजातेनेति भावः।

न्यायामृतकृद्भिः सर्वदेशकालसम्बन्धिनिषेधाप्रतियोगित्वप्रतियोगित्वाभ्यां सत्त्वासत्त्वे निरूपयद्भिः—

त्रिकालसर्वदेशीयनिषेधाप्रतियोगिता।
सत्त्वोच्यतेऽध्यस्ततुच्छे तं प्रति प्रतियोगिनी ॥ इत्युक्तम्।

न च निर्धर्मकत्वात् ब्रह्मणः सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वेन तत्राति-

---

तेन न्यायामृतकृत्प्रदर्शितदिशा सत्त्वासत्त्वयोः परस्परविरह-व्यापकतया व्याघातसाध्याप्रसिद्धिसाध्यवकल्यादीनां सम्भवेऽपि सत्त्वासत्त्वेऽन्यथानिरूपयद्भिः मूलकृद्भिः . व्याघातसाध्यवैकल्यादिदोषाणां परिहारः कृतः। माध्वमते सर्वदेशकालसम्बन्धिनिषेधाप्रतियोगित्वं सत्त्वम्, सिद्धान्तिमते त्रिकालाबाध्यत्वं सत्त्वं, माध्वमते सर्वदेशकालसम्बन्धि-निषेधप्रतियोगित्वमसत्त्वम्, सिद्धान्तिमते क्वचिदप्युपाधौ सत्त्वेन प्रतीय-मानत्वानधिकरणत्वमसत्त्वम्। तथा च माध्वमते आरोपितं शुक्तिरजताद्यलीकं शशविषाणादि च विहाय सर्वं सत्, सिद्धान्तिमते केवलं ब्रह्मैव सत्; माध्वमते आरोपितशुक्तिरजताद्यलीकं शशविषाणादि चासत्, सिद्धान्तिमतेऽलीकं शशविषाणाद्येवासत्। आरोपितं शुक्तिरजतादिव्यावहारिकं च वियदादि वस्तु सदसद्विलक्षणमेव। तथा च सिद्धान्तिमते सत् असत् सदसद्विलक्षणमिति भागत्रयं सिध्यति, माध्वमते सदसदितिभागद्वयमेव पर्यवस्यति। तेन माध्वमते सत्त्वासत्त्वयोः परस्परविरहव्यापकतया परस्परविरहरूपतया वा सदसद्विलक्षणस्य कस्यचिदसम्भवः। सिद्धान्तिमते निरुक्तयोः सत्त्वासत्त्वयोः परस्परविरहरूपत्वादीनामसम्भवात् सदसद्विलक्षणमपि किञ्चित् सम्भवत्येव। आरोपितं शुक्तिरजतादि बाधकज्ञानबाध्यत्वेना-बाध्यरूपात् सतः विलक्षणम्, शुक्तिरजतं सदिति सत्त्वप्रकारकप्रतीत्या च सत्त्वेन प्रतीयमानत्वानधिकरणरूपादसतः विलक्षणम्; तथा च सदसद्वि-लक्षणत्वस्य शुक्तिरूप्यादौ सिद्धत्वेन न साध्याप्रसिद्धिर्दोषः ॥ ४५ ॥

४६—पूर्वपक्षिणा निर्धर्मकस्य ब्रह्मणः सत्त्वासत्त्वधर्मद्वयराहित्येऽपि सद्रूपत्ववत् प्रपञ्चस्य सत्त्वासत्त्वधर्मद्वयराहित्येऽपि ब्रह्मवत् सद्रूपत्वेनामिथ्या-त्वोपपत्त्या अर्थान्तरमुक्तमधस्तात्, समाहितं च तत्रैव सिद्धान्तिना। इदानीं निर्धर्मकत्वेन ब्रह्मणि सत्त्वासत्त्वधर्मद्वयराहित्याङ्गीकारे प्रदर्शितमिथ्यात्व-

व्याप्तिः, सद्रूपत्वेन ब्रह्मणः तदत्यन्ताभावानधिकरणत्वात्, निर्धर्मकत्वेनैवाभावरूपधर्मानधिकरणत्वाच्चेति दिक् ॥४६॥

---

लक्षणस्य तत्रैवातिव्याप्तिरिति प्रदर्शयितुं पूर्वपक्षी शंकते—न च निर्धर्मकत्वादित्यादि। सिद्धान्तिना शुद्धे ब्रह्मणि सत्त्वादिधर्मसम्बन्धः नाङ्गीक्रियते। सत्त्वादिधर्मसम्बन्धस्तु सत्त्वाद्युपहिते एव ब्रह्मणि सम्भवति। तथा च सत्त्वादिधर्माभावघटितमिथ्यात्वलक्षणस्य शुद्धे ब्रह्मणि सत्त्वादतिव्याप्तिरेव। सद्रूपं शुद्धं ब्रह्म सत्त्वादिधर्मशून्यमेवेति भावः। पूर्वपक्षिणा यत् लक्षणस्यातिव्याप्तिरूपदूषणमुक्तं तन्नेत्यर्थः। कुतः तन्नेत्याह मूलकारः सद्रूपत्वेनेति। सद्रूपत्वेन—बाध्यत्वाभाववत्त्वेन, तदत्यन्ताभावानधिकरणत्वात्—बाध्यत्वाभावात्यन्ताभावानधिकरणत्वात्। बाध्यत्वाभाव एव ब्रह्मणि न तु तदत्यन्ताभावः। बाध्यत्वाभाव एव हि सत्त्वम्, न तु भावरूपः कश्चिद् धर्मः। तथा च ब्रह्मणः भावरूपधर्मानाश्रयत्वेऽप्यभावरूपधर्माश्रयत्वात् नातिव्याप्तिः। बाध्यत्वाभावरूपसत्त्वस्य ब्रह्मण्यभ्युपगमेन सत्त्वाभावघटितमिथ्यात्वलक्षणस्य तत्राभावादिति भावः।

ननु सिद्धान्तिना बाध्यत्वाभावरूपं सत्त्वं निर्धर्मके ब्रह्मणि कथमङ्गीक्रियते? भाववदभावस्यापि धर्मत्वाविशेषात्। "निर्गुणश्चे" ति श्रुत्या ब्रह्मणः निर्धर्मकत्वं सिद्धम्। तत्र श्रुतौ गुणपदस्य भावमात्रार्थकत्वे न किमपि प्रमाणं पश्यामः। भाववदभावस्यापि धर्मत्वाविशेषेण गुणत्वात्। आश्रितवस्तुमात्रस्यैवाप्रधानत्वेन गुणत्वात्। गुणपदस्य भावमात्रपरत्वे चतुर्विंशतिगुणमात्रपरत्वे वा गुणपदस्य लक्षणाप्रसङ्गात्। भावभूतो धर्मः यथा ब्रह्मणि नाभ्युपगम्यते तथाऽभावरूपोऽपि धर्मः ब्रह्मणि नाभ्युपगन्तव्यः। भावे इवाभावेऽपि युक्तेस्तौल्यादिति चेत्? तत्राह—निर्धर्मकत्वेनैवेति। ब्रह्मणः निर्धर्मकत्वेन भावभूतस्याभावभूतधर्मस्य वा अनधिकरणत्वेनाभावरूपधर्मानधिकरणत्वाच्च सत्त्वाभावरूपधर्मस्याप्यनधिकरणत्वात् नातिव्याप्तिशंकापीति भावः। निर्धर्मके ब्रह्मणि सत्त्वासत्त्वे न स्तः इति कृत्वा ब्रह्मणि सत्त्वाभावासत्त्वाभावरूपमिथ्यात्वलक्षणस्यातिव्याप्तिराशंकिता,

इति मिथ्यात्वनिरूपणे प्रथममिथ्यात्वलक्षणम् ।

---

सिद्धान्तिना निर्गुणश्रुत्या भावाभावोभयविधधर्मानास्पदत्वेन ब्रह्मणि मिथ्यात्वलक्षणस्यातिव्याप्तिशंकैव नास्तीति समाहिता ॥ ४६ ॥

इति श्रीमन्महामहोपाध्यायलक्षणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथशर्मविरचितायामद्वैतसिद्धिबालबोधिन्यां प्रथममिथ्यात्वलक्षणविवरणम् ।

प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्यात्वम् ॥ १ ॥

---

१—'किमिदं मिथ्यात्वं साध्यते' इति पृच्छायां पञ्चपादिकामतानुसारेण, सदसत्त्वानधिकरणत्वरूपं मिथ्यात्वमुक्तम्। इदानीं पञ्चपादिकाविवरणकृतां प्रकाशात्मश्रीचरणानां मतमनुसृत्य मिथ्यात्वं निरूपयन् विवरणवाक्यमेव तात्पर्यतो दर्शयति—प्रतिपन्नोपाधाविति। विवरणे हि "प्रतिपन्नोपाधावभावप्रतियोगित्वमेव मिथ्यात्वम्", "बाधकज्ञानसिद्धस्य प्रतिपन्नोपाधावभावप्रतियोगित्वलक्षणस्य मिथ्यात्वस्ये"त्यादिकमुक्तम्। "नेह नानास्ति किञ्चने"ति श्रुत्यर्थमादाय एवं विवरणाचार्यैरिदं मिथ्यात्वलक्षणमुक्तम्—प्रतिपन्नोपाधाविति। प्रतिपन्नः प्रतीतिविशेष्यो य उपाधिरधिकरणं तस्मिन् तन्निष्ठ इत्यर्थः। उप समीपे आधीयतेऽस्मिन्निति व्युत्पत्त्योपाधिपदमधिकरणपरम्। प्रतिपन्नत्वं चात्र न प्रमितत्वम्, तथा सति प्रतियोग्याधारत्वेन प्रमितेऽधिकरणे प्रतियोगिनस्त्रैकालिकनिषेधे विरोधः स्यात्। नापि भ्रान्तिप्रतिपन्नत्वम्, तथा सति प्रतियोग्याधारत्वेन भ्रान्त्या प्रतीतेऽधिकरणे प्रतियोगिनस्त्रैकालिकनिषेधस्येष्टत्वेन सिद्धसाधनं स्यात्। तथा च प्रतिपन्नत्वमत्र प्रतिपत्तिर्न प्रमारूपा, नापि भ्रान्तिरूपा, किन्तु भ्रमप्रमासाधारणी प्रतीतिरेव। तेन प्रतिपन्नत्वं प्रतीतत्वमिति यावत्। एवञ्च सति प्रतिपन्ने प्रतीतिविशेष्ये उपाधावधिकरणे वर्तमानो यस्त्रैकालिको निषेधस्तत्प्रतियोगित्वं मिथ्यात्वमित्यायातम्। तथा च सति ज्ञानविशेष्यताया: सर्वत्र सुलभत्वेन घटवत्कपालमित्यादि ज्ञानविशेष्ये कपाले वर्तमाने यस्त्रैकालिको निषेधस्तत्प्रतियोगित्वस्य पटादौ सत्त्वेन सिद्धसाधनता स्यात्। अतः प्रतिपन्नपदस्य प्रतीतिविशेष्यमात्रं नार्थः, किन्तु प्रतिपन्ने इत्यस्य स्वप्रकारकप्रतीतिविशेष्ये इत्यर्थो ग्राह्यः। अत्र 'स्व'पदं मिथ्यात्वेनाभिमतपरम्। तथा च मिथ्यात्वेनाभिमतरजतादिप्रकारकप्रतीतिविशेष्यनिष्ठत्रैकालिकनिषेधप्रतियोगित्वस्य मिथ्यात्वे न पूर्वोक्तसिद्धसाधनताया अवकाशः। पटादीनां कपालादिनिष्ठत्रैकालिकनिषेधस्य पटप्रकारकप्रतीतिविशेष्यनिष्ठत्वाभावात्।

अत्राधिकरणार्थकोपाधिपदं न लक्षणघटकम्, व्यावृत्त्यजनकत्वात्, किन्तु प्रतिपन्नपदघटकक्तप्रत्ययार्थविषयताया विशेष्यत्वरूपत्वलाभाय एव।

न च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य मिथ्यात्वे प्रदर्शितरीत्या सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वस्यैव मिथ्यात्वमायातम्; यतो यत्र यस्य प्रसक्तिर्नास्ति तत्र तस्याभावेऽविवाद एव; यत्र यस्य प्रसक्तिस्तत्रापि तस्याभावे सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं पर्यवसितम्; तथा च सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वमेव मिथ्यात्वमस्तु, कृतं प्रतिपन्नेति विशेषणप्रक्षेपेणेति वाच्यम्। शशविषाणाद्यसद्व्यावर्त्तनायोक्त-विशेषणस्यावश्यकत्वात्। सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं शशविषाणा-दावलीकेऽप्यस्ति। तेन मिथ्यात्वलक्षणं तत्रातिव्याप्तं मा भूदिति प्रतिपन्नेति विशेषणम्। प्रतिपन्नपदस्य स्वप्रकारकप्रतीतिविशेष्यमर्थ इत्युक्तं प्राक्। अलीकस्य प्रतीतिविषयत्वाभावेनालीकप्रकारकप्रतीतिविशेष्यमेवाप्रसिद्धम्। शशविषाणेत्यादिशब्दजन्यविकल्पवृत्तिविषयत्वेऽपि शशविषाणादीनां ज्ञान-विषयत्वाभावात्। विकल्पवृत्तश्चेच्छासुखादिवदन्तःकरणवृत्तित्वेऽपि ज्ञान-रूपत्वं नास्ति। एतच्चाग्रे स्फुटीभविष्यति।

अत्र त्रैकालिकः सर्वदा विद्यमानो यो निषेधः संसर्गाभावः स एव त्रैकालिकनिषेधः, अत्यन्ताभाव इत्यर्थः। अत्र त्रैकालिकपदेन ध्वंसप्रागभावयो-र्व्यावृत्तिः। तयोः सर्वदा विद्यमानत्वाभावात्। तथा च स्वप्रकारकधी-विशेष्यताव्यापकीभूतो योऽत्यन्ताभावस्तस्य प्रतियोगित्वमेव मिथ्यात्वमिति-फलितम्। स्यादेतद्, इदानीं "नेह नानास्ति किञ्चने"त्यादि श्रुत्या प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं कथमायातमिति विवेचनीयम्। तदित्थं—"नाना" ब्रह्मभिन्नं "किञ्चन" वस्तुसामान्यम्, तथा च "नाना किञ्चने"त्यस्य ब्रह्मभिन्नं वस्तुसामान्यमर्थः, तस्य च "ने"ति नञर्थेऽत्यन्ताभावे प्रतियोगितयाऽन्वयात् ब्रह्मभिन्नवस्तुसामान्या-भावो लभ्यते। तस्य च "अस्ति" क्रियया अन्वयः। तेन "न नाना

ननु प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य तात्त्विकत्वेऽद्वैत-हानिः, प्रातिभासिकत्वे सिद्धसाधनम्, व्यावहारिकत्वेऽपि तस्य

---

किञ्चनास्ती"त्यस्यास्तित्वविशिष्टब्रह्मभिन्नवस्तुसामान्याभावोऽर्थः। तस्मिन् सामान्याभावे "इह" पदार्थस्य दृश्यतादात्म्यापन्नब्रह्मनिरूपिताधेयताया अन्वयः। तथा च अस्तित्वविशिष्टब्रह्मभिन्नवस्तुसामान्याभावः दृश्य-तादात्म्यापन्नब्रह्मनिरूपिताधेयताश्रय इत्यर्थः ॥ १ ॥

२—विवरणकृतां मतमनुसृत्य मिथ्यात्वलक्षणमुक्तम्। अत्र पूर्वपक्षी शंकते—नन्वेत्यादि। सिद्धान्तिनोक्तरूपनिषेधप्रतियोगित्वं मिथ्यात्वं यदुक्तम्, तद् वक्ष्यमाणदूषणगणग्रासान्न समीचीनम्। तथाहि सिद्धान्तिना मिथ्यात्वघटकतया यस्त्रैकालिकनिषेध उक्तः, स तन्मते तात्त्विको वा, प्रातिभासिको वा, व्यावहारिको वा ? सर्वथापि न संगच्छते। यत उक्त-निषेधस्य तात्त्विकत्वेऽद्वैतहानिः प्रपञ्चतादात्म्यापन्ने ब्रह्मणि प्रपञ्च-निषेधस्य तात्त्विकत्वे पारमार्थिकत्वे अद्वैतहानिः—ब्रह्मणः प्रपञ्चनिषेधस्य च तात्त्विकत्वेन पारमार्थिकवस्तुद्वयाङ्गीकाराद् ब्रह्माद्वैतसिद्धान्तहानिः। सिद्धान्त-हानिभिया निषेधस्य तात्त्विकत्वं त्वया नाङ्गीकर्तुं शक्यत इति भावः। द्वितीये त्रैकालिकनिषेधस्य प्रातिभासिकत्वे दोषमाह—प्रातिभासिकत्वे इति। ब्रह्मणि प्रपञ्चप्रतियोगिकत्रैकालिकनिषेधस्य प्रातिभासिकत्वे सिद्धसाधनं—ब्रह्मणि प्रपञ्चस्य प्रातिभासिकत्रैकालिकनिषेधप्रतियोगित्वे प्रतियोगिप्रपञ्चस्य सत्यत्वाविरोधेन तादृशप्रतियोगित्वसाधने पूर्वपक्षिमतसिद्धस्य साधनमेव स्यात्। अभावस्य प्रातिभासिकत्वे तत्प्रतियोगिनः प्रातिभासिकत्वं न सिध्यतीति भावः। त्रैकालिकनिषेधस्य व्यावहारिकत्वपक्षं दूषयितुमाह—व्यावहारि-कत्वेऽपीति। ब्रह्मणि प्रपञ्चप्रतियोगिकत्रैकालिकनिषेधस्य व्यावहारि-कत्वेऽपि ब्रह्मप्रमाबाध्यत्वेऽपि तस्य, प्रपञ्चप्रतियोगिकत्रैकालिकनिषेधस्य,

बाध्यत्वेन तात्त्विकसत्त्वाऽविरोधितया अर्थान्तरम्, अद्वैतश्रुतेर-तत्त्वावेदकत्वं च तत्प्रतियोगिनोऽप्रातिभासिकस्य प्रपञ्चस्य

---

बाध्यत्वेन ब्रह्मप्रमाबाध्यत्वेन, तात्त्विकसत्त्वाविरोधितया उक्तनिषेध-प्रतियोगिनः प्रपञ्चस्य त्रैकालिकसत्त्वाविरोधितया, अर्थान्तरम् प्रपञ्च-मिथ्यात्वानुमानप्रयोजनादन्यस्य साध्यमात्रस्य सिद्ध्याऽर्थान्तरम्।

अयं भावः—प्रपञ्चप्रतियोगिकत्रैकालिकनिषेधस्य व्यावहारिकत्वेन ब्रह्मप्रमाबाध्यत्वे प्रतियोगिनः प्रपञ्चस्य पारमार्थिकत्वाविरोधादर्थान्तरम्। ब्रह्मज्ञानबाध्यप्रपञ्चनिषेधाधिकरणे प्रतियोगिनः प्रपञ्चस्य सर्वथाऽबाध्यत्वे-नाप्युपपत्त्याऽर्थान्तरम्। व्यावहारिकनिषेधेन प्रतियोगिनो व्यावहारिकत्वा-पहारेऽपि पारमार्थिकत्वानपहारादिति भावः। अर्थान्तरमिति बाधस्याप्युप-लक्षणम्। व्यावहारिकप्रपञ्चाधिकरणे व्यावहारिकनिषेधस्य साधने बाधस्यापि प्रसङ्गः।

निषेधस्य व्यावहारिकत्वपक्षे दोषान्तरमाह—अद्वैतश्रुतेरिति। प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं यन्मिथ्यात्वं तत् "नेह नानास्ति किञ्चने"ति श्रुतिप्रतिपाद्यमित्युक्तं विप्रतिपत्तिविवेचनावसरे। प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य च व्यावहारिकत्वाङ्गीकारे ब्रह्मप्रमा-बाध्यत्वेन मिथ्यात्वात्। मिथ्याभूतार्थतात्पर्यिकायाः "नेह नानास्ति किञ्चने"त्यादि अद्वैतश्रुतेरबाधितार्थप्रतिपादकत्वाभावेनाप्रामाण्यप्रसङ्गात्। प्रपञ्चतादात्म्यापन्ने ब्रह्मणि प्रपञ्चस्य व्यावहारिकत्रैकालिकनिषेधप्रतिपादने उक्तश्रुतेर्व्यावहारिकमिथ्याभूतनिषेधप्रतिपादकत्वात्, अतत्त्वावेदकत्वम्—ब्रह्मणि द्वैताभावस्य व्यावहारिकत्वेन मिथ्यात्वाद् ब्रह्मणि मिथ्याभूतद्वैता-भावस्य प्रतिपादने "नेह नानास्ति किञ्चने"त्यादि श्रुतेरुक्ताभावरूपबाधितार्थ-प्रतिपादकतयाऽतत्त्वावेदकत्वम्। अस्मिन्नेव तृतीयपक्षे दूषणान्तरं प्रदर्शयितु-माह—तत्प्रतियोगिन इति। तत्प्रतियोगिनः तस्य प्रपञ्चप्रतियोगिक-

पारमार्थिकत्वं च स्यादिति चेत्? ॥ २ ॥

न, प्रपञ्चनिषेधाधिकरणीभूतब्रह्माभिन्नत्वान्निषेधस्य तात्त्विकत्वेऽपि

---

व्यावहारिकनिषेधस्य प्रतियोगिनः प्रपञ्चस्य पारमार्थिकत्वं स्यादिति । समानसत्त्वाकयोर्भावाभावयोरेकत्र विरोधात् । प्रपञ्चनिषेधस्य व्यावहारिकत्वे तत्प्रतियोगिनः प्रपञ्चस्य व्यावहारिकत्वासम्भवेऽपि रजतात्यन्ताभावस्य व्यावहारिकत्वेऽपि रजतस्य प्रातिभासिकत्ववद् व्यावहारिकात्यन्ताभाव-प्रतियोगिनः प्रपञ्चस्य प्रातिभासिकत्वेनाप्युपपत्तौ पारमार्थिकत्वमेव कुत इत्याशङ्कायामाह—अप्रातिभासिकस्येति । प्रपञ्चस्य ब्रह्मप्रमातिरिक्ता-बाध्यत्वेनाप्रातिभासिकस्य व्यावहारिकत्वासम्भवेन पारमार्थिकत्वमेव बलात् स्यात् । तथा च प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य पारमार्थिकत्वे प्रातिभासिकत्वे व्यावहारिकत्वे वा प्रदर्शितदूषणगणप्रसरात् तादृशो निषेधो न निरूपयितुं शक्यत इति पूर्वपक्षिणामाशयः ॥ २ ॥

३—प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य तात्त्विकत्वेऽभ्युपगम्यमाने यद्दूषणमुक्तं पूर्वपक्षिणा, तत् समाधातुमाह सिद्धान्ती—न प्रपञ्चेत्यादि । त्रैकालिकनिषेधस्य तात्त्विकत्वेऽद्वैतहानिरिति यत् पूर्वपक्षिणोक्तं तन्निषेधस्य ब्रह्माभिन्नत्वान्न सङ्गतम् ? तथाहि—ब्रह्मणि प्रपञ्चस्य यः त्रैकालिको निषेधः स च तात्त्विकोऽपि निषेधाधिकरणीभूतब्रह्मणोऽत्यन्ताभिन्नः । अत्यन्ताभिन्नत्वादेव च निषेधस्य नाद्वैतहानिकरत्वम् । ब्रह्मभिन्नस्य तात्त्विक-वस्तुनः सत्त्व एवाद्वैतहानिरिति भावः ।

अत्र निषेधस्य यत् ब्रह्माभिन्नत्वमुक्तं तत् केवलनिर्धर्मकब्रह्मरूपेणैव बोध्यम् । प्रपञ्चप्रतियोगिकत्वविशिष्टरूपेण तु निषेधस्य न तात्त्विकत्वम्, अपितु व्यावहारिकप्रपञ्चप्रतियोगिकत्वेन व्यावहारिकत्वमेव; अत्र निषेधस्य तात्त्विकत्वं तु निषेधाधिकरणमहिम्नैव । स्वरूपेण तु निषेधस्य व्यावहारि-कत्वमेव । एवं च प्रातिभासिकरजतप्रतियोगिकनिषेधस्य व्यावहारिकत्वेऽपि न शुक्तिरजतदृष्टान्तस्य साध्यविकलता । शुक्तिरजतनिषेधस्य अधिष्ठान-

नाद्वैतहानिकरत्वम् ॥ ३ ॥

न च तात्त्विकाभावप्रतियोगिनः प्रपञ्चस्य तात्त्विकत्वापत्तिः, तात्त्विकाभावप्रतियोगिनि शुक्तिरजतादौ कल्पिते व्यभिचारात् ॥४॥

---

तावच्छेदकेदमंशानवच्छिन्नकेवलचिद्रूपेण पारमार्थिकत्वमस्त्येवेति भावः ॥३॥

४—यद्यपि ब्रह्मणि प्रपञ्चनिषेधस्य तात्त्विकत्वे निषेधस्य तात्त्विकत्वमादाय न प्रदर्शितरूपेणाद्वैतहानिः, तथापि निषेधस्य तात्त्विकत्वे प्रकारान्तरेणाद्वैतहानिः स्यादेव। तथाहि—प्रपञ्चः तात्त्विकः, तात्त्विकाभावनिरूपितत्वात्, यद् यन्निरूप्यं तत् तत्समानसत्त्वाकम्, यथा—शुक्तिरजतसादृश्यं शुक्तिरजतसमानसत्त्वाकमित्यभिसन्धाय माध्वः शङ्कते—न च तात्त्विकाभावेत्यादि। तात्त्विकाभावप्रतियोगिनस्तात्त्विकनिषेधनिरूप्यस्य प्रपञ्चस्य तात्त्विकत्वापत्तिः; तथा च ब्रह्मभिन्नप्रपञ्चस्य तात्त्विकत्वेन पुनरप्यद्वैतहानिरित्यर्थः। "यत् यन्निरूप्यं तत् तत्समानसत्त्वाकमि"ति पूर्वपक्षिप्रदर्शितव्याप्तौ व्यभिचारेण निषेधस्य तात्त्विकत्वेऽपि न प्रतियोगिनस्तात्त्विकत्वापत्तिः—इत्यभिसन्धायाह सिद्धान्ती—तात्त्विकाभावप्रतियोगिनीत्यादि। तात्त्विकाभावप्रतियोगिनि—प्रातिभासिकशुक्तिरजताद्यपेक्षयाऽधिकसत्त्वाकस्य शुक्तिरजताद्यभावस्य पारमार्थिकस्य व्यावहारिकस्य वा प्रतियोगिनि शुक्तिरजते कल्पिते आगन्तुकदोषजन्ये शुक्तिरजतादौ व्यभिचारात् प्रदर्शितायाः यद् यन्निरूप्यमिति व्याप्तेर्व्यभिचारात्। अयं भावः—शुक्तिरजतनिषेधो यदि व्यावहारिको यदि वा पारमार्थिकः, उभयथापि व्यावहारिकनिषेधनिरूप्यस्य पारमार्थिकनिषेधनिरूप्यस्य वा प्रातिभासिकरजतस्य व्यावहारिकपारमार्थिकत्वयोरभावेन 'यद् यन्निरूप्यमिति व्याप्तेर्व्यभिचारात्। अत्रेदमवधेयम्—शुक्तिरजताभावस्य प्रातिभासिकशुक्तिरजतप्रतियोगिकत्वविशिष्टरूपेण प्रातिभासिकत्वमेव। अभावस्याधिकरणात्मकतया अधिकरणस्य व्यावहारिकत्वे अभावोऽपि व्यावहारिक एव। अधिकरणस्य पारमार्थिकत्वे अभावोऽपि पारमार्थिक एव। शुक्तिरजतस्येदमंशावच्छिन्नचैतन्ये आरोपिततया तदभावोऽपि इदमंशावच्छिन्नचैतन्यनिष्ठ एव।

अतात्त्विक एव वा निषेधोऽयम्, अतात्त्विकत्वेऽपि न प्रातिभासिकः, किन्तु व्यावहारिकः ॥ ५ ॥

---

इदमंशस्य च व्यावहारिकत्वेनेदमंशावच्छिन्नचैतन्यमपि व्यावहारिकम्। व्यावहारिकचैतन्याधिकरणकस्य शुक्तिरजताभावस्यापि व्यावहारिकत्वम्। अभावस्याधिकरणात्मकत्वात्। रजतारोपाधिष्ठानतावच्छेदकेदमंशावच्छिन्नचैतन्याभिन्नरूपेण शुक्तिरजताभावस्य व्यावहारिकत्वेप्यधिष्ठानतावच्छेदकानवच्छिन्नकेवलचिद्रूपेण शुक्तिरजताभावः पारमार्थिक एव। तथा च—तात्त्विकाभावप्रतियोगिनि शुक्तिरजतादाविति मूलग्रन्थोऽपि सुष्ठु संगच्छते। शुक्तिरजताभावस्यापि केवलचिद्रूपेण पारमार्थिकत्वात्। तथा च—तात्त्विकाभावनिरूपितस्य शुक्तिरजतादेस्तात्त्विकत्वाभावेन प्रदर्शितायाः व्याप्तेर्व्यभिचारः स्फुट एव ॥ ४ ॥

५—प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य तात्त्विकत्वेऽपि यथा नाद्वैतहानिस्तदुक्तमुपरिष्टात्। इदानीमुक्तनिषेधस्य व्यावहारिकत्वपक्षं समर्थयितुमाह मूलकारः—अतात्त्विक एव वेति। प्रतिपन्नोपाधावयं त्रैकालिकनिषेधोऽतात्त्विक एव वा अस्तु व्यावहारिक एव वा अस्तु इत्यर्थः। उक्तनिषेधस्य प्रातिभासिकत्वपक्षः सिद्धसाधनतादोषदुष्ट इति कृत्वा अतात्त्विकपदस्य व्यावहारिक एवार्थः सम्भवतीति प्रदर्शयितुमाह—अतात्त्विकत्वेऽपीत्यादि। प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्यातात्त्विकत्वे ऽपि तात्त्विकत्वाभावेऽङ्गीक्रियमाणेऽपि न प्रातिभासिक इति, सिद्धसाधनतादोषदुष्टत्वान्न प्रातिभासिकत्वं तस्य किन्तु व्यावहारिकः, ब्रह्मप्रमामात्रबाध्यत्वं हि व्यावहारिकत्वम्। अत्र वा शब्देन पूर्वकल्पे आत्मनोऽरुचिं दर्शयति—प्रपञ्चनिषेधस्य पारमार्थिकत्वं प्रतियोगिविरोधितानवच्छेदककेवलब्रह्मरूपेणैव। केवलब्रह्मरूपस्य निषेधस्य प्रतियोगिनिरूप्यत्वाभावादेव विरोधाभावादर्थान्तरम्, अतो निषेधस्य व्यावहारिकत्वपक्षानुसरणम् ॥५॥

न च तर्हि निषेधस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधित्वादर्थान्तरमिति वाच्यम्,

---

६—प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य व्यावहारिकत्वे प्रतियोगिनः प्रपञ्चस्य पारमार्थिकत्वापत्त्या आशंकितम् अर्थान्तरत्वमनुवदन्निराकरोति—न च तर्हीति। तर्हि प्रतिपन्नोपाधौ निषेधस्य व्यावहारिकत्वे निषेधस्य बाध्यत्वेन ब्रह्मप्रमाबाध्यत्वेन बाध्यनिषेधप्रतियोगिनः प्रपञ्चस्य तात्त्विकसत्त्वाविरोधित्वात् प्रतियोगिनः पारमार्थिकत्वस्यापि सम्भवात् प्रतियोगिनः प्रपञ्चस्य मिथ्यात्वासिद्ध्या अर्थान्तरमित्यर्थः। प्रपञ्चस्यापारमार्थिकत्वसाधनायैव सिद्धान्तिना तादृशनिषेधप्रतियोगित्वं प्रपञ्चे इष्यते, किन्तु प्रतियोगिनोऽपारमार्थिकत्वे अभावपारमार्थिकत्वमेव प्रयोजकम्। प्रतियोगिसमानाधिकरणपारमार्थिकाभावप्रतियोगिन एवापारमार्थिकत्वात्। एकाधिकरणभावाभावयोः समानसत्त्वाकत्वे विरोधादेव पारमार्थिकाभावाधिकरणे प्रतियोगिनः पारमार्थिकत्वासम्भवः। निषेधस्य व्यावहारिकत्वेन ब्रह्मप्रमामात्रबाध्यत्वादपारमार्थिकत्वम्। अपारमार्थिकनिषेधस्य प्रतियोगिनः पारमार्थिकत्वानपायात्। प्रतियोग्यपेक्षयाऽधिकसत्ताकाभावेन प्रतियोगिनोऽपारमार्थिकत्वमायाति। तथाच प्रतिपन्नोपाधौ प्रतियोग्यपेक्षयाऽधिकसत्ताकत्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वं पर्यवसितम्। प्रतियोग्यपेक्षयाऽधिकसत्ताकं निषेधमङ्गीकृत्य कथं व्यावहारिकनिषेधेन प्रतियोगिनो मिथ्यात्वं साधयितुव्यम्? यथा घटसमानाधिकरणप्रातिभासिकनिषेधप्रतियोगित्वेन ज्ञातेऽपि घटादौ न घटादेर्मिथ्यात्वव्यवहारः, तत् कस्य हेतोः? प्रतियोग्यपेक्षया निषेधस्याधिकसत्ताकत्वाभावात्, तथा प्रकृतेऽपि व्यावहारिकनिषेधस्य व्यावहारिकप्रतियोग्यपेक्षयाऽधिकसत्ताकत्वाभावात् प्रतियोगिनो मिथ्यात्वासम्भवात् प्रतियोगिनः पारमार्थिकत्वेनापि व्यावहारिकनिषेधप्रतियोगित्वस्य उपपत्त्या अर्थान्तरत्वादिति पूर्वपक्षिणामाशयमनूद्य निषेधति न च—वाच्यमित्यादि। कस्मात् पूर्वपक्षिणा नैवं

स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात् ॥ ६ ॥

निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे न तन्त्रम्, किन्तु निषेध्यापेक्षया न्यूनसत्त्वाकत्वम्, प्रकृते च तुल्यसत्त्वा-

---

वाच्यम् ? स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात्। स्वाप्नार्थस्य स्वप्ने आरोपितस्यार्थस्य गजादेः, स्वाप्ननिषेधेन स्वप्ने आरोपितेन निषेधेन बाधदर्शनात् मिथ्यात्वव्यावहारदर्शनात्। यथा स्वप्ने आरोपितस्य गजादेः स्वप्ने आरोपितेनाभावेनारोपितगजादीनां मिथ्यात्वव्यावहारो भवति, तथा प्रकृतेऽपि व्यावहारिके प्रपञ्चे प्रपञ्चसमानाधिकरणव्यावहारिकनिषेधप्रतियोगित्वमादाय मिथ्यात्वव्यावहारो भविष्यति। एवं च सति प्रतियोग्यपारमार्थिकत्वेऽभावपारमार्थिकत्वं न प्रयोजकम्। स्वाप्नार्थस्यापारमार्थिकत्वे उक्तप्रयोजकताया असम्भवात्। अपारमार्थिकनिषेधप्रतियोगिनोऽपि अपारमार्थिकत्वदर्शनात् ॥ ६ ॥

७—अन्यच्च बाध्यनिषेधप्रतियोगित्वेन प्रतियोगिनः प्रपञ्चस्य पारमार्थिकत्वापत्तिप्रदर्शनं पूर्वपक्षिणामसङ्गतमेव। यतो निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे न तन्त्रम्, न तन्निषेधप्रतियोगिनः पारमार्थिकसत्त्वाविरोधित्वव्याप्यमित्यर्थः। यत्र यत्र निषेधस्य बाध्यत्वं तत्र तन्निषेधप्रतियोगिनः पारमार्थिकसत्त्वाविरोधित्वमिति व्याप्तेः स्वाप्नार्थस्य स्वाप्ननिषेधे व्यभिचारात्। निषेधस्य बाध्यत्वं न तन्त्रम् न व्याप्यम्। निषेधप्रतियोगिनः पारमार्थिकसत्त्वाऽविरोधित्वस्य न निषेधबाध्यत्वं व्याप्यमित्यर्थः। यदि निषेधस्य बाध्यत्वं न व्याप्यं, तर्हि किं व्याप्यम् ? इति पृच्छायामाह—किन्त्विति। निषेध्यापेक्षया प्रतियोग्यपेक्षया न्यूनसत्त्वाकत्वं निषेधस्येत्यर्थः। निषेध्यापेक्षया निषेधस्य न्यूनसत्त्वाकत्वं निषेधप्रतियोगिनः पारमार्थिकसत्त्वाविरोधित्वेव्याप्यमिति भावः। निषेध्यपिक्षया न्यूनसत्त्वाकेन निषेध्यसमानाधिकरणनिषेधेन निषेधस्य प्रतियोगिनः पारमार्थिकत्वं न प्रतिक्षिप्यते, विरोधाभावात्। प्रकृते च यदि प्रतिपन्नोपाधौ त्रैकालिकनिषेधः प्रतियोगिप्रपञ्चापेक्षया न्यूनसत्त्वाको भवेत्,

कत्वात् कथं न विरोधित्वम् ? ॥ ७ ॥

---

व्यावहारिकप्रतियोगिनः प्रपञ्चस्य निषेधः प्रातिभासिको भवेत्, तर्हि प्रतियोगिना सह निषेधस्य विरोधाभावात् प्रातिभासिकेन निषेधेन प्रतियोगिनः प्रपञ्चस्य मिथ्यात्वं न लभ्येत, मिथ्यात्वस्यालाभे चार्थान्तरत्वमपि स्यात्। किन्त्वत्र प्रतिपन्नोपाधौ त्रैकालिको निषेधः प्रातिभासिक इति न ब्रूमः, परन्तु प्रतियोगिसमानसत्ताको व्यावहारिक इति ब्रूमः। तथाच निषेध्यापेक्षया निषेधस्य न्यूनसत्ताकत्वाभावादेव नार्थान्तरताया अवकाश इति दर्शयन्नाह—प्रकृते चेति। प्रकृते च प्रतिपन्नोपाधौ इति मिथ्यात्वलक्षणे निषेधस्य तुल्यसत्ताकत्वात्, निषेध्यतुल्यसत्ताकत्वात् निषेध्यनिषेधयोर्द्वयोरपि व्यावहारिकत्वात् कथं न विरोधित्वं प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य स्वप्रतियोगिनः प्रपञ्चस्य पारमार्थिकत्वापहारकत्वरूपं विरोधित्वं कथं नोक्तरूपं ? विरोधित्वं स्यादेवेति भावः। प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य प्रतियोग्यपेक्षया न्यूनसत्ताकत्वे प्रतियोगिपारमार्थिकत्वानपहारकतया अर्थान्तरं स्यादेव। अत्र निषेधस्य व्यावहारिकत्वेन व्यावहारिकप्रतियोगितुल्यसत्ताकत्वात् प्रतियोगिसमानाधिकरणप्रतियोगितुल्यसत्ताकनिषेधप्रतियोगिनोऽपि स्वाप्नगजादेः स्वाप्ननिषेधेन मिथ्यात्वव्यवहारदर्शनात् मिथ्यात्वं सिद्धम्। एवं यथा प्रतियोगितुल्यसत्ताकनिषेधप्रतियोगिनो मिथ्यात्वं, तथा प्रतियोगिसत्त्वाधिकसत्त्वाकनिषेधप्रतियोगिनोऽपि मिथ्यात्वं सुतरां सिद्धमेव। तथा च प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य प्रतियोग्यन्यूनसत्ताकत्वं वाच्यम्, तेन प्रतियोगितुल्यसत्ताकस्य प्रतियोग्यधिकसत्ताकस्य च निषेधस्य संग्रहात् प्रपञ्चस्य मिथ्यात्वम्। तथाच प्रकृते व्यावहारिकनिषेधप्रतियोगित्वं पारमार्थिकनिषेधप्रतियोगित्वं वा मिथ्यात्वम्। ननु प्रातिभासिकनिषेधप्रतियोगित्वं व्यावहारिकप्रपञ्चस्य मिथ्यात्वं भवितुमर्हति। प्रातिभासिकनिषेधस्य प्रतियोग्यन्यूनसत्ताकत्वाभावात्। प्रातिभासिकरजतादेर्मिथ्यात्वं तु प्रातिभासिकव्यावहारिकपारमार्थिकनिषेधघटितं सम्भवत्येव। व्यावहारिकस्य तु द्विविधनिषेधघटितमेव मिथ्यात्वम् ॥७॥

न च निषेधस्य निषेधे प्रतियोगिसत्त्वापत्तिरिति वाच्यम्; तत्र हि निषेधस्य निषेधे प्रतियोगिसत्त्वमायाति, यत्र निषेधस्य

---

८—इदानीं पूर्वपक्षी प्रपञ्चमिथ्यात्वानुमाने प्रतिकूलतर्कं शङ्कते न च निषेधस्येति। निषेधस्य मिथ्यात्वघटकनिषेधस्य, व्यावहारिकस्य, प्रपञ्चप्रतियोगिकत्रैकालिकनिषेधस्यात्यन्ताभावस्येत्यर्थः। निषेधे व्यावहारिकमात्रपक्षकप्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वानुमानेन व्यावहारिकस्य प्रपञ्चप्रतियोगिकात्यन्ताभावस्य बोधने व्यावहारिकस्य प्रपञ्चाभावस्य मिथ्यात्वानुमानेन निषेधे इति यावत्। प्रतियोगिसत्त्वापत्तिः—व्यावहारिकनिषेधापेक्षया तत्प्रतियोगिनः प्रपञ्चस्य अधिकसत्त्वस्यापत्तिः; प्रतियोगिनः प्रपञ्चस्य पारमार्थिकत्वापत्तिरिति यावत्। तथा च प्रपञ्चो यदि ब्रह्मधर्मिकस्वाभावाभावबोधकप्रमाणकः स्यात्, तर्हि ब्रह्मधर्मिकस्वाभावसत्ताधिकसत्ताकः स्यात्, "यत् यद् धर्मिकस्वाभावाभावबोधकप्रमाणकं तत् स्वाभावाधिकसत्ताकमि"ति व्याप्तेः। अस्यामापत्तौ "प्रपञ्चो यदि ब्रह्मधर्मिकस्वाभावाभावबोधकप्रमाणकः" इत्यापादकः, "ब्रह्मधर्मिकस्वाभावसत्ताधिकसत्ताकः" इत्यापाद्यः। आपादकापाद्ययोर्व्याप्तिः प्रदर्शिता। अत्र च ब्रह्मधर्मिकप्रपञ्चभावस्य व्यावहारिकस्याभावबोधकं प्रमाणमेतदेव मिथ्यात्वानुमानम्। अनेनानुमानेन व्यावहारिके प्रपञ्चाभावे त्रैकालिकनिषेधप्रतियोगित्वस्य साधनात् प्रपञ्चस्य ब्रह्मधर्मिकस्वाभावाभावबोधकप्रमाणकत्वसिद्धिः। एवं च प्रदर्शितव्याप्तिमूलकतर्केण प्रपञ्चस्य व्यावहारिकनिषेधापेक्षया निषेधप्रतियोगिनि प्रपञ्चेऽधिकसत्त्वस्यापत्तौ प्रपञ्चस्य पारमार्थिकत्वमेव पर्यवसितम्। मिथ्यात्वघटकनिषेधस्य प्रतियोगिप्रपञ्चापेक्षया न्यूनसत्ताकत्वात् प्रतिपन्नोपाधौ स्वान्यूनसत्ताकत्रैकालिकनिषेधप्रतियोगित्वलक्षणस्य मिथ्यात्वस्य प्रपञ्चेऽभावात्। तथा च बाध्यनिषेधप्रतियोगित्वेन प्रपञ्चस्य पारमार्थिकत्वापत्तिरिति पूर्वपक्षिणामाशयः।

निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते, निषेधमात्रं[1] निषिध्यते, यथा रजते "नेदं रजतम्", इति ज्ञानानन्तरम् "इदं नारजतमि"ति

---

प्रदर्शितामापत्तिं दूषयितुमाह—तत्र हि निषेधस्येति। तत्र हि व्यावहारिके रजतादौ धर्मिणि निषेधस्य भ्रमविषयीभूतस्य रजतत्वनिषेधस्य रजतत्वाभावस्येत्यर्थः। निषेधे अभावबोधने इदं नारजतमिति बाधकेन प्रमाणेन रजतत्वाभावस्य अभावबोधने इति यावत्, प्रतियोगिसत्त्वमायाति प्रतियोगिनः रजतत्वादेः सत्त्वममिथ्यात्वं सिध्यति, यत्र धर्मिणि निषेधस्य अभावस्य निषेधबुद्ध्या बाधज्ञानेन प्रतियोगिसत्त्वं प्रतियोगिनो रजतत्वादेः सत्त्वं—स्वनिषेधापेक्षयाऽधिकसत्ताकत्वं व्यवस्थाप्यते प्रमीयते, निषेधमात्रं प्रतियोगिनमनन्तर्भाव्य निषेधमात्रं निषिध्यते मिथ्यात्वेन निश्चीयते, तत्र प्रतियोगिनोऽभावापेक्षया अधिकसत्ताकत्वमायातीति भावः। अयमर्थः—व्यावहारिकरजतधर्मिणि भ्रमविषयीभूतस्य रजतत्वाभावस्य निषेधे रजतत्वधर्मस्यामिथ्यात्वमायाति यतः रजतत्वधर्मं प्रतियोगित्वेनागृहीत्वैव रजतत्वनिषेधस्य निषेधो भवतीति भावः। उक्तमर्थं दृष्टान्तेन विवृन्वन्नाह—यथा रजतमित्यादि। रजते व्यावहारिके रजते नेदं रजतमिति ज्ञानानन्तरं रजतभेदरूपस्य रजतत्वात्यन्ताभावस्य भ्रमज्ञानानन्तरम् इदं नारजतमिति ज्ञानेन अत्र रजतत्वमिति बाधज्ञानेन रजतत्वं व्यवस्थाप्यते इत्यर्थः। नारजतं रजतभिन्नं नेति ज्ञाने रजतभिन्नभेदो विषयः, धर्मिभिन्नभेदस्य धर्मरूपतया रजतभिन्नभेदस्य रजतत्वरूपत्वं, तथा च इदं नारजतमिति ज्ञानेन अत्र रजतत्वमिति ज्ञानेनेत्यर्थः, रजतं व्यवस्थाप्यते रजतत्वममिथ्यात्वेन निश्चीयते। नारजतमित्यस्य रजतत्वरूपतया रजतं व्यवस्थाप्यते इत्यत्र रजतपदं रजतत्वपरं बोध्यम्, अन्यथा असङ्गतिः स्यात्—मिथ्यात्वलक्षणघटकात्यन्ता-

---

१ "निषेधमात्रं निषिध्यते" इत्यत्र "न निषेधमात्रं निषिध्यते" इत्यपि पाठो दृश्यते; परन्तु स न समीचीनः

ज्ञानेन रजतं व्यवस्थाप्यते; यत्र तु प्रतियोगिनिषेधयोरुभयोरपि निषेधस्तत्र न प्रतियोगिसत्त्वम्; यथा ध्वंससमये प्रागभावप्रति-

---

भावस्य भेदेन प्रत्युदाहरणमसङ्गतं स्यादिति भावः। स्वावच्छिन्नभिन्नभेदस्य स्वस्वरूपतया रजतत्वावच्छिन्नभिन्नभेदस्य रजतत्वरूपत्वात् नारजतमिति ज्ञानेन रजतत्वमिति ज्ञानेन रजतत्वस्यैव व्यवस्थापनात् रजतत्ववति रजतभेद-भ्रमानन्तरं नारजतमिति बुद्ध्या रजतभेदस्य बाधेन रजतत्वम् अमिथ्यात्वेन निश्चीयते, यतो रजतत्वसमानाधिकरणस्य रजतभेदात्मकस्य रजतत्वात्यन्ता-भावस्य नारजतमिति बाधेन प्रातीतिकत्वनिश्चयात् रजतभेदात्मकरजतत्वा-त्यन्ताभावस्य स्वप्रतियोगिव्यावहारिकरजतत्वापेक्षया न्यूनसत्ताकत्वेनान्यून-सत्ताकात्यन्ताभावघटितमिथ्यात्वस्य रजतत्वे अभावात्। यथार्थप्रतियोगिमत्य-भावभ्रमानन्तरं भ्रमविषयीभूतस्याभावस्य निषेधज्ञानेन प्रतियोगिनोऽमिथ्यात्वं स्वनिषेधापेक्षया अधिकसत्त्वाकत्वं वा व्यवस्थाप्यते। यत्र त्वारोपित-प्रतियोगिमत्यारोपितनिषेधस्य निषेधः, तत्र न प्रतियोगिनः पारमार्थिकत्वं न वा स्वनिषेधापेक्षया अधिकसत्ताकत्वम्, प्रतियोगिनिषेधयोर्द्वयोरप्यारोपित-त्वादिति भावः। प्रतियोगिनमनन्तर्भाव्य केवल[मात्र]स्य निषेधस्य बाधने प्रतियोगिनः प्रदर्शितस्थलेऽमिथ्यात्वेऽपि यत्र तु प्रतियोगिनिषेधयो-रुभयोरपि निषेधः निषेध्यतावच्छेदकधर्मस्य प्रतियोगिनिषेधोभयवृत्तित्वात् तत्र निषेधबाधनेऽपि न प्रतियोगिसत्त्वम् न रजतत्ववत् प्रतियोगिनोऽ-मिथ्यात्वम्, निषेध्यतावच्छेदकधर्मस्य प्रतियोगिनिषेधोभयवृत्तित्वेन प्रति-योगिनिषेधयोरुभयोरपि निषेधे यथा न प्रतियोगिनोऽमिथ्यात्वम्, निषेधा-पेक्षया अधिकसत्ताकत्वं वा तथा दृष्टान्तेन प्रदर्शयन्नाह—यथा ध्वंससमये इत्यादि। ध्वंससमये घटादिध्वंससमये, कपालादाविति शेषः, प्रागभाव-प्रतियोगिनः—प्राक् निषेधबुद्धेः प्रागारोपितयोरत्यन्ताभावप्रतियोगिनोरुभ-योर्निषेधः। अयं भावः—प्राचीनतार्किकमते ध्वंसप्रागभावयोरत्यन्ताभाव-विरोधित्वाङ्गीकाराद् घटादिध्वंसकाले कपालादौ घटादेस्तदत्यन्ताभावस्य च

योगिनोरुभयोर्निषेधः ॥ ८ ॥

---

ध्वंसविरोधितया व्यावहारिकत्वासम्भवेन कपालादावारोपितयोर्घटादितदत्यन्ताभावयोर्निषेधेन न प्रतियोगिनो घटस्यामिथ्यात्वं ध्वंसविरोधितया द्वयोरप्यत्यन्ताभावप्रतियोगिन आरोपितत्वाविशेषात् । कपालादावारोपितघटतदत्यन्ताभावयोर्युगपन्निषेधात् प्राक् युगपदेव कपालादौ घटादितदत्यन्ताभावयोरारोपात्मिका प्रसक्तिः प्रदर्शनीया, सा च प्रसक्तिर्नकपालादौ घटतदत्यन्ताभावयोर्निश्चयरूपा सम्भवति, अतः संशयरूपा प्रसक्तिर्वाच्या, तथा च घटध्वंसवति कपाले "कपालं घटवन्नवे"ति संशयोत्तरम् "अस्मिन् कपाले घटः तदत्यन्ताभावश्च नास्ती"ति निषेधेऽपि यथा न घटस्यामिथ्यात्वं न वा बाध्यनिषेधापेक्षया प्रतियोगिनो घटस्याधिकसत्ताकत्वं तथा प्रकृतेऽपि । "यथा ध्वंससमये प्रागभावप्रतियोगिनः उभयोरपि निषेधः" इति वाक्यस्य यथाश्रुतार्थस्तु ध्वंससमये घटध्वंससमये कपाले घटप्रागभावतत्प्रतियोगिनोः घटप्रागभावस्य घटस्य च घटध्वंसवति कपाले आरोपितस्य बाधेऽपि यथा बाधितघटप्रागभावप्रतियोगिनो घटस्य नामिथ्यात्वं न वा प्रागभावापेक्षया प्रतियोगिनो घटस्याधिकसत्ताकत्वमेवं प्रकृतेऽपीति । एवं प्रागभावपदस्य यथाश्रुतार्थो न संगच्छते । पूर्वपक्षिणा **न च निषेधस्य निषेधे प्रतियोगिसत्तापत्तिः** इति वाक्येनात्यन्ताभावात्मकनिषेधस्य निषेधे प्रतियोगिसत्त्वमुक्तं प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य प्रक्रान्तत्वात् । अत्यन्ताभावरूपस्य त्रैकालिकनिषेधस्य निषेधे प्रतियोगिनः सत्तापत्तिः प्रदर्शिता पूर्वपक्षिणा । सिद्धान्तिना उक्तापत्तिपरिहाराय घटध्वंससमये कपाले घटप्रागभावरूपनिषेधस्य निषेधेन प्रतियोगिनो घटस्यापि असत्त्वं प्रदर्शितम् । तथा चात्यन्ताभावस्य निषेधमादाय प्रदर्शिताया आपत्तेः प्रागभावनिषेधमादाय प्रतिसमाधानं सिद्धान्तिनोऽसङ्गतं स्यात् । अतः प्रागभावपदस्य यथाश्रुतेऽर्थे मूलकृतां तात्पर्यमेव नास्ति । तात्पर्यविषयीभूतोऽर्थस्तु प्रागेव प्रदर्शितः ॥ ८ ॥

एवं च प्रकृतेऽपि निषेधबाधकेन प्रतियोगिनः प्रपञ्चस्य तन्निषेधस्य[२] च बाधनात् तन्निषेधस्य[२] बाध्यत्वेऽपि न प्रपञ्चस्य तात्त्विकत्वम्, उभयोरपि

१—निषेधस्य निषेधे प्रतियोगिनः सत्त्वापत्तिरिति प्रतिकूलतर्कस्य मूलभूतां व्याप्तिं दृष्टान्तोपष्टम्भेन व्यभिचारयन् दार्ष्टान्तिकेऽपि योजयति—एवं चेत्यादि। यद् यद्धर्मिकस्वाभावाभावसाधकप्रमाणकं तत् स्वाभावाधिकसत्ताकमिति व्याप्तेर्घटध्वंससमयेऽभावप्रतियोगिनोरुभयोर्निषेधे यथा व्युभिचारस्तथा प्रकृतेऽपि विमतं—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि दृश्यत्वादिति न्यायप्रयोगेऽपि, निषेधबाधकेन निषेधस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य, बाधकेनोक्तनिषेधस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वानुमापकदृश्यत्वहेतुना अनुमानप्रमाणेन, प्रतियोगिनः प्रपञ्चस्य—मिथ्यात्वघटकत्रैकालिकनिषेधस्य प्रतियोगिनः प्रपञ्चस्य निषेधस्य च मिथ्यात्वघटकत्रैकालिकनिषेधस्य च, बाधनात् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वानुमितिरूपमिथ्यात्वनिश्चयात्, दृश्यत्वादिरूपेण यथा प्रपञ्चस्य मिथ्यात्वं तथैव प्रपञ्चनिषेधस्यापि न निषेधस्य बाध्यत्वेऽपि—निषेधस्य, मिथ्यात्वघटकत्रैकालिकनिषेधस्य, बाध्यत्वेऽपि दृश्यत्वानुमानेन मिथ्यात्वनिश्चयेऽपि प्रपञ्चस्य मिथ्यात्वघटकनिषेधप्रतियोगिनः प्रपञ्चस्य न तात्त्विकत्वम्, न बाध्यनिषेधापेक्षया प्रतियोगिनः प्रपञ्चस्याधिकसत्ताकत्वम्। तथा च प्रतिकूलतर्कमूलभूताया व्याप्तेर्दार्ष्टान्तिकेऽपि व्यभिचार एव। प्रपञ्चाभावस्याभावसाधकप्रमाणस्य प्रकृतमिथ्यात्वानुमानस्य सम्भवेऽपि न प्रतियोगिनः प्रपञ्चस्य स्वाभावापेक्षयाऽधिकसत्ताकत्वम्। मिथ्यात्वानुमानेन प्रतियोग्यभावयोर्द्वयोरेव मिथ्यात्वनिश्चयात्। उभयोरपि मिथ्यात्वघटकनिषेधस्य तत्प्रतियोगिनः प्रपञ्चस्य च व्यावहारिकत्वेन एकनिषेधनिषेध्यत्वादुभयत्र निषेध्यतावच्छेदकरूपस्य दृश्यत्वादेः सत्त्वादुभयोरपि निषेधकं मानं

२ तन्निषेधस्य स्थले निषेधस्येति पाठ उपलभ्यते; स न साधुः।

निषेध्यतावच्छेदकस्य दृश्यत्वादेः तुल्यत्वात् ॥ ९ ॥

न च अतात्त्विकनिषेधबोधकत्वे श्रुतेरप्रामाण्यापत्तिः, ब्रह्मभिन्नं प्रपञ्चतन्निषेधादिकमतात्त्विकम्[३] . अतात्त्विकत्वेन

---

व्यावहारिकपक्षकं प्रकृतानुमानमेव । यद्यत्र मिथ्यात्वघटकनिषेधमात्रं निषिध्येत तदा प्रतियोगिनो निषेधापेक्षया अधिकसत्ताकत्वं स्यात्, अत्र तु उभयोरपि निषेधान्न प्रतियोगिनो निषेधापेक्षया अधिकसत्ताकत्वमिति भावः ॥ ९ ॥

१०—त्रैकालिकनिषेधस्य व्यावहारिकत्वाङ्गीकारे "नेह नानास्ति किञ्चने"त्याद्यद्वैतश्रुतीनां ब्रह्मप्रमाबाधितार्थप्रतिपादकत्वेनातत्त्वावेदकत्वं यत् पूर्वपक्षिणा आशंकितम् (द्वितीयवाक्यम्) तदनूद्य समाधत्ते—न चातात्त्विकनिषेधबोधकत्व इत्यादि । अतात्त्विकनिषेधबोधकत्वे—प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य व्यावहारिकत्वेन ब्रह्मप्रमाबाध्यत्वादतात्त्विकत्वम्, तमतात्त्विकं निषेधं तात्पर्येण प्रतिपादयन्तीनां श्रुतीनामतात्त्विकनिषेधबोधकत्वं तस्मिन् सति, श्रुतेरप्रामाण्यापत्तिः—"नेह नानास्ति किञ्चन", एकमेवाद्वितीयमि"त्याद्यद्वैतप्रतिपादकश्रुतेः अपारमार्थिकनिषेधबोधकत्वेनाप्रामाण्यापत्तिर्बाधितार्थबोधकत्वादिति पूर्वपक्षिणामभिप्रायो न च युक्तः । अत्रायं पूर्वपक्षिणामाशयः—तद्वति तद्बोधकत्वं नात्र प्रामाण्यमभिप्रेतम् । किन्तु तत्त्वावेदकत्वलक्षणं प्रामाण्यमभिप्रेतम् । तत्त्वं च कालत्रयाबाध्यं वस्तु । कालत्रयाबाध्यवस्तुबोधकत्वमेव प्रामाण्यम् । प्रतिपन्नोपाधौ त्रैकालिकनिषेधस्य ब्रह्मप्रमाबाध्यत्वेन कालत्रयाबाध्यत्वाभावात् तादृशनिषेधबोधिकायाः श्रुतेरप्रामाण्यमेव ।

समाधत्ते—ब्रह्मभिन्नमिति । ब्रह्मणो भिन्नं प्रपञ्चतन्निषेधादिकं ब्रह्मभिन्नत्वेनैव अतात्त्विकं मिथ्या तच्च अतात्त्विकत्वेन मिथ्यात्वेन

---

३. प्रपञ्चतन्निषेधादिकमतात्त्विकमित्यत्र प्रपञ्चनिषेधादिमतात्त्विकमिति पाठोऽवलोक्यते, तन्न समीचीनः ।

बोधयन्त्याः श्रुतेरप्रामाण्यासम्भवात् ॥ १० ॥

---

बोधयन्त्याः प्रतिपादयन्त्याः श्रुतेः नेह नानेत्यादिश्रुतेः अप्रामाण्यासम्भवात्—तद्वति तत् प्रकारकबोधजनकत्वरूपव्यावहारिकप्रामाण्यसम्भवेन तदभाववति तत्प्रकारकबोधजनकत्वरूपव्यवहारिकाप्रामाण्यासम्भवादित्यर्थः, "नेह नानास्ति किञ्चने"त्यादिश्रुतेः न अप्रामाण्यापत्तिः, यत उक्तश्रुत्या ब्रह्मभिन्नवस्तुमात्रस्य प्रपञ्चस्य तन्निषेधस्य च ब्रह्मभिन्नत्वेनैवातात्त्विकत्वं मिथ्यात्वम्, मिथ्यात्वविशिष्टस्य प्रपञ्चतन्निषेधादेः अतात्त्विकत्वेन मिथ्यात्वेन बोधयन्त्याः श्रुतेरप्रामाण्यासम्भवात्। तथाच तद्वति तद्बोधकत्वमेव प्रामाण्यम्, मिथ्यात्ववति प्रपञ्चतन्निषेधादौ मिथ्यात्वबोधने श्रुतेर्व्यावहारिकाप्रामाण्यासम्भवात्। यद्यपि "नेह नाने"त्यादि श्रुतेर्ब्रह्मप्रमाबाध्यनिषेधप्रतिपादकतया कालत्रयाबाध्यवस्तुप्रतिपादकत्वलक्षणं तत्त्वावेदकत्वरूपं प्रामाण्यं नास्ति, तथापि मिथ्यात्ववति प्रपञ्चतन्निषेधादौ मिथ्यात्वप्रतिपादनात् व्यावहारिकं प्रामाण्यमुक्तश्रुतीनामिष्टमेव। अत्र प्रपञ्चतन्निषेधादीत्यत्र आदिपदेन निषेधस्य निषेधो ग्राह्यः।

"नेह नानास्ती"त्यादिश्रुतीनां तत्त्वावेदकत्वलक्षणं प्रामाण्यं नास्ति, तत्त्वावेदकत्वलक्षणप्रामाण्यं तु अखण्डार्थप्रतिपादकश्रुतीनां "तत्त्वमसि", "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादीनामेव। तादृशाखण्डार्थस्य कालत्रयेऽपि बाधासम्भवात्।

ननु "नेह नानास्ति किञ्चने"ति श्रुत्या "इह"—पदार्थ. दृश्यतादात्म्यापन्ने ब्रह्मणि "किञ्चन नाना" दृश्यमात्रं प्रपञ्चतदभावरूपं "नास्ति" इत्यर्थप्रतिपादनेन ब्रह्मणि प्रपञ्चतदभावप्रतीतावपि कथं प्रपञ्चतदभावयोरतात्त्विकत्वरूपं मिथ्यात्वम्। नहि यत्र कुत्रचित् निषेधप्रतिपादनमात्रेण निषेध्यस्य मिथ्यात्वमायाति। मामूत् "भूतले घटो नास्ती"ति प्रतीत्या घटस्य मिथ्यात्वम्। तदेव प्रपञ्चतदभावयोर्मिथ्यात्वं लभ्येत यदा स्वसमानाधिकरणस्वान्यूनसत्ताकात्यन्ताभावप्रतियोगित्वं तयोः प्रतिपाद्येत। न च

"नेहे"त्यादि श्रुतिस्तथा प्रतिपादयति तदर्थकपदाभावादिति चेत् ? न। "नेह नानास्ति" इति श्रुत्यन्तर्गत-इह-पदस्य दृश्यतादात्म्यापन्न-ब्रह्मार्थकतया तत्र प्रपञ्चतदभावरूपदृश्यमात्रस्यात्यन्ताभावे प्रतिपादिते दृश्याभावे दृश्यसामानाधिकरण्यस्य श्रुत्यक्षरादेव लाभात् मिथ्यात्वघटकं स्वसामानाधिकरण्यं शाब्दमेव। मिथ्यात्वघटकाभावे प्रतियोग्यन्यूनसत्ताकत्वलाभस्तु अनुमानप्रमाणात्। तथाहि—श्रुतिप्रतिपाद्यस्यात्यन्ताभावस्याप्रातिभासिकत्वे सिद्धे प्रतियोग्यपेक्षया अभावस्यान्यूनसत्ताकत्वमपि सिद्धं भवति। व्यावहारिकस्य द्वैतमात्रस्याप्रातिभासिकात्यन्ताभावप्रतियोगित्वे सिद्धे स्वान्यूनसत्ताकात्यन्ताभावप्रतियोगित्वं सिद्धं भवति। श्रुतिप्रतिपादितस्यात्यन्ताभावस्याप्रातिभासिकत्वं चेत्थमनुमेयम्—द्वैतवति ब्रह्मणि, द्वैताभावः अप्रातिभासिकः, श्रुतिप्रमितत्वात्, यागादिधर्मवत् ब्रह्मवच्च।

न च स्वाप्नरथादीनामपि "अथ रथान् रथयोगान् पथः सृजते" इत्यादिश्रुतिप्रमितानां प्रातिभासिकत्वेन हेतोर्व्यभिचार इति वाच्यम्। "न तत्र रथा न रथयोगा न पन्थानो भवन्ती"ति श्रुत्या स्वाप्नरथादीनां व्यावहारकालबाध्यत्वबोधनात् तेषां प्रातिभासिकत्वात्। तथाच श्रुति-प्रमितत्वरूपहेतोः श्रुतिजन्यव्यवहारकालाबाध्यविषयकज्ञानविषयत्वार्थकत्वात् न क्वापि व्यभिचार इति भावः। एवं च ब्रह्मभिन्नप्रपञ्चतन्निषेधादीनां स्वसमानाधिकरणस्वान्यूनसत्ताकात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वेनैव बोधजनकत्वं "नेह नाने"ति श्रुतेरुपपन्नमेव। न च "नेह नाने"ति श्रुत्या द्वैतवति ब्रह्मणि द्वैताभावबोधने आहार्यत्वात् बोधस्यास्य न शाब्दत्वम्, प्रत्यक्षस्यैवाहार्यत्वादिति वाच्यम्। "अत्यन्तबाधितेऽप्यर्थे ज्ञानं शब्दः करोति हि" इति खण्डनकारोक्तरीत्या शाब्दबोधस्याहार्यत्वं स्वीक्रियते। आक्रोशादिवाक्ये शाब्दस्याहार्यत्वं सर्वानुभवसिद्धम्। तथा च शाब्दस्याहार्यत्वोपगमेऽपि न कोऽपि दोषः, यथा च "नेह नाने"ति श्रुतिजन्यशाब्दबोधस्य नाहार्यत्वं तथा वर्णितमधस्तात् ॥ १० ॥

ननु एतन्निषेधप्रतियोगित्वं किं स्वरूपेण, उतासद्विलक्षण-

---

११—प्रपञ्चस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्व-प्रतिपादिकायाः "नेह नानास्ति किञ्चने"ति श्रुतेः, प्रतिपन्नोपाधौ त्रैकालिक-निषेधप्रतियोगित्वसाधकानुमानस्य च निषेधप्रतियोगितावच्छेदकरूपा-सम्भवेन बाधः स्यात्। प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य स्वरूपेण पारमार्थिकत्वेन वाऽवच्छेदासम्भवात् सदिति प्रतीयमानस्य शुक्तिरजतादेः स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वाभावेन दृष्टान्ते साध्य-वैकल्यमपि स्यात्—इत्याशयवान् पूर्वपक्षी शङ्कते—ननु एतन्निषेधप्रति-योगित्वमिति। "नेह नानास्ति किञ्चने"ति श्रुत्या प्रतिपादितो यो निषेधः, यो वा मिथ्यात्वलक्षणघटकः प्रतिपन्नोपाधौ त्रैकालिकनिषेधः, तस्य "एतस्य" निषेधस्य प्रतियोगित्वं केन रूपेण अवच्छिद्यते ? किं स्वरूपेण समानाधिकरणधर्मेण, उत व्यधिकरणेन पारमार्थिकत्वेन ? स्वरूपावच्छिन्न-प्रतियोगिताकत्रैकालिकनिषेधः पारमार्थिकत्वावच्छिन्नप्रतियोगिताकत्रैकालिक-निषेधो वा "नेहे"त्यादि श्रुत्या एतद्द्वितीयमिथ्यात्वानुमानेन वा बोध्यते। उक्तद्विविधस्यापि धर्मस्य प्रतियोगितावच्छेदकत्वासम्भव इति प्रदर्शयितुं पृच्छति—किं स्वरूपेणेति। स्वरूपेण स्वस्य त्रैकालिकनिषेधप्रतियोगिनः, यद्रूपं साधारणमसाधारणं वा तेन। अत्रावच्छिन्नत्वं तृतीयार्थः, तच्च प्रतियोगित्वेऽन्वेति। तथा च प्रपञ्चस्य त्रैकालिकनिषेधे प्रतियोगी प्रपञ्चः स्वपदग्राह्यः। तस्य साधारणं रूपं दृश्यत्वादिसाधारणं रूपमाकाशत्वादि, तेन दृश्यत्वादिरूपेण प्रपञ्चस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रति-योगित्वाङ्गीकारे प्रपञ्चस्यालीकत्वापत्तिः। तदुक्तं माध्वैः—

"नासीदस्ति भविष्यच्च तद्दिवि ज्ञानमेयता।
यद्विबाधस्तदाऽसत्त्वं तेनैवाङ्गीकृतं पुनः" ॥ इति

अलीकविलक्षणं स्वरूपं प्रपञ्चस्योपमृदितं मा भवतु, इत्यत पक्षान्तर-माह—उतेति। उत अथवा, सर्वथा अबाध्यत्वरूपपारमार्थिकत्वरूपेण

स्वरूपानुपमर्देन पारमार्थिकत्वाकारेण ? ॥ ११ ॥

---

उक्तनिषेधप्रतियोगिनो यत् स्वीयं रूपं दृश्यत्वादि, तत् दृश्यवृत्तिप्रतियोगिता-समानाधिकरणम्, पारमार्थिकत्वं तु दृश्यमात्रावृत्तितया दृश्यवृत्तिप्रतियोगि-ताया असमानाधिकरणम्। सर्वथा अबाध्यत्वरूपपारमार्थिकत्वस्य दृश्यमात्रा-वृत्तित्वात्। मिथ्यात्वघटकत्रैकालिकनिषेधप्रतियोगित्वं प्रतियोगिताया असमानाधिकरणेन पारमार्थिकत्वेन वा अवच्छिद्यत इति द्वितीयविकल्प-स्यार्थः। प्रतियोगितासमानाधिकरणं दृश्यत्वादिरूपमवच्छेदकं परित्यज्य प्रतियोगिताव्यधिकरणस्य पारमार्थिकत्वस्यावच्छेदकत्वकल्पने बीजमाह— असद्विलक्षणस्वरूपानुपमर्देनेति। दृश्यत्वावच्छिन्नप्रतियोगिताकप्रपञ्चा-भावस्य दृश्यत्वविशिष्टप्रपञ्चनिरूपिताधिकरणत्वेन सह विरोधात् दृश्यत्व-विशिष्टप्रपञ्चाधिकरणे ब्रह्मणि दृश्यत्वावच्छिन्नप्रतियोगिताकाभावो न सम्भवति। तथा च तादृशविरोध एवोपमर्दः; तादृशोपमर्दपरिहार एवानुप-मर्दः, तदर्थं फले हेतौ तृतीया। तादृशविरोधपरिहारार्थमिति भावः। यदि तु दृश्यत्वधर्मविशिष्टप्रपञ्चस्याधिकरणत्वं कुत्रापि न स्यात्, तर्हि तादृशप्रपञ्चस्य देशकालसम्बन्धिशशविषाणादितुल्यता एव स्यात्। देशकालसम्बन्धितया प्रतीयमानस्य प्रपञ्चस्य देशकालासम्बन्धिशशविषाणा-दितुल्यताया असम्भवात्। अतः शशविषाणाद्यलीकविलक्षणस्य देशकाल-सम्बन्धिनः प्रपञ्चस्यालीकविलक्षणं स्वरूपमनुमानेनोपमृदितं न स्यादित्य-सद्विलक्षणस्वरूपानुपमर्दाय प्रतियोगितासमानाधिरणं रूपं विहाय प्रतियोगि-ताव्यधिकरणमेव पारमार्थिकत्वमवच्छेदकत्वेनादृतम्। माध्वमते तु व्यधि-करणधर्मावच्छिन्नप्रतियोगिताकाभावानङ्गीकारात् पारमार्थिकत्वाकारेण शुक्ति-रजतं नास्तीत्यस्य तन्मते शुक्तिरजते पारमार्थिकत्वं नास्तीत्यत्र पर्यवसानं बोध्यम्। तथा च शुक्तिरजतादिदृश्यमलीकमिति नायातम्। किन्तु तत् पारमार्थिकं न भवतीति भावः। अत आह—पारमार्थिकत्वाकारेण। तथा चोक्तनिषेधीयप्रतियोगिता दृश्यत्वादिरूपेण वा अवच्छिद्यताम्, सर्वथा अबाध्यत्वरूपेण पारमार्थिकत्वेन वा अवच्छिद्यतामिति विकल्पार्थः ॥११॥

नाद्यः,        श्रुत्यादिसिद्धोत्पत्तिकस्यार्थक्रियासमर्थस्याविद्यो-

---

१२—एवं प्रतियोगितावच्छेदकं विकल्प्य प्रथमे कल्पे दोषमाह पूर्वपक्षी—नाद्य इति। प्रतियोगिस्वरूपं यद्दृश्यत्वादि तदवच्छिन्नप्रतियोगिताकत्रैकालिकनिषेध एतन्मिथ्यात्वघटको न समीचीन इत्यर्थः। कुतो न समीचीन इत्याह—श्रुत्यादिसिद्धोत्पत्तिकस्येत्यादि। वियदादिव्यावहारिकप्रपञ्चस्य प्रातिभासिकशुक्तिरजतादेश्च स्वरूपगसद्विलक्षणमेवेति प्रदर्शनाय श्रुत्यादिसिद्धोत्पत्तिकत्वमर्थक्रियासमर्थत्वमविद्योपादानकत्वं तत्त्वज्ञाननाश्यत्वञ्चेति विशेषणचतुष्टयं पक्षदृष्टान्तसाधारणमुपात्तम्। स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वे प्रपञ्चस्यासद्वैलक्षण्यं न स्यादिति भावः। न्यायामृतटीकाकृद्भिः श्रीनिवासाचार्यैस्तु पक्षीकृतवियदादेरेवासद्वैलक्षण्योपपादनायाद्यं विशेषणद्वयम्, अन्त्यं विशेषणद्वयं तु पक्षीकृतवियदादेर्दृष्टान्तीकृतशुक्तिरजतादेश्चासद्विलक्षणस्वरूपोपपादनायेति व्याख्यातम्, तच्चिन्त्यम्। वियदादिकं यद्यसद्विलक्षणस्वरूपं न स्यात्, तर्हि नोत्पद्येत। न च निःस्वरूपस्य शशविषाणादेरुत्पत्तिः सम्भवति। न चेष्टापत्तिः, श्रुत्या सावयवत्वादिलिङ्गकानुमानेन च तेषामुत्पत्तिमत्त्वावधारणात् वियदादिव्यावहारिकप्रपञ्चोत्पत्तेः प्रातिभासिकशुक्तिरजताद्युत्पत्तेश्च श्रुत्यादिसिद्धत्वात्। आदिपदेन प्रदर्शितानुमानप्रमाणस्यापि ग्रहणम्। "सत्यञ्चानृतञ्च सत्यमभवत्" इति श्रुतौ सत्यपदस्य व्यावहारिकप्रपञ्चपरतया अनृतपदस्य च प्रातिभासिकशुक्तिरजतपरतया व्यावहारिकवियदादिप्रपञ्चस्य प्रातिभासिकशुक्तिरजतादेश्च श्रुतिसिद्धोत्पत्तिकत्वात् शशविषाणाद्यसद्वैलक्षण्यमभ्युपेयम्। तथा च न स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वम्। एवं सावयवत्वेन हेतुनापि प्रपञ्चस्योत्पत्तिमत्त्वमनुमेयमिति भावः। अर्थक्रियासमर्थस्येति—कार्यकारित्वरूपार्थक्रियाकारित्वमपि वियदादिव्यावहारिकप्रपञ्चस्य शुक्तिरजतादिप्रातिभासिकस्य च शशविषाणादिवत् निःस्वरूपत्वे न स्यात्। प्रवृत्त्यादिप्रयोजकत्वरूपकार्यकारित्वादपि व्यावहारिकप्रातिभासिकप्रपञ्चयोरसद्वैलक्षण्यमङ्गीकर्तव्यमिति भावः। असतः शशविषाणादेः कार्यकारित्वाभावात्; अतः

पादानकस्य तत्त्वज्ञाननाश्यस्य च वियदादेः रूप्यादेश्च धीकाल-
विद्यमानेनासद्विलक्षणस्वरूपेण त्रैकालिकनिषेधायोगात् ॥१२॥

---

स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं न सम्भवतीति निष्कर्षः। मिथ्यात्वानु-
माने पक्षीकृतस्य वियदादिव्यावहारिकप्रपञ्चस्य दृष्टान्तीकृतस्य च प्रातिभासि-
कशुक्तिरजतादेः प्रकारान्तरेणासद्विलक्षणस्वरूपोपपादनायाह—अविद्यो-
पादानकस्येति। व्यावहारिकप्रातिभासिकयोरसत्स्वरूपत्वे सोपादानत्वा-
योगात्। न हि भवति शशविषाणं सोपादानम्। उक्तद्विविधप्रपञ्चस्य
परिणाम्युपादानतया अविद्यायाः "अजामेकां लोहितशुक्लकृष्णामि"ति श्रुतौ
प्रतिपादनात्। तत्त्वज्ञाननाश्यस्येति—व्यावहारिकस्य वियदादिप्रपञ्चस्य
प्रातिभासिकस्य शुक्तिरजतादेश्च अज्ञानकल्पितत्वेनाधिष्ठानतत्त्वज्ञाननाश्यत्वं यत्
सिद्धान्तिभिरङ्गीकृतं तदपि न स्यात्, यदि व्यावहारिकवियदादि प्रातिभासिकं
वा शुक्तिरजतादि शशविषाणादिवदसत् स्यात्। न ह्यकल्पितानामसतां
शशविषाणादीनां तत्त्वज्ञानेन नाशः सम्भवति। तथा च तत्त्वज्ञाननाश्यत्वा-
दपि व्यावहारिकस्य प्रातिभासिकस्य च प्रपञ्चस्यासद्वैलक्षण्यमेष्टव्यम्। एवं
पक्षीकृतव्यावहारिकप्रपञ्चस्य वियदादेः दृष्टान्तीकृतस्य रूप्यादेः शुक्ति-
रजतादेः, असद्विलक्षणस्वरूपेण त्रैकालिकनिषेधायोगात्—प्रपञ्चस्य
स्वावृत्तिपारमार्थिकत्वादिना कथञ्चित् निषेधसम्भवेऽप्यसद्विलक्षणस्य दृश्य-
स्याकाशादेर्यत् स्वरूपं धर्मो दृश्यत्वादिः तेन—असद्विलक्षणस्वरूपेण।
अत्रावच्छिन्नप्रतियोगिताकत्वं तृतीयार्थः। तच्च त्रैकालिकनिषेधान्वयि।
तथाचासद्विलक्षणस्वरूपदृश्यत्वाद्यवच्छिन्नप्रतियोगिताको यस्त्रैकालिकनिषेध-
स्तस्य अयोगाद् असम्भवात्। दृश्यत्वेन रूपेण तत्र तेषां त्रैकालिकनिषेधा-
सम्भवात्। दृश्यत्वावच्छिन्नप्रतियोगिताकप्रपञ्चाभावस्य दृश्यत्वविशिष्ट-
प्रपञ्चनिरूपिताधिकरणत्वेन सह विरोधात्। सम्भवे वा दृश्यस्य सर्वदेश-
कालासम्बन्धित्वापत्त्या असद्वैलक्षण्यं न स्यादिति भावः।

न च दृश्यतादात्म्यापन्ने ब्रह्मणि दृश्यानवच्छेदककालावच्छेदेन दृश्य-
त्वावच्छिन्नप्रतियोगिताकत्रैकालिकनिषेधः सिध्यन्न प्रपञ्चस्यालीकतामावहति,

नापि द्वितीयः, अबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूप-

---

किन्तु प्रपञ्चस्य कालिकाव्याप्यवृत्तितामादायैव पर्यवस्यति। तथा च कथं "स्वरूपेण त्रैकालिकनिषेधायोगः" इति वाच्यम्। "नेह नाने"ति श्रुत्या तादृशो निषेधः प्रतियोगिप्रसक्त्यवच्छेदकदेशकालावच्छेदेनैव प्रतिपाद्यते। निषेधस्य प्रसक्तिपूर्वकत्वादुद्देश्यविधेयभावमहिम्नापि तथैवागमाच्च। मिथ्यात्वानुमानेनापि यथा सिद्धसाधनतादोषपरिहाराय प्रतियोगिप्रसक्त्यवच्छेदककालावच्छिन्नत्रैकालिकनिषेधो बोध्यते, तथा अग्रे सिद्धसाधनतादोषनिराकरणावसरे वक्ष्यते। तथा च प्रतियोगिप्रसक्त्यवच्छेदककालावच्छिन्नत्रैकालिकनिषेधस्य मिथ्यात्वघटकतया न प्रपञ्चस्य कालिकाव्याप्यवृत्तितापात इति स्वरूपेण त्रैकालिकनिषेधायोगः तदवस्थ एव। तद्रूपावच्छिन्नप्रतियोगिताकाभावस्य तद्रूपविशिष्टनिरूपिताधिकरणत्वेन सह विरोधादिति भावः। दृश्यस्यासद्विलक्षणं स्वरूपं देशकालसम्बन्धित्वरूपमवगमयितुमसद्विलक्षणस्वरूपेणेत्यस्य विशेषणमाह—धीकालविद्यमानेनेति। धीकाले—दृश्यधीकाले, विद्यमानेन—सम्बन्धिना। दृश्यस्यासद्विलक्षणं स्वरूपं दृश्यधीकालसम्बन्धि भवति। धीकालसम्बन्धं विना तस्यासद्वैलक्षण्यं न स्यात्। तथा च कालसम्बन्धितया प्रतीयमाने दृश्ये विशेषणतया प्रतीयमानं यद् स्वरूपं दृश्यत्वादि तदवच्छिन्नप्रतियोगिताकत्रैकालिकनिषेधो न सम्भवति, दृश्यमात्रस्य कालासम्बन्धित्वाङ्गीकारे दृश्यत्वादिरूपेण दृश्यविषयककालसम्बन्धिन्याः प्रतीतेर्विरोधात्। तथा च धीकालविद्यमानव्यावहारिकप्रपञ्चे, वियदादावसद्विलक्षणस्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वसाधने कालसम्बन्धिन्या प्रतीत्या बाधः स्यात्, धीकालविद्यमाने प्रातिभासिके शुक्तिरजतादौ दृष्टान्ते च साध्यवैकल्यमिति भावः ॥ १२ ॥

१२—व्यावहारिकप्रपञ्चे स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्य प्रतिपादने—प्रतियोगिनः प्रपञ्चस्य सर्वदेशकालासम्बन्धितया अत्यन्तासत्त्वं दुर्वारमित्युक्तम्। इदानीं प्रपञ्चस्यात्यन्तासत्त्वपरिहाराय यदि पारमार्थिकत्वेन

मिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयात्, पारमार्थिकत्वस्यापि स्व-

---

त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं साध्यते तदा दुरुत्तरोऽन्योन्याश्रयो अनवस्था च स्यात्—इत्याशयवानाह पूर्वपक्षी—नापि द्वितीय इत्यादि। न द्वितीयः—न द्वितीयः कल्पः। उक्तमिथ्यात्वघटकनिषेधप्रतियोगित्वं पारमार्थिकत्वेनावच्छिद्यते इति कल्पो न समीचीन इत्यर्थः। पारमार्थिकत्वस्य मिथ्यात्वघटकत्वे ज्ञप्तावन्योन्याश्रयात्। तथाहि दर्शयति—अबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयात्। अबाध्यत्वरूपं हि पारमार्थिकत्वम्। एतादृशपारमार्थिकत्वज्ञाने सति पारमार्थिकत्वघटितं बाध्यत्वरूपमिथ्यात्वज्ञानं, बाध्यत्वरूपमिथ्यात्वज्ञाने च सति तन्निरूप्यस्याबाध्यत्वरूपपारमार्थिकत्वस्य ज्ञानमित्यन्योन्याश्रयः। तथाच पारमार्थिकत्वाकारेण निषेधासम्भवात् पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वलक्षणस्यासम्भवः। रूप्यं नास्ति, नासीत्, न भविष्यतीति स्वरूपेणैव रजतस्य निषेधप्रतीतेः। एवं "नेह नानास्ति किञ्चने"ति श्रुत्याच स्वरूपेणैव प्रपञ्चनिषेधप्रतिपादनात् पारमर्थिकत्वाकारेण निषेधप्रतिपादने श्रुत्यनुभवविरोधोऽपि स्यात्। प्रपञ्चस्य पारमर्थिकत्वेन त्रैकालिकनिषेधेऽन्योन्याश्रयदोषमुक्त्वा अलीकत्वापत्तिमनवस्थादोषञ्च दर्शयितुमाह—पारमार्थिकत्वस्यापीति। पूर्वपक्षिमाध्वानां मते तु व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावो नाङ्गीक्रियते। प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वासम्भवात्। "शशीयत्वेन विषाणं नास्ती"त्यादि प्रतीतिस्तु शशीयत्वेन विषाणाभावं नावगाहते, किन्तु विषाणे शशीयत्वाभावमेवावगाहते। "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे" इति न्यायात्। एतन्मतमनुसृत्य पारमार्थिकत्वेन रजतं नास्तीत्यादावपि रजते पारमार्थिकत्वं नास्तीत्येव वक्तव्यम्। तत् पारमार्थिकत्वं बाध्यत्वाभावरूपमबाध्यत्वमेव। बाध्यत्वस्य च व्यावहारिकतया व्यावहारिकबाध्य-

रूपेण निषेधे प्रथमपक्षोक्तदोषापत्तिः, अतस्तस्यापि पारमार्थिकत्वा-

---

त्वनिरूप्यत्वादबाध्यत्वमपि व्यावहारिकम्। अबाध्यत्वरूपपारमार्थिकत्वस्य व्यावहारिकतया व्यावहारिकपक्षकमिथ्यात्वानुमाने पक्षकोटावनुप्रवेशात् तस्यापि पारमार्थिकत्वस्य त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वमङ्गीकरणीयम्। पारमार्थिकत्वस्य निर्धर्मके ब्रह्मण्यसम्भावितया ब्रह्मभिन्नत्वेनापारमार्थिकत्वमेव; अतस्तस्यापि मिथ्यात्वमनुमेयम्। तन्निषेधप्रतियोगित्वमपि यदि स्वरूपेणावच्छिद्येत, तदा व्यावहारिकस्य यथा स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वेऽत्यन्तासत्त्वापातः, तथा पारमार्थिकत्वस्याप्यत्यन्तासत्त्वापत्तिरेव स्यात्। पारमार्थिकत्वस्य यदि स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं तर्हि स्वरूपेण निषेधे प्रथमपक्षोक्तदोषापत्तिः, पारमार्थिकत्वस्यात्यन्तासत्त्वापत्तिरित्यर्थः। प्रतिपन्नोपाधौ स्वरूपेण त्रैकालिकनिषेधे यथा रजतादेरलीकत्वमापद्येत, तथा अत्रापीति भावः। शुक्तिरजतवत् तत्पारमार्थिकत्वस्यापि अपरोक्षप्रतीत्यन्यथानुपपत्त्या धीकाले वर्तमानतया स्वरूपतः तन्निषेधायोगात्, "एतन्निषेधप्रतियोगित्वं" किं स्वरूपेणेति वाक्येन प्रथमः पक्षो दर्शितः, "नाद्यः" इत्यादि ग्रन्थेन तत्रालीकत्वापत्तिरूपदोषोऽपि दर्शितः पारमार्थिकत्वस्य स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वे पारमार्थिकत्वस्यालीकत्वापत्तिरिति समुदितार्थः। यदि तु पारमार्थिकत्ववृत्तित्रैकालिकनिषेधीयप्रतियोगिता पारमार्थिकत्वेनावच्छिद्येत, तर्हि तस्यापि पारमार्थिकत्वस्य व्यावहारिकतया तन्निष्ठत्रैकालिकनिषेधप्रतियोगितापि यदि पारमार्थिकत्वेनावच्छिद्येत, तस्यापि व्यावहारिकतया पूर्ववदेव स्यात्, तर्हि अनवस्था स्यात्। पारमार्थिकत्वस्य पारमार्थिकत्वेन निषेधे अनवस्था। रूप्यगतपारमार्थिकत्वस्यापि स्वरूपतो निषेधायोगात्, शुक्तिरजतगतपारमार्थिकत्वस्याप्यपरोक्षप्रतीयमानत्वेन तत्र विषयसत्त्वस्यावश्यकतया तस्यापि पुनः पारमार्थिकत्वाकारेण निषेधो वक्तव्य इत्यनवस्था। पारमार्थिकत्वस्य स्वरूपेण निषेधे अत्यन्तासत्त्वापत्तिभिया पारमार्थिकत्वेन पारमार्थिकत्वस्य निषेधो वक्तव्यः।

कारेण निषेधेऽनवस्था स्यादिति चेत् ? ॥ १३ ॥

मैवम्, स्वरूपेणैव त्रैकालिकनिषेधप्रतियोगित्वस्य प्रपञ्चे शुक्तिरूप्ये चाङ्गीकारात् ॥ १४ ॥ तथा हि शुक्तौ रजतभ्रमा-

---

तथाचानवस्थेत्याह पूर्वपक्षी—अतस्तस्यापि पारमार्थिकत्वाकारेण निषेधेऽनवस्था स्यादिति । तस्यापि—पारमार्थिकत्वस्यापि । पारमर्थिकत्वस्यापि प्रदर्शितरीत्या व्यावहारिकतया मिथ्यात्वानुमाने पक्षकोटावनुप्रवेश इति भावः । तथाच द्वितीयमिथ्यात्वलक्षणनिराकरणं कारिकया संगृह्णन्नाह पूर्वपक्षी—

"स्वरूपेण त्रिकालस्थनिषेधो नास्ति ते मते ।
रूप्यादेस्तात्त्विकत्वेन निषेधस्त्वात्मनोऽपि च"॥

इति । स्वरूपेण त्रैकालिकनिषेधे, अत्यन्तासत्त्वापत्तिः, पारमार्थिकत्वेन निषेधेऽन्योन्याश्रयोऽनवस्था च । आत्मनोऽपि निर्धर्मकतया पारमार्थिकत्वेन त्रैकालिकनिषेधप्रतियोगित्वसम्भवात् मिथ्यात्वलक्षणस्य तत्रातिव्याप्तिः । इति द्वितीयपूर्वपक्षसंक्षेपः ॥१३॥

१४—त्रैकालिकनिषेधप्रतियोगित्वं किं स्वरूपेण उत पारमार्थिकत्वेनेति विकल्प्य पूर्वपक्षिणा कल्पद्वयेऽपि दूषणमुक्तम् । इदानीं सिद्धान्ती स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वकल्पं समाधातुमाह—मैवमिति । स्वरूपावच्छिन्नप्रतियोगिताकत्रैकालिकनिषेधो मिथ्यात्वघटकः, दृष्टान्तीकृते शुक्तिरजते स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्यैवानुभवसिद्धत्वात् , दृष्टान्तानुसारेण पक्षीकृतप्रपञ्चेऽपि स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वमेवाङ्गीकरणीयम् । स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वाङ्गीकारेऽपि यथा व्यावहारिकप्रातिभासिकप्रपञ्चयोर्नालीकत्वापत्तिः तथा अग्रे [द्वाविंशतितमे वाक्ये] स्फुटीभविष्यति ॥ १४ ॥

१५—दृष्टान्तीकृतशुक्तिरजतस्य स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वे अनुभवः श्रुतिश्च प्रमाणमिति दर्शयितुमाह—"तथा ही"ति । "रूप्यं नास्ति,

नन्तरमधिष्ठानतत्त्वसाक्षात्कारे 'रूप्यं नास्ति, नासीत्, न भविष्यति—इति स्वरूपेणेव, "नेह नाने"ति श्रुत्या च प्रपञ्चस्य स्वरूपेणैव निषेधप्रतीतेः ॥ १५ ॥

न च तत्र लौकिकपरमार्थरजतमेव स्वरूपेण निषेधप्रतियोगीति वाच्यम्, भ्रमबाधयोर्वैयधिकरण्यापत्तेः,

---

नासीत्, न भविष्यति" इति निषेधीयप्रतियोगिता स्वरूपेणैवावच्छिद्यते। नञर्थे अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य व्युत्पत्तिबललभ्यत्वात् अभिलापजन्यप्रतीतितुल्यत्वाच्च अभिलाप्यमानप्रतीतेरभिलप्यमानप्रात्यक्षिक-बाधज्ञानस्यापि स्वरूपावच्छिन्नप्रतियोगिताकनिषेधविषयकत्वलाभः। अन्यथा पारमार्थिकत्वेन रूप्यं नास्तीत्याद्युल्लेखापत्तेः। दृष्टान्तीकृतशुक्तिरजते त्रैकालिकनिषेधीयप्रतियोगिता स्वरूपावच्छिन्ना यथा अनुभवसिद्धा, तथा पक्षीकृतप्रपञ्चेऽपि त्रैकालिकनिषेधीयप्रतियोगिता स्वरूपावच्छिन्नैव, "नेह नानास्ति किञ्चने"ति श्रुत्या प्रतिपाद्यते। दृष्टान्तीकृतशुक्ति-रजतनिष्ठं प्रतियोगित्वं स्वरूपावच्छिन्नमविरुद्धम्। पक्षीकृतव्यावहारिक-प्रपञ्चनिष्ठत्रैकालिकनिषेधप्रतियोगित्वमपि स्वरूपावच्छिन्नं "नेह नानास्ति किञ्चने"ति श्रुतिसिद्धमिति भावः ॥ १५ ॥

१६—दृष्टान्तीकृतशुक्तिरजते त्रैकालिकनिषेधप्रतियोगित्वं स्वरूपा-वच्छिन्नमनुभवसिद्धमेवेति यत् सिद्धान्तिभिरङ्गीकृतं तत्रानुभवान्तरावष्टम्भेन पूर्व-पक्षिशङ्कामनूद्य दूषयति—न च तत्रेत्यादि। तत्र रूप्यं नास्ति नासीत् न भविष्यतीति निषेधे लौकिकपरमार्थरजतमेव परमार्थतया लोकसिद्धं व्यावहारिकमेव रजतं स्वरूपेण निषेधप्रतियोगि—स्वरूपावच्छिन्ननिषे-धप्रतियोगिताकत्रैकालिकनिषेधप्रतियोगि, न त्वनिर्वचनीयं रजतमिति—न वाच्यम् "रूप्यं नास्ती"ति निषेधस्य व्यावहारिकरजतमेव प्रतियोगि, न तु प्रातिभासिकं रजतमिति पूर्वपक्षिणा न वाच्यम्। कुतो न वाच्य-मित्याकांक्षायामाह—भ्रमबाधयोर्वैयधिकरण्यापत्तेः। भ्रमविषयीभूतं प्रातिभासिकं रजतं बाधज्ञानविषयीभूतं च लौकिकपरमार्थरजतं व्यावहारिक-

अप्रसक्तप्रतिषेधापत्तेश्च ॥१६॥

न च तर्हि उत्पत्त्याद्यसम्भवः, न ह्यनिषिद्धस्वरूपत्वम्

---

रजतं वा यदि स्यात्, तर्हि भ्रमबाधयोर्वैयधिकरण्यं स्यात्, भ्रमज्ञानबाधज्ञानयोर्भिन्नविषयत्वादिति भावः। भ्रमबाधयोर्भिन्नविषयत्वे भ्रमविषयीभूतस्याबाध्यत्वेन पारमार्थिकत्वापत्तेः। भ्रमबाधयोर्भिन्नविषयकत्वे अनुभवविरोधोऽपि, इति दर्शयन्नाह—अप्रसक्तप्रतिषेधापत्तेश्चेति। शुक्तौ व्यावहारिकरजतस्य प्रसक्तेरभावेनाप्रसक्तस्य व्यावहारिकस्य रजतस्य शुक्तौ निषेधे अनुभवविरोधश्च स्यात। अप्रसक्तस्य निषेधायोगादिति भावः। मिथ्यात्वघटकत्रैकालिकनिषेधप्रतियोगित्वं यदि प्रातिभासिके रजते न सिध्येत्, तर्हि अस्य द्वितीयमिथ्यात्वलक्षणस्यासम्भवदोषोऽपि स्यादित्यपि बोध्यम्। अतो न लौकिकपरमार्थरजतमेव स्वरूपेण मिथ्यात्वघटकत्रैकालिकनिषेधप्रतियोगि, अपि तु शुक्तौ रजतं नास्तीत्यनुभवे स्वरूपेण प्रातिभासिकं शुक्तिरजतमेव निषेधप्रतियोगीति भावः ॥ १६ ॥

१७—शुक्तिरजतं यदि शुक्तौ स्वरूपेण त्रैकालिकनिषेधप्रतियोगि स्यात, तर्हि शुक्तौ प्रातिभासिकं शुक्तिरजतं नोत्पद्येत; यद् यत्र येन रूपेण त्रैकालिकनिषेधप्रतियोगि तत्तत्र तेन रूपेण नोत्पद्येत। यथा सर्वत्र शशविषाणादि। एवं प्रपञ्चस्यापि यदि ब्रह्मणि स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वम्, तर्हि प्रपञ्चो न स्वरूपेण ब्रह्मण्युत्पद्येत। उत्पद्यते च प्रातिभासिकं रजतं शुक्तौ, प्रपञ्चस्य ब्रह्मणीति सिद्धान्तिभिरङ्गीकृतत्वात् कथं रजतस्य प्रपञ्चस्य च स्वरूपेण त्रैकालिकनिषेधोऽङ्गीक्रियते ?—इति पूर्वपक्षिणामाशङ्कामनूद्य निषेधति—न च तर्हीत्यादि। तर्हि—"नेह नानास्ति किञ्चने" ति श्रुत्या ब्रह्मणि प्रपञ्चस्य, "शुक्तौ रजतं नास्ति, नासीत्, न भविष्यती"-त्यनुभवेन शुक्तौ रजतस्य च स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वे सिद्धे, प्रपञ्चस्य ब्रह्मणि शुक्तिरजतस्य च शुक्तावुत्पत्त्याद्यसम्भवः—उत्पत्तिनाश-

उत्पत्त्यादिमत्त्वे तन्त्रम्; परैरनिषिद्धस्वरूपत्वेनाङ्गीकृतस्य वियदादेरुत्पत्त्याद्यनङ्गीकारात्, किन्तु वस्तुस्वभावादिकमन्यदेव

---

योरसम्भवः। अत्र आदिपदात् नाशपरिग्रहः। ब्रह्मणि प्रपञ्चो नोत्पद्येत, नापि नश्येत् एवं शुक्तौ रजतमिति भावः। तथा च यद् यत्रोत्पत्तिमत् तत्तत्रा-निषिद्धरूपमिति व्याप्तिबलात् सिद्धान्तिभिरपि शुक्तावुत्पत्तिमतः रजतस्य तत्रा-निषिद्धस्वरूपत्वं ब्रह्मणि वा प्रपञ्चस्यानिषिद्धस्वरूपत्वमङ्गीकरणीयमिति पूर्वपक्षिशङ्कायामाह—न हीति। अनिषिद्धस्वरूपत्वमुत्पत्त्यादिमत्त्वे न तन्त्रम्—अनिषिद्धस्वरूपत्वमुत्पत्त्यादिमत्त्वसमनियतं न भवतीत्यर्थः। समनियतत्वं च व्याप्यत्वे सति व्यापकत्वम्। अनिषिद्धस्वरूपत्वे उत्पत्त्यादि-मत्त्वव्यापकत्वं व्याप्यत्वं च नास्ति। अनिषिद्धस्वरूपत्वे उत्पत्त्यादिमत्त्व-व्यापकत्वमभिप्रेत्यैव पूर्वपक्षिणा निषिद्धस्वरूपत्वेनोत्पत्त्याद्यसम्भव आपादितः, व्यापकाभावेन व्याप्याभावात्। अनिषिद्धस्वरूपत्वमुत्पत्त्यादिमतः समनियतं कुतो न भवति? इत्यत आह—परैरिति। परैः—माध्वैः; माध्वमते-ऽनिषिद्धस्वरूपत्वं वियदादेर्वर्त्तते, अथ च तस्योत्पत्तिमत्त्वं नाङ्गीक्रियते। तथा च तेषां मतेऽनिषिद्धस्वरूपत्वोत्पत्त्यादिमत्त्वयोः समनियतत्वभङ्गः। अनिषिद्धस्वरूपत्वस्य व्यापकत्वमादायोत्पत्त्याद्यसम्भव उक्तः। अनिषिद्ध-स्वरूपत्वस्य व्याप्यत्वमादाय वियदादेरुत्पत्त्याद्यनङ्गीकारादित्यनेन व्यभिचार-प्रदर्शनम्। अनिषिद्धस्वरूपत्वं नोत्पत्त्यादिमत्त्वव्याप्यम्। वियदादौ व्यभि-चारादिति भावः। अनिषिद्धस्वरूपत्वे उत्पत्त्यादिमत्त्वव्यापकतानिरासाय आह—किन्त्वित्यादि। अनिषिद्धस्वरूपत्वं नोत्पत्त्यादिमत्त्वव्यापकमपि, किन्तु अन्यदनिषिद्धस्वरूपत्वात् भिन्नं वस्तुस्वभावादिकमनादिपट्-कभिन्नदृश्यत्वमेवोत्पत्त्यादिमत्त्वप्रयोजकं समव्यापकम्। अनादिपट्कं च—

"जीव ईशो विशुद्धा चित् विभागश्च तयोर्द्वयोः।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥" इति।

---

१. अनिषिद्धस्वरूपत्वेन—अनिषेध्यरूपत्वेनेति पाठान्तरम्।

किञ्चित् प्रयोजकं वक्तव्यम्; तस्य मयापि कल्पितस्य स्वीकारात् ॥१७॥

---

यद् यदुत्पत्त्यादियोगि तदनिषिद्धस्वरूपमिति न, किन्तु यद् यदुत्पत्त्यादियोगि तदनादिभिन्नदृश्यम्। अनादिभिन्नदृश्यत्वमेवोपत्त्यादिमत्त्वे प्रयोजकम्। वस्तुस्वभावादिकमित्यत्र "आदि" पदात् वियदाद्युत्पत्तिप्रतिपादकस्य "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुतिप्रमाणस्य संग्रहः। तथा च ब्रह्मजन्यत्वप्रतिपादकश्रुतिप्रमाणवत्त्वमप्युत्पत्त्यादिमत्त्वे प्रयोजकम्। माध्वोक्तमनिषिद्धस्वरूपत्वं तु नोत्पत्त्यादिमत्त्वस्य व्याप्यं नापि व्यापकम्। उत्पत्त्यादिमत्त्वव्याप्यत्वं यथा अनिषिद्धस्वरूपत्वे नास्ति, तथा दर्शितं परैरनिषिद्धस्वरूपत्वे इत्यत्र। एवं व्यापकत्वमपि नास्ति। "अथ रथान् रथयोगान् पथः सृजते" इति श्रुतिसिद्धस्वाप्नसृष्टरथादेरुत्पत्त्यादिमत्त्वेऽपि—"न तत्र रथाः" इत्यादि श्रुत्या अनुभवेन च निषिद्धस्वरूपत्वस्यैव ग्रहान्नोत्पत्त्यादिमत्त्वव्यापकमनिषिद्धस्वरूपत्वम्, एवं प्रातिभासिकस्य व्यावहारिकस्य च प्रपञ्चस्योत्पत्त्यादिमत्त्वेऽपि "शुक्तौ रजतं नास्ती" त्यनुभवेन प्रातिभासिकस्य "नेह नानास्ति किञ्चने"त्यादि श्रुत्या व्यावहारिकस्य च स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं व्यवस्थापितमधस्ताद् भ्रमबाधयोर्वैयधिकरण्यापत्तेः" [१६] इत्यत्र। तथा च प्रातिभासिकस्य व्यावहारिकस्य चोत्पत्त्यादिमत्त्वेऽपि नानिषिद्धस्वरूपत्वम्, किन्तु निषिद्धस्वरूपत्वमेव। एवं च सत्यनिषिद्धस्वरूपत्वं नोत्पत्त्यादिमत्त्वे व्याप्यं नापि व्यापकम्। किन्तु अनादिभिन्नदृश्यत्वमेवोत्पत्त्यादिमत्त्वसमव्यापकम्। तस्य उत्पत्त्यादिमत्त्वसमव्यापकस्यानादिभिन्नदृश्यत्वादेः कल्पितस्य - कल्पिते शुक्तिरजतादौ सप्तम्यर्थे षष्ठी; मयाऽपि सिद्धान्तिनापि स्वीकाराद् अङ्गीकारात् न शुक्तिरूप्यादेरुत्पत्त्याद्यसम्भव इति शेषः। तथा च प्रतिपन्नोपाधौ स्वरूपेण त्रैकालिकनिषेधप्रतियोगिनोऽपि प्रातिभासिकस्य व्यावहारिकस्य च प्रपञ्चस्यानिषिद्धस्वरूपत्वाभावेनोत्पत्त्याद्यसम्भवदोषः प्रत्युक्तः। उत्पत्त्यादिमत्त्वप्रयोजकस्य वस्तुस्वभावादेस्तत्र सत्त्वात् ॥१७॥

न च "त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं रूप्यम्, पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगि"—इति

---

१८—पूर्वाचार्यवचसामाशयमविद्वान् दृष्टान्ते साध्यवैकल्यं शङ्कते—न च त्रैकालिकनिषेधमित्यादि। प्रतिपन्नोपाधौ स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वस्य साधने न केवलं मिथ्याभूतस्यात्यन्तासत्त्वापातः, किन्तु अद्वैताचार्याणां मतानुसारेण दृष्टान्ते शुक्तिरजते साध्यवैकल्यमपि स्यात्। त्वया तु स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वमेव मिथ्यात्वं साध्यते। भवत्पूर्वाचार्यैस्तु शुक्तिरजतस्य मिथ्यात्वं प्रदर्शयद्भिः शुक्तिरजतस्यात्यन्तासत्त्वापत्तिभिया स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं न शुक्तिरजतेऽङ्गीक्रियते, किन्तु आपणादिस्थिते व्यावहारिकरजते। आपणादिस्थितं व्यावहारिकं रजतमेव तत्र स्वरूपेण त्रैकालिकनिषेधप्रतियोगि, न शुक्तिरजतं प्रातिभासिकम्। तथा च न शुक्तिरजतस्यात्यन्तासत्त्वापत्तिः। यतः तत्र स्वरूपेण निषिध्यते। यदि स्वप्रसक्तप्रतिषेधापत्त्या आपणस्थरजतं नोक्तनिषेधप्रतियोगीति विभावयसि, तर्हि अस्तु शुक्तिरजतमेवोक्तत्रैकालिकनिषेधप्रतियोगि; किन्तु न स्वरूपेण अत्यन्तासत्त्वापातादपितु पारमार्थिकत्वेन। तथाच न स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वं प्रातिभासिकशुक्तिरजतादेः। एवं च तादृशसाध्यानुमितौ शुक्तिरजतदृष्टान्तः साध्यविकलः। स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्य वा प्रातिभासिके रजतेऽङ्गीकारे त्वदीयपूर्वाचार्यमतहानिरपि स्यात्। तथाहि—मिथ्यात्वघटकत्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं रूप्यं स्वरूपेण व्यावहारिकं रजतं मिथ्यात्वघटकत्रैकालिकनिषेधप्रतियोगीत्यद्वैतविद्याचार्याणां मतं स्वरूपेण प्रातिभासिकरजतस्यैव मिथ्यात्वघटकनिषेधप्रतियोगित्वाङ्गीकारे हीयेत। अथवा पारमार्थिकत्वाकारेण प्रातिभासिकं रजतं मिथ्यात्वघटकत्रैकालिकनिषेधप्रतियोगीति आचार्याणां मतमपि हीयेत। स्वरूपेणैव प्रातिभासिकरजतस्य निषेधप्रतियोगित्वाङ्गीकारादिति पूर्वपक्षिणा न च

मतहानिः स्यादिति वाच्यम्; अस्याचार्यवचसः पारमार्थिक-लौकिकरजततादात्म्येन प्रतीतं प्रातिभासिकमेव रजतं प्रति-

---

वाच्यम्। कथं? तदेवाह—अस्याचार्यवचस इति। प्रदर्शिताचार्य-वचसो नायमाशयः। किन्तु 'अस्याचार्यवचसोऽयमभिप्रायः—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं विवरणाचार्यसम्मतम्। तैस्तु बाधकज्ञाननिरूपणावसरे "बाधकज्ञाने रजतं प्रतिपन्नोपाधावभावप्रतियोगि-तया अवभासत इति प्रत्यक्षमि"त्युक्तम्। तस्मिन् विवरणवाक्ये प्रतिपन्न-पदस्य स्वप्रकारकधीविशेष्यपरतया स्वप्रकारकधीविशेष्यनिष्ठात्यन्ताभाव-प्रतियोगित्वेन रजतमवभासते इत्यर्थो लभ्यते। तथा च विवरणवाक्यस्थ-रजतपदं प्रातिभासिकरजतपरमेव। प्रातीतिकस्यैव रजतस्य पुरोवर्तिनि प्रकारतया भ्रमे भानात्। तथाच प्रातिभासिकरजतमेव मिथ्यात्वघटकनिषेध-प्रतियोगीति विवरणाचार्यमतनिष्कर्षः। विवरणाचार्यमतानुसारेणैव पूर्वोक्ता-चार्यवाक्यं व्याख्येयम्। तथा "च त्रैकालिकनिषेधं प्रत्यापणस्थं रौप्यं प्रतियोगी"त्यत्र आपणस्थपदमापणस्थरजततादात्म्येन प्रतीतरजतपरम्। आपणस्थरजतमेव पारमार्थिकलौकिकरजतम्। एवं च आपणस्थमापणस्थ-रजततादात्म्येन प्रतीतं रूप्यं प्रातिभासिकं रजतं निषेधप्रतियोगीत्यभिप्रायः। तथाच सति व्यावहारिकरजततादात्म्येन प्रतीतं प्रातिभासिकं रजतं स्वरूपेण त्रैकालिकनिषेधप्रतियोगीति पूर्वाचार्यवचसामभिप्राये न सन्दर्भविरोधः। न च व्यावहारिकप्रातिभासिकरजतसाधारणस्य एकस्यैव रजतत्वस्य स्वीकारेण प्रातिभासिकेऽपि रजते रजतत्वप्रकारकप्रतीतेरुपपत्त्या प्रातिभासिकरजत-गोचरप्रवृत्तिसिद्धौ व्यावहारिकरजतार्थिपुरुषप्रवृत्तये प्रातीतिके रजते व्यावहारिकरजतस्य तादात्म्यारोपस्वीकारो व्यर्थ इति वाच्यम्। व्यावहारिक-प्रातिभासिकसाधारणमेकं रजतत्वं न स्वीक्रियते। अन्यथा प्रातिभासिकादपि रजताद् व्यावहारिकरजतकार्यापत्तेः। यदपि सत्तात्रैविध्यनिरूपणप्रस्तावे मूलकृद्भिरेव व्यावहारिकप्रातिभासिकसाधारणमेकं रजतत्वमङ्गीकृतं तद

योगीत्यर्थः॥ १८ ॥

तच्च स्वरूपेण पारमार्थिकत्वेन वेति अनास्थायां वा

---

प्रातीतिके रजते व्यावहारिकरजततादात्म्यारोपस्यानङ्गीकर्तृमतमाश्रित्य प्रौढिवादमात्रेणैव बोध्यम् ॥१८॥

१९—तच्च लौकिकरजततादात्म्येन प्रतीतप्रातिभासिकरजतनिष्ठत्रैकालिकनिषेधप्रतियोगित्वं च स्वरूपेण पारमार्थिकत्वेन वा ? अत्रावच्छिन्नत्वं तृतीयार्थः, तच्च प्रतियोगित्वेऽन्वेति। तथा च स्वरूपावच्छिन्नं पारमार्थिकत्वावच्छिन्नं वा, प्रातिभासिके रजते स्वरूपावच्छिन्नत्रैकालिकनिषेधप्रतियोगित्वं, पारमार्थिकत्वावच्छिन्नत्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्यात्वं कल्पद्वयस्यापि निर्दुष्टत्वेनैकतरे आग्रहाभावादनास्थासूचनाय वा शब्दः। तथा च स्वरूपावच्छिन्नप्रतियोगिताकत्रैकालिकनिषेधप्रतियोगित्वं पारमार्थिकत्वावच्छिन्नप्रतियोगिताकत्रैकालिकनिषेधप्रतियोगित्वम्— इत्युभयरूपमपि मिथ्यात्वं साधु।

ननु पक्षद्वयस्य निर्दुष्टत्वे एवान्यतरत्रानाग्रहरूपा अनास्था स्यात्, प्रकृते तु पारमार्थिकत्वेन निषेधप्रतियोगित्वस्य मिथ्यात्वेऽन्योन्याश्रयानवस्थादीनां जागरुकत्वात् स्वरूपेण निषेधप्रतियोगित्वस्य मिथ्यात्वे च प्रतियोगिनोऽत्यन्तासत्तापातात् कथं पक्षद्वयस्य निर्दुष्टता ? तथा च पक्षद्वयस्यैव दुष्टत्वात् स्वरूपेण पारमार्थिकत्वेन वा उक्तनिषेधप्रतियोगित्वमेव मिथ्यात्वमित्युपसंहारः कथं संगच्छते—इति वाच्यम् ? स्वरूपेण निषेधप्रतियोगित्वे च यथा प्रतियोगिनो नात्यन्तासत्तापातः, तथाऽग्रे वर्णयिष्यते। पारमार्थिकत्वेन निषेधप्रतियोगित्वे तु नान्योन्याश्रयादीनां सम्भवः। तथाहि—पारमार्थिकत्वं यदि प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वस्याभावरूपं स्यात्, तर्हि मिथ्यात्वघटितत्वेनान्योन्याश्रयोऽपि स्यात्। किन्तु पारमार्थिकत्वं नोक्तरूपम्। तत्तु ज्ञानानिवर्त्यमात्रविशेष्यकधीरूपं विशेष्यतासम्बन्धेन तादृशधीरूपावच्छेदकावच्छिन्नप्रतियोगित्वस्य मिथ्यात्वघटकतया क्व

शब्दः ॥ १९ ॥ एतावदुक्तश्च पुरोवर्तितादात्म्येनैव रजतं प्रतीयत इति मतनिरासार्थं लौकिकपरमार्थरजततादात्म्येनापि प्रतीयत इति प्रतिपादयितुं च ॥२०॥

---

अन्योन्याश्रयदूषणावकाशः ? तादृशपारमार्थिकत्वस्यैतन्मिथ्यात्वाघटितत्वात्। ज्ञानानिवर्त्यत्वमात्रं तु न पारमार्थिकत्वं तुच्छे शशविषाणादावपि ज्ञानानिवर्त्यत्वस्य सत्त्वेन शशविषाणादिकं 'पारमार्थिकमित्यबाधितव्यवहारापत्तिः स्यात्। अतः ज्ञानानिवर्त्यमात्रविशेष्यकधीरेवपारमार्थिकत्वमुक्तम्। तादृशधीस्तु सिद्धान्तिमते ब्रह्ममात्रविषयिणी। अलीकविषयिणी तादृशधीस्तु न सम्भवति। अलीकस्य ज्ञानविषयत्वानङ्गीकारात्। नाप्यनवस्था। ज्ञानानिवर्त्यमात्रविशेष्यकधीरूपेण स्वस्वेतरसर्वदृश्यानां निषेधप्रतियोगित्वसम्भवात्। तादृशधीरूपपारमार्थिकत्वस्य दृश्यत्वेन पारमार्थिकत्वेन सर्वदृश्यप्रतियोगिकनिषेधे पारमार्थिकत्वस्यापि निषेधप्रतियोगित्वात् नानवस्थादोषलेशोऽपीति भावः। पारमार्थिकत्वेन दृश्यमात्रनिषेधे यदि पारमार्थिकत्वमनिषिद्धं स्यात्, तदा अनवस्थादोषः स्यादपि, प्रकृते तदभावात् नानवस्थादूषणाशङ्का। इति विभावनीयम् ॥१९॥

२०—ननु "त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं रूप्यं प्रतियोगी" त्याचार्यवचसि आपणस्थपदस्य स्वारसिकमर्थं परित्यज्यापणस्थरजततादात्म्येन प्रतीतपरत्वपर्यन्तव्याख्याने कोऽभिप्रायः? इत्यत आह—एतावदुक्तिश्चेति। पूर्वाचार्यवचस एतादृशार्थग्रहणे फलं दर्शयति—पुरोवर्तितादात्म्येनैव रजतं प्रतीयत इति मतनिरासार्थम्, लौकिकपरमार्थरजततादात्म्येनापि प्रतीयत इति प्रतिपादयितुं च। पुरोवर्तितादात्म्येनापि रजतं प्रतीयते, अन्यथा रजतार्थिनः पुरोवर्तिवस्त्वभिमुखी प्रवृत्तिर्न स्यात्, नतु पुरोवर्तितादात्म्येनैव प्रतीयते। व्यावहारिकरजततादात्म्येनाप्रतीतौ, पुरोवर्तितादात्म्यमात्रेण प्रतीतौ रजतार्थिनः पुरोवर्तिनि प्रवृत्तिरेव न स्यात्। तथा च रजतार्थिप्रवृत्तिसम्पादनाय पुरोवर्तितादात्म्येनैव रजतं प्रतीयत इति मतं

तदुक्तं तत्त्वप्रदीपिकायां—"तस्मात् लौकिकपरमार्थरजतमेव नेदं रजतमिति निषेधप्रतियोगी'ति पूर्वाचार्याणां वाचो युक्तिरपि

---

निरस्यते, व्यावहारिकरजततादात्म्येनापि प्रतीयत इत्यपि प्रतिपाद्यते। तथाचेदंकारास्पदे पुरोवर्तिवस्तुनि रजतार्थिप्रवृत्तिसम्पादनाय पुरोवर्तिवस्तुतादात्म्येन व्यावहारिकरजततादात्म्येन च प्रातिभासिकं रजतं प्रतीयत इति वक्तव्यम्। तदर्थमेव पूर्वाचार्यवचसि आपणस्थपदस्य तादृशोऽर्थोऽङ्गीकृतः। आपणस्थपदस्य यथाश्रुतार्थकत्वे भ्रमबाधयोर्वैयधिकरण्यापत्तिः स्यात्। भ्रमविषयीभूतं प्रातिभासिकं रजतम्, बाध्यते च व्यावहारिकमित्यप्रसक्तप्रतिषेधापत्तिः स्यात्, अतस्तत्परिहाराय एवापणस्थपदमापणस्थरजततादात्म्येन प्रतीत [ति] परं व्याख्येयम् ॥२०॥

२१—एतादृशव्याख्यायां प्राचीनसम्मतिमाह—"तदुक्तं तत्त्वप्रदीपिकायामि"त्यादि। चित्सुखाचार्यैरिति शेषः। तैस्तु भ्रमबाधयोर्वैयधिकरण्यमाशङ्क्योक्तम्—"न देशान्तरादौ प्रमितस्य लौकिकपरमार्थरजतस्य त्रैकालिकनिषेधप्रतियोगित्वमाभासविषयत्वात् तस्य, अन्यथा जगति रजतमेव न स्यात्"। ननु एवं सति विवरणाचार्यवचनविरोधः स्यात, विवरणाचार्यैस्तु "तस्मात् लौकिकपरमार्थरजतमेव नेदं रजतमिति निषेधप्रतियोगीत्युक्तम्"। तथा च प्रातिभासिकरजतस्य एतन्निषेधप्रतियोगित्वे विवरणाचार्यग्रन्थविरोधः। एतद्विरोधपरिजिहीर्षव आहुः चित्सुखाचार्याः—"पूर्वाचार्याणां वाचोयुक्तिरपि पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनात् लौकिकपरमार्थरजतात्मत्वेनापरोक्षतया प्रतीतस्य कालत्रयेऽपि लौकिकपरमार्थरजतमिदं न भवतीति, निषेधप्रतियोगित्वमङ्गीकृत्य नेतव्या"। अस्यार्थः पूर्वाचार्याणां विवरणकृतां लौकिकपरमार्थरजतमेव नेदं रजतमिति निषेधप्रतियोगीति वाचोयुक्तिः, इदम्—प्रातीतिकरजतम्; लौकिकपरमार्थरजतं न भवतीति भेदात्मकनिषेधस्य प्रतियोगितामङ्गीकृत्य नेतव्या।

ननु प्रातिभासिके रजते लौकिकपरमार्थरजततादात्म्यप्रसक्तावेव भेदात्मकनिषेधप्रतियोगित्वं लौकिकपरमार्थरजते वक्तुं युक्तम्, प्रसक्ति-

पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनात् लौकिकपरमार्थरजतात्मत्वेनापरोक्षतया प्रतीतस्य कालत्रयेऽपि लौकिकपरमार्थरजतमिदं न भवतीति निषेधप्रतियोगितामङ्गीकृत्य नेतव्या" [८०] इति॥२१॥

---

पूर्वकत्वात् निषेधस्य। प्रातिभासिके रजते लौकिकपरमार्थरजततादात्म्यप्रसक्तेरभावेन भ्रमबाधयोर्वैयधिकरण्यप्रसङ्गाच्च, कथं व्यावहारिकरजतस्य भेदात्मकनिषेधप्रतियोगित्वमङ्गीकरणीयम्; इत्यत आह—**पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनात् लौकिकपरमार्थरजतात्मत्वेनापरोक्षतया प्रतीतस्येति।** **पुरोवर्तिनि**—प्रातिभासिकरजते **रजतार्थिनः**—सद्रजतप्राप्तिः मम भवत्विति इच्छावतः, **लौकिकपरमार्थरजतात्मत्वेन** सद्रजतमिदमेवंरूपेण, तथा च प्रातिभासिके रजते लौकिकपरमार्थरजततादात्म्यं प्रसक्तमेव। अन्यथा लौकिकपरमार्थरजतार्थिनः प्रातिभासिके रजते प्रवृत्तेरनुपपत्तेः।

न चैवं सति अन्यथाख्यात्यापत्तिः, देशान्तरस्थरजतस्यैव भेदात्मकनिषेधप्रतियोगित्वादिति वाच्यम्। लौकिकपरमार्थरजततादात्म्यसंसर्गस्य प्रातिभासिकरजतवदेव तत्कालोत्पन्नतया मिथ्यात्वेनान्यथाख्यात्यादिभ्यः भेदात्। तादात्म्यसंसर्गिनः प्रातीतिकरजतस्यापि तत्कालोत्पन्नतया मिथ्यात्वेनान्यथाख्यात्यादिभ्योऽतितरां भिन्नत्वाच्च॥ २१॥

२२—ननु "नेदं रजतमि"ति प्रात्यक्षिकबाधस्य प्रातिभासिके रजते लौकिकपरमार्थरजतप्रतियोगिकभेदविषयकत्वमिति चित्सुखाचार्याणां व्याख्यानं न समीचीनम्; यतः पञ्चपादिकायां यत् "नेदं रजतमिति प्रत्यक्षबाधोऽपि रजतस्य मायामयत्वं सूचयती"त्युक्तम्, तद्विवरणे "प्रतिपन्नोपाधावभावप्रतियोगित्वमेव मिथ्यात्वम्, 'तच्च बाधकज्ञाने रजतं प्रतिपन्नोपाधावभावप्रतियोगितया अवभासत इति प्रत्यक्षमि"ति व्याख्यातम्। तथा च "नेदं रजतमि"तिबाधस्यात्यन्ताभावविषयकत्वेनैव विवरणाचार्यैरुक्तत्वात् तस्य प्रात्यक्षिकबाधज्ञानस्य भेदविषयकत्वव्याख्याने विवरणविरोध एव स्यादिति।

अथमाशयः—एकविभक्त्यन्तपदोपस्थापिते धर्मिणि प्रतियोगिनि च नञः अन्योन्याभावबोधकत्वनियमस्य व्युत्पत्ति-बलसिद्धत्वात् "घटः पटो न भवती" ति वाक्यवत् "इदं रजतं न भवती" ति वाक्यस्यान्योन्याभावबोधकत्वे स्थितेऽभिलापजन्य-

---

तद्विरोधं परिहरन्नाह मूलकारः—अयमाशय इति। "नेदं रजतमि"ति प्रात्यक्षिकबाधज्ञानस्य पञ्चपादिकाप्रतिपादितस्य भेदविषय-कत्वेऽपि रजतस्यार्थिकं मिथ्यात्वं सम्भवतीत्याह—एकविभक्त्यन्तपदो-पस्थापिते इत्यादि। धर्मिणि—निषेधस्यानुयोगिनि, प्रतियोगिनि—निषेध्ये, एकविभक्त्यन्तपदोपस्थापिते प्रथमात्वद्वितीयात्वाद्यन्यतम-रूपेणैकजातीयविभक्त्यन्तपदधर्मिकवृत्तिज्ञानजन्यज्ञानविषये, साजात्यमत्र विभक्तिविभाजकप्रथमात्वादिना बोध्यम्। पदपदं प्रातिपदिकपरम्। नञ अन्योन्याभावबोधकत्वनियमस्य व्युत्पत्तिबलसिद्धत्वादिति—समानविभक्तिकनामद्वययुक्तनञा भेदबोधकत्वव्युत्पत्तेरिति भावः। व्युत्पत्ति-श्चात्र कार्यकारणभावः। अयमाशयः—यत्र च विशेषणविशेष्ययोरभेदेनान्वयः व्युत्पन्नः, तत्रैवान्योन्याभावो नञा बोध्यते। यथा "अयं घटो नीलः" इत्यत्र "नायं घटो नीलः" इति नञ अन्योन्याभावबोधकत्वम्। नामार्थयोरभेदबोधे हि विशेषणविशेष्यवाचकपदयोः समानविभक्तिकत्वं विरुद्धविभक्तिराहित्यं वा तन्त्रम्। समानविभक्तिकत्वं चैकजातीय-विभक्त्यन्तत्वम्। एकजातीयत्वं च प्रथमात्वद्वितीयात्वाद्यन्यतमरूपेण, न त्वानुपूर्व्या। अतः "वेदाः प्रमाणमि"त्यादावप्यभेदान्वयबोधः।

एतद्व्युत्पत्त्यनुसारेण प्रयोगमाह—घटः पटो न भवतीति वाक्यवदिति। एतद् व्युत्पत्त्यनुसारेण 'घटः पटो न भवती'ति वाक्यतः "पटप्रतियोगिकभेदवान् घटः" इति हि बोधो जायते, प्रकृतेऽपि इदं रजतं न भवतीति वाक्यस्यान्योन्याभावबोधकत्वे स्थिते लौकिक-पारमार्थिकरजतप्रतियोगिकभेदवदिदं प्रातिभासिकं रजतमिति शाब्दबोधजन-

प्रतीतितुल्यत्वादभिलप्यमानप्रतीतेः "नेदं रजतमि"तिवाक्याभिलप्यप्रतीतेरन्योन्याभावविषयत्वमेव ॥ २२ ॥

तथा च इदंशब्दनिर्दिष्टे पुरोवर्तिप्रातीतिकरजते रजतशब्दनिर्दिष्ट-

---

कत्वस्य व्युत्पत्तिबललभ्यत्वे निर्द्धारितेऽपि प्रत्यक्षज्ञाने शब्दस्वारस्येनार्थकथनं कथमुपयुज्यते, न हि भवति शब्दवृत्त्यनुसारिप्रत्यक्षमिति शङ्कां निराकुर्वन्नाह—अभिलापजन्येति । **अभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेः**—अभिलापो वाक्यम्, अत्र तु नञ्पदयुक्तं "नेदं रजतमि"ति वाक्यमभिलापः । तादृशवाक्यजन्या प्रतीतिस्तु अभिलापजन्यप्रतीतिः । तत्तुल्यत्वमभिलप्यमानप्रतीतेः । तुल्यत्वमत्र समानविषयकत्वम् । अभिलप्यमानप्रतीतिश्च "नेदं रजतमि"ति प्रात्यक्षिकबाधज्ञानम् । तादृशप्रात्यक्षिकबाधज्ञानवान् पुरुषः परपुरुषे स्वनिष्ठज्ञानसमानाकारज्ञानान्तरसम्पादनाय "नेदं रजतमि"ति वाक्यमभिलपति । तादृशाभिलापजन्यो यादृशो बोधो जायते अभिलप्यमानस्य तादृशप्रात्यक्षिकज्ञानस्यापि तादृश एवाकार इति निश्चीयते । एवं च "नेदं रजतमि"त्यभिलापजन्यप्रतीतेर्भेदविषयकत्वेनाभिलप्यमानस्य "नेदं रजतमि"ति प्रात्यक्षिकबाधज्ञानस्यापि भेदविषयकत्वमेव । एतेन प्रत्यक्षज्ञाने शब्दस्वारस्येनार्थकथनमयुक्तमिति निरस्तम् । अभिलापजन्यप्रतीतितुल्यत्वादभिलप्यमानप्रतीतेः । **तथा च नेदं रजतमिति वाक्याभिलप्यप्रतीतेरन्योन्याभावविषयत्वमेव**—"नेदं रजतमि"ति वाक्याभिलप्या प्रतीतिः "नेदं रजतमि"ति प्रात्यक्षिकबाधज्ञानम्, तस्यापि भेदविषयकत्वं सिद्धम् । एतावता प्रबन्धेन पञ्चपादिकोक्तः "नेदं रजतमि"ति प्रात्यक्षिकबाधो भेदरूप एवेति आयातम् ॥२२॥

२३—यदि तु पञ्चपादिकाप्रदर्शितं बाधज्ञानं लौकिकपरमार्थरजतभेदविषयकमेव, तर्हि कथं प्रातिभासिकस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपंमिथ्यात्वमायातम् ? न हि तादृशभेदानुयोगित्वमात्रेण मिथ्यात्वम् । मिथ्यात्वस्यालाभे वा कथमुक्तं पञ्चपादिकाकृद्भिः—'नेदं रजतमिति

व्यावहारिकरजतान्योन्याभावप्रतीतेरार्थिकं मिथ्यात्वम्, "नात्र

बाधोऽपि रजतस्य मायामयत्वं सूचयति" इति, एवं मनसि विभाव्यार्थिकं मिथ्यात्वं प्रदर्शयितुमाह मूलकारः तथाचेति। प्रात्यक्षिकबाधाभिलापवाक्यघटकेनेदं शब्देन पुरोवर्तिप्रातीतिकरजते उपस्थापिते तद्वाक्यघटकरजतशब्दनिर्दिष्टस्य व्यावहारिकरजतस्य नञा अन्योन्याभावप्रतीतेः, पुरोवर्तिप्रातीतिकरजतस्य आर्थिकं मिथ्यात्वम्—प्रातीतिके रजते लौकिकपरमार्थरजतभेदप्रतिपादनद्वारा अर्थात् मिथ्यात्वं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं ज्ञापितमिति भावः। प्रातीतिकं रजतं, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि, व्यावहारिकरजतभिन्नत्वेन प्रतीयमानत्वात्। पुरोवर्तिनि रजते व्यावहारिकरजतभेदः रजतस्य मिथ्यात्वं विना अनुपपद्यमानः पुरोवर्तिरजतस्य मिथ्यात्वं ज्ञापयति। अतएव पञ्चपादिकाकृद्भिस्तादृशबाधो हि रजतस्य मिथ्यात्वं सूचयतीत्युक्तम्; न तु मिथ्यात्वं गृह्णातीति। एतस्य मिथ्यात्वस्य कण्ठोक्तत्वे तु बाधज्ञानस्यात्यन्ताभावविषयत्वमावश्यकम्। अत्यन्ताभावघटितत्वादेतन्मिथ्यात्वस्य।

न च "नेदं रजतमि"ति बाधज्ञानस्य पञ्चपादिकाप्रदर्शितस्य भेदविषयकत्वे स्थिते "तच्च बाधज्ञाने रजतं प्रतिपन्नोपाधावभावप्रतियोगितया अवभासते", इति विवरणाचार्याणां पञ्चपादिकावाक्यव्याख्यानं विरुद्धमेवेति वाच्यम्। प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगितारूपमिथ्यात्वस्योक्तबाधज्ञानाविषयत्वेऽपि बाधज्ञानाधीनत्वमस्त्येवेति प्रतिपादनपरत्वाद् विवरणव्याख्यानस्य। तथाहि "तच्च बाधकज्ञाने रजतं प्रतिपन्नोपाधावभावप्रतियोगितयाऽवभासते," इति विवरणव्याख्यायां बाधकज्ञाने इति सति सप्तम्या निमित्तत्वपर्यवसायितया बाधज्ञानाधीनं रजतस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगितया अवभासनमित्यर्थलाभान्न कश्चिद्विरोधः।

ननु प्रातीतिकरजतस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमेतन्मिथ्यात्वं किं सर्वत्र बाधज्ञानाधीनमार्थिकमेव, न तु कुत्रापि

रजतमि"ति वाक्याभिलप्या तु प्रतीतिरत्यन्ताभावविषया, भिन्नविभक्त्यन्तपदोपस्थापितयोरेव धर्मिप्रतियोगिनोः नञः संसर्गाभावबोधकत्वनियमात् ॥२३॥

सा च पुरोवर्तिप्रतीतरजतस्यैव व्यावहारिकमत्यन्ताभावं

---

बाधज्ञानविषयत्वेन कण्ठोक्तमिति पृच्छायां तादृशमिथ्यात्वस्य कण्ठोक्तत्वं प्रदर्शयितुमाह—नात्र रजतमिति। "नात्र रजतमि"ति वाक्याभिलप्या प्रतीतिः—"नात्र रजतमि"ति वाक्यजन्यशाब्दप्रतीतिसमानविषया प्रत्यक्षात्मकबाधप्रतीतिर्भ्रमबाधकाले सर्वानुभवसिद्धा। "नेदं रजतम्" "नात्र रजतमि"ति द्विविधैव बाधप्रतीतिः सर्वानुभवसिद्धा, न तु "नेदं रजतमि"त्या-कारिकैव। "नात्र रजतमि"ति वाक्याभिलप्यायाः प्रात्यक्षिकबाधप्रतीते-रत्यन्ताभावविषयकत्वं प्रदर्शयितुमाह—भिन्नविभक्त्यन्तपदोपस्थापित-योरेवेति। समानविभक्त्यन्तपदोपस्थापितेऽनुयोगिनि प्रतियोगिनि च नञोऽन्योन्याभावबोधकत्वम् "नेदं रजत"मित्यादिस्थले उक्तम्, असमान-विभक्त्यन्तपदोपस्थापितेऽनुयोगिनि प्रतियोगिनि च नञोऽन्योन्याभावभिन्ना-भावबोधकत्वम्, यथा वायौ रूपं नास्तीत्यत्र ॥२३॥ ३०

२४–उक्तमर्थं निगमयन्नाह—सा चेति। "नात्र रजतमि"ति वाक्या-भिलप्या सर्वानुभवसिद्धा प्रात्यक्षिकबाधप्रतीतिश्च पुरोवर्तिप्रतीतरजतस्यैव—पुरोवर्तिनि इदन्तावच्छिन्नचैतन्ये प्रतीतरजतस्यैव व्यावहारिकप्रातीतिक-रजतसाधारणरजतत्वेन रूपेण प्रतियोगिविधया भासमानरजतसामान्यस्यैव व्यावहारिकमत्यन्ताभावम् रजतत्वेन पारमार्थिकत्वेन वेति शेषः। रजतत्वावच्छिन्नप्रतियोगिताकव्यावहारिकमत्यन्ताभावम्, प्रतियोग्य-पेक्षयाऽन्यूनसत्ताकमत्यन्ताभावम्, पारमार्थिकत्वावच्छिन्नप्रतियोगिताकं व्याव-हारिकं अत्यन्ताभावं प्रतियोग्यपेक्षया अन्यूनसत्ताकं अत्यन्ताभावं वा उक्तप्रतीतिः विषयीकरोति गृह्णातीत्यर्थः। तथा च व्यावहारिकपदस्य तादृशव्याख्यानेन तात्त्विकनिषेधस्य प्रातिभासिकनिषेधस्य वा असंग्रहापत्त्या

विषयीकरोतीति कण्ठोक्तमेव मिथ्यात्वम् ॥२४॥

अतो नापसिद्धान्तो नान्यथाख्यात्यापत्तिर्न वा ग्रन्थविरोध—इत्यनवद्यम् ॥२५॥

नन्वेवमत्यन्तासत्त्वापातः, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रति-

---

नं मूलस्य न्यूनता। स्वाप्नभ्रमस्य स्वाप्नबाधे प्रातीतिकात्यन्ताभावविषयकत्वस्य पूर्वमुक्तत्वात् ॥२४॥

२५—अत इति—यतः लौकिकपरमार्थरजततादात्म्येन प्रतीतं प्रातिभासिकमेव रजतं स्वरूपेणोक्तनिषेधधीविषयः अतो नापसिद्धान्तदोषः। स्वरूपेण लौकिकपरमार्थरजतमेवोक्तनिषेधधीविषय इति तु नास्मदाचार्याणां सिद्धान्तः। तथा च "स्वरूपेण प्रातीतिकरूप्यस्य निषेधः" इति नास्मत्सिद्धान्तहानिः। तादृशसिद्धान्तस्यास्मदाचार्याणामनभिमतत्वात्। नाप्यन्यथाख्यात्यापत्तिः। यदि लौकिकपरमार्थरजतमेव रजतभ्रमविषयः स्यात्, तर्हि देशान्तरस्थरजतस्यैव स्वरूपेण निषेधाङ्गीकारे अन्यथाख्यातिः स्यात्, अस्मत् सिद्धान्ते तु नैवम्। अस्मन्मते तु लौकिकरजततादात्म्येन प्रतीतं प्रातिभासिकमेव रजतमुक्तनिषेधधीविषयः। तादृशरजतस्य शुक्तावुत्पत्त्यभ्युपगमात्। नापि ग्रन्थविरोधः—पञ्चपादिकातद्विवरणग्रन्थयोर्विवरणप्रत्यक्तत्त्वप्रदीपिकयोर्वा न विरोधः; यथा न विरोधस्तथोक्तं प्राक्। इति द्वितीयमिथ्यात्वलक्षणमनवद्यम् ॥२५॥

२६—समाधानमसहमानः पूर्वपक्षी शङ्कते—नन्विति। एवमिति, प्रतिपन्नोपाधौ स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वस्य प्रपञ्चमात्रे साधने इत्यर्थः। अत्यन्तासत्त्वापातः इति, प्रपञ्चमात्रस्यात्यन्तासत्त्वापात इत्यर्थः। प्रतिपन्नोपाधेरन्यत्र स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वेन प्रमितस्य प्रपञ्चमात्रस्य प्रतिपन्नोपाधावपि स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वे सिद्धे सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वरूपमत्यन्तासत्त्वमेव प्रपञ्चमात्रे आपद्येत इति यथाश्रुतोऽर्थः। शशविषाणादिवदत्यन्तासत्त्वापत्तिः स्यादिति यावत्। न च

योगित्वं ह्यन्यत्रासत्त्वेन सम्प्रतिपन्नस्य घटादेः' सर्वत्र त्रैकालिक-

---

प्रपञ्चस्य सर्वत्र स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वेऽपि नात्यन्तासत्त्वापातः, आत्मवदनाश्रितत्वेनाप्युपपत्तेरिति वाच्यम्; प्रपञ्चस्यानाश्रितत्वासम्भवात् प्रपञ्चमात्रस्य कल्पितत्वेन कल्पनाधिष्ठानाश्रितत्वात्, अधिष्ठानाश्रितानां चाधिष्ठानादन्यत्रासत्त्वादधिष्ठानेऽपि चेदसत्त्वम्, तर्हि बलादत्यन्तासत्त्वमेव प्रपञ्चस्य स्यात्। परमाण्वाकाशादीनामपि सिद्धान्तिमते कल्पितत्वेनाधिष्ठानाश्रितत्वादिति भावः। अत्यन्तासत्त्वं नामावच्छिन्नवृत्तिकान्यसर्वदेशवृत्तिकात्यन्ताभावप्रतियोगित्वम्, तच्च शशविषाणादीनाम्। प्रपञ्चमात्रे प्रतिपन्नोपाधौ स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वाङ्गीकारेऽपि न निरुक्तस्यासत्त्वस्यापत्तिः सम्भवति। प्रतिपन्नोपाधौ स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वरूपे आपादके आपाद्यस्य निरुक्तासत्त्वस्य व्याप्तेर्दृष्टान्ताभावेन ग्रहीतुमशक्यत्वात्। शशविषाणादौ निरुक्तासत्त्वस्य सम्भवेऽपि प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्यासम्भवात्। प्रतिपन्नपदस्य स्वप्रकारकधीविशेष्यपरतया शशविषाणादेर्धीविषयत्वाभावेन शशविषाणादिप्रकारकधीविशेष्यस्यालीकत्वेन असम्भवात्। अतो मूलस्थितस्य अत्यन्तासत्त्वापातः इत्यस्य यथाश्रुतमापत्तिरूपमर्थं परित्यज्यार्थान्तरपरतया व्याख्येयम्। न च प्रपञ्चो यदि प्रतिपन्नोपाधौ स्वरूपतस्त्रैकालिकनिषेधप्रतियोगी स्यात्, तर्हि असन् स्यात्, इत्यापत्तावापाद्यापादकयोर्दृष्टान्तासम्भवेनान्वयव्याप्तिग्रहासम्भवेऽपि ब्रह्मणि तयोर्व्यतिरेकप्रसिद्ध्या व्यतिरेकव्याप्तेः ग्रहसम्भवेन प्रदर्शितापत्तिः स्यादेवेति वाच्यम्। व्यतिरेकव्याप्तेरनुमिताविवापत्तावप्यनङ्गत्वात्। तथा च प्रतिपन्नोपाधौ स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वस्यावच्छिन्नवृत्तिकान्यसर्वदेशवृत्तिकात्यन्ताभावप्रतियोगित्वपर्यवसिततया मिथ्यात्वविधेयकानुमितिरपि अनिज्ञासितासत्त्वविधेयकानुमितिरूपा सञ्जाता। अतोऽनपेक्षितविधेयकत्वेनार्थान्तरत्वमेव युक्तम्। प्रदर्शितार्थान्तरदूषणसंगमनाय प्रतिपन्नोपाधौ स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वस्यावच्छिन्नवृत्तिकान्यसर्वदेश-

निषेधप्रतियोगित्वं पर्यवसितम्; अन्यथा तेषामन्यत्र सत्त्वापातात्,

---

वृत्तिकात्यन्ताभावप्रतियोगित्वे अत्यन्तासत्त्वे पर्यवसानं दर्शयन्नाह पूर्वपक्षी—प्रतिपन्नोपाधाविति। प्रतिपन्ने स्वप्रकारकधीविशेष्ये, उपाधौ सर्वत्र धर्मिणि, घटादेर्यस्त्रैकालिकनिषेधोऽवच्छिन्नवृत्तिकान्यात्यन्ताभावः, तन्निरूपितप्रतियोगित्वं हि घटादेर्मिथ्यात्वम्। अव्याप्यवृत्तिसंयोगादिकमादाय सिद्धसाधनतावारणाय अवच्छिन्नवृत्तिकान्येत्यन्ताभावविशेषणं बोध्यम्। तादृशप्रतियोगित्वरूपं यत् प्रपञ्चस्य मिथ्यात्वं तदेवावच्छिन्नवृत्तिकान्यसर्वदेशवृत्तिकात्यन्ताभावप्रतियोगित्वरूपे अत्यन्तासत्त्वे पर्यवस्यतीत्यङ्गुल्या निर्दिशन्निवाह पूर्वपक्षी—अन्यत्रासत्त्वेनेत्यादि। अन्यत्र प्रतिपन्नोपाधेरन्यत्र, स्वोपाधिभिन्ने परोपाधाविति यावत्। असत्त्वेन—अवच्छिन्नवृत्तिकान्यात्यन्ताभावप्रतियोगित्वेन, संप्रतिपन्नस्य—प्रमाणान्तरेण प्रमितस्य घटादेः—प्रपञ्चमात्रस्य "सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं पर्यवसितम्", सर्वत्र स्वोपाधौ परोपाधौ च, त्रैकालिकनिषेधप्रतियोगित्वम्—अवच्छिन्नवृत्तिकान्यात्यन्ताभावप्रतियोगित्वरूपमत्यन्तासत्त्वं पर्यवसितमित्यर्थः।

अयं भावः—घटादेर्हि परोपाधिरूपे तन्त्वादावसत्त्वं सर्वसम्मतमेव, मृदादिरूपे सर्वत्र स्वोपाधावपि यदि घटादेरसत्त्वम्, तर्हि शशविषाणादिवदत्यन्तासत्त्वमेव सिद्धान्तिमते पर्यवसितम्। अत्र "घटादेः सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वपर्यन्तमि"ति न्यायामृतसम्मतः पाठः। टीकाकृद्भिरप्येवमेव व्याख्यातः। विट्ठलेशोपाध्यायैस्तु पर्यन्तमित्यत्र पर्यवसितमिति पठितम्। उक्तं च "पर्यन्तमिति पाठापेक्षया पर्यवसितमिति पाठो युक्तः" इति। अन्यथेति। घटादेः सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं पर्यवसितमित्यनङ्गीकारे, घटादीनामन्यत्र सत्त्वाङ्गीकारे, इति यावत्। तेषाम्—घटादीनाम्, अन्यत्र—परोपाधिरूपे तन्त्वादौ, सत्त्वापातात् घटादेः सत्त्वापातात्। सत्त्वपदमत्र सत्त्वप्रतीतिसत्त्वव्यावहारयोरुपलक्षणम्। एवं च घटादीनां तन्त्वादिरूपे परोपाधावबाधितसत्त्वप्रतीतिसत्त्वव्यावहारयोः

नहि तेषामन्यत्र सत्ता सम्भवतीति त्वदुक्तेश्च; तथा च कथमसद्वैलक्षण्यम्; न हि शशशृङ्गादेरितोऽन्यदसत्त्वम् ॥ २६ ॥

न च निरुपाख्यत्वमेव तदसत्त्वम् निरुपाख्यपदेनैवख्याय-

---

आपातात्। तथाचान्यत्रसत्त्वापत्त्या प्रकृतमिथ्यात्वानुमानेऽर्थान्तरता स्यादिति भावः। घटादेरन्यत्र सत्त्वाङ्गीकारे न केवलं प्रकृतानुमानेऽर्थान्तरत्वं किन्तु स्ववचोविरोधोऽपीत्याह—न हीति। अन्यत्र परोपाधौ, तेषां घटादीनामित्यर्थः। तत्त्वप्रदीपिकायां चित्सुखाचार्याणामियमुक्तिः। "अन्यत्र सत्तासम्भविनी" इत्याचार्यसम्मतः पाठः। प्रतिपन्नोपाधौ त्रैकालिकनिषेध-प्रतियोगित्वेऽपि घटादीनां कथं मिथ्यात्वमिति जिज्ञासायामाह—न हि तेषामन्यत्र सत्ता सम्भविनी। तत्रापिचेत् सा न स्यात् गलेपादुकान्यायेन मृषात्वमेव पर्यवस्येत्। तथाचेति। प्रतिपन्नोपाधौ स्वरूपेण त्रैकालिक-निषेधप्रतियोगित्वस्य सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वपर्यवसाने सति कथमसद्वैलक्षण्यम्—तादृशमिथ्यात्वे नासद्वैलक्षण्यम्, किन्तु तदेवात्य-न्तासत्त्वमिति भावः। स्वरूपतः सर्वदेशवृत्तित्रैकालिकनिषेधप्रतियोगित्वेऽपि घटादीनां नात्यन्तासत्त्वम्, शशविषाणादीनामत्यन्तासत्त्वस्यैतद्विलक्षणत्वा-दित्याशङ्कयाह पूर्वपक्षी न हीति। अवच्छिन्नवृत्तिकान्यसर्वदेशवृत्ति-कात्यन्ताभावप्रतियोगित्वमेवात्यन्तासत्त्वम्, इतः प्रतियोगित्वादन्यदसत्त्वम-सत्त्वशब्दार्थः। असत्त्वशब्दात् तादृशप्रतियोगित्वादन्यन्न प्रतीयत इति भावः ॥२६॥

अवच्छिन्नवृत्तिकान्यसर्वदेशवृत्तिकात्यन्ताभावप्रतियोगित्वरूपं सर्वत्र स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वं नात्यन्तासत्त्वमितो विलक्षणमेवासत्त्वं शशविषाणादिषु भविष्यतीत्याशङ्क्य पूर्वपक्षी निषेधति—न च निरु-पाख्यत्वमेव तदसत्त्वमिति। तेषां शशविषाणादीनामसत्त्वं न निरुक्तरूपं किन्तु निरुपाख्यत्वमेव। तच्च शब्दवृत्त्यविषयत्वं प्रतीत्यविषयत्वं वा? आख्यायते अनया इति व्युत्पत्त्या आख्या शक्तिमत् पदम्।

मानत्वात्'॥२७॥

नापि अप्रतीयमानत्वमसत्त्वम्, असतोऽप्रतीतावसद्वैलक्षण्य-

---

लक्षणासाधारणवृत्तिमत्पदमुपाख्या । वृत्तिश्च शक्तिलक्षणान्यतररूपा । उपाख्या निर्गता यस्मात् तत् निरुपाख्यम्, शब्दवृत्तिविषयत्वाभाववत् । शक्त्या लक्षणया वा शब्दो यन्न बोधयति तदत्यन्तमसत्, न तु अवच्छिन्न-वृत्तिकान्यसर्वदेशवृत्तिकात्यन्ताभावप्रतियोगीति सिद्धान्तिना वाच्यम् । कुतो न वाच्यमित्यत आह—निरुपाख्यपदेनैवेति । असतोऽपि निरुपाख्य-पदशक्तिविषयतया निरुपाख्यपदेनैवासतोऽपि व्यवह्रियमाणत्वादसतोऽप्यसत्त्वं न स्यात् । इति यथाश्रुतोऽर्थः । "वृत्तिमत्त्वं पदत्वमि"ति मते निरुपाख्य-शब्दस्य पदत्वं नास्ति, किन्तु वाक्यत्वमेव । समासशक्तिवादिनां मते यथा-श्रुतमपि सङ्गच्छते । वस्तुतस्तु असतो न ज्ञानविषयता । विषयत्वे वाऽसतो ज्ञाने कल्पितत्वेन मिथ्यात्वापातादसत्त्वव्याघाताच्च । अतो निरुपाख्यादिपदा नामलीके नानुभावकत्वरूपा शक्तिर्विद्यते । किन्तु ज्ञानविलक्षणालीकविषयक-विकल्पात्मकवृत्तिविशेषं प्रति निरुपाख्यादिपदानां जनकत्वं बोध्यम् । तथा च निरुपाख्यपदेनैव ख्यायमानत्वादित्यस्य निरुपाख्यपदनिरूपितवृत्तिरूप-सम्बन्धविषयत्वात् । एवं च सत्यसतोऽपि शब्दवृत्तिविषयत्वेन शब्दवृत्त्य-विषयत्वरूपं निरुपाख्यत्वमसिद्धम् । अथ वा उपाख्यायते ज्ञायते अनयेति व्युत्पत्त्या उपाख्यापदं प्रतीतिपरम् ॥२७॥

२८—एवंविधा उपाख्या निर्गता यस्मात् तन्निरुपाख्यं प्रतीत्यविषयी-भूतम् । एतदेव प्रतीत्यविषयीभूतं निरुपाख्यमभिप्रेत्य पूर्वपक्षी शङ्कते—नापि अप्रतीयमानत्वमसत्त्वमिति । असतोऽप्रतीयमानत्वमेवासिद्धमिति दर्शयितु-माह—असतोऽप्रतीताविति । असत्प्रतियोगिको भेदः असद्वैलक्षण्यम्, तद्विषयकज्ञानस्यायोगादिति पूर्वतनेनान्वयः । अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादसतोऽप्रतीतावसत्प्रतियोगिकभेदज्ञानस्यैवासम्भवात् । प्रपञ्चे सदसद्वैलक्षण्यरूपमिथ्यात्वस्य ग्रहेऽसत्प्रतियोगिकभेदग्रहोऽपि सिद्धान्ति-

ज्ञानस्यासत्प्रतीतिनिरासस्यासद्पदप्रयोगस्य चायोगात् ॥२८॥

न चापरोक्षतयाऽप्रतीयमानत्वं तत्, नित्यातीन्द्रियेष्वतिव्याप्तेरिति चेत् ? ॥२९॥

---

नामभिमत एव। असतोऽप्रतीयमानत्वे स्ववचो विरोधः स्यात्। सद्विपयकप्रतीतिवादिना सिद्धान्तिना असद्विपयकप्रतीतिर्निरस्यते। तन्निरासस्य च प्रसक्तिपूर्वकत्वादसद्विपयकप्रतीतिरङ्गीकृतैव, अन्यथा तन्निरासानुपपत्तेरित्याह पूर्वपक्षी—असत्प्रतीतिनिरासस्येति। अयोगादित्यग्रतनेनान्वयः। असत्पदप्रयोगादपि असतः प्रतीतिविपयत्वमावश्यकमित्याह पूर्वपक्षी—असत्पदप्रयोगस्य चायोगादिति। अयमर्थः—प्रेक्षावत्कृतशब्दप्रयोगस्य शब्दार्थज्ञानपूर्वकत्वादसच्छब्दप्रयोगार्थमसच्छब्दार्थज्ञानस्य चावश्यकत्वादसतः प्रतीत्यविपयत्वे तदर्थकः शब्दप्रयोगोऽपि न स्यादिति भावः ॥२८॥

२९.—असद्वैलक्षण्यज्ञानार्थमसद्विपयकप्रतीतेरावश्यकत्वेऽपि न अपरोक्षप्रतीतेरावश्यकता। अभावज्ञानस्य प्रतियोगिज्ञानकारणकत्वेऽपि प्रतियोग्यपरोक्षज्ञानकारणकत्वाभावात् असतः प्रतीतिविपयत्वेऽपि नापरोक्षप्रतीतिविपयत्वमित्युत्प्रेक्ष्य पूर्वपक्षो निराचष्टे—न चापरोक्षतयेति। प्रतीत्यविपयत्वं नासत्त्वं किन्तु अपरोक्षप्रतीत्यविपयत्वम्। शशविपाणादीनामपरोक्षप्रतीतिविपयत्वाभावान्न पूर्वोक्तदोपावसरः। अपरोक्षतया प्रतीयमानत्वमसत्त्वमित्यसत्त्वलक्षणमतिप्रसक्तमिति दूपयति—नित्यातीन्द्रियेष्विति।

अत्रेदं बोध्यम्—नित्यातीन्द्रियेष्वपि ईश्वरीयापरोक्षज्ञानविपयत्वात् तेष्वपरोक्षतया अप्रतीयमानत्वं नास्तीति तत्रातिव्याप्तिप्रदर्शनमयुक्तमिति न शङ्कनीयम्। अपरोक्षतयाऽप्रतीयमानत्वमित्यस्य प्रमाणजन्यप्रत्यक्षाविपयत्वमित्यत्र तात्पर्यात्। ईश्वरीयप्रत्यक्षस्य प्रमाणाजन्यत्वान्न प्रमाणजन्यप्रत्यक्षविपयत्वं नित्यातीन्द्रियाणाम्। सिद्धान्तिमते ईश्वरीयप्रत्यक्षस्य जन्यत्वेऽपि प्रमाणजन्यत्वाभावात जन्यप्रत्यक्षाविपयत्वमित्यनुक्त्वा प्रमाणजन्यप्रत्यक्षाविपयत्वमुक्तम् ॥२९॥

मैवम्, सर्वत्र त्रैकालिकनिषेधप्रतियोगित्वं यद्यपि तुच्छानिर्वाच्ययोः साधारणम्, तथापि क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वमत्यन्तासत्त्वम्। तच्च शुक्तिरूप्ये प्रपञ्चे च बाधात् पूर्वं

---

३०—अवच्छिन्नवृत्तिकान्यसर्वदेशवृत्तिकात्यन्ताभावप्रतियोगित्वं यद्यपि तुच्छानिर्वाच्ययोः साधारणं तथापि नानिर्वाच्येऽसत्त्वव्यवहारप्रसङ्गः, तयोर्वैलक्षण्यस्यापि विद्यमानत्वादित्याह सिद्धान्ती—मैवम्, इत्यादि। अनिर्वाच्यतः तुच्छस्य वैलक्षण्यं दर्शयितुमाह—तथापि क्वचिदप्युपाधौ सत्त्वेनेत्यादि। किंपदोत्तरसप्तम्या निष्ठत्वमर्थः। उपाधिपदं च धर्मिपरम्। तथा च क्वचिदप्युपाधावित्यस्य किंचिद्धर्मिनिष्ठमर्थः। अन्वयश्चास्य तृतीयान्तसत्त्वपदार्थे। एवं च किञ्चिद्धर्मिनिष्ठं यत् सत्त्वं तेन। प्रतीत्यनर्हत्वमित्यस्य प्रतीत्ययोग्यत्वमर्थः। तथा च किञ्चिद्धर्मिनिष्ठं यत् सत्त्वं तेन प्रतीत्ययोग्यत्वमिति समुदितोऽर्थः। भवति चानिर्वाच्यं रजतादि सत्त्वप्रकारकप्रतीतियोग्यम्, "सद्रजतमि"ति प्रतीतेः। शशविषाणादीनां तु असतां "शशविषाणं सदि"ति प्रतीत्यभावात् सत्त्वप्रकारकप्रतीत्ययोग्यत्वम्। सत्त्वेन प्रतीत्ययोग्यत्वमेवासत्त्वमित्युक्तावपि सामञ्जस्ये क्वचिदप्युपाधाविति सत्त्वविशेषणमतीन्द्रियगुरुत्वादेरत्यन्तासत्त्वापत्तिवारणाय। यथा चैतत्, तथा प्रपञ्चितं प्रथममिथ्यात्वलक्षणे त्रयोदशवाक्ये। [३५ पृ०]। प्रपञ्चमात्रस्यावच्छिन्नवृत्तिकान्यसर्वदेशवृत्तिकात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वस्वीकारेऽप्यबाध्यरूपे ब्रह्मणि प्रपञ्चमात्रस्याध्यस्तत्वेनाबाध्यब्रह्मतादात्म्यरूपेण सत्त्वेन प्रपञ्चमात्रं बाधात् पूर्वं ज्ञायते। तथा च बाधात् पूर्वमबाध्यब्रह्मतादात्म्यरूपसत्त्वेन प्रतीतियोग्यत्वादेवानिर्वाच्यस्य अत्यन्तासतो वैलक्षण्यम्। एतदेव प्रदर्शयितुमाह—तच्चेति। तच्च—अत्यन्तासत्त्वं क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपम्, मिथ्याभूते दृष्टान्तीकृते शुक्तिरूप्ये, पक्षीकृते च मिथ्याभूते प्रपञ्चे "नेदं रजतम्" "नेह नानास्ति किञ्चने"त्यादिरूपबाधात् पूर्वं नास्त्येव, तदा तयोः त्रिकालाबाध्य-

नास्त्येवेति न तुच्छत्वापत्तिः ॥३०॥

न च बाधात् पूर्वं शुक्तिरूप्यं प्रपञ्चो वा सत्त्वेन न प्रतीयते;

---

सत्तादात्म्येन प्रतीयमानत्वात्। इति न तुच्छत्वापत्तिः—प्रपञ्चशुक्तिरजतयोरत्यन्तासत्त्वापत्तिः। बाधोत्तरकालं शुक्तिरजतप्रपञ्चयोः क्वचिदप्युपाधौ सत्त्वेन प्रतीत्ययोग्यत्वेऽपि बाधात् पूर्वं सत्त्वेन प्रतीयमानत्वान्नात्यन्तासत्त्वापत्तिः इति भावः।

इदमत्रावधेयम्—त्रिकालाबाध्यब्रह्मतादात्म्यमेव सिद्धान्तिमते सत्त्वम्; 'सत् सदि'ति प्रतीतौ सद्रूपं ब्रह्मैव तादात्म्येन प्रकारतया भासते। सद्वस्तुनोऽबाध्यत्वादेव बाधात् पूर्वं प्रपञ्चस्याबाध्यत्वेन प्रतीतिः। शून्यवादिभिस्तु प्रपञ्चमात्रस्य शून्यपर्यवसानानुकूलमर्थक्रियाकारित्वरूपं सत्त्वमुक्तम्, न तु निरुक्तरूपं शून्यभावनयाऽर्थक्रियाकारित्वेन प्रपञ्चे बाध्यमाने निरवशेषबाधनात् सर्वं शून्यमेव पर्यवस्यति। प्रपञ्चे सत्प्रतीतेः सर्वसिद्धत्वेऽपि सत्त्वनिर्वचनवैलक्षण्येन वेदान्तिमाध्यमिकमतवैलक्षण्यं बोध्यम् ॥ ३० ॥

३१—बाधात् परं यत् त्रिकालबाध्यत्वेन प्रतीयते, तत् बाधात् पूर्वं त्रिकालाबाध्यत्वेनैव प्रतीयते—इति शून्यवाद्यतिरिक्तसर्वानुभवसिद्धम्। एतदबाध्यत्वमेव सत्त्वम्। अबाध्यत्वेन प्रतीतिरेव सत्त्वेन प्रतीतिः, न तु अर्थक्रियाकारित्वेनेति दर्शयन्नाह—न च बाधात् पूर्वमित्यादि। बाधात् पूर्वं शुक्तिरजतं प्रपञ्चो वा सत्त्वेन त्रिकालाबाध्यत्वेन न प्रतीयत इति न, किन्तु त्रिकालाबाध्यत्वेन प्रतीयत एव। शशविषाणादीनां तु एतादृशी प्रतीतिरसिद्धैव। तथा च न शून्यवादिमतप्रसङ्गः। प्रपञ्चमात्रस्य बाधात् पूर्वमबाध्यत्वरूपसत्त्वेन प्रतीत्यर्हत्वादेवासद्वैलक्षण्यमिति प्रतिपादनाय सामान्यतः मिथ्यात्वानुमाने सत्त्वेन प्रतीत्यर्हमिति पक्षविशेषणमुपात्तम्। यद्बाधात् पूर्वं सत्त्वेन प्रतीत्यर्हं, तत् कुत्रापि नास्ति—इति मिथ्यात्वम्। विशेषानुमानस्थले यद्यपि सत्त्वेन प्रतीत्यर्हमिति पक्षविशेषणं नोपात्तम् "वियत् मिथ्या" एवंरूपेणैव साध्यनिर्देशात्, तथापि वियदादीनां

एतदेव सदर्थकेनोपाधिपदेन सूचितम् ॥ ३१ ॥

---

प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वसाधनेऽपि नात्यन्तासत्त्वापत्त्याऽर्थान्तरत्वम्। नापि प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्य मिथ्यात्वलक्षणस्यालीकेऽतिव्याप्तिः। सत्त्वेन प्रतीत्यर्हमिति पक्षविशेषणलभ्यार्थस्य मिथ्यात्वलक्षणघटकप्रतिपन्नोपाधिशब्देनैव लाभात्। प्रतिपन्नोपाधावित्यत्र उपाधिपदस्य सद्रूपब्रह्मपरत्वात् परत्र स्वधर्मासञ्जकत्वमेवोपाधिपदप्रवृत्तिनिमित्तम्। स्फटिकादौ स्वधर्मासञ्जके जवाकुसुमे उपाधिपदप्रयोगदर्शनात्। प्रकृते च स्वाध्यस्ते दृश्यमात्रे स्वधर्मस्य सत्त्वादेरासञ्जकतया सद्ब्रह्मैवोपाधिपदलभ्यम्। तथा च साध्यान्तर्गतप्रतिपन्नपदमिलितेन सद्ब्रह्मार्थकोपाधिपदेन स्वप्रकारकधीविशेष्यं सद्ब्रह्मैव लभ्यते। प्रतिपन्नपदस्य स्वप्रकारकधीविशेष्यार्थकत्वं प्रागेवोक्तम्। प्रपञ्चमात्रस्य तादात्म्येन सदात्मकब्रह्मणि अध्यासात् प्रपञ्चतादात्म्यप्रकारकधीविशेष्यत्वं ब्रह्मण्येव।

प्रपञ्चतादात्म्यधीविशेष्यसद्ब्रह्मनिष्ठत्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वं प्रपञ्चे वर्तते। एतादृशमिथ्यात्वमलीके न सम्भवति। अलीकतादात्म्यधीविशेष्यत्वस्य सदात्मके ब्रह्मण्यसम्भवात्, न विशेषतो मिथ्यात्वानुमानेऽर्थान्तरत्वम्। प्रतिपन्नोपाधिशब्दस्य निरुक्तार्थकत्वादेव न प्रतिपन्नोपाधाविति मिथ्यात्वलक्षणस्यालीकेऽतिव्याप्तिरित्यभिप्रेत्याह—एतदेवेति। प्रतिपन्नपदमिलितेन सदात्मकब्रह्मार्थकेनोपाधिपदेन एतदेव—बाधात् पूर्वं प्रपञ्चमात्रस्य सत्त्वेन प्रतीतियोग्यत्वं सूचितम्। प्रतिपन्नपदमिलितेनोपाधिपदेन प्रपञ्चतादात्म्यधीविशेष्यत्वस्य सदात्मके ब्रह्मणि शब्दतो लाभेऽपि न सत्त्वप्रकारकधीविशेष्यत्वं प्रपञ्चे लभ्यते। मूलकृता तु बाधात् पूर्वं प्रपञ्चः सत्त्वेन प्रतीयत एवेत्युक्तम्। तथा च कथं प्रतिपन्नपदमिलितेन सदर्थकोपाधिपदेन प्रपञ्चे तादृशविशेष्यत्वस्य लाभ इति, अत एव मूलकृता उपाधिपदेन "उक्तमि"ति, अनुक्त्वा सूचितमित्युक्तम्। प्रतिपन्नोपाधौ इत्यनेन प्रपञ्चे सत्त्वप्रकारकप्रतीतिविशेष्यत्वस्य शब्दतोऽलाभेऽप्यर्थत एव लभ्यमित्यभिप्रेत्य सूचितमित्युक्तम् ॥ ३१ ॥

शून्यवादिभिः सदधिष्ठानकभ्रमानङ्गीकारेण क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपासद्वैलक्षण्यस्य[1] शुक्तिरूप्ये प्रपञ्चे चानङ्गीकारात् ॥ ३२ ॥

---

३२—प्रपञ्चस्य त्रिकालाबाध्ये सद्वस्तुनि अध्यस्तत्वात्, बाधात् पूर्वं प्रपञ्चो यत् सत्त्वेन प्रतीयते, तत् सत्त्वं त्रिकालाबाध्यत्वमेव। बाधात् पूर्वं त्रिकालाबाध्यत्वेन प्रतीतियोग्योऽपि प्रपञ्चो बाधोत्तरं कुत्रापि नास्तीति प्रतीयते। प्रपञ्चस्य कुत्राप्यसत्त्वं यद्यपि शून्यवादिनामपि समम्, तथापि शून्यवादिनां मते बाधात् पूर्वं प्रपञ्चस्याबाध्यत्वेन प्रतीतियोग्यत्वेऽपि त्रिकालाबाध्यत्वेन प्रतीतियोग्यत्वं नास्तीति न प्रपञ्चमिथ्यात्ववादिनां शून्यवादिमाध्यमिकमते प्रवेश इत्याह—**शून्यवादिभिरिति**। माध्यमिकैरित्यर्थः। यद्यपि शून्यवादिमते शून्यभावनया प्रपञ्चबाधनात् प्राक्-सत्त्वेन प्रपञ्चमात्रं प्रतीयत एव, तथापि तत् सत्त्वं नाद्वैतवादिमते इव त्रिकालाबाध्यत्वम्, किन्त्वर्थक्रियाकारित्वरूपं, बाधात् पूर्वमबाध्यत्वमपि वा कथञ्चिद् भवितुमर्हति, न तु त्रिकालाबाध्यत्वम्। व्यावहारिकाबाध्यत्वस्य तन्मते प्रसिद्धत्वेऽपि त्रिकालाबाध्यत्वस्य पारमार्थिकत्वेन पारमार्थिकवस्त्वनङ्गीकर्तृमाध्यमिकानां मते त्रिकालाबाध्यत्वरूपसत्त्वस्यासम्भवात्। तथाचाद्वैतिनां मते बाधात् पूर्वं प्रपञ्चमात्रस्य यत् त्रिकालाबाध्यत्वरूपसत्त्वेन प्रतीयमानत्वं तदेवात्यन्तासत्प्रपञ्चवैलक्षण्यमिति विभावनीयम्। **सदधिष्ठानकभ्रमानङ्गीकारेणेति**। बाधज्ञानविषयत्वरूपशून्यत्वभावनावैयर्थ्यभयेन बाधज्ञानाविषयत्वरूपाबाध्यत्वेन प्रपञ्चभ्रमाङ्गीकारेऽपि "सदधिष्ठानकभ्रमानङ्गीकारेण" त्रिकालाबाध्यब्रह्माधिष्ठानकप्रपञ्चभ्रमानङ्गीकारेणेत्यर्थः; **क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वरूपासद्वैलण्यस्य** प्रतीत्यनर्हत्वरूपात् असतो वैलक्षण्यस्य किञ्चिद्धर्मिनिष्ठं यत् त्रिकालाबाध्यत्वरूपं सत्त्वं तेन प्रतीययोग्यत्वस्यात्यन्तासतो वैलक्षण्यस्य **शुक्तिरूप्ये प्रपञ्चे चानङ्गीकारात्**। प्रातिभासिके शुक्तिरूप्ये व्यावहारिके च वियदादिप्रपञ्चे त्रिकालाबाध्यत्वरूपसत्त्वेन प्रतीतिविषयत्वानङ्गीकारात्, वेदान्तिनां तु बाधात् पूर्वं तदङ्गीकाराच्च वेदान्तिनां माध्यमिकमतप्रवेश इति भावः ॥३२॥

---

१. प्रतीत्यनर्हत्वरूपासद्वैलक्षण्यस्य = प्रतीत्यर्हत्वरूपस्येति वा पाठः।

ननु, एवं सति यावत् सदधिकरणकात्यन्ताभावप्रतियोगित्वं पर्यवसिम् ॥३३॥

तथा च केवलान्वय्यत्यन्ताभावप्रतियोगिष्ववृत्तिषु गगनादिषु तार्किकाणां सिद्धसाधनम् ॥३४॥

यदधिकरणं यत् सत् तन्निष्ठात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति विवक्षायामधिकरणपदेनावृत्तिनिराकरणेऽपि

---

३३—स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वस्य मिथ्यात्वे प्रपञ्चमात्रस्य शशविषाणादिवदत्यन्तासत्त्वापत्तिः स्यात्—इति पूर्वपक्षिणामाशङ्का समाहिता। इदानीं तत् समाधानमसहमानः पूर्वपक्षी सिद्धसाधनतादिदोषोद्भावनेन प्रकृतमिथ्यात्वानुमानं दूषयितुमाह—नन्वेवं सतीति। प्रतिपन्नोपाधावित्यस्य स्वप्रकारकप्रतीतिविशेष्ये सर्वत्र सद्रूपे धर्मिणीत्यर्थकत्वे सति। यावत् सदधिकरणेति। यावत् सदधिकरणकत्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमित्यायातम्। कस्मिन्नपि सदधिकरणे यन्न वर्तते तन्मिथ्येति फलितोऽर्थः ॥३३॥

३४—सर्वत्र विद्यमानत्रैकालिकनिषेधप्रतियोगित्वस्य मिथ्यात्वे दूषणमाह—तथा चेति। मिथ्यात्वघटकात्यन्ताभावस्य सर्वत्र विद्यमानतया केवलान्वयित्वात् तत्प्रतियोगित्वस्य मिथ्यात्वे गगनादौ सिद्धसाधनता स्यादित्याह—केवलान्वय्यत्यन्ताभावप्रतियोगिष्वित्यादि। विभुत्वेनावृत्तिगगनादिषु केवलान्वय्यत्यन्ताभावप्रतियोगित्वस्य तार्किकाणां मते सिद्धत्वात् प्रकृतानुमाने सिद्धसाधनम्। तादृशप्रतियोगित्वस्य पारमार्थिकत्वाविरोधित्वेन यत्किञ्चित्साध्यमात्रसिद्ध्याऽर्थान्तरं च ॥३४॥

३५—प्रदर्शितदूषणं निराकुर्वन्नाह—यदधिकरणमिति। यस्य मिथ्यात्वेनाभिमतस्याधिकरणं यत् सत्—यत् सद्वस्तु तन्निष्ठात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति विवक्षायां मिथ्यात्वघटकप्रतिपन्नोपाधिदलेनेति शेषः। अवृत्तिगगनादीनामधिकरणाप्रसिद्ध्या

संयोगसम्बन्धेन समवायसम्बन्धेन वा यत् घटाधिकरणं समवाय-सम्बन्धेन संयोगसम्बन्धेन वा घटस्य तन्निष्ठात्यन्ताभावप्रतियोगितया सर्वेषु वृत्तिमत्सु दुरुद्धरं सिद्धसाधनम् ॥३५॥

---

गगनादौ तादृशप्रतियोगित्वमादाय प्रकृतानुमाने न सिद्धसाधनं न वा अर्थान्तरतेति भावः ।

अत्रेदमवधेयम्—यद्यपि तार्किकादिमते गगनाधिकरणताया अप्रसिद्ध्या प्रकृतानुमाने न सिद्धसाधनम्, तथापि गगनस्य न मिथ्यात्वम्, अधिकरणाप्रसिद्धेरेव । एवमग्रेऽपि [मूले चत्वारिंशत्तमे वाक्ये] मिथ्यात्वनिष्कर्षप्रदर्शनेऽधिकरणत्वघटितमिथ्यात्वनिरूपणाद् अप्रसिद्धाधिकरणकाकाशादीनां मिथ्यात्वं न स्यादिति केषाञ्चित् शङ्कापि निर्मूला एव । मूलकृदुक्तप्रतिपन्नोपाधिदलेन सम्बन्धित्वविवक्षणादेव प्रदर्शितशङ्कायाः निरासात् । गगनादेरधिकरणाप्रसिद्धावपि सम्बन्धित्वं प्रसिद्धमेव । भूतलादौ गगनाधिकरणत्वस्याप्रसिद्धावपि सम्बन्धित्वस्य प्रसिद्धेः । भवति हि भूतलं गगनसम्बन्धि, अतो न गगनादौ मिथ्यात्वलक्षणस्याव्याप्तिः । न वा प्रकृतानुमानेन गगनादौ मिथ्यात्वस्यासिद्धिः । गगनसम्बन्धितया प्रतिपन्ने गगनसम्बन्धसामान्यस्याभावात् सम्बन्धसामान्याभावस्यैव सम्बन्धिसामान्याभावरूपत्वात् तादृशाभावप्रतियोगित्वस्य गगने सत्त्वान्न गगनस्य मिथ्यात्वासिद्धिः ।

एवंरूपेण गगनादौ यद्यपि न सिद्धसाधनं न वा अर्थान्तरम्, तथापि वृत्तिमत्सु एव घटादिषु तदेव दूषणं स्यात्, अधिकरणतावच्छेदकसम्बन्धस्य प्रतियोगितावच्छेदकसम्बन्धस्य चानिवेशात्, इत्याह पूर्वपक्षी—संयोगसम्बन्धेनेत्यादि । यत् सम्बन्धेन यस्य यदधिकरणं सम्बन्धान्तरेण तन्निष्ठतदत्यन्ताभावप्रतियोगित्वस्य मिथ्यात्वाविरोधितया सिद्धत्वेन पुनरपि दुरुद्धरं सिद्धसाधनम् । संयोगसम्बन्धेन घटवति भूतले समवायेन, समवायेन च घटवति कपाले संयोगेन घटो नास्तीति प्रतीतेः सर्वसम्मतत्वादिति भावः ॥३५॥

येन सम्बन्धेन यद् यस्याधिकरणं तेन सम्बन्धेन तन्निष्ठात्यन्ताभावप्रतियोगित्वमिति विवक्षायामव्याप्यवृत्तिषु संयोगादिषु सिद्धसाधनमिति चेत् ? ॥३६॥

न, येन रूपेण यदधिकरणतया यत् प्रतिपन्नं तेन रूपेण

---

३६—अधिकरणतावच्छेदकसम्बन्धमङ्गीकुर्वन्निराकोति — येन सम्बन्धेनेति । अधिकरणतावच्छेदक-प्रतियोगितावच्छेदक-सम्बन्धयोर्भिन्नत्वेन सिद्धसाधनत्वेऽपि तयोरैक्ये तदसम्भवात् .तथा च संयोगसम्बन्धेन घटाद्यधिकरणे भूतलादौ तेनैव सम्बन्धेन तत्प्रतियोगिताकात्यन्ताभावस्य, समवायसम्बन्धेन घटाद्यधिकरणे कपालादौ वा तेनैव सम्बन्धेन तत्प्रतियोगिताकात्यन्ताभावस्य चासिद्धतया न घटादिकमादाय सिद्धसाधनमिति भावः । तथापि वृत्तिमत्स्वपि अव्याप्यवृत्तिषु संयोगादिषु सिद्धसाधनमेव, इत्याह पूर्वपक्षी— अव्याप्यवृत्तिष्विति । अव्याप्यवृत्तित्वं नाम स्वात्यन्ताभावसामानाधिकरण्यम् । वृत्तिमतामपि संयोगादीनां स्वात्यन्ताभावसमानाधिकरणत्वात् समवायसम्बन्धेन कपिसंयोगाधिकरणे वृक्षे समवायसम्बन्धावच्छिन्नप्रतियोगिताककपिसंयोगाभावस्यापि सत्त्वेन सिद्धसाधनम् । तथा चाधिकरणतावच्छेदकप्रतियोगितावच्छेदकसम्बन्धयोः प्रवेशेऽपि सिद्धसाधनं दुर्वारमेव । अव्याप्यंवृत्तिकपिसंयोगादिषु तादृशप्रतियोगित्वस्य तत्पारमार्थिकत्वाविरोधात् अर्थान्तरमपीति भावः ॥३६॥

३७—तार्किकाणां मते तादृशप्रतियोगित्वस्य सिद्धत्वं निराकुर्वन्नाह सिद्धान्ती—न येन रूपेणेत्यादि । वृत्तिमत्स्वपि अव्याप्यवृत्तिषु संयोगादिषु तादृशप्रतियोगित्वस्य सिद्धया तार्किकाणां मते न सिद्धसाधनम् । मिथ्यात्वघटकप्रतिपन्नपदस्यार्थानुसन्धाने तार्किकरीत्या शङ्कानामनवकाशः । प्रतिपन्नपदस्य प्रतीतिविशेष्यार्थकतयोपाधिपदस्य च सद्रूपाधिकरणार्थकतया प्रतिपन्नोपाधावित्यस्य स्वप्रकारकप्रतीतिविशेष्ये सद्रूपेऽधिकरणे इत्यर्थो लभ्यते । सम्बन्धविशेषावच्छेदकविशेषानन्तर्भाव्यापि अधिकरणता प्रतीयते । तथा च

तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य प्रतिपन्नपदेन सूचितत्वात् ॥३७॥

तच्च रूपं सम्बन्धविशेषोऽवच्छेदकविशेषश्च; न हि सम्बन्धविशेषमन्तरेण भूतले घटाधिकरणता प्रतीयते ॥३८॥

अवच्छेदकविशेषमन्तरेण वा वृक्षे कपिसंयोगाधिकरणता ॥३९॥

तथा च येन सम्बन्धविशेषेण येन चावच्छेदकविशेषेण यदधिकरणताप्रतीतिर्यत्र भवितुमर्हति, तेनैव सम्बन्धविशेषेण तेनैव चावच्छेदकविशेषेण तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति पर्यवसिते क्व सिद्धसाधनम् ॥४०॥

---

येन सम्बन्धेन यदवच्छेदेन यदधिकरणतया यत् प्रतिपन्नं तेन सम्बन्धेन, तदवच्छेदेन तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वम्। एतत् सर्वं मिथ्यात्वघटकप्रतिपन्नोपाधिदलादायातमित्यभिप्रेत्य मूलकृता— प्रतिपन्नपदेन सूचितत्वादित्युक्तम् ॥३७॥

३८—सम्बन्धविशेषावच्छेदकविशेषावन्तर्भाव्यापि अधिकरणता प्रतीयते। तौ च सम्बन्धविशेषावच्छेदकविशेषौ मूलकृता "रूप"पदेन प्रागुक्तौ। तावेव च दर्शयति—तच्च रूपमित्यादि। अधिकरणताप्रतीतेः सम्बन्धान्तर्भावं दर्शयन्नाह—न हीत्यादि। सम्बन्धविशेषमन्तरेणैवावच्छेदकविशेषं वा अन्तरेणैवाधिकरणता प्रतीयत इति नहि। अत्र अन्तरेणेत्यस्यानन्तरम् एवकारोऽध्याहर्तव्यः। अन्यथा यथाश्रुतमूलस्य असङ्गतिः स्यात् सम्बन्धावच्छेदकौ अन्तरेणाप्यधिकरणताप्रतीतेः ॥३८॥

३९—तत्रैवावच्छेदकविशेषान्तर्भावं दर्शयन्नाह—अवच्छेदकविशेषमित्यादि ॥३९॥

४०—प्रकृते सम्बन्धविशेषावच्छेदकविशेषान्तर्भावे फलितमाह—तथा चेति। एवं च प्रदर्शितेषु सर्वत्र वृत्तिमत्सु घटादिष्वव्याप्यवृत्तिषु संयोगादिषु च न सिद्धसाधनम् ॥४०॥

यदि पुनः ध्वंसप्रागभावप्रतियोगित्वमिवात्यन्ताभावप्रतियोगित्वमप्याकाशादौ[1] न स्यात्, साधकमानाभावस्य तुल्यत्वादिह आकाशो नास्तीति प्रत्यक्षप्रतीत्यसम्भवात्; अनुमाने

४१—अवृत्तिगगनादिष्वापातदृष्ट्या सिद्धसाधनतायाः परिहारोऽभिहितः, इदानीं परिहाररहस्यमाविष्कुर्वन्नाह—यदि पुनरिति। "यदि पुनरि"त्यस्य व्यवहितेन "तदा", इत्यनेन सम्बन्धः। अवृत्तिगगनादीनां यदवृत्तित्वं तत् सिद्धान्त्यभिमतमेव, एतन्मिथ्यात्वानुमानेनैव तेषामवृत्तित्वनिरूपणात्। प्राक् तु एतन्मिथ्यात्वानुमानात् तेषां गगनादीनामवृत्तित्वमसिद्धमेव। गगनादीनां यत् सर्वत्रावृत्तित्वं तद् एतन्मिथ्यात्वानुमानाधीनमेव। न तु एतदनुमानात् प्राक् तार्किकरीत्या अवृत्तितया प्रसिद्धं गगनं पुनरेतदनुमानेनावृत्तितया निश्चीयते। अनुमानात् प्राक् गगनादीनामवृत्तित्वे सिद्धे एव प्रकृतमिथ्यात्वानुमाने सिद्धसाधनता स्यात्। मिथ्यात्वानुमानात् पूर्वं गगनादीनामवृत्तित्वमसिद्धमिति दर्शयितुमत्यन्ताभावप्रतियोगित्वमेव गगनादेरसिद्धं सुतरामेव केवलान्वय्यत्यन्ताभावप्रतियोगित्वमुक्तमिति भावः। ध्वंसप्रागभावप्रतियोगित्वमिति। यथा ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं च गगनादौ नास्ति, "इह गगनं ध्वस्तम्, इह गगनं भविष्यती"ति गगने ध्वंसप्रागभावप्रतियोगित्वसाधकप्रतीतेरभावात्, तथा अत्यन्ताभावप्रतियोगित्वमपि गगनादौ नास्ति, अत्यन्ताभावप्रतियोगित्वसाधकप्रतीतेः मिथ्यात्वानुमानात् पूर्वमभावात्। "इह गगनं नास्ती"ति प्रत्यक्षप्रतीतेरसम्भवात्। प्रतियोगिनो गगनस्याप्रत्यक्षत्वादित्याह—साधकमानाभावस्य तुल्यत्वादिति। यथा गगने ध्वंसप्रागभावप्रतियोगित्वसाधिका प्रतीतिः नास्ति, तथा प्रकृतमिथ्यात्वानुमानात् पूर्वमत्यन्ताभावप्रतियोगित्वसाधिका प्रतीतिरपि नास्तीति भावः। न च मिथ्यात्वानुमानात् प्राक् गगनेऽत्यन्ताभावप्रतियोगित्वसाधकप्रात्यक्षिकप्रतीतेरसम्भवेऽप्यनुमित्यात्मिका प्रतीतिरुक्तप्रतियोगित्वसाधिका भविष्यतीत्याह—अनुमाने चेति।

१. आकाशादौ = आकाशादिषु इति पाठान्तरम्।

चानुकूलतर्काभावात्, सामान्यतो दृष्टमात्रेण ध्वंसप्रागभावप्रतियोगि-

---

न च गगनं भूतलादिनिष्ठात्यन्ताभावप्रतियोगि, भूतलादिनिष्ठवृत्तिनियामकसम्बन्धस्याप्रतियोगित्वात्, तदवृत्तिधर्मादिवदित्यनुमानमेव गगनादावत्यन्ताभावप्रतियोगित्वे मानमिति वाच्यम्। तादृशानुमाने अनुकूलतर्काभावादिति। प्रत्यक्षायोग्यस्यापि अत्यन्ताभावप्रतियोगित्वं तत्रैवानुमीयते, यत्र तदनङ्गीकारेऽनिष्टप्रसक्तिः स्यात्। यथा—अतीन्द्रियस्य गुरुत्वादेः तेजःप्रभृतिषु अत्यन्ताभावोऽनुमीयते। अन्यथा तेजःप्रभृतिषु गुरुत्वाभावासत्त्वे तेजःप्रभृतीनां गुरुत्ववत्त्वापत्त्या पतनाद्युत्पत्त्यापत्तेः। तेजःप्रभृतीनां पतनमनिष्टम्, तस्यापत्त्या तेजःप्रभृतिषु अतीन्द्रियस्यापि गुरुत्वस्यात्यन्ताभावोऽनुमीयते। प्रकृते तु भूतलादौ गगनाभावानङ्गीकारे कस्यचिदनिष्टस्यापत्त्यभावात् अत्यन्ताभावप्रतियोगित्वं गगनादेर्न सिध्यति। अनुकूलतर्करहितेनाप्यनुमानेन गगनादावत्यन्ताभावप्रतियोगित्वं यदि सिध्येत्, तर्हि गगनादौ ध्वंसप्रागभावप्रतियोगित्वयोः सिद्धिप्रसङ्गः, इत्यत आह—सामान्यतो दृष्टमात्रेणेति। सामान्यतो दृष्टमात्रेणेत्यत्र मात्रपदमनुमानस्यानुकूलतर्कराहित्यं सूचयति। अनुकूलतर्करहितेन सामान्यतोदृष्टेन अन्वयव्यतिरेकिणा अनुमानेन ध्वंसप्रागभावप्रतियोगित्वसिद्धिः स्यात्।

यथा—

गगनं ध्वंसप्रतियोगि ... ... ... ( प्रतिज्ञा )

गगनघटान्यतरत्वात् ... ... ... ( हेतुः )

घटवत् ... ... ... ... ... ( दृष्टान्तः )

एवं—

गगनं प्रागभावप्रतियोगि ... ... ( प्रतिज्ञा )

गगनघटान्यतरत्वात् ... ... ... ( हेतुः )

घटवत् ... ... ... ... ... ( दृष्टान्तः )

इत्याद्यनुकूलतर्कविरहितेन सामान्यतो दृष्टानुमानेन तादृशप्रतियोगित्वसिद्धिः स्यात्।

त्वस्यापि सिद्धिप्रसङ्गात्, तद्व्यतिरेकेण कस्यचित् कार्यस्यानुपपत्तेरभावाच्च, एवं संयोगसम्बन्धेन घटवति भूतले समवाय-

---

ननु एवं गगनस्यातीन्द्रियतया "इह गगनं नास्ती" त्यादिप्रत्यक्षप्रतीतेरसम्भवात् यदि गगनात्यन्ताभावो न सिध्येत्, तर्हि गगनादौ घटादिप्रतियोगिकभेदोऽपि न सिध्येत्, अयोग्यानुयोगिकभेदस्य प्रत्यक्षायोग्यत्वात्। अयोग्याधिकरणकभेदस्य प्रत्यक्षाभावात् घटभेदोऽपि गगने न सिध्येत्। प्रत्यक्षतो गगनादिषु तादृशभेदासिद्धावप्यनुमानेन साधनेऽनुकूलतर्काभावस्य कथयितुं शक्यत्वादित्याशङ्क्याह—'तद्व्यतिरेकेणे'त्यादि। न हि कस्यचित् प्रत्यक्षतोऽसिद्धिमात्रेणासिद्धिः, अतीन्द्रियवस्तुमात्रविलयप्रसङ्गात्। प्रत्यक्षेणासिद्धस्याप्यनुमानेन सिद्धिर्भवितुमर्हत्येव। न ह्यनुमानेनातीन्द्रियगगनादिसिद्धिर्भवति एतावताऽतीन्द्रियविषाणमपि शशादावनुमीयेत। तत्रैव तदनुमीयेत यत्र तदसिद्ध्या कस्यचित् कार्यस्यानुपपत्तिः स्यात्। न हि शशे विषाणासिद्ध्या कस्यचित् कार्यस्यानुपपत्तिरस्ति एवं प्रकृतेऽपि गगनेऽत्यन्ताभावप्रतियोगित्वासिद्ध्या न कस्यचित् कार्यस्यानुपपत्तिरस्ति। गगनादौ घटादिभेदस्यासिद्धत्वे घटत्वादेराकाशादिवृत्तित्वापत्त्या घटादीनां कपालादिकार्यत्वप्रत्यक्षस्यानुपपत्तिः स्याद् आकाशस्य घटादभेदे घटत्वस्य नित्यानित्यसाधारणतया कपालकार्यतानवच्छेदकत्वात्। तथा चैतन्मिथ्यात्वानुमानात् प्राक् गगनादौ केवलान्वय्यत्यन्ताभावप्रतियोगित्वासिद्ध्याऽस्मिन् मिथ्यात्वानुमाने न सिद्धसाधनताशङ्काऽपीति भावः।

यथा गगनादौ अत्यन्ताभावप्रतियोगित्वसाधकप्रत्यक्षानुमानाद्यभावान्नात्यन्ताभावप्रतियोगित्वं सिध्यति एवं घटादीनामपि स्वात्यन्ताभावसामानाधिकरण्यसाधकप्रत्यक्षानुमानयोरभावात् तादृशसामानाधिकरण्याभावेन कस्यचित् कार्यस्यानुपपत्तेरभावाच्च न घटादीनां स्वात्यन्ताभावसामानाधिकरण्यमित्याशयवान्नाह—एवमिति। संयोगसम्बन्धेन घटवति भूतले समवायसम्बन्धेन

सम्बन्धेन घटाभावसत्त्वे मानाभावात्; लाघवेन घटात्यन्ताभावत्वेनैव घटसामानाधिकरण्यविरोधित्वकल्पनात् सम्बन्धविशेषप्रवेशे

घटभावसत्त्वे घटस्य स्वात्यन्ताभावसामानाधिकरण्यं स्यात्, किन्तु तादृशस्थले समवायेन घटाभावसत्त्वे प्रत्यक्षानुमानादिप्रमाणाभावेन तदसिद्धेः। घटादेः स्वात्यन्ताभावसामानाधिकरण्यासिद्धौ तु संयोगसम्बन्धेन यद् घटाधिकरणं समवायसम्बन्धेन तन्निष्ठात्यन्ताभावप्रतियोगितया वृत्तिमत्सु घटादिषु न सिद्धसाधनप्रसङ्गः। नापि तत्समाधानाय येन सम्बन्धेन यत् यस्याधिकरणमित्यादिरूपेण मिथ्यात्वं निर्वाच्यमिति भावः।

ननु प्रतियोग्यत्यन्ताभावयोरेव विरोधित्वात् घटादीनां न स्वात्यन्ताभावसामानाधिकरण्यम्। एतद्विरोधित्वमपि सम्बन्धविशेषमन्तर्भाव्य एव कल्पनीयम्। विरोधित्वं नाम सहानवस्थानलक्षणम्। प्रतियोगिना सह न तदत्यन्ताभावोऽवतिष्ठते। तद्देशकालावच्छेदेन तेन सम्बन्धेन तद्रूपविशिष्टप्रतियोगिनोऽधिकरणे तत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगिताकतदत्यन्ताभावः तद्देशकालावच्छेदेन न वर्तते इत्येव प्रतियोगितदत्यन्ताभावयोः सहानवस्थानलक्षणं विरोधित्वम्। तथा च कथं सम्बन्धविशेषानन्तर्भावः, तादृशविरोधान्यथानुपपत्तिरेव संयोगसम्बन्धेन घटाधिकरणे समवायसम्बन्धेन घटाभावस्य साधिका। एवं च कथमुक्तं मूलकृता—"संयोगसम्बन्धेन घटवति भूतले समवायसम्बन्धेन घटाभावसत्त्वे मानाभावादि"ति, तादृशविरोधान्यथानुपपत्तेरेव मानत्वात्; इत्यभिप्रेत्याह—लाघवेनेति। अभावीयप्रतियोगितायाः सम्बन्धावच्छिन्नत्वस्य अकल्पनया लाघवेन, सम्बन्धविषयत्वघटितरूपेणाभावबुद्धेः प्रतिबन्धकत्वस्याकल्पनयापि लाघवसम्भवेन चेत्यर्थः।

घटात्यन्ताभावत्वेनैवेति। प्रतियोगितावच्छेदकसम्बन्धमनन्तर्भाव्य घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वेनैव घटसामानाधिकरण्यं प्रति साक्षात् विरोधित्वकल्पनात् ज्ञानद्वारकविरोधित्वेऽपि प्रतियोगितावच्छेदकसम्बन्धविषयत्वघटितरूपेणाभावनिश्चयस्य प्रतिबन्धकत्वाकल्पनाच्च प्रतियोगितावच्छेदकतया सम्बन्धविशेषप्रवेशे गौरवान्न घटादेः तदत्यन्ताभावसामानाधिकरण्यम्।

च गौरवात्; घटसमवायाद्यभावमात्रविषयतया[1] प्रतीतेरुपपत्तेः;[2]

---

तथाचैकस्य प्रतियोगिनो नानासम्बन्धावच्छिन्नप्रतियोगिताकानन्ताभावकल्पनं गौरवग्रस्तमिति भावः।

ननु घटसंयुक्ते भूतलादौ समवायेन घटो नास्तीति प्रतीतेरन्यथानुपपत्त्या अभावीयप्रतियोगित्वस्य सम्बन्धावच्छिन्नत्वं सिध्येदित्यत आह—घटसमवायाद्यभावमात्रविषयतयेति। घटसंयुक्ते भूतलादौ या समवायेन घटो नास्तीति प्रतीतिः सा न समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावविषयिणी, किन्तु घटसमवायत्वावच्छिन्नप्रतियोगिताकाभावविषयिणी। तादृशप्रतीतेः समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावो न विषयः किन्तु घटसमवायाभावः। तथा च संयोगेन घटवति भूतले समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावोऽसिद्ध एव। या तु समवायेन घटो नास्तीति प्रतीतिः सा तु घटसमवायाभावं किञ्चित्सम्बन्धानवच्छिन्नप्रतियोगिताकमादायैव पर्यवस्यति, न तु घटाभावमवगाहते। अतो न घटादेः स्वात्यन्ताभावसामानाधिकरण्यमिति भावः। अतएवोक्तं मूलकृता समवायेनात्र घटो नास्तीति प्रतीतेः घटसमवायाभावमात्रविषयतयोपपत्तेरिति।

समवायेन घटो नास्तीत्यत्र न घटादेरत्यन्ताभावप्रतियोगित्वं किन्तु घटीयसमवायस्यैव, यथा—"शिखी चैत्रो नष्टः" इत्यत्र न चैत्रस्य नाशप्रतियोगित्वम्, किन्तु चैत्रीयशिखायाः, चैत्रस्य विद्यमानत्वात्। एवं घटवत्यपि घटाभावो न भवितुमर्हति, किन्तु घटीयसमवायसम्बन्धस्यैवाभावः। प्रतियोगितायाः किञ्चित्सम्बन्धावच्छिन्नत्ववादिभिरपि "समवायेन अत्र घटः" इति ज्ञानं प्रति अत्र घटसमवायो नास्तीति निश्चयस्य स्वरूपसम्बन्धावच्छिन्ना या घटसमवायत्वावच्छिन्ना प्रतियोगिता तन्नि-

---

१. घटसमवायाद्यभावमात्रविषयतया = घटसमवायाभावमात्रविषयतया, इति वा पाठः।

२. प्रतीतेरुपपत्तेः = प्रतीत्युपपत्तेः।

सम्बन्धेन घटाभावसत्त्वे मानाभावात्; लाघवेन घटात्यन्ताभावत्वेनैव घटसामानाधिकरण्यविरोधित्वकल्पनात् सम्बन्धविशेषप्रवेशे

घटभावसत्त्वे घटस्य स्वात्यन्ताभावसामानाधिकरण्यं स्यात्, किन्तु तादृशस्थले समवायेन घटाभावसत्त्वे प्रत्यक्षानुमानादिप्रमाणाभावेन तदसिद्धेः। घटादेः स्वात्यन्ताभावसामानाधिकरण्यासिद्धौ तु संयोगसम्बन्धेन यद् घटाधिकरणं समवायसम्बन्धेन तन्निष्ठात्यन्ताभावप्रतियोगितया वृत्तिमत्सु घटादिषु न सिद्धसाधनप्रसङ्गः। नापि तत्समाधानाय येन सम्बन्धेन यत् यस्याधिकरणमित्यादिरूपेण मिथ्यात्वं निर्वाच्यमिति भावः।

ननु प्रतियोग्यत्यन्ताभावयोरेव विरोधित्वात् घटादीनां न स्वात्यन्ताभावसामानाधिकरण्यम्। एतद्विरोधित्वमपि सम्बन्धविशेषमन्तर्भाव्य एव कल्पनीयम्। विरोधित्वं नाम सहानवस्थानलक्षणम्। प्रतियोगिना सह न तदत्यन्ताभावोऽवतिष्ठते। तद्देशकालावच्छेदेन तेन सम्बन्धेन तद्रूपविशिष्टप्रतियोगिनोऽधिकरणे तत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्नप्रतियोगिताकतदत्यन्ताभावः तद्देशकालावच्छेदेन न वर्तते इत्येव प्रतियोगितदत्यन्ताभावयोः सहानवस्थानलक्षणं विरोधित्वम्। तथा च कथं सम्बन्धविशेषानन्तर्भावः, तादृशविरोधान्यथानुपपत्तिरेव संयोगसम्बन्धेन घटाधिकरणे समवायसम्बन्धेन घटाभावस्य साधिका। एवं च कथमुक्तं मूलकृता—"संयोगसम्बन्धेन घटवति भूतले समवायसम्बन्धेन घटाभावसत्त्वे मानाभावादि"ति, तादृशविरोधान्यथानुपपत्तेरेव मानत्वात्; इत्यभिप्रेत्याह—लाघवेनेति। अभावीयप्रतियोगितायाः सम्बन्धावच्छिन्नत्वस्य अकल्पनया लाघवेन, सम्बन्धविषयत्वघटितरूपेणाभावबुद्धेः प्रतिबन्धकत्वस्याकल्पनयापि लाघवसम्भवेन चेत्यर्थः। घटात्यन्ताभावत्वेनैवेति। प्रतियोगितावच्छेदकसम्बन्धमनन्तर्भाव्य घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वेनैव घटसामानाधिकरण्यं प्रति साक्षात् विरोधित्वकल्पनात् ज्ञानद्वारकविरोधित्वेऽपि प्रतियोगितावच्छेदकसम्बन्धविषयत्वघटितरूपेणाभावनिश्चयस्य प्रतिबन्धकत्वाकल्पनाच्च प्रतियोगितावच्छेदकतया सम्बन्धविशेषप्रवेशे गौरवान्न घटादेः तदत्यन्ताभावसामानाधिकरण्यम्।

च गौरवात्; घटसमवायाद्यभावमात्रविषयतया[1] प्रतीतेरुपपत्तेः;[2]

---

तथाचैकस्य प्रतियोगिनो नानासम्बन्धावच्छिन्नप्रतियोगिताकानन्ताभावकल्पनं गौरवग्रस्तमिति भावः ।

ननु घटसंयुक्ते भूतलादौ समवायेन घटो नास्तीति प्रतीतेरन्यथानुपपत्त्या अभावीयप्रतियोगित्वस्य सम्बन्धावच्छिन्नत्वं सिध्येदित्यत आह—**घटसमवायाद्यभावमात्रविषयतयेति**। घटसंयुक्ते भूतलादौ या समवायेन घटो नास्तीति प्रतीतिः सा न समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावविषयिणी, किन्तु घटसमवायत्वावच्छिन्नप्रतियोगिताकाभावविषयिणी। तादृशप्रतीतेः समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावो न विषयः किन्तु घटसमवायाभावः। तथा च संयोगेन घटवति भूतले समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावोऽसिद्ध एव। या तु समवायेन घटो नास्तीति प्रतीतिः सा तु घटसमवायाभावं किञ्चित्सम्बन्धानवच्छिन्नप्रतियोगिताकमादायैव पर्यवस्यति, न तु घटाभावमवगाहते। अतो न घटादेः स्वात्यन्ताभावसामानाधिकरण्यमिति भावः। अतएवोक्तं मूलकृता समवायेनात्र घटो नास्तीति प्रतीतेः घटसमवायाभावमात्रविषयतयोपपत्तेरिति।

समवायेन घटो नास्तीत्यत्र न घटादेरत्यन्ताभावप्रतियोगित्वं किन्तु घटीयसमवायस्यैव, यथा—"शिखी चैत्रो नष्टः" इत्यत्र न चैत्रस्य नाशप्रतियोगित्वम्, किन्तु चैत्रीयशिखायाः, चैत्रस्य विद्यमानत्वात्। एवं घटवत्यपि घटाभावो न भवितुमर्हति, किन्तु घटीयसमवायसम्बन्धस्यैवाभावः। प्रतियोगिताया: किञ्चित्सम्बन्धावच्छिन्नत्ववादिभिरपि "समवायेन अत्र घटः" इति ज्ञानं प्रति अत्र घटसमवायो नास्तीति निश्चयस्य स्वरूपसम्बन्धावच्छिन्ना या घटसमवायत्वावच्छिन्ना प्रतियोगिता तन्नि-

---

१. घटसमवायाद्यभावमात्रविषयतया = घटसमवायाभावमात्रविषयतया, इति वा पाठः ।

२. प्रतीतेरुपपत्तेः = प्रतीत्युपपत्तेः ।

आधाराधेयभावस्य प्रत्यक्षसिद्धत्वेन घटस्यावृत्तित्वशङ्कानुदयात्;

---

रूपकभावविषयत्वेन प्रतिबन्धकत्वं वाच्यम्। सिद्धान्तिभिस्तु तादृशनिश्चयस्य घटसमवायत्वावच्छिन्नप्रतियोगिताकाभावविषयत्वेनैव प्रतियोगितावच्छेदकसम्बन्धानन्तर्भाव्यैव प्रतिबन्धकत्वं वाच्यम्। तथा च प्रतिबन्धकतायां प्रतियोगितावच्छेदकसम्बन्धाप्रवेशकृतं लाघवमेव सिद्धान्तिनाम्। एवं व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्थले "संयोगेन रूपं नास्ती" त्यादिप्रतीतौ सिद्धान्तिमते रूपीयसंयोगादेरप्रसिद्धावपि रूपीयत्वेन संयोगाभावस्यैव विषयत्वात्। व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्थलेऽस्माभिः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव स्वीकृतत्वात् न कोऽपि दोषः।

ननु प्रतियोगितावच्छेदकसम्बन्धमनन्तर्भाव्य घटात्यन्ताभावत्वेनैव साक्षात् घटविरोधित्वस्वीकारेऽपि समवायादिसम्बन्धेन घटात्यन्ताभावस्य भूतलादौ परैरभ्युपगततया सिद्धान्तिभिरपि भूतलादौ घटात्यन्ताभावोऽङ्गीक्रियताम्। घटात्यन्ताभावत्वेनैव घटविरोधितया घटस्यैव वरमवृत्तित्वं परिकल्प्य विरोधः प्रतिसमाधीयतामित्याशङ्क्याह—आधाराधेयभावस्येति। घटभूतलयोराधाराधेयभावस्येत्यर्थः। तादृशाधाराधेयभावस्य प्रत्यक्षसिद्धत्वेन घटस्यावृत्तित्वमादाय भूतलादौ समवायेन घटात्यन्ताभावाङ्गीकारो न युज्यते। घटात्यन्ताभावेनैव घटविरोधित्वात् संयोगेन घटवति भूतलादौ न समवायेन घटात्यन्ताभावाङ्गीकारः सम्भवति।

ननु घटसंयोगि भूतलं घटात्यन्ताभाववद् घटसमवायाभावात्, नित्यरूपवदित्यनुमानेन घटवति भूतले घटात्यन्ताभावोऽनुमास्यते। इत्याशङ्क्याह—उक्तयुक्तेश्चेति। गगनादौ भूतलादिनिष्ठात्यन्ताभावप्रतियोगितानुमानेऽनुकूलतर्काभावात् यथा न गगनस्य तादृशप्रतियोगित्वसिद्धिः तथा प्रकृतेऽपीति दर्शयितुमुक्तयुक्तेश्चेत्युक्तम्। उक्ता या युक्तिरनुमाने अनुकूलतर्कराहित्यम्, यथा सामान्यतो दृष्टमात्रेणानुकूलतर्करहिते-

उक्तयुक्तेश्च न घटादेरत्यन्ताभावसामानाधिकरण्यम्; एवञ्च संयोगतदभावयोर्नैकाधिकरण्यम्[1]; अग्रे वृक्षः कपिसंयोगी मूले नेति

---

नानुमानेन अनभिमतसिद्धिप्रसङ्गः, तथा प्रकृतेऽपि इति भावः। घटवति भूतलादौ घटात्यन्ताभावानुमानेऽनुकूलतर्काभावः। अनुकूलतर्करहितेनाप्यनुमानेन घटवति भूतले घटात्यन्ताभावसिद्धौ भूतलेऽप्यनभिमतस्य घटध्वंसादेरपि सिद्धिप्रसङ्गः। यथा, भूतलं घटध्वंसवत्, कपालभूतलान्यतरत्वात्, कपालवदित्यनुमानतो घटध्वंसस्यापि भूतले सिद्धिप्रसङ्गः। यदि तु तद्व्यतिरेकेण कस्यचित् कार्यस्यानुपपत्तेरभावात् न भूतलादौ घटध्वंसादेः सिद्धिरिति विभावयसि, तर्हि प्रकृतेऽपि तुल्यम्। तथा च घटादेः तदत्यन्ताभावसामानाधिकरण्यसाधकप्रमाणाभावात् प्रत्युत घटात्यन्ताभावत्वेनैव घटविरोधित्वे लाघवान्न घटवति भूतले समवायेन घटात्यन्ताभावस्य सिद्धिः। एवं च येन सम्बन्धेन यत् यस्याधिकरणं तेन सम्बन्धेन तन्निष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वं वाच्यम्, अन्यथा संयोगसम्बन्धेन यद् घटाधिकरणं समवायसम्बन्धेन तन्निष्ठात्यन्ताभावप्रतियोगितया सर्वेषु वृत्तिमत्सु दुरुद्धरं सिद्धसाधनमित्यादि पूर्वोक्तं सर्वमनुपादेयमेव, प्रदर्शितरीत्या वृत्तिमत्सु घटादिषु सिद्धसाधनताशङ्काया एवानुत्थानात्।

वृत्तिमद्घटादिकमादाय प्रकृतानुमाने सिद्धसाधनताशङ्कां निरस्याव्याप्यवृत्तिसंयोगादिकमादाय प्रकृतानुमाने सिद्धसाधनताशङ्कां निरसितुमाह—एवं चेति। संयोगादिषु स्वात्यन्ताभावसामानाधिकरण्याभावान्न संयोगादीनामव्याप्यवृत्तित्वम्। संयोगादीनामपि व्याप्यवृत्तितया प्रतीतिमुपपादयन्नाह—अग्रे वृक्षः कपिसंयोगीत्यादि। "अग्रे वृक्षः कपिसंयोगी न मूले" इति प्रतीत्या न वृक्षस्य कपिसंयोगतदभाववत्त्वं किन्तु वृक्षीयाग्रमूलयोरेव कपिसंयोगतदभाववत्त्वम्। अथ वा अग्रावच्छिन्नवृक्षस्य कपिसंयोगवत्त्वं मूलावच्छिन्नवृक्षस्य तदभाववत्त्वम्, अग्रावच्छिन्नवृक्षात् मूलावच्छिन्नवृक्षस्य

---

1. संयोगतदभावयोर्नैकाधिकरण्यम् = संयोगतदभावयोरपि न सामानाधिकरण्यम्।

प्रतीतेरग्रमूलयोरेव संयोगतदभाववत्तयोपपत्तेः, तदा सन्मात्रनिष्ठा-त्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वं मन्तव्यम् ॥ ४१ ॥

न च एवं सति भावाभावयोरविरोधात् तज्ज्ञानयोः बाध्य-

---

भिन्नत्वात् । तथा च संयोगतदभावयोर्न कुत्रापि अव्याप्यवृत्तिता । एवं चाव्याप्यवृत्तिसंयोगादिकमादाय प्रकृतानुमाने सिद्धसाधनतावारणाय मिथ्यात्वलक्षणे "येन सम्बन्धेन येन चावच्छेदकविशेषेण यदधिकरणता-प्रतीतिर्यत्र भवितुमर्हति तेनैव सम्बन्धविशेषेण तेनैव चावच्छेदकविशेषेण तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमि"त्यवच्छेदकविशेषानु-धावनं न कर्तव्यम्; एवञ्चाव्याप्यवृत्तिगगनादिषु सिद्धसाधनतावारणाय यत् यस्याधिकरणमित्यादिकं न वाच्यम्, न वा वृत्तिमत्सु घटादिषु सिद्धसाधन-तावारणाय येन सम्बन्धेन यत् यस्याधिकरणमित्यादिकं न वा अव्याप्यवृत्ति-संयोगादिषु सिद्धसाधनतावारणायावच्छेदकविशेषोऽन्तर्भावनीयः, एवं तर्हि पर्यवसितं साध्यं मिथ्यात्वं कीदृगित्यत आह—तदा सन्मात्रनिष्ठेति । सत्त्वव्यापकीभूतात्यन्ताभावप्रतियोगित्वमर्थः । केवलसद्रूपस्याभावत्वविशिष्ट-सद्रूपेण सह तादात्म्यसम्बन्धसत्त्वात् अधिकरणमेवाभाव इति मतेऽपि नात्यन्ताभावे सत्त्वव्यापकत्वक्षतिः । न वा "नेह नानास्ति किञ्चने"ति श्रुतेरप्यनुपपत्तिः, अभावस्याधिकरणात्मकत्वमते घटाद्यभावस्य भूतलादौ तादात्म्यसम्बन्धस्वीकारेण ब्रह्मणि प्रपञ्चाभावतादात्म्यस्यैव "नेह नाने"ति श्रुत्या बोधनात् ॥४१॥

४२—प्रकृतमिथ्यात्वानुमानात् पूर्वं घटादीनां स्वात्यन्ताभावसामाना-धिकरण्यस्यासिद्धत्वेऽपि मिथ्यात्वानुमानेन स्वाश्रयत्वेन अभिमतयावन्निष्ठा-त्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वस्य सिद्ध्या स्वात्यन्ताभावसामानाधिकरण्यं लब्धम् । तथा च भावाभावयोः सामानाधिकरण्यात् तयोरविरोधोऽपि भवति । अविरुद्धयोः भावाभावयोरेकस्य ज्ञानमपरज्ञानस्य बाधकं न भवति, किन्तु भावाभावयोर्विरोधस्य तज्ज्ञानयोर्बाध्यबाधकभावस्य च

बाधकभावो न स्यादिति वाच्यम्, भिन्नसत्ताकयोरविरोधेऽपि समसत्ताकयोर्विरोधात् ॥४२॥

यत्र भूतले यस्य घटस्यात्यन्ताभावः व्यावहारिकः, तत्र स घटो न व्यावहारिक इति नियमात् ॥४३॥

न च एवं सति "शुक्तिरियं न रजतमि"ति ज्ञानविषयी-

---

लोकसिद्धत्वात् निरुक्तमिथ्यात्वानुमितिमतां तत् कथं स्यादित्याह पूर्वपक्षी—न च एवं सति...वाच्यमिति। एवं सति—प्रपञ्चमात्रस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वे सति, भावाभावयोः—घटादितदत्यन्ताभावयोः, अविरोधात्—सामानाधिकरण्येनाविरोधात्, तज्ज्ञानयोः—घटादिज्ञानतदत्यन्ताभावज्ञानयोः, बाध्यबाधकभावो न स्यात्—लोकसिद्धबाध्यबाधकभावो न स्यादिति न च वाच्यम्। कथमिति जिज्ञासायामाह सिद्धान्ती—भिन्नसत्ताकयोरित्यादि। प्रतियोग्यपेक्षया अधिकसत्ताकात्यन्ताभावघटितमिथ्यात्वपक्षे प्रतियोग्यभावयोर्भिन्नसत्त्वाकत्वान्न विरोधः, न चैतावता लोकसिद्धविरोधबाध्यबाधकभावव्यवहारयोरपलापः। समसत्ताकप्रतियोगितदत्यन्ताभावावादाय लोकसिद्धविरोधः स्थास्यत्येव, इत्याह—समसत्ताकयोर्विरोधादिति। प्रतियोग्यपेक्षया अन्यूनसत्ताकात्यन्ताभावघटितमिथ्यात्वपक्षे तु नायं ग्रन्थः, प्रतियोगिसमानसत्ताकात्यन्ताभावस्यापि मिथ्यात्वघटकत्वेनाविरोधापत्तेरिति भावः ॥४२॥

४३—समसत्ताकयोः प्रतियोगितदत्यन्ताभावयोः लोकसिद्धं विरोधमुपपादयन्नाह—यत्र भूतल इत्यादि। व्यावहारिकस्य घटात्यन्ताभावस्याधिकरणे भूतलादौ प्रतियोगिनो घटस्य व्यावहारिकत्वं विरुद्धम्, किन्तु प्रातिभासिकत्वमेव। प्रातिभासिकप्रतियोगिव्यावहारिकतदत्यन्ताभावयोः समसत्ताकत्वाभावेन विरोधाभावात् ॥४३॥

४४—समानसत्ताकयोर्भावाभावयोर्विरोधो न युक्तः। न वा समानसत्ताकभावाभावज्ञानयोर्बाध्यबाधकभावो युक्तः। किन्तु प्रातिभासिकान्याभावस्यैव स्वप्रतियोगिविरोधित्वं प्रातिभासिकान्याभावज्ञानप्रतियोगिज्ञानयोश्च

भूताभावस्य व्यावहारिकत्वेन पुरोवर्तिप्रतीतरजतस्य व्यावहारिकत्वापहारेऽपि प्रातीतिकसत्त्वानपहारात् बाधोत्तरकालेऽपि "इदं रजतमि"ति प्रतीतिः स्यादिति वाच्यम्; तत्र "इयं शुक्तिरि"ति अपरोक्षप्रमया प्रातीतिकरजतोपादानाज्ञाननिवृत्तौ प्रातीतिकसत्त्वस्यापि अपहारात्, शुक्त्यज्ञानस्य प्रातीतिकरजतोपादानत्वेन तदसत्त्वे प्रातीतिकरजतासत्त्वस्यावश्यकत्वात् ॥४४॥

अत एव यत्र परोक्षयाऽधिष्ठानप्रमया न भ्रमोपादानाज्ञान-

---

बाध्यबाधकभावः। अन्यथा सिद्धान्तिनोऽनिष्टापत्तिरिति दर्शयितुमाह पूर्वपक्षी—न चैवं सतीत्यादि। शुक्तौ रजतभ्रमानन्तरं "शुक्तिरियं न रजतमि"ति बाधज्ञानविषयीभूतस्य रजताभावस्य सिद्धान्तिभिः व्यावहारिकत्वाङ्गीकारेण समसत्ताकभावाभावयोर्विरोधादभावप्रतियोगिनः पुरोवर्तिप्रातीतिकरजतस्य व्यावहारिकत्वापहारेऽपि विषमसत्ताकयोर्भावाभावयोरविरोधेन बाधज्ञानविषयीभूतस्य रजताभावस्य व्यावहारिकतया प्रातिभासिकरजतस्य प्रातीतिकसत्तानपहारात् "नेदं रजतमि"ति बाधोत्तरकालेऽप्यनपह्नुतप्रातिभासिकसत्तया रजतप्रतीतिः स्यादिति न वाच्यम्। कथमित्याह सिद्धान्ती—तत्रेत्यादि। बाधोत्तरकाले प्रातिभासिकरजतप्रतीतिर्न भवति। प्रातिभासिकरजतसत्तापेक्षयाऽधिकसत्ताकस्य रजतात्यन्ताभावस्य व्याप्यं शुक्तित्वमित्याकारकनिश्चयसहितायाः "इयं शुक्तिरि"त्यपरोक्षप्रमायाः प्रातिभासिकरजतोपादानाज्ञाननिवर्तकत्वेन अज्ञानाभिन्नस्य अज्ञानोपादानस्य प्रातिभासिकरजतस्यापि निवृत्तेः। अधिष्ठानतत्त्वसाक्षात्कारस्य अधिष्ठानगोचराज्ञानोच्छेदकत्वेन अज्ञानपरिणामादेरप्युच्छेदकत्वात्, यथा शुक्तिप्रमया प्रातिभासिकरजतोच्छेदः। तथा च न बाधोत्तरकालेऽपि इदं रजतमिति प्रतीतेरापत्तिः सम्भवति ॥४४॥

४५—अधिष्ठानतत्त्वसाक्षात्कारेणैवाधिष्ठानगोचराऽविद्यातत्प्रयुक्तदृश्ययोः समुच्छेदः, यत्र तु नाधिष्ठानतत्त्वसाक्षात्कारः, किन्तु

निवृत्तिः, तत्र व्यावहारिकत्वापहारेऽपि[1] प्रतीतिकत्वानपहारात् "तिक्तो गुडः" इत्यादिप्रतीतिरनुवर्तत एव ॥४५॥

एवमखण्डब्रह्मसाक्षात्कारात् पूर्वं परोक्षबोधेन प्रपञ्चस्य व्यावहारिकत्वापहारेऽपि, प्रतीतिरनुवर्तत एव, अधिष्ठानाज्ञाननिवृत्तौ तु नानुवर्तिष्यते ॥४६॥

---

परोक्षरूपाधिष्ठानप्रमा, तत्रारोपितस्य मिथ्यात्वनिश्चयेन व्यावहारिकत्वनिवृत्तावपि नाज्ञानतत्प्रयुक्तप्रातिभासिकद्वयोः समुच्छेद इति प्रदर्शयितुमाह—अत एवेति । अधिष्ठानतत्त्वसाक्षात्कारस्यैव अज्ञाननिवर्तकत्वादेव परोक्षया अधिष्ठानप्रमया, न भ्रमोपादानाज्ञाननिवृत्तिः । तत्रारोपितस्य व्यावहारिकत्वापहारेऽपि परोक्षाधिष्ठानप्रमया आरोपितस्य मिथ्यात्वनिश्चयेन व्यावहारिकत्वापहारेऽपीत्यर्थः । परोक्षाधिष्ठानप्रमया आरोपितस्य मिथ्यात्वनिश्चयस्तु आरोपितप्रतियोगिकात्यन्ताभावव्याप्यधर्मवदधिष्ठानमिति ज्ञानसहितयेति बोध्यम् । प्रातीतिकत्वानपहारात्—अधिष्ठानतत्त्वसाक्षात्काराभावेन अधिष्ठानगोचराज्ञानानिवृत्त्या अज्ञानपरिणामरूपस्यारोपितस्य परोक्षाधिष्ठानप्रमया मिथ्यात्वनिश्चयेन व्यावहारिकत्वापहारेऽपि प्रातीतिकत्वानपहारादित्यर्थः । अधिष्ठानतत्त्वसाक्षात्कारप्रतिबन्धकीभूतपित्तदोषमहिम्ना अधिष्ठानतत्त्वसाक्षात्कारानुदयेन तिक्तत्वाध्यासकारणीभूताज्ञानस्य अनिवृत्त्या अज्ञानपरिणतिरूपायाः तिक्तताया अप्यनिवृत्तिः । परन्तु परोक्षाधिष्ठानप्रमया तिक्ततायाः मिथ्यात्वनिश्चयेन व्यावहारिकसत्त्वापहारेऽपि अज्ञानानिवृत्त्या आरोपिततिक्ततायाः प्रातिभासिकसत्त्वानपहारात् तिक्तो गुड इत्यादि प्रतीतिरनुवर्तत एव ॥४५॥

४६—परोक्षाधिष्ठानप्रमया न भ्रमोपादानाज्ञानोच्छेदो न वा अज्ञानोपादानकस्य अज्ञानाभिन्नस्य अज्ञानपरिणतिरूपस्यारोप्यस्य समुच्छेदः, किन्तु परोक्षप्रमया आरोप्यस्य मिथ्यात्वनिश्चयरूपो व्यावहारिकसत्त्वापहारो भवति—इति प्रदर्शयन् प्रकृते दार्ष्टान्तिके योजयन्नाह—एवमिति॥४६॥

---

१. व्यावहारिकत्वापहारे = व्यावहारिकसत्त्वापहारे—इति पाठान्तरम् ।

एतेन • उपाधिशब्देनाधिकरणमात्रविवक्षायामर्थान्तरम्, वाय्वधिकरणकात्यन्ताभावप्रतियोगित्वेऽपि रूपस्यामिथ्यात्वात्; अधिष्ठानविवक्षायां तु भ्रमोपादानाज्ञानविषयस्य अधिष्ठानत्वेनान्योन्याश्रयत्वम् [त्वात], ज्ञानस्य भ्रमत्वे विषयस्य मिथ्यात्वम्,

---

४७—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमिति लक्षणे प्रतिपन्नोपाधावित्यस्य प्रतिपन्ने प्रतीतिविशेष्ये स्वप्रकारकप्रतीतिविशेष्ये इति यावत्, उपाधावधिकरणे इत्यर्थकत्वात् पूर्वपक्षिप्रदर्शितानामर्थान्तरत्वादिदूषणानामनवकाश इति सूचयितुमाह मूलकारः—एतेनेत्यादि। एतेन—इत्यस्य परास्तमिति अग्रेतनेनान्वयः। एतेन—प्रतिपन्नोपाधावित्यस्य प्रदर्शितरूपार्थकथनेन वक्ष्यमाणदूषणजातं निरस्तं वेदितव्यम्। एतन्मिथ्यात्वघटकोपाधिपदस्य यत्किञ्चिदधिकरणमात्रार्थकत्वं गृहीत्वा अर्थान्तरत्वं प्रकृतानुमाने प्रदर्शयन्नाह पूर्वपक्षी—उपाधिशब्देनेति। यत्किञ्चिदधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वस्य प्रतियोगिनः पारमार्थिकत्वाविरोधितया पारमार्थिकत्वाविरोधियत्किञ्चिदधिकरणकात्यन्ताभावप्रतियोगित्वसाधनेऽर्थान्तरत्वम्, यथा वाय्वधिकरणकात्यन्ताभावप्रतियोगित्वेऽपि रूपस्य न मिथ्यात्वं पारमार्थिकत्वाविरोधित्वात्। तादृशप्रतियोगित्वस्य मिथ्यात्वे मिथ्यात्वस्य पारिभाषिकत्वमनुमाने सिद्धसाधनं चेति। यथा उपाधिपदस्याधिकरणमात्रार्थविवक्षायां न प्रकृतानुमानेऽर्थान्तरता, अधिकरणपदस्य यत्किञ्चिदधिकरणमात्रार्थताया अनभ्युपगमात्, एवमुपाधिपदस्यानभ्युपगताधिष्ठानार्थकत्वेन नान्योन्याश्रयतेति प्रदर्शयितुमाह—अधिष्ठानविवक्षायां त्वित्यादि। उपाधिशब्देनाधिष्ठानविवक्षायां तु अन्योन्याश्रयत्वं स्यात्। भ्रमोपादानाऽज्ञानविषयत्वमेव हि अधिष्ठानत्वम्। मिथ्यावस्तुविषयकज्ञानस्य भ्रमत्वम्। भ्रमज्ञानविषयत्वं च मिथ्यात्वमिति ज्ञाने भ्रमत्वग्रहसापेक्षो विषयस्य मिथ्यात्वग्रहः मिथ्यात्वग्रहसापेक्षश्च ज्ञानस्य भ्रमत्वग्रहः—इति

विषयस्य मिथ्यात्वे च ज्ञानस्य भ्रमत्वमिति—परास्तम्, उक्त-रीत्या अधिकरणविवक्षायां दोषाभावात् ॥४७॥

न च 'स एवाधस्तादि'ति श्रुत्या प्रतिपन्ने देशकालाद्युपाधौ परमार्थतो ब्रह्मणोऽभावात्तत्रातिव्याप्तिरिति वाच्यम्; निर्धर्मके तस्मिन्नभावप्रतियोगित्वरूपधर्माभावात् ॥ ४८ ॥

---

ज्ञप्तावन्योन्याश्रयत्वमपि परास्तम्। इदमुपलक्षणम्। उपाधिशब्देनाध्यस्ता-धिष्ठानविवक्षायामध्यस्तस्य मिथ्यात्वरूपत्वेन एतन्मिथ्यात्वलक्षणे ज्ञप्तावात्मा-श्रयदोषोऽपि स्यात्। लक्षणस्य लक्ष्यघटितत्वात्। इत्यप्यनभ्युपगमादेव निरस्तम्। उपाधिशब्देनाधिष्ठानविवक्षाया अभावात्। उपाधिशब्दार्थश्च प्रागेव दर्शितः ॥४७॥

४८—निरुक्तमिथ्यात्वलक्षणस्य निर्धर्मके ब्रह्मणि अतिव्याप्तिं शङ्कते—न चेत्यादि। मयि सुखाद्यनुभव इत्यादि प्रत्यक्षेण सुखाद्यनुभव-रूपस्य ब्रह्मणः प्रतिपन्ने उपाधावहमर्थे, स एवाधस्तात् [छा. उ. ७।२५।१] इति श्रुत्या च ब्रह्मणः प्रतिपन्ने उपाधावधरादिदेशे ब्रह्मणो निर्धर्म-कतया पारमार्थिकत्वेनात्यन्ताभावप्रतियोगित्वस्य सत्त्वाद् ब्रह्मणि, प्रतिपन्नो-पाधौ पारमार्थिकत्वेन त्रैकालिकनिषेधप्रतियोगित्वलक्षणस्यातिव्याप्तिः। मयि सुखानुभवः इति प्रत्यक्षे मदंशस्य सुखानुभवं प्रति प्रतिपन्नोपाधित्वात् सुखानुभवस्य च ब्रह्मरूपत्वात् निर्धर्मकब्रह्मणः पारमार्थिकत्वेन रूपेण मदंशनिष्ठात्यन्ताभावप्रतियोगित्वमस्त्येव। ब्रह्मणोऽपि पारमार्थिकत्वात् कथं पारमार्थिकत्वाकारेण ब्रह्मणो निषेध इति न देश्यम्? ब्रह्मणो निर्धर्मकतया पारमार्थिकत्वानधिकरणत्वात्। मूले परमार्थतः इत्यस्य पारमार्थिकत्वा-कारेणेत्यर्थो बोध्यः; प्रदर्शितामतिव्याप्तिमुद्धरति—निर्धर्मके तस्मिन्नित्यादि। ब्रह्मणो निर्धर्मकत्वात् यथा पारमार्थिकत्वधर्मस्तत्र नास्ति तथा मिथ्यात्व-घटकाभावप्रतियोगित्वरूपधर्मोऽपि नास्ति। तथा च अभावप्रतियोगित्वा-भावादेव ब्रह्मणि नातिव्याप्तिः॥ ४८ ॥

न चैवं सत्यत्वमपि तत्र न स्यात्, तथा च 'सत्यं ज्ञानमनन्तमि'त्यादिश्रुतिव्याकोप इति वाच्यम्; अधिकरणातिरिक्ताभावानभ्युपगमेनोक्तमिथ्यात्वाभावरूपसत्यत्वस्य. ब्रह्मस्वरूपाविरोधात् ।। ४९ ।।

एतेन स्वप्रकाशत्वाद्यपि व्याख्यातम्; परप्रकाश्यत्वाभावो

---

४९—ब्रह्मणो निर्धर्मकत्वात् तत्र सत्यत्वस्याप्यभावेन पुनः ब्रह्मणो मिथ्यात्वमापन्नमित्याह—न चैवमित्यादि। एवं—ब्रह्मणो निर्धर्मकत्वे; तथा च ब्रह्मणः सत्यत्वप्रतिपादिकायाः "सत्यं ज्ञानमि"त्यादिश्रुतेर्बाधः स्यादित्यर्थः। न निर्धर्मकत्वेन ब्रह्मणः सत्यत्वराहित्यं नापि सत्यत्वेन ब्रह्मणः सधर्मकत्वमित्याह मूलकारः—अधिकरणातिरिक्तेत्यादि। सत्यत्वं न भावरूपम्, किन्तु मिथ्यात्वाभावरूपम्; आध्यासिकतादात्म्यसम्बन्धेन तादृशप्रतियोगित्वरूपमिथ्यात्वविशिष्टे ब्रह्मणि स्वरूपसम्बन्धेन मिथ्यात्वाभावस्य सत्त्वात् मिथ्यात्वाभावविशिष्टतादात्म्योपलक्षितब्रह्मचैतन्यस्य सत्यत्वरूपत्वादिति भावः। प्राभाकरमत इव भावाधिकरणातिरिक्ताभावानभ्युपगमेन अभावरूपस्य सत्यत्वस्य ब्रह्मरूपत्वात् सिद्धान्ते ब्रह्मभिन्नवस्तुनोऽभावाच्च। एवं मिथ्यात्वविशिष्टाद् भेदो वा सत्यत्वं बोध्यमिति भावः ॥ ४९ ॥

५०—सत्यत्वस्याभावरूपत्वप्रतिपादनेन स्वप्रकाशत्वादिरूपब्रह्मधर्माणामप्यभावरूपता व्याख्यातेत्यतिदिशन्नाह—एतेनेति। एतेन—सत्यत्वस्याभावरूपत्वेन, स्वप्रकाशत्वाद्यपि व्याख्यातम्, अभावरूपतयेति शेषः। स्वप्रकाशत्वादीनामुपपादनञ्च द्वितीयपरिच्छेदे द्रष्टव्यम्। परप्रकाश्यत्वं हि अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वयोग्यत्वात्यन्ताभावाधिकरणत्वम्, तदभावश्च स्वप्रकाशत्वम्। तथा च तादृशाधिकरणत्वाभाव एव स्वप्रकाशत्वम्। अथ वा तादृशपरप्रकाश्यत्वविशिष्टाद्भेदो वा स्वप्रकाशत्वम्। तादृशाभावश्च ब्रह्मस्वरूप एव। एवं ब्रह्मणो नित्यत्वमपि न भावरूपं धर्मान्तरम्, कालपरिच्छेदाभावो हि नित्यत्वम्। कालपरिच्छेदश्च नाशप्रतियोगित्वं नाशप्रतियोगित्वविशिष्टात् भेदो वा। अन्योन्याश्रयदोषापत्त्याऽनित्यत्वाभावो नित्यत्वमिति नोक्तम्। किन्तु नाशप्रतियोगित्वाभावः। एवं

हि स्वप्रकाशत्वम्, कालपरिच्छेदाभावो नित्यत्वम्; देशपरिच्छेदाभावो विभुत्वम्; वस्तुपरिच्छेदाभावः पूर्णत्वमित्यादि ॥५०॥

तथा च भावभूतधर्मानाश्रयत्वेऽपि ब्रह्मणः सर्वधर्माभावरूप-

---

विभुत्वमपि ब्रह्मणः, अभावरूपमेव। देशपरिच्छेदो नामात्यन्ताभावप्रतियोगित्वम्। तदभावश्च विभुत्वम्। अत्यन्ताभावप्रतियोगित्वविशिष्टात् भेदो वा। पूर्वोक्तयुक्त्याऽविभुत्वाभावो विभुत्वमिति नोक्तम्। एवं ब्रह्मणो पूर्णत्वमप्यभावरूपमेव। अपूर्णत्वमेव वस्तुपरिच्छेदः, तच्चान्योन्याभावप्रतियोगित्वं तदभावो पूर्णत्वमन्योन्याभावप्रतियोगित्वविशिष्टाद्भेदो वा ॥५०॥

५१—सत्यत्वादिधर्माणामत्यन्ताभावरूपत्वेऽन्योन्याभावरूपत्वे वा अभावत्वविशिष्टरूपेणाभावानां मिथ्यात्वात् कथं ब्रह्मणोऽभेदः। अभेदे वा कथं न ब्रह्मणो मिथ्यात्वम्। न च मिथ्यात्वाद्यभावत्वविशिष्टतादात्म्योपलक्षितस्वरूपस्य सत्यतादिरूपत्वमिति वाच्यम्। मिथ्यात्वाद्यभावत्वविशिष्टतादात्म्यस्य शुद्धे ब्रह्मण्यसम्भवेन तत्तादात्म्योपलक्षितत्वस्यापि शुद्धेब्रह्मण्यभावात्। उपलक्षितबुद्धौ विशिष्टबुद्धेर्द्वारत्वादेवं सिद्धान्ते मिथ्यात्वादिधर्मस्य ब्रह्मण्येव कल्पितत्वात् मिथ्यात्वादिविशिष्टप्रतियोगिकभेदस्य ब्रह्मण्यसम्भवेन तादृशो भेदो न सत्यत्वादिरूपो भवितुमर्हति। कथं सत्यत्वादेरभावरूपत्वोपवर्णनमित्याशंक्याह मूलकारः—तथा चेति। तथा च—सत्यत्वादिधर्माणामभावरूपत्वे च, भावभूतधर्मानाश्रयत्वेऽपि—प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपभावभूतमिथ्यात्वस्य आध्यासिकतादात्म्यसम्बन्धेनाश्रयत्वेऽपि ब्रह्मणः स्वरूपादिसम्बन्धेन तादृशप्रतियोगित्वरूपभावभूतधर्मस्यानाश्रयत्वेऽपीत्यर्थः। स्वरूपसम्बन्धेन मिथ्यात्वादिधर्माणामाश्रयो घटादिः, आध्यासिकसम्बन्धेन तु ब्रह्म एव। तथा च मूलस्थितभावभूतेत्यादेरयमर्थः—भावभूतधर्माणां तादृशप्रतियोगित्वरूपमिथ्यात्वादीनां स्वरूपसम्बन्धेनानाश्रयत्वेऽपि ब्रह्मणः सर्वधर्माभावरूपतया ब्रह्माधिष्ठानकानां सर्वेषां मिथ्यात्वादिधर्माणां योऽभावत्वविशिष्टोऽभावः तत्तादात्म्योपलक्षितस्वरूपं च

तया न काप्यनुपपत्तिरिति सर्वमवदातम् ॥५१॥

इति मिथ्यात्वनिरूपणे द्वितीयमिथ्यात्वलक्षणम् ॥

---

सत्यत्वादि । ब्रह्मणस्तादृशसत्यत्वे न प्रदर्शितानुपपत्तिरित्याह—न काप्यनुपपत्तिरिति । इदमिहावधातव्यं—शुद्धे ब्रह्मणि धर्ममात्रस्यानङ्गीकारमात्रेण ब्रह्म सत्यं स्वप्रकाशं नित्यं विभु पूर्णमित्यादिकमुक्तम् । ब्रह्मणः सत्यादिपदवाच्यत्वाभावेन तत्र सत्यादिपदप्रवृत्तिहेतवो नाङ्गीक्रियन्ते । यदपि नित्यं ब्रह्म इति सिद्धान्तिभिरुच्यते तदपि न नित्यत्वाभिसम्बन्धात् । किन्तु घटादिषु यत् कादाचित्कत्वरूपमनित्यत्वं प्रसिद्धं तदभावोपलक्षितस्वरूपं ब्रह्म इति नित्यशब्देनोपचर्यते, यथा तार्किकादिमते "नीलं तमः" इत्यत्र नीलविरोधिरक्तत्वाद्यभावनिबन्धनो नीलत्वोपचारः, एवं देशावच्छेदाभावोपलक्षितस्वरूपं विभुत्वेनोपचर्य्यते । न तु सर्वमूर्तसम्बन्धात् । एतेन—

"स्वरूपेण त्रिकालस्थनिषधो नास्ति ते मते ।
रूप्यादेस्तात्त्विकत्वेन निषेधस्त्वात्मनोऽपि च" ॥

इति पूर्वपक्षिभिर्यदुक्तं तदपि निरस्तम् । स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वेऽपि शुक्तिरूप्यादेर्यथा नालीकत्वं तथा प्रतिपादितमधस्तात् । आत्मनो निर्धर्मकत्वेनैव पारमार्थिकत्वानधिकरणवत् प्रतियोगित्वस्याप्यनधिकरणत्वान्न निर्धर्मके आत्मनि मिथ्यात्वलक्षणस्यातिव्याप्तिः । यदपि ब्रह्मणोऽसदृशत्वोपपादनाय ब्रह्म कालत्रयेऽपि सत् तथा च नित्यं वियदादिरूप्यादि च कदाचिदेव सत् तथा चानित्यमिति नित्यत्वानित्यत्वाभ्यामेव वैषम्यं न तु सत्यत्वमिथ्यात्वाभ्यामित्युक्तं तदपि लक्षणसमर्थनेन सम्भावितमिथ्यात्वस्यानुमानेन प्रपञ्चमात्रस्य मिथ्यात्वसिद्ध्या निरस्तम् । यथा—अमिथ्यावस्तुनोऽनित्यत्वमपि न सम्भवति तदुक्तप्रायमप्यग्रे प्रपञ्चयिष्यते ॥५१॥

इति श्रीमन्महामहोपाध्यायलक्षणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथशर्मविरचितायाम् अद्वैतसिद्धिबालबोधिन्यां द्वितीयमिथ्यात्वलक्षणविवरणम् ॥

## अथ तृतीयमिथ्यात्वलक्षणम्

ज्ञाननिवर्त्यत्वं वा मिथ्यात्वम् ॥१॥

ननूत्तरज्ञाननिवर्त्ये पूर्वज्ञाने अतिव्याप्तिः, मुद्गरपातादि-

---

१—विवरणाचार्यमते, बाध्यत्वमेव मिथ्यात्वम्, तच्च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं ज्ञाननिवर्त्यत्वरूपं वा तत्र प्रथममुपपाद्य ज्ञाननिवर्त्यत्वरूपं बाध्यत्वमुपपादयितुमाह—ज्ञाननिवर्त्यत्वं वा मिथ्यात्वमिति। त्रैकालिकनिषेधप्रतियोगित्वरूपं बाध्यत्वमित्यत्र दूषण-लेशमनुस्मृत्य ज्ञाननिवर्त्यत्वरूपं बाध्यत्वमुक्तमिति न शङ्कनीयम्। पूर्वोक्त-बाध्यत्वलक्षणे दोषलेशस्यापि निरस्तत्वात्। "नेह नानास्ति किञ्चन"-त्यादिश्रुतिस्वारस्येन त्रैकालिकनिषेधप्रतियोगित्वरूपं बाध्यत्वमुक्तम्; इदानीं "तरति शोकमात्मवित्", "विद्वान्नामरूपाद्विमुक्तः" इत्यादिश्रुतिस्वा-रस्येन ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं दर्शयति। निवृत्तिपदस्य तु नाश एव यथाश्रुतोऽर्थः, तथा च ज्ञाननाश्यत्वं ज्ञाननिवर्त्यत्वम्। तच्च ज्ञाननिष्ठ-कारणतानिरूपितकार्यतावन्नाशप्रतियोगित्वम्। नाशकं ज्ञानम्, नाश्यं मिथ्यावस्तुमात्रम् ॥१॥

२—ज्ञानस्य नाशकत्वमात्रेण नाश्यस्य मिथ्यात्वेऽतिप्रसङ्ग इति दर्शयितुं पूर्वपक्षी शङ्कते—नन्विति। योग्यविभुविशेषगुणानां स्वोत्तर-वर्तिविशेषगुणनाश्यत्वेनोत्तरज्ञाननाश्ये पूर्वज्ञाने ज्ञाननाश्यत्वरूपमिथ्यात्व-सत्त्वात्, मिथ्यात्वलक्षणस्यातिव्याप्तिः, प्रकृतानुमाने सिद्धसाधनमित्यर्थः। सिद्धान्ते पूर्वज्ञानस्यापि मिथ्यात्वेन तत्र लक्षणस्यातिव्याप्तिप्रदर्शनं न सङ्गच्छते, एवमुत्तरत्रापि बोध्यम्। पूर्वज्ञाने उत्तरज्ञाननाश्यत्वस्य तत्पार-मार्थिकत्वाविरोधात। उत्तरज्ञाननाश्यत्वमात्रेण पूर्वज्ञाने मिथ्यात्वव्यवहारा-भावाच्च। तथा च सत्यत्वाविरोधिनि मिथ्यापदस्य पारिभाषिकत्वापत्तिः। लक्षणस्यातिव्याप्तिमुक्त्वा अव्याप्तिमाह—मुद्गरपातादीति—ज्ञानेन

निवर्त्ये च घटादावव्याप्तिः, ज्ञानत्वेन ज्ञाननिवर्त्यत्वविवक्षायामप्ययं दोषः, अधिष्ठानसाक्षात्कारत्वेन निवर्त्ये शुक्तिरजतादौ च ज्ञानत्वेन

---

विनापि मुद्गरपातादिनिवर्त्ये घटादावव्याप्तिः। सिद्धान्तिमते घटस्यापि मिथ्यात्वेन लक्ष्यत्वात्, ज्ञाननाश्यत्वरूपमिथ्यात्वलक्षणस्याव्याप्तिः, इदमुपलक्षणम्। प्रकृतानुमाने चांशतो बाधः। शुक्तिज्ञानेन रजतं नष्टमिति कदाप्यननुभवेन शुक्तिरजते लक्षणस्य अव्याप्तिः, प्रकृतानुमाने च दृष्टान्ते साध्यवैकल्यम्। शुक्तिविषयकाज्ञानस्य रजतभ्रमस्य च नासीत्, नास्ति न भविष्यतीति प्रत्ययाभावेन रजतवत् तयोर्न मिथ्यात्वं सिद्धान्तिभिरपि वक्तुं शक्यम्। एतावन्तं कालं शुक्त्यज्ञानमासीत्, रजतभ्रम आसीत्, इत्यनुभवेन च शुक्तिवत् सत्ये शुक्त्यज्ञाने रजतभ्रमे च शुक्तिज्ञानेन तदज्ञानं नष्टं रजतभ्रमश्च नष्ट इत्यनुभवेन ज्ञाननिवर्त्यत्वस्य सत्ये शुक्त्यज्ञाने रजतभ्रमे च सत्त्वात् लक्षणस्यातिव्याप्तिः। शुक्तिज्ञानेन रजतबाधानन्तरं यथा रजतं नासीदिति प्रतीतिर्नैवं शुक्तिज्ञानेन शुक्त्यज्ञाननाशानन्तरं शुक्त्यज्ञानं नासीदिति प्रतीतिः सम्भवति। एतावन्तं कालं शुक्त्यज्ञानमासीदिति प्रतीतिविरोधात्। तथा च शुक्त्यज्ञानरजतभ्रमयोर्मिथ्यारजतवैलक्षण्येन सत्यत्वात्तयोरलक्ष्यत्वम्। अलक्ष्ये च लक्षणगमनादतिव्याप्तिः। न च मिथ्यारजतविषयकज्ञानस्य मिथ्यात्वमेवेति वाच्यम्। सिद्धान्ते मिथ्यासुखदुःखादिभासकसाक्षिणः सत्यत्ववत् मिथ्यारजतविषयकज्ञानस्यापि सत्यत्वोपपत्तेः।

उत्तरज्ञाननाश्ये पूर्वज्ञानेऽतिव्याप्तिवारणाय ज्ञानत्वेन ज्ञाननाश्यत्वमेव मिथ्यात्वं वाच्यम्। तथा च नाशकतावच्छेदकमत्र ज्ञानत्वम्। उत्तरज्ञाने यद्यपि पूर्वज्ञाननाशकता वर्तते तथापि नाशकतावच्छेदकं न ज्ञानत्वम्, किन्तु स्वोत्तरवर्तिविशेषगुणत्वमेव। स्वोत्तरवर्तीच्छादीनामपि ज्ञाननाशकत्वानुरोधेन न ज्ञानत्वं नाशकतावच्छेदकम्, किन्तु स्वोत्तरवर्ति विशेषगुणत्वमेव। एतादृशविवक्षायां प्रदर्शितातिव्याप्तिवारणेऽपि प्रदर्शिताव्याप्तेरवारणादित्याह पूर्वपक्षी—ज्ञानत्वेनेति। अयं दोषः—मुद्गरपातादिनिवर्त्ये घटादाव-

ज्ञाननिवर्त्यत्वाभावात् साध्यविकलता, ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वविवक्षायां ज्ञानत्वव्याप्येन स्मृतित्वेन ज्ञाननिवर्त्ये

---

व्याप्तिरूपो दोषः। ज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतावन्नाशप्रतियोगित्वस्य मिथ्यात्वे लक्षणस्यासम्भवदोषोऽपि स्यादित्याह—अधिष्ठानसाक्षात्कारत्वेनेति। आरोपितशुक्तिरजतादेः तदधिष्ठानतत्त्वसाक्षात्कारत्वेन नाश्यत्वान्नाशकतावच्छेदकमधिष्ठानतत्त्वसाक्षात्कारत्वं न तु ज्ञानत्वम्। तथा च प्रसिद्धेऽपि लक्ष्ये शुक्तिरजतादौ लक्षणस्यागमनात् कुत्राप्यारोपिते वस्तुनि ज्ञानत्वेन ज्ञाननिवर्त्यत्वाभावाल्लक्षणस्यासम्भवः। प्रकृतानुमाने शुक्तिरजतादौ ज्ञानत्वेन ज्ञाननिवर्त्यत्वरूपसाध्याभावाद् दृष्टान्ते साध्यवैकल्यमपि। सिद्धान्तिमतेऽपि प्रपञ्चनाशं प्रति ब्रह्मज्ञानस्य न ज्ञानत्वेन कारणता। चरमतत्त्वज्ञानजन्यप्रपञ्चनाशस्य चरमतत्त्वज्ञानस्य तन्नाशस्य च नाशकाभावेनानाशापत्त्या "विद्वान् नामरूपाद्विमुक्तः" इत्यादिश्रुतिविरोधापत्तेः। तादृशनाशस्य ज्ञाननाश्यत्वाभावेन सत्यत्वापत्त्या "अतोऽन्यदार्तमि"ति श्रुतिविरोधापत्तेश्च।

यदि ज्ञाननिवर्त्यत्वमात्रं वा ज्ञानत्वेन ज्ञाननिवर्त्यत्वं वा मिथ्यात्वं नाङ्गीक्रियते, किन्तु ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वं मिथ्यात्वमुच्यते, तथा च नासम्भवः; नाप्यधिष्ठानतत्त्वसाक्षात्कारत्वेन ज्ञाननिवर्त्ये शुक्तिरजतादौ साध्यविकलता साक्षात्कारत्वस्यापि ज्ञानत्वव्याप्यधर्मत्वादित्याशङ्क्य पूर्वपक्षी अत्रापि दोषमाह—स्मृतित्वेन ज्ञाननिवर्त्ये इत्यादि। संस्कारनाशकतावच्छेदकस्मृतित्वस्य ज्ञानत्वव्याप्यधर्मत्वात्। तथा च ज्ञानत्वव्याप्यधर्मेण स्मृतित्वेन स्मृतिनाश्ये संस्कारे मिथ्यात्वलक्षणस्यातिव्याप्तिः। अत्राप्यतिव्याप्तिपदं पूर्ववत् सिद्धसाधनपरम्। स्मृतिनाश्यत्वेन संस्कारस्य मिथ्यात्वव्यवहाराभावात्। संस्कारस्य मिथ्यात्वाङ्गीकर्तृमतेऽपि स्मृतित्वेन स्मृतिनाश्यत्वप्रयुक्तमिथ्यात्वानङ्गीकारात्।

न च स्मृतित्वं न संस्कारनाशकतावच्छेदकम्। किन्तु स्वोत्तरोत्पन्नात्मविशेषगुणत्वमेव। आत्मविशेषगुणत्वं तु न ज्ञानत्वव्याप्यधर्मः। तथा च

संस्कारेऽतिव्याप्तिरिति चेत् ? ॥२॥

न, ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं हि ज्ञान-

---

ज्ञानत्वव्याप्यधर्मेण ज्ञाननाश्यत्वाभावान्न संस्कारेऽतिव्याप्तिरिति वाच्यम्। स्वोत्तरोत्पन्नात्मविशेषगुणत्वेन स्मृतेः संस्कारनाशकत्वे इच्छादितोऽपि संस्कारनाशप्रसङ्गात्।

न च अनुभवत्वव्याप्यधर्मावच्छिन्नकारणतानिरूपितकार्यतावन्नाशप्रतियोगित्वमेव मिथ्यात्वम्, स्मृतित्वं तु न अनुभवत्वव्याप्यधर्मः, अतो न स्मृतिनाश्यसंस्कारेऽतिव्याप्तिशङ्कापि इति वाच्यम्। अयथार्थस्मृतिविषयनिवर्त्तिकायां यथार्थस्मृतौ अनुभवत्वव्याप्यधर्माभावाद् अयथार्थस्मृतिविषयेऽव्याप्तिः। तथा च न ज्ञाननिवर्त्यत्वं मिथ्यात्वम्। न च भ्रमोत्तरयथार्थज्ञाननिवर्त्यत्वमेव मिथ्यात्वम्। तथा च न यथार्थस्मृतिनाश्येऽयथार्थस्मृतिविषयेऽव्याप्तिः, अयथार्थस्मृतिविषयस्यापि यथार्थज्ञाननिवर्त्यत्वादिति वाच्यम्, तत्त्वज्ञानजनितसंस्कारनिवर्त्तनीये भ्रमसंस्कारेऽव्याप्त्यापत्तेः। तथा हि सिद्धान्ते भ्रमसंस्कारस्यापि मिथ्यात्वेन यथार्थज्ञानानिवर्त्तनीये यथार्थज्ञानजन्यसंस्कारमात्रनिवर्त्ये भ्रमसंस्कारे प्रदर्शितलक्षणाभावादव्याप्तिः।

न च स्वोपादानाज्ञाननिवर्त्तकज्ञाननिवर्त्यत्वमेव मिथ्यात्वम्, मिथ्याज्ञानजन्यसंस्कारस्य च स्वोपादानाज्ञाननिवर्त्तकज्ञाननिवर्त्यत्वस्य सत्त्वान्न तादृशसंस्कारेऽव्याप्तिरिति वाच्यम्, अनाद्यविद्याद्यध्यासे लक्षणस्याव्याप्तेरविद्यादीनामनादितया निरुपादानत्वात्। एतादृशगुरुभूतलक्षणापेक्षया अज्ञानोपादानत्वस्यैव लघुभूतस्य लक्षणत्वोपपत्तेः। इति पूर्वपक्षविवरणसंक्षेपः ॥२॥

३—अत्र सिद्धान्तः—नेति। ज्ञाननिवर्त्यत्वं मिथ्यात्वमिति प्रथमपक्षोऽपि सङ्गच्छत इत्यर्थः। ज्ञाननिवर्त्यत्वमेव निर्वक्ति आह—ज्ञानप्रयुक्तावस्थितीति। अत्र ज्ञानपदमधिष्ठानतत्त्वज्ञानपरम्। प्रयुक्तपदं व्यापकपरम्। अवस्थितिसामान्यं च स्वस्वीयसंस्कारान्यतररूपम्। निवृत्तिपदमत्यन्ताभावपरम्। तथा च अधिष्ठानतत्त्वज्ञानव्यापको योऽज्ञानादेरवस्थितिसामान्यस्यात्यन्ताभावः तत्प्रतियोगित्वं मिथ्यात्वम्। एवञ्चाज्ञानादेः तत्त्वज्ञान-

निवर्त्यत्वम् ॥ ३॥

---

निवर्त्यत्वं न तत्त्वज्ञाननिष्ठकारणतानिरूपितकार्यतावदज्ञानादिनाशप्रतियोगित्वम्, किन्तु 'तत्त्वज्ञाननिष्ठव्याप्यतानिरूपितव्यापकतावदत्यन्ताभावप्रतियोगित्वमज्ञानादेः मिथ्यात्वम्। तत्त्वज्ञानं व्याप्यम्, व्यापकस्त्वभावः। तत्त्वज्ञानदृश्याभावयोः ज्ञाप्यज्ञापकभाव एव, न तु जन्यजनकभावः। ज्ञानेन निवर्त्तनीयत्वमित्यत्र तृतीया न कारकहेतौ, किन्तु ज्ञापकहेतौ। एवमन्यत्र। एतेन ज्ञानेन दृश्यनिवृत्तिर्यदि ध्वंसः, तर्हि ध्वंसस्य सत्यत्वे अद्वैतश्रुतिविरोधः। ध्वंसस्य मिथ्यात्वे तस्योच्छेदकाभावात् "विद्वान्नामरूपाद्विमुक्तः" इति श्रुतिव्याकोपः। ध्वंसस्य मिथ्यात्वे तदुपादानाविद्यावश्यम्भावेन मुक्तावपि अविद्याया अनिवृत्तिरिति दुस्तार्किकोत्प्रेक्षितं दूषणजातं निरस्तम्। यदपि तत्त्वज्ञानजनितदृश्यनाशस्य नाशकाभावेनानिवृत्त्या नाद्वैतव्याघातः, अद्वैतप्रतिपादकशास्त्रेण भावाद्वैतबोधनात्—इति एकदेशिमतम्, तदपि तुच्छम्, द्वैतमात्राभावप्रतिपादिकायाः श्रुतेर्भावभूतद्वैतस्याभावप्रतिपादने लक्षणाप्रसङ्गात्। ध्वंसस्य मिथ्यात्वे तदुपादानाविद्यायाः भावभूताया अप्यवश्याङ्गीकरणीयत्वेन भावाद्वैतस्यापि असम्भवाच्च। यथा चैतन्निवृत्तिपदं नाशपरमपि सम्भवति, तथा प्रतिपादितं लघुचन्द्रिकायामिति तत्रैव द्रष्टव्यम्। तथापि दिङ्मात्रमिदमुच्यते — ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वमिति लक्षणे विरहपदं नाशपरम्, ज्ञानप्रयुक्तोऽधिष्ठानतत्त्वज्ञानाधीनोऽवस्थितिसामान्यस्य स्वस्वीयसंस्कारोभयरूपस्य यो नाशः तत्प्रतियोगित्वमेव मिथ्यात्वम्। मुद्गरपातजन्यनाशप्रतियोगित्वेऽपि घटस्य न स्वस्वीयसंस्कारोभयनाशप्रतियोगित्वम्; तादृशप्रतियोगित्वं तु तत्त्वज्ञानाधीनमेवेति नातीतघटादावव्याप्तिः। इत्यभिप्रेत्याह मूलकारः अवस्थितिश्च द्वेधेति। मुद्गरपातेन घटस्वरूपस्य नाशेऽपि घटस्य स्वरूपसंस्कारोभयनाशः ब्रह्मज्ञानाधीन एव, मुद्गरपातानन्तरं घटः स्वरूपेण नष्ट इत्यनुभववत् कारणात्मना नष्ट इत्यनुभवाभावात्—इत्याह ब्रह्मज्ञानप्रयुक्त एव स इति। सः—उभयनाशः, तथा च नातीतघटादौ अव्याप्तिः। नापि सिद्धसाधनम्,

उत्तरज्ञानेन पूर्वज्ञानस्वरूपनाशेऽपि उभयनाशाभावदित्याह—अत एवेति। अन्यत् लघुचन्द्रिकायां द्रष्टव्यम्।

ननु दृश्यनाशस्य नाशासम्भवेन तत्त्वज्ञानस्य च नाशकाभावेन "विद्वान्नामरूपाद्विमुक्तः" इति श्रुतिविरोध इति चेत्? न, चित्तवृत्तिरूपचरमतत्त्वज्ञानस्य स्वस्वेतरसकलदृश्यनिवर्त्तकत्वात्; उक्तं च कल्पतरुकृद्भिः—"शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतुरुदयते" इति। चरमतत्त्वज्ञानस्य स्वस्वेतरसकलदृश्यध्वंसरूपत्वमपि न्यायरत्नावल्यादौ उक्तम्। दृश्यमात्रस्य ब्रह्मणि कल्पितत्वेन कल्पितवस्तुनाशस्याधिष्ठानमात्रत्वात् न दृश्यनाशमादायाद्वैतव्याघातः सम्भवति; उक्तं च वार्तिककृद्भिः—"अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" इति। अतो मिथ्यात्वघटकविरहपदस्य नाशपरत्वे हि न कोऽपि दोषः।

न्यायरत्नावलीकृतस्तु दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वानधिकरणत्वमेव दृश्योच्छेदः। चरमतत्त्वज्ञानोत्पत्तिक्षणे दृश्याधिकरणक्षणपूर्ववत्वं नास्ति। चरमतत्त्वज्ञानोत्पत्तेरनन्तरं दृश्याधिकरणक्षणस्याप्रसिद्धत्वात्। एतच्च जीवैकत्वपक्षे, जीवनानात्वपक्षे तु तज्जीवीयत्वमपि निवेश्यम्। तथा च तज्जीवीयचरमतत्त्वज्ञानक्षणे तज्जीवीयदृश्याधिकरणक्षणपूर्वत्वाभावो बोध्यः। न च तादृशतत्त्वज्ञानोत्पत्तिक्षणे दृश्यपूर्वत्वाभाव इत्येवोच्यताम्, किं दृश्याधिकरणकालनिवेशेनेति वाच्यम्। दृश्यपूर्वत्वं नाम दृश्यप्रागभावाधिकरणकालवृत्तित्वम्, तदभावो न दृश्योच्छेदः, तार्किकमताविशेषापत्तेः। चरमतत्त्वज्ञानक्षणवृत्तिदृश्यानामग्रिमकालानुवृत्तिवादिनां तार्किकानां मतेऽपि तादृशोच्छेदव्यवहारसम्भवात्, अविद्याद्यनादिदृश्यानां तादृशोच्छेदासम्भवाच्च, अनाद्यविद्यादीनां प्रागभावाप्रसिद्धेः। एवं च एतन्मते एतादृशी व्याप्तिः—यो यस्तत्त्वप्रमोत्पत्तिक्षणः सः तत्त्वविषयकाज्ञानतत्प्रयुक्तदृश्याधिकरणकालपूर्वत्वाभाववान्। तत्त्वज्ञानस्य क्षणिकत्वाङ्गीकारे इयं व्याप्तिः। क्षणद्वयस्थायित्वाङ्गीकारे तु यो यः तत्त्वप्रमोत्पत्तिद्वितीयक्षणः सः तत्त्वविषयकाज्ञानतत्प्रयुक्तदृश्याधिकरणकालपूर्वत्वाभाववान्। एतादृश्यां व्याप्तावनुकूलतर्कोऽग्रे वक्ष्यते।

ननु एवं तादृशदृश्योच्छेदस्य ज्ञापकत्वमेव चरमतत्त्वसाक्षात्कारे वर्तते न तु जनकत्वम् । तथा च तादृशदृश्योच्छेदाजनके चरमतत्त्वज्ञाने इच्छानुपपत्तिः, मनोवृत्तिविशेषरूपस्य तत्त्वज्ञानस्य सुखभिन्नत्वात्, दुःखाभावभिन्नत्वाच्च तस्य फलरूपत्वाभावात् फलेच्छा न सम्भवति । नापि तत्साधनत्वं तत्त्वज्ञानस्य, त्वयैव ज्ञापकत्वस्योक्तत्वात् । अतः साधनेच्छापि न सम्भवति—इति चेत् ? न, तत्त्वज्ञानस्य फलरूपत्वाभावे तत्साधनत्वाभावेऽपि इष्टव्याप्यत्वात् तत्त्वज्ञानस्य, तत्त्वज्ञानविषयिणी इच्छा सम्भवत्येव । तादृशदृश्योच्छेदव्याप्ये चरमतत्त्वज्ञानेऽपि इच्छा जायते । तादृशदृश्योच्छेदस्य दुःखोच्छेदरूपतयेष्टत्वात् । यस्मिन् सत्यवश्यमिष्टं तत्रेच्छायाः सर्वानुभवसिद्धत्वात् ,इष्टाजनकेऽपीष्टव्याप्ये चरमतत्त्वज्ञाने इच्छा सम्भवत्येव ।

ननु चरमतत्त्वज्ञानस्य दृश्यनाशकत्वाभावे चरमतत्त्वज्ञानोत्तरं दृश्यं क्व गतम्—इति प्रश्ने किमुत्तरम् ? दर्शनान्तरे तु चरमतत्त्वज्ञानस्यात्यन्तिकदुःखध्वंसजनकत्वात् चरमतत्त्वज्ञानोत्पत्त्यनन्तरं दुःखस्य सत्त्वशङ्कायाः असम्भवात् ।

एवमपि विनष्टं दुःखं क्व गतमिति प्रश्ने किमुत्तरम् ? अथ न कुत्रापि गतम्,—इति चेत्, तर्हि तत्त्वज्ञानोत्तरमपि दुःखं कुतो न प्रमीयते ? इति प्रश्ने दर्शनान्तरेऽपि एतदेव वक्तव्यं यत् ध्वंसाधिकरणकालस्य प्रतियोग्यधिकरणत्वाभावनियमस्वीकारेण ध्वंसाधिकरणकाले प्रतियोगी न प्रमीयते ।

एवं तर्हि तत्त्वज्ञानोत्पत्तिक्षणस्य दृश्याधिकरणकालपूर्वत्वाभावनियमाङ्गीकारेण ममापि न किञ्चित् दूष्यति । तत्त्वज्ञानस्य दुःखनाशकत्वाङ्गीकारेऽपि तत्त्वज्ञानोत्तरं दुःखानुपलम्भे प्रदर्शितनियम एवं यथा तव शरणम्, तथा तत्त्वज्ञानस्य दुःखनाशकत्वानङ्गीकारेऽपि तत्त्वज्ञानोत्तरं दुःखानुपलम्भे प्रदर्शितनियम एव ममापि शरणमिति भावः । सिद्धान्तिमते प्रमायाः स्वसमानविषयकाज्ञानतत्प्रयुक्तदृश्यविरोधित्वनियमाभ्युपगमात् शुक्त्यादि-

अवस्थितिश्च द्वेधा, स्वरूपेण कारणात्मना च, सत्कार्यवादाभ्युपगमात् ॥४॥

---

प्रमायां तथा दर्शनान्न किञ्चिदनुपपन्नम्। एवं च निवृत्तिपदस्य ध्वंसार्थकत्वमादाय पूर्वपक्षिभिः प्रदर्शितानि दूषणानि निरस्तानि।

ननु तत्त्वज्ञानस्य संसारनाशकत्वाभावे प्रदर्शितविरोधित्वनियम एवानुपपन्नः। नाशकस्य प्रतियोगिविरोधित्वदर्शनात्, इति चेत्? न। अनाशकेऽपि प्रतियोगिविरोधित्वनियमग्रहणसम्भवात्। यथा प्रभाकरमते तत्कालविशिष्टं कपालमेव घटनाशः, यथा वा तत्कालविशिष्टः आत्मा एव दुःखनाशः अङ्गीक्रियते, भावभूताधिकरणातिरिक्ताभावानङ्गीकारात्। एवञ्च त्वन्मते घटनाशाजनकत्वेऽपि यथा मुद्गरपातस्य घटविरोधित्वं, यथा वा दुःखनाशाजनकत्वेऽपि च तत्त्वज्ञानस्य दुःखविरोधित्वं तथा अस्मन्मतेऽपि सम्भवात्। यदि मुद्गरपातस्य घटविरोधित्वं न स्यात्, तदा मुद्गरपातानन्तरमपि घटानुवृत्तिः स्यात्। एवं तत्त्वज्ञानस्य यदि दुःखविरोधित्वं न स्यात्, तर्हि तत्त्वज्ञानानन्तरमपि दुःखानुवृत्तिः स्यात्—इत्यादि तर्कसम्भवेन प्रभाकरमते नाशाजनकस्यापि यथा प्रतियोगिविरोधित्वनियमः सम्भवति एवं सिद्धान्तिमतेऽपि नाशाजनकस्यापि प्रतियोगिविरोधित्वनियमः सम्भवतीति न किञ्चित् हीयते ॥३॥

४—तथा च अधिष्ठानतत्त्वज्ञानज्ञाप्यः योऽवस्थितिसामान्यात्यन्ताभावस्तत्प्रतियोगित्वमेव ज्ञाननिवर्त्यत्वम्। अवस्थितिसामान्यकथनस्य अभिप्रायं दर्शयति—अवस्थितिश्चेत्यादि। विवरणाचार्यैर्हि "अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः" इत्युक्तम् तदेवाह—प्रविलीनेनेति। तथा च विवरणग्रन्थे अज्ञानकार्यस्य या प्रविलीनरूपता उक्ता, सा एव अत्र कारणात्मशब्देन प्रदर्शिता, या च तत्र वर्तमानरूपता उक्ता सैवात्र स्वरूपशब्देन प्रदर्शिता, सिद्धान्ते कार्यमात्रस्य अधिष्ठानतत्त्वसाक्षात्कारपर्यन्तं कार्याभिन्नं किञ्चिद्रूपमवश्यं तिष्ठतीति

तथा च मुद्गरपातेन घटस्य स्वरूपेण अवस्थितिविरहेऽपि कारणात्मनाऽवस्थितिविरहाभावात् ब्रह्मज्ञानप्रयुक्त एव सः—इति न अतीतघटादौ अतिव्याप्तिः ॥५॥

---

अङ्गीकारात् कार्यस्य स्वरूपेण निवृत्तावपि संस्काररूपेणावस्थानात्। मुद्गरपातानन्तरं घटस्य, स्वरूपेणावस्थितिविरहेऽपि कारणात्मना अवस्थानात्। अभिव्यक्तानभिव्यक्तावस्थयोः तादात्म्याभ्युपगमादेव अत्र सत्कार्यवादाभ्युपगम उक्तः। प्रलये कार्याणामभिव्यक्तरूपतायाः निवृत्तावपि अनभिव्यक्तरूपेणावस्थानं श्रुतिसिद्धम्। "तत् ह इदं तर्हि अव्याकृतम् आसीत्" इत्यादि श्रुतौ अव्याकृतपदार्थस्य इदं पदार्थाभेदेन निर्देशात् ॥४॥

५—एवं च यदर्थं कार्यस्य अवस्थितिद्वैविध्यं प्रदर्शितं तद्दर्शयति—तथा च मुद्गरपातेनेति। मुद्गरपातेन घटस्य स्वरूपेणावस्थितेः अभावो नाम घटस्य नाशः। नाशो नाम पूर्वावस्थातादात्म्यापन्नोत्तरावस्था। सा एव कारणात्मता उच्यते। मुद्गरपातेन घटस्य कारणात्मना अवस्थितेर्विरहो न भवति। अन्यथा मुद्गरपातेन घटः स्वरूपेण निवृत्त इत्यनुभववद् घटः कारणात्मना निवृत्त इत्यनुभवापत्तेः कारणात्मना अवस्थितेः विरहस्तु अधिष्ठानतत्त्वसाक्षात्कारादेव, इत्याह—ब्रह्मज्ञानप्रयुक्त एव स इति। एवञ्च अतीतघटादौ ज्ञाननिवर्त्यत्वलक्षणस्य अव्याप्तिपरिहाराय कार्यमात्रस्य अवस्थितिद्वैविध्यं प्रतिपाद्य अतीतघटादौ अव्याप्तिः निवारिता। अतीतघटादेर्निवृत्तत्वादेव ज्ञाननिवर्त्यत्वानुपपत्त्या लक्षणस्याव्याप्तिर्न भवति। मुद्गरप्रहारादिना घटस्य स्वरूपेण निवृत्तावपि कारणात्मना अवस्थानान्न अतीतघटादेरवस्थितिसामान्यविरहः। घटादेरवस्थितिसामान्यविरहस्तु घटाधिष्ठानब्रह्मतत्त्वसाक्षात्कारादेव भवतीत्याह—ब्रह्मज्ञानप्रयुक्त एव स इति। अतीतघटस्यापि कारणात्मना अवस्थितस्य अधिष्ठानतत्त्वसाक्षात्कारप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वरूपं मिथ्यात्वमक्षतमेव ॥५॥

अत एवं उत्तरज्ञाननिवर्त्ये पूर्वज्ञाने न सिद्धसाधनम्, न वा वियदादौ ब्रह्मज्ञाननाश्यत्वेऽपि तद्वदेव मिथ्यात्वासिद्ध्या अर्थान्तरम्; उत्तरज्ञानेन लीनस्य पूर्वज्ञानस्य स्वकारणात्मना अवस्थानात् अवस्थितिसामान्यविरहानुपपत्तेः ॥६॥

---

६—यतः ज्ञानजन्यनाशप्रतियोगित्वरूपमिथ्यात्वं न साध्यम्, किन्तु अधिष्ठानतत्त्वज्ञानव्यापको योऽवस्थितिसामान्याभावः तत्प्रतियोगित्वमेव ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं साध्यम्, तेन नोत्तरज्ञाननिवर्त्ये पूर्वज्ञाने सिद्धसाधनम्, न वा वियदादौ मिथ्यात्वासिद्ध्या अर्थान्तरमित्याह मूलकारः—अत एवेति। यतः ज्ञाननिवर्त्यत्वं प्रदर्शितरूपमतस्तादृशमिथ्यात्वानुमाने न सिद्धसाधनम्, उत्तरज्ञानेन पूर्वज्ञानस्य स्थूलरूपे विनष्टेऽपि स्थूलाभिन्नसूक्ष्मरूपस्याविनष्टत्वात्। यथा च न ज्ञाननिवर्त्ये स्वप्रागभावादौ सिद्धसाधनम्, न वा सेतुदर्शननिवर्त्यदुरितादिषु तथा अग्रे विस्पष्टं प्रपञ्चयिष्यते। उत्तरज्ञानप्रयुक्तस्य स्वरूपतोऽवस्थितिविरहस्य प्रतियोगित्वेऽपि पूर्वज्ञानस्य न अवस्थितिसामान्यविरहप्रतियोगित्वम्। अधिष्ठानतत्त्वज्ञानाधीनावस्थितिसामान्यविरहप्रतियोगित्वं प्रतियोगिनोऽज्ञानकल्पितत्वं विनानुपपन्नमिति अज्ञानकल्पितत्वेन प्रतियोगिनो मिथ्यात्वम्। कार्याणां तदधिष्ठानतत्त्वसाक्षात्कारपर्यन्तं किञ्चिद्रूपमवश्यं तिष्ठतीति अङ्गीकारेणोत्तरज्ञानेन पूर्वज्ञानस्य नाशेऽपि पूर्वज्ञानरूपकार्यस्य तादात्म्यापन्नं किञ्चिद्रूपमवश्यं स्थास्यति अधिष्ठानतत्त्वसाक्षात्काराभावात्। तथा च पूर्वज्ञानस्य उत्तरज्ञानेन स्वरूपतो नाशेऽपि पूर्वावस्थातादात्म्यापन्नोत्तरावस्थाया अवस्थानान्न अवस्थितिसामान्यविरहप्रतियोगित्वम्। यादृशज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं सिद्धान्त्यभिमतं न तादृशज्ञाननिवर्त्यत्वमुत्तरज्ञाननिवर्त्यपूर्वज्ञाने वर्तते। एवञ्च सत्यपि ज्ञाननिवर्त्यत्वे यदि पूर्वज्ञानेऽमिथ्यात्वं तर्हि ब्रह्मज्ञाननिवर्त्येऽपि गगनादौ उत्तरज्ञाननिवर्त्यपूर्वज्ञानस्येव अमिथ्यात्वोपपत्त्या प्रकृतज्ञाननिवर्त्यत्वरूपमिथ्यात्वानुमानेऽर्थान्तरं स्यादिति निरस्तम्। गगना-

शशविषाणादौ अवस्थितिसामान्यविरहेऽपि तस्य ज्ञानप्रयुक्तत्वाभावान्नातिव्याप्तिः ॥७॥

शुक्तिरजतादेश्च अपरोक्षप्रतीत्यन्यथानुपपत्त्या प्रतिभासकाले अवस्थित्यङ्गीकारान्न बाधकज्ञानं विना तद्विरहः—इति न साध्यविकलता ॥८॥

अत एवोक्तं विवरणाचार्यैः—"अज्ञानस्य स्वकार्येण प्रविलीनेन

---

दीनां निवृत्तिस्तु अधिष्ठानब्रह्मसाक्षात्कारात् । निवृत्तिरपि गगनादीनामवस्थितिसामान्यविरहः । पूर्वज्ञानस्य उत्तरज्ञानाधीननिवृत्तिस्तु न अधिष्ठानतत्त्वसाक्षात्काराधीना, नापि अवस्थितिसामान्यविरहः । अतो न अर्थान्तरस्यावकाशः । उत्तरज्ञानेन निवर्त्यस्यापि पूर्वज्ञानस्य कारणात्मना अवस्थानात् ॥६॥

७—ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वरूपमिथ्यात्वलक्षणघटकस्य ज्ञानपदस्य व्यावृत्तिं प्रदर्शयितुमाह—शशविषाणादाविति । शशविषाणादीनां यत् सर्वत्र असत्त्वं तन्न अधिष्ठानतत्त्वज्ञानप्रयुक्तम्, किन्तु साधकमानाभावादेव अतो न अतिव्याप्तिः ॥७॥

८—दृष्टान्तीकृते शुक्तिरजतादौ प्रातिभासिके असद्वैलक्षण्यं प्रदर्शयन् साध्यवैकल्यमुद्धरति—शुक्तिरजतादेश्चेत्यादि । प्रातिभासिकस्य अपरोक्षप्रतिभासान्यथानुपपत्तिरेव प्रतिभासकाले सत्त्वे मानम् अतो न प्रातिभासिकस्य असत्तुल्यता । प्रतिभासकाले सतः प्रातिभासिकस्य योऽवस्थितिसामान्यविरहः स अधिष्ठानतत्त्वज्ञानप्रयुक्त एव इति न दृष्टान्ते साध्यविकलता ॥८॥

९—अवस्थितिद्वैविध्ये विरहस्य ज्ञानप्रयुक्तत्वे च आचार्याणां सम्मतिं दर्शयति—अत एवेत्यादि । स्वकार्येण अज्ञानप्रयुक्तेनेत्यर्थः, तेन जीवेश्वरभेदाद्यनादिदृश्यानामज्ञानकार्यत्वाभावेऽपि अज्ञानप्रयुक्तत्वादनादिदृश्यानामपि संग्रहः । अज्ञानकार्येण सह अज्ञानस्य निवृत्तावनादिदृश्यनिवृत्तिर्न स्यात्, अनादिदृश्यानामज्ञानकार्यत्वाभावात्, अतः स्वकार्येणेत्यस्य साधनादिसाधारणाज्ञानप्रयुक्तदृश्येनेत्यर्थः । किम्भूतेन अज्ञानप्रयुक्तदृश्येन, इत्यत आह—प्रविलीनेन वर्तमानेन वेति । प्रविलीनेन—भाविभूत-

वर्तमानेन वा सह ज्ञानेन निवृत्तिर्बाधः" इति ॥९॥

वार्त्तिककृद्भिश्चोक्तम्—

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।

---

रूपेण सूक्ष्मात्मना संस्काररूपेण, सूक्ष्मतादशायामपि कार्य्यस्य वर्तमानत्वात्, पुनः वर्तमानेन—इति यदुक्तम्, तस्य स्थूलात्मनेत्यर्थः । अन्यथा पौनरुक्त्यं स्यात्, सह—सहितस्य अज्ञानस्य, ज्ञानेन—अधिष्ठानतत्त्वज्ञानेन, निवृत्तिः—अत्यन्ताभावः । अत्र यथा निवृत्तिपदं ध्वंसपरमपि भवितुमर्हति तथोक्तं लघुचन्द्रिकायाम् । निवृत्तिपदस्य अत्यन्ताभावपरत्वे ज्ञानेनेति तृतीया ज्ञापकहेतौ । तथा च तत्त्वज्ञाननिष्ठज्ञापकतानिरूपितज्ञाप्यतावान् तादृशात्यन्ताभावोऽज्ञानप्रयुक्तस्य बाधः । तत्त्वज्ञानस्य ज्ञापकत्वकथनेन व्याप्यत्वं लब्धं ज्ञाप्यस्य तादृशात्यन्ताभावस्य व्यापकत्वञ्च लब्धम् । तथा च तत्त्वज्ञानव्यापको यस्तादृशात्यन्ताभावः स एव अज्ञानप्रयुक्तस्य बाध इत्युच्यते । अज्ञाननिवृत्त्या अज्ञानप्रयुक्तं बाध्यते, ज्ञानेनाज्ञानस्य निवृत्तिरेव न तु बाधः । सतित्वज्ञाने अज्ञानप्रयुक्तस्य निवृत्तिमात्रम्, न त्वज्ञानप्रयुक्तस्य बाधः । प्रयोजकेन अज्ञानेन सह तत्प्रयुक्तस्य दृश्यस्य निवृत्तिरज्ञानप्रयुक्तस्य बाधः । प्रागभावदशायां ध्वंसदशायाञ्चाज्ञानकार्यस्य प्रविलीनात्मना सूक्ष्मरूपेण वर्तमानत्वात् पुनर्वर्तमानेनेत्यस्य पौनरुक्त्यापत्त्या वर्तमानेनेत्यस्य स्थूलात्मनेत्यर्थो बोध्यः ॥९॥

१०—विवरणोक्तनिवृत्तिपदस्यात्यन्ताभावार्थकत्वे वार्तिककृतां सम्मतिं दर्शयति—वार्तिककृद्भिश्चेति । अखण्डार्थकतत्त्वमस्यादिवेदान्तमहावाक्यजन्या या सम्यक् प्रमारूपा धीः चरममनोवृत्तिविशेषः, तस्याः धियः जन्ममात्रतः—उत्पत्तिमात्रेण "तृतीयार्थे तस्प्रत्ययः" तृतीयायाः प्रयोज्यत्वार्थकत्वात् तादृशज्ञानप्रयोज्यः नासीदस्ति भविष्यति इत्यादिना वक्ष्यमाणात्यन्ताभाव इत्यर्थः । अज्ञाननिवर्तकज्ञानस्य स्वोत्पत्तिमन्तरेणाज्ञाननिवृत्तावन्यापेक्षा नास्तीति सूचयितुं मात्रपदमुपात्तम् । "नासीदस्ति

अविद्यासहकार्येण नासीदस्ति भविष्यति ॥ इति ॥१०॥

"सह कार्येण नासीत्" इति लीनेन कार्येण सह निवृत्त्यभिप्रायम्; "सह कार्येण न भविष्यति" इति तु भाविकार्यनिवृत्त्यभिप्रायमित्यन्यदेतत् ॥११॥

रूप्योपादानमज्ञानं स्वकार्येण वर्तमानेन लीनेन वा सह अधिष्ठानसाक्षात्कारान्निवर्त्तते ॥१२॥

---

भविष्यति" इत्यत्र आसीत्पदसमभिव्याहृतनञः "अस्ति भविष्यति" इति पदाभ्यामपि सम्बन्धः। तेन "नासीत् नास्ति न भविष्यति" इति लभ्यते। कार्येण सहिताया अविद्याया अतीतकालीना वर्तमाना भाविनी च या सत्ता तदत्यन्ताभावस्तादृशतत्त्वज्ञानप्रयोज्य इति वार्तिकवाक्यार्थः। अविद्यायाः वर्तमानत्वेन तत्सत्ताया अपि वर्तमानत्वात् अविद्यासत्ताया भावित्वम् अतीतत्वञ्च अप्रसिद्धम्, अतः "सह कार्येण" इत्युक्तम्। अविद्याकार्यस्य अतीतत्वादिसम्भवेन कार्यविशिष्टाया अविद्याया अपि अतीतत्वादिसम्भव इति भावः ॥१०॥

११—एतदेव दर्शयन्नाह—सह कार्येणेति। कार्यस्य अतीतत्वेनैव कारणीभूताविद्याया अतीतत्वम्, न तु स्वरूपेण वर्तमानाया अविद्यायाः अतीतत्वम्। अतीतकार्यविशिष्टाविद्याया निवृत्तिरेव "नासीत्" इत्यस्यार्थः। एवं "न भविष्यति" इत्यत्रापि भाविकार्यविशिष्टाया अविद्याया निवृत्तिरेव बोध्यते। मूले भाविकार्यस्य निवृत्तिर्या उक्ता सा तत्त्वज्ञानं विनापि भाविकार्यजनकादृष्टादिकारणाभावादेव सम्भवतीति न तादृशनिवृत्तेर्बाधरूपत्वम्। कारणाभावप्रयुक्तकार्यनिवृत्तेर्बाधरूपत्वाभावात् अन्यदेतद्दित्युक्तम्। प्रकृतमिथ्यात्वानुपयोगि इत्यर्थः ॥११॥

१२—दृष्टान्ते शुक्तिरजतादौ ज्ञाननिवर्त्यत्वरूपं मिथ्यात्वं सर्वाचार्यसम्मतमित्युपसंहरन्नाह—रूप्योपादानमज्ञानमिति। शशविषाणाद्यभावे यथा ज्ञानप्रयुक्तत्वं नास्ति, तथा शुक्तिरजताद्यभावेऽपीति न शङ्क्यम्।

तत्तद्रूप्योपादानानामज्ञानानां भेदाभ्युपगमादिति न दृष्टान्ते साध्यवैकल्यम् ॥१३॥

मुद्गरपातानन्तरं घटो नास्तीति प्रतीतिवदधिष्ठानज्ञाना-

---

तत्त्वज्ञानप्रयुक्तशुक्तिरजतादीनां निवृत्तिः सर्वानुभवसिद्धा, शुक्तिरजतादीनामज्ञानप्रयुक्तत्वात् शशविषाणादीनाञ्चाज्ञानप्रयुक्तत्वाभावादिति भावः ॥१२॥

१३—अज्ञानस्यैकत्वपक्षे शुक्तिरजतादीनामपि मूलाज्ञानोपादानकतया ब्रह्मसाक्षात्कारादेव निवृत्तिरेष्टव्या, न तु शुक्तितत्त्वसाक्षात्कारात्, शुक्तितत्त्वसाक्षात्कारनिवर्त्तनीयस्याज्ञानस्यानभ्युपगमात्। अभ्युपगमे वा अज्ञानस्य नानात्वप्रसङ्गात्। तथा च शुक्तिरजतादेर्यज्ज्ञाननिवर्त्त्यत्वं तन्न प्रकृतानुमानात् पूर्वं ग्रहीतुं शक्यमिति प्रकृतानुमानात् पूर्वं ज्ञाननिवर्त्त्यत्वरूपसाध्यस्याग्रहेण व्याप्तिग्रहासम्भव इत्याशङ्क्याह मूलकारः—तत्तद्रूप्योपादानानामिति। नानाऽज्ञानपक्षमाश्रित्येदमुक्तम्। नानाऽज्ञानपक्षे शुक्तितत्त्वसाक्षात्कारनिवर्त्तनीयस्याज्ञानस्य प्रसिद्धत्वात् प्रकृतानुमानात् पूर्वमपि शुक्तिरजतादौ साध्यज्ञानं सम्भवत्येवेत्याह—न दृष्टान्ते साध्यवैकल्यमिति। दृष्टान्ते शुक्तिरजतादौ, साध्यस्य ज्ञाननिवर्त्त्यत्वस्य न वैकल्यम् न अग्रहः। वस्तुतस्तु एकाज्ञानपक्षेऽपि दृष्टान्ते शुक्तिरजतादौ ज्ञाननिवर्त्त्यत्वरूपसाध्यस्यानुमानान्तरेण सिद्धिर्भवति, तथा हि—शुक्तिरजतं ज्ञाननिवर्त्त्यम्, दोषजन्यज्ञानविषयत्वात् रज्जुसर्पवत्। एवं रज्जुसर्पेऽपि दृष्टान्तान्तरावष्टम्भेन साध्यसिद्धिः, एवं साध्यसिद्धेरनुमानपरम्परापेक्षणेऽपि बीजाङ्कुरवन्नानवस्थादोषः, इति न काचिदनुपपत्तिः ॥१३॥

१४—तत्त्वज्ञाने अज्ञानतत्प्रयुक्तदृश्याभावप्रयोजकत्वं यत् पूर्वमुक्तं तत् सर्वानुभवसिद्धमिति दर्शयन्नाह—मुद्गरपातानन्तरमिति। मुद्गरपातानन्तरमित्यस्य मुद्गरपातोत्पत्तिक्षणे इत्यर्थो बोध्यः। घटो नास्तीति—मुद्गरपातोत्पत्तिक्षणे स्वाश्रयकालपूर्वत्वसम्बन्धेन तद्घटो नास्तीति प्रतीतेः

नन्तरं शुक्त्यज्ञानं तद्गतरूप्यञ्च नास्तीति प्रतीतेः सर्वसम्मतत्वात् ॥१४॥

ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्यत्वम्—इत्यपि साधु ॥१५॥

---

सर्वसम्मतत्ववत् अधिष्ठानज्ञानानन्तरम् अधिष्ठानतत्त्वज्ञानोत्पत्तिक्षणे शुक्तिसाक्षात्कारोत्पत्तिक्षणे इति यावत्; शुक्त्यज्ञानं तद्गतरूप्यञ्च स्वाश्रयकालपूर्वत्वसम्बन्धेन नास्तीति प्रतीतेरपि सर्वसम्मतत्वाचादृशदृश्यनिवृत्तौ तत्त्वज्ञानस्य प्रयोजकत्वं युक्तम्। अयं भावः—मुद्गरपातोत्पत्तिद्वितीयक्षणे घटस्याभावात् मुद्गरपातोत्पत्तिक्षणः तद्घटाश्रयकालपूर्वभावी न भवति। एवं तत्त्वज्ञानोत्पत्तिक्षणोऽपि तत्त्वज्ञानसमानविषयकाज्ञानतत्प्रयुक्तदृश्याधिकरणक्षणपूर्वभावी न भवति। मुद्गरपातानन्तरं घटस्य एवं तत्त्वज्ञानानन्तरमज्ञानस्य विद्यमानता न सम्भवतीति फलितोऽर्थः। मुद्गरपातानन्तरमिति मूलवाक्यस्य यथाश्रुतार्थग्रहणे मुद्गरपातोत्पत्तिक्षणाव्यवहितोत्तरक्षणः स्वाश्रयकालपूर्वत्वसम्बन्धेन घटाभाववान् इत्यर्थः स्यात्। एवञ्च सति मुद्गरपातोत्पत्तिक्षणे तद्घटाश्रयकालपूर्वत्वाभावो न ज्ञायते, एवं तत्त्वज्ञानोत्पत्तिक्षणाव्यवहितोत्तरक्षणे दृश्याश्रयकालपूर्वत्वाभावे गृहीतेऽपि तत्त्वज्ञानोत्पत्तिक्षणे दृश्याश्रयकालपूर्वाभावाग्रहान्न्यूनता स्यात्—इति तद्वारणाय मुद्गरपातानन्तरमित्यस्य मुद्गरपातोत्पत्तिकाल इत्यर्थो गृहीतः। एतेन शुक्तिज्ञानेन रूप्यं नष्टमिति कदाप्यननुभवेन शुक्तिरजते लक्षणस्य अव्याप्तिः, प्रकृतानुमाने च साध्यविकलो दृष्टान्तः, इति यत् पूर्वपक्षिभिरुक्तं तन्निरस्तम्, प्रदर्शितरीत्या निवृत्तेः सर्वसम्मतत्वादिति भावः ॥१४॥

१५—ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वरूपं ज्ञाननिवर्त्यत्वं प्रथमकल्पोक्तं निरूप्य ज्ञानत्वव्याप्यधर्मेणापि ज्ञाननिवर्त्यत्वं तृतीयकल्पं निरूपयति—ज्ञानत्वव्याप्यधर्मेणेति। ज्ञानत्वव्याप्यधर्मः—अनुभवत्वादिः ॥१५॥

उत्तरज्ञानस्य पूर्वज्ञाननिवर्त्तकत्वञ्च न ज्ञानत्वव्याप्य-धर्मेण, किन्तु इच्छादिसाधारणेनोदीच्यात्मविशेषगुणत्वेनोदीच्यत्वेन वेति न सिद्धसाधनादि ॥१६॥

नापि इच्छाद्यनिवर्त्त्ये स्मृतित्वेन ज्ञाननिवर्त्त्ये संस्कारेऽति-

---

१६—ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्त्यत्वस्य मिथ्यात्वे न उत्तरज्ञान-निवर्त्त्ये पूर्वज्ञाने लक्षणस्यातिव्याप्तिः। उत्तरज्ञाने या पूर्वज्ञाननिवर्त्तकता सा न ज्ञानत्वव्याप्यधर्मावच्छिन्ना, किन्तु स्वोत्तरोत्पन्नात्मविशेषगुणत्वाद्यवच्छिन्ना। ज्ञानत्वव्याप्यधर्मेणोत्तरज्ञानस्य पूर्वज्ञाननिवर्त्तकत्वे ज्ञानोत्तरोत्पन्नेच्छया ज्ञानस्य इच्छोत्तरोत्पन्नयत्नेन वा इच्छाया निवृत्तिर्न स्यात्। स्वोत्तरोत्पन्नेच्छात्वादिना निवर्त्तकत्वकल्पने कल्पनागौरवात्। अत इच्छादिसाधारणनिवर्त्तकत्वं न ज्ञानत्वव्याप्यधर्मावच्छिन्नम्, किन्तु उदीच्यात्मविशेषगुणत्वावच्छिन्नमेव। एवञ्च ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्त्यत्वरूपमिथ्यात्वानुमाने उत्तरज्ञाननिवर्त्त्य-पूर्वज्ञाने न सिद्धसाधनम्। न वा मिथ्यात्वाविरोधि साध्यमात्रसिद्ध्या अर्था-न्तरम्। योग्यात्मविशेषगुणानां स्वोत्तरोत्पन्नात्मविशेषगुणत्वेन नाशकत्वे गौरवाल्लाघवमभिसंधायाह—उदीच्यत्वेन वेति। उत्तरज्ञाने यत् पूर्वज्ञाननिव-र्त्तकत्वं तन्न स्वोत्तरोत्पन्नात्मविशेषगुणत्वावच्छिन्नम्, किन्तु स्वोत्तरोत्पन्नात्म-गुणत्वावच्छिन्नम्। स्वोत्तरोत्पन्नात्मगुणत्वेनैव नाशकता। ज्ञानोत्तरोत्पन्न-संख्यादिसामान्यगुणस्यापि नाशकत्वे बाधकाभावात्। "उदीच्यत्वेन" इत्यस्य स्वोत्तरोत्पन्नात्मगुणत्वेनेत्यर्थः। विशेषपदप्रवेशे गौरवात्। एवं च ज्ञानत्व-व्याप्यधर्मेण ज्ञाननिवर्त्त्यत्वमपि साधु ॥१६॥

१७—एतेन पूर्वपक्षिभिर्यदुक्तम् "ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्त्य-त्वस्य च इच्छाद्यनिवर्त्त्ये स्मृतित्वेन स्मृतिनिवर्त्त्ये संस्कारादौ अतिव्याप्तिः" इति तन्निरस्तम्, स्मृतेः संस्कारनाशकत्वाभावात्—इति दर्शयन्नाह— नापीति। स्मृतेः स्वजनकसंस्कारनिवर्तकत्वं न स्वोत्तरोत्पन्नात्म-विशेषगुणत्वेन। तथात्वे संस्कारोत्तरोत्पन्नेच्छादीनामपि संस्कार-

व्याप्तिः, स्मृतित्वेन स्मृतेः संस्कारनिवर्तकत्वे मानाभावात् ॥१७॥

स्मृतौ हि जातायां संस्कारो दृढो भवतीत्यनुभवसिद्धम्;

---

नाशकत्वप्रसङ्गः। अतः स्मृतित्वेनैव स्मृतेः संस्कारनिवर्तकत्वं वक्तव्यम्। अन्यथा संस्कारस्य अनुच्छेद्यत्वप्रसङ्गः, स्मृतित्वं च ज्ञानत्वव्याप्यधर्म एव। तथा च ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्ये संस्कारे लक्षणस्यातिव्याप्तिः। न च संस्कारस्य मिथ्यात्वेन लक्ष्यतया नातिव्याप्तिरिति वाच्यम्, संस्कारे स्मृतिनिवर्त्यत्वप्रयुक्तमिथ्यात्वव्यवहारापत्तिः स्यात्—इत्यत्रैवातिव्याप्ति-शब्दस्य तात्पर्यात्। प्रकृतानुमाने सिद्धसाधनादि च स्यादिति पूर्वपक्षि-णामाशयः। स्मृतेः स्वजनकसंस्कारनाशकत्वे मानाभावान्न लक्षणस्याति-व्याप्तिः, न वा अनुमाने सिद्धसाधनम्—इति परिहरन्नाह सिद्धान्ती—स्मृतित्वेन स्मृतेरिति। न चानुभवेन स्मृतौ जननीयायां व्यापारतया संस्कारः कल्प्यते; व्यापारस्य च यागजन्यापूर्ववत् फलनाश्यत्वदर्शनात् संस्कारस्यापि फलीभूतस्मृतिनाश्यत्वमिति वाच्यम्, फलीभूतप्रत्यक्षानाश्ये इन्द्रियार्थसन्निकर्षे व्यभिचारात्। इन्द्रियव्यापारोऽपि इन्द्रियार्थसन्निकर्षः फलीभूतप्रत्यक्षेण न नाश्यते। अन्यथा प्रत्यक्षेण सन्निकर्षनाशे धारावाहिक-प्रत्यक्षानुपपत्तिः स्यात्। तस्मात् सुष्ठूक्तम्—स्मृतेः संस्कारनिवर्तकत्वे मानाभावादिति। न च संस्कारस्य अनुच्छेद्यत्वप्रसङ्ग इति वाच्यम्, रोगादीनां चरमतत्त्वज्ञानस्य चोच्छेदकत्वात् ॥१७॥

१८—स्मृतेः संस्कारनाशकत्वे साधकाभावमुक्त्वा बाधकमाह—स्मृतौ हि जातायामिति। चिन्ताद्यनपेक्ष्य झटितिजायमाना या विलक्षणा स्मृतिः, तया विलक्षणस्मृत्या तत्कारणीभूतो दृढः संस्कारोऽनुमीयते। अत एव मूले अनुभवसिद्धं यदुक्तं तदनुमित्यात्मकानुभवसिद्धमिति व्याख्येयम्, संस्कारस्यातीन्द्रियतया प्रत्यक्षासम्भवात्। तथा च तादृशानुमानमेव स्मृतेः संस्कारनाशकत्वे बाधकम्। दृढसंस्कारजन्या एव झटिति जायमाना विलक्षणा स्मृतिः। संस्कारस्य दृढत्वञ्च समानविषयकानेकसंस्कारविशिष्टत्वम्। स्मृत्या

तेषां दृढतरत्वञ्च[1] समानविषयकसंस्कारानेकत्वमित्यदोषः[2] ॥१८॥

वस्तुतस्तु साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वं विवक्षितम्; अतो

---

संस्कारो न नश्यति। किन्तु तत्संस्कारसमानविषयकसंस्कारान्तरं जन्यते। पुनः पुनः स्मृत्याऽनेके संस्काराः जायन्ते। उपेक्षानात्मकज्ञानत्वेनैव ज्ञानस्य संस्कारजनकत्वात् स्मृतेरपि संस्कारजनकत्वमक्षतम्।

न च विलक्षणस्मृत्या विलक्षणसंस्कार एवानुमीयते, वैलक्षण्यञ्च जातिविशेषः, विलक्षणस्मृतिजनकतावच्छेदकतया सिद्धः। तथा च विलक्षण-संस्कार एव दृढसंस्कार इति वाच्यम्। विलक्षणस्मृत्या दृढ-दृढतर-दृढतम-संस्कारानुमानेन दृढत्वस्य जातिरूपत्वाङ्गीकारे दृढतरत्वादेरपि जातिरूपत्वं वाच्यम्। तच्च न सम्भवति, जातौ उत्कर्षापकर्षानभ्युपगमात्। एतदभिप्राये-णैव मूले दृढत्वञ्चेत्यत्र दृढतरत्वञ्चेति पाठं विट्ठलेशोपाध्यायाः स्वीचक्रुः। एवञ्च स्मृतेः संस्कारनाशकत्वे मानाभावेन बाधकसद्भावेन च ज्ञानत्वव्याप्य-धर्मेण ज्ञाननिवर्त्यत्वं मिथ्यात्वमिति मिथ्यात्वलक्षणस्य न संस्कारेऽतिव्याप्ति-रूपो दोषः। इत्याह मूलकारः—इत्यदोष इति ॥१८॥

१९—यद्यपि उपेक्षानात्मकज्ञानत्वेन ज्ञानस्य संस्कारजनकत्वाभ्युपगमे स्मृतेश्च संस्कारनाशकत्वानभ्युपगमे पुनः पुनः स्मृत्या युगपदनेके संस्काराः, फलबलकल्प्योद्बोधकविच्छेदाच्च न समानविषयकसंस्कारेभ्यो धारा-रूपाः स्मृतयः, तथापि चिन्ताद्यनपेक्षजायमानविलक्षणस्मृतिं प्रति विलक्षण-संस्कारत्वेनैव हेतुता, लाघवात् संस्कारे वैलक्षण्यमेव दृढत्वम्। तच्च उपाधिरूपम्। एवञ्च विजातीयसंस्कारत एव विजातीयस्मृतेरुपपत्तौ सर्व-संस्कारसद्भावकल्पना निष्प्रामाणिकी निष्प्रयोजना च, अतः स्मृतेः संस्कार-नाशकत्वं निर्बाधमेव, अन्यथा संस्कारस्यानुच्छेद्यत्वापत्तेः, स्मृतेः संस्कार-

---

१. दृढतरत्वं = दृढत्वं च—इति चन्द्रिकासिद्धिव्याख्यासम्मतपाठः। विट्ठलेशीये तु दृढतरत्वं च इति।

२. संस्कारानेकत्वं = संस्कारानेकत्वात् इति वा पाठः।

न पूर्वोक्तदोषः ॥१९॥

नापि निश्चयत्वेन ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्त्ये संशयेऽति-

---

नाशकत्वसिद्धौ च पूर्वोक्तातिव्याप्तिः—इत्यादिकमालोच्याह मूलकारः—वस्तुतस्त्विति। ज्ञानत्वव्याप्यधर्मो न निवर्तकतावच्छेदकः, किन्तु साक्षात्कारत्वम्। एवञ्च स्मृतेः संस्कारनाशकत्वेऽपि नातिव्याप्तिः। न वोत्तरज्ञाननिवर्त्त्ये पूर्वज्ञाने सिद्धसाधनतादेरवकाश इत्याह—न पूर्वोक्तदोष इति। इदमत्रावधेयम्—यदि स्मृतेः संस्कारनाशकत्वं प्रामाणिकं तर्हि अनुभवत्वव्याप्यधर्मेण ज्ञाननिवर्त्त्यत्वोक्तौ न पूर्वोक्तदोष इति दिक् ॥१९॥

२०—साक्षात्कारत्वस्य निवर्त्तकतावच्छेदकत्वादेव निश्चयत्वेन ज्ञाननिवर्त्त्ये संशये विपरीतनिश्चये वा साक्षात्कारत्वेन ज्ञाननिवर्त्त्यत्वरूप-मिथ्यात्वलक्षणस्याभावान्नातिव्याप्तिः। ज्ञानत्वव्याप्यधर्मेण ज्ञाननिवर्त्त्यत्वस्य मिथ्यात्वे तु निश्चयत्वेन ज्ञाननिवर्त्त्ये संशयादौ मिथ्यात्वलक्षणस्यातिव्याप्तिः स्यादेव। न च संशयस्यापि मिथ्यात्वात्तस्य लक्ष्यत्वमेव, तथा च नातिव्याप्तिरिति वाच्यम्। संशयस्य मिथ्यात्वेऽपि निश्चयत्वेन ज्ञाननिवर्त्त्यत्वप्रयुक्तो न संशयस्य मिथ्यात्वव्यवहारः सिद्धान्तिसम्मतः। तथा च निश्चयत्वेन ज्ञान-निवर्त्त्यत्वप्रयुक्तः संशये मिथ्यात्वव्यवहारः स्यात्—इति आपत्तिरेवाति-व्याप्तिप्रदर्शनेन सूचिता। साक्षात्कारत्वेन ज्ञाननिवर्त्त्यत्वस्य मिथ्यात्वे यथा न सेतुदर्शननाश्यपापादौ अतिव्याप्तिः, तथा "ज्ञाननिवर्त्त्यत्वान्यथानुपपत्ति-परिच्छेदे" स्फुटीभविष्यति। सेतुदर्शनस्य पापनाशकत्वं न साक्षात्कारत्वेन, किन्तु विहितक्रियात्वेन, अन्यथा म्लेच्छादीनामपि सेतुदर्शनादेव पापनाशा-पत्तेः, आस्तिकान्धजनस्यापि सेतुसमीपे समुद्रस्नातस्य सेतुदर्शनाभावेन पापनाशानुपपत्तेश्चेति भावः।

अत्रायं पूर्वपक्षनिष्कर्षः—मिथ्याभूतशुक्तिरजतादौ ज्ञाननिवर्त्त्यत्वं सर्वानुभवविरुद्धम्, ज्ञानेन रजतं नष्टमित्यननुभवात्, तथा च शुक्तिरज-तादौ लक्षणस्यागमनात् अव्याप्तिः, प्रकृतानुमाने च दृष्टान्ते साध्यवैकल्यम्।

व्याप्तिः, इति सर्वमवदातम् ॥२०॥

इति मिथ्यात्वनिरूपणे तृतीयमिथ्यात्वलक्षणम् ।

---

शुक्त्यज्ञानं शुक्तिविषयज्ञानेन नष्टमिति अनुभवस्य सत्त्वेऽपि लक्षणस्याति-व्याप्तिः, अज्ञानस्याधिष्ठानवत् सत्यत्वात् । उक्तञ्च न्यायामृतकृद्भिः—

"विज्ञाननाश्यता मिथ्या रूप्यादौ नानुभूयते ।
किन्त्वधिष्ठानवत् सत्ये तदज्ञानेऽनुभूयते ॥"

सिद्धान्तरहस्यं तु रजतोपादानमज्ञानम् अज्ञानकार्यञ्च रजतादि अधिष्ठानतत्त्वसाक्षात्कारान्निवर्तत इति प्रसिद्धऽनुभवबलेन शुक्तिरजतादौ ज्ञाननिवर्त्यत्वमक्षतमिति न शुक्तिरजतादौ लक्षणस्याव्याप्तिः, न वा दृष्टान्ते साध्यवैकल्यम् । अज्ञानस्य स्वसमानाधिकरणस्वसमानविषयकज्ञानबाध्यत्वेन त्रिकालाबाध्यत्वरूपसत्यत्वानुपपत्तेर्न लक्षणस्यातिव्याप्तिरिति दिक् ॥२०॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्र-नाथशर्मविरचितायामद्वैतसिद्धिबालबोधिन्यां तृतीयमिथ्यात्वलक्षणविवरणम् ।

## अथ चतुर्थमिथ्यात्वलक्षणम् ।

स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं वा मिथ्यात्वम् ॥१॥

तच्च स्वात्यन्ताभावाधिकरणे एव प्रतीयमानत्वम्; अतः

---

१—चित्सुखाचार्यसम्मतं मिथ्यात्वलक्षणमवतारयति—स्वाश्रयेति । अत्र स्वपदं यत्र मिथ्यात्वं स्थाप्यं तत्परम् । स्वाश्रयनिष्ठः—स्वाश्रयत्वेन प्रतीयमाननिष्ठो यः स्वस्यात्यन्ताभावस्तत्प्रतियोगित्वं स्वस्य मिथ्यात्वम् । तार्किकादिमते स्वाश्रये स्वस्यात्यन्ताभावासम्भवात् स्वाश्रयशब्दः स्वाश्रयत्वेन प्रतीयमानपरो व्याख्येयः । परिभाषाकृद्भिरपि "अभिमतपदम्" तार्किकादिमतेऽसम्भववारणायेत्युक्तम् । सिद्धान्ते मिथ्यात्वघटकात्यन्ताभावस्य केवलान्वयितया स्वाश्रयनिष्ठः स्वस्यात्यन्ताभावो न विरुद्धः; "नेह नानास्ति किञ्चने"त्यादि प्रपञ्चमिथ्यात्वग्राहकश्रुतेः प्रत्यक्षादिसकलप्रमाणापेक्षया प्राबल्यात् । मिथ्यात्वघटकात्यन्ताभावस्य व्यावहारिकत्वमतेनेदम् । अभावस्य पारमार्थिकत्वपक्षे तु व्यावहारिकप्रपञ्चाधिकरणे पारमार्थिकात्यन्ताभावसत्त्वे विरोधशङ्कैव नोदेतीति द्वितीयलक्षणे प्रपञ्चितम् । प्रपञ्चयिष्यते चात्रापि । तथा च स्वाश्रयत्वेन प्रतीयमाननिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् । घटाश्रयत्वेन भ्रमात्मकप्रतीतिविशेष्येऽपि पटादौ घटात्यन्ताभावस्य सिद्धत्वात् सिद्धसाधनम्; अतस्तद्वारणाय स्वाश्रयत्वेन प्रतीतिविशेष्यतायाः व्यापकीभूतो योऽत्यन्ताभावस्तत्प्रतियोगित्वमेव मिथ्यात्वं वक्तव्यम् ॥१॥

२—एवञ्च सति प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमिति द्वितीयलक्षणेन सहैतस्य पौनरुक्त्यम्; तत्रापि प्रतिपन्नपदस्य स्वप्रकारकधीविशेष्यपरत्वात्, अतो विशेष्यविशेषणभावव्यत्यासेन पौनरुक्त्यं परिहरन्नाह—तच्चेति । स्वाश्रयत्वेन प्रतीयमानत्वव्यापकीभूतात्यन्ताभावप्रतियोगित्वञ्च स्वात्यन्ताभावाधिकरणे एव प्रतीयमानत्वम्, एतदेव परिभाषाकृद्भि-

पूर्ववैलक्षण्यम् । दूषणपरिहारः पूर्ववत् ॥२॥

रपि यावत्पदेनोक्तम् । स्वात्यन्ताभाववत्त्वव्याप्यं स्वप्रकारकप्रतीतिविशेष्यत्व-मित्यर्थः । अत्र एवकारेण वह्निमत्येव धूम इतिवत् स्वात्यन्ताभाववत्त्व-व्याप्यत्वं प्रतीयमानत्वे लभ्यते । तादृशप्रतीतिविशेष्यत्वमेव मिथ्यात्वम् । द्वितीयलक्षणन्तु स्वप्रकारकप्रतीतिविशेष्यत्वव्यापकीभूतात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् । द्वितीयलक्षणे प्रतीतिविशेष्यत्वं विशेषणम्, अत्र प्रतीति-विशेष्यत्वं विशेष्यम्—इति विशेष्यविशेषणभावव्यत्यासः । अत आह मूलकारः—अतः पूर्ववैलक्षण्यमिति । द्वितीयलक्षणतश्चतुर्थलक्षणस्य वैलक्षण्यमिति । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं मिथ्यात्वमिति द्वितीयमिथ्यात्वलक्षणे त्रैकालिकनिषेधस्य तात्त्विकत्वे अद्वैतहानिः, प्रातिभासि-कत्वे सिद्धसाधनम्, व्यावहारिकत्वे तादृशात्यन्ताभावप्रतियोगिनोऽप्राति-भासिकस्य प्रपञ्चस्य पारमर्थिकत्वापत्तिः—इत्यादि यानि दूषणानि पूर्वपक्षि-भिरुद्भावितानि तानि अत्राप्यत्यन्ताभावस्य तात्त्विकत्वादिपक्षे योजयितुं शक्यन्ते । अतस्तद्दूषणनिरासाय द्वितीयलक्षणोक्तदूषणपरिहारप्रकार इह स्मार्यते— दूषणपरिहारः पूर्ववदिति ।

न च संयोगादिसम्बन्धेन घटाद्यभाववति कपालादौ समवायेन घटस्य प्रतीयमानत्वात् स्वात्यन्ताभावाधिकरणे स्वस्य प्रतीयमानत्वमादाय घटादीनां मिथ्यात्वव्यवहारः स्यात्, प्रतियोगिमत्यपि देशे सम्बन्धान्तरेण प्रतियोग्य-भावस्य सत्त्वादिति वाच्यम् । येन सम्बन्धेन यस्याभावो यत्र वर्तते, तत्र तेन सम्बन्धेन तस्य प्रतीयमानत्वं मिथ्यात्वमिति विवक्षया पूर्वोक्तदोषा-सम्भवात् । द्वितीयलक्षणे हि येन सम्बन्धविशेषेण येन च अवच्छेदकविशेषेण यदधिकरणताप्रतीतिर्यत्र भवितुमर्हति तेनैव सम्बन्धविशेषेण तेनैव च अवच्छेदकविशेषेण तदधिकरणकात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्व-मित्युक्तम् । तद्वदिहापि सम्बन्धविशेषावच्छेदकविशेषावनुसन्धातव्यौ । तेन नात्र क्षुद्रोपद्रवानामवसरः ॥२॥

न च संयोगिनि समवायिनि वा देशे तदत्यन्ताभावासम्भवः, सम्भवे तु उपादानत्वाद्यनुपपत्तिरिति वाच्यम्; काले सहसम्भववद् देशेऽपि सहसम्भवाविरोधात्, प्रागभावसत्त्वेन उपादानत्वाविरोधाच्च ॥३॥

---

३—दूषणपरिहाराय प्रतियोग्यभावयोः सम्बन्धादिविवक्षायां देशाद्यवच्छेदकैक्यविवक्षायाञ्च तादृशमिथ्यात्वानुमाने बाधः स्यात् मिथ्यात्वग्राहकश्रुत्यादिप्रमाणापेक्षया अत्यन्ताभावस्य स्वप्रतियोगिविरोधग्राहकलौकिकप्रमाणस्य प्राबल्यादित्यभिमानेन पूर्वपक्षी शङ्कते—न च संयोगिनीति। संयोगिनि—घटसंयोगिनि देशे, तदत्यन्ताभावासम्भवः—संयोगसम्बन्धेन घटात्यन्ताभावानुमाने बाधः स्यात् प्रतियोग्यभावयोर्विरोधात्। एवं घटसमवायिनि देशे समवायेन घटात्यन्ताभावानुमाने पूर्ववद्बाधः स्यात्। घटसंयोगिनि देशे संयोगेन घटात्यन्ताभावानुमाने दोषस्य सम्भवेऽपि अधिकं दोषं प्रदर्शयितुमाह—समवायिनि वेति। घटसमवायिनि कपाले समवायेन घटस्यात्यन्ताभावसत्त्वे कपालस्य घटोपादानत्वानुपपत्तिरिति भावः। समवायसम्बन्धेन स्वात्यन्ताभावाधिकरणस्य स्वोपादानत्वं विरुद्धमित्याह—सम्भवे त्विति। "सम्भवे तु" घटसमवायिनि देशे समवायेन घटात्यन्ताभावसत्त्वे तु उपादानत्वाद्यनुपपत्तिः—घटात्यन्ताभाववतो घटोपादानत्वे घटात्यन्ताभाववतां तन्त्वादीनामपि घटोपादानत्वप्रसङ्गात्। एवञ्च समवायेन घटवति कपाले समवायेन घटात्यन्ताभावस्यासम्भवान्न घटादेर्मिथ्यात्वमिति पूर्वपक्षिणामाशयः। उपादानत्वाद्यनुपपत्तिरित्यत्रादिपदेन कपालादौ घटादिप्रत्यक्षकाले समवायेन घटाभावादेः कपालादौ अप्रत्यक्षत्वानुपपत्तिः, कपालादिकं सर्वदा समवायेन घटाद्यभाववदित्यादिज्ञाने अप्रमात्वव्यवहारानुपपत्तिश्च संगृहीता। सिद्धान्ती समाधत्ते—काले इति। काले कालिकसम्बन्धेन प्रतियोगितदत्यन्ताभावयोः सहसम्भववत् संयोगिनि समवायिनि वा देशे तदत्यन्ताभावोऽपि सम्भवतीत्याह—देशेऽपि

न चात्यन्ताभावाधिकरणे प्रागभावस्याप्यनुपपत्तिरिति वाच्यम्; काले व्यभिचारात् ॥४॥

न च काले प्रागभावात्यन्ताभावयोः सामानाधिकरण्यमिदानीं घटात्यन्ताभाव इदानीं घटप्रागभाव इति प्रतीतिबलादङ्गीकृतम्,

---

सहसम्भवाविरोधादिति। अत्यन्ताभावस्य स्वप्रतियोगिविरोधग्राहकप्रमाणापेक्षया मिथ्यात्वग्राहकप्रमाणस्य प्राबल्यात्, प्रतियोगितदत्यन्ताभावयोः असमानसत्ताकतया रजततदत्यन्ताभाववदेकस्मिन् देशेऽपि सहसम्भवाविरोधाच्च।

न च घटसमवायिनि देशे कपाले घटात्यन्ताभावसत्त्वे कपालस्य घटोपादानत्वानुपपत्तिरिति वाच्यम्; कपाले घटप्रागभावसत्त्वेन घटोपादानत्वसम्भवात्। प्रतियोगिग्राहकप्रत्यक्षादितः तदत्यन्ताभावग्राहकश्रुत्यादिमानस्य प्राबल्यादिति तु तत्त्वम् ॥३॥

४—न च तत्प्रतियोगिकात्यन्ताभावो यथा प्रतियोगिविरोधी तथा तत्प्रतियोगिकध्वंसप्रागभावयोरपि विरोधी। तथा च कथं तत्प्रतियोगिकात्यन्ताभावाधिकरणे तत्प्रतियोगिकप्रागभाव इत्याह पूर्वपक्षी—न चेत्यादि। सिद्धान्ती समाधत्ते—काले व्यभिचारादिति। काले—घटोत्पत्तिपूर्वकाले, घटात्यन्ताभावघटप्रागभावयोः कालिकसम्बन्धेन सत्त्वात्। यदा यत्र यस्य अत्यन्ताभावस्तदा तत्र तस्य न प्रागभाव इति व्याप्तेर्घटोत्पत्तिप्राक्काले व्यभिचारात्। "घटो भविष्यती"ति प्रत्यक्षप्रतीतिकाले "घटो नास्ती"ति प्रत्यक्षप्रतीतिबलात् कालिकसम्बन्धेन घटप्रागभावतदत्यन्ताभावयोः सामानाधिकरण्यमिष्टम् ॥४॥

५—काले कालिकविशेषणतया प्रागभावात्यन्ताभावयोः सामानाधिकरण्यं प्रकृतमिथ्यात्वानुपयोगितया सिद्धमपि दैशिकविशेषणतया तदुभयसामानाधिकरण्ये प्रमाणाभावान्न मिथ्यात्वसिद्धिरिति पूर्वपक्षी शङ्कते—न च काले इति। अत्यन्ताभावो यथा प्रतियोगिविरोधी तथा ध्वंसप्रागभाव-

देशे तु तदुभयसामानाधिकरण्ये न किञ्चिदपि प्रमाणमिति वाच्यम्। मिथ्यात्वानुमितेः श्रुत्यादेश्च प्रमाणत्वात् ।।५।।

---

योरपि विरोधीति घटप्रागभावाधिकरणे कपाले घटात्यन्ताभावसत्त्वे न किञ्चिदपि प्रमाणमिति पूर्वपक्षिणामाशयः। अस्त्येव प्रमाणमिति प्रदर्शयितुं सिद्धान्ती स्वसिद्धान्तमाह—मिथ्यात्वानुमितेरिति। तत्प्रागभावाधिकरणे कपाले तदत्यन्ताभावग्राहकमिथ्यात्वानुमितेः मिथ्यात्वानुमानस्य प्रमाणत्वात्।

ननु कपालादौ घटादिप्रत्यक्षेण, कपालादौ घटाद्यभावाभावग्राहक-घटादिलिङ्गकानुमानेन च प्रतिबन्धात् कथं कपालादौ घटाद्यत्यन्ताभावग्राहक-मिथ्यात्वानुमितेरुदयः ? इत्यत आह—श्रुत्यादेश्चेति। "नेह नानास्ति किञ्चन" इत्यादि प्रपञ्चमात्रमिथ्यात्वग्राहकश्रुतेश्च प्रमाणत्वात्। मिथ्यात्वानु-मानेन "नेह नानास्ति" इत्यादिश्रुत्या च कपालादौ घटादेरत्यन्ताभावसिद्धौ कपालादेर्घटाद्युपादानत्वानुपपत्तेः परिहारोऽपि श्रुत्यादि इति आदिपदेन सूचितः। अयं भावः—अनादिभ्रमसंस्कारेण सद्रूपे ब्रह्मणि तादात्म्येन घटादेर-ध्यासः, घटादावपि तादात्म्येन सद्रूपस्य ब्रह्मणोऽध्यासः अन्योन्याध्यासाभ्यु-पगमाद् ब्रह्मधर्मसत्त्वस्यापि घटादावारोपेण "सन् घटः" इत्यादि भ्रमात्मिका प्रतीतिर्जायमाना घटमिथ्यात्वग्रहे प्रतिबन्धिकेति न "सन् घटः" इत्यादि-प्रत्यक्षकाले चक्षुरादिना घटाभावादेः प्रत्यक्षम्। मिथ्यात्वग्राहकश्रुत्यादिना उक्तपरस्पराध्यासोपमर्दे तु घटाभावादेः प्रत्यक्षमपि इति आदिपदोपादा-नस्याभिप्रायः। सर्वेभ्यः प्रमाणेभ्यः बलीयस्याः श्रुतेस्तदनुसारिणोऽ-नुमानस्य च सम्भावितदोषप्रत्यक्षात् तदुपजीव्यानुमानादिभ्यश्च प्राबल्यात् प्रबलतरमानेन प्रागभावाधिकरणेऽपि अत्यन्ताभावः सिध्यति। विरोधग्राहक-मानानां श्रुतितदुपजीव्यानुमानापेक्षया यथा दौर्बल्यं तथा मिथ्यात्वानुमान-बाधोद्धारप्रकरणे प्रपञ्चयिष्यते। मिथ्यात्वघटकात्यन्ताभावस्य केवलान्वयित्वेन प्रागभावाधिकरणेऽपि अत्यन्ताभावो यथा वर्तते तदुक्तं द्वितीयमिथ्यात्व-लक्षणविवरणे ॥५॥

विषमसत्ताकभावाभावयोरविरोधः पूर्वमुपपादितः ॥६॥ न च असत्यतिव्याप्तिः, स्वात्यन्ताभावाधिकरण एव सत्त्वेन प्रतीयमानत्वस्य विवक्षितत्वात् ॥७॥

न च "तद्धैके आहुरसदेवेदमग्र आसीदि"तिश्रुत्या असतः

---

६—तदेवं "नेह नानास्ति किञ्चन" इत्यादिप्रपञ्चमिथ्यात्वग्राहकश्रुत्यनुगृहीतेन प्रपञ्चमिथ्यात्वसाधकानुमानेन समानसत्ताकभावाभावयोर्विरोधमुपमृद्यैव प्रपञ्चस्य मिथ्यात्वं साधयितुं शक्यत इति सूचितम्; श्रुत्यनुग्रहमन्तरेणापि केवलमिथ्यात्वानुमानेन समानसत्ताकभावाभावयोर्विरोधमभ्युपगम्यापि प्रतियोगिविषमसत्ताकाभावघटितं मिथ्यात्वं प्रपञ्चे साधयितुं शक्यत इति सूचयितुमाह—विषमसत्ताकयोरिति। मिथ्यात्वाभिमतप्रतियोगिनोऽधिकसत्ताकस्य प्रतियोगिसमानाधिकरणस्य अत्यन्ताभावस्य प्रतियोगित्वरूपं मिथ्यात्वं द्वितीयमिथ्यात्वलक्षणे उपपादितम् ॥६॥

७—ननु स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं न मिथ्यात्वम्, किन्तु असत्त्वमेव तत्, असतः शशविषाणादेः शशविषाणमित्यादिशब्देन स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वात्, इत्याशङ्क्याह—न च असतीत्यादि। समाधत्ते—स्वात्यन्ताभावाधिकरण इति। सत्त्वेन—सत्तादात्म्येनेत्यर्थः। शशविषाणादीनां सति अनारोपितत्वेन सत्तादात्म्येन प्रतीतेरसम्भवात्। एवं च स्वात्यन्ताभावाधिकरण एव सत्तादात्म्येन प्रतीयमानत्वं मिथ्यात्वं पर्यवसितम्। असतः प्रतीतिविषयत्वं यथा न सम्भवति तथा उपपादितं द्वितीयलक्षणे। विकल्पवृत्तेरपि प्रतीतिरूपत्वमङ्गीकृत्येयं विवक्षा बोध्या ॥७॥

८—ननु "असदेवेदमग्र आसीत्" इति श्रुत्या असतोऽपि सत्त्वेन प्रतीतिरस्ति। तथा च सत्त्वेन प्रतीयमानत्वविवक्षायामपि असति मिथ्यात्वलक्षणस्यातिव्याप्तिः दुष्परिहरेति पूर्वपक्षी शङ्कते—न चेति। समाधत्ते—

सत्त्वप्रतीतेः तत्रातिव्याप्तिर्दुष्परिहरेति वाच्यम्; "सदेव इदमग्र आसीत्" इत्यस्यार्थस्याभाव एव नञा प्रतिपाद्यते, न तु असतः सत्त्वं, विरोधात्; अतो नातिव्याप्तिः ॥८॥

सर्वञ्चान्यत् पूर्वोक्तमेवानुसन्धेयमिति उपरम्यते ॥९॥

इति मिथ्यात्वनिरूपणे चतुर्थमिथ्यात्वलक्षणम्।

---

सदेवेदमिति। "असदेवेदम्" इति वाक्येन न असति सत्त्वप्रकारकबोधो जन्यते, किन्तु "सदेव सोम्येदमग्र आसीत्" इति वाक्येन यत्र यत्प्रकारकबोधो जन्यते, तत्र तदभावप्रकारकबोधः "असदेव इदमग्र आसीत्" इति वाक्येन जन्यते। तथा हि "सदेवेदम्" इति वाक्येन इदं पदार्थे जगति अग्रकालसत्त्वप्रकारकः अद्वितीयसत्प्रकारकश्च बोधो जन्यते, "असदेवेदम्" इति वाक्येन तु तत्रैव जगति अग्रकालसत्त्वाभावप्रकारकः अद्वितीयसदभावप्रकारकश्च बोधो जन्यते। एवं च "असत् आसीत्" इत्यस्य "सत् न आसीत्" इत्येव फलितोऽर्थः। तथा च कारणं विनैव जगत् उत्पद्यत इत्यभिप्रायः। बौद्धमते कारणं विनैव कार्यमुत्पद्यत इत्येव स्वीकारात्। असदित्यत्र तु न नञा समासः, येन असत्पदं सद्भिन्नस्यैव बोधकं स्यात्। किन्तु "अमानोना निषेधवचनाः" इति अनुशासनात् असत् इति "अ" पदं नञ्समानार्थकमव्ययम्। एवञ्च "असदासीत्" इत्यस्य "सत् न आसीत्" इत्यर्थः सङ्गच्छते। मूलकृताऽपि नञा प्रतिपाद्यत इति यदुक्तं तत्र नञा इत्यस्याकारेण निषेधबोधकेनेत्येवं व्याख्येयम्। न तु असतः सत्त्वम्, विरोधादिति। "असदासीदि"ति वाक्येन असतः सत्त्वप्रकारकशाब्दबोधो न सम्भवति, "अघटो घटः" इति ज्ञानस्येवासतः सत्त्वप्रकारकबोधस्याहार्यत्वापत्त्या शाब्दबोधत्वानुपपत्तेः। अतोऽसतः सत्त्वाद्यात्म्येन बोधानुपपत्त्या न मिथ्यात्वलक्षणस्यासत्यतिव्याप्तिः ॥८॥

९—ननु स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं यदि मिथ्यात्वम्, तर्हि

अव्याप्यवृत्तिसंयोगादीनां स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वान्मिथ्यात्वं स्यात् । न चेष्टापत्तिरिति वाच्यम् । अव्याप्यवृत्तितामात्रेण संयोगादीनां मिथ्यात्वव्यवहारप्रसङ्गात्, इत्याशङ्क्याह—सर्वं चान्यदिति । केषामप्यव्याप्यवृत्तिता न सम्भवति । संयोगादीनामव्याप्यवृत्तिताभ्युपगमे अतीन्द्रियत्वापत्तिरपि स्यात्—इत्यादिकं द्वितीयलक्षण एवोक्तम् ।

एवं च संयोगादीनामव्याप्यवृत्तित्वाभावात् स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वरूपं मिथ्यात्वं संयोगादीनामप्यक्षतमिति न सिद्धसाधनता । संयोगादीनामपि यथा स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वरूपं मिथ्यात्वं सम्भवति, तथा द्वितीयलक्षणे उक्तम् । एवमत्यन्ताभावप्रतियोगित्वं च किं स्वरूपेण पारमार्थिकत्वेन वा इत्यादिविकल्पे यानि दूषणानि पूर्वपक्षिभिरुद्भावितानि तानि द्वितीयलक्षण एव निरस्तानीति भावः ।

इदमिहावधातव्यम्—स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वस्य मिथ्यात्वे प्रतियोगिनोऽत्यन्तासत्त्वमेव स्यात्, न तु मिथ्यात्वम्, इति पूर्वपक्षिणामाशयः । सिद्धान्तस्तु स्वात्यन्ताभावाधिकरणे सत्त्वेन प्रतीयमानत्वात् प्रतियोगिनो नासत्त्वम्, किन्तु मिथ्यात्वमेव । असतः सत्त्वेन प्रतीयमानत्वस्यासम्भवात् ॥९॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां चतुर्थमिथ्यात्वलक्षणम् ॥

## अथ पञ्चममिथ्यात्वलक्षणम्

सद्विविक्तत्वं वा मिथ्यात्वम् ॥ १ ॥

सत्त्वं च प्रमाणसिद्धत्वम्; प्रमाणत्वञ्च दोषासहकृतज्ञान-

---

१—न्यायदीपावलीकृतामानन्दबोधभट्टारकानां सम्मतं मिथ्यात्वलक्षणं परिष्कुर्वन्नाह—सद्विविक्तत्वं वा मिथ्यात्वमिति। आनन्दबोधाचार्यैर्हि प्रपञ्चमिथ्यात्वं साधयद्भिरुक्तम्—"विवादपदं मिथ्या, दृश्यत्वात्। यदित्थं तत्तथा, यथोभयवाद्यविवादपदं रजतम्। तथैतत्। ततस्तथा। विवाद-पदस्यानेकरूपत्वेऽपि साध्यविशेषोपादानेन तद्विशेषसिद्धिः। सत्यविवेकस्य मिथ्याभावस्य सध्यत्वान्नाप्रसिद्धविशेषणता"।

यद्यपि एकविधमिथ्यात्वनिर्वचनेनैवोद्देश्यसिद्धिः सम्भवति, तथापि प्रपञ्चमिथ्यात्वे सर्वेषामेव वेदान्ताचार्याणां सम्मतिप्रदर्शनाय तत्तदाचार्यसम्म-तानि मिथ्यात्वनिर्वचनान्यत्र प्रदर्शितानि।

प्रथमलक्षणे सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा मिथ्यात्व-मित्युक्तम्; भङ्गयन्तरेण पुनः सत्प्रतियोगिकभेदस्यापि मिथ्यात्वं सम्भवतीति प्रदर्शनाय लक्षणान्तरमवतारितम्। प्रथमलक्षणोक्तसत्प्रतियोगिकभेदतोऽस्य वैलक्षण्यमग्रे स्फुटीभविष्यति। सद्विविक्तत्वमित्यस्य सत्त्वावच्छिन्नप्रतियोगि-ताकभेदोऽर्थः, विवेकपदस्य भेदार्थकत्वात्। सद्रूपब्रह्मभिन्नतया च वियदादि-प्रपञ्चे लक्षणसमन्वयः ॥ १ ॥

२—ननु वियदादिप्रपञ्चे सद्रूपब्रह्मभेदस्य सिद्धत्वेन तादृग्भेदसाधने सिद्धसाधनमेव स्यादित्याशङ्क्याह—सत्त्वं चेति। भेदप्रतियोगितावच्छेदकं सत्त्वं च प्रमाणसिद्धत्वम्, तच्च प्रमाणजन्यज्ञानविषयत्वम्।

ननु प्रमाणसिद्धत्वावच्छिन्नप्रतियोगिताकभेदो वियदादिप्रपञ्चे न सम्भवति, वियदादीनां यथायथं प्रत्यक्षादिप्रमाणसिद्धत्वात्; तथा च

करणत्वम्; तेन स्वप्नादिवत् प्रमाणसिद्धभिन्नत्वेन मिथ्यात्वं सिद्धयति ॥२॥

---

लक्षणस्याव्याप्तिरेव स्यादित्याशङ्कयाह—प्रमाणत्वञ्च दोषासहकृतज्ञानकरणत्वमिति। दोषाजन्यं यज्ज्ञानं प्रमारूपं तत्करणत्वम्, तथा च दोषाजन्यं यज्ज्ञानं तत्करणं प्रमाणम्, तज्जन्यज्ञानविषयो यः सः प्रमाणसिद्धः। स एवात्र लक्षणे सत्पदेन विवक्षितः। तद्भिन्नत्वं सद्विविक्तत्वमिति फलितम्।

ननु शुक्तिरजतादिज्ञानस्य सादृश्यादिदोषजन्यत्वेऽपि वियदादिप्रपञ्चज्ञानस्य दोषजन्यत्वाभावात् दोषाजन्यज्ञानकरणजन्यज्ञानविषयत्वेन वियदादौ तादृशज्ञानविषयभेदाभावात् कथं लक्षणसंगतिः? यदि तु अन्तःकरणस्याप्यविद्योपादानकतया अविद्याऽभिन्नत्वात्, अविद्यायाश्च दोषरूपत्वेन अविद्यापरिणामान्तःकरणवृत्तिरूपस्य वियदादिज्ञानस्याविद्यारूपदोषजन्यत्वमभ्युपेपि, तर्हि वेदान्तमहावाक्यजन्यान्तःकरणवृत्तेरप्यविद्यारूपदोषजन्यत्वमस्त्यवेति दोषाजन्यज्ञानमेव न सिध्येत्—इति न शङ्कनीयम्; दोषासहकृतमित्यस्य दोषविधया दोषाजन्यमित्यर्थः। तेन वेदान्तमहावाक्यजन्यान्तःकरणवृत्तेः परिणाम्युपादानविधयाऽविद्याजन्यत्वेऽपि दोषविधयाऽविद्याजन्यत्वं नास्ति; यतो दोषविधया कारणत्वं निमित्तकारणत्वमेव; न तूपादानकारणत्वम्। वेदान्तमहावाक्यजन्याखण्डाकारान्तःकरणवृत्तेः परिणाम्युपादानतयाऽविद्याजन्यत्वेऽपि दोषविधयाऽविद्यारूपनिमित्तकारणजन्यत्वाभावान्न दोषाजन्यज्ञानाप्रसिद्धिः। नापि वियदादिप्रपञ्चे लक्षणासंगतिः। यतः प्रपञ्चज्ञानस्य यथा परिणाम्युपादानतयाऽविद्याजन्यत्वं तथैव दोषविधयापि अविद्यारूपनिमित्तकारणजन्यत्वमप्यस्ति। प्रपञ्चज्ञानस्य वेदान्तमहावाक्यजन्यज्ञानस्य च परिणाम्युपादानतयाऽविद्याजन्यत्वे समानेऽपि दोषविधयाऽविद्यानिमित्तकानिमित्तकत्वाभ्यां भेदादिति भावः।

शुद्धं ब्रह्म वृत्तिव्याप्यमिति विवरणमते तत्त्वमस्यादिमहावाक्यजन्यज्ञानस्याबाधितविषयकत्वेन प्रमात्वम्। प्रपञ्चज्ञानस्य च बाधितविषयकत्वेन

प्रमाणसिद्धत्वञ्चाबाध्यत्वव्याप्यमित्यन्यत्[1] ॥३॥

अत्राप्यसति, निर्धर्मके ब्रह्मणि चातिव्याप्तिवारणाय

---

भ्रमत्वं बोध्यम् । भ्रमज्ञानस्य च दोषजन्यत्वावश्यकत्वेन प्रपञ्चज्ञानस्याविद्यादोष-जन्यत्वं कल्प्यते । एवं च दोषाजन्यज्ञानकरणजन्यज्ञानविषयभिन्नत्वं मिथ्यात्वं पर्यवसितम् । तादृशज्ञानविषयभिन्नत्वेन वियदादिप्रपञ्चमात्रस्य मिथ्यात्वं सङ्गमयितुमाह—तेनेति । तादृशज्ञानविषयभिन्नत्वेन स्वप्नादिवत् स्वप्नदृष्टगजादिवत्, जाग्रद्दृष्टप्रपञ्चस्यापि मिथ्यात्वं तादृशज्ञानविषय-भिन्नत्वरूपं सिध्यति ॥२॥

३—न्यायदीपावल्यामेतल्लक्षणविवरणावसरे आनन्दबोधभट्टारकैः "सत्यमबाध्यम्, बाध्यं मिथ्या" इति तद्विवेक इत्युक्तम् । अत्र पुनः मूलकृद्भिः सत्त्वञ्च प्रमाणसिद्धत्वमुक्तम् । न्यायदीपावलीकृतां मतं परित्यज्य प्रकारान्तरेण सत्त्वनिरूपणे को हेतुः ? इत्याशङ्क्याह—प्रमाणसिद्धत्वञ्च अबाध्यत्वव्याप्यमित्यन्यत् । अत्र प्रमाणसिद्धत्वमेव सत्त्वं वक्तव्यम्, न तु बाध्यत्वघटितम् । यतो बाध्यत्वस्यैव मिथ्यात्वेन बाध्यत्वघटितस्याबाध्यभेदस्य मिथ्यात्वोपवर्णनं व्यर्थं स्यात् । अतः अन्यद् बाध्यत्वघटितादन्यत्, प्रमाणसिद्धत्वं यद् अबाध्यत्वव्याप्यं तदेवेह सत्त्वं विवक्षितम् ॥३॥

४—ननु सिद्धान्तेऽसतां शशविषाणादीनां ज्ञानाविषयत्वेन शश-विषाणादौ एतल्लक्षणस्यातिव्याप्तिः । दोषाजन्य–ज्ञानकरणजन्य–ज्ञानविषय-भिन्नत्वस्य मिथ्यात्वलक्षणस्य ज्ञानाविषयशशविषाणादौ गतत्वात् । एवं शुद्धं ब्रह्म न वृत्तिविषयः, इति मते तादृशज्ञानविषयभेदस्य शुद्धे ब्रह्मण्यपि सम्भवात् लक्षणस्यातिव्याप्तिरित्याह—अत्रापीति । सत्त्वेन प्रतीयमानत्वं विशेषणं देयमिति । सत्त्वेन प्रतीयमानत्वे सति तादृशज्ञानविषयभिन्नत्वं मिथ्यात्वमिति फलितम् । एवञ्च न असति शुद्धे ब्रह्मणि वा अतिव्याप्तिरित्याह

---

१. इत्यन्यत् = अन्यदेतदित्यपि पाठः ।

सत्त्वेन प्रतीयमानत्वं विशेषणं देयम्; तयोः सत्त्वप्रकारकप्रतीति-विषयत्वाभावात् ॥४॥

अत एव सद्विविक्तत्वमित्यत्र सत्त्वं सत्ताजात्यधिकरणत्वं वा, अबाध्यत्वं वा, ब्रह्मरूपत्वं वा ? आद्ये घटादावाविद्यकजाते-

---

—तयोरिति। तयोः—असद्ब्रह्मणोः सत्त्वप्रकारकप्रतीतिविषयत्वाभावात् तादृशज्ञानविषयभिन्नत्वेऽपि विशेषणाभावेन विशिष्टलक्षणाभावान्नातिव्याप्तिः। असतः यथा सत्त्वप्रकारकप्रतीतिविषयत्वं नास्ति तथा उक्तमधस्तात्। शुद्धस्य च ब्रह्मणो ज्ञानविषयत्वं नास्तीति वाचस्पतिमते सत्त्वप्रकारकप्रतीतिविषयत्वं न सम्भवतीति न तत्रापि अतिव्याप्तिः, शुद्धब्रह्मणो वेदान्तमहावाक्यजन्यनिर्विकल्पकवृत्तिविषयत्वेऽपि सत्त्वप्रकारकप्रतीतिविषयत्वाभावान्नातिव्याप्तिरिति भावः।

न च सत्त्वेन प्रतीयमानत्वे सति सद्विविक्तत्वं यदि मिथ्यात्वम्, तर्हि एतल्लक्षणस्य सदसद्विलक्षणत्वरूपप्रथमलक्षणतो भेदो न स्यात्! प्रथमलक्षणे हि क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानर्हत्वमेवासत्त्वमुक्तम्। तद्वैलक्षण्यञ्च सत्त्वेन प्रतीत्यर्हत्वमेव, अत्रापि सत्त्वेन प्रतीयमानत्वं विशेषणमुपात्तम्। तथा च सद्विलक्षणत्वे सति असद्विलक्षणत्वमेव पर्यवसितमिति वाच्यम्। प्रथमलक्षणे हि बाध्यत्वघटितं सत्त्वमुक्तम्, अत्र पुनः तदघटितमेव प्रमाणसिद्धत्वं सत्त्वमुक्तमिति प्रथमलक्षणतः पञ्चमलक्षणस्य वैलक्षण्यात् ॥४॥

५—अत एव—प्रमाणसिद्धत्वरूपसत्त्वविवक्षणादेव पूर्वपक्षिभिरुद्भावितं दूषणजातं निरस्तम्। अत एव इत्यस्य निरस्तमित्यनेन सम्बन्धः। पूर्वपक्षिभिर्यद् दूषणजातमुक्तं तदनुवदति—सद्विविक्तत्वम् इत्यत्रेति। सत्त्वं त्रिधा विकल्प्य दूषयति पूर्वपक्षी—आद्ये इत्यादि। सत्त्वं यदि सत्ताजात्यधिकरणत्वं स्यात्, तर्हि आविद्यकसत्ताजात्यधिकरणे घटादौ सत्तावच्छिन्न-

स्त्वया अभ्युपगमेनासम्भवः; द्वितीये बाध्यत्वरूपमिथ्यात्व-पर्यवसानम्; तृतीये सिद्धसाधनमिति निरस्तम्; अनभ्युपगमादेव ॥५॥

सदसद्विलक्षणत्वपक्षोक्तयुक्तयश्चात्रानुसन्धेयाः ॥६॥

---

प्रतियोगिताकभेदस्याभावेन लक्षणस्यासम्भवः स्यात्। अन्योन्याभावस्य स्वप्रतियोगितावच्छेदकधर्मविरुद्धत्वात् सत्ताजातिमति सत्तावच्छिन्न-प्रतियोगिताकभेदस्यासम्भवादिति भावः। यद्यपि सिद्धान्ते घटाद्युपहितं सद्रूपं ब्रह्मैव घटत्वादिसामान्यमित्युक्तं प्राक्, तथापि घटाद्युपहिता अनाद्यविद्यापि घटादिसामान्यरूपा भवितुमर्हतीत्याह—आविद्यकेति। अविद्यारूपा इत्यर्थः। न तु अविद्याजन्या। जातेरनादित्वात्। अत्र द्रव्यादित्रयोपहिता अनाद्यविद्यैव आविद्यकसत्ताजातिः। एवं जातेर्ब्रह्मरूपत्वपक्षेऽपि द्रव्यादित्रयोपहितं ब्रह्मैव सत्ताजातिरिति बोध्यम्।

द्वितीये विकल्पे दोषमाह—द्वितीय इत्यादि। यदि अबाध्यत्वमेव सत्त्वं तर्हि अबाध्यभिन्नं मिथ्या इत्यायातम्। अबाध्यभिन्नश्च बाध्यम्। तथा च बाध्यत्वमेव मिथ्यात्वमिति फलितम्। एवञ्च अस्मिन् लक्षणे बाध्यत्वेतरांशवैयर्थ्यम्। द्वितीयतृतीयलक्षणाभ्यां पौनरुक्त्यमपि। द्वितीयलक्षणे निषेधप्रतियोगित्वरूपं बाध्यत्वमुक्तम्, तृतीयलक्षणे ज्ञानबाध्यत्वमेव मिथ्यात्वमुक्तं।

तृतीये विकल्पे दूषणमाह—तृतीय इति। यदि ब्रह्मरूपत्वं सत्त्वं तर्हि ब्रह्मभिन्नत्वमेव मिथ्यात्वमिति आयातम्। प्रपञ्चे ब्रह्मवैलक्षण्यस्य सिद्धत्वेन एतादृशमिथ्यात्वानुमाने सिद्धसाधनमिति भावः। सत्त्वस्य सत्ताजात्यादिरूपत्वानभ्युपगमात् पूर्वपक्षिदूषणानामनवकाश इत्याह सिद्धान्ती—अनभ्युपगमादिति ॥५॥

६—ननु सत्त्वेन प्रतीयमानत्वे सति सद्भिन्नत्वस्य मिथ्यात्वे प्रकृत-मिथ्यात्वानुमाने अंशतः सिद्धसाधनम्। घटादिप्रपञ्चे सत्त्वेन प्रतीयमानत्वस्य

अवशिष्टं दृष्टान्तसिद्धौ वक्ष्यामः ॥७॥

इति मिथ्यात्वनिरूपणे पञ्चममिथ्यात्वलक्षणम् ।

---

साध्यविशेषणांशस्य सिद्धत्वादित्याशङ्कयाह—सदसद्विलक्षणत्वपक्षोक्त-युक्तयश्चेत्यादि । "सदसद्विलक्षणत्वं मिथ्यात्वमिति प्रथममिथ्यात्वलक्षणे गुणादिकं गुण्यादिना भिन्नाभिन्नम्" इति ग्रन्थेन याः खलु युक्तय उक्ताः, ताः अत्राप्यनुसन्धेयाः । गुणादिग्रन्थे हि "गुणादिकं गुण्यादिना भिन्नाभिन्नम्, समानाधिकृतत्वादिति भेदाभेदवादिप्रयोगे तार्किकाद्यङ्गीकृतस्य भिन्नत्वस्य सिद्धावपि उद्देश्यप्रतीत्यसिद्धेः यथा न सिद्धसाधनं तथा प्रकृतेऽपि मिलित-प्रतीतेरुद्देश्यत्वान्न सिद्धसाधनम् । यथा तत्राभेदे घटः कुम्भ इति सामाना-धिकरण्यप्रतीतेरदर्शनेन मिलितसिद्धिरुद्देश्या, तथा प्रकृतेऽपि सत्त्वरहिते तुच्छे दृश्यत्वादर्शनेन मिलितस्य तत्प्रयोजकतया मिलितसिद्धिरुद्देश्या इति समानमि"ति उक्तम् । तद्वदत्रापि सद्भिन्ने तुच्छे दृश्यत्वहेतोरदर्शनेन सत्त्वेन प्रतीयमानत्वमिलितस्यैव सद्भेदस्य दृश्यत्वप्रयोजकतया सत्त्वेन प्रतीयमानत्वमिलितसद्भेदस्यैव सिद्धिरुद्देश्या । शुक्तिरजतादौ दृष्टान्ते सत्त्वेन प्रतीयमानत्वमिलितसद्भेदस्य साध्यस्य प्रसिद्धिरिति भावः ॥६॥

७—ननु एतादृशमिथ्यात्वानुमाने शुक्तिरजतादेर्दृष्टान्तत्वं न सम्भवति, माध्वमते शुक्तिरजतादेरलीकत्वस्वीकारदित्याशङ्कयाह—अवशिष्टञ्चे-त्यादि । अधिकञ्चेति टीकाकृत्सम्मतः पाठः । शुक्तिरजतादेः सत्त्वेन प्रतीय-मानतया अलीकान्यत्वं सिद्धान्तिभिः साधनीयमिति भावः; मिथ्यात्वानुमाने दृष्टान्तीकृतं शुक्तिरजतं यथा न अलीकं किन्तु मिथ्यैव, तथा दृष्टान्त-निरूपणावसरे मूलकृद्भिरेव प्रतिपादयिष्यते ॥७॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्र-नाथशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां पञ्चममिथ्यात्व-लक्षणविवरणम् ।

## अथ मिथ्यात्वसामान्योपपत्तिः ।

ननु उक्तमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वापातः, एकस्मिन् धर्मिणि प्रसक्तयोर्विरुद्धधर्मयोरेकमिथ्यात्वे अपरसत्यत्व-नियमात् ॥१॥

मिथ्यात्वसत्यत्वे च तद्वदेव प्रपञ्चसत्यत्वापत्तेः, उभय-

---

१—मिथ्यात्वनिर्वचनमसहमानः पूर्वपक्षी शङ्कते अस्तु वा मिथ्यात्वं प्रदर्शितरूपम्, तथापि निरुक्तं मिथ्यात्वं बाध्यमबाध्यं वा ? आद्ये जगन्निष्ठ-मिथ्यात्वस्य बाध्यत्वं पूर्वपक्षिभिरपि अङ्गीकृतमेवेति तादृशमिथ्यात्वसाधने सिद्धसाधनम् । बाध्यभूतमिथ्यात्वावेदकत्वेन अद्वैतश्रुतेरतत्त्वावेदकत्वञ्च स्यात् । किञ्च मिथ्यात्वस्य बाध्यत्वे "जगत् सत्यम्, मिथ्याभूतमिथ्यात्व-कत्वात्—आत्मवत्" इत्यनुमानेन जगत् सत्यं स्यादित्यादिदूषण-प्रदर्शनपरं पूर्वपक्षमवतारयति—नन्वित्यादि । उक्तमिथ्यात्वस्य—निरुक्तपञ्चविधमिथ्यात्वस्य, मिथ्यात्वे—बाध्यत्वे, प्रपञ्चसत्यत्वा-पातः—प्रपञ्चसत्यत्वस्य आपातः—अनुमितिः । मिथ्यात्वस्य मिथ्यात्वेन प्रपञ्चस्य सत्यत्वे अनुमानमेव प्रमाणमिति भावः । अत्र आपत्तिपदमनुमिति-परम्, न तु तर्कपरम् । अनुमानं तु "जगत् सत्यम्" इत्यादि प्रागेवोक्तम् । अत्रानुमाने व्याप्तिं ग्राहयन्नाह—एकस्मिन् धर्मिणि इत्यादि नियमात् इत्यन्तम् । एकस्मिन् धर्मिणि प्रसक्तयोर्विरुद्धधर्मयोः—परस्परविरहरूपयोः परस्परविरहव्यापकयोर्वा एकमिथ्यात्वे अपरसत्यत्वनियमस्यात्मनि दृष्टत्वेन व्याप्तिग्रहसम्भवात् । तथा हि एकस्मिन् धर्मिणि आत्मनि प्रसक्तयोः परस्परविरहरूपयोः परस्परविरहव्यापकरूपयोर्वा सत्यत्वमिथ्यात्वयोः मिथ्यात्वस्य मिथ्यात्वेन सत्यत्वस्य सत्यत्वदर्शनादिति भावः । अत एव—"मिथ्यात्वं यदि बाध्यं स्यात् जगत्सत्यत्वमापतेत्" इत्युक्तं पूर्वपक्षिभिः ॥१॥

२—द्वितीयकल्पे दोषमाह—मिथ्यात्वसत्यत्वे चेति । मिथ्या-

थापि अद्वैतव्याघात इति चेत् ॥२॥

न, मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चसत्यत्वानुपपत्तेः ॥३॥

तत्र हि विरुद्धयोर्धर्मयोरेकमिथ्यात्वेऽपरसत्त्वम्, यत्र मिथ्यात्वावच्छेदकमुभयवृत्ति न भवेत् ॥४॥

---

त्वस्य सत्यपि दृश्यत्वे सत्यत्वेन दृश्यत्वहेतोरत्रैव मिथ्यात्वव्यभिचारित्वात् तद्वदेव—मिथ्यात्वस्य सत्यत्ववदेव प्रपञ्चसत्यत्वापत्तेः—दृश्यत्वादिहेतोर्मिथ्यात्वासाधकत्वादिति भावः। अस्य विकल्पस्य दृश्यत्वादिहेतूनां मिथ्यात्वव्यभिचारप्रदर्शने तात्पर्यं बोध्यम्। विकल्पद्वयसाधारणं दोषमाह—उभयथापीति। प्रपञ्चमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वानुमानेन अद्वैतव्याघात एवं मिथ्यात्वस्य सत्यत्वे सदन्तरस्वीकारेणापि अद्वैतव्याकोप इत्यर्थः। एवञ्च—

"मिथ्यात्वं यद्यबाध्यं स्यात् सदद्वैतमतक्षतिः" ॥ इति पूर्वपक्षसंक्षेप ॥२॥

३—मिथ्यात्वस्य अबाध्यत्वपक्षन्तु अनभ्युपगममात्रेण एवं निरस्य बाध्यत्वपक्षे प्रदर्शितदोषाणां निरसनायाह सिद्धान्ती—न मिथ्यात्वमिथ्यात्वेऽपीत्यादि। प्रपञ्चमिथ्यात्वस्य मिथ्यात्वेऽपि बाध्यत्वेऽपि प्रपञ्चस्य सत्यत्वानुपपत्तेरित्यर्थः ॥३॥

४—प्रपञ्चमिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वसाधकानुमानप्रमाणस्य जागरूकत्वात् कथं प्रपञ्चसत्यत्वानुपपत्तिरित्यत आह—तत्र हीति। तत्रैव धर्मिणि प्रसक्तयोर्विरुद्धयोर्धर्मयोर्मध्ये एकमिथ्यात्वे—एकस्य मिथ्यात्वे अपरसत्त्वम्—अपरस्य धर्मस्य तत्रैव सत्यत्वं यत्र मिथ्यात्वावच्छेदकम्—दृश्यत्वादि, उभयवृत्ति न भवेत्—एकधर्मिप्रसक्तविरुद्धधर्मद्वयवृत्ति न भवेदित्यर्थः ॥४॥

यथा परस्परविरहरूपयोः रजतत्वतदभावयोः शुक्तौ, यथा वा परस्परविरहव्यापकयोः रजतभिन्नत्वरजतत्वयोः तत्रैव; तत्र निषेध्यतावच्छेदकभेदनियमात् ॥५॥

प्रकृते तु निषेध्यतावच्छेदकमेकमेव दृश्यत्वादि, यथा

---

५—दृष्टान्तोपादानेनैतद् द्रढयन्नाह—**यथा परस्परविरहरूपयोरित्यादि** । शुक्तिकारूपे धर्मिणि प्रसक्तयोः परस्परविरहरूपयोः रजतत्वरजतत्वात्यन्ताभावयोर्धर्मयोर्मध्ये एकस्य धर्मस्य निषेधे मिथ्यात्वघटकात्यन्ताभावप्रतियोगित्वे अपरधर्मस्य सत्त्वं रजतत्वस्य निषेधे मिथ्यात्वघटकात्यन्ताभावप्रतियोगित्वे रजतत्वाभावस्य सत्त्वं रजतत्वाभावस्य निषेधे मिथ्यात्वघटकात्यन्ताभावप्रतियोगित्वे रजतत्वस्य च सत्त्वमायाति । तत् कस्य हेतोः ? निषेध्यतावच्छेदकभेदात् । रजतत्वस्य निषेधे निषेध्यतावच्छेदकधर्मः रजतत्वं रजतत्वाभावस्य निषेधे निषेध्यतावच्छेदकधर्मः रजतत्वाभावत्वम्, रजतत्वत्वरजतत्वाभावत्वयोः, भेदात् । निषेध्यतावच्छेदकधर्मभेदेन एकस्मिन् धर्मिणि प्रसक्तयोः परस्परविरहरूपयोः धर्मयोरेकनिषेधे अपरसत्त्वं प्रदर्श्य परस्परात्यन्ताभावव्यापकयोर्धर्मयोरेकनिषेधे अपरधर्मस्य सत्त्वं दर्शयितुमाह—**यथा वा परस्परविरहव्यापकयोरित्यादि** । तत्रैव शुक्तिरूपे धर्मिणि परस्परविरहव्यापकयोः अत एव विरुद्धयोर्धर्मयोः रजतभिन्नत्वरजतत्वयोरेकधर्मस्य निषेधे अपरधर्मस्य सत्त्वमायाति, निषेध्यतावच्छेदकधर्मभेदात् । तथा हि—रजतभेदनिषेधे रजतत्वधर्मस्य सत्त्वम्, रजतत्वस्य निषेधे रजतभेदस्य सत्त्वं भवति । रजतभेदनिषेधस्य निषेध्यतावच्छेदकधर्मः रजतभेदत्वम्, रजतत्वनिषेधस्य च रजतत्वत्वम् । रजतत्वत्वरजतभेदत्वयोर्धर्मयोर्भेदात् । एकस्मिन् धर्मिणि प्रसक्तयोः तादृशविरुद्धयोर्धर्मयोः प्रत्येकमभावद्वयासम्भवादिति भावः ॥५॥

६—निषेध्यतावच्छेदकैक्ये तु नैवमित्याह—**प्रकृते त्विति** । सत्यत्वमिथ्यात्वयोः दृश्यत्वादिरूपैकनिषेध्यतावच्छेदकावच्छिन्नत्वेन मिथ्यात्व-

गोत्वाश्वत्वयोरेकस्मिन् गजे निषेधे गजत्वात्यन्ताभावव्याप्यत्वं निषेध्यतावच्छेदकमुभयोः तुल्यमिति नैकतरनिषेधेऽन्यतरसत्त्वं तद्वत् ॥६॥

यथा च सत्यत्वमिथ्यात्वयोर्न परस्परविरहरूपत्वम्, न वा परस्परविरहव्यापकत्वं तथोपपादितमधस्तात् ॥७॥

---

मिथ्यात्वेऽपि न मिथ्यात्वसत्यत्वम्। मिथ्यात्वसत्यत्वयोः परस्परविरहरूपत्वस्य परस्परविरहव्यापकत्वस्य च अभावेन एकनिषेध्यतावच्छेदकावच्छिन्नत्वसम्भवः। तुच्छे शशविषाणादौ सत्यत्वस्य मिथ्यात्वस्य च अभावेन न सत्यत्वमिथ्यात्वयोः परस्परविरहरूपत्वम्; न वा परस्परविरहव्यापकत्वम्। किन्तु सत्यत्वमिथ्यात्वयोः गोत्वाश्वत्वयोरिव विरुद्धत्वमात्रं बोध्यम्। तथा च न मिथ्यात्वस्य मिथ्यात्वे तस्य सत्यत्वम्। परस्परविरहरूपत्वाभावे परस्परविरहव्यापकत्वाभावे च द्वयोर्विरुद्धयोधर्मयोरेकनिषेधेऽपरस्य सत्त्वं नायातीत्यत्र निदर्शनमाह—यथा गोत्वाश्वत्वयोरिति। गजादौ धर्मिणि गोत्वाश्वत्वयोर्द्वयोरेव अभावाच्च गोत्वाश्वत्वयोः परस्परविरहरूपत्वं परस्परविरहव्यापकरूपत्वं वा। अत एव गजादौ प्रसक्तयोस्तयोर्विरुद्धयोः गोत्वाश्वत्वयोर्निषेधे निषेध्यतावच्छेदकं गजत्वात्यन्ताभावव्याप्यत्वरूपं गोत्वाश्वत्वयोस्तुल्यम्। न हि गजे गोत्वनिषेधे अश्वत्वमायाति न वा अश्वत्वनिषेधे गोत्वम्। तत्कस्य हेतोः? तयोः परस्परविरहरूपत्वस्य परस्परविरहव्यापकरूपत्वस्य चाभावात्। तद्वत् प्रकृतेऽपि सत्यत्वमिथ्यात्वयोः परस्परविहरूपत्वस्य परस्परविरहव्यापकरूपत्वस्य चाभावान्नैकनिषेधेऽपरसत्यत्वम् ॥६॥

७—न च गोत्वाश्वत्वयोः परस्परविरहरूपत्वस्य परस्परविरहव्यापकत्वस्य चाभावात् तयोरेकनिषेध्यतावच्छेदकावच्छिन्नत्वस्य सम्भवेऽपि परस्परविरहरूपयोः सत्यत्वमिथ्यात्वयोरेकनिषेध्यतावच्छेदकावच्छिन्नत्वमसम्भवि, तथा च कथमुक्तम्—"प्रकृते तु निषेध्यतावच्छेदकमेकमेव दृश्यत्वादिति

परस्परविरहरूपत्वेऽपि विषमसत्ताकयोरविरोधात्, व्याव-

---

वाच्यम्। प्रथममिथ्यात्वलक्षणे सत्त्वासत्त्वनिरूपणप्रस्तावे "न च व्याहतिः सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया परस्परविरहव्यापकतया वा" इत्यादिग्रन्थेन सत्त्वासत्त्वयोः परस्परविरहरूपत्वासम्भवस्य परस्परविरहव्यापकरूपत्वासम्भवस्य च प्रतिपादितत्वादित्याह—यथा च सत्यत्वमिथ्यात्वयोरिति ॥७॥

८—ननु द्वितीयमिथ्यात्वलक्षणे मिथ्यात्वाभावरूपसत्यत्वस्य ग्रन्थकृद्भिरेवाङ्गीकृतत्वेन [ ४९ वाक्यं द्रष्टव्यम् ] सत्यत्वमिथ्यात्वयोः परस्परविरहरूपत्वमस्त्येव। तथा तुच्छानङ्गीकर्तृमते सत्यत्वमिथ्यात्वयोः परस्परविरहव्यापकत्वमपि अस्ति। एवं सत्यत्वमिथ्यात्वयोः परस्परविरहरूपत्वाभावे परस्परविरहव्यापकत्वाभावेऽपि च गोत्वाश्वत्ववद् विरुद्धयोस्तयोर्न सामानाधिकरण्यमिति कथं सत्यत्वेन प्रतीते प्रपञ्चे सिद्धान्तिभिर्मिथ्यात्वमनुमेयमिति चेत्—न, सत्यत्वमिथ्यात्वयोः परस्परविरहरूपत्वेऽपि दोषाभावात्, इत्याह सिद्धान्ती—परस्परविरहरूपत्वेऽपीत्यादि। "परस्परविरहरूपत्वे" इत्यस्य परस्परविरहरूपत्वे, परस्परविरहव्यापकरूपत्वे, परस्परविरहव्याप्यरूपत्वे चेत्यर्थः। गोत्वाश्वत्ववत् सत्यत्वमिथ्यात्वयोः परस्परविरहव्याप्यत्वेऽपि विषमसत्ताकयोः सत्यत्वमिथ्यात्वयोरेकस्मिन् धर्मिणि सत्त्वे विरोधाभावात्। तथा च, प्रपञ्चमिथ्यात्वं हि प्रपञ्चसमसत्ताकत्वेन व्यावहारिकम्। व्यावहारिकमिथ्यात्ववति सत्यत्वं न व्यावहारिकं भवितुमर्हति, तुल्यसत्ताकत्वेन विरोधात्। किन्तु मिथ्यात्ववति प्रपञ्चे मिथ्यात्वविषमसत्ताकमेव सत्यत्वमङ्गीकरणीयं तच्च, पारमार्थिकं प्रातिभासिकं वा, प्रकृते च पारमार्थिकं सत्यत्वं न सम्भवतीत्याशयेनाह—व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपीति।

अस्यार्थः—प्रपञ्चे व्यावहारिकमिथ्यात्वेन व्यावहारिकपारमार्थिकसत्यत्वद्वयापहारेऽपि प्रातीतिकसत्यत्वानपहारात्, अपहारोऽत्रैकस्मिन्

हारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि काल्पनिक-

---

धर्मिणि विरुद्धयोर्धर्मयोर्मध्ये एकस्य धर्मस्य यत्सत्ताकत्वमपरस्य धर्मस्य तद्भिन्नसत्ताकत्वमिति व्याप्तिबलेन—बोध्यः। अयमाशयः—व्यावहारिकं सत्यत्वं नाम व्यवहारकालाबाध्यत्वम्। व्यावहारिकमिथ्यात्वेन प्रपञ्चे व्यवहारकालबाध्यत्वरूपव्यावहारिकसत्यत्वस्यापहारे प्रपञ्चे व्यवहारकाल बाध्यत्वमायातम्। प्रपञ्चे व्यवहारकालबाध्यत्वे स्वीकृते सर्वदा अबाध्यत्वरूपं पारमार्थिकसत्यत्वं न सम्भववति, इति व्यावहारिक-सत्यत्वापहारेण पारमार्थिकसत्यत्वस्यापि अपहारात् काल्पनिकं सत्य-त्वमवशिष्यते। अत आह मूलकारः—काल्पनिकसत्यत्वानपहा-रात्। व्यावहारिकमिथ्यात्ववति प्रपञ्चे काल्पनिकसत्यत्वस्याविरोधेन मिथ्याभूतस्यापि प्रपञ्चस्य काल्पनिकसत्यत्वेन प्रतीतिरुपपद्यते। व्याव-हारिकमिथ्यात्वेन सह प्रातिभासिकसत्यत्वस्य विरोधाभावात्। व्यावहारिकमिथ्यात्ववति शुक्तिरजते काल्पनिकसत्यत्ववत्। तथा च प्रपञ्चे स्वसमानसत्ताकमिथ्यात्वसिद्धौ न सिद्धसाधनादि इति भावः। न च सिद्धान्ते आकाशादिप्रपञ्चे प्रातीतिकसत्यत्वाङ्गीकारे "सत्यञ्च अनृतञ्च सत्यमभवत्" इतिश्रुतौ अनृतपदानर्थक्यम्। सत्यम्---व्यावहारिकाकाशादि-प्रपञ्चरूपमनृतम्—प्रातिभासिकरजतादिरूपं सत्यं ब्रह्म अभवत् अविद्या-वशात् तत्तद्रूपेण व्यावर्तत। तथा च तादृशविवर्तोपादानं ब्रह्म इति श्रुतेरर्थः। यदि व्यावहारिके प्रपञ्चे प्रातीतिकं सत्यत्वमङ्गीक्रियते, तदा सत्यस्य ब्रह्मणः प्रातीतिकसत्यत्वाश्रयाकाशादिरूपेण शुक्तिरजतादिरूपेण च विवर्तने अनृतपदं व्यर्थं स्यात्। अनृतपदेन प्रातिभासिकसत्यत्वयुक्तं शुक्तिरजतादिकमेवाभिप्रेतमासीत्, तच्चेदानीं सत्यपदेनैव गृहीतम्। प्रपञ्चेऽपि प्रातिभासिकसत्यत्वाङ्गीकारात्। अनृतपदग्राह्यस्य कस्यचिदभावात्। एवञ्च श्रुतेरानर्थक्यभिया आकाशादिप्रपञ्चे प्रातिभासिकं सत्यत्वमङ्गीकर्तुं न शक्यते। एवं व्यावहारिकमिथ्यात्वविरोधात् व्यावहारिकमपि सत्यत्वं

सत्यत्वानपहारात्, तार्किकमतसिद्धसंयोगतदभाववत् सत्यत्व-
मिथ्यात्वयोः समुच्चयाभ्युपगमाच्च ॥८॥

---

कथयितुं न शक्यते। तथा च प्रपञ्चे पारमार्थिकसत्यत्वमेव गत्यन्तराभावेन सिद्धान्तिभिरङ्गीकरणीयम्—इति वाच्यम्; श्रुतौ सत्यपदस्य व्यवहारकाला-बाध्यपरतया अनृतपदस्य च व्यवहारकालबाध्यपरतया अनृतपदस्यानर्थ-क्यासम्भवात्। शुक्तिरजतादौ व्यावहारिकमिथ्यात्वस्य प्रातिभासि-कसत्यत्वस्य च दृष्टत्वेन प्रपञ्चेऽपि व्यावहारिकमिथ्यात्वं प्रातिभा-सिकञ्च सत्यत्वं कल्प्यते। शुक्तिरजते यथा मिथ्यात्वाज्ञानेन प्रातिभासिकसत्यत्वस्योत्पत्तिस्तथैव प्रपञ्चेऽपि मिथ्यात्वाज्ञानेन प्रातिभासिक-सत्यत्वस्योत्पत्तिः। प्रपञ्चे मिथ्यात्वप्रमया मिथ्यात्वाज्ञानस्य मिथ्यात्वा-ज्ञानकार्यस्य च प्रातिभासिकसत्यत्वस्योच्छेदः। प्रपञ्चगतसत्यत्वस्य मिथ्या-त्वप्रमाबाध्यत्वेन ब्रह्मप्रमान्यप्रमाबाध्यत्वात् प्रपञ्चगतसत्यत्वं प्रातीतिक-मेवाङ्गीकरणीयमिति तत्त्वम्।

ब्रह्मप्रमातिरिक्तप्रमाबाध्यत्वेन प्रपञ्चगतसत्यत्वस्य प्रातिभासिक-त्वमङ्गीकृत्य यथा नाद्वैतक्षतिस्तथोक्तं प्राक्। यदि तु मिथ्यात्व-प्रमया न प्रपञ्चगतसत्यत्वस्योच्छेदः, किन्तु प्रपञ्चसत्यत्वबुद्धावप्रमात्व-निश्चय एव, प्रपञ्चसत्यत्वोच्छेदस्तु ब्रह्मप्रमयैव इति विभाव्यते, तर्हि ब्रह्मप्रमातिरिक्तप्रमाबाध्यत्वेन प्रपञ्चसत्यत्वस्य व्यावहारिकत्वमेवास्तु। अस्तु च प्रपञ्चगतसत्यत्वमिथ्यात्वयोरेकबाधकज्ञानबाध्यत्वेन समसत्ताकत्वम्, तथापि नाद्वैतक्षतिः इति इदानीं प्रपञ्चगतसत्यत्वस्य व्यावहारिकत्वमभ्यु-पगम्यापि व्यावहारिकयोः सत्यत्वमिथ्यात्वयोरविरोधं दर्शयितुमाह—**तार्किकमतसिद्धसंयोगतदभाववदिति**।

समसत्ताकयोः मिथ्यात्वसत्यत्वयोरविरोधे तार्किकमतसिद्धं दृष्टान्त-माह—**संयोगतदभावयोरिति**। यथा तार्किकाः समसत्ताकयोः

एकस्य साधकेन। अपरस्य बाध्यत्वं विषमसत्ताकत्वे प्रयोजकम्, यथा शुक्तिरूप्यतदभावयोः ॥९॥

---

संयोगतदत्यन्ताभावयोः समुच्चयं स्वीकुर्वन्ति, तथा वयमपि सत्यत्वमिथ्यात्वयोः समसत्ताकयोः समुच्चयं स्वीकुर्मः। परस्पर-विरहरूपयोः सत्यत्वमिथ्यात्वयोरविरोधे श्रुतिप्रमाणस्य अनुमानप्रमाणस्य च सत्त्वात्। समानसत्ताकयोः भावाभावयोर्विरोधग्राहकं लौकिकं मानमुपमृद्यैव दृश्यसामान्ये "नेह नानास्ति किञ्चन" इत्यादिश्रुत्या मिथ्यात्वस्य प्रतिपादनात्, प्रकृतमिथ्यात्वानुमानेन च तत्समर्थनात्। प्रपञ्चनिष्ठव्यावहारिकसत्यत्वमिथ्यात्वसहितप्रपञ्चमिथ्यात्वस्य श्रुत्यादिप्रमाण-सिद्धत्वात् ॥८॥

९—ननु शुक्तौ शुक्तिरूप्यतदभावयोर्विषमसत्ताकत्वम्, प्रपञ्चे तु सत्यत्वमिथ्यात्वयोः समसत्ताकत्वम्, इत्यत्र किं प्रयोजकं तत्राह—**एकस्य साधकेनेति**। विषमसत्ताकत्वं व्यापकमेकस्य साधकेनापरस्य बाध्यत्वं व्याप्यम्, प्रयोजकपदं व्याप्यपरम्; ययोर्विरुद्धयोरेकस्य साधकं ज्ञानमपरस्य बाधकं भवति तयोः भिन्नसत्ताकत्वमिति व्याप्तिः। यदि तयोर्भिन्नसत्ताकत्वं न स्यात्, तर्हि तयोर्बाध्यबाधकधीविषयत्वं न स्यादिति विपक्षबाधकस्तर्कः। एवञ्च एकस्य साधकेनापरस्य बाध्यत्वं व्याप्यम्, विषमसत्ताकत्वं व्यापकम्। अत्र दृष्टान्तमाह—**यथा शुक्ति-रजततदभावयोरिति**। शुक्तौ विरुद्धयोः शुक्तिरूप्यतदभावयोर्मध्ये एकस्य शुक्तिरूप्याभावस्य साधकं ज्ञानम् "नेदं रजतमि"ति ज्ञानमपरस्य शुक्तिरजतस्य बाधकं भवति। अतस्तयोः शुक्तिरजततदभावयोर्विषमसत्ता-कत्वमेव। शुक्तिरूप्यस्य प्रातिभासिकं सत्त्वं तदभावस्य व्यावहारिकं सत्त्वमिति। एकस्य साधकेन ज्ञानेनापरस्य बाध्यत्वे बाध्यतावच्छेद-कधर्मस्योभयवृत्तित्वं न सम्भवति। बाध्यतावच्छेदकधर्मस्योभयवृत्तित्वे तु एकस्य साधकेनापरस्य बाध्यत्वं न सम्भवति। तत्र तु एकबाधक-

एकबाधकबाध्यत्वं च समसत्ताकत्वे प्रयोजकम्, यथा शुक्तिरूप्यशुक्तिभिन्नत्वयोः ॥१०॥

अस्ति च प्रपञ्चतन्मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वम् ॥११॥

---

बाध्यत्वेन समसत्ताकत्वमेव । प्रकृते च प्रपञ्चगतसत्यत्वमिथ्यात्वयोः धर्मयोर्मध्ये एकस्य साधकेनापरस्य बाध्यत्वाभावान्न तयोर्विषमसत्ताकत्वम् ॥९॥

१०—तार्किकमतसिद्धसंयोगतदभावदृष्टान्तेन प्रपञ्चे सत्यत्वमिथ्यात्वयोः समानसत्ताकत्वसम्भावनामात्रं प्रदर्शितम्, इदानीं समानसत्ताकत्वे प्रमाणमुपन्यस्यति—एकबाधकबाध्यत्वेति । प्रपञ्चे प्रसक्तयोः सत्यत्वमिथ्यात्वयोः द्वयोरेव उभयसाधारणदृश्यत्वेनैव निषिध्यमानत्वात् तयोः समसत्ताकत्वमेव । प्रपञ्चगतमिथ्यात्वबाधकेन तद्गतसत्यत्वस्यापि बाधनात् तयोरेकबाधकबाध्यत्वम् । ययोरेकबाधकबाध्यत्वं तयोः समानसत्ताकत्वमिति व्याप्तिः । यथा शुक्तिरूप्यबाधकेन शुक्तिसाक्षात्कारेण शुक्तिभेदस्यापि बाध्यत्वात् शुक्तिरूप्यशुक्तिभेदयोः समानसत्ताकत्वमेव द्वयोरेव प्रातिभासिकत्वेन समानसत्ताकत्वात् । यद्यद्बाधकबाध्यं न स्यात् तत्तत् समानसत्ताकमपि न स्यात्, यथा घटशुक्तिरजते इति—विपक्षबाधकस्तर्कः । इदमत्रावधेयम्—सत्यत्वमिथ्यात्वयोः परस्परविरहरूपत्वं नास्तीत्यभ्युपेत्य प्रपञ्चगतसत्यत्वमिथ्यात्वयोरेकबाधकबाध्यत्वमुक्तम् । यथा च तयोर्न परस्परविरहरूपत्वं तथोक्तं प्रथमलक्षणे । एतेन यदुक्तम् उदयनाचार्यैः बौद्धाधिकारे "सदसत्त्वस्यैकत्र विरोधेन विधिवन्निषेधस्याप्यनुपपत्तेः" इति तदपि निरस्तम् । सत्त्वासत्त्वयोः परस्परविरहरूपत्वाभावात् ॥१०॥

११—प्रपञ्चगतमिथ्यात्वं मिथ्याभूतमपि प्रपञ्चसमानसत्ताकमेव इत्यत आह—अस्ति चेति । प्रपञ्चतन्मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वात् समानसत्ताकत्वम् । तथा च प्रपञ्चसमानसत्ताकत्वेन प्रपञ्चगतमिथ्यात्वं प्रपञ्चगतसत्यत्वान्न्यूनसत्ताकम् । प्रपञ्चगतमिथ्यात्वस्य प्रपञ्चगत-

अतः समसत्ताकत्वात् मिथ्यात्वबाधकेन प्रपञ्चस्यापि बाधा-न्नाद्वैतक्षतिरिति कृतमधिकेन ।१२।

इति मिथ्यात्वसामान्योपपत्तिः ।

---

सत्यत्वापेक्षयाऽन्यूनसत्ताकत्वप्रदर्शनाय मूले प्रपञ्चस्यापि ब्रह्मज्ञानबाध्यत्व-मुक्तम् । एवञ्च प्रपञ्चसत्यत्वमिथ्यात्वयोः समानसत्ताकत्वे वक्तव्ये प्रपञ्चस्य ब्रह्मज्ञानबाध्यत्वप्रदर्शनं मूलकृतामसङ्गतमिति निरस्तम् ॥११॥

१२—एवञ्च ब्रह्मज्ञानेन प्रपञ्चगतसत्यत्वमिथ्यात्वाभ्यां सह प्रपञ्चस्य बाधनात् नाद्वैतक्षतिरिति प्रकृतमुपसंहरति—अतः समसत्ताकत्वादिति । प्रपञ्चतन्मिथ्यात्वयोः समानसत्ताकत्वात् प्रपञ्चगतमिथ्यात्वबाधकेन ब्रह्मज्ञानेन प्रपञ्चमिथ्यात्ववत् प्रपञ्चस्यापि बाधात् अत्र मूलस्थितापिकारेण प्रपञ्चगत-सत्यत्वस्य परिग्रहः, तथा च प्रपञ्चस्य तद्गतसत्यत्वस्यापि बाधात् नाद्वैतक्षतिः । प्रपञ्चसमानसत्ताकस्य मिथ्यात्वस्य व्यावहारिकत्वेन प्रपञ्चस्यापि व्यावहारिकत्वात् प्रपञ्चसत्यत्वस्य पारमार्थिकत्वं न सम्भवतीति भावः । एतेन—

"मिथ्यात्वं यद्यबाध्यं स्यात्, सदद्वैतमतक्षतिः ।
मिथ्यात्वं यदि वा बाध्यं, जगत्सत्यत्वमापतेत्" ॥

इति यत् पूर्वपक्षिभिरुक्तं तदपि निरस्तम्, प्रपञ्चसमानसत्ताक-मिथ्यात्वस्य प्रपञ्चस्य च एकब्रह्मज्ञानबाध्यत्वेन द्वयोरेव मिथ्यात्वात् ।

प्रपञ्चे साध्यमानस्य मिथ्यात्वस्य सत्यत्वमिथ्यात्वाभ्यां सिद्धान्तिनः प्रति प्रत्येकं कोटिद्वये पूर्वपक्षिभिः दूषणाभिधानं नित्यसमाजातिरिति सूचयितुमाह—कृतमधिकेनेति । नित्यसमाजातिलक्षणमुक्तं वादरत्नावल्यां विष्णुदासाचार्यैः तार्किकरक्षायाञ्च वरदराजाचार्यैः ।

"धर्मस्य तदतद्रूपविकल्पानुपपत्तितः ।
धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत्" इति ॥

अस्यार्थः—पक्षरूपे धर्मिणि साध्यस्य धर्मस्य, तद्रूपत्वातद्रूपत्वयोः विकल्पयोः प्रत्येकं साध्ये अभ्युपगतयोः, या "अनुपपत्तिः" अनिष्टापत्तिभयाद-

सम्भवः, तस्मादसम्भवाद् "धर्मिणः"—पक्षस्य तद्विशिष्टत्वभङ्गः साध्यविशिष्टत्वस्यासम्भवः, नित्यसमो दोषः ।

प्रकृते च पक्षरूपे धर्मिणि प्रपञ्चे साध्यस्य मिथ्यात्वस्य तद्रूपत्वातद्रूपत्वरूपसत्यत्वमिथ्यात्वविकल्पयोः प्रत्येकं मिथ्यात्वे अभ्युपगतयोः या अनुपपत्तिः मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्य सत्यत्वापत्तिः, मिथ्यात्वस्य सत्यत्वे चाद्वैतहानिप्रसङ्ग इति अनिष्टापत्तिरूपादसम्भवात् प्रपञ्चस्य धर्मिणः मिथ्यात्ववैशिष्ट्यभङ्गः—नित्यसमो दोषः ।

ननु मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्य मिथ्यात्ववैशिष्ट्यभङ्गेऽपि मिथ्यात्वस्य सत्यत्वे न धर्मिणः मिथ्यात्ववैशिष्ट्यभङ्गः, किन्तु अद्वैतहानिः; तथा च न नित्यसमा जातिः; सत्यत्वमिथ्यात्वविकल्पयोः द्वयोः प्रत्येकं धर्मिणि धर्मवैशिष्ट्यभञ्जकत्वाभावात, उक्तञ्च—"मिथ्यात्वं यद्यबाध्यं स्यात् सदद्वैतमतक्षतिः" इति चेत् ?

तन्न; विकल्पितयोः कोट्योः मध्ये मिथ्यात्वसत्यत्वकोटेः धर्मधर्मिवैशिष्ट्यभञ्जकत्वाभावेऽपि मिथ्यात्वमिथ्यात्वकोटेरेकस्यापि प्रपञ्चे धर्मिणि मिथ्यात्ववैशिष्ट्यभञ्जकत्वात् नित्यसमो दोषः स्यादेव । अन्यथा मिथ्यात्वे मिथ्यात्वकोटिमात्रस्य सिद्धान्तिभिः आश्रयणे मिथ्यात्वे अनभ्युपगतसत्यत्वकोटिप्रयुक्तस्य अद्वैतहानिदोषस्यापि पूर्वपक्षिप्रदर्शितस्यासम्भवात् । यदि तु द्वयोरेव कोट्योः प्रत्येकं धर्मधर्मिवैशिष्ट्यभञ्जप्रयोजकत्वे नित्यसमो दोष इति अभ्युपेपि तथापि नित्यसमो दोषः स्यादेव । मिथ्यात्वस्यापि मिथ्यात्वानुमितौ पक्षत्वेन तस्य सत्यत्वे मिथ्यात्ववैशिष्ट्यभङ्गेन मिथ्यात्वरूपे धर्मिणि साध्यरूपमिथ्यात्ववैशिष्ट्यभञ्जप्रयोजकत्वात्; इति कृतमधिकेन ॥१.२॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथशर्मविरचितायाम अद्वैतसिद्धिटीकायां बालबोधिन्यां मिथ्यात्वसामान्योपपत्तिविवरणम् ।

## ॥ अथ दृश्यत्वहेतूपपत्तिः ॥

'ननु—मिथ्यात्वे साध्ये हेतूक्तं यद्दृश्यत्वं तदप्युपपादनीयम्। तथा हि—किमिदं दृश्यत्वम् ? वृत्तिव्याप्यत्वं वा ॥१॥

---

प्रपञ्चस्य मिथ्यात्वसाधनायाचार्येण परार्थानुमानं प्रदर्शितम्—"विमतं मिथ्या दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वात्, शुक्तिरूप्यवदिति"। प्रदर्शिते मिथ्यात्वानुमाने मिथ्यात्वरूपस्य साध्यस्य पूर्वाचार्याणां मतान्यनुसृत्य पञ्चधा निर्वचनं कृतम्। इदानीं मिथ्यात्वसाधकानां त्रयाणां हेतूनां मध्ये प्रथमस्य हेतोर्दृश्यत्वस्य निर्वचनं प्रदर्शयितुं प्रतिजानीते—मिथ्यात्वे साध्ये हेतूक्तं यद्दृश्यत्वं तदप्युपपादनीयमिति। प्रतिज्ञावाक्यस्यायमर्थः—प्रपञ्चे धर्मिणि सिषाधयिषितस्य मिथ्यात्वस्य सिद्धये हेतूक्तं—मिथ्यात्वानुमापकत्वेनोपन्यस्तं यद्दृश्यत्वं, तदप्युपपादनीयम्; दृश्यत्वे हेतौ न्यायामृतकृद्भिरुद्भावितानां दोषाणां निरसनेन दृश्यत्वहेतोः स्वरूपं निष्कृष्य प्रदर्शनीयम्। यद्यप्याचार्येण दृश्यत्वहेतुनिर्वचनमेव प्रतिज्ञातं, तथापि प्रथमतः दृश्यत्वहेतौ न्यायामृतकृदुद्भावितदूषणानि परिहर्तुं पूर्वपक्षिमुखेन दूषणानि प्रदर्श्य दृश्यत्वहेतोः सिद्धान्तिसम्मतं निष्कृष्टस्वरूपं प्रदर्शयिष्यते—इति कृत्वा पूर्वपक्षिमुखेनैव हेतुनिर्वचनं प्रस्तूयते—ननु मिथ्यात्वे साध्ये इत्यादि'·······साधनवैकल्यादिति चेदित्यन्तेन।

दृश्यत्वशब्दस्य व्युत्पाद्यमानस्य ये ये अर्थाः संभवन्ति, तेष्वर्थेषु ये च दोषाः संभवेयुः, तान् प्रदर्शयितुं पूर्वपक्षिमुखेन पृच्छति—किमिदं दृश्यत्वमिति ? इदं—मिथ्यात्वे साध्ये यत् हेतूक्तं दृश्यत्वं, तत् किम् ? इदं पदमनुपादाय दृश्यत्वमात्रपृच्छायामसङ्गतिः स्यात्, तत्परिहाराय 'इदं' पदेन हेतूक्तं दृश्यत्वं निर्दिशति। दृश्यत्वहेतौ दूषणानि उद्भाव्य तानि

निरस्य हेतोरुपपादनं करिष्यत इति प्रकारविशेषं प्रदर्शयितुमुक्तं तथा हीति। ज्ञानार्थकदृश्धातोः कर्मणि यत्प्रत्यये कृते दृश्यं पदं निष्पद्यते। एवं व्युत्पाद्यमानस्य दृश्यपदस्यार्थो ज्ञानविषयः। तथा च ज्ञानविषयत्वमेव दृश्यत्वं, भावे "त्व" प्रत्ययविधानात्। दृश् धातोर्भावे क्विपि निष्पन्नमपि दृक्पदं ज्ञानसामान्यवाचि, दृक् ज्ञाने ज्ञातरि त्रिषु इति कोशात्। दृश्-धातोः प्रत्यक्षज्ञानमात्राभिधायित्वे दृक्पदं ज्ञानमात्रवाचि न स्यात्; दृश्-धातोर्ज्ञानसामान्यवाचित्वात् दृश्यपदं ज्ञानविषयमाह। दृश्यत्वं तु ज्ञान-विषयत्वं, न तु प्रत्यक्षज्ञानमात्रविषयत्वम्। "सत्यं ज्ञानमि"त्यादिश्रुत्या चिद्रू-पस्य ब्रह्मणो ज्ञानरूपत्वं लभ्यते। "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति पातञ्जलसूत्रे अन्तःकरणवृत्तीनां विषयप्रकाशकानामपि" ज्ञानत्वेन व्यवहारो दृश्यते। "ह्रीर्धीर्भीः" इत्यादिश्रुत्या विषयप्रकाशकमनःपरिणाम-विशेषे ज्ञानत्वापरपर्यायधीत्वरूपजातिविशेषोऽस्तीति ज्ञायते। विवरणा-चार्यादिमते संस्काराधायकाविद्यावृत्तेरपि ज्ञानत्वेन व्यवहारो दृश्यते। एवञ्च ज्ञानपदस्यार्थे विप्रतिपत्त्युपलम्भात् ज्ञानविषयत्वरूपं दृश्यत्वं किमिति दुर्निरूप-णमिव प्रतिभाति। किंचिद्रूपज्ञानविषयत्वं दृश्यत्वम्? किं वा पातञ्जल-सूत्ररीत्या चित्तवृत्तिरूपज्ञानविषयत्वं दृश्यत्वम्? किं वा बृहदारण्यकोप-निषदुक्तरीत्या [बृ०उ०,१।५।३] मनःपरिणामविशेषज्ञानविषयत्वं दृश्यत्वम्? अथ वा विवरणाचार्यरीत्या अविद्यावृत्तेरपि ज्ञानरूपत्वात् ज्ञानरूपाया अविद्या-वृत्तेरपि विषयत्वं दृश्यत्वम्? दृश्यत्वशब्दस्य यावन्तोऽर्थाः सम्भाव्यन्ते तान् सम्भावितानर्थानुपादाय विकल्पयति पूर्वपक्षी—वृत्तिव्याप्यत्वं वा फलव्याप्यत्वं वेत्यादिना। दृश्यत्वपदस्य सम्भावितान् षडर्थानु-पादाय षड्विकल्पाः प्रदर्शिताः पूर्वपक्षिणा। तेषु वृत्तिव्याप्यत्वं प्रथमो विकल्पः।

अत्रेदमवधारणीयम्—का वा वृत्तिः किं वा तस्या व्याप्यत्वम्?

अद्वैतसिद्धान्ते पातञ्जलसम्मता वृत्तिः दृश्यत्वहेतुघटकतया नाङ्गीकर्तुं शक्यते। पातञ्जलमते विकल्पवृत्तेरपि ज्ञानत्वाभ्युपगमात् विकल्पवृत्तिविषयस्यासतो दृश्यत्वप्रसङ्गेन दृश्यत्वविशिष्टे असति शशविषाणादौ मिथ्यात्वाभावेन दृश्यत्वहेतोर्व्यभिचारः स्यात्। सिद्धान्ते विकल्पस्य चित्तवृत्तित्वाङ्गीकारेऽपि तस्य ज्ञानरूपत्वं नाङ्गीक्रियते। उक्तञ्च ख्यातिबाधान्यथानुपपत्तिप्रकरणे आचार्येण—विकल्पस्य ज्ञानान्यवृत्तित्वे बाधकाभावात् शशविषाणमनुभवामीत्यप्रत्ययाच्च। पुनरपि तत्रैवोक्तं तार्किकास्तु शशशृङ्गादिपदानामपार्थकत्वेनैवेति वदन्ति। [अद्वैतसिद्धिः, पृ० ६३२ निर्णयसागरसंस्करणम्]। अपार्थकता—वाक्यार्थबोधकत्वमिति विवृतं चन्द्रिकायाम्। इच्छादिवद्विकल्पवृत्तेश्चित्तवृत्तित्वेऽपि न तस्याः ज्ञानरूपत्वमित्याचार्याणामाशयः। परिमले तु [पृ० २० निर्णयसागरसंस्करणम्] शशशृङ्गादिशब्दजन्या असत्प्रतीतिर्न शुक्तिरजतादिज्ञानवदध्यासः, नापि घटादिज्ञानवत् प्रमा, किन्तूभयविलक्षणं ज्ञानमात्रमित्युक्तमध्यासलक्षणविवरणावसरे अप्पयदीक्षितैः। तदाचार्याननुमतत्वात् प्रकृतविरोधाच्चात्रानुपादेयम्। अत एव पातञ्जलसम्मतां वृत्तिं परित्यज्य "ह्रीर्धीर्भीरि"ति श्रुत्या मनस्तादात्म्यापन्नो मनःपरिणामविशेषो धीत्वजातिविशिष्ट इह वृत्तिपदेन गृह्यत इत्युक्तं चन्द्रिकाकृद्भिः। न च ज्ञानत्वरूपधीत्वजातेर्मनःपरिणामरूपायां वृत्तौ सत्त्वेऽपि भ्रमरूपाविद्यावृत्तौ ज्ञानत्वजातिर्नास्ति; भ्रमरूपाविद्यावृत्तौ ज्ञानत्वजातेरङ्गीकारे वृत्तिरूपज्ञानमात्रस्य "एतत् सर्वं मन एव" इति श्रुतौ मनःपरिणामत्वोक्तिरसङ्गता स्यात्। भ्रमरूपाविद्यावृत्तौ ज्ञानत्वजातेरनङ्गीकारेऽपि भ्रमरूपाविद्यावृत्तिविषये रजतादौ वृत्तिव्याप्यत्वरूपं दृश्यत्वं न स्यात्। तथा च "विमतं मिथ्या दृश्यत्वात् शुक्तिरजतवत्" इति न्यायप्रयोगे दृष्टान्ते रजतादौ दृश्यत्वाभावात् साधनविकलो दृष्टान्त इति दृश्यत्वे हेतौ मिथ्यात्वस्य व्याप्तिग्रहो न स्यात्। तथा च भ्रमरूपायामविद्यावृत्तौ ज्ञानत्वजातेः सत्त्वे-

ऽसत्त्वे च उभयथापि असङ्गतिरिति वाच्यम्, उभयथापि दोषाभावात्; "एतत् सर्वं मन एव" इति श्रुतौ मनःपरिणामरूपज्ञानस्यैव धीशब्देन निर्देशान्मनःपरिणामरूपज्ञानाख्यवृत्तीनामेव मनस्तादात्म्योक्तिरुपपद्यते। ज्ञानाख्यविद्यावृत्तीनां मनस्तादात्म्यन्तु श्रुत्या नोच्यते। ज्ञानाख्या वृत्तिर्द्विविधा, मनःपरिणामरूपाऽविद्यापरिणामरूपा च। "एतत् सर्वं मन एव" इति श्रुतौ मनःपरिणामरूपाणामेव ज्ञानाख्यवृत्तीनां निर्देशः, न तु अविद्यावृत्तीनाम्। उक्तश्रुतौ धीशब्देन ज्ञानाख्यवृत्तिमात्रस्यैव निर्देश इत्यङ्गीकारेऽपि न दोषः, सिद्धान्ते शुक्तिरजतादिभ्रमे इदमादिविशेष्याकारा अन्तःकरणवृत्तिः रजतादिविशेषणाकारा अविद्यावृत्तिश्च स्वीक्रियेते; उक्तोभयवृत्त्यवच्छिन्ने चैतन्येऽपि धीव्यवहारात् धीत्वजातिस्तत्र वर्तते। वृत्तिद्वयावच्छिन्नं चैतन्यं तु विशेष्याकारमनोवृत्तिघटितत्वेन "मन एव" इति गौणो निर्देशः। अथ वा इदमाकारमनोवृत्त्यवच्छिन्नचैतन्यनिष्ठाया अविद्यायाः रजताकारवृत्तिरूपेण परिणतत्वात् इदमाकारमनोवृत्त्यभिन्नतया रजताकाराविद्यावृत्तिर्भासते। यथा—इदमंशावच्छिन्नचैतन्यनिष्ठाया अविद्याया रजताकारेण परिणतत्वात् इदमभिन्नतयां रजतमवभासते। अत्र यथा रजतवत् रजततादात्म्यमपि अध्यस्तं द्वयोरविद्यापरिणामत्वात्, तथा इदमाकारमनोवृत्त्यवच्छिन्ने चैतन्ये रजताकाराऽविद्यावृत्तिस्तत्तादात्म्यञ्च आविद्यकमेवोत्पद्येते। विषययोरभेदाध्यासे ज्ञानयोरप्यभेदाध्यासात्। एवञ्चान्तःकरणवृत्तौ अविद्यावृत्तेस्तादात्म्यसत्त्वात् अविद्यावृत्तेरपि अन्तःकरणपरिणामत्वेन निर्देशः श्रुतौ उपपद्यते।

का नाम वृत्तिरिति प्रश्नस्य वृत्तिस्वरूपावधारणेनोत्तरं दत्तम्। इदानीं व्याप्यत्वं किमिति निरूप्यते। क्रियाव्याप्यत्वं कर्मत्वम्। उक्तञ्च भाष्यकारेण कर्म हि कर्तृक्रियया व्याप्यमानं भवति। प्रकृते च दृक्क्रियायाः कर्मत्वं व्याप्यत्वं तच्च विषयत्वम्; न तु व्याप्याश्रयत्वरूपम्; यथा धूमो वह्निव्याप्यः, नैवं विषयो वृत्तिव्याप्यः। वृत्तेर्विषयत्वमेव वृत्तिव्याप्यत्वम्।

फलव्याप्यत्वं वा ? ॥२॥

---

विषयत्वञ्च स्वरूपसम्बन्धविशेष इत्यग्रे स्फुटीभविष्यति । यदपि कुत्रचिद् बाह्यविषयप्रत्यक्षस्थले इन्द्रियार्थसन्निकर्षाद् बाह्येन्द्रियद्वारा निःसृतान्तः-करणपरिणामो वृत्तिः, तद्व्याप्यत्वं नाम तत्प्राप्यत्वम् । विषयत्वमित्यनुक्त्वा व्याप्यत्वमिति वचनं यथा तडागोदकं कुल्यात्मना बहिर्निर्गत्य केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति, तथा सावयवं तैजसमन्तःकरणं चक्षुरादिद्वारा बहिर्निर्गत्य विषयं व्याप्य तदाकारं भवति । तथा च यतो बहिर्निःसृतया वृत्त्या विषयो व्याप्यते, अतो वृत्तिव्याप्यत्वमेव वक्तव्यं, न तु वृत्तिविषयत्वमित्यादि, तदतिफल्गु; परोक्षवृत्तौ अन्तःकरणवृत्तेर्बहिर्निर्गम-नाभावेन प्रदर्शितवृत्तिव्याप्यत्वस्यासम्भवात् परोक्षवृत्तिविषयाणां दृश्यत्वं न स्यात्, धर्माधर्मादीनामतीन्द्रियाणां मिथ्यात्वानुमाने पक्षकोटिप्रविष्टानां वृत्तिव्याप्यत्वरूपदृश्यत्वशून्यानां मिथ्यात्वसिद्धिर्न स्यात् । केवलं बहिरिन्द्रिय-जन्यप्रत्यक्षविषयाणामेव वृत्तिव्याप्यत्वेन मिथ्यात्वसिद्धिः स्यात् । अतो व्याप्यत्वं विषयत्वमेव, न तु वृत्तिप्राप्यत्वादिकम् । एवमेव वृत्तेराकाराख्य-सम्बन्ध एव वृत्तिव्याप्यत्वं वृत्तिविषयत्वं वा कुत्रचिदुक्तम्, तदपि वृत्त्या सह विषयस्य स्वरूपसम्बन्धविशेष एव, न तु सम्बन्धान्तरं निराकारस्य वस्तुनः वृत्त्या सह आकाराख्यसम्बन्धासम्भवात्साकारत्वापाताच्चेति विभावनीयम् । प्रतिकर्मव्यवस्थाप्रकरणे वृत्तेर्विषयाकारत्वं निर्वक्ष्यति स्वयमाचार्यः । [अद्वैत सिद्धिः, पृ० ४८३]

इति वृत्तिव्याप्यत्वनिर्वचनम् ॥१॥

फलव्याप्यत्वम्वेति द्वितीयो विकल्पः । फलं भग्नावरणा चित्, उक्तमाचार्येण स्वप्रकाशत्वलक्षणोपपत्तौ—आवरणभङ्गे चित एव फलत्वात् [अद्वैतसिद्धिः, पृ० ७६८ निर्णयसागरसंस्करणम् ] । प्रमाणजन्यान्तःकरणवृत्त्या अज्ञानावरणनाश एव आवरणभङ्गः, तादृशनाशो-पहिता चित् फलम्, [अद्वैतसिद्धिः, पृ० ७६९] अयमत्र निष्कर्षः—

साधारणं वा ? ॥३॥

कदाचित् कथञ्चित् चिद्विषयत्वं वा ? ॥४॥

---

वृत्तिप्रतिबिम्बितचिज्जन्यातिशययोगित्वं वृत्त्या तत्प्रतिफलितचिता वा अभिव्यक्ताधिष्ठानचिद्विषयत्वं वा फलव्याप्यत्वम्। चिज्जन्यातिशययोगित्वञ्च भग्नावरणचित्सम्बन्धः। फलव्याप्यत्वं फलविषयत्वम्; आवरणनाशोपहित-चित्तादात्म्यमेव फलविषयत्वम्; सिद्धान्ते ज्ञानेन सह विषयस्याध्यासिक-तादात्म्यमेव सम्बन्धः, आध्यासिकसम्बन्धं विना ज्ञानविषययोरन्यस्य पारमार्थिकस्य सम्बन्धस्य दुर्निरूपत्वात्। दृग्दृश्यसम्बन्धभङ्गप्रकरणे आचार्येण स्वयमेवैतदुपपादयिष्यते। फलविषयत्वञ्च बहिरिन्द्रियजन्यविषय-प्रत्यक्षे एव सम्भवति। परोक्षवृत्तिविषये नित्यातीन्द्रिये धर्मादौ, प्रातिभासिके शुक्तिरजतादौ, साक्षिवेद्ये सुखादौ च फलव्याप्यत्वं न सम्भवति। अत एवास्मिन् प्रकरणे आचार्यः फलव्याप्यत्वव्यति-रिक्तस्य सर्वस्यापि पक्षस्य क्षोदक्षमत्वादिति वक्ष्यति। चिदुपरागार्था वृत्तिरिति मते प्रमाणजन्यविषयाकारान्तःकरणवृत्तौ प्रतिबिम्बितं चैतन्यमपि फलम्। उक्तञ्च सम्प्रदायविद्भिराचार्यैः—

"स्वच्छेऽन्तःकरणेऽशनि प्रसृमरे नेत्रादिमार्गोद्गते
तत्तद्बाह्यचयात्मना परिणते बिम्बी भवन्ती चितिः।
एकाप्यर्थमनोविशेष्यकवशाद् द्वैतं प्रपन्ना[त्वा]हर-
त्यज्ञानं प्रकटीकरोति विषयान् ज्ञातं मयेदं त्विती"ति ॥

चन्द्रिकाकृद्भिः वृत्तिप्रतिबिम्बितं चैतन्यम् आवरणनाशोपहितं चैतन्यमिति—प्रदर्शितं द्विविधमपि चैतन्यं फलमित्युक्तम् ॥२॥

साधारणम्वेति तृतीयो विकल्पः साधारणं वृत्तिव्याप्यत्वफलव्याप्यत्वो-भयानुगतं दृश्यत्वमात्रम्। कदाचित् कथञ्चित् चिद्विषयत्वम्वेति चतुर्थो विकल्पः। "सत्यं ज्ञानमि"त्यादिश्रुत्या चिद्रूपस्य ब्रह्मणो ज्ञानत्वमुक्तमस्माभिः ज्ञानविषयत्वञ्च दृश्यत्वम्। अतीतादिविषयेऽपि इदानीं चिद्विषयत्वाभावात् कदाचित् चिद्विषयत्वमित्युक्तम्। अतीतादिविषयाणामपि मिथ्यात्वानुमाने

स्वव्यवहारे स्वातिरिक्तसंविदन्तरापेक्षानियतिर्वा ? ॥५॥

---

पक्षान्तरभूतत्वात् तत्र हेतोरसत्त्वे भागासिद्धिः स्यात्, अतस्तद्वारणाय कदाचित् चिद्विपयत्वमित्युक्तम्। साक्षात् चिद्विपयत्व तु साक्षिभास्ये सुखादावेव वर्तते, न घटादौ नापि नित्यातीन्द्रिये धर्मादौ। घटादीनामपि मिथ्यात्वानुमाने पक्षान्तर्भूतत्वात्। तत्र साक्षात् चिद्विपयत्वस्य हेतोरसत्त्वेन पुनरपि भागासिद्धिः स्यात्, अतस्तद्वारणाय कथञ्चित् चिद्विपयत्वमित्युक्तम्, वृत्तिद्वारा घटादीनामपि चिद्विपयत्वात्। तथा च—आवृतानावृतसाधारणं चिद्विपयत्वं चित्तादात्म्यमात्रं हेतुः। उक्तञ्च विवरणाचार्यैः—सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विपय एव [विवरणम्, पृ. १३, काशी विजयनगरसंस्करणम्] ॥३-४॥

५—स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिर्वेति पञ्चमो विकल्पः। मिथ्यावस्तु घटादि, स्वव्यवहारे स्वातिरिक्तं स्वविपयकं ज्ञानमपेक्षते। संविद्व्यतिरिक्तानां सर्वेपामेव स्वगोचरव्यवहारे स्वातिरिक्तसंविदपेक्षा वर्तते। संविदो व्यवहारे तु स्वव्यवहारे स्वस्य कारणत्वेन स्वरूपसंविदपेक्षासत्त्वेऽपि स्वातिरिक्तसंविदपेक्षा नास्ति। स्वव्यवहारे संविदपेक्षानियतिरित्युक्तौ तु संविदि एव दृश्यत्वप्रसक्त्या हेतोर्व्यभिचारः स्यादतस्तद्वारणाय स्वातिरिक्तेति हेतुविशेपणमुपात्तम्। संविदोऽपि अद्वितीयत्वादिविशिष्टरूपेण व्यवहारे विशेपणोपनायकैकमेवाद्वितीयमित्यादिमानापेक्षासद्भावात् पुनरपि संविदि हेतोर्व्यभिचारः स्यादतस्तद्वारणाय नियतिरित्युक्तम्। संविदः स्वप्रकाशतया संवित्स्वरूपमात्रव्यवहारे स्वातिरिक्तसंविदपेक्षाया अभावात् संविदि स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिर्नास्ति, अतो न तत्र हेतोर्व्यभिचारः। यस्य स्वव्यवहारः स्वातिरिक्तसंविदपेक्षाव्याप्यस्तत्त्वं हेतुः। अत्र नियतिपदेन व्याप्यत्वमुक्तम् ॥५॥

अस्वप्रकाशत्वं वा ? ॥६॥

नाद्यः; आत्मनो वेदान्तजन्यवृत्तिव्याप्यत्वेन तत्र व्यभिचारात् अत एव न तृतीयोऽपि ॥७॥

नापि द्वितीयः ; नित्यातीन्द्रिये शुक्तिरूप्यादौ च तदभावेन भागासिद्धिसाधनवैकल्ययोः प्रसङ्गात् ॥८॥

---

६—अस्वप्रकाशत्वं वेति षष्ठो विकल्पः। स्वप्रकाशत्वं नाम अवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वयोग्यत्वात्यन्ताभावानधिकरणत्वमिति निरूपित-माचार्येण स्वप्रकाशत्वलक्षणोपपत्तिप्रकरणे। स्वप्रकाशभिन्नत्वमेवास्व-प्रकाशत्वम्। परप्रकाश्यत्वमिति फलितोऽर्थः ॥६॥

७—दृश्यत्वशब्दस्य व्युत्पाद्यमानस्य ये ये अर्थाः सम्भवन्ति, ते प्रदर्शिताः। इदानीं तानर्थान् क्रमशो दूषयति पूर्वपक्षी—नाद्य इति। वृत्तिव्याप्यत्वमेव दृश्यत्वमिति आद्यो विकल्पः। वृत्तिव्याप्यत्वेन हेतुना मिथ्यात्वेऽनुमीयमाने आत्मनि अस्य हेतोर्व्यभिचारः स्यात्। "तत्त्वमस्या"—दिवेदान्तवाक्यजन्याया मनःपरिणामरूपाया अखण्डाकाराया वृत्तेर्विषयत्व-मात्मन्यपि वर्तत इति अद्वैतवादिभिरङ्गीक्रियते; तेषां मते आत्मन एव परमार्थसत्यत्वम् अथ च परमार्थसति आत्मनि साध्ये मिथ्यात्वरहिते दृश्यत्वहेतोर्विद्यमानत्वात् व्यभिचारः स्यात्। साध्याभाववद्वृत्तित्वमेव हेतोर्व्यभिचारः। अत एव न तृतीयोऽपीति। यत् आत्मनि वृत्तिव्याप्यत्वरूपं दृश्यत्वमस्ति, अतो वृत्तिव्याप्यत्वफलव्याप्यत्वयोः साधारणं दृश्यत्वरूपसामान्यमपि आत्मन्यस्ति; आत्मनि वृत्तिव्याप्यत्वरूप-विशेष्यस्य सत्त्वेन सामान्यस्यापि सत्त्वात्। ब्राह्मणे मनुष्यत्ववद् विशेषसत्त्वस्य सामान्यसत्त्वव्याप्यत्वात् पूर्ववदेवात्मनि दृश्यत्वहेतोर्व्यभिचार इति भावः ॥७॥

८—नापि द्वितीय इति। फलव्याप्यत्वरूपं दृश्यत्वमपि न संभवति; वक्ष्यमाणदूषणगणग्रासात्। अतीते अनागते चेन्द्रियसन्निकर्षाभावादन्तः-

करणवृत्तेरिन्द्रियद्वारा बहिर्गमनाभावेन वृत्त्यभिव्यक्ताधिष्ठानचैतन्यरूपफलस्य वृत्तिप्रतिबिम्बितचैतन्यरूपफलस्य चाभावेन अतीतादौ फलविषयत्वाभावात् फलव्याप्यत्वरूपहेतोर्भागासिद्धिः स्यात्, अतीतादीनामपि मिथ्यात्वानुमाने पक्षान्तर्भावात्। यद्युच्येत अतीतादिकमपि स्वसत्ताकाले फलविषयः, तर्हि नित्यातीन्द्रिये फलव्याप्यत्वरूपहेतोर्भागासिद्धिः स्यात्। नित्यातीन्द्रियाणामपि मिथ्यात्वानुमाने पक्षान्तर्भावात्। नित्यातीन्द्रियगोचरान्तःकरणवृत्तिः परोक्षरूपैव। गुरुत्वधर्माधर्मादीनां प्रत्यक्षायोग्यत्वात् लिङ्गशब्दादिभिर्गुरुत्वादिगोचरान्तःकरणवृत्तिरन्तरेव समुल्लसति, न बहिर्निःसरति। अतो बहिर्निःसृतान्तःकरणवृत्तिप्रतिबिम्बितचैतन्यादिरूपं फलमेव तत्र नास्ति। अतः फलविषयत्वरूपं दृश्यत्वमपि नित्यातीन्द्रियेषु न सम्भवति। नित्यातीन्द्रिये पक्षभागे हेतोरसत्त्वात् फलव्याप्यत्वरूपहेतोर्भागासिद्धिरेव स्यात्। नन्वतीन्द्रिये गुरुत्वादौ भागासिद्धिमप्रदर्श्य किमिति नित्यातीन्द्रिये भागासिद्धिं प्रदर्शयत्याचार्यः? अतीन्द्रियान्नित्यातीन्द्रियस्य किं वैलक्षण्यम्? इति चेत्, शृणु, इन्द्रियमतिक्रान्तमतीन्द्रियम् इन्द्रियं यन्नित्यं सर्वदा अतिक्रामति, तन्नित्यातीन्द्रियम् नित्यपदमतिक्रमार्थातिपदेन सम्बध्यते। तेन कदाचिदिन्द्रियमतिक्रान्तं घटादि, इन्द्रियं नित्यमतिक्रान्तं गुरुत्वादि प्रतीयते। तथा च कदाचिदतीन्द्रिये घटादौ फलव्याप्यत्वरूपहेतोः सत्त्वा हेतोर्भागासिद्धिप्रदर्शनमसङ्गतं स्यादतः सर्वदातीन्द्रिये गुरुत्वादौ हेतोर्भागासिद्धिप्रदर्शनाय आचार्येण नित्यातीन्द्रिय इत्युक्तम्। नित्यञ्च तदतीन्द्रियञ्चेति कर्मधारयसमासो नात्राचार्यसम्मतः, जन्यातीन्द्रियासङ्ग्रहप्रसङ्गात्। फलव्याप्यत्वस्य हेतुत्वे न केवलं नित्यातीन्द्रिये हेतोर्भागासिद्धिः, शुक्तिरजतदृष्टान्ते साधनवैकल्यमपि स्यात्। येषां फलव्याप्यत्वं नास्ति, तेषां परिगणनं फलव्याप्यत्वविवरणे एव कृतम्। दृष्टान्तस्य साधनविकलत्वे हेतौ साध्यस्य व्याप्तिग्रहो न स्यात् ॥८॥

नापि चतुर्थः; ब्रह्म पूर्वं न ज्ञातमिदानीं वेदान्तेन ज्ञातमित्यनुभवेन आत्मनि व्यभिचारात् ॥९॥

नापि पञ्चमः ब्रह्मण्यप्यद्वितीयत्वादिविशिष्टव्यवहारे संविदन्तरापेक्षानियतिदर्शनेन व्यभिचारात् ॥ १० ॥ नापि षष्ठः; स हि अवेद्यत्वे

---

९—कदाचित् कथञ्चित् चिद्विषयत्वमिति चतुर्थो विकल्पो न सम्भवतीत्याह—**नापि चतुर्थ** इति। मिथ्यात्वानुमाने पक्षीकृतस्य सर्वस्यापि कदाचित् कथञ्चित् चिद्विषयत्वमस्त्येव, अतीतादेरपि कदाचित् स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वादविद्यादेरपि साक्षिचैतन्यविषयत्वान्नित्यातीन्द्रियस्यापि ज्ञातत्वेनाज्ञातत्वेन वा साक्षिचैतन्यविषयत्वान्नास्य हेतोरसिद्धिः। एवं चिद्रूपस्यात्मनश्चिद्विषयत्वाभावान्नास्य हेतोर्व्यभिचार इत्यद्वैतवादिनामभिमानः। स न सङ्गच्छते, नित्यातीन्द्रियाणां यथा अनुमित्यादिज्ञानावच्छेदकतया कथञ्चित् साक्षिरूपचिद्विषयत्वमस्ति, तथा ब्रह्मणोऽपि ज्ञानावच्छेदकतया कथञ्चित् चिद्विषयत्वमस्त्येव; ब्रह्मणश्चिद्विषयत्वे हेतोर्व्यभिचार एव स्यात् ॥९॥

१०—नापि स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिरिति पञ्चमो विकल्पः सम्भवतीत्याह—**नापि पञ्चम** इति। पञ्चमविकल्पव्याख्यानावसरे एव पूर्वपक्षिणां सिद्धान्तिनाञ्चाभिप्रायः प्रदर्शित इति नात्र वक्तव्यमवशिष्यते। अत्र यद्वक्तव्यं, तदेतल्लक्षणनिष्कर्षप्रदर्शनप्रसङ्गे सिद्धान्तग्रन्थे आचार्य एव वक्ष्यति तदस्माभिरपि तत्रैव विवरिष्यते ॥१०॥

११—नापि अस्वप्रकाशत्वमिति षष्ठो विकल्पः सम्भवतीत्याह—**नापि षष्ठ** इति। अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वं, तदभावो अस्वप्रकाशत्वम्। तथा च—अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वाभाव एव अस्वप्रकाशत्वम्। शुक्तिरूप्यादिदृष्टान्ते अस्य हेतोरभावात् दृष्टान्तस्य साधनवैकल्योद्भावनेन दूषयति पूर्वपक्षी—**शुक्तिरूप्यादेरपीति**। पूर्वपक्षिणामयमाशयः—स्वप्रकाशत्वलक्षणे यदवेद्यत्वे सतीति विशेषणमुक्तं, तस्य फलाव्याप्यत्वे सतीत्यर्थः सिद्धान्तिसम्मतः। तथा च फलव्याप्यत्वे सति अपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वं, तदभावो हेतुः शुक्तिरूप्यादौ दृष्टान्ते फलव्याप्यत्वाभावाद् विशेषणसत्त्वम्, शुक्तिरूप्यादेरपरोक्षव्यवहारयोग्यत्वाच्च विशेष्यभागस्यापि सत्त्वमतः शुक्तिरूप्यादौ

सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपः। तथा च शुक्तिरूप्यादेरपि अपरोक्ष-व्यवहारयोग्यत्वेन साधनवैकल्यात्—इति चेत् ॥ ११ ॥

मैवम्, फलव्याप्यत्वव्यतिरिक्तस्य सर्वस्यापि पक्षस्य क्षोदक्षमत्वात्। न च—वृत्तिव्याप्यत्वपक्षे ब्रह्मणि व्यभिचारः, अन्यथा ब्रह्मपराणां

---

दृष्टान्ते विशिष्टरूपस्य स्वप्रकाशत्वस्य सत्त्वात् स्वप्रकाशत्वाभावरूपहेतुर्दृष्टान्ते नास्ति, अतः दृष्टान्तः साधनविकल एव। शुक्तिरूप्यादि साक्षिभास्यं वस्तु न फलव्याप्यं, प्रमाणजन्य बहिर्निःसृतस्वाकारान्तःकरणवृत्तिप्रतिबिम्बितचैतन्यस्य तादृशवृत्त्या भग्नावरणकाधिष्ठानचैतन्यस्य वा सिद्धान्ते फलशब्देनाभिप्रेततया प्रातिभासिकशुक्तिरजतादेः साक्षिभास्यस्य स्फुरणाय अन्तःकरणवृत्तेरनावश्यकतया अन्तःकरणवृत्तेर्बहिर्निर्गमनादिकं सर्वमनपेक्षितमिति कृत्वा शुक्तिरजतादेः फलव्याप्यत्वं न सम्भवति। प्रातिभासिकस्य स्फुरणाय प्रमाणजन्यान्तःकरणवृत्तिरपि नापेक्षिता, अतः साक्षिभास्यस्य प्रातिभासिकस्य फलव्याप्यत्वं सर्वथाऽसम्भवि—इत्यतः शुक्तिरजतादेः फलाव्याप्यत्वमेवास्ति। फलाव्याप्ये अपरोक्षव्यवहारयोग्ये च शुक्तिरजतादौ प्रातिभासिके स्वप्रकाशत्वलक्षणसत्त्वात् स्वप्रकाशत्वाभावरूपो हेतुः शुक्तिरजतादौ दृष्टान्ते नास्ति। अतो भवत्येव हि शुक्तिरजतादिदृष्टान्तः साधनविकलः ॥११॥

इति दृश्यत्वहेतुनिर्वचने पूर्वपक्षः।

१२—इदानीं सिद्धान्ती दृश्यत्वहेतौ पूर्वपक्षिणापादितानां दोषाणामुद्धरणाय प्रथमतः स्वाभिमतान् पक्षान् दर्शयति—मैवमित्यादिना। दृश्यत्वहेतुनिर्वचने षड्विकल्पाः पूर्वपक्षिणा प्रदर्शिताः, तेषां षण्णां विकल्पानां मध्ये केवलं फलव्याप्यत्वरूपं पक्षं विहायान्येषां सर्वेषां विचारसहत्वाद् विचारसहेषु पक्षेषु पूर्वपक्षिणा ये ये दोषाः उत्प्रेक्षितास्ते न भवन्तीत्याह—मैवमिति। सर्वदा परोक्षवृत्तिविषये नित्यातीन्द्रिये धर्मादौ, प्रातिभासिके शुक्तिरजतादौ साक्षिभास्ये सुखादौ, अविद्यायाश्च फलव्याप्यत्वाभावात् फलव्याप्यत्वरूपदृश्यत्वस्य हेतोर्भागासिद्धिः स्यात्। नित्यातीन्द्रियादीनामपि मिथ्यात्वानुमाने पक्षान्तर्भावात् पक्षैकदेशे हेतोरवृत्तौ भागासिद्धिः स्यात्, दृष्टान्ते शुक्तिरजतादौ साधनवैकल्यञ्च स्यादित्यतः फलव्याप्यत्वव्यतिरिक्तस्य इत्युक्तमाचार्येण। वृत्तिव्याप्यत्वादीनां

**वेदान्तानां वैयर्थ्यप्रसङ्गादिति––वाच्यम्; शुद्धं हि ब्रह्म न दृश्यम्; "यत्तदद्रेश्यमि"ति श्रुतेः, किन्तूपहितमेव,तच्च मिथ्यैव; न हि वृत्तिदशायामनुपहितं तद्भवति ॥ १२ ॥**

---

पञ्चानां पक्षाणां विचारसहत्वमसहमानः पूर्वपक्षी प्रथमतः आद्यं वृत्तिव्याप्यत्वपक्षं दूषयितुं शङ्कते––न चेति। वृत्तिव्याप्यत्वरूपं दृश्यत्वं प्रपञ्चमिथ्यात्वानुमितौ हेतुर्न सम्भवति। ब्रह्मणोऽपि वेदान्तजन्यवृत्तिव्याप्यत्वाद् वृत्तिव्याप्यत्वरूपदृश्यत्वहेतोर्ब्रह्मणि व्यभिचारः स्यात्। ब्रह्मणि मिथ्यात्वं नास्ति, अथ च वृत्तिव्याप्यत्वरूपदृश्यत्वहेतुरस्ति, अतः साध्याभाववद्वृत्तिर्हेतुर्व्यभिचारी। ब्रह्मणो वेदान्तजन्यवृत्तिव्याप्यत्वानङ्गीकारे दोषमाह पूर्वपक्षी––अन्यथा ब्रह्मपराणामिति। वेदान्तजन्यवृत्तिव्याप्यत्वानङ्गीकारे उपक्रमोपसंहारादितात्पर्यनिर्णायकैर्लिङ्गैर्ब्रह्मप्रतीतीच्छया पूर्वपूर्वाध्यापकोच्चरितानां वेदान्तानां फलाभावाद् वैयर्थ्यं स्यात्, जपाद्यर्थत्वेनापि वेदान्तानां सार्थक्यं वक्तुं न शक्यते, वेदान्तानां ब्रह्मपरत्वात्; निरर्थकत्वे एव जपाद्यर्थतया सार्थक्यं वक्तुं शक्यते। ब्रह्मपरत्वे तु तन्न युज्यते।

प्रदर्शितं दूषणमुद्धर्तुमाह सिद्धान्ती––पूर्वपक्षिणा––न च···वाच्यमिति। यतः "शुद्धं ब्रह्म न दृश्यम्"। वृत्तिव्याप्यत्वरूपदृश्यत्वस्य ब्रह्मणि यो व्यभिचार उक्तः, स किं शुद्धे ब्रह्मणि उपहिते वा? उपहिते ब्रह्मणि दृश्यत्वमिष्टमेव, उपहितस्य मिथ्यात्वात्। भामतीसिद्धान्ते शुद्धं हि ब्रह्म न दृश्यं, "यत्तदद्रेश्यम्" इति श्रुत्या शुद्धे ब्रह्मणि दृश्यत्वस्य निषेधात्। मुख्यसिद्धान्तस्तु––वस्तुतस्तु इत्यादिना आचार्येणैव अग्रे प्रदर्शयिष्यते। शुद्धे ब्रह्मणि दृश्यत्वनिषेधान्न हेतोर्व्यभिचारः। यदि शुद्धं ब्रह्म वेदान्तजन्यवृत्तिविषयो न भवति, तर्हि वेदान्तजन्यवृत्तिविषयः कः? इति पृच्छायामाह––किन्तूपहितमिति। वृत्तिविषयत्वोपहितं ब्रह्म वृत्तेर्विषयः, अनुपहितं शुद्धं ब्रह्म न वृत्तेर्विषयः। उपहितस्य वृत्तिविषयत्वेऽपि उपहितस्य मिथ्यात्वान्न हेतोर्व्यभिचारः। न च वेदान्तजन्यवृत्त्युपधानदशायां, यदि ब्रह्म उपहितमेव, न शुद्धं, तर्हि उपहितस्य मिथ्यात्वे मिथ्याभूतस्याधिष्ठानसापेक्षत्वात् सत्याधिष्ठानासम्भवात् शून्यतापत्तिरित्याशङ्क्याह आचार्यः––न हि वृत्तिदशायामनुपहितं तद्भवतीति। अस्यायमर्थः––वृत्तिदशायामनुपहितं शुद्धं यदधिष्ठानमस्ति, तत् न हि तद्भवति, न हि उपहितं भवतीत्यर्थः। तथा च

नच—'सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते' इति स्ववचन-

---

वेदान्तजन्यवृत्त्युपधानदशायामपि अनुपहितस्य सत्त्वान्न उपहितस्याधिष्ठानशून्यतया शून्यतापत्तिः ॥ १२ ॥

१३—ननु शुद्धस्य ब्रह्मणो वृत्तिविषयत्वानङ्गीकारे मण्डनमिश्रोक्तिविरोधश्च स्यात्; उक्तञ्च ब्रह्मसिद्धौ सिद्धिकाण्डे—

"सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥"
[ब्रह्मसिद्धिः, ४।३] इति।

वृत्तिविषयत्वमेव दृश्यत्वमिति वाचस्पतिमिश्रसम्मतम्। वाचस्पतिश्च मण्डनानुसारीति मण्डनमिश्रोक्तिविरोधोऽपि वाचस्पतेः स्ववचनविरोध एव। अत एवोक्तमाचार्येण **स्ववचनविरोध** इति। मण्डनमिश्रेण ब्रह्मणः सर्वप्रत्ययवेद्यत्वाभ्युपगमात्, वृत्त्यविषयत्वाभ्युपगमे मण्डनोक्तिर्विरुद्ध्येत—इति पूर्वपक्षिणामभिप्रायः। न च विशिष्टमेव ब्रह्म सर्वप्रत्ययवेद्यं, न शुद्धमिति वाच्यम्, उत्तरार्धे प्रपञ्चप्रविलयाधिष्ठानतोक्त्या सर्वप्रत्ययवेद्यस्य ब्रह्मणः शुद्धत्वावगमात्। मण्डनवाक्यार्थानवबोधविजृम्भितं पूर्वपक्षिवचनमित्याह आचार्यः—**तस्याप्युपहितपरत्वादि**ति। पूर्वपक्षिप्रदर्शिता मण्डनकारिका मण्डनेनैव एवं व्याख्याता—"तदेवं लोकसिद्धपदार्थान्वयेनैवापूर्वार्थप्रतिपत्तेर्नानवबोधकत्वमनुवादकत्वं वा" ब्रह्मप्रतिपादकवेदान्तवाक्यानामिति शेषः। पूर्वपक्षिणा अपदार्थत्वात् ब्रह्म न वाक्यार्थ इति चोदिते समाधानमुक्त्वा समाधानान्तरमाह मण्डनः—**सर्वप्रत्ययवेद्ये** वेति। "अथ वा न लोके अत्यन्तमप्रसिद्धं ब्रह्म, सर्वप्रत्ययवेद्यत्वात्। ब्रह्मणो व्यतिरेकेण प्रत्येतव्यस्याभावात्, विशेषप्रत्ययानाञ्च सामान्यरूपानुगमात्, **भेदोपसंहारावशिष्टञ्च** सत्यं ब्रह्म इति प्रतिपादनात्"। मण्डनेन भेदोपसंहारावशिष्टस्यैव ब्रह्मणः सत्यत्वप्रतिपादनाद् भेदोपहितस्य ब्रह्मणो मिथ्यात्वमेवोक्तम्। अत एव सर्वप्रत्ययवेद्ये वेत्युक्त्वा—

"प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः।
मानान्तरस्येति मतमाम्नायैकनिबन्धनम्" ॥

इत्युक्तम्। विवृतञ्च शङ्खपाणिना—ब्रह्मणः प्रमाणान्तरगोचरत्वे कथमाम्नायैकगोचरं ब्रह्म प्रतिज्ञातमित्याशङ्क्याह—**प्रविलीने**ति। प्रपञ्चरूपेण मानान्तरात्

विरोध इति--वाच्यम्; तस्याप्युपहितपरत्वात् ॥ १३ ॥

न च--एवं सति शुद्धसिद्धिर्न स्यादिति—वाच्यम्; स्वत एव तस्य प्रकाशत्वेन सिद्धत्वात् ॥ १४ ॥

---

सिद्धमप्रपञ्चरूपेण न सिद्धमिति प्रमाणान्तरागोचरमुच्यते। "भेदोपसंहाराविशिष्टश्च सत्यं ब्रह्म"—इति यदुक्तं तत् ब्रह्मवित्प्रकाण्डानां भर्तृहरीणां मतमनुसृत्यैव। "सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते" इत्युक्तं भर्तृहरिभिर्वाक्यपदीये [३।२।११]। अस्यायमर्थः—स्थूलाद्याकाराणां विशेषाणामुपसंहारे प्रविलये अन्ते अवसाने यद्व्यवतिष्ठते तत् सत्यमिति। एतद्भर्तृहरिवचनं मण्डनेनैव ब्रह्मकाण्डे उद्धृतम्।

प्रपञ्चोपहितस्यैव ब्रह्मणः सर्वप्रत्ययवेद्यत्वमुक्तं मण्डनेन, न तु अनुपहितस्येत्यालोच्योक्तमाचार्येण—तस्योपहितपरत्वादिति। सन् घट इति घटाद्याकारवृत्त्या घटाद्युपहितस्यैव सद्रूपस्य ब्रह्मणो वेद्यत्वमिति मण्डनवचनस्यार्थः। उक्तमण्डनवचनमुपहितपरमिति भावः। यदपि मण्डनकारिकाव्याख्यानावसरे "जीवन्मुक्तिपरमिदं वचनमि"त्यादि केनचिदुक्तं, तदपि मण्डनग्रन्थानवलोकननिबन्धनमेव ॥ १३ ॥

१४--पूर्वपक्षी शङ्कते—एवं सतीति। शुद्धस्य ब्रह्मणो वृत्त्यविषयत्वे सति शुद्धस्य ब्रह्मणः सिद्धिर्न स्यात्, स्वतः सिद्धेर्निराकरिष्यमाणत्वेन शुद्धासिद्धिप्रसङ्गात्। यदि शुद्धं ब्रह्म दृश्यं न स्यात् तदा शुद्धस्य सिद्धिरेव न स्यात्। न च स्वप्रकाशत्वात् स्वत एव तत्सिद्धिरिति वाच्यं, स्वत इति कोऽर्थः? स्वेन इति वा प्रमाणेनेति वा? नाद्यः कर्तृकर्मविरोधात्। न द्वितीयः, शशविषाणादीनामप्येवं सिद्धिप्रसङ्गात्। पूर्वपक्षिणैवं न च वाच्यम्, कुत इत्याकाङ्क्षायामाह आचार्यः—स्वत एव तस्य [स्व]प्रकाशत्वेन सिद्धत्वादिति। तस्य ब्रह्मणः स्वत एव सिद्धत्वात्; सिद्धौ हेतुमाह स्वप्रकाशत्वेनेति। स्व तएव सिद्धं तत्, न तु वृत्तिव्याप्यतया पूर्वपक्षी सर्वस्य ज्ञेयत्वेनैव सिद्धिरित्याह। किञ्चिद् वस्तु स्वेनैव वेद्यते, किञ्चित् परेण वेद्यते; अवेद्यं किमपि वस्तु पूर्वपक्षिणा नाङ्गीक्रियते। अवेद्यस्यापि ब्रह्मणो यथा सिद्धिर्भवति, तथा ब्रह्मणः स्वप्रकाशत्वनिरूपणावसरे निपुणतरमुपपादयिष्यते आचार्येण। असतां शशविषाणादीनामपि

ननु अज्ञाते धर्मिणि कस्यचित् धर्मस्य विधातुं निषेद्धुं वा अशक्यत्वेन शुद्धे दृश्यत्वं निषेधता शुद्धस्य ज्ञेयत्वमवश्यं स्वीकरणीयम्।

तच्च—स्वप्रकाशत्वेन स्वतःसिद्धे शुद्धे श्रुत्या दृश्यत्वनिषेध इति–

---

यत् प्रमाणेन सिद्धत्वं शङ्कितं पूर्वपक्षिणा, तत् तस्यैव शोभते। ख्यातिबाधान्यथानुपपत्तिप्रकरणेऽसतः सिद्धिमिच्छतः प्रबोधव्यवस्था आचार्येणैव करिष्यते। स्वप्रकाशत्वेन ब्रह्मणः सिद्धिर्न सवेद्यतया सिद्धिः; किन्तु संशयाद्यविषयत्वमेव ब्रह्मणः सिद्धिः। शुद्धब्रह्मविषयकनिश्चयरूपान्तःकरणवृत्तिं विनैव ब्रह्म शुद्धं न वा? ब्रह्म न शुद्धमिति संशयविपर्ययाविषयत्वं, वृत्तिं विनैव ब्रह्मणः स्वप्रकाशनिश्चयरूपत्वादिति भावः॥ १४॥

१५—पूर्वपक्षी पुनर्दृश्यत्वहेतोर्व्यभिचारं शङ्कते—नन्विति। पूर्वपक्षिणोऽयमाशयः—ज्ञाते धर्मिण्येव कश्चन धर्मो विधीयते निषिध्यते वा, अज्ञाते धर्मिणि कस्यचिद्धर्मस्य विधिर्निषेधो वा न सम्भवति; अतः शुद्धे ब्रह्मणि वृत्तिव्याप्यत्वरूपं दृश्यत्वं निषेधता सिद्धान्तिना शुद्धस्य ज्ञेयत्वमवश्यमेव स्वीकरणीयम्। तथा च शुद्धे ब्रह्मणि दृश्यत्वनिषेधाय शुद्धस्य ज्ञेयत्वापरपर्यायदृश्यत्वमवश्यमेव स्वीकरणीयम्। एवञ्च मिथ्यात्वाभाववति शुद्धे ब्रह्मणि दृश्यत्वरूपहेतोः सत्त्वात्पुनरपि व्यभिचार एव। शुद्धे ब्रह्मणि दृश्यत्वनिषेधायापि दृश्यत्वमवश्यं स्वीकरणीयम्। धर्मिणोऽनुपस्थितौ तत्र कस्यचिद्धर्मस्य निषेधो न भवितुमर्हतीति तु युज्यते; न तु निषेधग्राहकप्रमाणेनैव निषेधधर्मिण उपस्थितिरपेक्षणीया, अपेक्षितत्वे वायौ रूपाभावस्य चाक्षुषत्वं न स्यात्, वायोश्चाक्षुषत्वाभावात्। एवं जले गन्धाभावस्यापि घ्राणजप्रत्यक्षं न स्यात्, जलस्य घ्राणजप्रत्यक्षविषयत्वात्। नापि प्रमाणेनैव निषेधधर्मिण उपस्थितिरपेक्षणीया, अनुपस्थिते धर्मिणि कस्यचिद्धर्मस्य निषेधासम्भवेन धर्मिण उपस्थितिमात्रमपेक्षते, न तु प्रमाणजन्योपस्थितिगौरवात्। धर्मिणः प्रकाश एवापेक्षते, जडस्य धर्मिणः प्रकाशाय प्रमाणमपेक्ष्यतां नाम, स्वप्रकाशरूपस्य ब्रह्मणः प्रकाशाय प्रमाणापेक्षा कस्मै प्रयोजनाय? ब्रह्मण एव स्वप्रकाशरूपत्वात्—इत्यभिप्रेत्य पूर्वपक्षं परिहरति सिद्धान्ती—स्वप्रकाशत्वेन स्वतः सिद्धे इत्यादिना। स्वप्रकाशत्वेन स्वतः सिद्धे ब्रह्मणि श्रुत्या वृत्तिविषयत्वरूपदृश्यत्वस्य निषेधः सिध्यति। अभासमाने धर्मिणि कस्य-

वाच्यम्; शुद्धं स्वप्रकाशमिति शब्दंजन्यविशिष्टवृत्तौ शुद्धाप्रकाशे तस्य स्वप्रकाशत्वासिद्धेः—इति चेत्, न; वृत्तिकाले वृत्तिरूपेण धर्मेण शुद्धत्वासम्भवात् शुद्धस्य वृत्तिविषयत्वं न सम्भवति। अतः "शुद्धं स्वप्रकाशमि"ति वाक्यस्य लक्षणया अशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थः ॥१५॥

---

चित् धर्मस्य निषेधासम्भवेऽपि स्वतः सर्वदा भासमाने श्रुत्या वृत्तिविषयत्वरूपदृश्यत्वस्य निषेधे न काप्यनुपपत्तिः। शुद्धे ब्रह्मणि दृश्यत्वनिराकरणमसहमानः प्रकारान्तरेण ब्रह्मणो दृश्यत्वमुपपादयितुमाह पूर्वपक्षी—यद्यपि दृश्यत्वधर्मस्य निषेधाय ब्रह्मणो वृत्तिविषयत्वं नापेक्षितं, तथापि ब्रह्मणि वृत्तिव्याप्यत्वनिषेधो न संभवति। शुद्धं स्वप्रकाशमिति वाक्यजन्यवृत्तौ शुद्धस्य विषयत्वे वाक्यजन्यवृत्तिविषयत्वं ब्रह्मणः सिध्यति। वाक्यजन्यवृत्तौ शुद्धस्याभासमानत्वे एतस्मात् वाक्यात् शुद्धस्य स्वप्रकाशत्वं न सिध्यति, वाक्यस्यास्य वैयर्थ्यञ्च स्यात्। वाक्यजन्यवृत्तौ शुद्धाप्रकाशस्य इष्टापत्त्या परिहरति सिद्धान्ती—वृत्तिकाले वृत्तिरूपेण धर्मेणेत्यादिना। शुद्धं स्वप्रकाशमित्यादिवाक्यजन्यवृत्तिकाले ब्रह्मणो वृत्तिरूपेण धर्मेण उपहिततया शुद्धत्वासम्भवेन शब्दजन्यवृत्तौ शुद्धाप्रकाशस्येष्टत्वात्। न च वाक्यस्यास्य वैयर्थ्यमिति वाच्यं, वाक्यजन्यवृत्तिकाले ब्रह्मणो वृत्त्युपहिततया शुद्धत्वासम्भवादगत्या उक्तवाक्यस्य लक्षणया अशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थोऽङ्गीकरणीयः। यथा ब्रह्मणि वेद्यत्वं नास्तीत्यस्य वाक्यस्य लक्षणया अब्रह्मण्येव वेद्यत्वमित्यर्थः। मुख्याया वृत्तेरसंभवे जघन्याया एव वृत्तेर्ग्राह्यत्वात्। "अन्यदेव तद्विदितादि"त्यादिश्रुतिविरोधेन मुख्याया वृत्तेरसम्भवात्। किञ्च ब्रह्मशब्देन यदि अद्वैतवाद्यभिमतं त्रिविधपरिच्छेदशून्यं वस्तु स्वीकृत्य दृश्यत्वमापाद्यते तदा पूर्वपक्षिण एव व्याघातः, दृश्यत्वे त्रिविधपरिच्छेदराहित्यासंभवात्। दृश्यत्वस्यैव परिच्छेदरूपत्वात्। यदि ब्रह्मशब्देन ज्ञानाद्यधिकरणं जडमभिप्रेतं तर्हि तादृशे ब्रह्मणि मिथ्यात्वं दृश्यत्वञ्च अस्तीति न दृश्यहेतोर्व्यभिचारः; तथा च प्रदर्शितवाक्यस्य लक्षणावृत्त्यङ्गीकारात् न वाक्यवैयर्थ्यमित्याह सिद्धान्ती—अतः शुद्धं स्वप्रकाशमिति। यतः शुद्धं ब्रह्म वृत्तेर्विषयो न भवितुमर्हति, वृत्त्युपधानदशायां ब्रह्मणः शुद्धत्वहानेः, अतः शुद्धं स्वप्रकाशमिति वाक्यस्य मुख्यार्थासम्भवेन लक्षणया अशुद्धत्वमस्वप्रकाशत्वव्यापकमित्यर्थो ग्राह्यः। वृत्तिविषयत्वे ब्रह्मणो यथा शुद्धत्वहानिः स्वप्रकाशत्वविरोधोऽपि स्यात्। अतः वाक्यस्य लक्ष्यार्थ एव ग्राह्यः।

तथा च अशुद्धत्वव्यावृत्त्या शुद्धे स्वप्रकाश्यता पर्यवस्यति, यथा भेदनिषेधेन अभिन्नत्वम् ॥१६॥

---

अशुद्धत्वमिति । अशुद्धत्वं न शुद्धभिन्नत्वं, तथात्वे शुद्धस्य वृत्तिविषयत्वापत्तेः, किन्तु अशुद्धत्वमुपहितत्वं, तथा च यत्र यत्रास्वप्रकाशत्वं, [तत्र] तत्रोपहितत्वं, यथा—सन्घट इत्यादिप्रत्ययवेद्येषु घटादिषु ॥१५॥

१६—अस्वप्रकाशत्वञ्च परप्रकाश्यत्वम्, अस्वप्रकाशत्वव्यापकमशुद्धत्वमिति प्रदर्शितवाक्यार्थसिद्धावपि शुद्धस्य स्वप्रकाशत्वप्रतिपादनाय प्रदर्शितवाक्यस्य किमायातमित्याकाङ्क्षायामाह सिद्धान्ती—तथा च.....पर्यवस्यतीति। अस्वप्रकाशत्वं परप्रकाश्यत्वं दृश्यत्वमिति यावत्। न च दृश्यत्वाशुद्धत्वयोर्व्याप्यव्यापकभावग्रहणमात्रेण न शुद्धे ब्रह्मणि स्वप्रकाशत्वपर्यवसानं, किन्तु शुद्धे ब्रह्मणि अस्वप्रकाशत्वव्यापकाशुद्धत्वस्य व्यावृत्तौ ज्ञातायामेव अस्वप्रकाशत्वस्य व्याप्यस्य व्यावृत्तिर्ज्ञायते। व्यापकव्यावृत्तिः व्याप्यव्यावृत्तेर्व्याप्या व्याप्ये ज्ञाते व्यापको ज्ञायते। तथा च शुद्धे ब्रह्मणि व्यापकाशुद्धत्वव्यतिरेकज्ञानार्थं ब्रह्मणो ज्ञातत्वमपेक्ष्यते, अज्ञाते धर्मिणि कस्यचिद्धर्मस्य विधातुं निषेद्धुं वा अशक्यत्वात्। तथा च पुनरपि ब्रह्मणि वृत्तिविषयत्वरूपं दृश्यत्वमापन्नमिति "भक्षितेऽपि लशुने न शान्तो व्याधिरिति" न्यायापातः, शुद्धे ब्रह्मणि दृश्यत्वहेतोर्व्यभिचारस्य पुनरापातादिति वाच्यं, शुद्धस्य ब्रह्मणः स्वतः स्फुरणरूपतया न धर्मिप्रकाशाय वृत्तिज्ञानमपेक्ष्यते। वृत्तिज्ञानापेक्षायां हि ब्रह्मणो दृश्यत्वमायाति। एवञ्च शुद्धं स्वप्रकाशमिति वाक्यं ब्रह्मणो वृत्तिविषयत्वं विनैव शुद्धस्य स्वप्रकाशतायां पर्यवस्यति। उक्तवाक्यं साक्षात् शुद्धस्य स्वप्रकाशत्वं न बोधयति, किन्तु प्रदर्शितरीत्या शुद्धस्य स्वप्रकाशत्वे वाक्यं पर्यवस्यति। यथा भेदनिषेधकवाक्यस्य अभिन्नत्वे पर्यवसानम्, अभिन्नत्वे ऐक्ये इत्यर्थः, तथा प्रकृतेऽपीति।

चन्द्रिकाकृतस्त्वाहुः—शुद्धविषयकनिश्चयरूपवृत्त्यनभ्युपगमे ब्रह्म शुद्धं न वा ? इति संशयविषयत्वस्य "ब्रह्म न शुद्धम्" इति विपर्ययविषयत्वस्य च शुद्धे ब्रह्मणि आपत्तिः स्यात्। समाने विषये निश्चयरूपा वृत्तिरेव सर्वत्र संशयविपर्ययविरोधिनीति स्वप्रकाशेऽपि ब्रह्मणि निश्चयरूपवृत्त्यभावदशायां कदाचित् संशयविपर्ययविषयत्वयोरापत्तिः स्यात्, अतः शुद्धब्रह्मणः संशयाद्यविषयत्वमिच्छता

सिद्धान्तिना शुद्धगोचरनिश्चयरूपा वृत्तिरवश्यमभ्युपगमनीयेति पूर्वपक्षिणोऽभिप्रायः।

सिद्धान्ती पुनः शुद्धस्य वृत्तिविषयत्वे स्वप्रकाशत्वविरोधाद् वृत्त्युपधानदशायां शुद्धत्वासंभवाच्च शुद्धविषयकनिश्चयरूपवृत्तिं विनैव शुद्धस्य संशयाद्यविषयत्वप्रदर्शनाय "शुद्धं स्वप्रकाशम्" इति वाक्यं शुद्धस्य संशयाद्यविषयत्वे पर्यवस्यतीति दर्शयति—शुद्धे स्वप्रकाशता पर्यवस्यतीति। उक्तवाक्यस्य लक्षणया अशुद्धत्वमस्वप्रकाशत्वव्यापकमित्युक्तमाचार्येण। अशुद्धत्वमुपहितत्वम्, तथा च—अनुपहितत्वस्वप्रकाशत्वयोर्व्यतिरेकव्याप्तिं प्रदर्शयन्नाचार्यो अनुपहिते ब्रह्मणि स्वप्रकाशत्वाभावो ज्ञातुं न शक्यत इति दर्शयति। अनुपहितत्वस्वप्रकाशत्वयोरन्वयव्याप्तिमभ्युपगच्छता तयोर्व्यतिरेकव्याप्तिरपि अवश्याभ्युपगमनीया; अन्यथा व्यभिचारशङ्काया निरोधासम्भवात। यत्रानुपहितत्वं, तत्र स्वप्रकाशत्वम्, इत्यन्वयव्याप्तिः। यत्र स्वप्रकाशत्वं नास्ति, तत्रानुपहितत्वमपि नास्ति—इति शुद्धत्वस्वप्रकाशत्वयोर्व्यतिरेकव्याप्तिः। अनुपहितत्वाभाव उपहितत्वम्' एतस्या व्यतिरेकव्याप्तेः प्रतिसन्धानदशायां व्याप्तिज्ञानजन्यसंस्कारस्योद्बोधदशायां वा उपहितत्वाभावरूपशुद्धत्वविशिष्टे ब्रह्मणि स्वप्रकाशत्वाभावो न ज्ञातुं शक्यते; व्यापकाभाववति व्याप्यज्ञानासम्भवात्। यस्य वह्निधूमयोर्व्यतिरेकव्याप्तिज्ञानमस्ति व्याप्तिज्ञानजन्योद्बुद्धसंस्कारो वास्ति,तस्य धूमाभावाभाववति सधूमे वह्न्यभावज्ञानं न सम्भवति। धूमाभावे वह्न्यभावव्यापकताज्ञानस्य विरोधिनो विद्यमानत्वात्। तथा च—उपहितत्वशून्ये अनुपहिते ब्रह्मणि योऽभावः, तत्प्रतियोगित्वरूपेण स्वप्रकाशत्वं न ज्ञायते। न चानुपहितस्य ब्रह्मणः शुद्धत्वव्याघातभयाच्चस्य ज्ञानविषयत्वानङ्गीकारे अनुपहितस्य ज्ञानाविषयत्वाद् उपहितत्वशून्यब्रह्मनिष्ठाभावप्रतियोगित्वेन स्वप्रकाशत्वं न ज्ञायते—इत्यपि वक्तुं न शक्यते इति वाच्यम्, अनुपहितं ब्रह्म यद्यपि ज्ञानविषयो न भवति, तथापि अस्वप्रकाशत्वज्ञानम् अनुपहितत्वावच्छिन्नविशेष्यताकं न भवति, अनुपहितत्वविशिष्टे अस्वप्रकाशत्वज्ञानासम्भवे शुद्धे ब्रह्मणि स्वप्रकाशत्वसंशयविपर्ययोरसम्भवात शुद्धे स्वप्रकाशता पर्यवस्यति—इति आचार्यस्याभिप्रायः। ब्रह्म स्वप्रकाशं शुद्धत्वात्—इत्यनुमानेन ब्रह्मणः स्वप्रकाशत्वानुमितिरूपासिद्धिर्ना-

न च—शुद्धपदेन अभिधया लक्षणया वा शुद्धाप्रकाशे तत्प्रयोग-वैयर्थ्यमिति—वाच्यम् ; पर्यवसितार्थमादाय सार्थकत्वोपपत्तेः।

एवं च 'शुद्धं न दृश्यं न मिथ्येत्यस्याप्यशुद्धत्वं दृश्यत्वमिथ्या-त्वयोः व्यापकमित्येतत्परत्वेन शुद्धे दृश्यत्वमिथ्यात्वयोर्व्यतिरेकः पर्यवस्यति ॥१७॥

---

चार्यस्याभिप्रायः। शुद्धत्वस्य हेतोर्ब्रह्मणि अज्ञाने [ते] तादृशानुमितेरसम्भवात्। शुद्धब्रह्मणो ज्ञानं विनापि शुद्धत्वस्य प्रदर्शितव्यतिरेकव्याप्तिग्रहसम्भवात्।

यथा भेदनिषेधेनाभिन्नत्वमिति। यथा तद्घटत्वाभावव्यापकः तद्घटभेदः, इति निश्चयोत्तरं तद्घटभेदात्यन्ताभाववति तद्घटे तद्घटत्वाभावज्ञानानुत्पत्त्या तद्घटत्वं पर्यवस्यति, निश्चयविषयो भवतीत्यर्थः, व्यापकाभाववति व्याप्यज्ञाना-सम्भवात्। तद्वत् प्रकृतेऽपि शुद्धे स्वप्रकाशत्वं पर्यवस्यति। एषात्राक्षरयोजना—भेदनिषेधेन तद्घटभेदात्यन्ताभावेन तद्घटभेदात्यन्ताभाववति तद्घटत्वाभावज्ञाना-नुत्पत्त्या अभिन्नत्वं तद्घटत्वं पर्यवस्यति ॥ १६ ॥

१७—पूर्वपक्षी शङ्कते—न च शुद्धपदेनेति। शुद्धस्य ब्रह्मणो वृत्तिविषयतादशायां वृत्त्युपहितत्वेन ब्रह्मणः शुद्धत्वासम्भवात् शक्त्या लक्षणया वा शुद्धपदात् शुद्धस्य ब्रह्मणः स्मृतिरूपप्रकाशासम्भवात् "शुद्धं स्वप्रकाशमि"ति वाक्ये शुद्धपदप्रयोगवैयर्थ्यं स्यात्। शुद्धपदस्य शुद्धार्थविषयकबोधजनकत्वरूप-प्रयोजनाभावात्। पूर्वपक्षिणा नैवं वाच्यम्, शुद्धत्वविशिष्टे स्वप्रकाशत्वाभावज्ञाना-सम्भवरूपं प्रयोजनमादाय शुद्धपदप्रयोगसार्थकत्वोपपत्तेः। "शुद्धं स्वप्रकाशं न वा ? शुद्धमस्वप्रकाशम्" इति संशयविपर्ययनिरोधकतया शुद्धे स्वप्रकाशत्वाज्ञान-निवर्तकतया च "शुद्धं स्वप्रकाशम्" इति वाक्ये शुद्धपदप्रयोगसार्थक्योपपत्तेर्न प्रदर्शिते वाक्ये शुद्धपदस्य वैयर्थ्यम्। केवलशुद्धपदस्य निष्प्रयोजनत्वेऽपि "शुद्धं स्वप्रकाशम्" इति वाक्ये शुद्धपदसहितस्य स्वप्रकाशपदस्य वाक्यरूपतया वाक्ये लक्षणाङ्गीकारेण लक्षणया "अशुद्धत्वमस्वप्रकाशत्वव्यापकम्" इति वाक्य-लक्ष्यं व्यापकत्वमादाय प्रदर्शितप्रयोजनसिद्धेः। शुद्धस्य वृत्तिविषयत्वं विनैव प्रदर्शितप्रयोजनसिद्धिसम्भवेन "शुद्धं न दृश्यम्, न मिथ्ये"ति वाक्यस्यापि लक्षणया "अशुद्धत्वं दृश्यत्वमिथ्यात्वयोर्व्यापकमि"त्यर्थलाभेन शुद्धे ब्रह्मणि अशुद्धत्वव्या-वृत्त्या दृश्यत्वमिथ्यात्वयोर्व्यतिरेकः पर्यवस्यति, व्यापकनिवृत्तौ व्याप्यनिवृत्तेरवश्यंभा-

एतेन—स्फुरणमात्रमेव मिथ्यात्वे तन्त्रम् ; लाघवात् ॥१८॥

अतः "स्वतः स्फुरदपि ब्रह्ममिथ्यैवे"ति—शून्यवादिमतमपास्तम् ; स्वतः स्फुरणरूपतायाः शुक्तिरूप्यादावभावात्, स्फुरणविषयत्वस्य

---

वात्। न दृश्यं न मिथ्या इत्यत्र नञो भेदार्थकतया भेदाभावस्य प्रतियोगितावच्छेदक-रूपत्वेन दृश्यभेदाभावस्य दृश्यत्वरूपत्वात् मिथ्याभेदाभावस्य च मिथ्यात्वरूपत्वाद् दृश्यत्वमिथ्यात्वयोर्व्यापकत्वं शुद्धत्वाभावरूपे अशुद्धत्वे प्रदर्शितवाक्याल्लक्षणया लभ्यते । तेन च प्रदर्शितप्रयोजनसिद्धिरित्याह—एवञ्च···व्यतिरेकः पर्यवस्यतीति ॥१७॥

१८—एतेनेति। वक्ष्यमाणदूषणेनेत्यर्थः। एतच्छब्दस्य सन्निहितपरामर्शित्वात्। यदुक्तं पूर्वपक्षिणा लाघवेन स्फुरणमात्रमेव मिथ्यात्वे तन्त्रम्, इति स्वतः स्फुरदपि ब्रह्म मिथ्यैव, वृत्तिव्याप्यत्वापेक्षया स्फुरणमात्रस्य लघुत्वात् मिथ्यात्वे स्फुरणमात्र-स्यैव प्रयोजकत्वमस्तु, व्यावहारिकप्रपञ्चवद् ब्रह्मणोऽपि स्फुरणात् तस्यापि मिथ्यात्वं स्यात्, व्यावहारिकप्रपञ्चस्य प्रमाणेन स्फुरणं, ब्रह्मणः स्वतः स्फुरणमिति वैलक्षण्ये सत्यपि स्फुरणमात्रं तु उभयत्राविशिष्टं, स्फुरणमात्रस्य मिथ्यात्वानुमापकत्वे ब्रह्मणोऽपि मिथ्यात्वापत्त्या अद्वैतवादिनः शून्यवादिमतप्रवेशः स्यादिति। एतेन तदपास्तं, वक्ष्यमाणदूषणेन तन्निरस्तम्। कथं तन्निरस्तमिति चेत्, शृणु, 'निर्विशेषं न सामान्यमि'ति न्यायेन पूर्वपक्षिणोक्तं स्फुरणमपि परतः स्फुरणं वा स्यात् स्वतो वा स्फुरणं स्यात्? यत् परतो न स्फुरति स्वतो वा न स्फुरति, तत् न स्फुरत्येव। 'परस्परविरोधेन न प्रकारान्तरे स्थितिरि'ति न्यायात्। अतः स्फुरणरूपस्य मिथ्या-त्वप्रयोजकत्वेऽपि मिथ्यात्वप्रयोजकस्य स्फुरणस्य स्वतः स्फुरणरूपत्वं परतः स्फुरण-रूपत्वं वा पूर्वपक्षिणाऽपि अङ्गीकरणीयम् ॥१८॥

१९—स्वतः स्फुरणस्य मिथ्यात्वप्रयोजकत्वे दोषमाह—**स्वतः स्फुरणरूपतायाः शुक्तिरूप्यादावभावादिति**। शुक्तिरूप्यादौ मिथ्यात्वप्रयोजकस्य स्वतः स्फुरणरूपत्वस्याभावात् शुक्तिरजतादीनां मिथ्यात्वं न सिध्येत्। परतः स्फुरणरूप-त्वस्य च शुक्तिरूप्यादौ व्यावहारिकप्रपञ्चे च सत्त्वेऽपि स्वतः स्फुरणरूपे ब्रह्मण्यभावान्न तेन ब्रह्मणो मिथ्यात्वसिद्धिः। तथा न शून्यवादिमतप्रवेशः। परतः स्फुरणरूपत्वं तु स्फुरणविषयत्वं स्फुरणरूपे ब्रह्मणि स्फुरणविषयत्वं न सम्भवति,

ब्रह्मण्यसिद्धेः ॥१९॥

ननु—विशिष्टज्ञाने विशेष्यस्यापि भाने श्रुत्या विशिष्टस्य दृश्यत्वेनैव विशेष्यस्यापि दृश्यत्वाद्व्यभिचारः, न च "विष्णवे शिपिविष्टाये"त्यादौ विशिष्टस्य देवतात्ववत् विशिष्टस्य विषयत्वम्, अग्निषोमपयोर्मिलितयोर्देवतात्ववद्वा मिलितस्य विषयत्वम्, अतो न विशेष्ये-विषयत्वमिति—वाच्यम्; तद्वदेव विशेषणस्याप्यविषयत्वे भागासिद्धि-

---

विषयताया भेदव्याप्यत्वात्, भेदाभावे विषयताया अनुपपत्तेः। स्वस्मिन् स्वविषयत्वं तु वृत्तिविरोधादेवासङ्गतम्। अत एवोक्तमाचार्येण ब्रह्म स्वप्रकाशत्वलक्षणोपपत्तिप्रकरणे—ननु अनवस्थाभिया स्फुरणान्तरानङ्गीकारात् स्वस्यैव स्वविषयत्वमस्तु, इति चेन्न, अनवस्थया स्फुरणान्तरत्यागवद्भेदे भेदनियतस्य विषयिविषयभावस्याप्ययुक्ततया त्यागोपपत्तेः।···स्वात्मनि वृत्तिविरोधेन छिदाया अच्छेद्यत्ववत् स्वस्य स्ववेद्यत्वायोगादिति। स्वप्रतियोगिकसम्बन्धस्य स्वस्मिन् अभावेन स्वस्य स्ववेद्यत्वं न सम्भवति—इति आचार्याणामाशयः। तथा च प्रदर्शितदूषणग्रासात् स्फुरणमात्रं मिथ्यात्वे न तन्त्रमिति स्थितम् ॥१९॥

२०—केवलस्य शुद्धस्य स्वातन्त्र्येण वृत्तिविषयत्वाभावेऽपि प्रकारान्तरेण शुद्धस्य वृत्तिविषयत्वं शङ्कते पूर्वपक्षी—ननु विशिष्टज्ञान इति। सत्यकामत्वसत्यसङ्कल्पत्वादिगुणविशिष्टब्रह्मबोधकश्रुत्या गुणविशिष्टस्य ब्रह्मणो ज्ञाने शुद्धस्यापि विषयत्वाद् वृत्तिविषयत्वस्य हेतोः शुद्धे ब्रह्मणि व्यभिचारः स्यात्, विशिष्टस्य विशेषणविशेष्यसंसर्गेभ्योऽनितिरिक्तत्वेन विशिष्टस्य दृश्यत्वे विशेष्यस्य शुद्धस्यापि दृश्यत्वमङ्गीकरणीयमेव। तथा च शुद्धे ब्रह्मणि दृश्यत्वहेतोर्व्यभिचारः पुनरापन्नः। विशिष्टस्य विशेषणादित्रितयेभ्योऽनतिरिक्तत्वमङ्गीकृत्य पूर्वपक्षिणः इयं शङ्का। विशिष्टस्यातिरिक्तत्वे तु शङ्केयं न सङ्गच्छते। अतो विशिष्टस्य विशेषणादित्रितयेभ्योऽतिरिक्तत्वमभ्युपगम्य सिद्धान्तिनः दृश्यत्वहेतोर्व्यभिचारपरिहारमसहमानो दृश्यत्वहेतोर्भागासिद्धिमुद्भावयति पूर्वपक्षी—न च विष्णवे शिपिविशिष्टायेति। विष्णवे शिपिविष्टाय—इत्यादौ यथा देवतात्वं न विशेष्ये विष्णुमात्रे, नापि विशेषणे शिपिविष्टमात्रे, किन्तु शिपिविशिष्टत्वविशिष्टे विष्णौ। तथैव वृत्तिविषयत्वमपि सत्यसङ्कल्पत्वादिधर्मविशिष्टे ब्रह्मणि, न तु विशेष्येऽपि शुद्धे ब्रह्मणि। अतो न ब्रह्मणि

प्रसङ्गात्—इति चेन्न, विशेष्यतापन्नस्य विषयत्वेऽपि क्षत्यभावात् , तस्य मिथ्यात्वाभ्युपगमात् अत एव—उपहितविषयत्वेऽप्युपधेयविषयत्वमक्षतमेव इति—अपास्तम्। उपहितात्मना तस्यापि मिथ्यात्वाभ्यु-

---

दृश्यत्वहेतोर्व्यभिचारः। विशिष्टस्य विशेषणादित्रितयातिरिक्तत्वात्। यथा वा अग्नीषोमयोर्मिलितयोर्देवतात्वं, न प्रत्येकस्य, देवतात्वपर्याप्त्यधिकरणत्वमग्नीषोमयोरेव, न तु एकैकस्य, तथैव दृश्यत्वपर्याप्त्यधिकरणत्वं सत्यसङ्कल्पत्वादिविशेषणब्रह्मणोरुभयोरेव, न तु एकैकस्य। तथा च केवले ब्रह्मणि दृश्यत्वहेतोरभावान्न व्यभिचारः। विशिष्टस्य मिलितस्य वा दृश्यत्वेऽपि विशेष्ये केवले वा न दृश्यत्वमिति न दृश्यत्वहेतोर्ब्रह्मणि व्यभिचारः—इति न सिद्धान्तिना वाच्यमित्याह पूर्वपक्षी—एवं रूपेण दृश्यत्वहेतोर्व्यभिचारसमाधानेऽपि उभयत्र दृश्यत्वहेतोर्भागासिद्धिप्रसङ्गात। भागासिद्धिमेव दर्शयति—तद्वदेव विशेषणस्याविषयत्वे भागासिद्धिप्रसङ्गादिति। तद्वदेव वृत्तिविषयत्वस्य शुद्धेऽनुपगमादेव, विशेषणेऽपि वृत्तिविषयत्वस्याभावात् हेतोर्भागासिद्धिः स्यात्। सत्यसङ्कल्पत्वादिविशेषणभागस्य मिथ्यात्वानुमाने पक्षकोटिप्रविष्टत्वात। पक्षैकदेशे सत्यसङ्कल्पत्वादिविशेषणे दृश्यत्वहेतोरभावाद् दृश्यत्वहेतोर्भागासिद्धिरेव स्यात्। एवमेव मिलितस्य दृश्यत्वे एकैकस्य दृश्यत्वाभावादेव सत्यसङ्कल्पत्वादिपक्षभागे दृश्यत्वहेतोरसिद्धिरेव स्यात्।

समाधत्ते सिद्धान्ती—न, विशेष्यतापन्नस्येत्यादि। पूर्वपक्षिणा यद् ब्रह्मणो दृश्यत्वं प्रदर्शितं, तत् किं विशेष्यतापन्नत्वेन, अथ वा शुद्धस्य ब्रह्मणः स्वरूपेण ? नाद्यः, विशेष्यतापन्नस्य ब्रह्मणो वृत्तिविषयत्वेऽपि क्षत्यभावात् दृश्यत्वहेतोर्व्यभिचाराभावात्; कुतो व्यभिचाराभावः ? इत्यत आह—**तस्य मिथ्यात्वाभ्युपगमात्** तस्य, विशेष्यतापन्नस्य ब्रह्मणः, मिथ्यात्वाभ्युपगमात्। साध्यवति विशेष्यतापन्ने ब्रह्मणि दृश्यत्वहेतोः सत्त्वेन न व्यभिचारः। शुद्धस्य ब्रह्मणः स्वरूपेण वृत्तिविषयत्वं तु "यत्तदद्रेश्यमि"त्यादिश्रुतिविरोधादनङ्गीकारपराहतमेव।

वृत्तिविषयत्वस्य शुद्धे अनुपगमादेव· यत् पूर्वपक्षिणा उक्तमुपहितस्य विषयत्वेऽपि उपधेयस्य विषयत्वमक्षतमेव, उपाध्युपधेयतत्सम्बन्धानामुपहितपदार्थत्वादिति, तदपास्तम्। उपधेयस्यापि ब्रह्मण उपहितात्मना मिथ्यात्वाभ्युगमात्। शुद्धस्य वृत्त्यविषयत्वात् उपहितात्मनैव तस्य वृत्तिविषयत्वम्, उपहितस्यापि उपाध्युपधेयतत्सम्बन्धातिरिक्तत्वात् उपहितस्य च मिथ्यात्वाभ्युपग-

पगमात् । ज्ञानान्तरविषत्वेन विशेषणे भागासिद्ध्यभावात् ॥२०॥

ननु—वेदान्तजन्याखण्डवृत्तेरुपहितविषयत्वे तदानीमुपाध्यन्तराभावेन तस्या एवोपधायकत्वात् स्वविषयत्वापत्तिः, न चेष्टापत्तिः; शाब्दबोधे शब्दानुपस्थिताभाननियमेन वृत्तेः शब्दानुपस्थितताया भानानुपपत्तेः।

यथाकथञ्चिदुपपत्तौ वा न ततोऽज्ञानतत्कार्ययोर्निवृत्तिः स्यात्; अज्ञानतत्कार्याविषयकज्ञानस्यैव तदुभयनिवर्तकत्वात्, अन्यथा अहमज्ञः

---

मात् साध्यवति हेतोर्वृत्तेर्व्यभिचाराभावात् ।

भागासिद्धिमुद्धरन्नाहाचार्यः—ज्ञानान्तरविषयत्वेनेति । विशिष्टस्य विशेषणादित्रितयातिरिक्तत्वेन विशिष्टविषयिण्या वृत्तेः केवलविशेषणाविषयत्वेऽपि विशिष्टाविषयकवृत्त्यन्तरविषयत्वेन विशेषणे वृत्तिविषयकत्वरूपदृश्यत्वस्य सत्त्वान्न दृश्यत्वहेतोर्भागासिद्धिः । उपाधावपि एवमेव भागासिद्धिः परिहरणीया । न च विशिष्टविषयकज्ञाने उपहितविषयकज्ञाने च यदि शुद्धं न भासेत, तर्हि विशिष्टविषयकज्ञानोत्तरमुपहितविषयकज्ञानोत्तरञ्च शुद्धविषयकं संशयादिकं स्यादिति वाच्यं, विशिष्टविषयकनिश्चयस्यापि शुद्धविषयकसंशयादिप्रतिबन्धकत्वस्वीकारात् । ननु घटादेरपि घटत्वादिविशिष्टरूपेणैव दृश्यत्वं, न तु केवलरूपेण, पूर्वपक्षिणा निर्विकल्पकप्रत्यक्षज्ञानास्वीकारात् । निर्विकल्पकप्रत्यक्षस्वीकारेऽपि नित्यातीन्द्रियेषु धर्मादिषु प्रत्यक्षज्ञानाविषयेषु सिद्धान्तिनाऽपि निर्विकल्पकप्रत्यक्षज्ञानस्य स्वीकर्तुमशक्यत्वात् केवले घटादौ नित्यातीन्द्रियेषु च मिथ्यात्वानुमाने पक्षकोटिप्रविष्टेषु वृत्तिविषयत्वरूपदृश्यत्वहेतोर्भागासिद्धिः स्यात्—इति चेन्न, घटादेः केवलस्य ज्ञानाविषयत्वेऽलीकत्वापातात् ज्ञानविषयत्वमङ्गीकरणीयमेव । नित्यातीन्द्रियेषु च प्रत्यक्षज्ञानाविषयत्वेऽपि परोक्षज्ञानविषयत्वमस्त्येवेति न दृश्यत्वहेतोर्भागासिद्धिशङ्काऽपि । केवलस्य घटादेर्नित्यातीन्द्रियस्य चास्वप्रकाशस्य ज्ञानविषयत्वानङ्गीकारेऽलीकत्वापत्तिरेव स्यात् । विशिष्टप्रतीतौ केवलस्याभानेऽपि केवलविषयिण्यामन्यस्यां प्रतीतौ केवलं भायादेवेति न भागासिद्धिशङ्कालेशोऽपि । निर्विकल्पकास्वीकर्तॄणां प्रबोधव्यवस्था नैयायिकैरेव कृतेति नास्माभिः प्रयत्यते ॥२०॥

२१—वेदान्तवाक्यजन्याखण्डाकारवृत्तिविषयत्वस्य शुद्धे ब्रह्मण्यवश्याङ्गीकर्तव्यतया दृश्यत्वहेतोर्ब्रह्मणि व्यभिचारं दर्शयन् पूर्वपक्षी शङ्कते—ननु वेदान्तजन्याखण्डवृत्तेरिति । शुद्धस्य ब्रह्मणो वेदान्तवाक्यजन्यवृत्तिविषयत्वे मिथ्यात्वाभाव-

अयं घटः इत्यादि ज्ञानानामप्युपहितविषयकत्वेन अज्ञाननिवर्तकत्वप्रसङ्ग इति—चेत्॰।

न; वृत्तेः शाब्दवृत्तावनवभासमानाया एवोपधायकत्वाभ्युपगमात्।

---

वति शुद्धे ब्रह्मणि वृत्तिविषयत्वरूपदृश्यत्वस्य सत्त्वात् हेतोर्व्यभिचारः स्यादिति धिया यदि सिद्धान्तिना एवमुच्येत—वेदान्तजन्याखण्डवृत्तिरपि न शुद्धविषयिणी, किन्तु उपहितब्रह्मविषयिण्येव; वेदान्तवाक्यजन्याखण्डवृत्तिकालेऽन्येषामुपाधीनां नियमेनासम्भवेऽपि उक्तवृत्तिकाले सैव वृत्तिर्नियमेन सम्भवतीति तस्या एव वृत्तेरुपधायकत्वात्, तद्वृत्त्युपहितमेव ब्रह्म वेदान्तवाक्यजन्याखण्डवृत्तेर्विषयः, न तु शुद्धं ब्रह्म। उपहितस्य वृत्तिविषयत्वेऽपि शुद्धस्य वृत्त्यविषयत्वान्न वृत्तिविषयत्वरूपहेतोर्व्यभिचारः। तर्हि वृत्त्युपहितस्य ब्रह्मणः वृत्तिविषयत्वाभ्युगमे वृत्तेः स्वविषयत्वापत्तिः स्यात्। वृत्त्युपहितं ब्रह्म विषयी कुर्वती वृत्तिः स्वात्मानमपि विषयीकरोतीति वृत्तेः स्वविषयत्वापत्तिः। न च वृत्त्युपहितस्य ब्रह्मणो वृत्तिविषयत्वे कथं वृत्तेः स्वविषयत्वं? विधेयानन्वयित्वेन भेदकानामेवोपाधिता, तदुक्तं कल्पतरुकृद्भिः—"कः पुनरेषां विशेषणोपाध्युपलक्षणानां भेदः? उच्यते—कार्यान्वयित्वेन विभेदकं हि विशेषणं-नैल्यमिवोत्पलस्य; अनन्वयित्वेन तु भेदकानामुपाधिता उपलक्षणता च सिद्धा। तत्र च—

> यावत् कार्यमवस्थाय भेदहेतोरुपाधिता।
> कादाचित्कतया भेदधीहेतुरुपलक्षणम्" ॥

तथा च वृत्त्युहितस्य ब्रह्मणो वृत्तिविषयत्वे वृत्तेर्न स्वविषयत्वम्, उपाधेर्विधेयानन्वयित्वात्। विधेयान्वयित्वे तु वृत्तेर्विशेषणत्वमेव स्यात्, न तु उपाधित्वमिति वाच्यं, "नीलो घटो ज्ञातो द्रव्यञ्च"ति वाक्ये नीलत्वस्य विधेयद्रव्यपदार्थानन्वयित्वेन तस्योपाधित्वमेव, अथ च नीलत्वोपाधेरपि ज्ञातत्वप्रतीतेर्नीलत्वेनाज्ञाते घटे तथा प्रतीतेरनुदयात्। तथा च वृत्त्युपहितस्य ब्रह्मणो वृत्तिविषयत्वे वृत्तेरपि स्वविषयत्वापत्तिरप्रत्यूहैवेति।

प्रत्यक्षादिवृत्तेः कथंचित् स्वविषयत्वसम्भवेऽपि शाब्दबोधात्मिकाया वृत्तेः स्वविषयत्वस्यात्यन्तमसम्भवात्। प्रकृते शाब्दवृत्तेः स्वविषयत्वापत्तिः सिद्धान्तिना इष्टापत्त्या परिहर्तुं न शक्यत इत्याह पूर्वपक्षी—न चेष्टापत्तिः। कथं न इष्टा-

तदुक्तं कल्पतरुकृद्भिः—"शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्येतरोपाधिनिवृत्तिर्हेतुरुदयते, स्वस्या अप्युपाधित्वाविशेषात् ।

---

पत्त्या परिहर्तुं शक्यते ? इत्याह—शाब्दबोध इति । शाब्दबोधे—वाक्यजन्यवाक्यार्थबोधे वाक्यघटकपदधर्मिकवृत्तिज्ञानजन्योपस्थिता एव पदार्था भासन्ते, न तु पदानुपस्थिताः पदार्थाः । अपदार्थस्य शाब्दबोधे भानासम्भवात् । शाब्दवृत्त्या उपहितं ब्रह्म शाब्दवृत्तेर्विषयः, शाब्दवृत्तिस्तु अपदार्थरूपा कथं शाब्दज्ञाने भासेत ? शाब्दबोधे शब्दानुपस्थितानामर्थानामभाननियमात् । अत्र यदि सिद्धान्तिना एवमुच्येत—अभिहितान्वयपक्षे यथा अपदार्थोऽपि संसर्गः शाब्दबोधे भासते, तथा शाब्दवृत्तेरपदार्थरूपाया अपि भानमङ्गीकरिष्यते इत्याशङ्क्याह पूर्वपक्षी—यथा कथञ्चिदुपपत्तौ चेति । यथा कथञ्चिदुपपत्तिश्च शाब्दबोधे शब्दानुपस्थितानामर्थानामभाननियमसङ्कोचस्वीकारेण शाब्दवृत्तौ स्वभिन्नस्यैव शब्दानुपस्थितस्याभानमिति नियमस्वीकारः । शाब्दवृत्तेः स्वविषयत्वाङ्गीकारेऽपि ततः वेदान्तवाक्यजन्याखण्डवृत्तेर्ब्रह्मविषयकमूलाज्ञानतत्कार्ययोर्न निवृत्तिः स्यात् । अज्ञानतत्कार्ययोरितिमूलवाक्यमज्ञानतत्प्रयुक्तपरम् । अज्ञानसम्बन्धादीनामज्ञानकार्यत्वाभावात्, ज्ञानेनाज्ञानकार्यनिवृत्तौ अज्ञानसम्बन्धादीनां निवृत्तिर्न स्यात् । अज्ञानवत् तत्सम्बन्धोऽपि अनादिरेव ।

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥"

इत्यभियुक्तोक्तेः । अज्ञानप्रयुक्तत्वं तु अनादिसादिसाधारणमज्ञाननाशजन्यनाशप्रतियोगित्वरूपं बोध्यम् । समानविषयकतयैव ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभावावश्यंभावात् । शुद्धब्रह्मविषयकाज्ञानस्य वेदान्तवाक्यजन्यवृत्त्युपहितब्रह्मविषयकज्ञानात् निवृत्तिर्न स्यात् ज्ञानाज्ञानयोः समानविषयत्वाभावात्; उपहितब्रह्मविषयकज्ञानाद् अनुपहितब्रह्मविषयकाज्ञानस्य निवृत्तेरसम्भवात् ? तादृशब्रह्मज्ञानामूलाज्ञानस्यानुवृत्तौ अज्ञानप्रयुक्तानामनादिसादिद्वयानामपि निवृत्तिर्न स्यात् । सिद्धान्तिना यज्ज्ञानं यदज्ञानविषयविषयकत्वे सति ,यदज्ञानतत्प्रयुक्ताविषयकं तज्ज्ञानं तदज्ञानतत्प्रयुक्तोभयनिवर्तकमितिसामान्यव्याप्तेरङ्गीकृतत्वात् । अन्यथेति । प्रदर्शितां सामान्यव्याप्तिमनङ्गीकृत्याज्ञानतत्कार्योपहितब्रह्मज्ञानस्यापि अज्ञानतत्कार्यनिवर्तकत्वे अङ्गीक्रियमाणे

एवञ्च नानुपहितस्य विषयता; वृत्त्युपरागोऽत्र सत्तयोपयुज्यते, न भास्यतया विषयकोटिप्रवेशेने"ति। अयमभिप्रायः—यथा अज्ञानोपहितस्य साक्षित्वेऽपि नाज्ञानं साक्षिकोटौ प्रविशति; जडत्वात्, किन्तु साक्ष्यकोटावेव, एवं वृत्त्युपहितस्य विषयत्वेऽपि न वृत्तिविषयकोटौ प्रविशति।

---

"अहमज्ञः, अयं घटः सन्" इत्यादिज्ञानानामपि अज्ञानतत्कार्योपहितब्रह्मविषयकत्वेन मूलाज्ञानतत्कार्यनिवर्तकत्वप्रसङ्गः।

पूर्वपक्षिणा भामतीग्रन्थमनुसृत्य पूर्वपक्षः प्रदर्शितः। सिद्धान्ती भामतीमतानुसारेणैव समाधत्ते—ननु वृत्तेः शाब्दवृत्त्यावभासमानाया इति। उक्तञ्चैतद् भामतीनिबन्धे नचान्तःकरणवृत्तावस्य साक्षात्कारे सर्वोपाधिविनिर्मोकस्तस्यैव तदुपाधेर्विनश्यदवस्थस्य स्वपरोपाधिविरोधिनो विद्यमानत्वात्। शुद्धस्य ब्रह्मणो वेदान्तवाक्यजन्याखण्डवृत्तेर्विषयत्वेऽपि तयैव वृत्त्या ब्रह्मण उपहितत्वमिति यद्यप्युक्तं भामत्यां, तथापि न तस्या वृत्तेः स्वविषयत्वापातः। वेदान्तवाक्यजन्यायां शुद्धब्रह्मगोचरायां वृत्तावविषयीभूताया एव वृत्तेर्ब्रह्मोपधायकत्वात् वृत्तेर्ब्रह्मोपधायकत्वे स्वरूपसत्त्वमात्रमेवोपयुज्यते, न तु वृत्तिविषयत्वमपि। वृत्तिः स्वाविषयीभूतापि ब्रह्मोपधायिका इत्येव भामतीग्रन्थस्यार्थः कल्पतरुकृद्भिः स्पष्टीकृतः। उपाधिरहितस्य ब्रह्मणो वृत्तिविषयत्वं विरुद्धं, वृत्तिविषयत्वे तस्य स्वप्रकाशत्वं विरुद्धमित्याशङ्क्य उपहितानुपहितरूपभेदेन समाधानं दर्शयन्नाह कल्पतरुकारः—निरुपाधिब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतोरुदयते, स्वस्याऽप्युपाधित्वाविशेषात्। ततः स्वसत्तायां विनाशहेतुसान्निध्यादविनश्यदवस्थत्वम्, एवञ्च नानुपहितस्य विषयता, न चोपाधेर्निवर्तकान्तरापेक्षेति भावः। ननु वृत्तिविशिष्टस्य शबलतया न तत्त्वसाक्षात्कारगोचरता, वृत्त्यवच्छिन्नात्मविषयत्वे च वृत्तेः स्वविषयत्वापातः, विशेषणाग्रहे विशिष्टाग्रहात्। उपलक्षितस्य तु न वृत्त्युपाधिकता। ग्रन्थमिमं विवृण्वन्नाह परिमलकारः—उपहितमुपधानकाले स्वरूपेणापि न स्वप्रकाशमिति नार्थः, किन्तूपहितरूपेण न प्रकाशमिति, अतो न दोषः। ननु उपहितं वृत्तिविषय इति न युक्तं, ब्रह्म शुद्धं निरुपाधिकमिति हि वृत्तिरूपसाक्षा-

स्वस्याः स्वविषयत्वानुपपत्तेः, किन्तु स्वयमविषयोऽपि चैतन्यस्य विषयतां सम्पादयतीति न काप्यनुपपत्तिः ॥२१॥

---

त्कारस्याकार इष्यते। न चोपाधौ विद्यमाने तदाकारः सम्भवतीति शङ्कार्थः। मिथ्याभूतेषूपाधिषु विद्यमानेष्वपि न वास्तवनिरुपाधित्वाकारसाक्षात्कारोदयो विरुध्यते—इति समाधानमाह—[कल्पतरुकारः]—निरुपाधिब्रह्मेति विषयीकुर्वाणा वृत्तिरिति। ननु मिथ्याभूतानां तेषामुपाधीनां केन निवृत्तिः? साक्षात्कारेणेति चेत्, तस्य केन निवृत्तिः? इत्याकाङ्क्षायामाह—स्वस्वेतरोपाधिनिवृत्तिहेतुः। अनेन चरमवृत्त्युदयकाले उपाध्यन्तराण्यपि सन्त्येव। टीकायां [भामत्यां] वृत्तेरेवोपाधित्ववर्णनमन्ततो वृत्तिमात्रमस्ति—इत्यभ्युपेत्यवाद इति सूचितम्।

पूर्वपक्षं प्रदर्श्य सिद्धान्तमाह कल्पतरुकारः—उच्यते, वृत्त्युपरागोऽत्र सत्तयोपयुज्यते, न प्रतिभास्यतया। अतो वृत्तिसंसर्गे सति आत्मा विषयो भवति न तु स्वतः इति न दोषः। विवृतं चैतत् परिमलकृता—वृत्त्युपहितं वृत्त्या विशिष्टं तदुपलक्षितं वा। वृत्तिविशिष्टस्य शवलतयेत्यादि···विशेषणाग्रहे विशिष्टाग्रहादित्यन्तेन आद्यं दूषयित्वा द्वितीयं दूषयति—उपलक्षितस्य तु न वृत्त्युपाधिकतेति। अविद्यमानेनापि उपलक्षितत्वं भवति यथा उड्डीय गतेनापि काकेन गृहस्य। वृत्त्या तु विद्यमानयैव उपहितता विषयता घटनार्थमिष्यते। अतः प्रसिद्धोपलक्षणवैलक्षण्यान्न वृत्तिरुपलक्षणमिति विद्यमानव्यावर्तकत्वनियमात् विशेषणमेव वाच्या। अतः पूर्वोक्तदोषद्वयं प्रादुःष्यात्—इति भावः। समाधत्ते कल्पतरुकारः—वृत्त्युपरागोऽत्र सत्तयोपयुज्यते। नन्वत्र विशेषणोपलक्षणपक्षयोः कं पक्षं परिगृह्य परिहारो वर्ण्यते? उच्यत इति; सत्तयोपयुज्यत इति। अविद्यमानव्यावर्तकत्वनिषेधान्नोपलक्षणं, न प्रतिभास्यतयेति कार्यान्वयनिषेधान्न विशेषणं, किन्तु कार्यानन्वयि-

एतेन—ज्ञानाज्ञानयोरेकविषयत्वं—व्याख्यातम्; अज्ञानमपि हि

---

सत्त्वनियत उपाधिर्विशेषणोपलक्षणाभ्यामन्यस्तृतीयः प्रकार इति वाक्यान्वयाधिकरणे वक्ष्यमाण तृतीयं प्रकारं परिगृह्य परिहारः। कल्पतरुग्रन्थस्याभिप्रायप्रदर्शनेन पूर्वपक्षमुन्मूलयन्नाहाचार्यः—अयमभिप्रायः कल्पतरुकृतामिति शेषः। अज्ञानोपहितं चैतन्यं साक्षीतिप्रतीतावुपाधेरज्ञानस्य न साक्षिकोटौ प्रवेशः, उपाधेर्विधेयानन्वयित्वनियमात्। उपाधेरज्ञानस्य जडत्वादनात्मत्वान्न स्वप्रकाशरूपत्वं साक्षित्वं सम्भवति। अवेद्यत्वे सति अपरोक्षत्वं स्वप्रकाशत्वं, स्वप्रकाशत्वविशिष्टे आत्मनि अनात्मभूतस्य वेद्यस्याज्ञानस्य विशेषणत्वं न सम्भवति। चिद्रूपस्यैवात्मनः साक्ष्यसम्बन्धी साक्षित्वेन व्यवहारादज्ञानविशिष्टस्य साक्षित्वे हि अज्ञानस्य साक्षिकोटौ प्रवेशः स्यात्। अज्ञानस्य साक्षिकोटौ प्रवेशं वारयितुमेवाज्ञानस्य विशेषणत्वमनुक्त्वा उपाधित्वमुक्तम्। अज्ञानस्योपाधित्वादेव यथा साक्षिकोटौ न प्रवेशः, एवमेव वृत्त्युपहितस्य ब्रह्मणो वेदान्तवाक्यजन्यवृत्तिविषयत्वेऽपि ब्रह्मोपाधिभूताया वृत्तेर्न वेदान्तवाक्यजन्यवृत्तेर्विषयत्वम्। वृत्तेर्वृत्तिविषयकोटौ प्रवेशं वारयितुमेव वृत्तेरुपाधित्वमङ्गीकृतम्। वृत्तिविशिष्टस्य ब्रह्मणो वृत्तिविषयत्वाभ्युपगमे तु विशेषणीभूताया वृत्तेर्वृत्तिविषयत्वं स्यादेव। वृत्तेरुपाधित्वादेव न वृत्तेः स्वविषयतापत्तिः, उपहितविषयकज्ञानस्य उपाध्यविषयकत्वात्। ब्रह्मविषयिण्यां वृत्तौ वृत्तिः स्वयमविषयीभूताऽपि ब्रह्मण उपाधिरूपतया चैतन्यस्य वृत्तिविषयतां सम्पादयति। चैतन्यमविषयाद् व्यावर्तयति, अनुपहितचैतन्यव्यावृत्तां विषयतां सम्पादयति; चैतन्ये वृत्तिविषयत्वं वृत्त्युपहितत्वम् तथा च—वृत्त्युपहितं ब्रह्मवृत्तेर्विषय इति प्रतीतौ वृत्तेरुपाधित्वमेव। ब्रह्मान्विते वृत्तिविषयत्वे वृत्तिरनन्विता सती विद्यमाना च सती स्वविषयमुपहितं ब्रह्म वृत्त्यनुपहिताद् ब्रह्मणो व्यावर्तयति—इति भवति वृत्तिरुपाधिः। आचार्येण कल्पतरुकृतां यदाशयवर्णनं कृतं तत्सर्वं कल्पतरुपरिमलग्रन्थोद्धरणेन प्रागेवास्माभिः प्रदर्शितम्। कल्पतरुग्रन्थे उपाधिविशेषणयोर्यद् वैलक्षण्यं प्रदर्शितं तदविगणय्यैव उपाधिविशेषणयोरभेदाभिमानेन पूर्वपक्षिणः प्रत्यवस्थानं, कल्पतरुप्रदर्शितमुपाधिविशेषणयोर्वैलक्षण्यमुपादाय आचार्यस्य समाधानम् ॥२१॥

२२—उपहितब्रह्मविषयिण्या वृत्त्या शुद्धब्रह्मविषयकाज्ञानस्य निवृत्तिर्न स्यात्,

स्वोपधानदशायामेव ब्रह्मविषयीकरोति; स्वानुपधानदशायां स्वस्यैवाभावात्। तथा च ज्ञानाज्ञानयोरुभयोरप्युपाध्यविषयकत्वे सत्युपहितविषयकत्वात् समानविषयत्वमस्त्येव।

---

अज्ञानसमानविषयकज्ञानस्यैव अज्ञाननिवर्तकत्वात्, इति शङ्कायामाह आचार्यः—एतेनेति। प्रदर्शितकल्पतरुवाक्यमनुसृत्य वेदान्तजन्यब्रह्मविषयिण्या वृत्तेर्वृत्त्युपहितब्रह्मविषयकत्वेऽपि उपाध्यविषयकत्वप्रदर्शनेन ज्ञानाज्ञानयोः समानविषयत्वं व्याख्यातम्। स्वाविषयकस्वोपहितब्रह्ममात्राविषयकत्वं स्वोपहितान्याविषयकत्वे सति उपहितविषयकत्वं ज्ञानाज्ञानयोः समानविषयकत्वम्। उपाधेरपि स्वोपहितान्यत्वान्न उपहितज्ञाने विषयत्वम्। समानविषयत्वञ्च दर्शयन्नाह आचार्यः—**अज्ञानमपि हि स्वोपधानदशायामिति**। स्वोपधानदशायां ब्रह्मणि अज्ञानरूपोपाधिसम्बन्धकाले **ब्रह्मविषयीकरोति**—अज्ञानं ब्रह्मैव विषयीकरोति न तु स्वमपि विषयीकरोति। अज्ञानाश्रयस्यैवाज्ञानविषयत्वात्, स्वं स्वस्याश्रयो न भवितुमर्हति। स्वोपधानदशायामेवेत्येवकारेण स्वानुपधानदशायामज्ञानं ब्रह्म न विषयीकरोति। ब्रह्मणि अज्ञानरूपोपाधिसम्बन्धाभावकाले ब्रह्मज्ञानेन ब्रह्माज्ञानरूपस्वपदार्थज्ञानरूपोपाधिनिवृत्तिदशायां **स्वस्यैवाभावादिति**, अज्ञानस्यैवाभावात्—ब्रह्मज्ञानेन ब्रह्माज्ञानरूपोपाधिनिवृत्तिदशायां ब्रह्माज्ञानस्यैवाभावादज्ञानं कथं ब्रह्मविषयीकुर्यादिति भावः। अनाद्यज्ञानं ब्रह्मण्यध्यस्तमेव भाति। अज्ञानं यावद् भाति, तावच्चैतन्ये अध्यस्ततयैव भाति। चैतन्येऽनध्यस्तमज्ञानं शशविषाणायमानम्। **तथा च ज्ञानाज्ञानयोरुभयोरपि उपाध्यविषयकत्वे सति**—उपहितान्याविषयकत्वे सति **उपहितविषयकत्वात् समानविषयत्वमस्त्येव**। तथा च उपहितब्रह्मविषयिण्या वृत्त्या शुद्धब्रह्मविषयकाज्ञानस्य निवृत्तिर्न स्यादज्ञानसमानविषयकज्ञानस्यैवाज्ञाननिवर्तकत्वादिति शङ्कापि निरस्ता। अज्ञानस्यापि अज्ञानोपहितमेव ब्रह्मविषयः। अज्ञानं ब्रह्मविषयीकुर्वत् स्वेनानुपहितं ब्रह्मविषयीकर्तुं न शक्नोति। ब्रह्मण्यध्यस्तमेवाज्ञानं ब्रह्मविषयीकरोति। तथा च—अज्ञानस्य शुद्धब्रह्मविषयकत्वमित्यस्याज्ञानानुपहिताविषयकत्वे सति ब्रह्मविषयकत्वमर्थः। अज्ञानसत्त्वदशायां ब्रह्म अज्ञानोपहितं भवति।

नचाज्ञानोपहितं ब्रह्म अज्ञानस्य विषय इत्यङ्गीकारे "आश्रयत्वविषयत्वभागिनी

एतेन---उपाधिविषयज्ञानानामज्ञाननिवर्तकत्वं—व्याख्यातम् ; अज्ञानस्योपाध्यविषयत्वेन समानविषयत्वाभावात् ; समानविषयत्वेनैव तयोर्निवर्त्यनिवर्तकभावात् । वस्तुतस्तु---शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वम् ; अन्यथा. शशविषाणं तुच्छमित्यादिशब्दजन्यवृत्तिविषयत्वे

---

निर्विभागचितिरेव केवले" ति संक्षेपशारीरकम्युक्तसिद्धान्तविरोधः, संक्षेपशारीरककारादिभिः शुद्धस्यैव ब्रह्मणोऽज्ञानविषयत्वाभ्युपगमादिति वाच्यं, वाचस्पतिप्रस्थानापेक्षया तेषां प्रस्थानान्तरत्वात् । मूलाज्ञानस्य विषयनिरूपणे संक्षेपशारीरककारादीनां प्रस्थानं विवरणप्रस्थानानुरोधि । एतस्मिन् विषये प्रस्थानभेदानभ्युपगमे "चितिरेव केवला" इत्यत्र केवलपदस्य वेदान्तवाक्यजन्याखण्डाकारवृत्तिभिन्नाज्ञानकार्यानुपहितत्वमेवार्थो ग्राह्यः । तथा च न भामतीसंक्षेपशारीरकप्रस्थानयोर्विरोधः । संक्षेपशारीरके "पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः" इत्यत्र पूर्वसिद्धाज्ञानानाश्रयत्वे पश्चिमशब्दितकार्यत्वस्य हेतुतया निर्देशात् संक्षेपशारीरकस्य पूर्वप्रदर्शितार्थसम्भवाच्च ।

एतेनेति । स्वोपहितान्याविषयकोपहितविषयकज्ञानस्याज्ञाननिवर्तकत्वव्यवस्थापनेन उपाधिविषयज्ञानानामज्ञाननिवर्तकत्वं व्याख्यातम् उपाधिविषयकज्ञानानामुपहितान्यविषयकत्वेन नाज्ञाननिवर्तकत्वम् , उपाधेरुपहितादन्यत्वात् । तथा च वेदान्तवाक्यजन्याखण्डवृत्तौ यदि वृत्तिरपि विषयः स्यात्तर्हि सा अखण्डवृत्तिरज्ञाननिवर्तिका न स्यात्, स्वोपहितान्यविषयकत्वात् । अखण्डाकारवृत्त्युपहितादखण्डाकारवृत्तिरन्या, तद्विषयकत्वाभ्युपगमेऽखण्डाकारवृत्तेरज्ञाननाशकत्वं न स्यादिति भावः । वेदान्तवाक्यजन्याया वृत्तेः स्वविषयत्वे तस्या अखण्डाकारत्वमेव न स्यात् तत्त्वमस्यादिवेदान्तवाक्यानां स्वघटकपदवृत्तिस्मारितान्याविषयकप्रमाजनकत्वमेव हि अखण्डार्थबोधकत्वम्। तादृशी प्रमैव अखण्डार्थबोधः, वृत्तेः स्वघटकपदवृत्तिस्मारितान्यत्वेन तद्विषयकवृत्तेरखण्डाकारबोधत्वाभावात्। उपाधिविषयकज्ञानानामज्ञाननिवर्तकत्वमुक्तं, तदेव कुतः ? इत्यत आह आचार्यः---अज्ञानस्योपाध्यविषयत्वेन समानविषयत्वाभावादिति। अनाद्यज्ञानमनादिचैतन्यमेव विषयीकरोति,न जडं न वा सादि; अप्रयोजनत्वादसम्भवाच्च । अतो अनाद्यज्ञानं चैतन्यातिरिक्तमनावृण्वदुपाध्यविषयकं भवति। अज्ञानावृतस्यैवाज्ञानविषयत्वात् । अज्ञानस्य तदन्यस्य जडस्य वा

तुच्छे व्यभिचारस्य दुरुद्धरत्वात्। एवं च सति शुद्धस्य वेदान्तजन्य-

---

उपाधित्वे तयोरज्ञानविषयत्वं न सम्भवति। अज्ञानस्याज्ञातत्वे अज्ञानस्य सिद्धिरेव न स्यात्। अज्ञानस्वरूपं न प्रमाणेन सिध्यति, किन्तु साक्षिणैव। साक्षिणोऽज्ञान-विरोधित्वाभावादज्ञानावरकमज्ञानं विनाश्य स न आवृतमज्ञानं प्रकाशयेत्। अत एव साक्षिसिद्धं वस्तु अज्ञानं नावृणोतीति वेदान्तसिद्धान्तः। अत एवाज्ञानमुपाध्य-विषयकमेव स्वीकार्यम्। समानविषययोरेव ज्ञानाज्ञानयोर्निवर्तकनिवर्त्यभावस्य सर्वानुभवसिद्धत्वादसमानविषयकज्ञानेन अज्ञानस्य निवृत्तिर्न सम्भवति इत्यज्ञान-निवर्तकज्ञानस्यापि उपाध्यविषयकत्वमङ्गीकार्यम्। उपाध्यविषयकब्रह्मविषयकाज्ञानस्य उपाध्यविषयकब्रह्मविषयकज्ञानेनैव निवृत्तिरङ्गीकरणीया। अतो ज्ञानाज्ञानयोरुभयोरपि उपाध्यविषयकत्वेन ब्रह्मविषयकत्वेन च समानविषयकत्वमङ्गीकार्यम्। तथा च—स्वोपहितान्याविषयकत्वे सति उपहितविषयकत्वं ब्रह्मज्ञानब्रह्माज्ञानयोरक्षतमेव। एवञ्च भामतीप्रस्थाने स्वोपहितान्याविषयकस्वोपहितब्रह्मविषयकज्ञानेन स्वोपहि-तान्याविषयकस्वोपहितब्रह्मविषयकाज्ञानस्य निवृत्तिरिति सिद्धान्तः। वाचस्पतिमते वृत्तिविषयत्वमेव दृश्यत्वम्। ब्रह्मणोऽपि वृत्तिविषयत्वदशायां दृश्यत्वेन मिथ्यात्व-मिष्टमेव, वृत्त्युपहितस्य ब्रह्मणो मिथ्यात्वात्। एवं सति "सत्यं ज्ञानमनन्तं ब्रह्म", "यो वेदनिहितं गुहायाम्", "ब्रह्म वेद ब्रह्मैव भवति," "तरति शोकमात्मविदि"-त्यादिश्रुतिषु ब्रह्मविषयिण्या विद्याया अज्ञाननिवृत्तिं प्रति साधनत्वोक्त्या वेदान्तवाक्यजन्याखण्डाकारब्रह्मविषयकज्ञानस्य वृत्त्युपहितब्रह्मविषयकत्वेन भ्रमत्वं न युक्तं, मिथ्याविषयकभ्रमज्ञानस्याज्ञानानिवर्तकत्वात्, अतो वेदान्तवाक्यजन्याया अखण्डाकारवृत्तेः प्रमात्वमङ्गीकार्यमेव। अस्या वृत्तेः प्रमात्वं तु अबाधितशुद्ध-विषयकत्वेनैव वक्तव्यम्। वेदान्तवाक्यानां यदि अबाधितशुद्धब्रह्मविषयज्ञानजनकत्वं न स्यात्, तर्हि ब्रह्मज्ञानस्य अज्ञाननिवर्तकत्वमपि न स्यात्। भामतीमते ज्ञानमात्रस्य भ्रमत्वाज्ज्ञानस्य प्रमात्वावधारणाय प्रयासोऽपि व्यर्थः स्यात्—इत्याद्य-रुचेराहाचार्यः—वस्तुतस्त्विति। न वृत्तिविषयत्वमात्रं दृश्यत्वं, किन्तु शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वम्। यद्यपि भामतीप्रस्थाने वृत्तिविषयत्वमेव दृश्यत्वं, शुद्धे ब्रह्मणि दृश्यत्वाभावेन नास्य हेतोर्व्यभिचारोऽपि; तथापि आत्माश्रया-दिदोषप्रसङ्गेन नायं पक्ष आचार्यसम्मत इति प्रस्थानान्तरत्वेन वाचस्पत्युक्तं

वृत्तिविषयत्वेऽपि न तत्र व्यभिचारः; तुच्छशुद्धयोः शब्दाजन्यवृत्ति-
विषयत्वानभ्युपगमात् ॥२२॥

---

परित्यज्य सिद्धान्तिसम्मतं वृत्तिविषयत्वरूपं दृश्यत्वं निष्कृष्य दिदर्शयिपुराचार्यः पक्षान्तरमाह ।

वृत्तिविषयत्वरूपदृश्यत्वस्य हेतोः परित्यागे कारणं दर्शयति विट्ठलेशोपाध्यायः [पृ० २६८]—ननु शुद्धस्य ब्रह्मणो ज्ञानाज्ञानविषयत्वे ज्ञानाज्ञान-योरुपाधित्वं न सम्भवति, आत्माश्रयात् । [ज्ञानोपहिते ब्रह्मणि ज्ञानविषय-त्वाङ्गीकारे आत्माश्रयः स्यात् । ज्ञानोपहितस्य ब्रह्मण उपाधिरूपज्ञानेन सह विषयत्वमेव सम्बन्धः । उपाध्युपधेयतत्संबन्धानामेवोपहितपदार्थत्वात् । तथा च वृत्तिविषयीभूतं ब्रह्मैव वृत्त्युपहितं भवति, तथा च वृत्तिविषयत्वविशिष्टे ब्रह्मणि वृत्तिविषयत्वाङ्गीकारे स्वग्रहसापेक्षग्रहकत्वेन स्वस्थितिसापेक्षस्थितिकत्वेन च आत्माश्रयः स्यात् । एवमेव अज्ञानोपहिते ब्रह्मणि अज्ञानविषयत्वाङ्गीकारेऽपि] "न च ज्ञानादिविषयत्वे विषयतासम्बन्धेन ज्ञानादिकमुपाधिरिति नोक्त-दोष इति वाच्यम् ; शब्दभेदेऽपि पर्यवसितार्थाभेदात् । उपाध्यन्तरं तु निरस्तमेव । किञ्च ज्ञानोपहिते एव तद्वि[ज्ञान]विषयत्वं, शुद्धे [ज्ञानविषयताया] असम्भवात् । ज्ञानाज्ञानरूपोपाधिस्तु विषयतासम्बन्धेन शुद्धेऽपीत्युक्तिस्तु निर्युक्तिक-त्वादश्रद्धेयैव । न च तत्रोपाध्यन्तरम्, अनवस्थापत्तेरनभ्युपगमाच्च । तस्मात् शुद्धस्य ब्रह्मणो ज्ञानाज्ञानविषयत्वं स्वीकार्यम् । एवञ्च "आश्रयत्वविषयत्वभागिनी"-त्यादिसंक्षेपशारीरकादेरप्यविरोधः । न च "पूर्वसिद्धतमसो हि पश्चिम" इत्युत्तरवाक्ये अज्ञानस्याप्युपाधित्वे हेत्वकथनान्न्यूनता; आत्माश्रयेण तदुपाधित्वस्या-प्रसक्तेः । न च—वृत्तिकाले वृत्तिरूपेण [ धर्मेण ] शुद्धत्वासम्भव इत्युक्तमिति—वाच्यम ; वृत्तिरूपधर्मवत्त्वस्यापि शुद्धे असम्भवात् । न च [शुद्धस्य वृत्तिविषयत्वे] निर्धर्मकत्वव्याघातः, वास्तवधर्मस्यैव निषेधेनारोपितधर्माभ्युपगमे बाधकाभावात् । वक्ष्यते चैतट्टीकायाम् लघुचन्द्रिकायाम्—[केवलो निर्गुण इत्यादिश्रुत्या ब्रह्मणि परमार्थतो धर्मनिषेधात् । अन्यथा उपहितब्रह्मतादात्म्यस्य शुद्धे अवश्यं वाच्यत्वेन श्रुतिबाधापत्तेरिति] ।

न च यत्तदुद्देश्यमिति श्रुतिविरोधः, तस्याः फलव्याप्यत्वनिषेधपरत्वात्। एवञ्च यत्तच्छब्दाभ्यां ज्ञाते एव धर्मिणि शुद्धे दृश्यत्वनिषेधोपपत्तिः। एवं च "सर्वप्रत्ययवेद्य" इत्यादिवचनविरोधोऽपि न "शुद्धं स्वप्रकाशमि"ति वाक्यञ्च स्वारस्येन सङ्गच्छते। न च वाचस्पतिमतविरोधस्तस्य प्रस्थानान्तरत्वात्। तथा च सत्ये शुद्धे ब्रह्मणि वृत्तिविषयत्वरूपदृश्यत्वहेतोः सत्त्वात् मिथ्यात्वसाधकानुमानं व्यभिचारो विरुन्ध्यादेवेत्याशङ्क्याह मूले—वस्तुतस्त्विति।

वेदान्तानां शुद्धब्रह्मज्ञानजनकत्वात् शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वमित्युक्तम्। शुद्धस्य ब्रह्मणः शब्दजन्यवृत्तिविषयत्वेऽपि शब्दाजन्यवृत्तिविषयत्वं नास्ति, शुद्धस्य ब्रह्मणो वेदान्तैकवेद्यत्वात्। अतः शुद्धे ब्रह्मणि शब्दाजन्यवृत्तिविषयत्वरूपदृश्यत्वाभावान्न व्यभिचारः। वृत्तिविषयत्वमात्रस्य दृश्यत्वे शुद्धे ब्रह्मणि व्यभिचारः, वृत्तिदशायां तस्योपहितत्वाङ्गीकारेण दृश्यत्वहेतोः कथञ्चिद् व्यभिचारोद्धारेऽपि "शशविषाणं तुच्छम्" इत्यादिशब्दजन्यवृत्तिविषये तुच्छे भामतीमते दृश्यत्वहेतोर्व्यभिचारस्य दुरुद्धरत्वमित्याहाचार्यः—अन्यथा··दुरुद्धरत्वादिति।

ननु भामतीमतमनुसृत्य दृश्यत्वनिरूपणप्रसङ्गे किमित्याचार्येण तुच्छे शशविषाणादौ दृश्यत्वहेतोर्दुरुद्धरव्यभिचारो न प्रदर्शितः? किमिति वा भामतीनिबन्धे व्यभिचारस्यास्य शङ्कासमाधाने न प्रदर्शिते? इति चेत्, शृणु—माध्वबौद्धभिन्नानां दार्शनिकानां सत्कोटेरिवासत्कोटेरङ्गीकारो नास्ति। सद्वस्तुवदसदपि किञ्चिदिति नाङ्गीकारार्हम्। असतोऽनङ्गीकारार्हतया सद्विविक्तत्वमेव मिथ्यात्वमित्युक्तमानन्दबोधभट्टारकैः। अत एव "ननु सम्प्रतिपन्नोऽर्थाभावः, न, यथा प्रतिभासमेव मिथ्यारजतस्य उत्तरज्ञानेन निरसनयोग्यस्योपगमात्। लौकिकपरमार्थदृष्टरजतप्रतियोगिकाभावविषयत्वात् रजते त्रैकाल्याभावज्ञानस्येति संविद्द्वयानुरोधेन व्यवस्थासिद्धेरन्यतरसंविदपह्नवायोगात्" [विवरणम्,—पृ. २१ काशीसंस्करणम्]। एतद्विवरणवाक्यव्याख्यानावसरे भावप्रकाशिकायां नृसिंहाश्रमचरणैरप्युक्तम्—लौकिकपरमार्थत्वाकारेण प्रतिपन्नरजतस्यैव त्रैकालिकनिषेधः। व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य तदधिकरणेऽपि सम्भवात्। न चैवं रजतस्य मिथ्यात्वासिद्धिः। पारमार्थिकत्वस्य व्यधिकरणत्वे प्रति-

योगिनो मिथ्यात्वात्। नापि अस्य मिथ्यात्वलक्षणस्यासति अतिव्याप्तिस्तस्यानाधेयत्वेनात्यन्ताभावशून्यत्वेन चासति मिथ्यात्वलक्षणाभावात्। किञ्चासन्नाम नास्ति किञ्चिदिति कुत्रातिव्याप्तिर्लक्षणस्य? यत्तु अर्वाचीनानां माध्वानां वचनं, किं लक्षणाभावादसतोऽभावः? उतं प्रमाणाभावात्? नाद्यः, सर्वदेशीयसर्वकालवृत्त्यन्ताभावप्रतियोगित्वस्य तल्लक्षणत्वात्। न द्वितीयः, नरशृङ्गमित्याद्यनुभवस्य असन्नास्ति—इत्यादिनिषेधानुपपत्तेश्च तत्र प्रमाणत्वादिति। तदसत्, असतोऽत्यन्ताभावप्रतियोगित्वादिधर्माश्रयत्वेऽसत्त्वानुपपत्तेर्धर्मधर्मिभावाभ्युपगमे अनिर्वचनीयस्यैव तन्नाम स्यात्। अपि च असन्नाम किञ्चिदस्ति चेत् सदेव तत् स्यात्, सत्ताधर्मिणोऽसत्तानुपपत्तेः। नास्ति चेत्, कस्याभावप्रतियोगित्वं धर्मः? असतो निःस्वरूपस्य अभावेन सह कस्यचित् सम्बन्धस्यासम्भवाच्च। विरहैकस्वभावस्यापि असतोऽभावस्य असत्त्वापाताच्च। अस्माकन्तु असन्निषेधवचनमहृदयवाचामितिन्यायेनैव।

नापि तदभावस्य सर्वदेशीयत्वे किञ्चिन्मानमस्ति, प्रत्यक्षेण तद्ग्रहासम्भवात्। नापि असत्त्वेन तदनुमानं, साध्याविशेषात्। न च सत्त्वानधिकरणत्वेन, सत्ताया जातित्वे जात्यादौ व्यभिचारात्। असत्त्वाभावत्वे पराभ्युपगतेऽन्योन्याश्रयात्, पराभिमत—[वैशेषिकाद्यभिमत] गगनादौ अतिव्याप्तेश्च।

नापि "नरशृङ्गमि"त्याद्यनुभवोऽस्ति, सम्बन्धाभावेनेन्द्रियेण तदनुभवासम्भवात्। इन्द्रियसम्बद्धविशेषणताप्रत्यासत्तिरस्तु इति चेत्, तस्यापि इन्द्रियप्रत्यासत्तित्वे पूर्वमदृष्टविषाणानामप्यनुभवप्रसङ्गात्। सम्बन्धाभावे विशेषणताया अपि असम्भवात्। तद्व्याप्यलिङ्गाभावेनानुमानेनापि तदसम्भवात्। नापि शब्दात्, तन्मूलाभावे लौकिकशब्दस्य तस्मिन्नप्रवृत्तेः। यथार्थशक्तिज्ञानासम्भवेन शब्दात् तत् प्रमासम्भ-

वाच्च। नापि योग्यानुपलब्ध्या, "योग्यादृष्टिः कुतोऽयोग्ये" इति न्यायेनासतस्तदसत्त्वात्। इति नास्त्येवासदिति।

'एतद्ग्रन्थं दृष्ट्वैवोक्तं विट्ठलेशोपाध्यायेन—"तुच्छादिपदतद्वृत्तीनामाश्रमस्वाम्यादिभिर्निर्विषयकत्वस्वीकारात्" [पृ० २७२], उक्तश्चात्मतत्त्वविवेके आचार्येण—"अवस्तुनि प्रमाणाप्रवृत्तेः, प्रमाणप्रवृत्तौ अलीकत्वानुपपत्तेः" [अलीके कोऽपि व्यवहारो न सम्भवति—इति वदतस्तव स्ववचनविरोधः। अस्यैव व्यवहारस्याभ्युपगमादित्याह]—"एवं तर्हि अव्यवहारे स्ववचनविरोधः स्यादिति चेत्"? [१] तत् किं स्ववचनविरोधेन तेषु प्रमाणमुपदर्शितं भवति? [२] व्यवहारनिषेधव्यवहारो वा खण्डितः स्यात्? [३] अप्रामाणिकोऽयं व्यवहारोऽवश्याभ्युपगन्तव्य इति वा भवेत्? न तावत् प्रथमः, न हि विरोधसहस्रेणापि स्थिरे तस्य क्रमादिविरहे वा शशशृङ्गे वा प्रत्यक्षमनुमानं वा दर्शयितुं शक्यं, तथात्वे वा कृतं भौतकलहेन। द्वितीयस्तु इष्यते एव प्रामाणिकैः। अवचनमेव तर्हि प्राप्तं, किं कुर्मः यत्र वचनं सर्वथैवानुपपन्नं तत्रावचनमेव श्रेयः, त्वमपि परिभावय तावत्—निष्प्रामाणिके अर्थे मूकवावदूकयोः कतरः श्रेयान्। एवं विदुषाऽपि भवता न मूकीभूय स्थितम्, अपि तु व्यवहारः प्रतिषिद्ध एवासति—इति चेत्, सत्यं, यथा प्रामाणिकः स्ववचनविरुद्धोऽर्थो मा प्रसांक्षीदिति मन्यमानेन त्वया अप्रामाणिक एव असति व्यवहारः स्वीकृतः, तथास्माभिरपि प्रमाणचिन्तायामप्रामाणिको व्यवहारो मा प्रसांक्षीदिति मन्यमानैरप्रामाणिक एव स्ववचनविरोधः स्वीक्रियते। यदि तूभयत्रापि भवान् समानदृष्टिः स्यात्, अस्माभिरपि तदा न किञ्चिदुच्यत इति। तृतीये तु अप्रामाणिकश्चावश्याभ्युपगन्तव्यश्चेति कस्येयमाज्ञा—इति भवानेव प्रष्टव्यः। व्यवहारस्य सुदृढनिरूढत्वादिति चेत्, अप्रामाणिकश्च सुदृढनिरूढश्चेति व्याघातः। कथञ्चिदपि व्यवस्थितत्वादिति चेत्—अप्रामाणिकश्चेत्, न कथञ्चिदपि व्यवतिष्ठते। प्रामाणिकश्चेत् तदेवोच्यतामिति वादे व्यवस्था। [पृ० १६८-१७४]

पुनरप्युक्तमाचार्येण [पृ० १८०], [परिशुद्धिः ७१६]—यदि चावस्तुनो निषेधव्यवहारगोचरत्वं विधिव्यवहारगोचरताऽपि किं स्यात्? प्रमाणाभावस्यापि उभयत्रापि तुल्यत्वात्। वन्ध्यासुतस्यावक्तृत्वे अचेतनत्वादिकमेव प्रमाणं वक्तृत्वे तु न किञ्चिदिति चेत्, न, तत्रापि सुतत्वस्य विद्यमानत्वात्। न हि वन्ध्यायाः सुतो न सुतः, तथा सति स्ववचनविरोधात्। वचनमात्रमेवैतत्, न तु परमार्थतः सुत एवासौ इति चेन्न, अचैतन्यस्यापि एवं रूपत्वात्। चेतनादन्यत् स्वभावान्तरमेव हि अचेतनमित्युच्यते। चैतन्यनिवृत्तिमात्रमेव इह विवक्षितं, तत्र सम्भवत्येवेति चेन्न, तत्रापि असुतत्वनिवृत्तिमात्रस्यैव विवक्षितत्वात्।

वक्तृत्वं वस्त्वेकनियतो धर्मः, स कथमवस्तुनि साध्यः, विरोधादिति चेत्, स पुनरयं विरोधः कुतः प्रमाणात् सिद्धः? किं वक्तृत्वविविक्तस्यावस्तुनो नियमेनोपलम्भात्? आहोस्वित् वस्तुविविक्तस्य वक्तृत्वस्यानुपलम्भादिति। न तावदवस्तु केनापि प्रमाणेन उपलम्भगोचरः, तथात्वे वा न अवस्तु। नापि उत्तरः समानत्वात्। न हि वक्तृत्वमिवावक्तृत्वमपि वस्तुविविक्तं कस्यचित् प्रमाणस्य विषयः। तद्विविक्तविकल्पमात्रं तावदस्तीति चेत्? तत्संसृष्टविकल्पनेऽपि को वारयिता? ननु वक्तृत्वं वचनं प्रति कर्तृत्वं, तत् कथमवस्तुनि, तस्य सर्वसामर्थ्यविरहलक्षणत्वादिति चेत्? अवक्तृत्वमपि कथं, तत्र तस्य वचनेतरकर्तृत्वलक्षणत्वादिति। सर्वसामर्थ्यविरहे वचनसामर्थ्यविरहो न विरुद्ध इति चेत्, अथ सर्वसामर्थ्यविरहो वन्ध्यासुतस्य कुतः प्रमाणात् सिद्धः? अवस्तुत्वादेवेति चेत्, नन्वेतदपि कुतः सिद्धम्? सर्वसामर्थ्यविरहादिति चेत्, सोऽयमितस्ततः केवलैर्वचनैः निर्धनाधमर्णिक इव साधून् भ्रामयन् परस्पराश्रयदोषमपि न पश्यति।

पुनरप्युक्तं—"न हि अप्रतीते देवदत्तादौ स किं गौरः कृष्णो वेति वैजात्यं विना प्रश्नः, तत्रापि यद्येकोऽप्रतीतपरामर्शविषय एवोत्तरं ददाति न गौर इति, अपरोऽपि किं न दद्यात्—न कृष्ण इति। न

चैवं सति काचिदर्थसिद्धिः, प्रमाणाभावविरोधयोरुभयत्रापि तुल्यत्वात्। ननु अप्रतीते व्यवहाराभाव इति युक्तं, कूर्मरोमादयस्तु प्रतीयन्ते एव, न ह्येते विकल्पा कंचिदर्थभेदमनुल्लिखन्त एवोत्पद्यन्ते। न च प्रमाणास्पदमेव, व्यवहारास्पदमिति, तन्न युक्तम्, तथा हि—शशविषाणमिति ज्ञानम् अन्यथाख्यातिर्वा स्यादसत्ख्यातिर्वा? न तावदाद्यस्ते रोचते, तथा सति हि किञ्चिदारोप्यं किञ्चिदारोपविषय इति स्यात्। तथा चारोपविषयस्तत्रैवास्ति, आरोपणीयस्त्वन्यत्रैवेति जितं नैयायिकैः। नापि द्वितीयः, कारणानुपपत्तेः। इन्द्रियस्य ज्ञानजनने विषयाधिपत्येनैव व्यापारात्। लिङ्गशब्दाभासयोरन्यथाख्यातिमात्रजनकत्वात्। अपहस्तितस्वार्थयोश्चासत्ख्यातिजनकत्वे शशविषाणादिशब्दात् कूर्मरोमादिविकल्पानामपि उत्पत्तिप्रसङ्गान्नियामकाभावात्। स हि नियामकः सङ्केतो वा स्यात् शब्दस्वाभाव्यं वा स्यात? आद्यस्तावत् सङ्केतविषयाप्रतीतेरेव पराहतः। तत एव तत्प्रतीतौ इतरेतराश्रयत्वम्। पदसङ्केतबलेनैव प्रतीतौ स्वार्थापरित्यागात्। तथा च—अनन्विताः पदार्था एव अन्विततया परिस्फुरन्ति—इति विपरीतख्यातिरेवानुवर्तते। स्वार्थपरित्यागे तु पुनरप्यनियमः, असामयिकार्थप्रत्यायनात्। शब्दस्वाभाव्यात्तु नियमे व्युत्पन्नवदव्युत्पन्नस्यापि तथाविधविकल्पोदयप्रसङ्गादिति।"

तात्पर्यटीकायां वाचस्पतिमिश्रेण अन्वयिहेतोः स्वरूपविवरणावसरे उक्तम्—"न च वचः स्वचरितविरुद्धं न चैतत् तत्त्वतो निरुपाख्ये हेतोर्व्यतिरेकं व्यासेधामो नाप्यन्वयं विदध्मः, नो खल्वयं [निरुपाख्यः] सकलप्रतिपत्त्यभाजनं क्वचिदप्युपयुज्यते, उपयोगे वा निरुपाख्यो न भवेत्। कस्तर्हि "न निरुपाख्ये हेतोर्व्यतिरेकः" इत्यस्य वचनस्यार्थः? अथ "निरुपाख्ये हेतोर्व्यतिरेकः" इत्यस्य भवद्भावितस्य कोऽर्थः? अहृदयवाचामहृदया एव प्रतिवाचो भवन्ति, यक्षानुरूपो बलिरिति हि लौकिकानामाभाणकः। न चात्यन्तादृष्टपूर्वाणां कल्पनाजालगोचरत्वमिति चोपपादितमन्यथाख्यातिनिरूपणावसरे।" [न्या०सू०, पृ०१४५]

एतत् तात्पर्यटीकावाक्यानि विवृण्वता उदयनाचार्येण तात्पर्यपरिशुद्धौ तदेवोक्तं यद्युक्तमात्मतत्त्वविवेके। आत्मतत्त्वविवेकवाक्यानि चास्माभिः प्रदर्शितान्येव।

नृसिंहाश्रमचरणैः इत एव तात्पर्यटीकाग्रन्थादाकृष्य भावप्रकाशिकाया-मभिहितम्—"अस्माकं तु असन्निषेधवचनमहृदयवाचामितिन्यायेनैव" इति। न्यायस्यायमर्थः—अहृदयवाचां प्रतिवाचोऽपि अहृदया एव; प्रतिवाचोऽहृदयत्वमपार्थकत्वोद्भावकत्वमित्यर्थः। अपार्थकवाक्यप्रयो-क्तारः अहृदयाः। अहृदयवाक्यानामपार्थकत्वमुद्भावयन्तः प्रतिवक्ता-रोऽपि अहृदया एव। अपार्थकवाक्यवक्तृप्रतिवक्त्रोर्द्वयोरेवाहृदयत्वं जाड्यमित्यर्थः। अत एव उक्तं तात्पर्यटीकायाम्—"तस्मादनुपाख्ये विपक्षे हेतोर्व्यतिरेकनिवृत्तौ वा व्यतिरेके वा सहृदयानां मूकतैवो-चिता। न चैतावता हेतोरगमकत्वमिति। अत एव दृश्यत्वहेतोर्निरुपाख्ये दुरुद्धरव्यभिचारोद्धरणाय पूर्वपक्षिप्रदर्शितव्यभिचारशङ्कायाः समाधानाय च भामती-कृता मूकतैवावलम्बिता। उक्तञ्च तेनैव—सहृदयानां मूकतैवोचितेति।

आचार्यः पुनरहृदयवाचामितिन्यायेन बौद्धमाध्वादिसम्मतासत्ख्यात्युपनीते निरुपाख्ये शशविषाणादौ दृश्यत्वहेतोर्व्यभिचारोद्धरणाय प्रयतमानः आह—शब्दाजन्यवृत्तिविषयत्वं वा दृश्यत्वमिति। वयं तु ब्रूमः [पृ. २४] पूर्वोक्ताया अरुचेरेवाचार्यस्य वस्तुतस्तु कल्पप्रदर्शनमिति। अन्यथा—असत्-ख्यातिभङ्गाय आचार्यस्य प्रयासो निष्फलः स्वक्रियाविरोधश्च स्यात्; असत्-ख्यातिमभ्युपगम्य असत्ख्यात्युपनीते शशविषाणादौ दृश्यत्वहेतोर्व्यभिचारमाश-ङ्क्य तत्समाधानाय प्रयतमानो महता प्रयत्नेन असत्ख्यातिञ्च निरस्यन् "निन्दामि च पिबामि चे"ति न्यायेन कथं न स्ववचनविरुद्धाभिधायी स्यात्? यदपि प्राचीननैया-यिकानां तात्पर्यटीकाकृतामन्यथाख्यातौ सदुपरागेनासतः संसर्गस्य भानाङ्गीकार इति केचित् वटयक्षप्रसिद्धिन्यायेन उच्यते, तदपि असमीक्षिताभिधानम्। तात्पर्य-टीकायामाचार्यैरुक्तम्—नचात्यन्तादृष्टपूर्वाणां कल्पनाजालगोचरत्व-मिति। न्यायकणिकायामप्युक्तम्—न च संसर्गस्यात्यन्तासत्त्वं देशान्तरे संसर्गस्यापि सत्त्वादिति। तदेवं वाचस्पतेः स्वोक्तौ विद्यमानायामपि अन्यथा-

ख्यातौ वाचस्पतेः असत्संसर्गस्य भानाङ्गीकारः कथंकारं सङ्गच्छते ? इति सुधिय एव विदाङ्कुर्वन्तु । उक्तञ्च असत्ख्यातिभङ्गे मधुसूदनसरस्वतीश्रीचरणैः — "वस्तुतस्तु नैयायिकानामपि सत्संसर्गभाने एव निर्भरता" इति ! पातञ्जलसूत्रे प्रमाणविपर्ययव्यतिरिक्ताया विकल्पवृत्तेरभिधानेऽपि न विकल्पवृत्तेरसत्ख्यातिरूपता । उक्तञ्च तत्त्ववैशारद्याम्—"नन्वेवं विकल्पोऽपि तद्रूपाप्रतिष्ठानाद् विचारतो विपर्ययः प्रसज्येत इत्यत आह—मिथ्याज्ञानमिति । अनेन हि सर्वजनानुभवसिद्धो बाध उक्तः । स चास्ति विपर्यये, न तु विकल्पे; तेन व्यवहारात् । पण्डितरूपाणामेव तु विचारयतां तत्र [ विकल्पे ] बाधबुद्धेरिति । [ १·८ पातञ्जलसूत्रम् ] सर्वजनीनानुभवसिद्धस्य बाधस्य सत्त्वासत्त्वाभ्यामेव विपर्ययविकल्पयोर्भेदः, विकल्पेऽपि बाधो नास्तीति न पण्डितरूपाणामेव विचारयतां बाधबुद्धेः । तेन च विकल्पवृत्त्या व्यवहारो जायते सहसा बाधाप्रतिसन्धानात् । अत एव व्यवहारजनकत्वाजनकत्वाभ्यां विपर्ययविकल्पयोर्भेदः पातञ्जले प्रदर्शितः । न तु विपर्ययः अन्यथाख्यातिः, विकल्पोऽसत्ख्यातिरिति सूत्रभाष्यकाराणामाशयः । उभयोरन्यथाख्यातित्वेऽपि प्रदर्शितवैलक्षण्यमभिप्रेत्य विपर्ययविकल्पयोर्भेद उक्तः पातञ्जले ।

तदेवं बौद्धमाध्वभिन्नानामसत्ख्यातेरनभ्युपगमादसतो ज्ञानविषयत्वं व्यवहारविषयत्वं वा अन्येषां मते न सम्भवति । अद्वैतसिद्धान्ते असत्ख्यातेरनभ्युपगमेन असतो वृत्तिविषयत्वस्य व्यवहारविषयत्वस्य च सर्वथा असम्भवेऽपि अतिकारुणिकतया आचार्यो बौद्धैरप्रेक्षितामसत्ख्यातिमभ्युपगच्छतो माध्वाननुग्रहीतुं बालोपलालनन्यायेन तद्दुराग्रहमनुवर्तमानः असतो वृत्तिविषयत्वं व्यवहारविषयत्वं चाभ्युपगम्यापि अद्वैतसिद्धान्तस्य निष्कलङ्कतां पूर्वपक्षिणो ग्राहयितुं शब्दाजन्यवृत्तिविषयत्वं वा स्वप्रकारकवृत्तिविषयत्वं वा दृश्यत्वमाह । वस्तुतः अद्वैतवादिमते असतो वृत्तिविषयत्वादिकं सर्वथा असम्भवीति भावप्रकाशिकाकृतां नृसिंहाश्रमचरणनामुक्तिप्रदर्शनेन प्रागेवास्माभिः स्पष्टीकृतम् ।

शब्दाजन्यवृत्तिविषयत्वम् इति । वृत्तिविषयत्वमात्रस्य दृश्यत्वे "शशविषाणं तुच्छम्", "वन्ध्यापुत्रो न वक्ता" इत्यादिशब्दजन्यवृत्तिविषये मिथ्या-

त्वाभाववति तुच्छे हेतोर्व्यभिचारः स्यात्, तन्निवारणाय शब्दाजन्येति वृत्तौ विशेषणमुपात्तम्। शब्दाजन्या या वृत्तिस्तद्विषयत्वमेव दृश्यत्वं मिथ्यात्वानुमापकमिति भावः। शब्दाजन्येत्यत्र शब्दपदं वाक्यवाक्याभाससाधारणं ग्राह्यम्। अत एव वाक्येत्यनुक्त्वा शब्दाभाससाधारणं शब्दपदमुपात्तम्। वस्तुतस्तु शुद्धेऽपि ब्रह्मणि अज्ञाननाशाय वेदान्तवाक्यजन्यवृत्तिविषयत्वमावश्यकम् शुद्धस्य ब्रह्मणो वेदान्तवाक्यजन्यवृत्तिविषयत्वे अज्ञानविषयत्वे वा न शुद्धत्वहानिः, "केवलो निर्गुणश्च" इत्यादिश्रुत्या ब्रह्मणि पारमार्थिकः कश्चन धर्मो नास्तीत्येव बोधनात् कल्पितधर्मेण ब्रह्मणो निर्गुणत्वाव्याकोपात् ब्रह्मणि वृत्तिविषयत्वादिधर्माणामपरमार्थत्वात्। न चोपहितमेव ब्रह्मवेदान्तवाक्यजन्यवृत्तेर्विषयः, उपहितगोचरवृत्त्यैव उपहितब्रह्मविषयकाज्ञानस्य निवृत्तिरपि सम्भवतीति वाच्यं, शुद्धस्य वेदान्तवाक्यजन्यवृत्तिविषयत्वानभ्युपगमेऽपि शुद्धेऽपि कल्पितधर्मसम्बन्धस्यावश्यं वाच्यत्वेन निर्गुणश्रुतेः संकोचेन पारमार्थिकधर्मस्य निषेधे श्रुतेस्तात्पर्यं कल्पनीयमेव। तथा हि—वेदान्तवाक्यजन्यवृत्त्युपहितस्याज्ञानोपहितस्य च ब्रह्मण उपहितत्वेन मिथ्यात्वात् मिथ्यावस्तुनोऽधिष्ठानसापेक्षत्वेन शुद्धमेव ब्रह्म उपहितस्याधिष्ठानमिति वक्तव्यम्, कल्पितस्य सत्याधिष्ठानाभावे शून्यवादापत्तिः स्यात्। उपहितस्य कल्पितत्वाभावे तस्यापि सत्यत्वापत्त्या द्वैतापत्तिः स्यात्। अतः शुद्धे ब्रह्मण्यनुपहिततादात्म्यरूपमिथ्याधर्मोपगमेऽपि निर्धर्मकत्वबोधकश्रुतेर्बाधो न भवतीत्येवाङ्गीकरणीयम्। निर्धर्मकत्वप्रतिपादिका श्रुतिः पारमार्थिकधर्मनिषेधपरा—इत्येव वक्तव्यमन्यथा उक्तश्रुतेर्बाधः स्यात्। यतः कल्पितधर्मसम्बन्धेऽपि ब्रह्मणः शुद्धत्वहानिर्न भवति, अतः शुद्धब्रह्मगोचराज्ञाननिवृत्तये वेदान्तवाक्यजन्यवृत्तिविषयत्वमपि शुद्धे सम्भवति। "केवलो निर्गुणश्च" इत्यादिश्रुतेः शुद्धे ब्रह्मणि कल्पितधर्मनिषेधे तात्पर्याभावात्।

एवं च शुद्धे ब्रह्मणि मिथ्यात्वाभाववति शब्दाजन्यवृत्तिविषयत्वरूपदृश्यत्वाभावान्न दृश्यत्वहेतोः शुद्धे ब्रह्मणि व्यभिचारः; न वा शब्दाजन्यवृत्त्यविषयेऽसति शशविषाणादौ शब्दाजन्यवृत्तिविषयत्वरूपहेतोर्व्यभिचारः। अलीकस्य शशविषाणादेः शुद्धस्य च ब्रह्मणः शब्दाजन्यवृत्तिविषयत्वानभ्युपगमात्। "शशविषाणं तुच्छम्" इत्यादिशब्दजन्यवृत्तिविषयत्वमेव तुच्छे वर्तते, न तु अनु-

यद्वा सप्रकारकवृत्तिविषयत्वमेव दृश्यत्वम्, प्रकारश्च सोपाख्यः कश्चिद्धर्मः; तेन निष्प्रकारकज्ञानविषयीभूते शुद्धे निरुपाख्यधर्मप्रकारकज्ञानविषयीभूते तुच्छे च न व्यभिचारः। अभावत्वस्यापि सोपाख्यत्वादभावत्वप्रकारकज्ञानविषयीभूते अभावे न भागासिद्धिः ॥२३॥

---

मित्यादिवृत्तिविषयत्वम्। एवं तत्त्वमस्यादिवेदान्तवाक्यजन्याया वृत्तेरेव विषयत्वं शुद्धे ब्रह्मणि वर्तते, नानुमित्यादिवृत्तेः।

यच्च चन्द्रिकायां "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति पातञ्जलसूत्रात् शशविषाणादिशब्दैस्तुच्छव्यवहाराच्च इत्युक्तम्, तदपि पूर्वपक्षिमतानुवर्तनेन तण्डुपलालनमात्रम्, पातञ्जलमते असत्ख्यातेरनङ्गीकारात् ॥२२॥

२३—लाघवात् पक्षान्तरमाह आचार्यः–यद्वा सप्रकारकवृत्तिविषयत्वमेव दृश्यत्वमिति। वृत्तिविषयत्वमेव दृश्यत्वम्, तच्च शब्दाजन्यवृत्तिविषयत्वमित्युक्तं प्राक्। शब्दाजन्यत्वस्य वृत्तेर्विशेषणत्वमनुक्त्वा लाघवात् स्वप्रकारकत्वमेव वृत्तेर्विशेषणमुपादाय यद्वेति निर्वचनान्तरं प्रदर्शितमाचार्येण। यच्च चन्द्रिकायां निर्वचनान्तरप्रदर्शने बीजमुक्तं—"ननु उक्तशब्देनैव तुच्छं वृत्तिविषयः व्यवह्रीयमाणत्वात्", "तुच्छं न क्षणिकम् अकारणत्वात्" इत्याद्यनुमानेनापि तुच्छं ज्ञाप्यते, तत्राह यद्वेति। तदपि माध्वोपच्छन्दनमात्रमेव। सिद्धान्तेऽसत्ख्यातेरनङ्गीकारात्। असत्ख्यातिमनभ्युपगम्य तुच्छे व्यवहारस्य सर्वथा असम्भवात्। तुच्छं व्यवहरन्तो बौद्धा माध्वाश्च कारणविकलामसत्ख्यातिमभ्युपगच्छन्तः कदाचिदेवं वदेयुरपि, अनभ्युपगच्छन्नसत्ख्यातिं यदेवं वदेत्, तत् पूर्वपक्षिजनतोषणं विना न हेत्वन्तरं भवितुमर्हति। को हि नाम "वन्ध्यापुत्रो न वक्ता अचेतनत्वात्, काष्ठादिवत्"—इत्याद्यनुमानं प्रदर्शयेत्। पराक्रान्तश्चात्र प्रामाणिकैरित्युपरम्यते। अत एव सिद्धिव्याख्याकारा विषयव्याप्त्यर्थं पक्षान्तरमाह यद्वेति पातनिकामाहुः ! यच्च चन्द्रिकाकृता उक्तम्—"तुच्छं न क्षणिकमकारणत्वादि"ति, तत्रापि प्रष्टव्यम्—तुच्छस्याकारणत्वमेव कुतः सिद्धम् ? क्रमयौगपद्यविरहादिति चेन्न, तद्विरहसिद्धावपि प्रमाणानुयोगस्यानुवृत्तेः। वन्ध्यापुत्रादितुच्छस्य पुत्रत्वे परामृश्यमाने एवमेव तुच्छस्य शशशृङ्गादेः शृङ्गत्वे च परामृश्यमाने तदविनाभूतवक्तृत्वविदारकत्वादिसकलधर्मप्रसक्तौ कुतः क्रमयौगपद्यविरह-

उपाख्या चास्तीति धीविषयत्वादीत्यन्यत् ॥२४॥

साधनस्यावकाशः ? कुतस्तरां च अकारणत्वसाधनस्यावकाशः ? कुतस्तमाञ्च अवक्तृत्वविदारकत्वादिसाधनानाम् ? तस्मात् प्रमाणमेव सीमा व्यवहारानियमस्य । न तावत् क्रमयौगपद्ययोरभावः शशविषाणादितुच्छे प्रमाणगोचरः, वृक्षरहित-भूभृत्कटकवत् क्रमयौगपद्यरहितस्य शशविषाणादितुच्छस्य प्रमाणागोचरत्वात् ।

सप्रकारकेति । किञ्चिद्धर्मनिष्ठप्रकारताकवृत्तिविषयत्वमेव दृश्यत्वमित्यर्थः । वेदान्तवाक्यजन्यनिष्प्रकारकवृत्तिविषये शुद्धे ब्रह्मणि वृत्तिविषयत्वरूपदृश्यत्वस्य हेतोर्व्यभिचारवारणाय सप्रकारकेति वृत्तेर्विशेषणमुपात्तम् । "शशविषाणं तुच्छम्" इत्यादिशब्दजन्यवृत्तेरपि तुच्छत्वप्रकारकतया शब्दजन्यवृत्तिविषये तुच्छे व्यभिचारवारणायाह आचार्यः—**प्रकारश्च सोपाख्यः कश्चिद्धर्मः** इति । सोपाख्यधर्मनिष्ठप्रकारताकवृत्तिविषयत्वं दृश्यत्वम् । सप्रकारकवृत्तिविषयत्वस्य सोपाख्यधर्मनिष्ठप्रकारकताकवृत्तिविषयत्वरूपार्थग्रहणेन निष्प्रकारकज्ञानविषयी-भूते शुद्धे निरुपाख्यधर्मप्रकारकज्ञानविषयीभूते तुच्छे च न व्यभि-चारः इति ब्रह्मोपाधिमात्रस्य मूलाविद्याप्रयुक्तत्वेन मूलाविद्यानोपहितब्रह्मविष-यिणी, किन्तु शुद्धब्रह्मविषयिण्येव । मूलाविद्याया निवर्तिका मूलाविद्यासमान-विषयिणी या वेदान्तवाक्यजन्या शुद्धब्रह्मविषयिणी वृत्तिः, स निष्प्रकारिकैव भवितुमर्हति । समानविषयत्वेनैव ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभावात् । अतः निष्प्रकारकवृत्तिविषयीभूते शुद्धे ब्रह्मणि सोपाख्यधर्मनिष्ठप्रकारताकवृत्तिविषयत्व-रूपदृश्यत्वं नास्तीति न हेतोर्व्यभिचारः । "शशविषाणं तुच्छम्" इत्यादिशब्द-जन्यवृत्तेरपि तुच्छत्वप्रकारकतया सप्रकारकवृत्तिविषयत्वं मिथ्यात्वाभाववति तुच्छे अस्तीति दृश्यत्वहेतोर्व्यभिचारः स्यादत आह आचार्यः—**प्रकारश्च सोपाख्यः कश्चिद्धर्म** इति । उपाख्यया सह वर्तते इति सोपाख्यः; उपाख्यासमानाधिकरण इत्यर्थः । उपाख्यायते अनेनेति व्युत्पत्त्या उपाख्यावाचकः शब्दः [तद्विषयकं] ज्ञानं वा; तथा च शब्दशक्यत्वं ज्ञानविषयत्वं वा लभ्यते ॥२३॥

२४—प्रदर्शितां व्युत्पत्तिमुपादाय आह आचार्यः—**उपाख्या चास्तीति धीविषयत्वादि** इति । सोपाख्यः कश्चिद्धर्मः प्रकार इत्युक्त्वा अस्तीति धीविषयत्वसमानाधिकरणः कश्चिद्धर्मः प्रकारशब्देन गृह्यते । तुच्छेऽ-

स्तीति धीविषत्वसहितधर्मप्रकारकज्ञानविषयत्वाभावान्न तुच्छे हेतोर्व्यभिचारः। तुच्छस्य शशविषाणादेः शब्दजन्यविकल्पवृत्तिविषयत्वेऽपि "शशविषाणमस्ती"ति धीविषयत्वाभावात् सोपाख्यधर्मप्रकारकज्ञानविषयत्वं तुच्छे नास्तीति न व्यभिचारः। तुच्छस्य अस्तीति ज्ञानविषयत्वरहिततुच्छत्वादिप्रकारकज्ञानविषयत्वेऽपि अस्ति इति प्रतीतिविषयत्वसहितधर्मप्रकारज्ञानविषयत्वाभावात्। अस्तीति ज्ञानविषत्वसहितः धर्मः सोपाख्यो धर्मः, तद्रहितो धर्मः निरुपाख्यो धर्मः तुच्छत्वादेरस्तीति ज्ञानविषयत्वसहितत्वाभावात् निरुपाख्यधर्मत्वम्।

नन्वेवमभावे भागासिद्धिः, अभावस्याभावत्वप्रकारकज्ञानविषयत्वेऽपि सोपाख्यधर्मप्रकारकज्ञानविषयत्वाभावात् पक्षैकदेशेऽभावे हेतोरविद्यमानत्वादिति चेन्न, अभावत्वस्यापि सोपाख्यत्वादभावस्यापि सोपाख्यधर्माभावत्वप्रकारकज्ञानविषयत्वेन न हेतोर्भागासिद्धता, यथा द्रव्यादिषु द्रव्यत्वादिकमस्ति—इति प्रतीयते तथा अभावेऽभावत्वमस्तीति प्रत्ययात्। घटाभावे घटाभावाभावे च उभयत्राभावत्वप्रतीतेरभावत्वस्य भावाभावसाधारणत्वात् तस्य सोपाख्यधर्मत्वमङ्गीकरणीयमेव। उपाख्यानिरूपणावसरे उक्तमाचार्येण—उपाख्या चास्तीति धीविषयत्वादि इति। अत्रादिपदग्रहणं माध्वमते तुच्छे दृश्यत्वहेतोर्व्यभिचारवारणार्थम्। माध्वाः तुच्छेऽपि अस्तीति धीविषयत्वमङ्गीकुर्वन्ति; अतस्तन्मते तुच्छस्यापि अस्तीतिप्रतीतिविषयत्वसहिततुच्छत्वधर्मप्रकारकज्ञानविषयत्वात् हेतोर्व्यभिचारः स्यात्। अतस्तद्वारणार्थमाचार्येणादिपदमुपात्तम्। तस्य च सत्तादात्म्यसत्तादात्म्यत्व[ा]न्यतरवत्त्वमर्थः। अविद्यादिनिखिलप्रपञ्चस्य सदात्मके ब्रह्मणि तादात्म्येनाध्यासादविद्यादिनिखिलप्रपञ्चे सत्तादात्म्यमस्ति। सत्तादात्म्यस्यापि मिथ्यात्वात् तस्य मिथ्यात्वानुमाने पक्षान्तर्भावात् तत्रापि सत्तादात्म्यसहितधर्मप्रकारकधीविषत्वस्य हेतोरङ्गीकर्तव्यत्वादनङ्गीकरणे हेतोर्भागासिद्धिप्रसङ्गात् सत्तादात्म्ये सत्तादात्म्यान्तरोपगमेऽनवस्थापाताच्च सत्तादात्म्ये दृश्यत्वहेतोर्भागासिद्धिवारणाय सत्तादात्म्यत्वनिवेशः। तथा च—सत्तादात्म्यसत्तादात्म्यत्वान्यतरवत्त्वमविद्याकाशादिसर्वप्रपञ्चे सत्तादात्म्ये चास्ति इति न हेतोर्भागासिद्धिशङ्कापीति। नापि तुच्छे व्यभिचारः, सत्तादात्म्यसत्तादात्म्यत्वान्यतरवत्त्वाभावात्। तुच्छस्य सद्रूपे ब्रह्मणि तादात्म्याध्यासाभावेन सत्तादात्म्याभावात्। सर्वदेशकालनिष्ठात्यन्ताभावप्रतियोगित्वादेर्माध्वैरङ्गीकृतत्वेऽपि तस्य

एतेन वृत्तिव्याप्यफलव्याप्ययोः साधारणं व्यवहारप्रयोजकविषय-

तुच्छत्वमेव, तुच्छनिष्ठप्रतियोगित्वादीनां तुच्छाधिकरणस्वरूपत्वात्। तुच्छस्यातुच्छ-धर्मासम्भवात्।

धीविषयत्वादीत्यन्यदिति। अत्र अन्यदितिपदेन सप्रकारकधीविषयत्व-रूपदृश्यत्वनिरूपणप्रसङ्गे उपाख्यापदलभ्यार्थनिरूपणमन्यत्—भिन्नं—प्रक्रान्त-भिन्नमिति दर्शयति। उपाख्यापदनिर्वचनस्य द्वितीयमिथ्यात्वलक्षणनिर्वचनावसरे पूर्वपक्षग्रन्थे कृतत्वात् ख्यातिबाधान्यथानुपपत्तिप्रकरणे करिष्यमाणत्वाच्च अत्र तन्निर्वचनमन्यदित्युक्त्वा उपेक्षितमाचार्येण॥२४॥

इति वृत्तिव्याप्यत्वरूपदृश्यत्वनिरूपणं समाप्तम्॥

२५—दृश्यत्वविकल्पनावसरे किमिदं दृश्यत्वं वृत्तिव्याप्यत्वं वा फलव्याप्यत्वं वा साधारणं वेत्यादि षट् पक्षान् प्रदर्श्य फलव्याप्यत्वव्यतिरिक्तस्य सर्वस्यापि पक्षस्य क्षोदक्षमत्वादित्युक्तम्। अतः फलव्याप्यत्वरूपं द्वितीयं पक्षं परित्यज्य तृतीयपक्षस्योपपादनायाह आचार्यः—एतेनेति। एतेन प्रदर्शितरीत्या वृत्तिव्याप्य-त्वस्य हेतोः शुद्धे ब्रह्मणि तुच्छे च व्यभिचाराभावेनेत्यर्थः। वृत्तिव्याप्यत्वफलव्या-प्यत्वयोः साधारणम्—अनुगतं यत् व्यवहारप्रयोजकविषयत्वरूपं दृश्यत्वमपि मिथ्यात्वसाधको हेतुः। वृत्तिव्याप्यत्वफलव्याप्यत्वयोरनुगतं ज्ञानीयविषयत्वमित्यु-क्त्यैव सामञ्जस्ये उभयानुगतव्यवहारप्रयोजकविषयत्वोक्तरयमेवाभिप्रायः—व्यवहार-प्रयोजकविषयत्वं कुत्रचित् चित्तादात्म्यं कुत्रचित् वृत्तेराकाराख्यं विषयत्वम्। चित्तादात्म्ये वृत्तेराकाराख्यविषयत्वे चोभयत्रैकस्य ज्ञानीयविषयतात्वस्याभावात् चिति वृत्तौ चानुगतस्यैकस्य ज्ञानत्वस्य निरूपणासम्भवात् ज्ञानीयविषयत्वं परित्यज्य व्यवहारप्रयोजकविषयत्वमुक्तम्। तच्च चित्तादात्म्यवृत्तिविषयत्वयोरन्यतरत् बोध्यम्।

ब्रह्मणि तुच्छे चेति। यदि ब्रह्मणि तुच्छे च वृत्तिविषयत्वरूपविशेषस्य सत्त्वं स्यात्, तर्हि वृत्तिव्याप्यत्वफलव्याप्यत्वसाधारणरूपस्यापि विषयत्वस्य सत्त्वा-द्व्यभिचारः स्यात्। स च न सम्भवति, वृत्तौ शब्दाजन्यत्वरूपविशेषणोपादानस्य सप्रकारकत्वरूपविशेषणोपादानस्य च व्यभिचारपरिहारोपायस्य प्रागेवोक्तत्वात् ब्रह्मणि वृत्तिविषयत्वसत्त्वेऽपि शब्दाजन्यवृत्तिविषयत्वं नास्ति, एवमेव सप्रकारकवृत्तिविषयत्वं नास्तीति न ब्रह्मणि व्यभिचारः। एवमेव तुच्छेऽपि व्यभि-चाराभावो बोध्यः। तुच्छे शब्दजन्यविकल्पवृत्तिविषयत्वसत्त्वेऽपि शब्दाजन्य-

त्वरूपं दृश्यत्वमपि हेतुः; ब्रह्मणि तुच्छे च व्यभिचारपरिहारोपायस्योक्तत्वात् ॥२५॥

यद्वा दृश्यत्वं चिद्विषयत्वम्, तच्च यथा कथञ्चित् चित्सम्बन्धित्वरूपं हेतुः, तच्च न चैतन्ये; अभेदे भेदनान्तरीयकस्य सम्बन्धस्याभावात्, अतो न

---

वृत्तिविषयत्वाभावात् सप्रकारकवृत्तिविषयत्वाभावाच्च न व्यभिचारः ॥२५॥

इति साधारणदृश्यत्वनिरूपणं समाप्तम् ।

२६—यद्वा दृश्यत्वं चिद्विषयत्वमिति । अतीतानागतयोः साक्षात् चिद्विषयत्वाभावात् घटादीनाञ्च वृत्तिद्वारा चिद्विषयत्वेऽपि साक्षात् चिद्विषयत्वाभावात् चिद्विषयत्वस्य हेतोर्भागासिद्धिः स्यात्, तद्वारणायाह—तच्च यथाकथञ्चित् चित्सम्बन्धित्वरूपमिति । यथाकथञ्चित् चित्सम्बन्धित्वरूपं चिद्विषयत्वं हेतुः । साक्षात् परम्परासाधारणं चित्सम्बन्धित्वं दृश्यत्वमित्यर्थः । अतीतादेरपि परोक्षवृत्त्या कथञ्चित् चित्सम्बन्धित्वरूपं चिद्विषयत्वमस्ति, अतीतादेर्वर्तमानतादशायां स्वाकारवृत्तिप्रतिफलितचिद्विषयत्वमस्ति, नित्यातीन्द्रियेष्वपि अनुमित्यादिपरोक्षवृत्त्या कथञ्चित् चिद्विषयत्वमस्तीति न तेषु हेतोर्भागासिद्धिः । साक्षिभास्येषु साक्षात् चिद्विषयत्वसत्त्वात् न भागासिद्धिः । अनात्मवस्तुमात्रस्य ज्ञाततयाज्ञाततया वा साक्षिचैतन्यस्य विषयत्वान्न चिद्विषयत्वस्य हेतोरसिद्धिसम्भावनाऽपीति । तुच्छस्यापि चैतन्येऽध्यासाभ्युपगमेऽध्यस्तमात्रस्य मिथ्यात्वात् मिथ्यावस्तुन एव तुच्छेति नामान्तरं स्यात् । मिथ्यावस्तुनि दृश्यत्वस्य हेतोर्विद्यमानत्वान्नास्य हेतोर्व्यभिचारः । शुद्धे ब्रह्मणि च चिद्रूपे न चिद्विषयत्वरूपं दृश्यत्वमित्याहाचार्यः— तच्च न चैतन्ये इति । तच्च—चिद्विषयरूपदृश्यत्वं च न चैतन्ये न शुद्धचिति । कुतः शुद्धचिति चिद्विषयत्वं नास्ति ? इत्याहाचार्यः—अभेदभेदनान्तरीयकस्य सम्बन्धस्याभावादिति । भेदनान्तरीयकस्य भेदव्याप्यस्येत्यर्थः । नान्तरीयकशब्दार्थनिरूपणे मुह्यन्ति बहवः, अतस्तत् प्रदर्श्यते—उक्तञ्च न्यायवार्तिके उद्योतकराचार्यैः—"अपरे तु ब्रूवते नान्तरीयकार्थदर्शनं तद्विदोऽनुमानमिति । अस्यार्थः—योऽर्थो यमर्थमन्तरेण न भवति, स नान्तरीयकः, नान्तरीयकश्चासौ अर्थश्चेति नान्तरीयकार्थः, तस्य दर्शनं तद्विदोऽनुमानम्, यस्तं वेद तन्नान्तरीयकोऽयमिति" । वार्तिकवाक्यस्यायमभि-

व्यभिचारः। तुच्छे च व्यभिचारः परिहरणीयः॥२६॥

यद्वा स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिरूपं दृश्यत्वं हेतुः;

---

प्रायः—योऽर्थो धूमादिरूपः यमर्थमन्तरेण वह्न्यादिरूपमर्थमन्तरेण न भवति, स धूमादिरूपोऽर्थः वह्न्यादिरूपार्थस्य नान्तरीयकः व्याप्य इत्यर्थः। अन्तरीयकोऽर्थो व्यभिचारी। योऽर्थो यमर्थमन्तरेण भवति, स तस्यान्तरीयकः व्यभिचारीत्यर्थः। न अन्तरीयको नान्तरीयकः अव्यभिचारीत्यर्थः। वार्तिककृद्भिः दिङ्नागाचार्यस्य वाक्यमिदमुद्धृतं व्याख्यातञ्च। सम्बन्धस्य व्यापको भेदः, सम्बन्धो भेदेन व्याप्तः। अभेदेन भेदे निरस्ते भेदव्याप्तः सम्बन्धोऽपि निरस्तो भवति। अतः चित्सम्बन्धित्वरूपं दृश्यत्वं शुद्धे ब्रह्मणि नास्तीति न हेतोर्व्यभिचारः। सिद्धान्ते भेदाभेदरूपस्य तादात्म्यस्य स्वीकारात् मूलस्थाभेदपदस्यात्यन्ताभेदोऽर्थः। अत्यन्ताभेदे भेदव्याप्यः सम्बन्धो न भवितुमर्हति। अत्यन्ताभेदे तादात्म्यसम्बन्धस्यास्वीकारादिति भावः।

तुच्छे च व्यभिचारः परिहरणीय इति। तुच्छे हेतोर्व्यभिचारपरिहाराय पूर्वोक्तं विशेषणं स्मारयितुमाहाचार्यः—"परिहरणीय" इति। चितः स्वाश्रितविकल्पवृत्तिविषयत्वरूपस्य परम्परासम्बन्धस्य तुच्छेऽपि सत्त्वाद्व्यभिचारः स्यादित्याशङ्क्याह—"तुच्छे चे"ति। अस्तित्वप्रकारकधीविषयत्वसमानाधिकरणत्वं दृश्यत्वहेतौ विशेषणं देयमिति प्रागेवोक्तम्। तथा च—तुच्छे चिदाश्रितविकल्पवृत्तिविषयत्वसत्त्वेऽपि अस्तित्वप्रकारकधीविषयत्वस्याभावान्न पूर्वोक्तविशेषणविशिष्टस्य दृश्यत्वस्य हेतोर्व्यभिचारः॥२६॥

२७—यद्वा स्वव्यवहारे स्वातिरिक्तसम्विदपेक्षानियतिरूपं दृश्यत्वं हेतुरिति। दृश्यत्वनिर्वचने विकल्पितेषु पक्षेषु अयं पञ्चमः पक्षोऽपि असिद्धिव्यभिचारादिदोषरहितत्वान्निर्दोष इत्याह आचार्यः—दृश्यत्वं हेतुरिति। हेतुः मिथ्यात्वस्यानुमापकः। हेतुशरीरप्रविष्टसम्विच्छब्देन चैतन्यमात्रमभिप्रेतम् तच्च वृत्तेरावरणभङ्गार्थत्वपक्षे विषयाभिव्यक्तं चैतन्यं क्रियावच्छेदेन वृत्त्या भग्नावरणं चैतन्यम्, वृत्तेः चिदुपरागार्थत्वपक्षे विषयाभिव्यक्तं चैतन्यं विषयगतवृत्तिप्रतिबिम्बितं चैतन्यं एवमेव. वृत्त्यभिव्यक्तचैतन्यमपि सम्वित्पदग्राह्यम्। वृत्त्यभिव्यक्त

संविच्छब्देन विषयाभिव्यक्तं वा वृत्त्यभिव्यक्तं वा [शुद्धं वा] चैतन्यमात्रमभिप्रेतम्, तथा च घटादौ नित्यातीन्द्रिये साक्षिभास्ये च

---

चैतन्यश्चान्तःकारणावच्छेदेन भग्नावरणं चैतन्यमन्तःकरणावच्छेदेन वृत्तिप्रतिबिम्बितं चैतन्यं वा। विषयाभिव्यक्तं चैतन्यं विषयस्यापरोक्षव्यवहारेऽपेक्षितम्। वृत्त्यभिव्यक्तं चैतन्यमस्तीत्यादिरूपेण परोक्षव्यवहारेऽपेक्षितम्। विषयाभिव्यक्तत्ववृत्त्यभिव्यक्तत्वाद्यविशेषितचैतन्यं चैतन्यमात्रमित्यस्यार्थः। तथा च—विशेषिताऽविशेषिता वा चिदत्रसम्वित्शब्दप्रतिपाद्या। विषयस्यापरोक्षव्यवहारे यादृशी सम्विदपेक्षिता, परोक्षव्यवहारे पुनरन्यादृशी। प्रमाणनिरपेक्षसाक्षिभास्ये वस्तुनि अपरोक्षव्यवहारे पुनरतादृशी सम्विदपेक्षिता। एतदभिप्रेत्यैव मूले सम्विच्छब्देन चैतन्यमात्रमभिप्रेतमित्युक्तम्। विशेषिताविशेषिता वा चित् सम्वित्पदग्राह्येति भावः तथा च—घटादाविति। घटादीनां प्रमाणसापेक्षापरोक्षव्यवहारे विषयाभिव्यक्तं चैतन्यमपेक्षितम्, नित्यातीन्द्रियाणां धर्माधर्मादीनां प्रमाणमपेक्ष्यास्तीत्यादिरूपेण परोक्षव्यवहारे वृत्त्यभिव्यक्तं चैतन्यमपेक्षितम् नित्यातीन्द्रियेत्युपलक्षणम्; एवमेवेन्द्रिययोग्यानामपि वह्न्यादीनामनुमानादिप्रमाणजन्यपरोक्षव्यवहारेऽपि वृत्त्यभिव्यक्तं चैतन्यमेवापेक्षितम्। साक्षिभास्ये चेत्यस्य प्रमाणनैरपेक्ष्येण साक्षिभास्ये चाविद्यासुखदुःखशुक्तिरजतादौ। सर्वोऽपि व्यवहारः अपरोक्षः परोक्षो वा सर्वोऽपि व्यवहारः व्यवहर्तव्यातिरिक्तसम्वित्सापेक्षः। चिद्व्यतिरिक्तस्य सर्वस्यापि वस्तुनः सर्वेषु व्यवहारेषु व्यवहर्तव्यातिरिक्ता सम्विदपेक्षितेति भावः। अतो मिथ्यात्वानुमाने पक्षकोटिप्रविष्टेषु घटादिषु नित्यातीन्द्रियेषु साक्षिभास्येषु चास्य दृश्यत्वहेतोर्विद्यमानत्वात् हेतोर्नासिद्धिः न स्वरूपासिद्धिरित्यर्थः। "स्वव्यवहारे" इत्यत्र व्यवहारपदस्यार्थमाह—व्यवहारस्फुरणाभिवदनादिसाधारण इति। अध्यासलक्षणपदकृत्यप्रदर्शनावसरे प्रकाशात्मश्रीचरणैरुक्तम्—"व्यवहारः अभिज्ञाभिवदनमुपादानमर्थक्रियेति चतुर्विधः" [पृ. १०] इति व्यवहारपदस्य लोके हानोपादानयोः प्रसिद्धत्वादेतच्छास्त्रेऽपि तस्मिन्नेवार्थे व्यवहारपदं प्रयुक्तमिति भ्रान्तिमपाकुर्वन्नाह विवरणकारः—व्यवहारश्चतुर्विध इति। सिद्धिग्रन्थे व्यवहारश्च स्फुरणाभिवदनादिसाधारण इत्युक्तमाचार्येण विवरणग्रन्थमनुसृत्यैव। विवरणे यदभिज्ञापदेनोक्तं तदेवात्र स्फुरणपदेनाभिहितं। आदिपदे-

सर्वोऽपि व्यवहारः स्वातिरिक्तसंवित्सापेक्ष इति नासिद्धिः ।

व्यवहारश्च स्फुरणाभिवदनादिसाधारणः तत्र ब्रह्मणः स्फुरणरूपे

---

नोपादानार्थक्रिययोर्ग्रहणम् ।

ब्रह्मणि हेतोर्व्यभिचारमाशङ्क्य निरस्यति—तत्र ब्रह्मणः स्फुरणरूपे इति । ब्रह्मणः पूर्णानन्दरूपत्वात् पूर्णानन्दांशस्य चाज्ञानावृतत्वात् तेन रूपेण व्यवहारे वेदान्तवाक्यजन्याया अज्ञाननिवर्त्तकवृत्तेरपेक्षितत्वात् तत् परित्यज्य ब्रह्मणः स्फुरणरूपे इत्युक्तम् । ब्रह्मणः स्फुरणरूपो व्यवहारो नित्यसिद्धः, न तु ब्रह्मणः पूर्णानन्दरूपो व्यवहारः नित्यसिद्धः, तादृशव्यवहारस्य वृत्तिसापेक्षत्वात् । अनादौ स्फुरणरूपे व्यवहारे स्वातिरिक्तसम्विदपेक्षा नास्ति वृत्तिं विनापि चिदस्तीति सर्वदा व्यवहारात् । ब्रह्मणः स्फुरणम्—ब्रह्मरूपस्यात्मनश्चिद्रूपसाक्षिप्रत्यक्षरूपम् । चिद्रूपसाक्ष्यात्मन इव ब्रह्मणः स्फुरणरूपो व्यवहारो नित्यसिद्ध इत्युक्तमाचार्येण । ब्रह्म अस्ति न वा ? ब्रह्म नास्त्येवेति संशयविपर्यययोः सम्भवेऽपि चिद्रूपसाक्ष्यात्मना तदसम्भवात्; चिद्रूपसाक्ष्यात्मना ब्रह्मणः सर्वदाऽज्ञानाविषयत्वात् । अज्ञानकार्यत्वात् संशयविपर्यययोः । अहमस्मि न वा ? नाहमस्मि—इति कदापि कस्यापि संशयविपर्यययोरभावात् । साक्ष्यात्मना ब्रह्मणः स्फुरणरूपो व्यवहारो नित्यसिद्ध एव । तत्र स्वातिरिक्तसम्विदपेक्षा नास्ति । तादृशस्फुरणस्य शुद्धचिदपेक्षत्वेऽपि न शुद्धचित् स्वातिरिक्ता । स्वातिरिक्तचित्सापेक्षत्वमुक्तस्फुरणस्य नास्तीति भावः । अज्ञानाविषयत्वविशिष्टचित एव नित्यसिद्धे चितोऽज्ञानाविषयत्वे प्रयोजकत्वात् । नित्यसिद्धे प्रयोजकत्वञ्च क्षेमसाधारणम्; अतः नित्यसिद्धमपि किञ्चित्प्रयोज्यं भवति । प्रयोज्यता च जन्याजन्यसाधारणी—क्षैमी । यथा अनादावपि घटप्रागभावे दण्डविरहप्रयोज्यता, यथा वा दुःखप्रागभावे प्रायश्चित्तप्रयोज्यता । यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वमसति चासत्त्वं तत्तज्जन्यमिति शास्त्रीयव्यवहारः । एषा च जन्यता साधनादिसाधारणी प्रयोज्यतेति उच्यते । एवमेव अनादौ अज्ञानाविषयत्वे नित्यसिद्धेऽपि अज्ञानाविषयत्वविशिष्टचितः क्षेमसाधारणी प्रयोजकता अज्ञानाविषयत्वे च प्रयोज्यता । अज्ञानाविषयत्वविशिष्टस्य साक्षिण एव नित्यस्फुरणरूपत्वात् तादृशस्फुरणे शुद्धचिदपेक्षाया विद्यमानत्वेऽपि न स्वातिरिक्तापेक्षा वर्त्तते, साक्षिणः शुद्धचिदनतिरिक्तत्वात् । अज्ञानाविषयत्व-

व्यवहारे नित्यसिद्धे स्वातिरिक्तसंविदपेक्षा नास्तीति नियतिपदेन व्यभिचारवारणम् ।

---

विशिष्टचितः अपेक्षणीयत्वेन अज्ञानस्यापि अपेक्षणीयता वर्तते, तथापि अज्ञानं न सम्विदतः स्वातिरिक्तसम्विदपेक्षा नास्तीति दृश्यत्वलक्षणे सम्वित्पदमुपात्तमाचार्येण । साक्षिणः स्फुरणरूपे व्यवहारेऽज्ञानाविषयत्वविशिष्टचित्सापेक्षत्वेनाज्ञानस्य यद्यप्यपेक्षा वर्तते । तथापि स्वातिरिक्तसम्विदपेक्षा नास्ति । अज्ञानस्य स्वातिरिक्तत्वेऽपि स्वातिरिक्तसम्विद्रूपत्वं नास्ति ।

**नियतिपदेन व्यभिचारवारणमिति ।** मूले "स्वव्यवहारे स्वातिरिक्तसम्विदपेक्षानियतिर्दृश्यत्वमि"त्युक्तम् । यथाश्रुते स्वातिरिक्ता या सम्वित्, तस्याः सम्विदो या अपेक्षा, तस्याः अपेक्षायाः नियतिरिति षष्ठीतत्पुरुषसमासः प्रतीयते । प्रदर्शिततत्पुरुषसमासलभ्यार्थग्रहणे नियतिशब्दार्थेन नियमेन स्वातिरिक्तसम्विदपेक्षायाः व्याप्यत्वम् स्वगोचरव्यवहारे लभ्यते । स्वातिरिक्तसम्विदपेक्षायां वा व्यवहारस्य व्यापकत्वं लभ्यते । तथा च—स्वगोचरव्यवहारनिष्ठव्याप्यतानिरूपितव्यापकतावती स्वातिरिक्तसम्विदपेक्षा इत्यर्थो लभ्यते । यदि इदमेव हेतुशरीरं तर्हि तस्य हेतोर्घटादौ पक्षेऽसत्त्वात् स्वरूपासिद्धिरेव स्यात् । दृष्टान्ते साधनवैकल्यञ्च स्यात् । अतो यथाश्रुतार्थं परित्यज्य बहुव्रीहिसमासाश्रयणेन हेतुवाक्यस्यार्थो ग्रहीतव्यः । अत्रैवं समासो भवितुमर्हति—स्वव्यवहारं प्रति स्वातिरिक्तसम्विदपेक्षायाः नियतिः—व्यापकत्वरूपा घटकतया यत्रेति बहुव्रीहिणा तादृशव्यापकताघटितस्य दृश्यत्वस्य हेतुता । दृश्यत्वस्य व्यापकताघटितत्वञ्च 'स्वव्यवहारत्वावच्छिन्नव्यापकस्वातिरिक्तसम्वित्सापेक्षकत्वम् । घटादीनां हि सर्वे व्यवहाराः नियमेन स्वातिरिक्तसम्वित्सापेक्षाः भवन्ति । अतः स्वव्यवहारव्यापकीभूतस्वातिरिक्तसम्वित्सापेक्षका घटादयो दृश्यपदार्थास्तेषु दृश्यत्वन्नान धर्मः मिथ्यात्वानुमापको वर्तते । घटादिषु तादृशसम्वित्सापेक्षकत्वमेव दृश्यत्वमिति मूलकृतामभिमतम् । तेन हेतोर्नासिद्धिर्न वा दृष्टान्तस्य साधनवैकल्यम् । न वाऽस्य हेतोर्ब्रह्मणि व्यभिचारः, नियमघटितार्थकेन नियतिपदेन ब्रह्मणि व्यभिचारवारणात् । ब्रह्मणो व्यवहारे स्फुरणरूपे स्वातिरिक्तसम्विदपेक्षाया अभावात् ।

अत्र ब्रह्मणि व्यभिचारवारकनियतिपदघटितबहुव्रीहिसमासेन पर्यवसितमर्थं

स्वगोचरयावद्व्यवहारे स्वातिरिक्तसंविदपेक्षायां पर्यवसानात् ॥२७॥

अत एवास्वप्रकाशत्वरूपं दृश्यत्वमपि हेतुः; स्वप्रकाशत्वं हि स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वम्, "यत्साक्षादपरोक्षात्, ब्रह्मे" ति श्रुतेः।

---

स्पष्टीकुर्वन्नाह आचार्यः—स्वगोचरयावद्व्यवहारे स्वातिरिक्तसम्विदपेक्षायां पर्यवसानादिति । अत्र व्यवहारत्वं शब्दप्रयोगोपादानेच्छास्फुरणादिसाधारणमेकम् दुर्वचमतः स्वविषयकशब्दप्रयोगत्वोपादानत्वेच्छात्वाद्यन्यतमव्यापकं यत् स्वातिरिक्तचिदधीनत्वं तत्सम्बन्धित्वं पर्यवसितं दृश्यत्वम्। तच्च स्वातिरिक्तचिदधीनस्फुरणकत्वमिति यावत्। घटादिविषयकस्फुरणादौ स्वातिरिक्तचिदधीनत्वमस्ति—इति नासिद्धिः, शुक्तिरजतादिविषयकस्फुरणादौ शुक्तिरजताद्यतिरिक्तचिदधीनत्वमस्तीति न दृष्टान्ते साधनवैकल्यम्। न वा ब्रह्माभिन्नसाक्षिचैतन्यस्य स्फुरणादिव्यवहारे स्वातिरिक्तचिदधीनत्वाभावात् पर्यवसितदृश्यत्वहेतोर्व्यभिचारः ॥२७॥

२८—अत एवास्वप्रकाशत्वरूपं दृश्यत्वमपि हेतुरिति। षष्ठं चरमकल्पं परिष्कर्तुमाह—अत एव इति। यतो ब्रह्मस्फुरणस्य ब्रह्मान्यचिदनधीनत्वं घटादिस्फुरणस्य च घटाद्यन्यचिदधीनत्वं पञ्चमहेतुपरिष्कारायोक्तम् अत एवास्वप्रकाशत्वरूपं दृश्यत्वमपि हेतुर्निर्दोष इति शेषः। माध्वमते सर्वस्यैव वेद्यत्वाभ्युपगमात् स्वप्रकाशत्वमपि स्ववेद्यत्वमेव, परवेद्यघटाद्यपेक्षया स्ववेद्यचैतन्यस्य घटादितो वैलक्षण्यादिति तन्मतनिरासायाह आचार्यः—स्वप्रकाशत्वं हीति। स्वप्रकाशत्वं न स्ववेद्यत्वं, स्वात्मनि वृत्तिविरोधात्, स्वप्रतियोगिकसम्बन्धस्य स्वस्मिन्नसम्भवात् स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वमेव स्वप्रकाशत्वम्। तच्च स्वापरोक्षत्वे स्वातिरिक्तचिदनपेक्षत्वम्। घटादीनां स्वापरोक्षत्वे घटाद्यन्यचिदपेक्षा वर्तते—इति न तेषां स्वप्रकाशत्वं, किन्तु परप्रकाश्यत्वमेव, स्वान्यचित्प्रकाश्यत्वमिति यावत्। ब्रह्माभिन्नसाक्षिचैतन्यस्यापरोक्षत्वे स्वातिरिक्तचैतन्यापेक्षा नास्तीति तस्य स्वप्रकाशत्वमेव। घटादीनामपरोक्षज्ञानविषयत्वेऽपि ब्रह्मणस्तदभावादपरोक्षज्ञानविषयत्वे इत्यनुक्त्वा स्वापरोक्षत्वे इत्युक्तम्। चित एवापरोक्षत्वाद्विषयगतमपरोक्षत्वमज्ञानाविषयत्वप्रयोजकविशिष्टचित्त्वमेव। असत्त्वापादकत्वाभानापादकत्वाभ्यामज्ञानस्य

तथा चान्यानधीनापरोक्षत्वं पर्यवस्यति; तन्निरूपितभेदवत्त्वं हेतुः। तच्च नित्यपरोक्षे अन्याधीनापरोक्षे च घटादावस्तीति नासिद्धिः। न च—ब्रह्मणोऽपि ब्रह्मप्रतियोगिककाल्पनिकभेदवत्त्वात्तत्र व्यभिचारः;

---

द्वैविध्येऽपि प्रकृतेऽज्ञानाविषयत्वमज्ञानसामान्याविषयत्वं, तेनासत्त्वापादकाज्ञानाविषयत्वमभानापादकाज्ञानाविषयत्वञ्च लभ्यते। अज्ञानाविषयत्वविशिष्टचिदेवाज्ञानाविषयत्वे प्रयोजिका। घटं साक्षात्करोतीत्यादिप्रतीतेः साक्षात्कारस्य सकर्मकत्वानुरोधादज्ञानशून्यचितः साक्षात्करोत्यर्थमनुक्त्वा अज्ञानाविषयत्वप्रयोजकविशिष्टचित एव साक्षात्करोत्यर्थत्वमङ्गीकरणीयम्। धात्वर्थतावच्छेदकफलशालिनो हि कर्मत्वात्। अज्ञानशून्यचितः धात्वर्थत्वे धात्वर्थतावच्छेदकफलराहित्येन साक्षात्करोतेरकर्मकत्वापातात्।

स्वातिरिक्तेति। स्वातिरिक्तानपेक्षत्वं स्वातिरिक्तचिदनपेक्षत्वमित्यर्थः। चितः स्वापरोक्षत्वे अज्ञानाविषयत्वविशिष्टचितः अपेक्षितत्वेन चितः स्वापरोक्षत्वे स्वातिरिक्ताज्ञानापेक्षायामपि स्वातिरिक्तचिदपेक्षा नास्तीति न दोषः। न च चितः अपरोक्षत्वे स्वातिरिक्तचितः अप्रसिद्धत्वेन स्वप्रकाशत्वलक्षणासम्भव इति वाच्यम्, स्वापरोक्षतापेक्षणीया चित् यदन्या न भवति, तत्त्वं स्वप्रकाशत्वम्। अत्र स्वपदयत्पदाभ्यामेका व्यक्तिर्ग्राह्येति न स्वप्रकाशत्वलक्षणस्यासम्भवो दोषः।

यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुतेरिति। ब्रह्म साक्षादपरोक्षं, साक्षादपरोक्षं स्वप्रकाशमित्यर्थः। तथा च—ब्रह्म निरुक्तस्वप्रकाशत्ववत् अन्यानधीनापरोक्षत्ववदित्यर्थः। अस्वप्रकाशत्वरूपं दृश्यत्वं हेतुरित्युक्तं मूले। तेन स्वप्रकाशभिन्नत्वमेव दृश्यत्वमिति लभ्यते। अत्र पुनर्मूलकृता स्वप्रकाशत्वं निरूप्य तन्निरूपितभेदवत्त्वं हेतुरित्युक्तम्। तेन स्वप्रकाशत्वभिन्नत्वमित्यायाति, न स्वप्रकाशभिन्नत्वमिति, अतः तन्निरूपितभेदवत्त्वमित्यस्य तदवच्छिन्नानुयोगिताकभेदप्रतियोगित्वमित्यर्थो ग्राह्यः। अनुयोगितावच्छेदकस्यापि अनुयोगिन इव भेदनिरूपकत्वसम्भवात्।

तच्चेति। निरुक्तास्वप्रकाशत्वञ्च नित्यपरोक्षे धर्माधर्मादौ अन्याधीनापरोक्षे च घटादौ घटाद्यन्यचिदधीनापरोक्षे घटादावित्यर्थः, निरुक्तास्वप्रकाशत्वं हेतुरस्तीति न हेतोः स्वरूपासिद्धिः। नित्यपरोक्षे अपरोक्षत्वाभावादन्याधीनापरोक्षे च घटादौ अन्यानधीनत्वाभावात् अस्वप्रकाशत्वरूपहेतोरुभयत्र

अकल्पितभेदस्य क्वाप्यसिद्धत्वादिति—वाच्यम्;।

तद्भेदस्यान्यानधीनापरोक्षत्वरूपधर्मानिरूपितत्वात्, जीवत्वेश्वरत्वादिरूपस्यान्यधर्मस्य तन्निरूपकत्वादिति।

---

सत्त्वान्न हेतोरसिद्धता, इति भावः। स्वप्रकाशे ब्रह्मणि च अस्वप्रकाशत्वरूपहेतोरभावात् न व्यभिचारः।

पूर्वपक्षी शङ्कते—"न च ब्रह्मणोऽपी"ति। यद्यपि पारमार्थिकभेदानङ्गीकारात् चितश्चिद्विषयत्वं नोपपन्नं, तथापि कल्पितभेदसद्भावात् चितश्चिद्विषयत्वं युक्तमेव। यथा जीवब्रह्मणोरभेदेऽपि कल्पितभेदमादाय ज्ञातृज्ञेयभावः, तथा चित एकत्वेऽपि कल्पितभेदमादाय स्वविषयकान्तःकरणवृत्तिप्रतिफलितचिद्विषयत्वसम्भवादिति। एतां पूर्वपक्षिशङ्कां समाधातुमनुवदति आचार्यः—"ब्रह्मणोऽपि ब्रह्मप्रतियोगिककाल्पनिकभेदवत्त्वात्" ब्रह्मणोऽपि चिद्विषयत्वेन दृश्यत्वहेतोः "तत्र व्यभिचारः"। अद्वैतमते भेदमात्रस्यैव मिथ्यात्वात् "अकल्पितस्य भेदस्य" पारमार्थिकस्य भेदस्य "क्वाप्यसिद्धत्वात्" क्वचिदधिकरणे प्रमाणेनानिरूपणादस्वप्रकाशत्वरूपदृश्यत्वहेतुघटकभेदस्यापि काल्पनिकत्वात् काल्पनिकभेदमादाय चितोऽपि चिद्विषयत्वसत्त्वात् ब्रह्मणि हेतोर्व्यभिचारः स्यादेवेति पूर्वपक्षिणा न वाच्यम्। काल्पनिकभेदस्यापि काल्पनिकभेदकधर्माङ्गीकारं विना असम्भवात्। चितश्चिद्भिन्नेति प्रतीतेरसम्भवात् काल्पनिकभेदकधर्ममादायैव चिति चिद्भेदस्य वक्तव्यत्वेन "जीवो न ब्रह्म, ईशो न ब्रह्म" इत्यादिभेदप्रतीतेः काल्पनिकभेदकधर्ममादायैव उपपाद्यत्वात् जीवे ब्रह्मप्रतियोगिकभेदस्य अनुयोगिता जीवत्वेनैवावच्छिद्यते, न तु स्वप्रकाशत्वेन। एवमेव ईशे ब्रह्मप्रतियोगिकभेदस्यानुयोगिता ईशत्वेनैवावच्छिद्यते, न स्वप्रकाशत्वेन, इत्यभिप्रेत्याह आचार्यः—तद्भेदस्येति। ब्रह्मप्रतियोगिक भेदस्य इत्यर्थः अन्यानधीनापरोक्षत्वरूपधर्मानिरूपितत्वादिति। अन्यानधीनापरोक्षत्वं स्वप्रकाशत्वं, स्वप्रकाशत्वरूपधर्मानिरूपितत्वात् स्वप्रकाशत्वधर्मानवच्छिन्नानुयोगिताकत्वादित्यर्थः। जीवत्वावच्छिन्नानुयोगिताकभेदस्य स्वप्रकाशत्वधर्मानवच्छिन्नप्रतियोगिताकत्वादिति भावः। यदि ब्रह्मप्रतियोगिकभेदीयानुयोगिता स्वप्रकाशत्वधर्मेण नावच्छिद्यते, तर्हि केन धर्मेणावच्छिद्यते? इति पृच्छायामाह—जीवत्वेश्वरत्वादिरूपस्यान्यधर्मस्य तन्निरूपकत्वादिति। अन्यधर्मस्य शुद्धचिदन्यस्य जीवस्य

रत्वादिरूपस्यान्यधर्मस्य तन्निरूपकत्वात् ॥२८॥

एवञ्चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वाभावरूपं दृश्यत्वमपि हेतुः; न च—फलव्याप्यत्वाभावविशिष्टं यदपरोक्षव्यवहारयोग्यत्वं तस्य

---

ईश्वरस्य वा धर्मस्य जीवत्वस्य ईश्वरत्वस्य वा तन्निरूपकत्वात् भेदनिरूपकत्वात्—भेदीयानुयोगितावच्छेदकत्वादित्यर्थः ॥२८॥

२९—स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वं स्वप्रकाशत्वमित्युक्तमाचार्येण। एतादृशं स्वप्रकाशत्वमादायैव अस्वप्रकाशत्वरूपहेतुनिर्वचनं कृतम्। इदानीं चित्सुखाचार्यसम्मतस्वप्रकाशत्वमादाय अस्वप्रकाशत्वरूपं दृश्यत्वं परिष्कुर्वन्नाह आचार्यः—एवञ्चावेद्यत्वे सतीति। उक्तं हि चित्सुखाचार्येण "न तावत्स्वयंप्रकाशे लक्षणासम्भवः, अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यतायाः तल्लक्षणत्वादि"ति। अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वं, तदभावोऽस्वप्रकाशत्वं स्वप्रकाशभेदस्य स्वप्रकाशत्वात्यन्ताभावरूपत्वात् एतादृशमस्वप्रकाशत्वरूपं दृश्यत्वमपि हेतुः। चित्सुखीयस्वप्रकाशत्वलक्षणे अवेद्यत्वं न ज्ञानाविषयत्वं, किन्तु फलाव्याप्यत्वम्। तन्मते फलव्याप्यत्वमेव वेद्यत्वम्। उक्तञ्च तेनैव—"फलव्याप्यतालक्षणवेद्यत्वस्यातीतानागतयोर्नित्यानुमेयेषु च धर्मादिष्वभावादि"ति।

चित्सुखाचार्यमतमनुसृत्यैव पूर्वपक्षी शङ्कते—"फलव्याप्यत्वाभावविशिष्टमि"ति। चित्सुखमते "अवेद्यत्वे सति" इत्यस्य फलव्याप्यत्वाभावविशिष्टमित्यर्थः, सति सप्तम्या वैशिष्ट्यार्थकत्वात्। तथा च—फलव्याप्यत्वाभावविशिष्टं यदपरोक्षव्यवहारयोग्यत्वं तत् स्वप्रकाशत्वम्। तत् स्वप्रकाशत्वं फलव्याप्यत्वाभावविशिष्टे अपरोक्षव्यवहारयोग्ये ब्रह्मणि यथास्ति, तथैव अविद्यायामन्तःकरणादौ। आदिपदादन्तःकरणयोग्यधर्मेषु सुखदुःखादिषु शुक्तिरूप्यादौ चास्ति, अविद्यान्तःकरणादीनां निरुक्तस्वप्रकाशत्वात् अस्वप्रकाशत्वरूपदृश्यत्वस्य तेष्वभावादविद्यादिषु मिथ्यात्वानुमाने पक्षान्तर्गतेषु अभावादस्य हेतोः स्वरूपासिद्धिः। शुक्तिरूप्यादौ च प्रातिभासिके मिथ्यात्वानुमानस्य दृष्टान्ते अस्य हेतोरभावात् दृष्टान्तस्य साधनवैकल्यं च स्यादिति पूर्वपक्षिणा न वाच्यम्; कुतः न वाच्यम् इत्याह—अज्ञाननिवर्तकेति। अज्ञाननिवर्तकवृत्तिविषयत्वयोग्यत्वस्यैवापरोक्षव्यवहारयोग्यत्वपदेन विवक्षितत्वात्। प्रमाणजन्यापरोक्षवृत्तिरेवाज्ञानसामा-

ब्रह्मणीवाविद्यान्तःकरणादौ शुक्तिरूप्यादौ च सत्त्वेनासिद्धिसाधनवैकल्ये इति—वाच्यम्; अज्ञाननिवर्तकवृत्तिविषयत्वयोग्यत्वस्यापरोक्षव्यवहारयोग्यत्वपदेन विवक्षितत्वात्, तस्य चाविद्यादौ शुक्तिरूप्यादौ चासत्त्वात् नासिद्धिसाधनवैकल्ये। यथा च घटादेः फलव्याप्यत्वं, तथाऽग्रे

---

न्यनिवर्तिका। तथा च अज्ञानसामान्यनिवर्तिका या प्रमाणजन्यापरोक्षवृत्तिस्तद्विषयत्वयोग्यत्वमेव अपरोक्षव्यवहारयोग्यत्वपदेन विवक्षितम्। तस्य निरुक्तापरोक्षव्यवहारयोग्यत्वस्य अविद्यादिष्वभावात् न हेतोः स्वरूपासिद्धिः। अविद्यादीनां साक्षिभास्यत्वेन अविद्यायामविद्यानिवर्तकप्रमाणजन्यापरोक्षवृत्तेर्विषयत्वाभावात् न स्वप्रकाशत्वलक्षणस्य अविद्यादिष्वतिव्याप्तिः, न वा अस्वप्रकाशत्वस्य हेतोः अविद्याद्यन्तर्भावे स्वरूपासिद्धिः, न वा प्रातिभासिके शुक्तिरजतादिदृष्टान्ते साधनवैकल्यम्। शुक्तिरजतादीनां साक्षिभास्यत्वेनाज्ञानाविषयत्वादज्ञाननिवर्तकवृत्तिविषयत्वयोग्यताया अपि अभावात्। सर्वञ्चैतद् ब्रह्मणः स्वप्रकाशत्वलक्षणोपपत्तिप्रकरणे स्वयमेव वक्ष्यत्याचार्यः।

यथा च घटादेरिति। जानातिभात्योः सकर्मकत्वाकर्मकत्वाभ्यां भिन्नार्थकत्वेन "घटो भाती"त्यादौ फलविषयो घटः इत्यर्थात् सुखादौ वृत्त्यभावेऽपि साक्षात् क्रियमाणत्वप्रतीत्या चितो जगदुपादानत्वेन जगत्तादात्म्यात् तस्यैव विषयताशब्देन व्यवहारात् फलविषयत्वस्य घटादौ समर्थनं भविष्यति—प्रतिकर्मव्यवस्थाप्रकरणे अस्य प्रपञ्चो द्रष्टव्यः।

इष्टसिद्धिकारमते अविद्यानिवृत्तेः पञ्चमप्रकारत्वात् तत्र अस्वप्रकाशत्वस्य हेतोर्व्यभिचारमाशङ्क्य आह—[अविद्यानिवृत्तेः पञ्चमप्रकारत्वपक्षे इति] **अविद्यानिवृत्तेः पञ्चमप्रकारत्वपक्षे तत्र व्यभिचारवारणाय अज्ञानकालवृत्तित्वं हेतुविशेषणं देयं, तेनैव तुच्छेऽपि न व्यभिचारः** [इति मूलम्]। पञ्चमप्रकारायामविद्यानिवृत्तौ मिथ्यात्वं नास्ति, अथ च तत्र अस्वप्रकाशत्वरूपहेतुरस्तीति अविद्यानिवृत्तावस्य हेतोर्व्यभिचारः। एतद्व्यभिचारवारणायैवाज्ञानकालवृत्तित्वं हेतौ विशेषणमुपात्तम्। अज्ञानकालवृत्तित्वञ्च अज्ञानाप्रयुक्तं सत् यज्जन्यं तदन्यत्वे सति कालसम्बन्धित्वम्। तेन अविद्यानिवृत्तेरविद्यापरिणामत्वानभ्युपगमेनाज्ञानाप्रयुक्तत्वात् जन्यत्वाच्च अज्ञानाप्रयुक्तं सत् यज्जन्यं सैवाविद्यानिवृत्तिः, तदन्यत्वम्

वक्ष्यामः। अविद्यानिवृत्तेः पञ्चमप्रकारत्वपक्षे तत्र व्यभिचारवारणायाज्ञानकालवृत्तित्वं हेतुविशेषणं देयम्।

तेनैव तुच्छेऽपि न व्यभिचारः। एवमेव सर्वेषु हेतुषु व्यभिचारपरिहाराय यतनीयम्। सद्विविक्तत्वमात्रे तु साध्ये तुच्छे पञ्चमप्रकारा-

---

अविद्यानिवृत्तौ न वर्तते। तथा च—अस्वप्रकाशत्वस्य अविद्यानिवृत्तौ सत्त्वेऽपि अज्ञानाप्रयुक्तं सत् यज्जन्यं तदन्यत्वस्य अस्वप्रकाशत्वरूपहेतुविशेषणस्य अविद्यानिवृत्तावसत्त्वाद् विशिष्टस्यापि हेतोरविद्यानिवृत्तावसत्त्वमेव, विशेषणाभावात् विशिष्टाभाव इति भावः। अविद्यानिवृत्तौ विशिष्टरूपस्य हेतोरसत्त्वान्नास्य हेतोर्व्यभिचारः। तुच्छेऽपि अस्वप्रकाशत्वस्य हेतोः सत्त्वात् अज्ञानाप्रयुक्तं सत् यज्जन्यं तदन्यत्वस्य च उपात्तहेतुविशेषणांशस्य सत्त्वाद्व्यभिचार एव, तुच्छस्याज्ञानाप्रयुक्तत्वेऽप्यजन्यत्वादज्ञानाप्रयुक्तं सत् यज्जन्यं तदन्यत्वस्य तुच्छेऽपि सत्त्वादुपात्तविशेषणविशिष्टहेतोस्तुच्छे व्यभिचारः स्यात्, तद्वारणाय कालसम्बन्धित्वं हेतुविशेषणमुपात्तम् तुच्छस्य कालसम्बन्धित्वात्। एवञ्च अज्ञानाप्रयुक्तं सत् यज्जन्यं तदन्यत्वे सति कालसम्बन्धित्वविशिष्टमस्वप्रकाशत्वं पर्यवसितो हेतुः। अस्य च हेतोः पञ्चमप्रकारायामविद्यानिवृत्तौ तुच्छे चासत्त्वान्नास्य हेतोर्व्यभिचार इति चन्द्रिकाकृत्सम्मता व्याख्यारीतिः।

पञ्चमप्रकारायामविद्यानिवृत्तौ तुच्छे चास्य हेतोर्व्यभिचारवारणाय पञ्चमप्रकाराविद्यानिवृत्तिभिन्नत्वे सति तुच्छभिन्नत्वे च सति अस्वप्रकाशत्वं हेतुरित्येव फलितम्। अविद्यानिवृत्तौ हेतोर्व्यभिचारवारणेऽपि मोक्षदशायामात्मवदविद्यानिवृत्तिरपि आत्मभिन्ना स्थास्यतीत्येव किं पञ्चमप्रकाराविद्यानिवृत्तिवादिनामाचार्याणामभिप्रायः? किं वा अविद्यानिवृत्तिर्निवृत्तेरप्रतियोगिन्यपि सा बाध्या? किमत्र प्रतिभाति? अविद्यानिवृत्तिर्बाध्या न वा? अबाध्यत्वे ब्रह्माद्वैतमिति सिद्धान्तोऽपि कथं सङ्गच्छेत? दृश्यत्वनिरूपणप्रसङ्गे अद्वैतसिद्धिकृता यदुक्तं तेन पञ्चमप्रकाराविद्यानिवृत्तिवादिनां कीदृशोऽभिप्रायः परिस्फुरति? इत्येवं जिज्ञासूनां प्रतिबोधाय किञ्चिदत्र निरूप्यते—इष्टसिद्धौ प्रथमपादे नवमकारिकाविवरणप्रसङ्गे [पृ० ८५] उक्तमिष्टसिद्धिकृद्भिः—"अज्ञाननिवृत्तेः प्रकारान्तरसम्भवात्। तदसम्भवैकनिमित्तो हि अयं दोषराशिर्यस्त्वया प्रपञ्चितः [सदसत्] सदसदनिर्वचनीयप्रकारेभ्यो

विद्यानिवृत्तौ च न व्यभिचारगन्धोऽपीति सर्वमवदातम् ॥२९॥

इति अद्वैतसिद्धौ दृश्यत्वहेतूपपत्तिः ।

---

ह्यन्यप्रकारैवाज्ञानस्य निवृत्तिर्युक्ता" । पुनरप्युक्तम्—अतोऽन्यप्रकारैव अज्ञानस्यानिर्वाच्यस्य निवृत्तिरनुरूपा यक्षानुरूपो हि बलिः । [ पृ० ८६ ] विवृतञ्चैतदिष्टसिद्धिवाक्यं ज्ञानोत्तमेन—"अत्र चाज्ञाननिवृत्तेस्तादृशमेवानिर्वाच्यत्वं खण्ड्यते यादृशमज्ञानस्य ज्ञाननिवर्त्यत्वेनानिर्वाच्यत्वं, न तु सर्वथा वास्तवरूपेण निरूपणासहत्वं [खण्ड्यते], इतरथा मिथ्यात्वानुमानभङ्गप्रसङ्गात् । अष्टमाध्याये चानिर्वचनीयत्वाङ्गीकाराच्च । तस्मान्नेह नानास्ति किञ्चनेति श्रौतनिषेधेनात्मातिरिक्तस्यावस्तुत्वावगमात् पञ्चमप्रकारानिवृत्तिर्मिथ्येत्येव रहस्यम्" [पृ० ४५२] ।

पुनरप्युक्तमिष्टसिद्धिकृता इष्टसिद्धौ अष्टमाध्याये द्वितीयकारिकाव्याख्यानप्रसङ्गे [पृ० ३६९]—"तर्हि अज्ञानदाहस्य स्वरूपं ब्रूहि तन्मानञ्च, आत्मा चेत् स उक्तो दोषः अन्यश्चेत् न स्वतः सिध्येत्; अतस्तत्साधकं वाच्यम् । अद्वैतात्मज्ञानोदये सर्वव्यवहारलोपात् नासौ दर्शयितुं शक्य इति चेत्, तथापि लोके त्वं दर्शयित्वात्मनि त्वं योजय । लोकेऽपि स त्वया इष्टः, अन्यथा तदसिद्धेः । उच्यते—ज्ञातोऽर्थस्तज्ज्ञप्तिर्वा तदज्ञानहानिः" ।

प्रथमेऽध्याये अविद्यानिवृत्तेः पञ्चमप्रकारत्वमुक्त्वा पुनरष्टमेऽध्याये अविद्यानिवृत्तेर्ज्ञातात्मरूपत्वम् आत्मज्ञानरूपत्वं वा इष्टसिद्धिकृद्भिरुक्तम् । अविद्यानिवृत्तेः पञ्चमप्रकारत्वनिरूपणे इष्टसिद्धिकृतामभिप्रायः ज्ञानोत्तमकृतव्याख्याप्रदर्शनेनास्माभिः प्रागेवोक्तः । पञ्चमप्रकाराविद्यानिवृत्तेरपि मिथ्यात्वस्येष्टत्वात् तत्र मिथ्यात्वसाधकहेतोर्व्यभिचारप्रदर्शनं न सङ्गच्छते । ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्य पञ्चमप्रकारायां निवृत्तौ अभावेऽपि श्रुतिबाध्यत्वरूपमिथ्यात्वस्य इष्टसिद्धिकृद्भिरप्यभ्युपगतत्वात् । निवृत्तेः पञ्चमप्रकारत्वं प्रदर्श्य तैरेव ज्ञातात्मरूपत्वमात्मज्ञानं वा अविद्यानिवृत्तिरिति सिद्धान्तितम् । अत एव अद्वैतसिद्धिकारा अद्वैतसिद्धौ चतुर्थपरिच्छेदे अविद्यानिवृत्तिप्रकरणस्यावसाने—"ये तु पञ्चमप्रकारादिपक्षाः, ते तु मन्दबुद्धिव्युत्पादनार्थाः, इति न तत्समर्थनमर्थयाम" इति वक्ष्यन्ति ।

तत्त्वप्रदीपिकायां पुनः चतुर्थपरिच्छेदे का पुनरविद्यानिवृत्तिरित्युपक्रम्य

नापि पञ्चमप्रकारा, सदसद्विलक्षणतया तस्या अप्यनिर्वचनीयत्वप्रसङ्गात् । सदसद्विलक्षणमनिर्वचनीयमिति लक्षणाङ्गीकारात् ।

"ननु नेदं लक्षणं, किन्तु ज्ञाननिवर्त्यमनिर्वचनीयम् । न च अज्ञाननिवृत्ति-र्ज्ञाननिवर्त्याज्ञानजन्यत्वात् । ज्ञानानिवर्त्यापि सा बाधगोचरा । अतो न प्रपञ्च-मिथ्यात्वसाधनं सव्यभिचारम् । नेह नानास्ति किञ्चनेति प्रतिपन्नोपाधौ निषेधात्म-बाधोऽज्ञाननिवृत्तेरपि तुल्यः इति चेत् ? मैवम्, अज्ञाननिवृत्तेर्ब्रह्मज्ञानरूपतया तज्ज-न्यत्वाभावात् । ज्ञातोऽर्थस्तज्ज्ञप्तिर्वा अज्ञानहानिरिति इष्टसिद्धिकारैरभिधानात् ।" विवृतञ्चैतन्नयनप्रसादिन्याम्—तत्र यदुक्तं न्यायरत्नावलीकारैः [ आनन्दबोध-भट्टारकैः न्यायमकरन्दे—पृ० ३५५ ], तदुद्भावयति दूषयितुं ननु नेदं लक्षणमिति । ननु इयमपि अविद्यानिवृत्तिर्ज्ञाननिवर्त्यैव, तत्राह—न चाज्ञान-निवृत्तिर्ज्ञाननिवर्त्येति । स्यादेतत्—एवंविधापि अविद्यानिवृत्तिर्दृश्या तावदभ्यु-पेयते, आत्मव्यतिरिक्तत्वात् । तथा च यदि नेय [ मज्ञाननिवृत्तिः ] ज्ञाननिवर्त्या, तर्हि दृश्यत्वहेतुरत्रैवानैकान्तिक इति, तत्राह—ज्ञानानिवर्त्यापि सा बाधगोचरा । ज्ञाननिवर्त्यत्वमन्यत् ज्ञानबाध्यत्वञ्चान्यत्—इत्यभिमानः [ पूर्वपक्षिणाम् ] । अथ कथं बाध्यत्वमस्या निवृत्तेरिति तत्राह—नेह नानेति ।

पञ्चमप्रकाराविद्यानिवृत्तिवादिनामाचार्याणां वाक्यपर्यालोचने सुस्पष्टञ्चैतत् प्रतिभाति यत् तैरविद्यानिवृत्तेरबाध्यत्वं कथमपि नाङ्गीकृतम् । अविद्यानिवृत्ते-र्ज्ञानानिवर्त्यत्वेऽपि श्रुतिबाध्यत्वरूपं मिथ्यात्वं तत्रास्त्येव । अत एव अविद्या-निवृत्तौ न दृश्यत्वहेतोर्व्यभिचारः । तैरेवाविद्यानिवृत्तौ दृश्यत्वस्याङ्गीकृतत्वादवि-द्यानिवृत्तौ दृश्यत्वहेतोर्व्यभिचारमाशङ्क्य अविद्यानिवृत्तेर्मिथ्यात्वेन व्यभिचारस्य परिहृतत्वाच्च दृश्यत्वहेतुनिर्वचने पञ्चमप्रकाराविद्यानिवृत्तौ अस्वप्रकाशत्वस्य हेतोर्व्यभिचारशङ्कायाः समुत्थापनं व्यभिचारवारणाय च हेतौ विशेषणोपादानञ्च केवलं न्यायामृतग्रन्थमनुसृत्यैवाचार्येण कृतम् । पूर्वपक्षिणा उद्भावितो दोषः समाधातव्य एवेति कृत्वा आचार्येणैवमुक्तम् । यथा कल्पतरु—

"परैरुद्भावितो दोष उद्धर्तव्यः स्वदर्शने ।

इति शिक्षार्थमत्रत्यचिन्तां तत्राकरोन्मुनिः ।" [ब्र०सू० १।४।१४] इति ।

यथा मिथ्याभूतायां सृष्टौ श्रुतीनां तात्पर्याभावात् तत्र विज्ञानं यद्यपि दोषं नावहति, तथापि पूर्वपक्षिणा सृष्टौ उद्भावितस्य विगानस्य समाधानाय सूत्रभाष्यकारप्रभृतयः प्रवर्तन्ते, तथैव आचार्योऽपि पञ्चमप्रकाराविद्यानिवृत्तौ दृश्यत्वहेतोर्व्यभिचारे उद्भाविते तत्समाधानाय प्रवर्तते। वस्तुतस्तु पञ्चमप्रकाराविद्यानिवृत्तौ मिथ्यात्वसाधकहेतोर्नास्ति व्यभिचारशङ्का, नापि तत्समाधानम्। यदपि न्यायामृतग्रन्थे (६७ पत्रे द्वितीयपृष्ठे) पूर्वपक्षिणा उक्तम्—"किञ्च अस्वप्रकाशत्वस्य पञ्चमप्रकाराविद्यानिवृत्तौ व्यभिचार" इति, तदद्वैतसिद्धान्तानवबोधविजृम्भितम्। तदनवबोधं परिपालयद्भिरेवाचार्यैः पूर्वपक्षिचित्तमनुसरद्भिः पूर्वपक्षस्य समाधानमात्रमभिहितमिति।

"न सन्नासन्न सदसन्नानिर्वाच्योऽपि तत्क्षयः।

यक्षानुरूपो हि बलिरित्याचार्या व्यचीचरन्"॥ [द्वैतपराशनम्—पृ० ३५५ न्यायमकरन्दः, चौखम्बा संस्कृत सिरिज] इत्यादि न्यायमकरन्दोक्तरीत्या अविद्यानिवृत्तेः पञ्चमप्रकारत्वमवगन्तव्यम्। पञ्चमप्रकारा अविद्यानिवृत्तिर्न मिथ्या, सदसद्विलक्षणस्वरूपमिथ्यात्वस्य तत्राभावात्, अमिथ्याभूतायामविद्यानिवृत्तौ अस्वप्रकाशत्वरूपदृश्यत्वस्य सत्त्वात् हेतोर्व्यभिचारः, तद्वारणाय अज्ञानकालवृत्तित्वमिति उक्तहेतोर्विशेषणं देयम्। अज्ञाननिवृत्तौ निरुक्तदृश्यत्वस्य सत्त्वेऽपि अज्ञानकालवृत्तित्वविशिष्टं दृश्यत्वम् अज्ञाननिवृत्तौ न सम्भवति। सम्भवे वा अज्ञाननिवृत्तिरेव न सम्भवति। अस्वप्रकाशत्वरूपहेतोरज्ञानकालवृत्तित्वविशेषणेन तुच्छेऽपि नास्य हेतोर्व्यभिचारः। अमिथ्याभूते तुच्छे निरुक्तास्वप्रकाशत्वस्य हेतोः सम्भवेऽपि अज्ञानकालवृत्तित्वविशिष्टं निरुक्तदृश्यत्वं तुच्छे न सम्भवति, तुच्छस्य कालसम्बन्धाभावात्।

एवमेव सर्वेषु हेतुषु पूर्वोक्तेषु पञ्चसु पञ्चमप्रकाराविद्यानिवृत्तौ तुच्छे च व्यभिचारः परिहरणीयः। सदसद्विलक्षणत्वं मिथ्यात्वमित्यनुक्त्वा आनन्दबोधभट्टारकमतमनुसृत्य सद्विविक्तत्वमात्रं मिथ्यात्वं यदि दृश्यत्वादिभिर्हेतुभिः साध्यते, तदा तुच्छस्य अनङ्गीकारे वा तस्यापि मिथ्यात्वेन न हेतोर्व्यभिचारः। उक्तञ्च न्यायदीपावल्याम्—सत्यविवेकस्य मिथ्याभावस्य साध्यत्वादिति। पञ्चमप्रकाराविद्यानिवृत्तावपि एवमेव न व्यभिचारः। एवञ्च पूर्वपक्षिणा उत्प्रेक्षितानां दोषानां

निरासाद् दृश्यत्वहेतोर्मिथ्यात्वगमकत्वमेवेत्याह—सर्वमवदातमिति। दोषकलङ्क-लेशशून्यमित्यर्थः। उक्तञ्चाचार्येण

"यतो ब्रह्मणि वेद्यत्वं गीर्वाणैरपि दुर्भणम्।
श्रुतिबाधभयात्तस्मान्मिथ्या दृश्यन्नियोगतः"॥ इति। [अद्वैतरत्नरक्षणम्, पृ० ३७]

दृश्यत्वहेतुभङ्गप्रकरणप्रारम्भे यदद्वैतसिद्धान्ते विद्वेषमात्रोद्गीरणं पूर्वपक्षिभिः कृतं तस्य प्रतीकारं श्रोतृबुद्धिसम [व] धानाय प्रथमतोऽनुष्ठाय इहैव तस्य व्यवस्था प्रदर्श्यते—

"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः॥[मु० १।१।६]

अन्यदेव तद्विदितात्—इत्यादिश्रुतिनिर्यासरूपं ब्रह्मणोऽदृश्यत्वमरोचयन्तस्तत्रैव बौद्धच्छर्दितत्वमारोपयन्तः सर्वैः प्रामाणिकैस्थुत्कृतां केवलबौद्धमुखनिष्ट्यूतामसत्ख्यातिं साभिलापमालिहन्तः सर्ववेदनिस्यन्दितेऽपि ब्रह्मणः स्वप्रकाशत्वे जडत्वमेव बहुमन्यमाना आत्मनश्चिद्रूपत्वमनादृत्य तत्र वैमुख्यं भजमाना बौद्धमुखोद्गीर्णं स्वग्राह्यत्वरूपं स्वप्रकाशत्वं प्रामाणिकैर्धिक्कृतमपि आस्वादयन्तो यत् प्रलपन्ति—

"स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात् तथा हि यः।
प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा।" इति बौद्धोक्तयुक्तिच्छर्दितमात्रमित्यादि, तत्तेषामेव शोभते। पुनरपि यदुक्तम्—अत एवादृश्यत्वश्रुतिः साकल्येन अदृश्यत्वपरेति, तदपि तुच्छम्। साकल्येनादृश्यत्वं घटादीनामपि वर्तते। घटादीनामपि पुरोभागे दृश्यमाने पृष्ठभागो न दृश्यते। पृष्ठभागे वा दृश्यमाने न पुरोभागः। एवमेव अग्रभागे दृश्यमाने न निम्नभागः, बहिर्भागे वा दृश्यमाने न मध्यभागः। एवमेव सर्वेषां सावयवानां द्रव्यानां साकल्येनादृश्यत्वात् ब्रह्मसाम्यमेव प्रसज्येत। पुनरप्युक्तम्—ब्रह्मणः सर्वथा अदृश्यत्वपरत्वे उदाहृतश्रुतौ यत्तदद्रेश्यमिति उद्देश्याभिधायियच्छब्दायोगादिति, तदपि तुच्छं, यत्तच्छब्दाभ्यां श्रुतिर्ब्रह्मणः सर्वप्रसिद्धतां दर्शयति। सर्वप्रसिद्धत्वञ्च ब्रह्मणः स्वप्रकाशत्वे एव सङ्गच्छते। अत एव "ब्रह्मसूर्यसमं ज्योतिरि"त्यादि [ शुक्लयजुः सं० २३।४८ ] मन्त्रोऽपि सङ्गच्छते। अत एव स्मृतिरपि—"यत्तत् सूक्ष्ममविज्ञेयम्" इत्यादि [ ब्र० सू० २।१।१ शाङ्करभाष्यम् ] यत्तच्छब्दाभ्यां प्रत्यगभिन्नब्रह्मणः सर्वप्रसिद्धतां दर्शयति।

अव्यवधानेनोच्चारिताभ्यां यत्तच्छब्दाभ्यामुद्देश्यविधेयभावो न बोध्यते, सर्वप्रसिद्धिमात्रमेव ज्ञाप्यते पूर्वपक्षिप्रलपितस्य उत्तरानर्हत्वादाचार्येण सर्वेष्वेव पूर्वपक्षिप्रलपितेषु मूकीभूय स्थितम्। अस्माभिः पुनः मन्दबुद्धिभ्रान्तिनिरासायात्र किञ्चित् पराक्रान्तम् ॥२९॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथशर्मविरचितभागवद्वैतसिद्धिटीकायां बालबोधिन्यां दृश्यत्वहेतुनिरूपणं समाप्तम्।

अथ जडत्वहेतूपपत्तिः ।

जडत्वमपि हेतुः । ननु—किमिदं जडत्वम्? अज्ञातृत्वं वा, अज्ञानत्वं वा, अनात्मत्वं वा ? नाद्यः; त्वन्मते पक्षनिक्षिप्तस्यैवाहमर्थस्य ज्ञातृत्वात्तत्रासिद्धेः; शुद्धात्मनोऽज्ञातृत्वेन तत्र व्यभिचारश्च । नापि द्वितीयः; वृत्त्युपरक्तचैतन्यस्यैव ज्ञानत्वेन केवलाया वृत्तेः केवलस्य

---

१—मिथ्यात्वे साध्ये हेतूक्तं यद्दृश्यत्वं तदुपपादितम् । इदानीं द्वितीयं हेतुमुपपादयितुमाह—"जडत्वमपि हेतुरि"ति । मिथ्यात्वरूपसाध्यगमकतया न केवलं दृश्यत्वं हेतुः, किन्तु जडत्वमपि । जडत्वस्य साध्यगमकत्वमसहमानः पूर्वपक्षी शङ्कते—ननु किमिदं जडत्वमिति । मिथ्यात्वे साध्ये हेतूक्तं जडत्वं किं रूपमद्वैतवादिसम्मतमिति जडत्वे निरुच्यमाने यावन्तः प्रकाराः सम्भवन्ति तान् सम्भावितान् प्रकारविशेषान् खण्डयितुं पृच्छति—ननु किमिदमिति [ १ ] तद् जडत्वमज्ञातृत्वं वा? [ २ ] अज्ञानत्वं वा [ ३ ] अनात्मत्वं वा ? इति निरुच्यमाने जडत्वे आपाततः त्रयः प्रकाराः सम्भवन्ति । ते च प्रकारा वक्ष्यमाणदूषणग्रस्तत्वान्न मिथ्यात्वस्य साध्यस्य गमकाः इत्याह पूर्वपक्षी—"नाद्य" इति । भागासिद्धिव्यभिचाराभ्याम् अज्ञातृत्वं जडत्वं न मिथ्यात्वसाधकं भवितुमर्हति । विमतं मिथ्या अज्ञातृत्वात् शुक्तिरजतवदिति प्रयोगे अहमर्थस्यापि ज्ञातुः मिथ्यात्वानुमाने पक्षान्तर्गतत्वात् तत्र च अज्ञातृत्वस्य हेतोरभावात् भागासिद्धिः स्यात् । अद्वैतसिद्धान्ते शुद्धस्यात्मनोऽज्ञातृत्वेन परमार्थसत्त्वे शुद्धे आत्मनि अज्ञातृत्वस्य हेतोः सत्त्वात् व्यभिचारश्च स्यात् ।

नापि जडत्वमज्ञानत्वं, ज्ञानभिन्नत्वमेव हि अज्ञानत्वं, ज्ञानञ्च वृत्त्युपरक्तचैतन्यमेव, न केवला वृत्तिर्ज्ञानं न वा केवलं चैतन्यं ज्ञानम् । एवञ्च अज्ञानत्वस्य हेतोर्वृत्तौ सत्त्वात् हेतोर्भागासिद्धिपरिहारेऽपि अमिथ्याभूते चैतन्येऽज्ञानत्वस्य हेतोः सत्त्वात् अस्यापि अज्ञानत्वस्य हेतोर्व्यभिचार एव स्यात् । अज्ञातृत्वस्य हेतोः शुद्धे चैतन्ये सत्त्वात् यथा तस्य हेतोर्व्यभिचारस्तद्वदेव अज्ञानत्व-

चैतन्यस्य चाज्ञानत्वेन वृत्तावसिद्धिपरिहारेऽपि चैतन्ये व्यभिचारतादवस्थ्यात्। नापि तृतीयः; आत्मत्वस्यैव निरूपयितुमशक्यत्वात्। तद्धि न जातिविशेषः; त्वयात्मन एकत्वाभ्युपगमात्; विशिष्टात्मनां भेदेऽपि तेषां पक्षकुक्षिनिक्षिप्तत्वात्। नाप्यानन्दरूपत्वम्, वैषयिकानन्दे तद्व्यतिरेकस्य हेतोरसिद्धेः, तस्याप्यात्मत्वे अज्ञानपक्षोक्तदोष प्रसञ्जनीय इति चेत् ? ॥१५॥

[पूर्वपक्षः समाप्तः]

---

स्यापि हेतोः शुद्धे चैतन्ये व्यभिचार एवेत्यत उक्तम्—व्यभिचारतादवस्थ्यादिति।

नापि अनात्मत्वं जडत्वमिति तृतीयप्रकारः सम्भवति। कुतो न सम्भवति ? इत्याह पूर्वपक्षी—आत्मत्वस्यैव निरूपयितुमशक्यत्वात्। अनात्मत्वं नाम आत्मत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वम्। भेदप्रतियोगितावच्छेदकस्यात्मत्वस्यैव निरूपणासम्भवे अनात्मत्वमपि निरूपयितुं न शक्यते इति भावः। आत्मत्वं कुतो निरूपयितुं न शक्यते ? इति जिज्ञासायामाह पूर्वपक्षी—तद्धि न जातिविशेष इति। तत् हि आत्मत्वं हि न द्रव्यत्वव्याप्यजातिविशेषः। आत्मत्वं कुतो न जातिविशेष इत्याह—त्वया आत्मन एकत्वाभ्युपगमादिति। त्वया अद्वैतवादिना भेदमात्रस्य प्रत्याख्यातत्वादेकस्य च स्वप्रकाशत्वं विना असिद्धेस्तस्यैव स्वप्रकाशस्यैकस्य आत्मत्वाभ्युपगमात्। एकव्यक्तिमात्रवृत्तिधर्मस्य जातित्वासम्भवात् जातेरनेकानुगतत्वावश्यम्भावात् आत्मत्वं न जातिः। ननु विशिष्टात्मनां जीवानां बहूनां सत्त्वात् तदनुगतमात्मत्वं जातिर्भविष्यतीति चेत् ? न, विशिष्टात्मनां जीवानां भेदेऽपि—नानात्वेऽपि तेषां जीवानां पक्षकुक्षिनिक्षिप्तत्वात् तत्र चानात्मत्वस्य हेतोरसत्त्वेन भागासिद्धिः स्यादिति भावः।

नापि अनात्मत्वमनानन्दरूपत्वम्, आनन्दस्य आत्मरूपत्वाभावादानन्दभिन्नत्वं न अनात्मत्वम्। जन्मादिमति वैषयिकानन्दे आनन्दभिन्नत्वस्य अनानन्दरूपत्वस्य हेतोरभावात् हेतोर्भागासिद्धिः स्यात्। वैषयिकानन्दस्य जन्मादिमतः मिथ्याभूतस्य मिथ्यात्वानुमाने पक्षान्तर्गतत्वात् तत्र च आनन्दभिन्नत्वस्य हेतोरसत्त्वादिति भावः। वैषयिकानन्दस्यापि आत्मत्वे अज्ञानपक्षोक्तदोषः प्रसञ्जनीय

मैवम्, द्वितीयतृतीयपक्षयोः दोषाभावात् ।

---

इति । अनानन्दत्वस्य हेतोर्भागासिद्धिपरिहाराय वैषयिकानन्दस्यापि यदि आत्मत्वमङ्गीक्रियेत, तर्हि अज्ञानपक्षोक्तदोषः प्रसञ्जनीयः । अज्ञानत्वं जडत्वमिति द्वितीयपक्षनिरसनप्रस्तावे केवलायाः वृत्तेः केवलचैतन्यस्य च अज्ञानत्वेन चैतन्यव्यभिचारः स्यादित्युक्तं, तद्वदेवात्रापि केवलायाः चितः अनानन्दत्वेन केवलायां चिति अनानन्दत्वस्य हेतोर्व्यभिचार एव स्यात् । मिथ्यात्वसाधकहेतोः केवलायां चिति तदैव व्यभिचारो भवितुमर्हति, यदि केवला चित् सत्यभूता स्यात् । तस्या असत्यत्वे अस्य हेतोर्व्यभिचारो न स्यादित्यर्थः । एतेन केवलचिदन्यस्य सर्वस्यैव मिथ्यात्वसूचनेन वैषयिकानन्दे चिद्भिन्नत्वघटितपक्षतावच्छेदकवति मिथ्यात्वसाधकहेतोरनानन्दत्वस्याभावाद् भागासिद्धिरपि प्रदर्शितेति भावः ।

अज्ञानत्वं जडत्वमिति पक्षे भागासिद्धेरसम्भवेऽपि अस्मिन् पक्षे भागासिद्धिरपि अधिको दोषः ॥१॥

पूर्वपक्षः समाप्तः ॥

२—समाधत्ते सिद्धान्ती—मैवमिति । अज्ञानपक्षोक्तदोषः प्रसञ्जनीय इति चेन्न इत्यनुक्त्वा मैवमिति एवकारं प्रयुञ्जानः अतिविप्रकृष्टस्य प्रथमपक्षस्य दुष्टत्वेनापरिष्करणीयत्वं सूचयति । ननु यथाश्रुतौ द्वितीयतृतीयपक्षावपि दुष्टावेव तयोः परिष्करणेन निर्दोषत्वसम्भवे प्रथमपक्षस्यापि निर्दोषत्वं समर्थयितुं शक्यते । अतः प्रथमपक्षपरित्यागे को हेतुरिति चेत् ? शृणु, यथा द्वितीयपक्षे अज्ञानत्वं नाम ज्ञानपदवाच्यभिन्नत्वम्, ज्ञानपदवाच्यं च वक्ष्यमाणरीत्या ज्ञानपदजन्यधीमुख्यविशेष्यम् । तद्भेदो हेतुत्वेन निर्दिश्यते । न तथा अज्ञातृत्वरूपप्रथमपक्षस्य ज्ञातृपदजन्यधीमुख्यविशेष्यत्वेन ज्ञातृपदमुख्यार्थस्य भेदो हेतुः सम्भवति । ज्ञातृत्वं नाम ज्ञानानुकूलव्यापारवत्त्वम् । ज्ञातृपदजन्यधीमुख्यविशेष्यत्वं यथा चिति वर्तते, तथा मनस्यपि । मनसोऽपि ज्ञातृपदजन्यधीमुख्यविशेष्यत्वादज्ञातृत्वस्य हेतोर्मनस्यसत्त्वाद् भागासिद्धिः स्यात् । अतः अज्ञानत्वहेतुपरिष्करणरीत्या अज्ञातृत्वहेतोः परिष्करणं न सम्भवति इति प्रथमः पक्षः आचार्येण परित्यक्तः । आह चाचार्यः—द्वितीयतृतीयपक्षयोर्दोषाभावादिति । द्वितीयतृतीयपक्षयोरपि पूर्व-

तथा हि "अज्ञानत्वं जडत्वमि"ति पक्षे नात्मनि व्यभिचारः, अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेन मोक्षदशायामपि तदनपायात्।

---

पक्षिणा दोषे प्रदर्शिते कथं तयोर्दोषाभावः? इत्यत आह—तथा हीति। अद्वैतसिद्धान्तरहस्यमज्ञात्वा तयोः पक्षयोर्दोषे प्रदर्शितेऽपि सिद्धान्तरहस्ये प्रदर्शिते दोषाः स्वयमेव निर्वास्यन्ति—इत्यभिप्रेत्य सिद्धान्तरहस्यं प्रदर्शयिष्यन्नाह—अज्ञानत्वं जडत्वमितिपक्षे नात्मनि व्यभिचार इति। "आत्मैवास्य ज्योतिः" इत्यादिश्रुतेर्ज्ञानात्मभेदे तात्पर्याद्व्यवहर्तुर्व्यवहारसाधनं प्रकाश आत्मैवेति श्रुत्यर्थमनुसरता आचार्येणार्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेन मोक्षदशायामपि तदनपायादित्युक्तम्। अत्र पूर्वपक्षिणो मन्यन्ते—आत्मरूपं ज्ञानं सविषयमेव वक्तव्यम्, निर्विषयज्ञानासम्भवात्। आत्मरूपस्यापि ज्ञानस्य सविषयत्वनियमेन मुक्तौ स्वातिरिक्तविषयाभावान्मुक्तौ आत्मरूपं ज्ञानमपि न स्यात्, ज्ञानत्वस्य सविषयकत्वव्याप्यत्वात्। मुक्तौ आत्मस्वरूपज्ञाने सविषयकत्वं व्यावर्त्तमानं ज्ञानत्वमपि व्यावर्तयेत्। पूर्वपक्षिणः शङ्कामिमामपाकुर्वन्नाह—अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेनेति। अयम्भावः—वस्तुतो निर्विषय एव चैतन्यरूपः प्रकाशः, तत्तद्विषयावच्छेददशायां तस्य तस्य विषयस्यावभास इति न मुक्तो तस्य तस्य ज्ञानस्वरूपत्वानुपपत्तिः। न चार्थप्रकाशत्वं ज्ञानत्वं कथं विषयाभावे स्यादिति वाच्यम्, अर्थसम्बन्धदशायामर्थप्रकाशस्यैव तस्य मुक्तावपि सत्त्वात्। उक्तञ्च ब्रह्मणो ज्ञानत्वाद्युपपत्तिप्रकरणे आचार्येण—अर्थप्रकाशत्वमेव ज्ञानत्वम्, मुक्तौ अर्थाभावेऽपि तत्संसृष्टप्रकाशत्वस्य कदाचिदर्थसम्बन्धेनापि अनपायात्। प्रदीपप्रकाशादिव्यावृत्तस्वरूपविशेषस्यैव ज्ञानलक्षणत्वेनार्थपदवैयर्थ्याच्च। अर्थप्रकाशस्यापि ज्ञानस्य प्रदीपप्रकाशादिव्यावृत्तस्वरूपविशेषानङ्गीकारे पराभिमतज्ञानस्यापि ज्ञानधर्मत्वे व्यवस्था न स्यात्। ज्ञानस्वरूपविशेषातिरिक्तज्ञानत्वव्यवस्थापकाभावात्। ज्ञानव्यक्तौ ज्ञानत्वं समवैति—इति वदन् प्रष्टव्यः—का ज्ञानव्यक्तिः, यस्यां ज्ञानत्वं समवैति? ज्ञानत्ववतीति चेत्? आत्माश्रयः स्यात्। ज्ञानत्ववति ज्ञानत्वं समवैतीत्युक्ते व्यक्तमात्माश्रयत्वमतो ज्ञानत्वजात्यङ्गीकारपक्षेऽपि व्यक्तिविशेषोऽवश्यमेवाङ्गीकर्तव्यः यस्मिन् व्यक्तिविशेषे ज्ञानत्वं समवैति व्यक्तिविशेषं विना ज्ञानत्वमस्यैव धर्म'इति नियन्तुमशक्यत्वात्। एतेन ज्ञानत्वाभावे किं नाम ज्ञानम्? तत्सत्त्वे वा अद्वितीयत्वक्षतिरिति प्रत्युक्तम्।

ज्ञानत्वजातिविशेषव्यवस्थापकव्यक्तिविशेषस्यैव ज्ञानस्य स्वरूपलक्षणत्वात्। व्यक्ति-विशेषस्यापि इतरव्यावर्तकतया स्वरूपलक्षणत्वोपपत्तेः। अत एव

["अर्थप्रकाशरूपत्वं ज्ञानत्वं ब्रह्मणः कथम्।
अन्यार्थाभावतो मोक्षे स्वेन स्वस्याप्यवेदनात्" ॥ ]

इति न्यायामृतकृदुक्तं निरस्तम्। एतेन यत् केनचिदुक्तम्—ज्ञानत्वानधि-करणमपि ज्ञानं चेत् ज्ञानानधिकरणमपि ज्ञात्रात्मकमस्तु इति तदपि परास्तम्, ज्ञानत्व-वन्निर्धर्मकज्ञानाभ्युपगमे बाधकाभावात् ज्ञानस्यैकत्वात् अत्र ज्ञानत्वसामान्याभावात्। उक्तञ्च किरणावल्याम्—यद्येवम् अकाशादिशब्देभ्यः परस्य त्वतलादेर्निरर्थकत्व-मापद्येतेति चेन्न आकाशस्य स्वरूपमितिवदौपचारिकत्वादिति [पृ० १०५]। आका-शादिपदोत्तरत्वप्रत्ययस्येव ज्ञानपदोत्तरत्वप्रत्ययस्यापि औपचारिकत्वमेव। यत्त्वा-धुनिकाः शब्दाश्रयत्वाद्येवाकाशत्वमाहुः तदाचार्योक्तिविरोधादुपेक्ष्यम्। किरणा-वल्याञ्च "यः शब्दाश्रयः तदाकाशमित्येवं तु शब्दाश्रयत्वमेवोपाधिः स्यात, न, शब्दाश्रयत्वस्योपलक्षणतया तटस्थत्वात्। अयमसौ देवदत्त इत्यत्रेदन्तावत्। अन्यथा शब्दगुणकमाकाशमिति सह प्रयोगो न स्यात्।"

किञ्च ज्ञाने ज्ञानत्वानभ्युपगमे किमनुगतव्यवहारानुपपत्तिः? किं वा ज्ञान-स्येतरभेदानुपपत्तिः? किं वा तदसाधारणधर्माभावे तस्य वस्तुत्वानुपपत्तिः? न, सर्व-थापि उपपत्तेः। पराभिमतज्ञानत्वसामान्ये तद्गतासाधारणधर्माभावेऽपि उक्तस्य सर्वस्योपपत्तिवत् एकज्ञानस्वरूपादेव ततसर्वोपपत्तेः सम्भवात्। ननु ज्ञानत्वेऽपि ज्ञानत्वत्वरूपोऽसाधारणधर्मस्तद्व्यावर्तकोऽस्तीति चेन्न ज्ञानत्वस्य एकव्यक्तित्वात् तत्र ज्ञानत्वत्वजातेरसम्भवात्। ननु ज्ञानत्वत्वस्य जातित्वाभावेऽपि तस्य ज्ञानेतरा-वृत्तित्वे सति सकलज्ञानवृत्तित्वरूपोपाधित्वसम्भव इति चेन्न, किञ्चिद्धि वस्तु स्वतो व्यावृत्तमितिन्यायेन ज्ञानत्वे व्यावर्तकधर्मान्तराभावात् अन्यथा जात्या व्यावृत्ता व्यक्तिर्जातिं व्यावर्तयिष्यति व्यक्त्या च व्यावृत्ता जातिर्व्यक्तिं व्यावर्तयिष्यतीति परस्पराश्रयापत्तेः। ज्ञानत्वे प्रदर्शितोपाधेरङ्गीकारे ज्ञानेतराद्यनेकपदार्थात्मकस्य सखण्डोपाधेर्ज्ञानत्वासाधारणधर्मत्वाऽयोगात्। किञ्च ज्ञानत्वस्य घटत्वादितो भेद-ग्रहे सत्येव ज्ञानत्वे ज्ञानेतरावृत्तित्वलक्षणव्यावर्तकधर्मग्रहः। ज्ञानेतरवृत्तिधर्मो घटत्वादिः तद्भिन्नत्वं ज्ञानत्वस्य एवं ज्ञानत्वे घटत्वादिव्यावर्तकधर्मग्रहे च ज्ञानत्वस्य

घटत्वादितो भेदग्रह इति परस्पराश्रयापत्तेः एवं तत्तद्धर्मेषु तथाविधाप्रामाणिकानन्तधर्मकल्पनागौरवात्। प्रमेयत्वादौ एतादृशप्रमेयत्वत्वादिधर्मासम्भवाच्च। प्रमेयेतराप्रसिद्धेः। एवञ्च ज्ञानव्यक्तीनां नानात्वाभ्युपगमेऽपि ज्ञानत्वं निर्धर्मकमेव, स्वरूपविशेषादेव इतरव्यावृत्तमनुगतज्ञानालम्बनञ्चेति अन्यैरप्यवश्यमभ्युपेयम् एवमस्मन्मते ज्ञानमपि निर्धर्मकं स्वरूपविशेषादेवेतरव्यावृत्तम् अनुगतज्ञानालम्बनञ्चेति न कोऽपि दोषः।

श्रुत्या युक्त्या च भेदमात्रस्य धिक्कृतत्वान्निरस्तभेकमद्वितीयं तत्त्वमवतिष्ठते तच्च स्वप्रकाशरूपमित्यकामेनाप्यभ्युपगन्तव्यम् अन्यथा शून्यवादिमतप्रवेशः स्यात्। शून्यवादे च सिद्धिबाधव्यवस्थाया असम्भवात् शून्यमपि न सिध्येत किञ्चित्तत्त्वमनुपस्थाप्य कस्यचिन्निषेधासम्भवात् शुक्तिरजतयोर्द्वयोरवस्तुत्वे शुक्तिज्ञानेन रजतस्य निषेधायोगादन्यथा वैपरीत्यापत्तेर्बाधव्यवस्था न स्यात्। बाधव्यवस्थाया असम्भवे शून्यवादस्य मुखदर्शनमपि दुष्करमापद्येत। सर्वबाधे हि शून्यता स्यात्। एवञ्च भेदमात्रनिरसनेनावतिष्ठमानं स्वप्रकाशरूपं तत्त्वमेव ज्ञानरूपम् "सत्यं ज्ञानमनन्तंब्रह्म" त्यादिश्रुत्या निर्दिश्यते। उक्तञ्च आत्मतत्त्वविवेके—"स्वतःसिद्धतया तदनुभवरूपम् अत एव तन्निर्धर्मकमिति विचारास्पृष्टम्" इत्यादि [पृ० ५०२] औपनिषद्रहस्यम्। निरस्तभेदे एकस्मिन् अद्वितीये स्वप्रकाशे चिद्रूपे वस्तुन्यध्यस्तासु वृत्तिष्वनुगच्छत् चिद्वस्तु वृत्तिरूपव्यक्तिविशेषानुगततया भासमानं सद्‌ज्ञानसामान्यमिति ज्ञानत्वजातिरिति व्यवह्रियते स्थूलदर्शिभिः। तथा वस्तुतः गगनस्थचन्द्रस्यैकत्वेऽपि जलतरङ्गोपाधिकल्पितभेदा बहवश्चन्द्राः सन्तीति तावच्चन्द्रानुगतं चन्द्रत्वसामान्यं प्रत्यक्षतो गृह्यते। उपशान्तेषु पुनर्जलतरङ्गेषु बिम्बचन्द्रात्मना स्थितेषु तरङ्गचन्द्रेषु चन्द्रानुवृत्तिप्रत्ययाभावात् प्रागनुभूतं चन्द्रत्वसामान्यं अनुवृत्तिप्रत्ययाभावात् गगनचन्द्रात्मना अवतिष्ठते एकमेव वस्तुकल्पितनानोपाधिषु सामान्यात्मना स्फुरति उपाधिविगमे तदेव सामान्यमकल्पितवस्त्वात्मना व्यवतिष्ठते तदानीं कल्पितसामान्यरूपास्फुरणे व्यक्तिविशेषात्मना व्यवस्थितावपि समान्यवाचिपदलक्ष्यत्वमक्षतमेव यथा तरङ्गचन्द्रसमूहमादाय चन्द्रत्वसामान्यवाचिचन्द्रपदस्य लक्ष्यत्वं गगनचन्द्रे। एवं ज्ञानत्वसामान्यवाचिज्ञानपदस्य लक्ष्यत्वं वृत्त्यनुगतत्वेन प्राक्स्फुरितस्य चिद्वस्तुनोऽक्षतमेव। एकस्मिन् गगनचन्द्रे

न च अभावे सप्रतियोगित्ववदिच्छाज्ञानादिष्वपि सविषयकत्वस्य स्वाभाविकत्वादिच्छायामिव ज्ञानेऽपि तस्य समानसत्ताकत्वमिति वाच्यम्; ज्ञानस्य हि सविषयत्वं विषयसम्बन्धः, स च न तात्त्विकः;

---

चन्द्रत्वसामान्याभावेऽपि यथा तस्य नाचन्द्रत्वम्, एवं ज्ञानत्वसामान्याभावेऽपि चिद्वस्तुनो नाज्ञानत्वम् एकैव चित् वृत्त्यनुगततया भासमाना ज्ञानत्वसामान्यमिव लक्ष्यते यच्च व्यावहारिकं ज्ञानत्वसामान्यं तच्चिदभिव्यञ्जकवृत्तिष्वेव न चिति तस्या एकत्वान्निर्धर्मकत्वाच्च एवमेवानन्दत्वसामान्यमपि बोध्यम्। एतच्च परिच्छिन्नत्व-हेतूपपादनप्रकरणे प्रपञ्चयिष्यते। अर्थप्रकाशत्वं ज्ञानस्य न स्वरूपलक्षणम्, किन्तु तटस्थलक्षणं तत्, यथा पृथिव्या गन्धवत्त्वम्। कदाचित् गन्धराहित्येऽपि पृथिवी-त्वस्यानपायात् तस्मात् कदाचिदर्थप्रकाश[त्व]स्यापि ज्ञानत्वं न विरुध्यते तत एव जडव्यावृत्तिरपि जडस्य अनेवंरूपत्वात् कदाचिदर्थप्रकाशरूपत्वाभावादिति भावः। अत एवोक्तमर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेनेति। प्रकाशेन सहार्थस्य स्वाभाविकः सम्बन्ध इत्यभिमानेन अर्थप्रकाशयोः काल्पनिकसम्बन्धमसहमानः पूर्व-पक्षी शङ्कते—अभावे सप्रतियोगिकत्ववदित्यादि। यथा अभावे प्रतियोगि-सम्बन्धः स्वाभाविकः, यथा वा इच्छाद्वेषादीनां विषयेन सम्बन्धः स्वाभाविकः, एवमेव ज्ञानस्य विषयेन सम्बन्धः स्वाभाविक एव। यथा गगने नैल्यमारोपितम्, नैवं ज्ञाने विषयसम्बन्धः। अभावादीनां प्रतियोग्यादिभिः सह सम्बन्धो यथा अभावादिसमानसत्ताकस्तथैव ज्ञानेऽपि विषयसम्बन्धो ज्ञानसमानसत्ताकः। विषय-सम्बन्धस्य ज्ञानसमानसत्ताकत्वे मोक्षेऽपि आत्मस्वरूपज्ञाने विषयसम्बन्धोऽवश्य-म्भावीत्यभिप्रेत्याह—अभावे सप्रतियोगिकत्ववदिच्छाज्ञानादिष्वपि सविषय-कत्वस्य स्वाभाविकत्वात् इच्छायामिव ज्ञानेऽपि तस्य विषयसम्बन्धस्य समानसत्ताकत्वमिति।

सिद्धान्ती समाधत्ते—पूर्वपक्षिणा नैवं वाच्यम्, कुतो नैवं वाच्यम्? इत्यत आह सिद्धान्ती—ज्ञानस्य सविषयकत्वं यत् स्वाभाविकमुक्तं पूर्वपक्षिणा, तत् सविष-यकत्वं ज्ञानविषययोः सम्बन्धं विहाय अन्यत् निरूपयितुं न शक्यते। अतः ज्ञाने विषयसम्बन्ध एव ज्ञानस्य सविषयकत्वं वक्तव्यम्। स च ज्ञाने विषयसम्बन्धः तात्त्विको न भवितुमर्हति पारमार्थिको न भवितुमर्हतीत्यर्थः। कुतः पारमार्थिकः

किन्त्वाध्यासिकः; वक्ष्यमाणरीत्या तात्विकसम्बन्धस्य निरूपयितुमशक्यत्वात्; अतो न तस्य स्वाभाविकत्वम्; नहि शुक्तौ रूप्यं स्वाभाविकम्। एवञ्च ज्ञानोपाधिकस्यैव सविषयत्वस्य इच्छादिष्वभ्युपगमात्

---

सम्बन्धो न भवितुमर्हति इत्याह—वक्ष्यमाणरीत्येति। वक्ष्यमाणदृग्दृश्यभङ्गप्रकरणोक्तरीत्या ज्ञाने विषयसम्बन्धस्य तात्त्विकस्य निरूपयितुमशक्यत्वात् ज्ञानविषययोराध्यासिकः सम्बन्ध एव वक्तव्यः। अद्वैतरत्नरक्षणे [पृ० २३] जगत्कवलनयुक्तिप्रदर्शनप्रस्तावे अयमर्थः आचार्येणैव स्पष्टीकृतः। अतो न तस्य सविषयकत्वस्य स्वाभाविकत्वं ज्ञानसमानसत्त्वाकत्वमिति यावत्। दृष्टान्तावष्टम्भेनामुमर्थं स्पष्टयति—न हि शुक्तौ रूप्यमिति यथा शुक्तौ रजतसम्बन्धः न स्वाभाविकः न शुक्तिसमानसत्ताकः, किन्तु आध्यासिक एव। अतः रजतसम्बन्धं परित्यज्यापि शुक्तिर्वर्तते, नहि रजतसम्बन्धाभावे शुक्तेः शुक्तित्वं हीयते, तथा मोक्षदशायामात्मस्वरूपज्ञाने आध्यासिकविषयसम्बन्धाभावेऽपि तस्य ज्ञानत्वं न हीयते। अतोऽज्ञानत्वस्य हेतोर्मोक्षदशायामात्मस्वरूपज्ञाने असत्त्वान्नाज्ञानत्वस्य हेतोर्व्यभिचार इति भावः।

यच्चाशङ्कितं पूर्वपक्षिणा—इच्छाज्ञानादिष्वपि सविषयकत्वस्य स्वाभाविकत्वादित्यादि, तत्समाधत्ते—एवञ्च ज्ञानोपाधिकस्यैवेति। इच्छादेर्विषयसम्बन्धो न स्वाभाविकः, किन्तु ज्ञानोपाधिकः। इच्छादिजनकज्ञानीयविषयत्वमेव इच्छादेर्विषयेषु सम्बन्धः। इच्छा स्वातन्त्र्येण विषयेण सह सम्बद्धुं न शक्नोति। किन्तु इच्छादिजनकज्ञानविषयत्वमेव विषयेण सह इच्छादेः सम्बन्धः। अज्ञाते इच्छादेरसम्भवात्। अतएवोक्तं प्राचीनैः—"इच्छादेर्विषयत्वन्तु याचितमण्डनन्यायेने"ति। आत्मतत्त्वविवेकटीकायां शङ्करमिश्रैरप्युक्तम्—"एतादृशी च सविषयता इच्छाकृत्योरपि, परन्तु न सा स्वाभाविकी, किन्तु ज्ञानोपाधिकी। ज्ञानस्य तु स्वाभाविकीति विशेषः। अत एव विषयप्रवणत्वं ज्ञानस्यैव, न तु तयोः इच्छाकृत्योरि" ति [पृ० ५०९]। ज्ञानविषययोस्तादात्म्यस्यैव विषयतात्वस्य क्लृप्ततया ज्ञानीयतादात्म्यमेव इच्छायाः विषयेषु सम्बन्धः। यद्यपि स्वजनकज्ञानीयतादात्म्यत्वेन तादात्म्यस्य नेच्छायाः विषये सम्बन्धत्वम्, घट इष्टसाधनम्, पटश्च द्रव्यमित्याकारकसमूहालम्बनज्ञानविषये घटो मे जायतामित्याका-

न तरां तत्र तस्य स्वाभाविकत्वम् ॥२॥

न चैवं—ज्ञानवद् विषयसम्बन्धं विनापि कदाचिदिच्छायाः सत्त्वापत्तिरिति वाच्यम्; सविषयत्वप्रयोजकोपाध्यपेक्षया अधिकसत्ताकत्वस्य तत्र प्रयोजकत्वात्, इच्छायाश्च तत्समानसत्ताकत्वात्। न च

---

रिकाया इच्छायाः पटादावपि विषयत्वप्रसङ्गात्, इच्छाजनकज्ञानविषयतायाः पटेऽपि सत्त्वात्, तथापि इच्छाजनकतावच्छेदकं ज्ञानीयविषयत्वमिच्छायाः विषयेण सम्बन्धः। प्रदर्शितसमूहालम्बनज्ञाने या इच्छाजनकता वर्तते, सा घटविषयत्वेनैवावच्छिद्यते, न पटविषयकत्वेनेति न प्रदर्शितदोषावकाशः। ज्ञानोपाधिकस्यैव सविषयत्वस्य इच्छाकृत्यादिषु अभ्युपगमात् न इच्छादिषु विषयसम्बन्धस्य स्वाभाविकत्वम्। इच्छादिजनकज्ञाने विषयसम्बन्धस्याध्यासिकत्वात् ज्ञानजन्येच्छादिषु तस्यैव विषयसम्बन्धत्वादिच्छादिषु विषयसम्बन्धस्य स्वाभाविकत्वं सुतरां न सम्भवति—इत्यभिप्रायेणाह आचार्यः—नतरामिति ।।२॥

३—अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेन मोक्षदशायामपि तदनपायादिति आचार्योक्तममृष्यमाणः पूर्वपक्षी शङ्कते एवं ज्ञानवदिति। अद्वैतवादिमते ज्ञाने विषयसम्बन्धस्याध्यासिकत्वादध्यासमात्रस्य चाविद्याप्रयुक्तत्वात् मोक्षदशायामविद्याया निवृत्तौ निरस्तविषयाध्यासं ज्ञानमात्रं यथा मोक्षदशायां तिष्ठति, एवमिच्छाया अपि कदाचिद् विषयसम्बन्धं विना सत्तापत्तिः, निर्विषयज्ञानवत् निर्विषयिणी इच्छापि कदाचित् स्यादिति पूर्वपक्षिणा न च वाच्यम्, ज्ञाने सविषयकत्वप्रयोजकोपाधिरविद्या, एवमेव विषयाकारान्तःकरणवृत्तिः विषयाकारान्तःकरणवृत्तिमदन्तःकरणं सुखादयश्च विषया ज्ञाने सविषयकत्वप्रयोजकोपाधयः। अविद्योपाधिप्रयुक्त एव ज्ञाने विषयसम्बन्धः। अविद्योपाध्यपेक्षया सत्यज्ञानस्वरूपस्य अधिकसत्ताकत्वादविद्योपाधेरसत्त्वदशायामपि ज्ञानस्वरूपस्यानपायात्। नहि मिथ्याभूताविद्यापाये परमार्थसत्यं ज्ञानस्वरूपमुपैति। तत्रैव सविषयकत्वप्रयोजकोपाधेरपाये सविषयकोऽपि इच्छादिरपैति, यत्र सविषयकत्वप्रयोजकोपाधिः सविषयकेच्छादिसमानसत्ताकः। न्यूनसत्ताकोपाधेरपाये अधिकसत्ताकस्य ज्ञानस्यापायो न भवति। इच्छादेः सविषयकत्वप्रयोजकोपाधिः इच्छाविषयविषयकज्ञानाद्यान्तःकरण-

त्वया मोक्षावस्थायामात्मनो निर्विषयत्वाङ्गीकाराद् आनन्दाप्रकाशे

---

वृत्तिरूपः इच्छादेः समानसत्ताकः इच्छादेरन्तःकरणवृत्तिमात्रत्वेन तस्य सत्यत्वानुपपत्तेः अतो न ज्ञानवृद्धिविषयसम्बन्धं विनापि इच्छादेः सत्तापत्तिरिति भावः।

मोक्षदशायां पूर्णानन्दस्य साक्षात्काराभावे मोक्षस्यापुरुषार्थत्वप्रसङ्ग इति पूर्वपक्षी शङ्कते—**त्वया मोक्षावस्थायामिति**। त्वया अद्वैतवेदान्तिना मोक्षावस्थायामात्मनो निर्विषयप्रकाशरूपत्वाङ्गीकारादात्मप्रकाशेन पूर्णानन्दस्याप्रकाश्यत्वात् पूर्णानन्दविषयकसाक्षात्काराभावे मोक्षस्यापुरुषार्थत्वप्रसङ्गः—इति पूर्वपक्षिणा न च वाच्यम् मोक्षदशायामानन्दविषयकप्रकाशाभाव इष्ट एव; आनन्दस्य प्रकाश्यत्वे मिथ्यात्वापातात् आनन्दविषयकप्रकाशरूपत्वाभावेऽपि मोक्षस्य पुरुषार्थत्वं पूर्णानन्दावरणविरोधिवृत्तिविशिष्टत्वरूपेण। संसारदशायां पूर्णानन्दरूपस्यात्मन आवरणं यदज्ञानम्, तद्विरोधिनी वृत्तिस्तत्त्वमस्यादिवेदान्तवाक्यजन्याखण्डाकारा चित्तवृत्तिः, तद्वृत्तिविशिष्टत्वरूपेण मोक्षस्य पुरुषार्थत्वम्। यद्यपि विदेहमुक्तिकाले तादृशवृत्तिविशिष्टत्वमप्यात्मनि नास्ति, तथापि तादृशवृत्तिकाले आत्मनो वृत्तिविशिष्टत्वस्य सत्त्वात् तादृशवृत्तिविशिष्टत्वेन आत्मनः पुरुषार्थत्वात् तदुद्देशेन मोक्षसाधनानुष्ठानसम्भवः। पूर्णानन्दांशावरणाज्ञाननिवर्तकवृत्तेरज्ञानावरणनिवर्तनेनात्मनः सदा परमपुरुषार्थत्वरूपपूर्णानन्दरूपतासम्पादकत्वादुक्तवृत्त्युद्देशेन श्रवणाद्यनुष्ठानम्। आनन्दावरणनिवर्तकवृत्तेः क्षणिकत्वेऽपि न मोक्षस्य क्षणिकपुरुषार्थत्वम्, उक्तवृत्त्या अज्ञानावरणनिवृत्तौ आत्मनः सर्वदा पूर्णानन्दरूपेणावस्थानादिति भावः। पूर्णानन्दप्रकाशयोरभेदान्न तयोर्विषयविषयिभावः, आनन्दस्वरूपप्रकाशस्यैव पुरुषार्थत्वात्। तदेतत् "प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मा" "यो वै भूमा तत्सुखम्", "एष एव परमानन्दः", विज्ञानमानन्दं ब्रह्म", "आनन्दो ब्रह्मेति व्यजनात्" इत्यादिभिः श्रुतिभिः तस्यात्मनः परमानन्दरूपत्वोपदेशात्। तस्य चानन्दस्य नित्यत्वेऽपि लोके धर्मजन्यतत्तदन्तःकरणवृत्तिव्यञ्जकतया आनन्दस्योत्पत्तिविनाशोपचार आनन्दव्यञ्जकवृत्तेरुत्पत्तिविनाशाभ्याम्। अज्ञानमात्रव्यवहितस्य परमानन्दस्याप्राप्तस्येव ज्ञानमात्राद्विद्यानिवृत्त्या प्राप्तिरिव भवति—इति तदुद्देशेन मुमुक्षुप्रवृत्त्युपपत्तिः।

ननु मोक्षे सुखं संवेद्यते न वा? नाद्यः, तदानीं देहेन्द्रियाद्यभावेन सुखव्य-

तदपुमर्थत्वं स्यादिति वाच्यम्; तदा ह्यानन्द एव प्रकाशो न त्वानन्दस्य

---

ञ्जकाभावात्, व्यञ्जकाभावेऽपि सुखसंवेदनाभ्युपगमे संसारदशायामपि तथा प्रसङ्गात्। न द्वितीयः, अपुरुषार्थतापत्तेः, ज्ञायमानस्यैव सुखस्य पुरुषार्थत्वात्। अत एव शर्करातद्भोजिनोरिवेति वैष्णवम्मन्यानामुद्गारः। यथा शर्करा स्वरूपेण न सुखप्रकाशः, तत्प्रयोजकस्य शर्करासम्वेदनस्याभावात्, किन्तु शर्कराभोजिनः शर्करासम्वेदनवतः, एवं विष्णुभावापन्नस्य सुखरूपत्वेऽपि न सुखप्रकाशः, तत्सम्वेदनाभावात्, किन्तु विष्णुभेदेनावस्थितस्य "अयं विष्णुः सकलकल्याणगुणो मत्सेव्यः" इति संवेदनवतः। तस्माद् विष्णुभावे न मोक्षः, किन्तु तत्सन्निधिस्थितस्य तत्सम्वेदनम्—इत्येतदसत्, एतन्मतमाश्रिता माध्वा वैष्णवम्मन्या एव, न तु वैष्णवाः।

"तदेतदुपदिष्टं ते संक्षेपेण महामुने।
परमार्थं सारभूतं यदद्वैतमशेषतः॥
तद्भावभावनापन्नस्ततोऽसौ परमात्मना।
भवत्यभेदो भेदश्च तस्याज्ञानकृतो भवेत्॥"

इति विष्णुपुराणाद्युक्तेः 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादि श्रुतेश्च मोक्षे स्वप्रकाशज्ञानानन्दरूपत्वप्रतिपादनात्। संसारदशायामविद्यावृतस्वरूपत्वादात्मा परमानन्दरूपतया न प्रकाशते। विद्ययाऽविद्यानिवृत्तौ स्वप्रकाशतया स्वयमेव परमानन्दतया प्रकाशते—इति न मोक्षे परमानन्दप्रकाशाय व्यञ्जकापेक्षा। पूर्णानन्दप्रकाशस्यैव परमपुरुषार्थत्वान्न स्वसमवेततया आनन्दप्रकाशस्य पुरुषार्थत्वम्। स्वसमवेतत्वांशस्यापुरुषार्थत्वेन व्यर्थत्वात् गुरुत्वापादकत्वात् श्रुतिविरुद्धत्वाच्च। स्वतन्त्रकामनागोचरस्यैव पुरुषार्थत्वात् कामनायाश्च सुखतत्साधनान्यतरविषयत्वाद्भेदसमवाययोश्च तदन्यतरत्वाभावात्। न चैवमेव लोकेऽनुभूयते इति वाच्यम्, लोके सम्वेद्यसुखस्य पुरुषार्थत्वे दुःखशतसामानाधिकरण्यमपि दृष्टम्, साधनपारतन्त्र्यं क्षयित्वञ्च दृष्टम्—इति मोक्षसुखेऽपि तथा कल्पने साधीयान् मोक्षः स्यात्। शर्करायां जडत्वेन स्वप्रकाशत्वाभावादसम्वेद्यशर्करायाः पुरुषार्थत्वाभावेऽपि सुखस्य स्व काशरूपत्वात् प्रकाशाभिन्नस्य सुखस्य प्रकाश्यत्वासम्भवादनावृतस्व-

प्रकाशत्वम्, अर्थोपलक्षितप्रकाशत्वं वा तदास्त्येवेति न ज्ञानत्वहानिरित्युक्तम् ॥३१॥

---

प्रकाशसुखस्वरूपस्य परमपुरुषार्थत्वम्। अभाग्यतया स्वप्रकाशेऽपि सुखे, जडशर्करासाम्यमापाद्य तत्त्ववैमुख्यमाश्रिताः वैष्णवम्मन्याः शोच्या एव। सिद्धान्तबिन्दौ नवमश्लोकव्याख्याने प्रपञ्चितश्चायमर्थः स्वयमेवाचार्येण। पूर्वपक्षिणा अधुनैव न मनः खेदनीयम्, अद्वैतसिद्धेश्चतुर्थपरिच्छेदे मुक्तेरनावृतानन्दरूपत्वेन पुरुषार्थत्वमिति स्वयमेवाचार्येण प्रदर्शयिष्यते।

विदेहमुक्तिकाले विषयस्य तदाकारवृत्तेश्चाभावेन विषयाकारवृत्तिविशिष्टचैतन्यस्यैव अद्वैतसिद्धान्ते ज्ञानत्वात्तदा आत्मरूपप्रकाशे सत्यपि प्रदर्शितज्ञानत्वाभावादज्ञानत्वहेतोः विदेहमुक्तावात्मनि व्यभिचारः स्यादित्याशङ्क्याह आचार्यः प्रकाशत्वमिति। विदेहमुक्तावपि प्रदर्शितेन ज्ञानत्वेनोपलक्षितस्य स्वरूपस्य विद्यमानत्वान्नाज्ञानत्वहेतोर्व्यभिचारः। प्रदर्शितरूपं न ज्ञानत्वम्, किन्तु प्रकाशत्वमेव ज्ञानत्वम्। तच्च प्रदर्शितज्ञानत्वोपलक्षितस्वरूपत्वमित्यर्थः। विदेहमुक्तिकाले आत्मनो ज्ञानत्वोपलक्षितस्वरूपत्वमावश्यकम्। तत्सम्बन्धोत्तरकालीनप्रतियोग्यसमानाधिकरणतदभाववत्त्वं हि तदुपलक्षितत्वम्। व्यवहारदशायां चैतन्ये ज्ञानत्वसम्बन्धोत्तरकालीनप्रतियोग्यसमानाधिकरणज्ञानत्वात्यन्ताभाववत्त्वस्य सत्त्वाद्विदेहमुक्तौ ज्ञानत्वोपलक्षितस्वरूपत्वमस्त्येव। एवञ्च विदेहमुक्तावात्मरूपप्रकाशस्य न ज्ञानत्वहानिः न वा "सत्यं ज्ञानमि"त्यादि श्रुतेर्व्याकोपः। विवेचितञ्चैतत् पूर्वम्।

प्रकाशत्वमेव ज्ञानत्वमित्युक्त्वा अर्थोपलक्षितप्रकाशत्वं वा ज्ञानत्वमित्याह आचार्यः—अर्थोपलक्षितप्रकाशत्वं वेति। अत्रार्थपदं दृश्यसामान्यपरम्। संसारदशायां यो ज्ञाता, स एव विषयान्तःकरणादिविरमे विषयोपलक्षितप्रकाशरूपेणावतिष्ठते। तथा च—विदेहमुक्तिदशायामर्थोपलक्षितप्रकाशत्वरूपं ज्ञानत्वमात्मनोऽस्तीति नात्मनो ज्ञानत्वहानिः। न वा ज्ञानभिन्नत्वरूपस्याज्ञानस्य हेतोः विदेहमुक्तिदशायामात्मनि व्यभिचारः। अत्राचार्येण प्रकारद्वयेन ज्ञानत्वनिर्वचनं प्रदर्शितम्, ज्ञानत्वोपलक्षितस्वरूपत्वरूपं प्रकाशत्वं वा अर्थोपलक्षितप्रकाशत्वं वा ज्ञानत्वमिति ॥३॥

ननु तथापि ज्ञातुरभावात् तदा तन्न ज्ञानम्; नहि भोक्तृहीना भुजिक्रिया भवति, न च—अनादित्वेन क्रियारूपत्वाभावाद् अनपेक्षत्व-

---

१—अत्र पूर्वपक्षिणा आत्मरूपं ज्ञानं सविषयं निर्विषयं वा ? आद्येऽपि स्वविषयं परविषयं वा ? नाद्यः, स्ववृत्तिविरोधात् न द्वितीयः, मोक्षे पराभावात्। नापि निर्विषयम्, ज्ञानत्वविरोधात्। अर्थप्रकाशस्यैव ज्ञानत्वात्। अन्यथा घटादेरपि ज्ञानत्वापत्तेरित्यादि यद् यद् जल्पितम्, तत् सर्वं प्रदर्शितरूपेण निरस्तमित्यसहमानः ज्ञातुरभावादपि आत्मस्वरूपं ज्ञानं न भवितुमर्हति, न केवलं विषयाभावात् ज्ञातुरभावादपि आत्मस्वरूपस्य ज्ञानत्वं न भवितुमर्हतीत्याह पूर्वपक्षी—ननु तथापि ज्ञातुरभावात्तदा तन्न ज्ञानमिति। आत्मरूपज्ञानस्य आश्रयानिरूपणादपि न तस्य ज्ञानत्वम्, अहमिदं जानामीति ज्ञातृज्ञेयसम्बन्धिन एव ज्ञानत्वानुभवात् तद्रहितस्य आत्मस्वरूपस्य ज्ञानत्वमयुक्तमेव। नहि भोक्तृभोग्यरहिता भुजिक्रिया। ज्ञाधात्वर्थरूपज्ञानस्य क्रियात्वात् क्रियायाश्च स्वकर्तृकत्वनियमात् कर्तृनिरपेक्षक्रियास्वरूपं न सम्भवतीति पूर्वपक्षिणामाशयः। एवं पूर्वपक्षं प्रदर्श्य सिद्धान्तिसमाधानमाशङ्क्य निराचष्टे पूर्वपक्षी—अनादित्वेन क्रियारूपत्वाभावादिति। अयं भावः—ज्ञानत्वविशिष्टस्य सादित्वेऽपि ज्ञानत्वोपलक्षितस्य अनादित्वेन कारकजन्यत्वरूपक्रियात्वाभावाद् आत्मरूपज्ञानस्य कर्त्रनपेक्षत्वमिति सिद्धान्तिना न वाच्यम्, ज्ञानमनपेक्षमनादित्वादात्मवत् यद्यदनादि, तदन्यनिरपेक्षं भवति, यथा आत्मा, अनादित्वादन्यनिरपेक्षस्वभावः। ज्ञानमप्यनादित्वात् ज्ञात्रादिनिरपेक्षस्वभाव इत्येव हि सिद्धान्तिनो हृदये विपरिवर्तते। तदपि अति तुच्छम्, सिद्धान्तिप्रदर्शिताया व्याप्तेः सहस्रशो व्यभिचारदर्शनात्। तथा हि—अनादेः प्रागभावस्य प्रतियोगिनि अपेक्षादर्शनात् प्रागभावोऽनादिरपि प्रतियोगिनिरूपणाधीननिरूपणो भवति। प्रतियोगिनमनपेक्ष्य प्रागभावं निरूपयितुं न शक्यते। एवमेव अनादिभूताया जातेर्व्यक्तौ अपेक्षा वर्तते। नहि जातिरनादित्वात् व्यक्त्यनाश्रितैव भासते। नापि जातिरनाश्रितैव वर्तते। अनादित्वेऽपि जातिरूपस्य धर्मस्य व्यक्तिरूपे धर्मिणि अपेक्षाया दर्शनात्। एवमेव जीवब्रह्मविभागस्यानादित्वेऽपि धर्मिप्रतियोगिनोरपेक्षादर्शनात्। जीवब्रह्मविभागो नाम जीवब्रह्मभेदः। "षडस्माकमनादय" इत्युक्त्या अस्य

मिति वाच्यम्; अनादेः प्रागभावस्य प्रतियोगिनि, जातेर्व्यक्तौ जीवब्रह्मविभागस्य धर्मप्रतियोगिनोः अज्ञानस्य चाश्रयविषययोर्ब्रह्मसत्तायाश्च कर्तर्यपेक्षादर्शनात्, अन्यथा 'अस्ति ब्रह्मे'त्यादौ कर्तरि लकारो न स्यात्। एवं चातीतादिज्ञानस्य ईश्वरज्ञानस्य च उत्पत्त्यर्थमर्थानपेक्षत्वेऽपि तन्निरूप्यत्वदर्शनेन ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्वं स्वभावः, अन्यथा "इदमहं जानामी"त्यनुभवो न स्यात्, "ज्ञातुरर्थप्रकाशस्य ज्ञानत्वादि"ति विवरणविरोधश्च स्यात्—इति चेन्न; ॥४॥

---

भेदस्यानादित्वेऽपि धर्मिणि प्रतियोगिनि चापेक्षाया दर्शनात्। न हि धर्मिणं प्रतियोगिनञ्च अनिरूप्य जीवब्रह्मभेदो निरूपयितुं शक्यते। एवमेवाद्वैतसिद्धान्ते अज्ञानस्यानादित्वेऽपि आश्रयविषययोरपेक्षा वर्तते। नहि आश्रयविषयनिरूपणं विना अज्ञानं निरूपयितुं शक्यते। "अस्यास्मिन्नज्ञानम्" इत्येवंरूपेणैवाज्ञानस्य प्रतीतेः। एवमेव ब्रह्मसत्ताया अनादित्वेऽपि कर्तरि अपेक्षादर्शनात्। अन्यथा ब्रह्मसत्ताया अनादित्वात्। कर्त्रनपेक्षत्वे अस्ति ब्रह्मेति चेद् वेदेत्यादि—श्रुतौ कर्तर्यर्थे लट्लकारो न स्यात्। कर्तरि लटो विधानात्। एवमेव अतीतादिविषयकज्ञानस्य अतीतादिविषयाजन्यत्वेन अतीतज्ञानस्योत्पत्त्यर्थम् अतीतविषयानपेक्षत्वेऽपि अतीतादिज्ञानस्य अतीतादिविषयनिरूप्यत्वं दृश्यते। नहि अतीतादिविषयं ज्ञानं निर्विषयं केनचिदनुभूयते स्वीक्रियते वा। एवमेव ईश्वरज्ञानस्यानादित्वेन तस्योत्पत्त्यर्थं विषयानपेक्षत्वेऽपि ईश्वरज्ञानस्य विषयनिरूप्यत्वाङ्गीकारेण च ज्ञानमात्रस्य ज्ञातृज्ञेयनिरूप्यत्वं स्वभावः। ज्ञानं सादि वा अनादि वा, विषयजन्या वा विषयाजन्या वा भवतु, सर्वथापि ज्ञानं स्वभावेनैव ज्ञातृज्ञेयनिरूप्यं भवति। अज्ञानवज्ज्ञानमपि आश्रयविषयनिरूप्यम्। ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्वस्वभावानङ्गीकारे इदमहं जानामीति ज्ञातृज्ञेयनिरूप्यतया ज्ञानस्यानुभवो न स्यात्। ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्वस्वभावानङ्गीकारे अद्वैतवादिनः सिद्धान्तविरोधश्च स्यात्, ज्ञातुरर्थप्रकाशस्य ज्ञानत्वात्—इति विवरणोक्तिविरोधश्च स्यात्। [विवरणम्, पृ० ४१ काशीसंस्करणम्] विवरणकृद्भिः ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्वस्वभावमङ्गीकृत्यैव तथाभिहितत्वात्। एवञ्च यदनादि यदन्यनिरपेक्षमिति व्याप्तिरेव न सम्भवतीति न ज्ञानस्यानादित्वेन ज्ञात्रनपेक्षत्वम्। ज्ञानगुणस्याश्रयसापेक्षत्वात्।

जातेर्व्यक्तिनिरूप्यत्वेऽपि कदाचित्तदसम्बन्धवदुपपत्तेः, सम्बन्धप्रयोजकोपाध्यपेक्षया अधिकसत्ताकत्वात्। अत एव ज्ञानस्य सज्ञेयत्वं सज्ञातृत्वञ्च न स्वाभाविकम् ॥५॥

---

अत्रेदं बोध्यम्—इच्छाविशेषरूपाया अपेक्षायाश्चेतनधर्मत्वेन जात्यादिषु जडेषु तदसम्भवाद यद् यदधीनोत्पत्तिकं तत्तदपेक्षमिति लोकव्यवहारे तदधीनोत्पत्तिकत्वमेव तदपेक्षत्वमित्यस्यापि अनादिषु जात्यादिष्वसम्भवात् यद्यदधीनज्ञप्तिकं तत्तदपेक्षमित्यभिप्रेत्यैव जात्यादीनामनादीनां व्यक्ताद्यधीनत्वमेव सापेक्षत्वं पूर्वपक्षग्रन्थे उक्तम् ॥४॥

५—ज्ञानस्यानादित्वेनाश्रयाद्यनपेक्षायां प्रागभावादिविरोधिदृष्टान्तप्रदर्शनं यत् पूर्वपक्षिणा कृतं तदयुक्तम्, प्रागभावादेर्हि धर्मिग्राहकमानसिद्धं प्रतियोग्यादिसापेक्षत्वम्। न च ज्ञानरूपस्य नित्यसाक्षिणो वियदादिसापेक्षत्वे किञ्चिन्मानमस्ति, प्रत्युत नित्यस्य साक्षिण आश्रयानिरूपणादगुणत्वाच्चेत्यालोच्याति फल्गुत्वात् तदुपेक्ष्य जातेर्नियमेन व्यक्तिनिरूप्यत्वं यत् पूर्ववक्षिणोक्तम्, तद्दूषयति—जातेर्व्यक्तिनिरूप्यत्वेऽपीति। शुद्धे जातिप्रकाशस्य "अयं घटः" "अयं पटः" इत्यादिप्रतीतौ व्यक्तिप्रकाशव्याप्यत्वेऽपि कदाचित् तदसम्बन्धवत् व्यक्तिप्रकाशं विनैव शुद्धजातिप्रकाशवत् ज्ञातृज्ञेयनिरूप्यस्यापि प्रकाशस्य मोक्षदशायां ज्ञातृज्ञेयासंसृष्टतया विद्यमानत्वात्। अयम्भावः—स्वाश्रयव्यक्त्यविषयकप्रत्यक्षज्ञाने, शुद्धजातिर्न भासते, अथ च कदाचित् शुक्त्यादौ रजतत्वादेः संसर्गारोपकाले स्वाश्रयव्यक्तिभानं विनैव शुद्धा रजतत्वादिजातिः शुक्त्यादिसंसृष्टतया भासते। स्वाश्रयव्यक्तिभानं विना शुद्धरजतत्वादिजातेर्भानानङ्गीकारे शुद्धरजतत्वादिजातेः संसर्गारोप एव न स्यात्। अथ च शुद्धजातेः संसर्गारोपः प्रामाणिकैरभ्युपगम्यते एव। अन्यथा अन्यथाख्यातेरुच्छेद एव स्यात्। उक्तञ्च भाष्यकृता—"यत्र यदध्यासस्तस्यैव विपरीतधर्मकल्पनामाचक्षते" इति। शुक्तौ शुद्धरजतत्वादिजातेः संसर्गारोपकाले रजतादिव्यक्तेर्निरूप्यत्वरूपसम्बन्धाभावात्। तथा च भ्रमभिन्नजातिप्रत्यक्षत्वस्य व्यक्तिप्रत्यक्षत्वव्याप्यत्ववत् ज्ञानत्वविशिष्टप्रकाशत्वस्य ज्ञातृज्ञेयप्रकाशत्वव्याप्यत्वम्, न तु ज्ञानत्वोपलक्षितप्रकाशत्वस्य ज्ञातृज्ञेयप्रकाशत्वव्याप्यत्वम्। प्रकाशरूपे ज्ञाने ज्ञातृज्ञेयसम्बन्धप्रयोजकोपाध्यपेक्षया ज्ञानस्य

तथा हि सज्ञेयत्वं तावत् ज्ञेयजन्यत्वं वा ज्ञेयव्याप्यत्वं वा ? नाद्यः, परोक्षज्ञाने ईश्वरज्ञाने चाभावात्। नापि द्वितीयः; 'यदा ज्ञानं तदा अर्थं' इति कालिकव्याप्तौ पूर्ववद् व्यभिचारात्, दैशिकव्याप्तिस्तु दूरनिरस्तैव।

---

अधिकसत्ताकत्वात् ज्ञातृज्ञेयसम्बन्धं विहायापि कदाचित् प्रकाशरूपज्ञानस्य सत्तोपपत्तेः। सम्बन्धप्रयोजकोपाधिश्च अविद्यान्तःकरणवृत्त्यादिरूपः प्रागेवोक्तः। एवञ्च मोक्षदशायां ज्ञातृज्ञेयरहितस्य ज्ञानस्य विद्यमानत्वान्नाज्ञानत्वहेतोस्तत्र व्यभिचार इति भावः ॥५॥

६—यत एव प्रकाशरूपज्ञानस्य ज्ञातृज्ञेयसम्बन्धप्रयोजकोपाध्यपेक्षया अधिकसत्ताकत्वम्, अत एव ज्ञानस्य सज्ञेयत्वं सज्ञातृत्वञ्च न स्वाभाविकम्; उपाध्यभावकाले ज्ञाने ज्ञातृज्ञेयसम्बन्धस्यासम्भवात्। ज्ञानस्य सज्ञेयत्वं न स्वाभाविकमित्युपपादयितुमाह आचार्यः—तथा हीति। ज्ञानस्य सज्ञेयत्वं स्वाभाविकमिति वदन् पूर्वपक्षी प्रष्टव्यः—ज्ञानस्य सज्ञेयत्वं किं ज्ञेयजन्यत्वं वा ज्ञेयव्याप्यत्वं वा ? नाद्यः, परोक्षज्ञानस्य विषयजन्यत्वाभावात्। ऐन्द्रियकप्रत्यक्षमेव विद्यमानविषयजन्यं भवति, अतीतादिविषयकं परोक्षज्ञानं विषयस्यासत्त्वान्न विषयजन्यं भवितुमर्हति। परोक्षज्ञानविषयस्य विद्यमानत्वेऽपि न तज्ज्ञानं विषयजन्यम्, प्रमाणत एव तदुत्पत्तेः। अन्यथा अतीतादिविषये परोक्षज्ञाने अगतिः स्यात्। परोक्षज्ञानस्य विद्यमानोऽपि विषयः परोक्षज्ञानं प्रति अन्यथासिद्ध एव। एवमेव नित्येश्वरज्ञानस्याजन्यत्वात्तस्य विषयजन्यत्वं सुदूरनिरस्तम्। तथा च—ज्ञानस्य ज्ञेयजन्यत्वमेव सज्ञेयत्वमिति केनापि वक्तुं न शक्यते। नापि द्वितीयः, ज्ञेयव्याप्यत्वमेव ज्ञानस्य सज्ञेयत्वमित्यपि न सम्भवति। ज्ञेयव्याप्यत्वं नाम ज्ञेयनिरूपिता व्याप्तिः। सा च ज्ञाने नास्तीत्यभिप्रायः। ज्ञेयनिरूपिता व्याप्तिः कीदृशी अभिमता ? कालिकी वा दैशिकी वा ? यदि कालिकी व्याप्तिरङ्गीक्रियते, तदा यदा ज्ञानं तदाऽर्थः इति व्याप्तिरङ्गीकरणीया। अस्यां व्याप्तौ व्यभिचारस्य प्रागेवोक्तत्वात् सा न सम्भवति। यदा अतीतादिविषयकं परोक्षज्ञानं वर्तते, तदा अर्थोऽपि वर्तत इति न सम्भवति, अतीतादिविषयस्यासत्त्वात्। यत्र ज्ञानं तत्रार्थः—इति दैशिकव्याप्तिस्तु दूरनिरस्तैव। ज्ञानं ज्ञातरि वर्तते, तत्र अर्थो न विद्य-

न च—यदा अपरोक्षज्ञानं 'तदार्थं' इति कालिकव्याप्तौ नास्ति व्यभिचारः, आत्मा च 'यत् साक्षाद् अपरोक्षाद् ब्रह्मे'ति श्रुतेरपरोक्षज्ञानरूप इति सोऽप्यर्थव्याप्त इति—वाच्यम् ॥६॥

ईश्वरज्ञाने योगिज्ञाने च व्यभिचारात्। 'यदैन्द्रियकं ज्ञानं तदार्थं'

---

न्ते। अतो दैशिकव्याप्तिमादाय ज्ञेयव्याप्यत्वं ज्ञानस्य सज्ञेयत्वमिति न सम्भवति। कालिकीं व्याप्तिमादायापि ज्ञानस्य ज्ञेयव्याप्यत्वं यथा न सम्भवति, तथा प्रागेवोक्तम्।

पूर्वपक्षी शङ्कते—"ज्ञेयव्याप्यत्वमेव सज्ञेयत्वमि"ति। व्याप्तिश्च कालिकी। यद्यपि परोक्षज्ञानस्य ज्ञेयव्याप्यत्वरूपं सज्ञेयत्वं नास्ति प्रदर्शितव्यभिचारात्, तथापि अपरोक्षज्ञानस्य सज्ञेयत्वं ज्ञेयव्याप्यत्वमेव। यदा अपरोक्षज्ञानम्, तदा अर्थ इति कालिकव्याप्तौ व्यभिचाराभावात्। अद्वैतमते आत्मनः साक्षादपरोक्षरूपत्वम्, "यत् साक्षादपरोक्षाद् ब्रह्मे"ति श्रुतेः। आत्मनोऽपरोक्षरूपत्वात् मोक्षदशायामपि अपरोक्षरूपस्यापि आत्मनः सज्ञेयत्वं प्रसज्यते एव। यदा अपरोक्षज्ञानं तदा अर्थ इति कालिकव्याप्तौ व्यभिचाराभावात्। तथा चाद्वैतमते मोक्षदशायामात्मनः सप्रपञ्चत्वापातः। मोक्षे स्वातिरिक्तविषयानभ्युपगमे आत्मनः स्वविषयत्वं वा स्यात्। स्वविषयत्वानभ्युपगमे विषयव्याप्यस्य ज्ञानस्य विषयाभावे आत्मनो ज्ञानस्वरूपत्वमेव न स्यात्, व्यापकाभावे व्याप्याभावात्। मोक्षे आत्मनः ज्ञानभिन्नत्वेऽज्ञानत्वहेतोर्व्यभिचारश्च स्यात्। अर्थप्रकाशरूपस्य ज्ञानस्य अर्थाभावे आत्मनो निःस्वरूपत्वञ्च स्यात्। अपरोक्षरूपस्यात्मनोऽर्थव्याप्तत्वादिति ॥६॥

७—समाधत्ते सिद्धान्ती—पूर्वपक्षिणा एवं न वाच्यम्, कुतो न वाच्यम्? इत्याह—ईश्वरज्ञाने योगिज्ञाने च व्यभिचारात्। यदा अपरोक्षज्ञानं तदा अर्थ इति व्याप्तेरपि ईश्वरज्ञाने व्यभिचार एव। ईश्वरज्ञानस्यापरोक्षत्वं सर्वविषयकत्वं नित्यत्वमेकत्वञ्च ईश्वररूपधर्मिग्राहकमानसिद्धम्। येन प्रमाणेन ईश्वरः सिध्यति, तेनैव प्रमाणेन तस्य सर्वविषयकनित्यापरोक्षैकज्ञानवत्त्वमपि सिध्यति। तथा च अतीतानागतानामविद्यमानानामीश्वरीयापरोक्षज्ञानविषयत्वात् यदा अपरोक्षज्ञानं तदा अर्थ इति व्याप्तेः सुदृढो व्यभिचारः। एवमेव योगिज्ञानेऽपि व्यभिचारो बोध्यः। इदं व्यभिचारोद्भावनं तटस्थेश्वरवादिमते स्थित्वाचार्येण प्रदर्शि-

इति तु व्याप्तिः सर्वसम्मता । न चात्मरूपे ज्ञाने ऐन्द्रियकत्वम् अस्तीति न तथा विरोधः । ननु—'यदा अपरोक्षं ज्ञानं तदार्थं' इति व्याप्त्य-

---

तम् । नैयायिकवैशेषिकादयो माध्वाश्च तटस्थेश्वरवादिनः । सिद्धान्तेषु, ईश्वरज्ञानं नैवम्, उक्तञ्च आत्मस्वप्रकाशत्वोपपत्तिप्रकरणे द्वितीयपरिच्छेदे अद्वैतसिद्धौ चन्द्रिकाकृद्भिः–ईश्वरज्ञानं हि मन्मते ईश्वरस्वरूपमेव, मायावृत्त्यवच्छिन्नचिद्रूपं वा । [ पृ० ५८ ] आद्ये तद्विषयस्तदन्यदेव, द्वितीये तु नैका वृत्तिः सर्वविषयिका, किन्तु भविष्येष्वनुमितिः, भूतेषु स्मृतिः विद्यमानेषु प्रत्यक्षरूपा इति । उक्तञ्च विवरणाचार्यैः पञ्चमरूपके "सर्वस्य कर्तृत्वादेव वर्तमानस्वकार्यसर्वविषयज्ञता तावत् सिद्धा, एवं तत्तत्काले अतीतसर्वविषयावगमादनुभूतविषयासम्प्रमोषा स्मृतिः, स्वमायापरिणामोपाधिरनावरणत्वात् सर्वविषया कल्प्यते । तथा सृष्टेः प्रागपि सृज्यमानपदार्थावधारणस्य कुलालादिषु दृष्टत्वादागामिसर्वविषयज्ञानं स्वमायापरिणामोपाधिः कल्प्यते इति युक्ता सर्वज्ञता" इति [ पृ० २१० ] न्यायरत्नावल्यामयमर्थः प्रपञ्चितः—प्रथमश्लोकव्याख्याने [ पृ० ४८१–४८२ ] । अत्रापि लघुचन्द्रिकायामयमर्थ उक्तः [ पृ० ३०९ ] ।

ऐन्द्रियकज्ञानस्य विषयव्याप्यत्वे तु न विवाद इत्याहाचार्यः—"यदा ऐन्द्रियकं ज्ञानं तदा अर्थ इति तु व्याप्तिः सर्वसम्मते"ति । यस्यार्थस्येन्द्रियसन्निकर्षेण जन्यं ज्ञान यदा वर्तते, तदा सोऽर्थोऽपि इति व्याप्तिः सर्वसम्मता । एषा व्याप्तिर्नास्माकं क्षतिकरी—इत्याह "न चात्मरूपे ज्ञाने ऐन्द्रियकत्वमस्ती"ति । आत्मस्वरूपं ज्ञानं न विषयव्याप्यमनैन्द्रियकत्वात्, ऐन्द्रियकमेव ज्ञानं विषयव्याप्यं भवति । मोक्षदशायामात्मस्वरूपज्ञानस्यानैन्द्रियकत्वान्न विषयव्याप्यत्वमिति न प्रदर्शितव्याप्त्या विरोधः ।

पूर्वपक्षी शङ्कते—ननु यदा अपरोक्षं ज्ञानं तदा अर्थ इति । ईश्वरज्ञानादौ व्यभिचारेण यदा अपरोक्षं ज्ञानं तदा अर्थ इति व्याप्त्यनभ्युपगमे . इदं रजतमिति अपरोक्षज्ञानान्यथानुपपत्त्या अद्वैतवादिमतेऽनिर्वचनीयरजतसिद्धिर्न स्यात्, रजतज्ञानस्यापरोक्षत्वायैव हि अद्वैतवादिभिः रजतज्ञानकालेऽनिर्वचनीयं रजतमुत्पद्यते इत्यङ्गीक्रियते । विषयसत्त्वं विनैव यदि तद्विषयकापरोक्षज्ञानं सम्भवति, तर्हि अनिर्वचनीयरजतोत्पत्ति-

नभ्युपगमे 'इदं रजतमि'त्यपरोक्षज्ञानान्यथाऽनुपपत्त्या अनिर्वचनीय-रजतसिद्धिर्न स्यात्, अर्थं विनाप्यपरोक्षत्वोपपत्तेः—इति चेन्न, 'इदं रजतमहं जानामी'त्यनुसन्धीयमानं यत् ज्ञानविषयत्वं तस्याश्रयान्तरानुपपत्त्या अनिर्वचनीयरजतसिद्धेर्वक्ष्यमाणत्वात् । अत एव परोक्षभ्रमेऽपि

---

कल्पना निरर्थिका स्यात् । अतः स्वाभ्युपगतानिर्वचनीयरजतोत्पत्तिरक्षणस्नेहादकामेनापि अद्वैतवादिना यदा अपरोक्षज्ञानं तदा अर्थ इति व्याप्तिरङ्गीकरणीयैव ।

नैवं वाच्यं पूर्वपक्षिणा; कुतः ? इत्याहाचार्यः—न हि अस्माभिः प्रदर्शितव्याप्त्यानुरोधेनानिर्वचनीयरजतोत्पत्तिरङ्गीक्रियते, किन्तर्हि 'इदं रजतमहं जानामीत्यनुसन्धीयमानं यज्ज्ञानविषयत्वम्, तस्याश्रयान्तरानुपपत्त्या अनिर्वचनीयरजतसिद्धेर्वक्ष्यमाणत्वात् । अयम्भावः—अद्वैतसिद्धान्ते चित्तादात्म्यमेव विषयत्वम् । दृश्यमात्रस्य चिति अध्यासात् दृश्यमात्रे चित्तादात्म्यं विद्यते । घटादौ ज्ञानीयविषयत्वन्तु घटाकारकवृत्त्याऽभिव्यक्तस्य चितस्तादात्म्यरूपम् । उक्तं हि उदयनाचार्यैरात्मतत्त्वविवेकेऽद्वैतवादे स्थित्वा शून्यवादिनं प्रति—"प्रपञ्चशून्यस्यानुभवमात्रस्य प्रपञ्चेन सह कः सम्बन्धः ? ···वस्तुगत्या न कश्चित् । सम्वृत्या तु गगनगन्धर्वनगरयोराधाराधेयभावः इव विषयविषयिभावः । स च यथा नैयायिकैः समर्थयिष्यते, तथैव वेद्यनिष्ठस्त्वसौ अस्मिन् दर्शने इति विशेषः" [ पृ० ५०४ ] इति । व्याख्यातञ्च भगीरथठक्कुरेण—"यथा गगनगन्धर्वनगरयोराधाराधेयभावो न तात्त्विकः, तथाऽस्माकं संवृत्त्या विषयविषयिभावोऽपीत्यर्थः । वेद्यनिष्ठ इति, अस्मिन् वेदान्तनये स विषयविषयिभावो वेद्यनिष्ठः, न तु नैयायिकानामिव । ज्ञानात्मकब्रह्मणा पारमार्थिकेनापारमार्थिकप्रपञ्चस्य सम्बन्धाभावादित्यर्थः" [ पृ० ५०६ ] इति । नैयायिकमते विषयविषयिभावसम्बन्धः ज्ञाननिष्ठ एवाङ्गीक्रियते । वेदान्तमते ज्ञेयनिष्ठ एव । अत एव चित्तादात्म्यं विषयत्वमुक्तम् । तादात्म्यञ्चाध्यासिकम् । प्रपञ्चे चित्तादात्म्यस्य पारमार्थिकस्यासम्भवात् । इदं रजतमिति भ्रमे इदं रजतञ्च भासते । तत्रेदं चित्तादात्म्यरूपविषयतया रजतचित्तादात्म्यरूपविषयत्वमवच्छिद्यते, इदमवच्छेदेन चैतन्ये रजतस्याध्यास्यात् । एवञ्च इदं चित्तादात्म्यविषयतावच्छिन्नं यत् रजतचित्तादात्म्यरूपविषयत्वम् इदं रजतमहं जानामीत्यनुव्यवसीयमानं तस्य

अनिर्वचनीयार्थसिद्धिः। जन्यापरोक्षत्वेन वा अर्थव्याप्यता; आर्षज्ञानस्यापरोक्षत्वानभ्युपगमात्। तथा च नानिर्वचनीयरजतसिद्ध्यनुपपत्तिः ॥७॥

---

देशान्तरीयरजताश्रयत्वानुपपत्त्या अनिर्वचनीयरजतसिद्धिर्वक्ष्यते। इदं रजतमिति भ्रमे देशान्तरीयरजतस्य भानाभ्युपगमे देशान्तरीयरजतचित्तादात्म्यस्य इदं चित्तादात्म्येनावच्छिन्नत्वासम्भवाद्। इदमंशावच्छिन्नचिति रजतोत्पत्तिः स्वीक्रियते भिन्नदेशस्थयोरवच्छेद्यावच्छेदकभावासम्भवात्।

अपरोक्षज्ञानस्य विषयव्याप्यत्वं नानिर्वचनीयरजताद्युत्पत्तिसाधकम्, अपरोक्षज्ञानस्य विषयव्याप्यत्वादेव यद्यपरोक्षभ्रमेऽनिर्वचनीयविषयोत्पत्तिः स्वीक्रियेत, तर्हि परोक्षभ्रमेऽनिर्वचनीयविषयसिद्धिर्न स्यात्। परोक्षभ्रमस्यापि विषयोऽनिर्वचनीय एव। भ्रमस्य वृत्तिद्वयत्वोपपत्तिप्रकरणे परोक्षभ्रमस्योपपादयिष्यमाणत्वात्। यदा अपरोक्षज्ञानं तदा अर्थ इति व्याप्तिं निरस्य यदा ऐन्द्रियकं ज्ञानं तदा अर्थ इति व्याप्तिः सर्वसम्मता इत्युक्तं प्राक्। इदानीं जन्यापरोक्षज्ञानस्यार्थव्याप्यत्वमङ्गीकृत्य अनिर्वचनीयरजतसिद्धिमुपपादयन्नाह—जन्यापरोक्षत्वेन वा अर्थव्याप्यतेति। यदा जन्यापरोक्षज्ञानं तदा अर्थेति व्याप्तेरभ्युपगमेऽपि दोषाभावः। न च योगजसन्निकर्षजन्यापरोक्षज्ञाने अतीतादिविषयकेऽर्थव्याप्यत्वाभावाद् यदा जन्यापरोक्षज्ञानं तदा अर्थ इति व्याप्तिर्न सम्भवतीति वाच्यम्, योगजसन्निकर्षजन्यज्ञानस्यापरोक्षत्वानभ्युपगमात्। इत्याहाचार्यः—आर्षज्ञानस्येति। आर्षज्ञानस्यापरोक्षत्वं कुतो नाङ्गीक्रियते चेत् ? शृणु—अनावृतसाक्षितादात्म्यविशिष्टविषयकत्वं हि ज्ञानस्यापरोक्षत्वम्। अतीतेऽनागते चार्षज्ञानविषये ज्ञानकाले विषयस्य साक्षितादात्म्याभावात् अतीतादिविषयकत्वांशे ज्ञानस्यापरोक्षता न सम्भवति। अत आर्षज्ञानस्यापरोक्षताऽनभ्युपगमाद् ईश्वरीयज्ञानस्य च जन्यत्वाभावात् जन्यापरोक्षत्वेन ज्ञानस्यार्थव्याप्यत्वे नास्ति व्यभिचारः। एवञ्च प्रदर्शितव्याप्त्या अनिर्वचनीयरजतसिद्धेरपि नानुपपत्तिः। आत्मस्वरूपज्ञानस्य तु "यत् साक्षादपरोक्षादि"ति श्रुत्या अपरोक्षत्वेऽपि अस्य नित्यत्वात् यदा जन्यापरोक्षज्ञानं तदा अर्थ इति व्याप्त्या न विषयव्याप्यत्वसिद्धिः। एवं च यत् पूर्वपक्षिणोक्तम्—"यदा अपरोक्षज्ञानं तदा अर्थ इति कालिकव्याप्तौ नास्ति व्यभिचारः" आत्मा च "यत्

एवं सज्ञातृकत्वमपि किं ज्ञातृजन्यत्वं, ज्ञातृव्याप्यत्वं, ज्ञातृसमवेतत्वं वा ? आद्ये ईश्वरज्ञाने व्यभिचारः; ज्ञाननित्यत्वस्य साधयिष्यमाणत्वाच्च द्वितीयेऽपि अप्रयोजकता। न तृतीयः; ज्ञानजन्यत्ववत्

---

साक्षात् अपरोक्षादि"ति श्रुतेरपरोक्षज्ञानरूप इति "सोऽप्यर्थव्याप्त" इति, तत् सर्वथा निरस्तम् ॥७॥

८—यच्च पूर्वपक्षिणोक्तम्—एवं ज्ञात्रभावादपि न ज्ञानम्, नहि भोग्यभोक्तृरहिता मुक्तिरस्ति—इति तन्निरस्यत्याचार्यः एवं सज्ञातृकत्वम पीति। प्रागेवोक्तमेतत् [पृ० ५८] ज्ञानस्य सज्ञेयत्वं सज्ञातृत्वञ्च न स्वाभाविकमिति ज्ञानस्य सज्ञेयत्वं यथा न स्वाभाविकं तथोक्तम्। इदानीं ज्ञानस्य सज्ञातृत्वमपि न स्वाभाविकमित्युपपादयितुं सज्ञातृकत्वं विकल्पयन्नाह—सज्ञातृकत्वमपि किं ज्ञातृजन्यत्वं ज्ञातृव्याप्यत्वं ज्ञातृसमवेतत्वं चेति। अत्र आद्यः पक्षः न सम्भवतीत्याह—आद्ये ईश्वरज्ञाने व्यभिचारः इति, तार्किकादिमते ईश्वरज्ञानस्य नित्यत्वात्, मायावृत्तिरूपेश्वरज्ञानानङ्गीकर्त्रद्वैतवादिमतेऽपि ईश्वरज्ञानस्य नित्यत्वमेव—इत्यत उक्तम्—ईश्वरज्ञाने व्यभिचारः। नित्यज्ञानस्य ज्ञातृजन्यत्वाभावात्, विवरणमते एव ईश्वरज्ञानस्यानित्यत्वात्। [पृ० ५८]

"ज्ञाननित्यत्वस्य साधयिष्यमाणत्वादि"ति। ज्ञानत्वोपलक्षितप्रकाशस्य नित्यत्वमग्रे साधयिष्यते। वृत्त्युपरक्तचित एवानित्यत्वादनुपरक्तस्य नित्यत्वात्। ज्ञानत्वविशिष्टस्य तु ज्ञातृजन्यत्वमस्मदिष्टमेव। अत एव यदुक्तं पूर्वपक्षिणा—"अहमिदं जानामी" त्यनुभवे सज्ञातृकतयैव ज्ञानमनुभूयत इति, तदपि निरस्तम्। अन्तःकरणवृत्तेरनित्यत्वाद् विषयाकारान्तःकरणवृत्तिप्रतिबिम्बितचैतन्यमपि यज्ज्ञानत्वविशिष्टतया स्फुरति, तस्यानित्यत्वात् सज्ञातृकत्वमस्मदिष्टमेव। विवरणमते ईश्वरज्ञानस्य मायावृत्त्यवच्छिन्नचिद्रूपस्यानित्यत्वेन तस्यापि सज्ञातृकत्वमस्मदिष्टमेव। प्रदर्शितव्यभिचारेण ज्ञानस्य ज्ञातृजन्यत्वं निरस्तम्। इदानीं ज्ञानं ज्ञातृव्याप्यमिति पक्षं निरस्यति—द्वितीयेऽपि अप्रयोजकतेति। ज्ञानत्वोपलक्षितचैतन्यस्य अर्थप्रकाशत्वोपलक्षितचैतन्यस्य वा ज्ञातृव्याप्यत्वेऽनुकूलतर्काभावादप्रयोजकता। ज्ञानत्वोपलक्षितप्रकाशस्वरूपं ज्ञानं यदि ज्ञातृव्याप्यं न स्यात् तदा कस्याप्यनिष्टस्यापादयितुमशक्यत्वात् ज्ञानत्वोपलक्षितप्रकाशस्य ज्ञातृव्याप्यत्वं न

ज्ञानसमवेतत्वस्यापि संभवात्, ज्ञानस्य गुणत्वक्रियात्वयोरनभ्युपगमेन द्रव्याश्रयत्वानुमानायोगात्.,

कदाचित् ज्ञातृज्ञेयसम्बन्धेनैव अनुभवस्य विवरणवाक्यस्य च उपपत्तेः। 'अस्ति ब्रह्मे'ति च लकारो न ब्रह्मसत्तां प्रति ब्रह्मणः कर्तृत्व-

---

सिध्यति। ज्ञानत्वविशिष्टस्य तु प्रकाशस्य ज्ञातृजन्यत्वं ज्ञातृव्याप्यत्वञ्चास्मदिष्टमेव। विषयकारान्तःकरणवृत्तिदशायामेव तत्सम्भवात्।

एवं ज्ञातृसमवेतत्वं सज्ञातृकत्वमिति तृतीयोऽपि पक्षः न युज्यते इत्याह—"न तृतीय" इति। ज्ञानत्वविशिष्टस्य ज्ञानस्य ज्ञातृजन्यत्वस्येव ज्ञातृसमवेतत्वस्य सम्भवेऽपि ज्ञानत्वोपलक्षितस्य ज्ञात्रजन्यत्ववत् ज्ञात्रसमवेतत्वस्यापि सम्भवात् ज्ञानस्य गुणत्वे क्रियात्वे वाऽभ्युपम्यमाने ज्ञानस्य ज्ञातृसमवेतत्वं सम्भवति। गुणो हि गुणिनि समवैति, क्रिया च क्रियावति। अद्वैतसिद्धान्ते ज्ञानस्य गुणत्वक्रियात्वयोरनभ्युपगमेन द्रव्याश्रयत्वानुमानायोगात्। ज्ञानं द्रव्याश्रितं गुणत्वात् रूपवत् इत्यनुमानं न सम्भवति ! ज्ञाने गुणज्ञाने गुणत्वस्यानङ्गीकारात्। एवमेव क्रियात्वेन द्रव्याश्रयत्वानुमानं न सम्भवति।

ननु ज्ञानस्य ज्ञातृजन्यत्वाभावे ज्ञातृसमवेतत्वाभावे वा "अहमिदं जनामि" इत्यनुभवे सज्ञातृकतया भासमानं ज्ञानं "मयि घटज्ञानमस्ति", "मत्समवेतं घटज्ञानम्" इत्याद्यनुभवे च ज्ञातृसमवेततया भासमानं ज्ञानं कथं सङ्गच्छतामिति चेत्? शृणु—ज्ञानस्य कदाचित् ज्ञातृसम्बन्धेनैव प्रदर्शितानुभवानामुपपत्तेः ज्ञातुरर्थप्रकाशस्य ज्ञानत्वादिति विवरणवाक्यस्य च कदाचित ज्ञातृज्ञेयसम्बन्धेनैवोपपत्तेर्न प्रदर्शितानुभवविरोध इति भावः।

यच्चोक्तं पूर्वपक्षिणा—"अनादिब्रह्मसत्तायाश्च कर्तयंपेक्षादर्शनात्, अन्यथा अस्ति ब्रह्मेति चेत् वेदेत्यादौ कर्तरि लकारो न स्यादिति, तत्समाधत्ते—"अस्ति ब्रह्मेति च लकारो न ब्रह्मसत्तां प्रति ब्रह्मणः कर्तृत्वमाह" इति। अयमभिप्रायः—ब्रह्मसत्ताया नित्यत्वान्न सत्तां प्रति ब्रह्मणः कर्तृत्वमुक्तश्रुतिवाक्येन बोध्यते। किन्तु पदसाधुत्वमात्रार्थं लट्लकारस्य प्रयोगः। अस्तीतिपदस्य प्रकृत्यांशेन सत्ता उच्यते "अस् भुवि" इत्यनुशासनात्। नापदं प्रयुञ्जीतेत्यनुशासनाद् असाधातुमात्रस्य प्रयोगानर्हत्वाद् अस् धातोरुत्तरं लट्लका-

माह; नित्यत्वेन तदसम्भवात्, किन्तु साधुत्वार्थं इति द्रष्टव्यम् ॥८॥

ननु—प्रमाभ्रमभिन्नं न ज्ञानम्, न चात्मस्वरूपं ज्ञानं प्रमा; तद्विषयस्याविद्यादेस्तात्त्विकत्वापातात्, न च भ्रमः; दोषजन्यत्वापातात्—इति चेन्न; तार्किकसिद्धेश्वरज्ञानवत् घटादिनिर्विकल्पकवच्च स्वभावत उभयवैलक्षण्येनाप्युपपत्तेः, तत्रापि ईश्वरज्ञानस्य प्रमात्वे गुणजन्यत्वस्य भ्रमत्वे दोषजन्यत्वस्य चापत्तेः, निष्प्रकारके च निर्विकल्पके तद्वति तत्प्रकारकत्वस्य तदभाववति तत्प्रकारकत्वस्य चानुपपत्तेः;

---

रस्य प्रयोगः। अत्र प्रयोगसाधुत्वाय प्रयुक्तः ङ्कारो निरर्थक एव। अतो ब्रह्मसतोरैक्याद् ब्रह्मास्तिपदाभ्यामखण्डब्रह्मबोधस्वीकारेणाख्यातं पदसाधुत्वमात्रार्थम्। यथा चिन्तामणिकारमते चैत्रः जानातीत्यादौ ज्ञानकर्तृत्वादेरनुभावाद् ज्ञानाश्रयादिलक्षणायां गौरवाच्च अवच्छेदकासम्बन्धेनज्ञानप्रकारकचैत्रविशेष्यकधीस्वीकारात आख्यातं न कर्तृत्वमाह, किन्तु पदसाधुत्वमात्रार्थम् तथा प्रकृतेऽपि।

यच्चोक्तं पूर्वपक्षिणा—"आत्मा ज्ञानञ्चेत् प्रमा भ्रमो वा, नाद्यः, तद्वेद्यस्याविद्यादेस्तात्त्विकत्वापातात्, नान्त्यः दोषाजन्यत्वादि"ति तदनुवदति निराकर्तुं—ननु प्रमा भ्रमभिन्नं न ज्ञानमिति। प्रमाभ्रमभिन्नस्य ज्ञानस्याप्रसिद्धत्वादिति भावः। सिद्धान्ती निराकरोति—तार्किकसिद्धेश्वरज्ञानवदित्यादि। यथा तार्किकमते नित्यस्य ईश्वरज्ञानस्य प्रमाभ्रमबहिर्भावः, ईश्वरज्ञानस्य प्रमात्वे गुणजन्यत्वापातात्; भ्रमरूपत्वे दोषजन्यत्वापाताच्चोभयबहिर्भाव ईश्वरज्ञानस्य तार्किकैरङ्गीक्रियते, यथा वा प्रमाभ्रमबहिर्भूतं घटादिनिर्विकल्पकज्ञानं तैरङ्गीक्रियते, तद्वति तत्प्रकारकत्वरूपस्य प्रमात्वस्य, तदभाववति तत्प्रकारकत्वरूपस्य भ्रमत्वस्य च निर्विकल्पकज्ञानेऽसम्भवात्। तार्किकमते सप्रकारकज्ञानस्यैव प्रमात्वान्निष्प्रकारकनिर्विकल्पकज्ञानस्य तदसम्भवात्। एवं भ्रमस्य च सप्रकारकत्वान्निर्विकल्पकस्य तदसम्भवात्, तथा आत्मस्वरूपज्ञानस्य स्वभावेन वृत्त्यनुपरक्तचिद्रूपेण निर्विषयत्वात् निर्विषयस्य च प्रकाशस्य प्रमात्वभ्रमत्वयोरसम्भवादुभयविलक्षणस्यात्मस्वरूपज्ञानस्योपपत्तेः।

यदपि निर्विकल्पकमपि प्रमैव विशेष्यावृत्त्यप्रकारकत्वादिति, तन्न विशेष्यावृत्त्यप्रकारकत्वरूप प्रमात्वस्य स्वतोग्राह्यत्वासम्भवेन प्रमात्वस्य स्वतोग्राह्यत्वनि-

जन्यसविकल्पकत्वेन भ्रमप्रमान्यतरत्वनियमे चास्माकं क्षत्यभावात्, विलक्षणवृत्तिद्वयोपरागेण च स्वभावतो भ्रमप्रमाविलक्षणस्याप्यात्मज्ञानस्य तदुभयरूपेण व्यवहारोपपत्तेः।

न च ज्ञानपदवाच्यभिन्नत्वविवक्षायां उपाधेरपि ज्ञानपदवाच्यत्वात्तत्रासिद्धिः, ज्ञानपदलक्ष्यभिन्नत्वविवक्षायां तु घटादेरपि ज्ञानपद-

---

प्रतिपत्तिरूपव्यावहारानङ्गत्वेन तादृशप्रमात्वनिरूपणस्यैव निरर्थकत्वात्। विशेष्यावृत्तित्वादेरनुव्यवसायेन असंस्पर्शादिति भावः। किञ्च विशेष्यवृत्त्यप्रकारकत्वरूपं भ्रमत्वमङ्गीकृत्य निर्विकल्पकज्ञानस्य भ्रमत्वमपि सुवचं स्यात्।

यच्चोक्तं पूर्वपक्षिणा—भ्रमप्रमाविलक्षणस्याप्रसिद्धत्वादिति, तत् प्रदर्शितरूपेण निरस्य भ्रमत्वप्रमात्वाभ्यां जन्यसविकल्पकज्ञानस्यैव द्वैविध्यं न तु ज्ञानमात्रस्येति प्रदर्शयन्नाह आचार्यः—"जन्यसविकल्पकत्वेन भ्रमप्रमान्यतरत्वनियमे" इति। जन्यसविकल्पकत्वं भ्रमप्रमान्यतरत्वव्याप्यम्। यज्जन्यसविकल्पकं ज्ञानम्, तत् भ्रमप्रमान्यतरत्। न तु ज्ञानत्वमात्रं भ्रमप्रमान्यतरत्वव्याप्यम्, ईश्वरज्ञाने निर्विकल्पकज्ञाने च व्यभिचारात्। जन्यसविकल्पकत्वस्य भ्रमप्रमान्यतरव्याप्यत्वे चाद्वैतवादिनः क्षत्यभावात्। ब्रह्मस्वरूपज्ञानस्य जन्यसविकल्पकत्वाभावेन भ्रमप्रमान्यतरत्वापत्तिर्न स्यात्।

इदानीं सुहृद्भावेन पृच्छति पूर्वपक्षी—जन्यसविकल्पकं ज्ञानमपि विषयाकारवृत्त्युपरक्तचैतन्यमेव, चैतन्यञ्च एकमेवेति कथमेकस्यैव चैतन्यस्य भ्रमप्रमाविलक्षणस्य भ्रमत्वेन प्रमात्वेन च व्यवहार इति, तत्र सुहृद्भावेनैवोत्तरमाह आचार्यः—"विलक्षणवृत्तिद्वयोपरागेण चे"ति। अयम्भावः—सत्यं वृत्त्यनुपरक्तं चिन्मात्रं भ्रमप्रमाविलक्षणमपि विषयाकारान्तःकरणवृत्त्युपरक्ततया प्रमात्वेन व्यवहारास्पदं भवति आगन्तुकदोपजन्याविद्यावृत्त्युपरक्ततयाच भ्रमत्वेन व्यवहारास्पदं भवतीति भ्रमप्रमाविलक्षणमपि आत्मस्वरूपं ज्ञानं चिन्मात्रं प्रदर्शितप्रकारेण भ्रमप्रमोभयव्यवहारास्पदमित्यस्माकं सिद्धान्तरहस्यम्।

यच्चोक्तं पूर्वपक्षिणा—न चात्मस्वरूपं ज्ञानं प्रमा, तद्विषयस्याविद्यादेस्तात्त्विकत्वापातादि"ति तदसत्—अविद्यादेः साक्षिभास्यत्वात्,

लक्ष्यत्वात्तत्राप्यसिद्धिरिति—वाच्यम्, ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वविवक्षायामुक्तदोषाभावात् ॥९॥

---

साक्षिणश्च अज्ञातार्थप्रकाशरूपत्वाभावान्न प्रमात्वम्। साक्षिभास्यस्याविद्यादेरज्ञातत्वाभावेन अविद्याद्यवच्छिन्ना चिन्न प्रमा। अतस्तद्विषयस्याविद्यादेर्न तात्त्विकत्वापत्तिः। अविद्यावृत्तिप्रतिबिम्बितचैतन्यस्य साक्षित्वमतेऽविद्यावृत्तेरविद्यारूपदोषजन्यतया भ्रमत्वमिष्टमेव। अविद्यावृत्तावविद्यैवोपादनतया दोषत्वेन च कारणम्। एतच्च अज्ञानप्रत्यक्षोपपत्तिप्रकरणे स्फुटीभविष्यति। यदि तु अविद्योपहितचिदेव साक्षी, उपाधेरुपहितस्योपाध्युपधेयसम्बन्धस्य चानादित्वाद् दोषजन्यत्वं न सम्भवति, तथापि क्षैमिकदोषजन्यत्वस्यात्रापि सम्भवात्। यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वमसति चासत्त्वं, तत्तज्जन्यमिति साधनादिसाधारणं जन्यत्वं दृश्यत्वहेतुनिर्वचने उक्तम्, अतोऽविद्योपहितचितः अविद्यारूपदोषजन्यत्वेन भ्रमत्वमप्युपपद्यते। शुक्तिरजतादिसाक्षिणो आगन्तुकदोषजन्यत्वेऽपि अविद्याद्यनादिसाक्षिणः अनागन्तुकजन्यत्वमस्त्येवेति न साक्षिभास्यस्याविद्यादेस्तात्त्विकत्वापातः।

नन्वेवमपि अज्ञानत्वरूपं जडत्वं न मिथ्यात्वसाधनम्, ज्ञानपदवाच्यभिन्नं हि अज्ञानम्, ज्ञानपदवाच्यभिन्नत्वस्य हेतुत्वे भागासिद्धिः स्यात्। अद्वैतमते वृत्त्युपहितचैतन्यस्यापि ज्ञानत्वात् चैतन्योपाधिरूपाया वृत्तेरपि ज्ञानपदवाच्यत्वात् मिथ्यात्वानुमाने पक्षकोटिप्रविष्टायां वृत्तौ ज्ञानपदवाच्यभिन्नत्वाभावात्तत्र हेतोर्भागासिद्धिः स्यादेतद्दोषपरिजिहीर्षया ज्ञानपदलक्ष्यभिन्नत्वस्याज्ञानत्वे घटादावपि हेतोरसिद्धिः स्यात्। ज्ञानपदलक्ष्यं शुद्धचिन्मात्रम्, तद्भिन्नत्वं चिदुपाधिभूताया वृत्तेरस्तीति न वृत्तौ अज्ञानत्वहेतोर्भागासिद्धिरित्यभिमानः ज्ञानपदलक्ष्यभिन्नत्वमेवाज्ञानत्वमिति पक्षान्तरवादिनः। वस्तुतः अस्मिन् पक्षे घटादावपि अज्ञानत्वहेतोरसिद्धिः स्यात्। घटादेरपि ज्ञानपदलक्ष्यत्वादिति चेन्न, अज्ञानत्वं हि न ज्ञानपदवाच्यभिन्नत्वं न वा ज्ञानपदलक्ष्यभिन्नत्वम्, किन्तु ज्ञानपदजन्यप्रतीतिविशेष्यभिन्नत्वमेवाज्ञानत्वम्। ज्ञानपदजन्यायाः प्रतीतेर्लक्षणया ब्रह्ममात्रविषयिण्या प्रतीतेरिह निवेशो बोध्यः। यद्यप्यत्र प्रतीतिविशेष्यभिन्नत्वमुक्तमचार्येण, तथापि ज्ञानपदजन्यप्रतीतिविशेष्यमात्रवृत्त्या ज्ञानपदजन्यप्रतीतिविषयत्वेना-

एवमानन्दभिन्नत्वरूपमनात्मत्वमुपपाद्यम् । वैषयिकानन्दस्यापि ब्रह्मरूपत्वात्, तदुपाधिमात्रस्यैवोत्पत्तिविनाशप्रतियोगित्वात् ।

---

वच्छिन्नप्रतियोगिताको भेदो विवक्षितः । तेन ज्ञानपदजन्यप्रतीतिविषयत्वापेक्षया विशेष्यत्वस्य गुरुभूतत्वान्न भेदीयप्रतियोगितावच्छेदकत्वमिति चोद्यमपि निरस्तम् । विशेष्यमात्रवृत्तितत्प्रतीतिविषयत्वस्यैव भेदीयप्रतियोगितावच्छेदकत्वात् । एवञ्च पूर्वपक्षिप्रदर्शितदोषाणां सर्वथानवकाश एव । ज्ञानपदजन्यप्रतीतिविशेष्यत्वविशिष्टस्य मिथ्यात्वेन तत्र विशेष्यभिन्नत्वस्य हेतोरभावाद् यद्यपि भागासिद्धिः स्यात्, तथापि ज्ञानपदजन्यप्रतीतिविशेष्यतादात्म्यापन्नस्य मिथ्याभूतविशेष्याधिष्ठानस्य शुद्धचैतन्यस्य प्रतीतेविंशेष्यपदेन विवक्षितत्वान्नदोषावकाशः । शुद्धचैतन्यभिन्नत्वमेवाज्ञानत्वम्, तदेव मिथ्यात्वसाधकमिति भावः॥९॥

१०–यच्च पूर्वपक्षिणा प्रागनात्मत्वं वा जडत्वमिति तृतीयं पक्षमाशङ्क्य दूषितम्, तद्दूषणसमाधानायाह आचार्यः—**एवमानन्दभिन्नत्वरूपमनात्मत्वमुपपाद्यमिति** । अत्र पूर्वपक्षिणो वदन्ति अनात्मत्वं जडत्वमिति न सम्भवति, वक्ष्यमाणदूषणगणग्रासात्, तथा हि—आत्मभिन्नत्वं हि अनात्मत्वम्, आत्मत्वञ्चाद्वैतमते न जातिविशेषः, तन्मते आत्मन एकत्वात्, जातेरनेकसमवेतत्वावश्यम्भावात् । न च शुद्धस्यात्मन एकत्वेऽपि विशिष्टात्मनां बहुत्वात् तेषु च विशिष्टेष्वात्मसु अनुगताया आत्मत्वजातेः सम्भवाद् आत्मत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपमनात्मत्वं हेतुः सम्भवतीति वाच्यम्; विशिष्टात्मनां बहुत्वेन तेष्वात्मत्वजातेः सम्भवेऽपि विशिष्टात्मनां मिथ्यात्वेन तेषां मिथ्यात्वानुमाने पक्षकुक्षिनिक्षिप्तत्वात् तेष्वनात्मत्वहेतुर्भागासिद्धिः स्यात् । नाप्यानन्दत्वमात्मत्वम्, जन्मादिमति वैषयिकानन्देऽनात्मनि मिथ्याभूतेऽनानन्दत्वरूपमनात्मत्वस्य हेतोर्भागासिद्धिः स्यात्, वैषयिकानन्दस्यापि मिथ्यात्वेन पक्षनिक्षिप्तत्वादिति । तत्राह आचार्यः—**वैषयिकानन्दस्यापि ब्रह्मरूपत्वादिति** पूर्वपक्षिणा जन्मादिमत्त्वेन वैषयिकानन्दस्य यज्जडत्वमुक्तम्, तदसिद्धमित्याह—**तदुपाधिमात्रस्यैवोत्पत्तिविनाशप्रतियोगित्वादिति** । अयम्भावः—यथा असत्त्वापादकाज्ञानविरोधिचित्सत्ता, एवमनानन्दापादकाज्ञानविरोधिचिदेवानन्दः । चितः अनानन्दापादकाज्ञानविरोधित्वं वृत्तिविशेषोपहितत्वेनैव । वृत्तिविशेषोपहिता चिद् अना-

न च ज्ञानभिन्नत्वस्यानन्दभिन्नत्वस्य च काल्पनिकस्य ब्रह्मणि

---

नन्दापादिकाज्ञानं विलापयन्तो आनन्दरूपा भवति। तथा च—चिदुपाधिभूतस्य वृत्तिविशेषस्योत्पत्तिविनाशप्रतियोगित्वाद् वैषयिकानन्दस्योत्पत्तिविनाशव्यवहारः। एवञ्च यदुक्तं पूर्वपक्षिणा वैषयिकानन्दो जन्मादिमानिति, तदानन्दोपाधिभूताया वृत्तेरेव जन्मादिमत्त्वेन, आनन्दस्य जन्मादिमत्त्वमिति व्यामोहः। चिद्रूपस्यानन्दस्य स्वरूपतो जन्माद्यसम्भवात्। चित एवानन्दरूपत्वाद् अनानन्दस्वरूपमनात्मत्वं भवत्येव मिथ्यात्वसाधकम्। एतेन यदुक्तं पूर्वपक्षिणा—वैषयिकानन्दस्याप्यात्मत्वे नीरपानजातात् क्षीरपानजातं सुखमधिकमित्यनुभवेन "सैषा आनन्दस्य मीमांसा भवती"त्यादि श्रुत्या साधनतारतम्यादियुक्त्या च सिद्धमानन्दतारतम्यञ्च न स्यादिति, तन्निरस्तम्। चैतन्योपाधिभूताया वृत्तेरेव जनने नीरक्षीरादिपानानामुपक्षीणत्वात्। वृत्तीनां तारतम्येनोपहितस्यापि तारतम्यम्, न तु उपधेयस्य चिद्रूपस्यानन्दस्य। तत्त्वमस्यादिमहावाक्यजन्याखण्डाकारवृत्त्युपधानदशायां मूलाज्ञानस्यैवोच्छेदेऽसत्त्वापादकाज्ञानस्याभानापादकाज्ञानस्यानानन्दापादकाज्ञानस्य च विलयाद् आत्मा सच्चिदानन्दब्रह्मरूपेणैवावतिष्ठते। एकैव चिद् असत्त्वापादकाज्ञानविरोधिरूपेण सदिति, अभानापादकाज्ञानविरोधिरूपेण भानमिति, अनानन्दापादकाज्ञानविरोधिरूपेणानन्द इति शास्त्रेषु व्यपदिश्यते। अज्ञानविरोधिन्या वृत्तेः साधनतारतम्येन तारतम्यात् चिदभिव्यक्तेरपि तारतम्यम्। अतोऽखण्डे स्वरूपानन्देऽपि अभिव्यक्तितारतम्यम्।

यच्चोक्तं पूर्वपक्षिणा—विरोधिनो दुःखस्य सर्वात्मना अभावेऽपि सुखतारतम्याऽनुभवाच्चेति, तत् पापादपि पापीयः, कस्यापि जीवस्य सर्वात्मना दुःखाभावासम्भवात्। तन्त्रान्तरीया अप्याहुः—"अहितनिवृत्तिरप्यात्यन्तिकी अनात्यन्तिकी च, अनात्यन्तिकी—कण्टकादेर्दुःखसाधनस्य परिहारेण आत्यन्तिकी पुनः एकविंशतिप्रभेदभिन्नदुःखहान्या; एकविंशतिप्रभेदभिन्नं पुनर्दुःखं—शरीरं षड़िन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखं दुःखञ्चेति। एकविंशतिप्रभेदभिन्नानां दुःखानां सर्वात्मनाऽभावो बद्धस्यापि जीवस्य कस्यास्तीति पूर्वपक्षिण एव जानन्ति।

यच्चोक्तं—अन्तःकरणवृत्तिरूपसुखाभावेऽहं सुखीत्यनुभवायोगाच्चेति, तदप्यज्ञानविजृम्भितमेव, अन्तःकरणवृत्तेः सुखत्वाभावात्। किन्तु वृत्तेरनानन्दापाद-

सत्त्वात् तत्र व्यभिचार इति—वाच्यम्; धर्मिसमानसत्ताकतद्भेदस्य हेतुत्वात्।

---

काज्ञानविरोधिचित उपाधित्वात्। सुखव्यञ्जिकाया वृत्तेः सुखत्वाभावात्। सुखव्यञ्जिकायामन्तःकरणवृत्तौ विद्यमानायां या अहं सुखीति प्रतीतिः, सा चैतन्येऽन्तःकरणतादात्म्याध्यासात्। अध्यासे निरस्ते "अहं सुखी"ति प्रतीतिरेवासिद्धा। "अहं सुखी"ति प्रतीतेर्दुःखत्रतग्रस्तत्वेनापुरुषार्थत्वाच्च। विवेचितश्चैतदधस्तात्। अहं सुखीति प्रतीतेः परमपुरुषार्थत्वाभिमानो मूढानामेव।

यच्चोक्तमनानन्दत्वस्य मिथ्यात्वं प्रति अप्रयोजकत्वाच्चेति, तदनुकूलतर्कनिरूपणप्रकरणे निपुणतरमुपपादयिष्यामः। मिथ्यात्वसाधकहेतुनिर्वचनप्रकरणे हेतुरनुकूलतर्कराहित्योद्भावनमनवसरदुःस्थमेवेति नात्र पराक्रम्यते।

यच्च "नात्मत्वमहन्त्वम्, तदभावस्याहंकारेऽसिद्धेरि"त्यादि, तदनुक्तोपालम्भमात्रमिति मूकीभूय स्थीयते, अन्यथा वावदूकता प्रसारिता स्यात्।

पूर्वपक्षी शङ्कते—ज्ञानभिन्नत्वरूपाज्ञानत्वस्यानन्दभिन्नस्वरूपानात्मत्वस्य च जडत्वस्य हेतुत्वे ब्रह्मणि अस्य हेतोर्व्यभिचारः स्यात्। ज्ञानभेदस्य काल्पनिकस्य ब्रह्मणि सत्त्वात्, एवमेवानन्दभेदस्य काल्पनिकस्य ब्रह्मणि सत्त्वात् अकाल्पनिकस्य भेदस्याद्वैतमते असम्भवादकाल्पनिकत्वेन भेदो विशेषयितुं न शक्यते इति। प्रदर्शितव्यभिचारसमाधानायाह आचार्यः—पूर्वपक्षिणा न चैवं वाच्यमिति। कुतो न चैवं वाच्यम्? इत्याह **धर्मिसमानसत्ताकतद्भेदस्य हेतुत्वा**दिति। अयम्भावः—यद्यपि अकाल्पनिकत्वेन भेदो विशेषयितुं न शक्यते तथापि धर्मिसमानसत्ताकत्वेन ज्ञानभेद आनन्दभेदश्च विशेषयितुं शक्यत एव। यत्र ज्ञानभेद आनन्दभेदो वा स्थापनीयः सधर्मिभेदमात्रस्य काल्पनिकत्वात् काल्पनिके प्रपञ्चे धर्मिसमानसत्ताकः ज्ञानभेद आनन्दभेदश्च अस्त्येवेति न हेतोरसिद्धिः, न वा प्रदर्शितो व्यभिचारः; ब्रह्मसमसत्ताकभेदस्याप्रसिद्धेः ब्रह्मणि ज्ञानभेद आनन्दभेदो वा स्थापयितुमेव न शक्यते, धर्मिसमसत्ताकभेदवत्त्वस्य हेतुत्वेन विवक्षितत्वान्न दोषलेशावसरः।

न च भेदस्याद्यापि मिथ्यात्वानिश्चयात् ब्रह्मसमानसत्ताकः ज्ञानभेद आनन्दभेदश्च ब्रह्मण्यपि निश्चेतुं शक्य इति वाच्यम्, प्रपञ्चे मिथ्यात्वसन्देहेन प्रपञ्चान्तर्गते भेदे ब्रह्मसमानसत्ताकत्वानिश्चयात्। धर्मिसमानसत्ताकत्वस्य गुरुशरीरत्वाच्च परि-

अनौपाधिकत्वेन वा भेदो विशेषणीयः, तुच्छे पञ्चमप्रकाशविद्यानिवृत्तौ च व्यभिचारपरिहारः पूर्ववत्। एवम् अस्वप्रकाशत्वं वा जडत्वम्, तच्च पूर्वमेवोपपादितमिति शिवम् ॥१०॥

॥ इति अद्वैतसिद्धौ जडत्वहेतूपपत्तिः ॥

---

त्यज्य लघुशरीरं भेदे विशेषणान्तरमाह—अनौपाधिकत्वेन वा भेदो विशेषणीयः। ज्ञानभेद आनन्दभेदश्चानौपाधिको विवक्षितः। अनौपाधिकशब्दस्य प्रतियोग्यवृत्तित्वमर्थः। उपाधिं प्रतियोगिनमर्हतीति औपाधिकः स्वप्रतियोगिवृत्तिरित्यर्थः। तदन्योऽनुपाधिकः ज्ञानावृत्तिर्भेद आनन्दावृत्तिश्च भेद इति पर्यवसितोऽर्थः ब्रह्मणः ज्ञानानन्दरूपत्वादनौपाधिको ज्ञानभेद आनन्दभेदश्च ब्रह्मावृत्तिरिति भावः।

"तुच्छे पञ्चमप्रकाराविद्यानिवृत्तौ च व्यभिचारपरिहारः पूर्ववदिति। दृश्यत्वहेतुनिर्वचनावसाने एतस्य प्रपञ्चोऽस्माभिः कृत इति तत्रैव द्रष्टव्यः। यच्च पूर्वपक्षिणा जडत्वहेतुदूषणप्रारम्भे पञ्च विकल्पाःप्रदर्शिताः—जडत्वमपि अज्ञातृत्वं वा अज्ञानत्वं वा अस्वप्रकाशत्वं वा अनात्मत्वं वा पराभिप्रेतं वेति, तेष्वज्ञातृत्वस्य, अज्ञानत्वस्य, अनात्मत्वस्य च पूर्वपक्षिमतनिरसनपूर्वकं सिद्धान्त्यभिमतं निर्वचनं प्रदर्शितम्। अस्वप्रकाशत्वस्य निर्वचनन्तु दृश्यत्वहेतुनिर्वचनावसरे एव—"अत एव अस्वप्रकाशत्वरूपं दृश्यत्वमपि हेतुरि" त्याद्युक्त्या प्रदर्शितमिति पूर्वोक्तं स्मारयन्नाह—आचार्यः—एवमस्वप्रकाशत्वं वा जडत्वम्, तच्च पूर्वमेवोपपादितमिति।

यच्च पराभिप्रेतं वेति विकल्पितम्, पराभिप्रेतञ्च जडत्वमप्रमातृत्वमेव, तच्च पराभिप्रेतमेवेत्युपेक्ष्यम्, न तन्निर्वचने प्रयोजनलेशोऽपीति ॥१०॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां जडत्वहेतुनिरूपणं समाप्तम् ॥

## अथ परिच्छिन्नत्वहेतूपपत्तिः

परिच्छिन्नत्वमपि हेतुः। तच्च देशतः कालतो वस्तुतश्चेति त्रिविधम्।

तत्र देशतः परिच्छिन्नत्वम् अत्यन्ताभावप्रतियोगित्वम्। कालतः परिच्छिन्नत्वं ध्वंसप्रतियोगित्वम्। वस्तुतः परिच्छिन्नत्वमन्योन्याभावप्रतियोगित्वम्। ननु—समवायसम्बन्धेनात्यन्ताभावप्रतियोगित्वं आत्मनि व्यभिचारि; तस्याप्याकाशादिवत् व्याप्यसमवेतत्वात्;

---

१—प्रपञ्चमिथ्यात्वसाधकं दृश्यत्वं जडत्वञ्च हेतुमुपपाद्येदानीं प्रपञ्चमिथ्यात्वसाधकं परिच्छिन्नत्वमप्युपपादयितुमाह—"परिच्छिन्नत्वमपि हेतुः" प्रपञ्चमिथ्यात्वसाधक इत्यर्थः। प्रपञ्चमिथ्यात्वसाधकत्वेनोपन्यस्तं परिच्छिन्नत्वं त्रिविधमित्याह—तच्चेति। परिच्छिन्नत्वञ्चेत्यर्थः। त्रिविधम्—देशतः परिच्छिन्नत्वं कालतः परिच्छिन्नत्वं वस्तुतः परिच्छिन्नत्वम्। देशतः परिच्छिन्नत्वञ्च देशान्तरेऽसत्त्वं क्वचित् देशे एव विद्यमानत्वमित्यर्थः। एवं कालान्तरेऽसत्त्वं कालपरिच्छेदः क्वचित् काले एव विद्यमानत्वमित्यर्थः। वस्तुतः परिच्छिन्नत्वञ्च अन्योन्याभाववत्त्वं केनचिदेव वस्तुना तादात्म्यापन्नत्वमित्यर्थः। देशकालादयो हि वस्तुनः परिच्छेदका भवन्ति। देशकालादिभिर्वस्तुपरिच्छिन्नमिति व्यवह्रीयते। परिच्छेदो नाम व्यावृत्तिः। देशकालादिभिर्व्यावृत्तमेव देशकालादिभिः परिच्छिन्नमित्युच्यते। यथा—देशविशेषो घटादेराधारविधया तदन्याधारविशेषिताद् व्यावर्तक इति घटादिस्तद्देशपरिच्छिन्न इति व्यवह्रियते। एवमेव कालपरिच्छिन्नोऽपि भवति। एवं किञ्चिद्वस्तु तादात्म्येन घटादेर्विशेषणं सत् तदितरवस्त्वात्मकाद् व्यावर्तकं सत् तत्परिच्छिन्नमित्युच्यते। देशतः परिच्छिन्नत्वमित्यादेरार्थिकमर्थमादाय परिष्करोति। "तत्र देशतः परिच्छिन्नत्वमत्यन्ताभावप्रतियोगित्वमि"त्यादि। क्वचित् देशे एव विद्यमानस्य देशान्तरेऽसत्त्वाद् देशान्तरवृत्त्यत्यन्ताभावप्रतियोगित्वं तद्देशवृत्तिवस्तुनोऽर्थादायातीति तस्य देशतः परिच्छिन्नत्वम्। एवं ध्वंसप्रतियोगित्वं कालतः परिच्छिन्नत्वम्। क्वचित् काले एव विद्यमानस्य कालान्तरेऽसत्त्वात् कालान्तरवृत्तिध्वंसप्रतियोगित्वं तत्कालवृत्तिवस्तुनोऽर्था-

संयोगसम्बन्धेनात्यन्ताभावप्रतियोगित्वमाकाशादावसिद्धम्; तस्य यावन्मूर्तयोगित्वनियमात, अमूर्तनिष्ठात्यन्ताभावप्रतियोगित्वाभिप्राये तु आत्मनि व्यभिचारस्तदवस्थः, सर्वसम्बन्धित्वाभावविवक्षायामपि

---

दायातीति तस्य कालतः परिच्छिन्नत्वम्। एवं वस्तुतः परिच्छिन्नत्वमन्योन्याभावप्रतियोगित्वम् केनचिदेव वस्तुना तादात्म्यापन्नस्य कस्यचित् वस्त्वन्तरनिष्ठभेदप्रतियोगित्वमर्थादायातीति तस्य वस्तुतः परिच्छिन्नत्वम्। वस्त्वन्तरनिष्ठभेदप्रतियोगित्वमित्यर्थः। एवञ्च देशान्तरवृत्त्यत्यन्ताभावप्रतियोगित्वंकालान्तर वृत्तिध्वंसप्रतियोगित्वं वस्त्वन्तरनिष्ठभेदप्रतियोगित्वं देशतः परिच्छिन्नत्वं कालतः परिच्छिन्नत्वं वस्तुतः परिच्छिन्नत्वञ्च यद्यपि भवति, तथापि देशान्तरकालान्तरघटितस्य देशतः कालतः परिच्छिन्नत्वादेर्हेतुत्वे तस्य हेतोः सर्वप्रपञ्चाननुगतत्वादत्यन्ताभावप्रतियोगित्वादिभिन्नांशवैयर्थ्याच्च अत्यन्ताभावप्रतियोगित्वध्वंसप्रतियोगित्वादेरेव हेतुत्वमित्याशयवान् आह आचार्यः—'तत्र देशतः परिच्छिन्नत्वमत्यन्ताभावप्रतियोगित्वमि'त्यादि। पूर्वपक्षी शङ्कते—नन्विति। अत्यन्ताभावप्रतियोगित्वं देशतः परिच्छिन्नत्वमित्युक्तं सिद्धान्तिना। समवायसम्बन्धेनात्यन्ताभावप्रतियोगित्वमात्मनि अस्ति, आत्मनः कुत्राप्यसमवेतत्वात। तथा च आत्मनि देशतः परिच्छिन्नत्वस्य हेतोर्व्यभिचार एव। यथा आकाशादिकं न कुत्रापि समवैति, एवमात्माऽपि, आकाशकालदिशां समवायसम्बन्धेनात्यन्ताभावप्रतियोगित्वेऽपि तेषां मिथ्यात्वात्तत्र हेतोः सत्त्वान्न व्यभिचारशङ्का, किन्त्वात्मनः सत्त्वात्तत्र हेतोः सत्त्वे व्यभिचार एव स्यात्। यदि संयोगसम्बन्धेनात्यन्ताभावप्रतियोगित्वमेव देशतः परिच्छिन्नत्वम्, तच्चात्मनि नास्तीत्यभिप्रायः तर्हि मिथ्याभूतेषु आकाशादिषु तदसिद्धमित्याह पूर्वपक्षी—संयोगसम्बन्धेनेति। तस्याकाशादेर्यावन्मूर्तसंयोगित्वनियमात्। सर्वेषु मूर्तद्रव्येषु आकाशमित्यादिप्रतीतेर्वृत्तिनियामकसंयोगेनापि सर्वमूर्तेषु आकाशस्यात्यन्ताभावविरहात्। आकाशसाधकमानमपि आकाशस्य सर्वमूर्तसंयोगित्वं साधयति। सर्वत्राकाशकार्यदर्शनात्। असिद्धेरस्याः परिहाराय यदि सिद्धान्तिनैवमुच्येत्—संयोगसम्बन्धावच्छिन्नप्रतियोगितात्वेनैव तादृशप्रतियोगितायाः हेतुता, सा च अमूर्तनिष्ठात्यन्ताभावीया अकाशादावप्यस्ति—इति, एवमभिप्राये आत्मनि व्यभिचारस्तदवस्थ एवेत्याह पूर्वपक्षी—अमूर्तनिष्ठात्यन्ताभावप्रतियोगित्वाभिप्राये तु आत्मनि व्यभिचारः तदवस्थ

**सर्वसम्बन्धशून्ये परमात्मनि व्यभिचारः,**

**अज्ञाने सर्वसम्बन्धित्वासिद्धिश्च, ध्वंसप्रतियोगित्वमपि आकाशादावसिद्धम्, तेषां परैर्नित्यत्वाभ्युपगमात्,**

---

इति। सर्वमूर्तेषु आकाशमितिप्रतीत्या यावन्मूर्तद्रव्येषु गगनस्य विद्यमानत्वेऽपि कालादिष्वमूर्तद्रव्येषु गगनसंयोगविरहात् कालादिनिष्ठसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगित्वं गगनेऽस्ति—इति नास्य हेतोर्भागासिद्धिरिति यदि सिद्धान्तिनोच्येत, तर्हि तद्वदेवात्मन्यपि अमूर्तनिष्ठसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगित्वस्य हेतोः सत्त्वात् व्यभिचारः तदवस्थः। समवायसम्बन्धेनात्यन्ताभावप्रतियोगित्वरूपस्य हेतोरात्मनि सत्त्वात पूर्वप्रदर्शितव्यभिचारवदेवेदानीमपि व्यभिचारः। यदि तु अद्वैतवादिना देशतः परिच्छिन्नत्वमत्यन्ताभावप्रतियोगित्वम्, तच्च द्वितीयमिथ्यात्वलक्षणोक्तरीत्या सम्बन्धसामान्येनैवात्यन्ताभावप्रतियोगित्वमुच्येत, एवञ्च सर्वासम्बन्धित्वमेव पर्यवस्यति। मिथ्यात्वेनाभिमतं वस्तु सर्वासम्बन्धि, सम्बन्धसामान्यावच्छिन्नप्रतियोगिताकात्यन्ताभावप्रतियोगीति, सर्वासम्बन्धित्वमेवात्यन्ताभावप्रतियोगित्वं देशतः परिच्छिन्नत्वम्, तर्हि सर्वसम्बन्धशून्ये परमात्मनि अस्य हेतोर्व्यभिचारः स्यात्। अद्वैतमते परमात्मन असङ्गत्वेन सर्वासम्बन्धित्वात्।

किञ्च प्रपञ्चोपादाने मिथ्याभूतेऽज्ञाने सर्वसम्बन्धिनि सर्वासम्बन्धित्वस्य हेतोरभावेन अस्य हेतोरसिद्धिश्च स्यात्। अज्ञानस्य सर्वगतदेशकालोपादानत्वेन देशतः परिच्छेदायोगात्। ब्रह्मणोऽज्ञानविषयत्वाद् ब्रह्मणश्च अपरिच्छिन्नत्वात् तदावरणभूतमपि अज्ञानमपरिच्छिन्नमेव वाच्यम् अद्वैतवादिना। एवञ्च अपरिच्छिन्ने मिथ्याभूतेऽज्ञाने परिच्छिन्नत्वस्य हेतोरभावादसिद्धिरेव स्यात्।

प्रदर्शितदोषगणग्रस्तत्वेनात्यन्ताभावप्रतियोगित्वं देशतः परिच्छिन्नत्वं न मिथ्यात्वसाधकम्, एवमेव ध्वंसप्रतियोगित्वरूपं कालतः परिच्छिन्नत्वमपि न मिथ्यात्वसाधकम्;, कुतो न मिथ्यात्वसाधकमित्यत आह पूर्वपक्षी—ध्वंसप्रतियोगित्वमाकाशादौ असिद्धम्। आकाशादौ मिथ्यात्वेनाभिमते ध्वंसप्रतियोगित्वस्य हेतोरभावात्। ध्वंसप्रतियोगित्वमाकाशादौ असिद्धं कुत इत्यत आह पूर्वपक्षी—तेषां परैर्नित्यत्वाभ्युपगमाद्। तेषामाकाशादीनां परैर्वैशेषिका

अन्योन्याभावप्रतियोगित्वं चात्मनि व्यभिचारि; तस्य जडनिष्ठा-न्योन्याभावप्रतियोगित्वात्, अन्यथा जडत्वापत्तेः—इति चेत्? ॥१॥

न अत्यान्ताभावे अन्योन्याभावे च प्रतियोगिसमसत्ताकत्वा-विशेषणेन आत्मनि व्यभिचारपरिहारात्, अज्ञानाकाशादौ च स्वसमान-सत्ताकात्यन्ताभावान्योन्याभावप्रतियोगित्वसत्त्वेन असिद्ध्यभावात्।

---

दिभिर्नित्यत्वाभ्युपगमात् ध्वंसप्रागभावाप्रतियोगित्वाभ्युपगमात् ध्वंसप्रतियोगित्व-माकाशादावसिद्धम्, असिद्धो हेतुर्न साध्यसाधकः।

एवमेवान्योन्याभावप्रतियोगित्वरूपं वस्तुतः परिच्छिन्नत्वमपि न हेतुः न मिथ्यात्वानुमापकः, कुतो न हेतुः? इत्यत आह पूर्वपक्षी—अन्योन्याभाव-प्रतियोगित्वञ्चात्मनि व्यभिचारि। परमार्थभूतस्यात्मनः जडनिष्ठान्योन्याभा वप्रतियोगित्वात्; अज्ञानाकाशादिजडानामात्मप्रतियोगिकभेदवत्त्वात्। यदि जडेषु आत्मप्रतियोगिको भेदो नाङ्गीक्रियेत, तर्हि आत्मनोऽपि जडत्वमापद्येत। आत्मनो जडत्वापत्तिभिया अवश्यमेवाद्वैतवादिभिः जडनिष्ठान्योन्याभावप्रतियोगि-त्वमात्मनोऽङ्गीकरणीयम्। तथा च भवत्येवान्योन्याभावप्रतियोगित्वरूपं वस्तुतः परिच्छिन्नत्वमात्मनि अन्योन्याभावव्यभिचारि ॥१॥

इति परिच्छिन्नत्वहेतौ पूर्वपक्षः।

२—नन्वित्यादि'''जडत्वापत्तेरित्यन्तेन पूर्वपक्षिणा यदुक्तं तदसंगतमित्याहा-चार्यः—नेति। अत्यन्ताभावप्रतियोगित्वं देशतः परिच्छिन्नत्वमन्योन्याभावप्रति-योगित्वञ्च वस्तुतःपरिच्छिन्नत्वं हेतुर्यदस्माभिरुक्तम्, तत्र हेतुघटकात्यन्ताभावेऽन्यो-न्याभावे च प्रतियोगिसमसत्ताकत्वं विशेषणं देयम्। प्रतियोगिसमानसत्ताकात्यन्ता-भावप्रतियोगित्वं प्रतियोगिसमानसत्ताकान्योन्याभावप्रतियोगित्वञ्च देशतः परि-च्छिन्नत्वं वस्तुतः परिच्छिन्नत्वं च विवक्षितम्। तेन आत्मनि व्यभिचारपरि-हारात्। आत्मनः समवायसम्बन्धेनात्यन्ताभावप्रतियोगित्वेऽपि आत्मनि प्रतियो-गिसमानसत्ताकात्यन्ताभावप्रतियोगित्वं नास्ति—इति नात्मनि व्यभिचारः। आत्मात्यन्ताभावस्य प्रतियोगि आत्मा, स च पारमार्थिकसत्तावान्। आत्मव्यति-रिक्तस्य सर्वस्यापारमार्थिकत्वात् आत्मात्यन्ताभावो न आत्मसमानसत्ताक इति भावः। अज्ञानात्यन्ताभावे अकाशात्यन्ताभावे च प्रतियोगिसमानसत्ताकात्यन्ता भावप्रतियोगित्वसत्त्वात् नाऽस्य हेतोरसिद्धिः, न वा अज्ञानाकाशादौ प्रतियोगि

अविद्याकाशादेर्व्यावहारिकस्य पारमार्थिकाभावपक्षे "स्वान्यूनसत्ताके"ति विशेषणं देयम्; अत एव प्रातिभासिकशुक्तिरूप्यादेर्व्यावहारिकाभावप्रतियोगित्वेऽपि न साधनवैकल्यम् ॥२॥

---

समानसत्ताकान्योन्याभावप्रतियोगित्वसत्त्वादसिद्धिः। अज्ञानादीनां तद्भेदस्याचापारमार्थिकत्वादन्योन्याभावप्रतियोगित्वस्याज्ञानादौ नासिद्धिः।

द्वितीयमिथ्यात्वलक्षणे मिथ्यात्वघटकात्यन्ताभावस्य पारमार्थिकत्वस्य व्यावहारिकत्वस्य च समर्थनादज्ञानाकाशादीनां व्यावहारिकप्रपञ्चानां पारमार्थिकात्यन्ताभावस्य सिद्धान्तिनैवाङ्गीकृतत्वात् मिथ्यात्वघटकात्यन्ताभावस्य पारमार्थिकत्वपक्षे व्यावहारिकप्रतियोगिकात्यन्ताभावस्य प्रतियोगिसमानसत्ताकत्वाभावादत्यन्ताभावे प्रतियोगिसमानसत्ताकत्वं विशेषणं देयमिति यत्प्रागुक्तम्, तन्न संगच्छते—इत्याशंक्याहाचार्यः—अविद्याकाशादेर्व्यावहारिकस्य पारमार्थिकाभावपक्षे इति। एतस्मिन पक्षेऽभावे प्रतियोगिसमानसत्ताकत्वरूपं विशेषणमदत्त्वा प्रतियोग्यन्यूनसत्ताकत्वं विशेषणं देयम् प्रतियोगिनोऽन्यूनसत्ताको योऽत्यन्ताभावः, तत्प्रतियोगित्वमेवात्यन्ताभावप्रतियोगित्वरूपदेशतः परिच्छिन्नत्वम्। अज्ञानाकाशादीनां व्यावहारिकानां व्यावहारिकात्यन्ताभावपक्षे पारमार्थिकात्यन्ताभावपक्षे चोभयत्रापि अत्यन्ताभावस्य प्रतियोग्यन्यूनसत्ताकत्वमक्षतमवेति भावः। अभावे प्रतियोग्यन्यूनसत्ताकत्वविशेषणप्रक्षेपस्य प्रयोजनान्तरमप्याह आचार्यः—अत एव प्रतिभासिकशुक्तिरूप्यादेरिति। मिथ्यात्वानुमाने दृष्टान्तीकृतस्य प्रातिभासिकस्य शुक्तिरूप्यादेर्व्यावहारिकात्यन्ताभावप्रतियोगित्वाङ्गीकारे यद्यपि शुक्तिरजतादेर्मिथ्यात्वमायाति, तथापि प्रतियोगिसमानसत्ताकात्यन्ताभावप्रतियोगित्वानङ्गीकारेण प्रतियोगिसमानसत्ताकात्यन्ताभावप्रतियोगित्वस्य देशतः परिच्छिन्नत्वस्य हेतोः शुक्तिरूप्यादौ अभावात् दृष्टान्तस्य साधनवैकल्यं स्यात्, साधनघटकात्यन्ताभावस्य प्रतियोग्यन्यूनसत्ताकत्वविशेषणेन दृष्टान्ते शुक्तिरूप्यादौ साधनवैकल्यमपि परिहृतं भवति देशतः परिच्छिन्नत्वरूपहेतुघटकात्यन्ताभावस्य व्यावहारिकत्वे पारमार्थिकत्वे वा उभयथापि शुक्तिरूप्यादिदृष्टान्ते प्रातिभासिकशुक्तिरूप्याद्यन्यूनसत्ताकात्यन्ताभावप्रतियोगित्वस्य हेतोः सत्वात् न दृष्टान्ते साधनवैकल्यमिति भावः ॥२॥

निरुक्तमिथ्यात्वप्रकाराणामेवंरूपत्वाभावात् न साध्याविशिष्टता। ध्वंसप्रतियोगित्वं चाकाशादौ नासिद्धम्; "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति श्रुतिसिद्धजन्यत्वेनानुमितत्वात्, आकाशवत्

३—प्रतियोग्यन्यूनसत्ताकात्यन्ताभावप्रतियोगित्वं प्रतियोगिसमानसत्ताकात्यन्ताभावप्रतियोगित्वं वा यदि देशतः परिच्छिन्नत्वं हेतुः स्यात्, तर्हि हेतोः साध्याविशिष्टता भवेत्, यदेव साध्यम्, स एव हेतुरित्युक्तं स्यात्। द्वितीयमिथ्यात्वलक्षणे एतादृशात्यन्ताभावप्रतियोगित्वस्यैव मिथ्यात्वस्याभिहितत्वात्तस्यैव चात्र हेतुत्वेनोपादानात् भवति हेतोः साध्याविशिष्टता। सिद्धसाधनता हेतुसिद्ध्यैव साध्यस्यापि सिद्धत्वात्। साधनस्य साध्याविशिष्टत्वे साधनस्यापि साध्यवदेवासिद्धत्वादसिद्धस्य च साधनत्वायोगाच्च। नहि असिद्धमसिद्धेन साध्यते—इत्याशंक्याह आचार्यः—निरुक्तमिथ्यात्वप्रकाराणामेवंरूपत्वाभावादिति। द्वितीयमिथ्यात्वेन सहास्य हेतोरविशिष्टत्वेऽपि प्रथमतृतीयादिमिथ्यात्वप्रकाराणां द्वितीयमिथ्यात्वरूपत्वाभावात् द्वितीयमिथ्यात्वरूपस्य देशतः परिच्छिन्नत्वस्य हेतुत्वेनोपादाने प्रथमस्य तृतीयस्य वा मिथ्यात्वस्य साध्यत्वेनोपादानात् नास्य हेतोः साध्याविशिष्टतेति भावः। यच्च पूर्वपक्षिणा प्राक् शंकितं ध्वंसप्रतियोगित्वरूपं परिच्छिन्नत्वं वैशेषिकाद्यभिमतनित्याकाशादौ असिद्धमिति तत्समाधानायाह आचार्यः—ध्वंसप्रतियोगित्वञ्चाकाशादौ नासिद्धमिति कुतः आकाशादीनां नित्यत्वासिद्धेः। तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इति श्रुत्या आकाशस्य जन्यत्वावगमात् श्रुतिसिद्धजन्यत्वानामाकाशादीनां जन्यत्वेनैव हेतुना अनित्यत्वानुमानात्। यद् यद् जन्यं तत्तन्नाशप्रतियोगि इति व्याप्तिसहायेन प्रवृत्तमनुमानमाकाशस्य ध्वंसप्रतियोगित्वं साधयति। ध्वंसस्यापि जन्यत्वेन ध्वंसप्रतियोगित्वमनुमेयम्। ध्वंसस्यापि ध्वंसप्रतियोगित्वेन च यथा प्रतियोग्युन्मज्जनापत्तिस्तथा अद्वैतरत्नरक्षायाम् [रक्षणे] आचार्येणैव प्रतिपादनात्। उक्तञ्च तत्र घटध्वंसोऽपि मुद्गरपातादिरेव; तदतिरिक्तध्वंसस्याननुभवात्। न च मुद्गरपाताज्जातो ध्वंस इत्यनुभवः कथं स्यादिति वाच्यम्, तस्यानुभवस्यासिद्धेः। मुद्गराज्जातो ध्वंस इत्येवानुभवः मुद्गरपातस्तु मुद्गरजन्यो भवति। यद्वा कपालावस्थैव घटस्य ध्वंसः। गुणगुण्यादिभेदाभावान्न पृथग् ध्वंसः [ पृ० २३ ] अतएवोक्तमाचार्येण श्रुतिसिद्धजन्यत्वेनानुमितत्वात्, ध्वंसप्रतियोगित्वस्येति शेषः। आकाशस्य

सर्वगतश्च नित्य" त्यत्र चात्मनिदर्शनत्वं स्वसमानकालीनसर्वगतत्वेन आभूतसंप्लवावस्थायित्वेन चेति द्रष्टव्यम्। "अतोऽन्यदार्तमि"ति श्रुत्या अनात्ममात्रस्यैव विनाशित्वप्रतिपादनात्। अत एव घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः, विभक्तत्वात्, यथा सर्पमालादिकम्, स्वानुगतप्रतिभासे रज्ज्वा इदमंशे विभज्यते, एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते "सन् घटः सन् पट" इति—आनन्दबोधोक्तमपि साधु ॥३॥

---

नित्यत्वं प्रदर्शयितुं पूर्वपक्षी शंकते आकाशवत् सर्वगतश्च नित्यः [छान्दो—३।१४।३] इति श्रुत्या आकाशस्य नित्यत्वावगमात् कथमाकाशस्यानित्यत्वमुच्यते आकाशस्य नित्यात्मनिदर्शनत्वेन च नित्यत्वमवगम्यतेऽनित्यत्वाभ्युपगमे प्रदर्शिता श्रुतिर्विरुद्धयेत इति शङ्कायाः समाधानमाहाचार्यः स्वसमानकालीनेति आकाशसमानकालीनसर्वगतत्वमाकाशस्य श्रुत्या प्रतिपाद्यते। स्वसमानकालीन-सर्वगतत्वेन सर्वगतात्मनिदर्शनत्वमुपपद्यते। आकाशस्य नित्यत्वमपि आभूत-संप्लवावस्थायित्वेन सृष्टिकालाविनाशित्वेन उपपद्यते। सर्वथा नित्यत्वाभ्युपगमे एकमेवाद्वितीयमित्यादि श्रुतिविरोधः स्यात्। अतोऽन्यदार्त्तम् इति श्रुत्या आकाशाद्यनात्ममात्रस्य विनाशित्वप्रतिपादनात्। आकाशस्य वास्तवं नित्यत्वं न सम्भवति।

प्रमाणमालायामानन्दबोधभट्टारकेन परिच्छिन्नत्वहेतुना प्रपञ्चस्य मिथ्यात्वं साधयितुमनुमानमुपन्यस्तम्। तदनुमानं व्यासतीर्थेन न्यायामृते दूषितम्। तद्दूषणोद्धाराय आचार्यः न्यायमालायामुक्तमनुमानमनुवदति घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिता विभक्तत्वाद् यथा सर्पमालादिकं स्वानुगत-प्रतिभासे रज्ज्वा इदमंशे विभज्यते। एवं ब्रह्मणि अनुगच्छति घटादिकं विभज्यते सन् घटः सन् पट इति। आनन्दबोधोक्तमपि साधु। अयमानन्दबोधग्रन्थः पूर्वपक्षिणा न्यायामृतकृता एवं व्याख्यातः। घटादयः स्वानुगतप्रतिभासे कल्पिताः। घटादय इति पक्षनिर्देशः। स्वानुगतप्रतिभासे कल्पिता इति साध्यनिर्देशः। साध्यघटकस्वपदेन पक्षीकृतघटादीनां परामर्शः। पक्षीकृतघटादीन्प्रति अनुगत-त्वेन प्रतिभासमानं यद्वस्तु तत्र घटादयः कल्पिता इति साध्यवाक्यस्यार्थः।

विभक्तत्वादिति हेतुवाक्यस्य अननुगतत्वादित्यर्थः। यद् यद् अननुगतं तत् स्वानुगते वस्तुनि कल्पितमिति आनन्दबोधस्याभिप्रायः। सर्पमालादिकमित्यत्रादिपदेन बलीवर्दमूत्रग्रहणम्। यथा एकस्यां रज्वौ इदमंशे अयं सर्पः, इयं माला, इदं बलीवर्दमूत्रमित्याद्यारोपदर्शनात् श्वानसर्पादीन् अननुगतान् प्रति अधिष्ठानतया अनुगते रज्वा इदमंशे सर्पमालादिकं कल्पितम् इदमंशेऽनुगच्छति सति सर्पमालादिकं विभज्यतेऽननुगतं भवति। एतदेव प्रकृते दर्शयति सन् घटः सन् पट इति। सामान्यतयैव विभक्तत्वादिति हेतूपन्यासाद्विभक्तत्वशब्दार्थतया प्रसक्तान् विशेषपक्षानाशंक्य दूषयति [निषेधति] न्यायामृतकारः। विभक्तत्वं हि न तावत् भिन्नत्वम् कादाचित्कत्वं वा क्वाचित्कत्वं वा निरस्तत्वात्। नापि विभक्तत्वमनुगतत्वम् अननुगतानां घटपटादीनां चलनादौ रूपादौ द्रव्यत्वादौ ध्वंसादौ अनात्मत्वादौ च खपुष्पनृशृङ्गादीनामसति, आत्मनश्च सदर्थेऽनध्यासात्। विभक्तत्वहेतोः संम्भावितानर्थान् निषिध्याभिप्रेतमर्थमाशंक्य निराकरोति—नापि अननुगतत्वं विभक्तत्वं व्यभिचारादित्यर्थः। यद्यपि अननुगतस्यानुगते अध्यासोऽद्वैतवेदान्तिनामभिप्रेतोऽर्थः तस्य च न घटादौ व्यभिचारः तथापि घटश्चलति पटश्चलति इत्यत्र घटपटादावननुगतत्वसद्भावेऽपि चलनादीनामनुगतत्वात्। नह्यत्रानुगते चलने घटादीनामध्यासः इत्येको व्यभिचारः। एवमेव घटो रूपी, पटो रूपीत्यादौ घटपटयोरननुगतत्वेऽपि रूपस्यानुगतत्वादनुगते रूपे घटादीनामनध्यासात् द्वितीयो व्यभिचारः। एवमेव घटो द्रव्यं पटो द्रव्यमत्रापि घटपटादीनामननुगत्वेऽपि द्रव्यत्वस्यानुगतत्वात्। अनुगते द्रव्यत्वे घटपटादीनामनध्यासात्तृतीयो व्यभिचारः। एवमेव घटो ध्वस्तः, पटो ध्वस्त इत्यत्र घटपटादीनामननुगतत्वेऽपि ध्वंसस्यानुगतत्वाचत्र घटपटादीनामनध्यासाचतुर्थो व्यभिचारः। एवमेव अनात्मा घटः, आनात्मा पट इत्यादौ घटपटादीनामननुगतत्वसद्भावेऽपि अनात्मत्वस्यानुगतत्वात्तत्रानात्मनि घटपटादीनामनध्यासात् पञ्चमो व्यभिचारः। एवमेव खपुष्पमसत् नृशृङ्गमसदित्यादौ खपुष्पनृशृङ्गादीनामननुगतत्वसद्भावेऽपि असतोऽनुगतत्वात् असति खपुष्पादीनामनध्यासात् षष्ठो व्यभिचारः। एवमेव आत्मा सन् द्वितीयाभावः सन् इत्यत्र आत्मद्वितीययाभावयोरननुगतत्वेऽपि सतोऽनुगतत्वात् सति आत्मादीनामनध्यासात् सप्तमो व्यभिचारः। अनन्तरं न्यायामृते उक्तम्। दृश्यते एकत्र

विभक्तशब्देन स्वसानसत्ताकभेदप्रतियोगित्वरूपवस्तुपरिच्छेदस्य विवक्षितत्वात् न ब्रह्मतुच्छयोर्व्यभिचारः ॥४॥

---

अनेकेषामिव एकस्यापि रूप्यस्यानेकेषु शुक्तिरङ्गादिष्वध्यासः एवञ्च सदर्थस्यैव घटादिष्वारोपः किं न स्यात् ? ॥३॥

इति पूर्वपक्षसंक्षेपः ।

४—अत्र समाधत्ते आचार्यः—विभक्तशब्देन स्वसमानसत्ताकभेदप्रतियोगित्वरूपवस्तुपरिच्छेदस्य विवक्षितत्वात् । अयमभिप्रायः । विभक्तत्वहेतोरननुगतत्वमर्थः पूर्वपक्षिणा व्याख्यातः । स्वव्याख्यातमर्थमुपादायैव पूर्वपक्षिणा आनन्दबोधानुमाने दूषणजातानि प्रदर्शितानि । अनभिप्रेतेऽर्थे दूषणप्रदर्शनमकाण्डताण्डवितमेवेति कृत्वा सिद्धान्ते पूर्वपक्षिप्रदर्शितम् दूषणजातमनुद्धृत्यैव सिद्धान्तरहस्यं प्रदर्शयति । परिच्छिन्नत्वहेतुप्रदर्शनप्रसंगे एवास्य हेतोर्दूषणाय पूर्वपक्षिणा आनन्दबोधीयमनुमानमुपन्यस्तम् । तेन विभक्तत्वादिति हेतुरपि परिच्छिन्नत्वरूप एव भवितुं युक्तः । अन्यथा परिच्छन्नत्वहेतुदूषणावसरे आनन्दबोधीयहेतोरुपन्यासोऽसंगत एव स्यात् । विभक्तत्वमपि परिच्छिन्नत्वरूपमेव भवितुं युक्तम् । एतदेवाभिप्रेत्याचार्येण भेदप्रतियोगित्वरूपम् वस्तुतः परिच्छिन्नत्वमेव व्याख्यातम् । वस्तुपरिच्छिन्नत्वञ्च अन्योन्याभावप्रतियोगित्वं प्रागेवाचार्येणोक्तम् । अन्योन्याभावप्रतियोगित्वरूपं परिच्छिन्नत्वं कियद्विशेषणयोगेनैवात्र परिष्क्रियते—स्वसमानसत्ताकेति । अत्र स्वपदं प्रतियोगिपरम् । तथा च प्रतियोगिसमानसत्ताकभेदप्रतियोगित्वरूपपरिच्छिन्नत्वमेव विभक्तत्वपदेनानन्दबोधाचार्येणोक्तम्, न पूर्वपक्षिव्याख्यातम् अननुगतत्वम् । स्वानुगतप्रतिभासे इति साध्यांशस्य स्वतादात्म्येन स्वरूपतो भानयोग्य इत्यर्थः । तथा च स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारतावति इति यावत् । स्वानुगतप्रतिभासे इत्यत्र सप्तम्या व्यापकत्वमर्थः । व्यापकत्वानिरूपकत्वञ्च तादात्म्येन । तथा च यद् यदुक्तप्रकारताविशिष्टं तत्र तत्र कल्पिता इत्यर्थः तथा च स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारतावद् यद् यत् तत्र तत्र कल्पिता इत्येव घटादयः स्वानुगतप्रतिभासे सद्वस्तुनि कल्पिता इति पक्षसहितसाध्यांशस्य समुदितोऽर्थः । कल्पितत्वञ्च ज्ञाननिवर्त्यत्वम् स्वात्यन्ताभाववति प्रतीयमानत्वं वा । तथा चोक्तप्रकारताव्यापकत्वनिवर्तकज्ञानविषयताकत्वमुक्त-

प्रकारताव्यापकस्वात्यन्ताभावकत्वं वा पर्यवसितोऽर्थः। उक्तप्रकारताया व्यापकत्वमनुक्त्वा सामानाधिकरण्यमात्रोक्तौ पटादेः स्वतादात्म्यविभ्रमविषयघटत्वादौ कल्पितत्वमादाय परैरर्थान्तरं वाच्यम् अतः सामानाधिकरण्यमनुक्त्वा व्यापकत्वमुक्तम्। स्वमते हि उक्तभ्रमे तादात्म्येन पटादेर्नारोपितत्वं किन्तु पटतादात्म्यस्य। पटतादात्म्यनिवर्तकधीविषयत्वमेव घटत्वादेः, न तु घटत्वादेः पटादिनिवर्तकधीविषयत्वम्। व्यापकत्वनिवेशे च तादृशप्रकारतायाः सद्रूपे सत्त्वात्तस्य च स्वानिवर्तकधीविषयत्वसिध्या मदिष्टसिद्धिः। न च स्वमते बाधः घटत्वादेर्व्यावहारिकपटादिनिवर्त्तकबुद्धिविषयत्वादिति वाच्यम्, घटत्वादिजातिमात्रस्य सद्रूपताया मूले एव वक्ष्यमाणत्वात्। तादृशप्रकारतावति द्रव्यगुणादौ घटो द्रव्यं पटो द्रव्यमित्यादौ रूपं गुणः स्पर्शो गुण इत्यत्र द्रव्यगुणादौ घटपटरूपस्पर्शनिवर्त्तकधीविषयत्वाभावात् अनवच्छिन्नेति प्रकारतायामुक्तम्। कल्पितत्वं यदि स्वात्यन्ताभावाधिकरणे एव प्रतीयमानत्वमित्येवोच्यते तर्हि प्रकारतायामनवच्छिन्नत्वं न देयम्। द्रव्यादीनां सर्वत्र स्वात्यन्ताभावसामानाधिकरण्यस्य सिषाधयिषितत्वात्। एवं ब्रह्मण्यनुगच्छतीत्यादेरुपनयनिगमनयोस्तात्पर्यम् आनन्दबोधीयानुमाने स्वानुगतप्रतिभासे वस्तुनि कल्पिताः इति साध्यांशस्य स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारतायास्तादात्म्येन व्यापकीभूतम् कल्पितत्वं येषां ते स्वानुगतप्रतिभासे वस्तुनि कल्पिताः इत्यर्थ एव आनन्दबोधस्य विवक्षितः। तेन न्यायामृतकृता यद्व्यभिचारसप्तकं प्रदर्शितं तदनवस्थादुःस्थमेव स्यात्। घटश्चलतीत्यादौ घटतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारतायाः चलनेऽभावात् न व्यभिचारः। घटः सन् इत्यादौ तु घटतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारतायाः सति सत्वात् सद्रूपे ब्रह्मणि च घटस्य कल्पितत्वात् न व्यभिचारशंकाऽपि। एवमेव घटो रूपी इत्यादावपि घटतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारतायाः रूपेऽसत्वात् न व्यभिचारः। रूपे घटस्य न तादात्म्यं न वा रूपनिष्ठप्रकारता निरवच्छिन्ना। रूपिणि घटतादात्म्यसत्त्वेऽपि रुपिनिष्ठप्रकारता न निरवच्छिन्ना संभवति इति न व्यभिचारः। एवमेव घटो द्रव्यमित्यत्र घटतादात्म्यविषयतानिरूपितप्रकारतायाः द्रव्ये सत्त्वेऽपि न सा प्रकारता निरवच्छिन्ना संभवति। सद्रूपब्रह्मनिष्ठा प्रकारतैव निरवच्छिन्ना। ब्रह्मणो

न च—'खण्डो गौर्मुण्डो गौरि' त्येवमादिस्वानुगतप्रतिभासे गोत्वादौ व्यक्तीनामकल्पितत्वात् व्यभिचार इति वाच्यम्; सत्सामान्या-निर्धर्मकत्वात्। एवमेव "घटो ध्वस्तः" इत्यत्र घटतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारतायाः ध्वंसेऽसत्त्वात् न व्यभिचारः। एवमेव "अनात्मा घट" इत्यादौ घटतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारताया अनात्मनि अभावान्न व्यभिचारः। एवमेव खपुष्पमसत् इत्यादौ खपुष्पनिष्ठतादात्म्यविषयतानिरूपितनिरवच्छिन्न-प्रकारताया असति अभावान्न व्यभिचारः। एवमेव आत्मा सन्नित्यादौ आत्मसतोर-त्यन्तमेकत्वान्न तादात्म्यविषयतानिरूपितत्वमस्ति। भेदसमानाधिकरणाभेदस्थले एव तादात्म्यसम्बन्धस्वीकारात्। अनन्तरमाचार्येणोक्तम्—न ब्रह्मतुच्छ-योर्व्यभिचारः। विभक्तपदेन स्वसमानसत्ताकभेदप्रतियोगित्वविवक्षया ब्रह्म-भिन्नो घटः तुच्छभिन्नो घट इत्यादिस्थले ब्रह्मप्रतियोगिकभेदस्य ब्रह्मसमानसत्ता-कत्वाभावात्। ब्रह्मसमानसत्ताकभेदप्रतियोगित्वस्य ब्रह्मण्यभावात् विभक्तत्वहेतुर्न ब्रह्मवृत्तिः। अतो ब्रह्मणि मिथ्यात्वाभावान्न हेतोर्व्यभिचारः, हेतोरपि ब्रह्मवृत्ति-त्वाभावात्। तुच्छे च सत्ताया अभावात् तुच्छसमानसत्ताको भेदोऽप्रसिद्ध एव। सुतरां तुच्छे मिथ्यात्वरूपसाध्याभावेऽपि विभक्तत्वरूपहेतोरप्यभावान्न व्यभिचारः ॥४॥

५—अनन्तरं न्यायामृतग्रन्थे विवादाध्यासितं सद्रूपे कल्पितम्, प्रत्येकं तदनु-विद्धतया प्रतीयमानत्वात्, प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवत् इति ब्रह्म-सिद्ध्युक्तं निरस्तम्। खण्डो गौर्मुण्डो गौरिति प्रत्येकं गोत्वानुविद्धस्यापि खण्डा-देस्तत्रानध्यासाद् इत्युक्तम्। ब्रह्मसिद्धिकारोक्तानुमानदूषणाय खण्डो गौरित्याद्युक्तं न्यायामृतग्रन्थे। आचार्येण पुनरानन्दबोधोक्तानुमानदूषणसमाधानप्रसङ्ग एव खण्डो गौरित्याद्युदाहृत्य दूषणसमाधानं कृतम्। द्वयोरनुमानयोः रीतिसाम्या-दाचार्येणैवं कृतम्। खण्डो गौर्मुण्डो गौरित्यादिषु खण्डमुण्डाद्यनुगतप्रतिभासे गोत्वादिजातौ खण्डमुण्डादिव्यक्तीनामनध्यस्तत्वाद् व्यभिचारः शङ्कितः पूर्व-पक्षिणा। घटादीनां यथा स्वानुगतप्रतिभासे सद्वस्तुनि कल्पितत्वं नैवं खण्डमुण्डा-दीनां स्वानुगतप्रतिभासे गोत्वादिसामान्ये कल्पितत्वमस्ति। अतो विभक्तत्व-हेतोर्विद्यमानत्वेऽपि स्वानुगतप्रतिभासे कल्पितत्वस्य साध्यस्याभावाद् व्यभिचारः स्यादिति पूर्वपक्षिणोऽभिप्रायः। पूर्वपक्षं समाधातुमाह आचार्यः—सत्सामा-

तिरिक्तगोत्वादिसामान्यानभ्युपगमात्, गोत्वाद्यभ्युपगमेऽपि गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमात् व्यक्तिविशेषाणामेवाननुगतानां सास्नादिमत्त्वाद्युपाध्यनुगतानां वा तद्व्यञ्जकत्ववत् व्यक्तिविशेषविशिष्ट-

---

न्यातिरिक्तगोत्वादिसामान्यानभ्युपगमादिति। आचार्यस्यायमभिप्रायः—खण्डो गौरित्यादिप्रत्यये यथा गोत्वसामान्यमनुगततया भासते पर्यालोच्यमाने सद्रूपं ब्रह्मैव गोत्वसामान्यरूपेणानुगततया भासते। अतः सद्रूपे ब्रह्मणि खण्डमुण्डादिव्यक्तीनां कल्पितत्वान्न व्यभिचारः। खण्डः सन्, मुण्डः सन्नित्यादिप्रतीतिवत् खण्डो गौर्मुण्डो गौरित्यादिप्रतीतावपि सत्सामान्यरूपगोत्वस्यैवानुगततया प्रतिभासनात्। विशेषतो भेदखण्डनप्रकरणे लघुचन्द्रिकायामुक्तम्— "मन्मते घटत्वादिजातिः सद्रूपब्रह्मैव" [ पृ० ७९१ ] गोत्वादिजातिमत्त्वेन पराभिमता यावत्यो व्यक्तयस्तावदन्यतमोपरक्तसद्रूपं ब्रह्मैव गौरित्याकारकव्यवहारे कारणम्। एवं घट इत्यादिव्यवहारेऽपि बोध्यम्। उक्तञ्च भर्तृहरिभिः—

"सम्बन्धभेदात् सत्तैव विद्यमाना गवादिषु।
जातिरित्युच्यते तस्य सर्वे शब्दा व्यवस्थिताः॥"

अन्यच्च

"सा जातिः सा महासत्ता [नात्मा] तामाहुस्त्वतलादयः।"

वैयाकरणभूषणेऽप्युक्तम्—

सत्यासत्यौ तु यौ भावौ प्रतिभावं व्यवस्थितौ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः॥

इत्यनेन व्यक्तीनां जातौ कल्पितत्वं दीक्षितैरेव प्रतिपादितम्। सम्बन्धभेदादित्यस्य तत्तद्गवादिव्यक्त्युपहितत्वरूपस्य सम्बन्धस्य तावद्व्यक्तितादात्म्यानाम् अन्यतमत्वविशिष्टरूपस्य वा सम्बन्धस्य भेदात्, एवञ्च वैयाकरणमतेऽद्वैतमते च सत्स्वरूपब्रह्मण एव गोत्वादिसामान्यरूपत्वं व्यवस्थितम्। अत एवाचार्येणोक्तम्—सत्सामान्यातिरिक्तगोत्वादिसामान्यानभ्युपगमात्। येऽपि गोत्वादिसामान्यमङ्गीकुर्वन्ति तेषामपि मते गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमाद् व्यक्तिविशेषाणामेवाननुगतानां गोत्वसामान्यव्यञ्जकत्ववत् सास्नादिमत्त्वाद्युपाध्यनुगतानां वा व्यक्तिविशेषाणां गोत्वादिसामान्यव्यञ्जकत्ववत् व्यक्तिविशेष-

त्वेन सत्सामान्यस्यैव तत्तद्व्यवहारजनकत्वोपपत्तेः। अतएव—'घटादिकं, सद्रूपे कल्पितम्, प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात्, प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवत्'—इति ब्रह्मसिद्धिकारोक्तमपि साधु ॥५॥

ननु— सदर्थस्यं ब्रह्मणः रूपादिहीनस्याऽऽसंसारमज्ञानावृतस्य शब्दैक-

---

विशिष्टत्वेन सत्सामान्यस्यैव ब्रह्मणस्तत्तद्‌गवादिव्यवहारजनकत्वोपपत्तेः। सुतरां सद्रूपसामान्ये ब्रह्मणि व्यक्तीनां कल्पितत्वात् स्वानुगतप्रतिभासे सद्रूपे ब्रह्मणि व्यक्तीनां कल्पितत्वमस्त्येवेति न व्यभिचारशङ्का। एवञ्चानन्दबोधोक्तमनुमानमनाविलमेव। ब्रह्मसिद्धिकारोक्तमनुमानं दूषयितुं यदुक्तं न्यायामृते—"एतेन विवादाध्यासितं सद्रूपे कल्पितम्, प्रत्येकं तदनुविद्धतया प्रतीयमानत्वात्, प्रत्येकं चन्द्रानुविद्धजलतरङ्गवदिति ब्रह्मसिद्ध्युक्तं निरस्तम्। खण्डो गौरित्यादौ खण्डादेर्गोत्वादावनध्यासात।" अत्र पूर्वपक्षिणा मण्डनमिश्रप्रणीतब्रह्मसिद्धावुक्तस्यानुमानस्य दूषणाय यद्व्यभिचारदूषणमाशङ्कितं तदानन्दबोधीयानुमानसमाधानावसर एवाचार्येण निरस्तम्। अत एवाद्वैतसिद्धिग्रन्थे उक्तम्—अत एव घटादिकं सद्रूपे कल्पितम्, प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात्। प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवदिति ब्रह्मसिद्धिकारोक्तमपि साधु। प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वादिति हेतौ दृष्टान्ते च प्रत्येकपदोपादानस्येदमेव फलितम्। एते वृक्षा वनमिति अपरे च वृक्षा वनमिति प्रतीतौ वनत्वेन वृक्षाणामनुगतप्रतीतावपि प्रत्येकं वृक्षेषु वनत्वेन प्रतीतिर्नास्ति। वनानुगतत्वेन प्रतीतिस्तु वृक्षेषु वर्तते। अतः प्रत्येकपदमदत्त्वाऽनुगतत्वेन प्रतीयमानत्वस्य हेतुकरणे वने वृक्षेष्वनध्यासाद् व्यभिचारः स्यात्। तद्वारणाय प्रत्येकपदमुपात्तम्। प्रत्येकव्यक्त्यनुविद्धतया प्रतीयमाने सामान्ये व्यक्तीनां यथाध्यासस्तथा प्रागेवोक्तः ॥५॥

६—ब्रह्मसिद्धिकारीयप्रयोगे प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वादिति हेतोः स्वरूपासिद्धिमाह पूर्वपक्षी—ननु "सदर्थस्य ब्रह्मण" इति। सन् घट इत्यत्र प्रतीयमाने घटादौ ब्रह्मानुविद्धतया प्रतीयमानत्वं नास्ति। कुतो नास्तीत्यत आह—ब्रह्मणः रूपादिहीनस्य। रूपादिहीनस्य ब्रह्मणः कथं घटः सन्नित्यादिबुद्धिविषयता स्यादित्यर्थः। "अशब्दमस्पर्शमरूपमव्ययम्" इत्यादिश्रुत्या ब्रह्मणो रूपादिहीनत्वं सिद्धम्। तथा च ब्रह्म न चाक्षुषादिज्ञानविषयः रूपादि-

गम्यस्य कथं घटः सन्नित्यादिबुद्धिविषयता स्यात् ? तथा च 'घटोऽनित्य' इत्यनेन घटगतानित्यतैव 'घटः सन्नि' त्यनेनापि घटगतमेव सत्त्वं गृह्यते। न च स्वरूपेणाप्रत्यक्षस्य राहोश्चन्द्रावच्छेदेनेव ब्रह्मणोऽपि घटाद्यवच्छेदेनैव प्रत्यक्षतेति वाच्यम्; शब्दाद्यवच्छिन्नस्यापि गगनादेः श्रावणत्वाद्यापातात्, राहोस्तु दूरदोषेणाज्ञातस्य नीलस्य योग्यस्य

---

हीनत्वात्, धर्मवदित्याद्यनुमानमुक्तं भवति। नन्विदमयुक्तम्—गुणे गुणानङ्गीकारेण रूपादावेव व्यभिचारात्, महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वतद्वत्समवेतत्वरूपचाक्षुषत्वप्रयोजकधर्महीनं ब्रह्म। 'ब्रह्मणि महत्त्वाङ्गीकारेऽपि महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वाङ्गीकारात्तस्य चाक्षुषत्वासम्भवात्। तथा च ब्रह्म चाक्षुषज्ञानाविषयः, तत्प्रयोजकधर्मरहितत्वात्, अतीन्द्रियत्वादित्यनुमानमुक्तं भवति। हेत्वन्तरमाह—"आसंसारमि"ति। तथा च ब्रह्म न चाक्षुषज्ञानविषयः, आसंसारमज्ञानावृतत्वात् व्यतिरेकेण घटादिवत्। हेत्वन्तरमाह—"शब्दैके"ति। ब्रह्म न चाक्षुषादिज्ञानविषयः, शब्दैकसमधिगम्यत्वात् धर्मादिवत्। सुतरां तादृशस्य ब्रह्मणः कथं घटः सन्नित्यादिचाक्षुषादिज्ञानविषयता स्यात्। ननु चाक्षुषादिज्ञाने सन् घट इत्यादि प्रतीयत एव। स च ब्रह्मैव। तथा च प्रदर्शितानामनुमानानां बाध एव। तत्राह पूर्वपक्षी—"सन्घट इत्यादौ प्रतीयमानं सद्ब्रह्म न भवति"। किन्तदिति पृच्छायामाह—"अनित्यो घट इत्यादौ घटगतमनित्यत्वादिकमिव सत्त्वमपि घटगतमेव धर्मान्तरम्"। अत्र यदि सिद्धान्ती एवं ब्रूयात् स्वरूपेण अप्रत्यक्षस्यापि ब्रह्मणः प्रत्यक्षघटाद्यवच्छेदेन प्रत्यक्षता स्याद् यथा स्वरूपेणाप्रत्यक्षस्य राहोः प्रत्यक्षचन्द्राद्यवच्छेदेन प्रत्यक्षता भवति, एवमेव ब्रह्मणोऽपि प्रत्यक्षता भविष्यति। एवं सिद्धान्तिना न वाच्यम्। स्वरूपेणायोग्यस्यापि योग्योपाध्यवच्छेदेन प्रत्यक्षयोग्यत्वकल्पने स्वरूपेण अयोग्यस्यापि गगनादेः योग्यशब्दाद्यवच्छिन्नस्यापि श्रावणत्वापातात्। एवं तर्हि स्वरूपेणायोग्यस्य राहोः कथं चन्द्राद्यवच्छेदेन योग्यता। तत्राह पूर्वपक्षी—नीलरूपस्य राहोर्न स्वरूपेणायोग्यता स्वरूपेण योग्यस्यापि राहोर्दूरत्वदोषेणाचाक्षुषत्वम्। योग्यस्य नीलस्य राहोः शुक्लभास्वरचन्द्रसम्बन्धात् चाक्षुषता। एवं हि लोके दृश्यते नीलस्यापि वस्तुनो दूरस्थस्यापि सौरादिप्रकाशसम्बन्धेन चाक्षुषतायाऽनुभवसिद्धत्वात्। प्रकृते च ब्रह्मणो रूपादिरहितत्वेन प्रत्यक्षायोग्यतया चाक्षुषादि-

शुक्लभास्वरचन्द्रसम्बन्धाच्चाक्षुषता उक्ता—इति चेन्न; यतः सदात्मना न ब्रह्मणो मूलाज्ञानेनावृतत्वम्; किन्तु घटाद्यवच्छिन्नशक्त्यज्ञानेनैव; तथा च चक्षुरादिजन्यवृत्त्या तदावरणभङ्गे सति सन् घट इत्यत्र ब्रह्मणः

---

ज्ञाने भानायोगात्। तथा च विवादाध्यासिते घटादौ सदनुविद्धतया प्रतीयमानत्वं स्वरूपासिद्धमेव। ब्रह्मसिद्धिकारोयानुमाने पूर्वपक्षिणा प्रदर्शितां स्वरूपासिद्धिं परिहर्तुकाम आचार्यः पूर्वपक्षमनूद्याह—इति चेन्न। पूर्वपक्षिणा यदुक्तं ब्रह्म आसंसारमज्ञानावृतं तथा चावृतस्य कथं सन् घट इत्यादिप्रतीतौ भानम्। तत्राह—सदात्मना न ब्रह्मणो मूलाज्ञानेनावृतत्वम्। सद्भानानन्दांशानां मध्ये आनन्दांशस्वरूपेणैव ब्रह्म मूलाज्ञानेनावृतम्। पूर्णानन्दो मे न भातीति प्रत्ययात् सद्भानरूपे भातीति प्रत्ययाच्च। ननु तर्हि सद्भानांशयोरनावृतत्वात् घटाकारवृत्त्यभावकालेऽपि घटः सन् घटो भातोति धीः स्यात्। तत्राह—किन्तु। घटाद्यवच्छिन्नशक्त्यज्ञानेनैव सदंशस्यावृतत्वमिति शेषः। शक्त्यज्ञानेनेत्यस्य मूलाज्ञानस्यैवावस्थारूपाज्ञानेनेत्यर्थः। नन्वेकाज्ञानपक्षे शक्त्यज्ञानास्वीकारेण मूलाज्ञानेनैव सद्भानांशाभ्यां ब्रह्मण आवृतत्वं वाच्यम् इत्यत आहाचार्यः—तथा च चक्षुरादीति, तथा स्वीकारेऽपि इत्यर्थः, मूलाज्ञानेनैव सद्भानात्मना ब्रह्मण आवृतत्वस्वीकारपक्षेऽपि ब्रह्मणः सद्भानांशयोस्तूलाज्ञानेन मूलाज्ञानेन वा आवृतत्वपक्षेऽपि चक्षुरादिवृत्त्यावरणभङ्गे सति सन् घट इत्यत्र ब्रह्मणः स्फुरणे बाधकाभावात्। तूलाज्ञानपक्षे चक्षुरादिवृत्त्या तूलाज्ञानावरणस्य भङ्ग एव, निवृत्तिरेवेत्यर्थः। मूलाज्ञानस्य तु ब्रह्माकाराखण्डवृत्त्यैव निवृत्तेः चक्षुरादिजन्यवृत्त्या मूलाज्ञानस्य निवृत्तिर्न भवितुमर्हति। तथापि तदावरणभङ्गे इत्यत्र भंगे अभिभवे इत्यर्थो बोध्यः। घटाद्यवच्छेदेन सद्रूपब्रह्मण आवरणस्य चक्षुरादिजन्यवृत्त्याऽभिभवो भवति। एकाज्ञानपक्षे घटाद्याकारवृत्तिकाले घटाद्यवच्छेदेन सद्भानांशविषयिकाया मूलाज्ञानविषयताया घटादिवृत्त्याऽभिभवाद् घटाद्यवच्छेदेन सद्भानांशयोर्व्यवहारः। अभिभवस्तु सन् घटो भातीत्यादिव्यवहारे मूलाज्ञानस्य प्रतिबन्धाक्षमत्वम्। तत्तदाकारवृत्त्यभावविशिष्टमूलाज्ञानमेव सन् घटो भातीत्यादिव्यवहारप्रतिबन्धकम्। वृत्तौ सत्यां वृत्त्यभाववैशिष्ट्यविघटनेन व्यवहारप्रतिबन्धक्षमत्वमज्ञानस्य यत्तदेव मूलाज्ञानस्याभिभवः। एतेन पूर्वपक्षिणा यदुक्तमासीद् आसंसारं

स्फुरणे बाधकाभावात्। न च—रूपादिहीनतया चाक्षुषत्वाद्यनुपपत्तिः बाधिकेति वाच्यम्; प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमात् सर्वेन्द्रियग्राह्यं तु सद्रूपं ब्रह्म, नातो रूपादिहीनत्वेऽपि चाक्षुषत्वाद्यनुपपत्तिः, सत्तायाः परैरपि सर्वेन्द्रियग्राह्यत्वाभ्युपगमाच्च। तदुक्तं वार्तिककृद्भिः—

'अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः।
अक्षादीनां स्वतः सिद्धो यत्र तेषां प्रमाणता॥" इति।

---

मूलाज्ञानेन ब्रह्मण आवृतत्वात् प्रत्येकं तदनुविद्धतया प्रतीयमानत्वं नास्तीति स्वरूपासिद्धो हेतुस्तस्य समाधानमुक्तमाचार्येण। यच्च पूर्वपक्षिणोक्तं रूपादिहीनस्य ब्रह्मणो घटः सन्निति प्रतीतौ स्फुरणमिति तत्राह—न च रूपादिहीनतया चाक्षुषत्वाद्यनुपपत्तिर्बाधिकेति वाच्यम्। एतस्य समाधानमाह आचार्यः— प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमात् चक्षुरादितत्तदिन्द्रियग्राह्येष्वेव रूपाद्यपेक्षा। चक्षुर्मात्रग्राह्ये रूपमपेक्षितम्, त्वङ्मात्रग्राह्ये स्पर्शोऽपेक्षणीयः। सर्वेन्द्रियग्राह्ये तु न रूपाद्यपेक्षा। ब्रह्म च सर्वेन्द्रियग्राह्यम्, न केवलं सर्वेन्द्रियग्राह्यं किन्तु सर्वप्रत्ययवेद्यम्। उक्तञ्च मण्डनाचार्यैः—

"सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते।"

अतो न ब्रह्मणः रूपादिहीनत्वेऽपि चाक्षुषत्वाद्यनुपपत्तिः। सत्तायाः परैरपि नैयायिकादिभिः सर्वेन्द्रियत्वाभ्युपगमाच्च। तदुक्तं वार्तिककृद्भिः—

"अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः।
अक्षादीनां स्वतःसिद्धो यत्र तेषां प्रमाणता॥"

आचार्येण यत् परैरपीत्युक्तं तत्रापिकारेण सत्तायाः सर्वेन्द्रियग्राह्यत्वं स्वकीयाचार्यसम्मतमपीति सूचयति। वार्तिककृद्भिस्तु अज्ञातलक्षणोऽनुभवः अक्षादीनां स्वतःसिद्धो विषय इत्युक्तम्। वार्तिकेऽनुभवपदस्य सद्रूपात्मैव अर्थः। तेनाज्ञातसद्रूप आत्मैव सर्वेन्द्रियाणां स्वतःसिद्धो विषयः। जडस्य वस्तुनोऽज्ञातत्वाभावेन न प्रमाणविषयत्वम्। किन्तु जडानां विषयीभूतसद्रूपावच्छेदकत्वमेव। सत्तायाः परैरपि सर्वेन्द्रियग्राह्यत्वाभ्युपगमादिति यदुक्तं तत्रेयं शङ्का—प्राचीनप्राभाकरैः ज्ञानविषयत्वरूपा सत्ता न सर्वेन्द्रियग्राह्येत्युक्तम्। तेषां मते ज्ञानस्य स्वविषयत्वाभावेऽपि तदात्म्येन स्वस्यैव स्वस्मिन् व्यवहारप्रयोजकत्वम्। अत एव ज्ञातताऽपि

कालस्य च रूपादिहीनस्य मीमांसकादिभिः सर्वेन्द्रियग्राह्यत्वाभ्युपगमात् ।'

---

न तेषां मते ज्ञानविषयः । ज्ञाततया व्यवहारे ज्ञानसमवायस्यैव प्रयोजकत्वं तैः स्वीक्रियते । अत एव प्राचीनप्राभाकरमते ज्ञानविषयत्वरूपा सत्ता न सर्वेन्द्रियवेद्या । चिन्तामणिकाराद्युक्तनवीनप्राभाकरमते एव ज्ञानं स्वस्वाश्रयविषयकमुच्यते । तथा च कथं सत्तायास्तथात्वं सर्वसम्मतम् ? इत्याशङ्कयाहाचार्यः—कालस्य चेति । कालस्य च रूपादिहीनस्य मीमांसकादिभिः सर्वेन्द्रियग्राह्यत्वाभ्युपगमात् । उक्तञ्च मीमांसकैः—"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" । इति मीमांसकोक्तेः ज्ञानं सर्वं किञ्चित्कालावच्छिन्नमेव स्वविषयं गृह्णाति । तत्र स्वाधिकरणक्षणावच्छिन्नत्वेन गृह्णातीत्युत्सर्गः । अत एव धारावाहिकज्ञानस्थले ज्ञानानां स्वस्वाधिकरणक्षणविशिष्टतया स्वस्वविषयग्राहित्वेनाज्ञातज्ञापकत्वमिति मीमांसकाः । तस्य बाधे तु सम्भवत्क्षणान्तरावच्छिन्नत्वेन यथा पाकरक्ते घटे श्यामोऽयमिति धीः प्राक्पूर्वक्षणावच्छिन्नत्वेन श्यामत्वं गृह्णाति । यद्यप्यत्र लघुचन्द्रिकायां मीमांसकमते एव कालस्य सर्वेन्द्रियग्राह्यत्वमाचार्येण पुनः मीमांसकादिभिरित्युक्तम् । तेन नैयायिकानामप्येतत् सम्मतम् । परिशुद्धावुदयनेन किञ्च स्मृतेर्याथार्थ्यमपि कुत इत्युक्तम् । स्मृतेर्याथार्थ्यमपि नास्ति इत्येवोदयनस्याभिप्रायः । अत्र प्रकाशकृता उक्तम्—"एतावता स्मृतेर्यथार्थत्वमभ्युपगम्य तदप्रामाण्यमुपपादितम् । इदानीं स्मृतेरयथार्थत्वादेव न प्रमेत्याह किञ्चेति । तदुपपादयति नहीति । स घट इति स्मृत्या पूर्वावस्थाविशिष्टो घटो विषयीक्रियते, घटोऽयमिति वर्तमानविषयकादनुभवात् । न च स्मृतिकाले पूर्वावस्था वर्तमानेत्यर्थः । [तात्पर्यपरिशुद्धिः, पृ० १६१] । अस्मिन् प्रकरणे वर्धमानप्रकाशे उक्तम्—अस्मत्पितृचरणास्तु विवादपदं स्मृतिः स्वविषयवर्तमानत्वविषया अतीतानागतविषयत्वे सति प्रतीतित्वात् प्रत्यभिज्ञावत् । प्रतीतेः समयविशेषविषयत्वनियमात् । ज्ञानसामग्रीमहिम्ना चाननुभूते समयांशे स्मृतिर्न तत्र संस्कारो व्यापारोऽन्यथासिद्धत्वात् । अत एव पाकरक्ते श्यामोऽयमिति व्यवहारोऽयथार्थव्यवहारः । [पृ० १६४] । एवञ्च कालस्य सर्वेन्द्रियग्राह्यत्वं न्यायमीमांसोभयसम्मतम् । एतेन सदर्थस्य ब्रह्मणः रूपादिहीनस्य कथं घटः सन्नित्यादिबुद्धिविषयता, तथा च प्रत्येकं सदनुविद्धतया प्रतीयमानत्वादिति

न च शब्दावच्छिन्नस्याकाशस्यापि श्रावणत्वं स्यादिति—वाच्यम्। स्वभावतो योग्यस्य हि केनचिन्निमित्तेन प्रतिरुद्धयोग्यताकस्यावच्छेदकादिना योग्यता संपाद्यते, यथा दूरदोषेण प्रतिरुद्धयोग्यताकस्य राहोश्चन्द्रसम्बन्धेन। एवं चावरणेन प्रतिरुद्धयोग्यताकं ब्रह्म घटाद्यवच्छेदेन योग्यं भवति, नभस्तु स्वभावायोग्यमेव; न प्रतिरुद्धयोग्यताकम्, येन शब्दावच्छेदेन योग्यं भवेत्। यद्वा—द्रव्यग्रहे चक्षुषो रूपापेक्षा, नन्वन्यग्रहे, ब्रह्म तु न द्रव्यम्; "अस्थूलमनण्वह्रस्वमदीर्घमि"ति श्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात्, अतो नानुपपत्तिः।

अस्तु वा द्रव्यम्; तथाप्यध्यस्तद्रव्यत्ववति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववत्येव चक्षूरूपमपेक्ष्यते। ब्रह्मणि

---

हेतुः स्वरूपासिद्ध एवेति यदुक्तं तदाचार्येण परिहृतम्। यच्च पूर्वपक्षिणा शङ्कितमासीत् स्वरूपेणाप्रत्यक्षस्य ब्रह्मणो घटाद्यवच्छेदेन प्रत्यक्षतेति न वाच्यं शब्दाद्यवच्छिन्नस्यापि गगनादेः श्रावणत्वापातादिति पूर्वपक्षस्य परिहारमाहाचार्यः—न च शब्दावच्छिन्नस्य आकाशस्यापि श्रावणत्वं स्यादिति वाच्यम्। कुतः? इति चेत्—स्वभावतो योग्यस्य हि केनचिन्निमित्तेन प्रतिरुद्धयोग्यताकस्यावच्छेदकादिना योग्यता सम्पाद्यते। यथा दूरदोषेण प्रतिरुद्धयोग्यताकस्य राहोः चन्द्रसम्बन्धेन। अत्र समाधानमाहाचार्यः—पूर्वपक्षाभ्युपगमानुसारेणैव ब्रह्मणोऽपि योग्यत्वं सम्भवतीत्याह आचार्यः—एवञ्चावरणेन योग्यं प्रतिरुद्धयोग्यताकं ब्रह्म घटाद्यवच्छेदेन योग्यं भवति। नभस्तु स्वभावायोग्यमेव, न प्रतिरुद्धयोग्यताकम्। येन शब्दावच्छेदेन योग्यं भवेत्। निगदव्याख्यातोऽयं ग्रन्थः। ब्रह्म सद्रूपद्रव्यमपि रूपस्पर्शाभावाद् इन्द्रियायोग्यमेव। तत्राहाचार्यः यद्वेति। यद्वा द्रव्यग्रहे चक्षुषो रूपापेक्षा, न त्वन्यग्रहे। ब्रह्म तु न द्रव्यम्। "अस्थूलमनण्वह्रस्वमदीर्घमि"ति श्रुत्या चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात् अतो नानुपपत्तिः। ननु परिमाणवत्यपि ब्रह्मणि परमार्थतः परिमाणप्रतिषेधात् ब्रह्म द्रव्यमेव। तत्राहाचार्यः—अस्तु वा द्रव्यम्। ब्रह्म अध्यस्तद्रव्यताकम्। न ब्रह्म स्वसमानसत्ताकद्रव्यत्ववत्। एवञ्चाध्यस्तद्रव्यत्ववति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताक-

च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकमेवेति न तद्ग्रहे रूपाद्यपेक्षा कल्पितत्वं च स्वाभाववति प्रतीयमानत्वं वा, स्वरूपज्ञाननिवर्त्यत्वं वेत्यन्यदेतत्। तस्मात् परिच्छिन्नत्वमपि भवति हेतुरिति सिद्धम्।

इति परिच्छिन्नत्वहेतूपपत्तिः।

---

द्रव्यत्ववत्येव चक्षूरूपमपेक्षते। गुणादौ द्रव्यत्वाध्यासे न द्रव्यत्वं धर्म्यन्यूनसत्ताकम्, अतस्तत्र गुणादिचाक्षुषे रूपं नापेक्ष्यते। गुणादौ रूपाभावात्। ब्रह्मणि च द्रव्यत्वं धर्म्यपेक्षया न्यूनसत्ताकमेव। श्रुत्या परमार्थतः ब्रह्मणि चतुर्विधपरिमाणनिषेधेन द्रव्यत्वप्रतिषेधात्। ब्रह्मणि यद् द्रव्यत्वं तदध्यस्तं ब्रह्मापेक्षया न्यूनसत्ताकम्। धर्म्यपेक्षया न्यूनसत्ताकद्रव्यत्ववतश्चाक्षुषे न रूपाद्यपेक्षा। ब्रह्मणि द्रव्यत्वस्य कल्पितत्वञ्च द्रव्यत्वाभाववति प्रतीयमानत्वम्। ब्रह्मज्ञाननिवर्त्यत्वं वा इत्यन्यत्। इत्यन्यदिति विचारान्तरम्। कल्पितत्वस्य स्वरूपं मिथ्यात्वनिर्वचनेनैव कृतनिर्वचनम्। तस्मात् परिच्छिन्नत्वमपि भवति हेतुरिति सिद्धम्। विस्तरस्तु चन्द्रिकादौ द्रष्टव्यः।

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां परिच्छिन्नत्वहेतुनिर्वचनं समाप्तम्॥

## अथ अंशित्वहेतूपपत्तिः

चित्सुखाचार्यैस्तु—'अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, अंशित्वात्, इतरांशिवदित्युक्तम्। तत्र तन्तुपदमुपादानपरम्, एतेनोपादाननिष्ठात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वसिद्धिः। न च—

---

१—चित्सुखाचार्यैस्तु प्रपञ्चमिथ्यात्वेऽनुमानं प्रमाणमुपन्यस्तम्—

अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः।
अंशित्वादितरांशीव दिगेषैव गुणादिषु ॥

इति, अस्यायमभिप्रायः—अंशिनोऽवयविनः स्वांशगात्यन्ताभावस्य प्रतियोगिनो भवन्तीति प्रतिज्ञा। हेतुमाह अंशित्वादिति। इतरांशी दृष्टान्तः। तथा चैतत् फलितम्—विमतः पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अवयवित्वात् पटान्तरवत्। यत्किञ्चित्पटमात्रं पक्षीकृत्य एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वे साधितेऽर्थान्तरता स्यात्, पटान्तरस्य एतत्तन्तुनिष्ठत्वाभावात्। तन्निवृत्त्यर्थं विमत इत्युक्तम्। पटविशेष इत्यर्थः। यः पटः एतत्तन्तुसमवेतत्वेन प्रतीतः स एव विमतपटशब्देन प्रतिपाद्यते। अत्र एतत्पटारम्भकास्तन्तव एव एतत्तन्तवः। अन्योन्याभावव्यवच्छेदार्थमत्यन्तग्रहणम्। तन्तुनिष्ठात्यन्ताभावप्रतियोगीत्युक्ते तन्त्वन्तरमादायार्थान्तरता, तदर्थमेतत्तन्तुनिष्ठेत्युक्तम्। एतत्तन्तुभिरनारब्धे पटान्तरे साध्यं सुप्रसिद्धम्। अवयवित्वादित्यस्यावयवित्वेन सम्मतत्वादित्यर्थः। अत्राचार्येण तत्र तन्तुपदमुपादानपरमित्युक्तम्। एतेन स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वसिद्धिः। स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वमेव स्वस्य मिथ्यात्वम्। अत एव अंशित्वादिति हेतोः कार्यत्वादित्यर्थः। कार्यमात्रस्य स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वे सिद्धे कार्यमात्रस्य मिथ्यात्वं सिध्यति।

अत्र पूर्वपक्षी शङ्कते—न च कार्यस्य कारणाभेदेन तदनाश्रितत्वात् सिद्धसाधनं भिन्नयोरेव हि 'आश्रयाश्रयिभावः स्यात्। कार्यकारणयोस्तु अभेदात् आश्रयाश्रयिभावो न भवितुमर्हति। कारणाभिन्नं कार्यं कारणेऽनाश्रितमेव।

कार्यस्य कारणाभेदेन तदनाश्रितत्वात् सिद्धसाधनम्, अनाश्रितत्वेनान्याश्रितत्वेन वा उपपत्त्या अर्थान्तरं च इति—वाच्यम् ॥१॥

अभेदे कार्यकारणभावव्याहत्या कथञ्चिदपि भेदस्यावश्याभ्युपेयत्वात्। न च 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यधिकरणविरोधः;

---

तथा चोपादाने उपादेयात्यन्ताभावसाधने सिद्धसाधनतैव स्यात्, कार्यस्य कारणानाश्रितत्वसाधने सिद्धसाधनता। न केवलं सिद्धसाधनता, दोषान्तरमाह—अनाश्रितत्वेन अन्याश्रितत्वेन वोपपत्त्याऽर्थान्तरञ्च। कार्यस्य स्वकारणादन्यत्रानाश्रितत्वं सिद्धमेव। कार्यं यदि स्वोपादानेऽपि न स्यात् तर्हि कार्यमनाश्रितमेव स्यात्। न पुनः कार्यस्य मिथ्यात्वं स्यात्। कार्यस्य मिथ्यात्वसाधनाय प्रवृत्तमनुमानं कार्यस्यानाश्रितत्वं प्रतिपादयत् अर्थान्तरमेव भवेत्। सिषाधयिषितादर्थादन्योऽर्थोऽर्थान्तरम्। अथ वा "विशेषनिषेधः शेषविद्धानुज्ञापकः" इति न्यायेन एतत्पटस्य एतत्तन्तुष्वसत्त्वेऽपि अन्यतन्तुषु सत्त्वमेव स्यात्, न पटस्य मिथ्यात्वं सिध्यति ॥१॥

२—इति पूर्वपक्षे प्राप्ते आह आचार्यः—पूर्वपक्षिणा नैवं वाच्यम्। कुत इति चेत्? अभेदे कार्यकारणभावव्याहत्या कथञ्चिदपि भेदस्यावश्याभ्युपेयत्वात्। अयमर्थः—कार्यकारणयोरत्यन्ताभेदे कार्यकारणभाव एव न स्यात्। यथा कारणं न स्वस्माद् भवति, एवमेव कार्यं कारणेनात्यन्ताभिन्नं सत् कारणान्न भवितुमर्हति तथा च कार्यकारणभावोच्छेदः। प्रामाणिककार्यकारणभावरक्षणाय कार्यकारणयोः कथञ्चित् भेदोऽवश्यमभ्युपगन्तव्यः। कार्यकारणयोः कथञ्चिद् भेदाभ्युपगमे कार्यकारणयोराश्रयाश्रयिभावोऽप्युपपद्यते। आश्रयाश्रयिभावानभ्युपगमे कार्यकारणभाव एव न स्यात्। अत्यन्तभेदे अत्यन्ताभेदे वा आश्रयाश्रयिभावानुपपत्त्या कार्यकारणयोः कथञ्चिद् भेदाभेदोऽङ्गीकरणीयः। असम्बद्धयोः कार्यकारणभावासम्भवेन तन्तुपटयोस्तादात्म्यसम्बन्धोऽवश्यं वाच्यः।

तटस्थः शंकते—न च तदनन्यत्वमारम्भणशब्दादिभ्यः [ब्र०सू०२।१।१४] इत्यधिकरणविरोधः। कार्यस्य कारणात कथञ्चिद् भेदाभ्युपगमे आरम्भणाधिकरणविरोधः। आरम्भणाधिकरणे कार्यकारणयोरभेद एव प्रतिपादित इत्यभिमानस्त-

उपादानव्यतिरेकेणोपादेयं नास्तीत्यस्यैव तदर्थत्वात्। बाधात्तन्मात्राश्रितत्वेन पक्षविशेषणाद्वा नार्थान्तरम् ॥२॥

न च प्रकृतेऽपि बाधः; तस्योद्धरिष्यमाणत्वात्। न चात्यन्ता-

---

टस्थस्य। समाधानमाहाचार्यः—उपादानव्यतिरेकेण उपादेयं नास्तीत्यस्यैव तदर्थत्वात्? आरम्भणाधिकरणे हि भाष्यकृता उक्तम्—"कार्यमाकाशादिबहुप्रपञ्चं जगत्; कारणं परं ब्रह्म। तस्मात् कारणात् परमार्थतोऽनन्यत्वम्, व्यतिरेकेणाभावः कार्यस्यावगम्यते। कुतः, आरम्भणशब्दादिभ्यः"। एतदेवोक्तमाचार्येण उपादानव्यतिरेकेणोपादेयं नास्तीत्यस्यैव तदर्थत्वात्। एवंरूपेण सिद्धसाधनतां समाधाय अर्थान्तरत्वं समाधातुमाह बाधात्तन्मात्राश्रितत्वेन पक्षविशेषणाद्वा नार्थान्तरम्। पटस्यानाश्रितत्वाभ्युपगमे पटस्याश्रितत्वग्राहकप्रमाणबाधः स्यात्। पटादेः कारणानाश्रितत्वस्वीकारेऽपि भूतलाद्याश्रितत्वात्। अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी इति प्रतिज्ञावाक्ये पक्षीकृतस्य एतत्पटस्य एतत्तन्तुमात्राश्रितत्वेन विशेषणान्नार्थान्तरम्। एतत्तन्त्वाश्रितोऽयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी इति प्रतिज्ञायां पटस्यानाश्रितत्वेनान्याश्रितत्वेन नार्थान्तरं भवितुमर्हति ॥२॥

३—अत्र पूर्वपक्षी शङ्कते—पटस्याश्रितत्वग्राहकप्रमाणेन बाधात् यथा पटस्यानाश्रितत्वं न सिद्ध्यति तथा सत् घट इत्यादिप्रत्यक्षेण पटस्य तन्त्वाश्रितत्वग्राहकप्रमाणेन च प्रकृतचित्सुखीयानुमानबाधः स्यात्। इत्याशंकायामाहाचार्यः—न च प्रकृतेऽपि बाधस्तस्योद्धरिष्यमाणत्वात् बाधोद्धारप्रकरणे मिथ्यात्वानुमानबाधकत्वेन शंकितानि प्रमाणानि उद्धरिष्यतीत्यभिप्रायः।

पूर्वपक्षी शङ्कते—साध्यघटकोऽत्यन्ताभावः प्रामाणिकोऽप्रामाणिको वा? आद्ये अद्वैतहानिरन्ते सिद्धसाधनम्। प्रामाणिकात्यन्ताभावप्रतियोगित्वं वा साध्यम्, अप्रामाणिकात्यन्ताभावप्रतियोगित्वं वा? अभावस्य प्रमाणिकत्वेऽद्वैतहानिः स्यात्; ब्रह्मवदत्यन्ताभावस्यापि प्रामाणिकत्वात्। अत्यन्ताभावस्याप्रामाणिकत्वे सिद्धसाधनम्। एतत्तन्तुनिष्ठाप्रामाणिकात्यन्ताभावप्रतियोगित्वं पटस्य सर्वेषामेव सिद्धम् पटस्य पारमार्थिकत्ववादिनामिति पूर्वपक्षिशंकाया-

भावस्य प्रामाणिकत्वाप्रामाणिकत्वविकल्पावकाशः, तस्य प्रागेव निरस्तत्वात् ॥३॥

न च कस्यचित् पटस्य संयोगवृत्त्यैतत्तन्तुषु सत्त्वेन तत्र व्यभिचार इति—वाच्यम्; तत्समवेतस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वमङ्गीकुर्वतः तत्संयोगिनस्तन्निष्ठात्यन्ताभावप्रतियोगित्वाङ्गीकारेण पक्षसमत्वात् ॥४॥

न चाव्याप्यवृत्तित्वेनार्थान्तरम्; पटतदभावयोरेकाधिकरणवृत्तौ विरोधस्य जगति दत्तजलाञ्जलित्वप्रसङ्गात्, संयोगतदभावयोरप्येका-

---

माहाचार्यः—न चात्यन्ताभावस्य प्रामाणिकाप्रामाणिकत्वविकल्पावकाशस्तस्य प्रागेव निरस्तत्वात् । अस्य पूर्वपक्षस्य समाधानं द्वितीयमिथ्यात्वनिर्वचने एव प्रदर्शितम् । अत्र पुनर्नोच्यते ॥३॥

४—पुनः पूर्वपक्षी शङ्कते—कस्यचित् पटस्य संयोगवृत्त्या एतत्तन्तुषु सत्त्वेन तत्र व्यभिचारः । कस्मिंश्चित् पटे संयोगवृत्त्या एतत्तन्तुषु वर्तमाने अंशित्वहेतोः सत्त्वात् , तत्र च साध्याभावाद् व्यभिचारः इति पूर्वपक्षिण आशयः । प्रदर्शितं व्यभिचारमुद्धरिष्यन्नाहाचार्यः—तत्समवेतस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वमङ्गीकुर्वतः तत्संयोगिनः तन्निष्ठात्यन्ताभावप्रतियोगित्वाङ्गीकारेण पक्षसमत्वात् । प्रकृतानुमाने एतत्तन्तुसमवेतोऽयं पटः पक्षः । तस्मिन् पक्षे स्वोपादानीभूततन्तुनिष्ठात्यन्ताभावप्रतियोगित्वमस्माभिः सिषाधयिषितम् । एवमेव पटान्तरस्यापि संयोगवृत्त्या वर्तमानस्य एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वमप्यस्माभिः सिषाधयिषितमेव । सुतरामस्यापि पक्षस्य सिषाधयिषितत्वेन पक्षसमत्वोक्तिः । समत्वन्तु प्रतिज्ञावाक्याविषयत्वेन ॥४॥

५—पूर्वपक्षी शंकते—न च अव्याप्यवृत्तित्वेनार्थान्तरम् । प्रकृतानुमानेन पटाधिकरणेषु तन्तुषु पटात्यन्ताभावसिद्धावपि पटस्य मिथ्यात्वं न सिध्यति । किन्तु पटस्याव्याप्यवृत्तित्वमेव सिध्यति । स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् । तथा च पटस्य मिथ्यात्वसाधनाय प्रवृत्तमनुमानं पटस्याव्याप्यवृत्तित्वमादाय पर्यवस्यतीति भवत्यर्थान्तरमिति पूर्वपक्षिणोऽभिप्रायः । समाधानायाहाचार्यः—पटतदभावयोरेकाधिकरणवृत्तौ विरोधस्य जगति दत्तजला-

धिकरणवृत्तित्वानभ्युपगमात् । अभ्युपगमे वा एतत्तन्तुत्वावच्छिन्नवृत्तित्वमत्यन्ताभावस्य विशेषणं देयम्; एवमेतत्कालीनत्वमपि । तेन कालान्तरीयाभावमादाय नार्थान्तरम् ॥५॥

---

ञ्जलित्वप्रसङ्गात् । पटस्याव्याप्यवृत्तित्वमभ्युपगम्य पटतदत्यन्ताभावयोरेकाधिकरणवृत्तित्वाभ्युपगमे जगति कुत्रापि विरोधो नावकाशमासादयेत् । भावाभावयोर्विरोधमुपजीव्यैव विरोधाः प्रसरन्ति भावाभावयोरपि यदि न विरोधस्तर्हि कुत्रापि विरोधो नावकाशमासादयेत् । अत्र शंकते पूर्वपक्षी—अव्याप्यवृत्तिसंयोगादेः स्वात्यन्ताभावसामानाधिकरण्यं सर्वेषां सम्मतमेव । तद्वदेव पटस्यापि किं न स्यात् ? इत्यत आहाचार्यः—संयोगतदभावयोरप्येकाधिकरणवृत्तित्वानभ्युपगमात् । कस्यापि नाव्याप्यवृत्तित्वमिति मतेनेदम् , एतच्च मिथ्यात्वनिर्वचनावसरे अस्माभिः प्रपञ्चितम् । अतः संयोगतदभावयोरपि एकाधिकरणवृत्तित्वं नाभ्युपगम्यते । वृक्षेऽग्रे कपिसंयोगो न मूले इति धीर्वृक्षनिष्ठाग्रमूलवृत्तिसंयोगतदभावोऽवगाहते । न तु वृक्षनिष्ठौ तौ इति न कस्याप्यव्याप्यवृत्तित्वमिति भावः । नन्वेवं वृक्षीयमूलादावपि न संयोगादिसत्त्वं स्यात्, मूले उपरिभागे संयोगो न तु अन्यभागे । उपरिभागे तद्दशि संयोगो नान्यदिशीत्यादिप्रत्ययात् । तस्मात् मूलादेरेवावच्छेदकत्वावगाहनात् वृक्षादेरधिकरणत्वावगाहनात् संयोगादेर्मूलाद्यवच्छिन्नवृक्षादिनिष्ठाधिकरणता नापलप्या । तत्राह—अभ्युपगमे वा इति । अव्याप्यवृत्तित्वस्वीकारे वेत्यर्थः । अव्याप्यवृत्तित्वस्वीकारे किं कर्तव्यमित्यत आह—एतत्तन्तुत्वावच्छिन्नवृत्तित्वमत्यन्ताभावस्य विशेषणं देयम् । साध्यघटकात्यन्ताभावे एतत्तन्तुत्वावच्छिन्नवृत्तित्वं विशेषणम् । एतत्तन्तुत्वावच्छिन्नवृत्त्यत्यन्ताभावप्रतियोगित्वं यद्येतत्पटे साध्यते तदा न पटस्याव्याप्यवृत्तित्वशंकाऽपि । तत्पटानवच्छेदकावच्छिन्नवृत्तिकान्यत्वं हि एतत्तन्तुत्वावच्छिन्नवृत्तित्वम् । तेन मिथ्यात्वघटकात्यन्ताभावस्यावच्छिन्नवृत्तिकान्यत्वास्वीकारेऽपि न क्षतिः । एवम् एतत्कालीनत्वमपि मिथ्यात्वघटकात्यन्ताभावे विशेषणं देयम् । अर्थात् पक्षीकृतपटकालीनत्वमत्यन्ताभावे विशेषणम् । तेन कालान्तरीयाभावमादाय नार्थान्तरम् । पक्षीकृतपटकालीनो योऽत्यन्ताभावः तत्प्रतियोगित्वं पक्षीकृतपटे तेन पटस्य मिथ्यात्वम् । तेन कालान्तरे च पटस्यात्यन्ताभावः प्रति-

न चेह तन्तुषु पट इति प्रत्यक्षबाधः; तस्य भ्रमसाधारणतया चन्द्रप्रादेशिकत्वप्रत्यक्षवदप्रामाण्यशङ्कास्कन्दितत्वेनाबाधकत्वात्। बाधोद्धारे च विस्तरेणैतद्वक्ष्यामः। न च—अन्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना न युक्तमिति विरुद्धो हेतुरिति वाच्यम् ॥६॥

---

योग्यत्यन्ताभावयोर्भिन्नकालीनत्वात् मिथ्यात्वासिद्ध्याऽर्थान्तरं स्यात्। अर्थात् पटस्य कादाचित्कत्वं स्यात्, न तु मिथ्यात्वम्। समानकालीनत्वनिवेशे तु एवं रीत्या नार्थान्तरताया अवकाशः ।५॥

६—पूर्वपक्षी शंकते—प्रदर्शितानुमानेन पटोपादानीभूततन्तुषु पटात्यन्ताभावसिद्धौ—इह तन्तुषु पट इति प्रत्यक्षबाधः। पूर्वपक्षिणा एवं न वाच्यम्। इह तन्तुषु पट इति प्रत्यक्षस्य भ्रमसाधारणतया चन्द्रप्रादेशिकत्वप्रत्यक्षवद् अप्रामाण्यशंकास्कन्दितत्वेनाबाधकत्वात्। बाधोद्धारे च विस्तरेण एतत् वक्ष्यामः। चन्द्रप्रादेशिकप्रत्यक्षं यथा भ्रान्तिरूपं तद्वदेव इह तन्तुषु पट इति प्रत्यक्षमपि। अस्यापि भ्रमप्रत्यक्षसाधारण्यादप्रामाण्याशंकास्कन्दितत्वमेव। अप्रामाण्यशंकानास्कन्दितप्रत्यक्षमेव बाधकं भवति। इदं प्रत्यक्षं पुनः अप्रामाण्यशंकास्कन्दितम्। अतो न बाधकम्। प्रत्यक्षबाधोद्धारे प्रदर्शितप्रत्यक्षबाधस्य विस्तरेण उद्धरिष्यमाणत्वात्।

पूर्वपक्षी शंकते—न चान्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना न युक्तमिति विरुद्धो हेतुरिति वाच्यम्। अयमभिप्रायः—पक्षीकृतः पटः स्वोपादानतन्तुभिन्नान्येषु तन्तुस्वसमवेत इत्यत्र न कस्यापि विवादः। तथा च स्वोपादानभिन्नतन्तुषु असमवेतस्य पटस्यांशित्वमेतत्तन्तुसमवेतत्वं विना न युक्तम्। कुत्रचिदसमवेतस्यांशित्वमेव न भवितुमर्हति। सुतरामंशित्वेन हेतुना पटस्य कुत्रचित् समवेतत्वमायाति पटस्य च स्वोपादानभिन्नतन्तुषु असमवेतत्वञ्च सिद्धमेव। अतः फलबलादंशित्वेन हेतुना एतत्तन्तुसमवेतत्वमेव पटस्य सिध्यति। यदि पटः स्वोपादानतन्तुष्वप्यसमवेतः स्यात् तर्हि पटस्यांशित्वमेव न स्यात्। अतः पूर्वपक्षिणोक्तम्—अंशित्वमेतत्तन्तुसमवेतत्वं विना न युक्तम्। एवञ्च एतत्तन्तुसमवेते पटे एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं सेद्धुमर्हति। अतः अंशित्वेन हेतुना पटस्य स्वोपादानीभूततन्तुष्वत्यन्ताभावप्रतियोगित्वा-

एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽप्येतत्तन्तुसमवेतस्य सत्त्वेनांशित्वस्य साध्येनाविरोधात्। एतन्निष्ठात्यन्ताभावाप्रतियोगित्वं हि एतत्समवेतत्वे प्रयोजकं न भवति; परमते केवलान्वयिधर्ममात्रस्य एतत्समवेतत्वापत्तेः; किन्त्वेतन्निष्ठप्रागभावप्रतियोगित्वादिकम्; तच्चैतन्निष्ठात्यन्ताभावप्रतियोगित्वेऽपि न विरुद्धमित्युपपादितमधस्तात्।

---

नुमाने हेतुर्विरुद्धः स्यात्। योंऽशित्वहेतुः पटस्यैतत्तन्तुसमवेतत्वं साधयति स एव हेतुः कथं पटस्य स्वोपादानीभूततन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं साधयेत्? सध्याभावव्याप्यस्य हेतोः साध्यव्याप्यतयोपन्यासे विरोध एव स्यात्। इति पूर्वपक्षिणोऽभिप्रायः ॥६॥

७—अत्र समाधत्ते सिद्धान्ती—एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि एतत्तन्तुसमवेतस्य सत्त्वेनांशित्वस्य साध्येनाविरोधात्। अयमाशयः—पटस्य स्वोपादानीभूततन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि एतत्तन्तुसमवेतत्वसत्त्वाद् एतत्तन्तुसमवेतस्य पटस्य एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं सिध्यत्येव। सुतरामेतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यस्यांशित्वेन हेतुना विरोधो नास्ति। किं हि पूर्वपक्षिणैवमभिप्रेयते—यत्रैतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वं तत्रैतत्तन्तुसमवेतत्वम्? एतत्तन्तुसमवेतत्वे एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वं प्रयोजकमिति? एतन्न संगतम्। वैशेषिकादिमते प्रमेयत्वादिरूपकेवलान्वयिधर्मस्य एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वेऽपि एतत्तन्तुसमवेतत्वाभावात्। पूर्वपक्षिसम्मतप्रयोजकाभ्युपगमे प्रमेयत्वादिकेवलान्वयिधर्मस्याप्येतत्तन्तुसमवेतत्वापत्तेः। प्रमेयत्वादयः केवलान्वयिधर्माः न कुत्रापि समवेता इति हि वैशेषिकादीनां स्थितिः। किन्तु एतत्तन्तुसमवेतत्वे एतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वादिकं प्रयोजकम्। यदेतत्तन्तुनिष्ठप्रागभावप्रतियोगि तदेतत्तन्तुसमवेतम्। एवञ्च स्वोपादानीभूततन्तुषु पटस्यात्यन्ताभावसत्त्वेऽपि पटस्यैतत्तन्तुसमवेतत्वे न कश्चित् विरोधः। तन्तुषु पटप्रागभावसत्त्वादेव पटस्य तन्तुसमवेतत्वोपपत्तेः अत एव उक्तं मूलकृता—तच्चैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि न विरुद्धमित्युपपादितमधस्तात्। तच्च—प्रागभावप्रतियोगित्वादिकञ्च। तन्तुनिष्ठपटप्रागभावप्रतियोगित्वादिक-

एतत्समवेतत्वं चैतदुपादानकत्वम्, न तु नित्यसम्बन्धशालित्वम्; तस्यानभ्युपगमात् ॥७॥

ननु—अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एतत्तन्त्वारब्धत्वात्, व्यतिरेकेण पटान्तरवदिति प्रतिरोधः; न चाप्रसिद्धविशेषणत्वम् ॥८॥

---

च्चेत्यर्थः। पटस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि न विरुद्धमित्युपपादितमधस्तात्। अधस्तात्—चतुर्थमिथ्यालक्षणनिरूपणावसरे। तत्र हि प्रागभावसत्त्वेनोपादानत्वाविरोधाच्च। न चात्यन्ताभावाधिकरणे प्रागभावस्यानुपपत्तिरिति वाच्यम्, काले व्यभिचारात्। न च काले प्रागभावात्यन्ताभावयोः सामानाधिकरण्यमिदानीं घटात्यन्ताभाव इदानीं घटप्रागभाव इति प्रतीतिबलादङ्गीकृतम्। देशे तु तदुभयसामानाधिकरण्ये न किञ्चिदपि प्रमाणमिति वाच्यम्। मिथ्यात्वानुमितेः श्रुत्यादेश्च प्रमाणत्वात्। [पृ० १८५–८६]। यद्प्येतत्तन्तुसमवेतत्वे प्रयोजकं प्रागभावप्रतियोगित्वादिकमुक्तं, तत्रैतत्समवेतत्वमेतदुपादानकत्वमेव बोध्यम्। यद्यदुपादानकं भवति तत्तत्र समवेतमिति परैरुच्यते, नास्माभिः। कथं नास्माभिरुच्यते, अत उक्तं—न तु नित्यसम्बन्धशालित्वम्। नित्यः सम्बन्धः समवायः। तेन तन्तुसमवेतत्वमित्यस्य समवायसम्बन्धेन तन्तुवृत्तित्वम्। तस्यानभ्युपगमात्। तस्य—नित्यसम्बन्धरूपसमवायस्यास्माभिरनभ्युपगमात्। "समवायाभ्युपगमाच्च साम्यादनवस्थितेरि"ति सूत्रात् समवायो नास्माभिरभ्युपगम्यते ॥७॥

८—प्रदर्शितचित्सुखीयानुमाने पूर्वपक्षी प्रतिरोधानुमानं शंकते—ननु अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एतत्तन्त्वारब्धत्वात्, व्यतिरेकेण पटान्तरवत्। इति प्रतिरोधः। चित्सुखाचार्येण यस्मिन् पक्षे एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं साध्यं प्रदर्शितं तस्मिन्नेव पक्षे पूर्वपक्षिणा तस्यैव साध्यस्याभावोऽनुमीयते। चित्सुखाचार्येण अंशित्वस्य साधनत्वेनोपादानं कृतं पूर्वपक्षिणा प्रतिरोधस्फोरणाय एतत्तन्त्वारब्धत्वं साधनत्वेनोपन्यस्तम्। य एतत्तन्त्वारब्धो भवति स एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न भवति इति लोकसिद्धैव व्याप्तिः। अस्यान्वयव्याप्तेर्ग्रहणभूमिस्तु पक्ष एव अनुमितेः पूर्वं

एतन्निष्ठात्यन्ताभावप्रतियोगित्वम्; किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, संसर्गाभावप्रतियोगित्वव्याप्यत्वात्, प्रागभावप्रतियोगित्ववदिति सामान्यतस्तत्प्रसिद्धेः ।

---

पक्षे साध्यसन्देहसत्त्वात् साध्यहेत्वोरन्वयव्याप्तिर्ग्रहीतुं न शक्यते इत्यत व्यतिरेकोदाहरणं प्रदर्शितम् । व्यतिरेकव्याप्तेर्ग्रहणभूमित्वेन पटान्तरमुदाहृतम् । "न चाप्रसिद्धविशेषणतेति" प्रदर्शितप्रतिरोधानुमाने साध्याऽप्रसिद्धिं परिहरति पूर्वपक्षी न चेति । साध्याप्रसिद्धिशंकाया बीजं तु—एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावो हि साध्यं तच्च एतत्तन्तुषु सत्त्वं तच्च पक्ष एव प्रसिद्धं पक्षादन्यत्र कुत्राप्यप्रसिद्धं पक्षादन्यत्र साध्याप्रसिद्ध्या साध्याप्रसिद्धिशंका समुत्पन्ना । न च तन्तुगतरूपादौ साध्यं प्रसिद्धमिति वाच्यमस्मिन्ननुमाने एतत्तन्तुनिष्ठैतत्पटमात्रस्यैव न पक्षत्वं किन्तु एतत्तन्तुनिष्ठतया सम्प्रतिपन्ना ये पदार्थाः पटतन्तुरूपादयः ते सर्वेऽपि पक्षतयाऽभिमता एव पटसमानन्यायत्वात् अतो न तत्र विशेषणप्रसिद्धियुक्तेति भावः । पटमात्रपक्षीकरणन्तु लाघवायेति ज्ञेयं तथा च पटादिः तन्तुसमवेताः सर्वे पक्षतयाऽभिप्रेताः । अतएव चित्सुखाचार्यैर्दिगेपैव गुणादिष्वित्युक्तम् ॥८॥

९.—साध्याप्रसिद्धिमुद्धरति पूर्वपक्षी सामान्यतः साध्यसिद्धिप्रदर्शनेन—एतन्निष्ठात्यन्ताभावप्रतियोगित्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, संसर्गाभावप्रतियोगित्वव्याप्यत्वात्, प्रागभावप्रतियोगित्ववदिति सामान्यतस्तत्प्रसिद्धेरिति । किञ्चिन्निष्ठेति यन्निष्ठात्यन्ताभावप्रतियोगि तत् एतन्निष्ठात्यन्ताभावप्रतियोगित्वरहितमेवायास्यतीति भावः । अभावप्रतियोगित्वेन हेतुना अत्यन्ताभावप्रतियोगित्वसाधने भूतलनिष्ठान्योन्याभावप्रतियोगिनि घटे भूतलनिष्ठात्यन्ताभावप्रतियोगित्वाभावात् व्यभिचारः स्यात्, अन्योन्याभावप्रतियोगित्वदशायामत्यन्ताभावप्रतियोगित्वव्यवहाराभावेन सध्याभावात । अत एतौ[व] संसर्गाभावेति पदमुपात्तम् । संसर्गाभावप्रतियोगित्वमात्रस्य हेतुत्वे स्वरूपासिद्धिः दृष्टान्ते साधनवैकल्यञ्च स्यात् पक्षीभूतमत्यन्ताभावप्रतियोगित्वं दृष्टान्तीकृतं प्रागभावप्रतियोगित्वञ्च संसर्गाभावप्रतियोगित्वव्याप्यमेव न तु संसर्गाभावप्रतियोगित्वरूपमेतदुभयम् । न हि नीलघटत्वं घटत्वञ्च एकमेव इत्यतो असिद्धिसाधनवैकल्यपरिहाराय संसर्गा-

न च—आकाशात्यन्ताभावस्य घटादौ संसर्गाभावप्रतियोगित्वव्याप्यत्वग्रहात् तस्य च केवलान्वयित्वेन किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वाभावात् तत्र व्यभिचार इति—वाच्यम् ॥९॥

संसर्गाभावप्रतियोगित्वानधिकरणे केवलान्वयिनि धर्मे सत्त्वेनाकाशात्यन्ताभावस्य संसर्गाभावप्रतियोगित्वाव्याप्यत्वेन व्यभिचाराभावात्—इति चेन्न; यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्त-

---

भावप्रतियोगित्वव्याप्यत्वादित्युक्तम्। लघुचन्द्रिकायाम्—संसर्गाभावप्रतियोगित्वस्यैव तादात्म्येन हेतुत्वसम्भवेन व्याप्यांशवैयर्थ्यादित्युक्तम्। सिद्धान्ती प्रतिरोधानुमाने व्यभिचारं शङ्कते—न च आकाशात्यन्ताभावस्य घटादौ संसर्गाभावप्रतियोगित्वव्याप्यत्वग्रहात् तस्य च केवलान्वयित्वेन किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वाभावात् तत्र व्यभिचार इति वाच्यम्। अयं भावः—घटादौ संसर्गाभावप्रतियोगित्वमस्ति। आकाशात्यन्ताभावोऽपि केवलान्वयितया तत्र घटादौ अस्ति। अतः आकाशात्यन्ताभावे संसर्गाभावप्रतियोगित्वव्याप्यत्वग्रहेऽपि आकाशात्यन्ताभावस्य केवलान्वयित्वात् किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वं नास्ति। अतः संसर्गाभावप्रतियोगित्वव्याप्यत्वस्य हेतोः आकाशात्यन्ताभावे व्यभिचार एव। अतः व्यभिचारिहेतुना सामान्यतः साध्यसिद्धिर्न भवितुमर्हति इति शङ्कितुरभिप्रायः ॥९॥

१०—प्रदर्शितं व्यभिचारमुद्धरति पूर्वपक्षी। संसर्गाभावप्रतियोगित्वं नाकाशात्यन्ताभावस्य व्याप्यं, यतः केवलान्वयिधर्मे प्रमेयत्वादौ संसर्गाभावप्रतियोगित्वं नास्ति, अथ च आकाशात्यन्ताभावस्तत्र अस्ति। अतः संसर्गाभावप्रतियोगित्वस्य व्याप्यमाकाशात्यन्ताभावो न भवति, केवलान्वयिधर्मे व्यभिचारात्। केवलान्वयिधर्मे गगनात्यन्ताभावे विद्यमानेऽपि संसर्गाभावप्रतियोगित्वाभावात्। अतएवाद्वैतसिद्धावुक्तम्—संसर्गाभावप्रतियोगित्वानधिकरणे केवलान्वयिधर्मे सत्त्वेनाकाशात्यन्ताभावस्य संसर्गाभावप्रतियोगित्वाव्याप्यत्वेन व्यभिचाराभावादिति चेन्न। एतावता प्रबन्धेन पूर्वपक्षिणा प्रतिरोधानुमानं समर्थितम्। समर्थितं प्रतिरोधानुमानं निरसितुमाहाचार्यः—पूर्वपक्षिणा यदुक्तं तदसङ्गतम्। कुत इति चेत्? यत्र एतत्तन्तुनिष्ठात्यताभावप्रतियोगित्वं

न्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्तावेतन्निष्ठप्रागभावाप्रतियोगित्व-स्योपाधित्वेन प्रतिरोधस्य हीनबलत्वात्। एतत्तन्त्वारब्धत्वाभावव्यापक-स्यैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य पक्षावृत्तेः पक्षवृत्तितया संदिह्य

---

तत्र एतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्तौ एतन्निष्ठप्रागभावा-प्रतियोगित्वस्य उपाधित्वेन प्रतिरोधस्य हीनबलत्वात्। अयमाशयः— चित्सुखीयानुमानप्रतिरोधाय पूर्वपक्षिणा व्यतिरेक्यनुमानमुपन्यस्तम्। अस्मिन् व्यतिरेक्यनुमाने यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्तिरभिमता। साध्याभावस्य व्याप्यत्वेन हेत्वभावस्य च व्याप-कत्वेन प्रदर्शिता व्यतिरेकव्याप्तिरुपन्यस्ता। यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियो-गित्वं सिद्धान्तिमते पटे एव प्रसिद्धं तस्मिन् पटे पूर्वपक्षिणा व्यापकत्वेनाभिम-तस्य एतत्तन्त्वारब्धत्वाभावो नास्ति। अयं पट एतत्तन्त्वारब्ध एव। सिद्धान्तिमते-ऽपि एतत्पटस्य एतत्तन्त्वारब्धत्वं सम्मतम्। पटान्तरे एतत्तन्तुनिष्ठात्यन्ताभाव-प्रतियोगित्वं वर्तते, तत्रैतत्तन्त्वारब्धत्वाभावोऽपि वर्तते, किन्तु पटान्तरे एतत्तन्तु-निष्ठप्रागभावप्रतियोगित्वं न वर्तते, पक्षीकृते च पटे एतत्तन्तुनिष्ठप्रागभावप्रति-योगित्वं वर्तते। तथा च प्रागभावाप्रतियोगित्वस्य तस्योपाधेः पक्षे अभावात् व्यतिरेकव्याप्तिग्रहदृष्टान्ते च पटान्तरे उपाधेः सत्त्वात् एतत्तन्तुनिष्ठप्रागभावा-प्रतियोगित्वं भवत्येवोपाधिः। तथा च सोपाधिकत्वेन प्रतिरोधानुमानस्य हीनबल-त्वम्। उपाधेः सपक्षवृत्तितया पक्षावृत्तितया चोपाधित्वमक्षतम्। एतदेवोक्तमाचा-र्येण—एतत्तन्त्वारब्धत्वाभावव्यापकस्य एतत्तन्तुनिष्ठप्रागभावाप्रतियो-गित्वस्य पक्षावृत्तेः। पटान्तरे व्यतिरेकव्याप्तिग्रहणभूमौ एतत्तन्त्वारब्धत्वाभा-वोऽपि वर्तते, एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वमपि वर्तते। अत उपाधिर्व्याप-कस्य व्यापको भवति। पक्षावृत्तितया उपाधेः साधनाव्यापकत्वमपि भवति। सुतरा-मुपाधिर्व्यापकव्यापकोऽपि व्याप्याव्यापकः। उक्तं च मानमेयोदये—

"तस्मादुपाधिमिच्छद्भिः पक्षभूमिमनाप्नुवन्।
सपक्षान् व्याप्नुवन् धर्मो मृग्यतामिति संग्रहः॥"

तथा च एतत्तन्त्वारब्धत्वाभावव्यापकस्य एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्व-स्योपाधेः व्यभिचारित्वेन हेतुना एतत्तन्त्वारब्धत्वाभावव्यभिचारित्वमेतत्तन्तुनिष्ठा-

मानैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वात्, दृश्यत्वाद्यनुपपत्ति-प्रतिकूलतर्कपराहतेर्वक्ष्यमाणत्वाच्च। अत एव एतत्तन्त्वानारब्धत्वमपि

---

त्यन्ताभावप्रतियोगित्वेऽनुमेयम्। उपाधेर्व्यापकव्यापकत्वेऽपि व्याप्याव्यापकत्वेन व्याप्यस्य तद्व्यभिचारित्वात् व्यापकव्यभिचारित्वमनुमेयम् व्यभिचारानुमानन्त्वित्थम्—अयं हेतुः साध्यव्यभिचारी साध्यव्यापकोपाधिव्यभिचारित्वात्। व्यापकव्यापकव्यभिचारिणः व्यापकव्यभिचारित्वमवश्यमपेक्षितम्। यदपि चित्सुखाचार्यैरुक्तम्—"केवलव्यतिरेकिणि चोपाधेरसम्भवात्" इति [ पृ० १४ चि० सु० ] तस्यायमभिप्रायः—केवलव्यतिरेकिणि पक्षादन्यत्र साध्यस्य प्रसिद्धिर्नास्ति तथा च उपाधेः साध्यव्यापकता कुत्र गृह्येत ? पक्षे गृह्येतेत्युक्ते पक्षे उपाधेः सत्त्वे साधनव्यापकत्वप्रसङ्गेन तस्य उपाधित्वमेव न स्यात्। अतः केवलव्यतिरेकिणि उपाधिर्न सम्भवतीत्युक्तम्। आचार्येण पुनः यद्यपि प्रदर्शितरीत्या केवलव्यतिरेकिणि उपाधिर्न सम्भवति तथापि व्यापकव्यापकस्य तद्व्याप्याव्यापकत्वे उपाधिर्भवत्येवेति पश्यता केवलव्यतिरेकव्याप्तिग्रहणभूमौ व्याप्यव्यापकयोरुपन्यस्तयोः व्यापकव्यापकस्य कस्यचिद्धर्मस्य तद्व्याप्याव्यापकत्वे स एव उपाधिर्भविष्यति इति दर्शितम्। "यत्र एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं यत्र एतत्तन्त्वारब्धत्वाभाव इत्येव" पूर्वपक्षीयप्रतिरोधानुमाने व्यतिरेकव्याप्तिरभिमता। एतस्याव्याप्तेः ग्रहणभूमिस्तु पक्षत्वाभिमतव्यतिरिक्तं सर्वं पटान्तरादिकं पटान्तरादिषु एतत्तन्त्वारब्धत्वाभावरूपव्यापकांशो यथा वर्तते तथा एतन्निष्ठप्रागभावाप्रतियोगित्वरूपोपाधिरपि वर्तते इति कृत्वा उपाधेर्व्यापकव्यापकत्वं गृहीतं प्रतिरोधानुमाने साध्यत्वेन निर्दिष्टस्याभावो व्यतिरेकव्याप्तौ व्याप्यत्वेन निर्दिष्टः। व्यतिरेकव्याप्तौ व्याप्यस्य साध्याभावस्य एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वस्य पक्षे सन्दिह्यमानस्य उपाधौ व्यापकताग्रहस्तदैव भवितुमर्हति यदि पक्षे उपाधिनिश्चयः स्यात्। स च न भवितुमर्हति उपाधेः पक्षावृत्तित्वात्। अत एवोक्तमुपाधेः पक्षावृत्तेः। पक्षवृत्तितया सन्दिह्यमानैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वात्। एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वमेव व्यतिरेकव्याप्तौ व्याप्यम्। उपाधेः पक्षावृत्तितया व्याप्याव्यापकत्वमेव सिध्यतीति भवति व्यतिरेक्यनुमानेऽपि उपाधिः। पूर्वपक्षिमते यद्दृश्यस्य सत्यत्वानुमानं तत्प्रतिकूलतर्कपराहतमपीत्याह आचार्यः—दृश्यत्वाद्यनुपपत्तिप्रतिकूलतर्कपराहतेर्वक्ष्यमाणत्वाच्च।

नोपाधिः; उपाधिव्यतिरेकेण साध्यव्यतिरेके साध्यमाने सोपधिकत्व-स्योक्तत्वात्, अव्याप्यवृत्तिसंयोगाभ्युपगमे तत्र व्यभिचाराच्च। अत एव

---

कल्पितत्वं विना दृश्यत्वमनुपपन्नमिति दृश्यस्य सत्यत्वसाधकं मानं प्रतिकूलतर्क-पराहतम् यदि कल्पितं न स्यात्तर्हि दृश्यं न स्यादिति तर्क एव दृश्यमिथ्यात्व-साधकमानस्यानुग्राहकः सत्यत्वसाधकमानस्य निर्ग्राहकश्च स च तर्कः अग्रे वक्ष्यते। सोपाधिकत्वेन प्रतिरोधानुमानस्य हीनबलत्वादेव चित्सुखीयानुमाने प्रदर्शितो-पाधिरपि न सम्भवतीत्याह अत एव एतत्तन्त्वानारब्धत्वमपि नोपाधिः। उपाधिं प्रदर्शयता हि उपाधिव्यतिरेकेण साध्यव्यतिरेकस्यानुमानं कर्तव्यं सत्प्र-तिपक्षोन्नायकतया उपाधेर्दूषकत्वात्। सत्प्रतिपक्षोन्नायकतया उपाधेर्दूषकत्वे वक्तव्ये एवं सत्प्रतिपक्षानुमानं प्रदर्शनीयम्। अयं पक्षः साध्याभाववान् साध्य-व्यापकोपाध्यभावात्। तथा च प्रकृते उपाधिव्यतिरेकेण साध्यव्यतिरेकोऽनुमा-तव्यः। उपाधिश्च एतत्तन्त्वनारब्धत्वम्। एतत्तन्त्वनारब्धत्वव्यतिरेकश्च एतत्त-न्त्वारब्धत्वम्। चित्सुखीयानुमाने एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं साध्यम्। तद्व्यतिरेकश्च एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाभावः। तथा च अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एतत्तन्त्वारब्धत्वात्। इत्येवानुमानं फलितम्। तच्च पूर्वपक्षिणा प्रागेव प्रतिरोधानुमानत्वेनोपन्यस्तम्। तत्र एतत्तन्तुनिष्ठप्राग-भावाप्रतियोगित्वमुपाधिरित्युक्तमस्माभिः। चित्सुखीयानुमाने उपाधिं प्रदर्शयताऽ-पि तदेव प्रतिरोधानुमानं पुनरापन्नम्। तत्रापि एतत्तन्तुनिष्ठप्रागभावाप्रतियोगि-त्वमुपाधिर्भविष्यति इति उपाधिमुद्भावयताऽपि पूर्वपक्षिणा न किमपि नूतनमभि-हितमित्याहाचार्यः—उपाधिव्यतिरेकेण साध्यव्यतिरेके साध्यमाने सोपा-धिकत्वस्योक्तत्वात्। पूर्वपक्षिणा प्रदर्शिते प्रतिरोधानुमाने दूषणान्तरमाहाचार्यः— अव्याप्यवृत्तिसंयोगाभ्युपगमे तत्र व्यभिचाराच्च। संयोगस्याव्याप्यवृत्ति-त्वमते एतत्तन्त्वारब्धे हि एतत्तन्तुसंयोगे एतत्तन्त्वारब्धत्वहेतुर्वर्तते। किन्तु एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वं नास्ति। संयोगस्याव्याप्यवृत्तितया स्वात्यन्ता-भावसामानाधिकरण्यतया संयोगाधिकरणतन्तुषु संयोगात्यन्ताभावोऽपि वर्तते। अत एतत्तन्त्वारब्धहेतुरव्याप्यवृत्तिसंयोगे व्यभिचारी। अव्याप्यवृत्तिसंयोगाभ्युपगमे प्रदर्शितहेतोस्तत्र व्यभिचारात् यत्र एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्र एत-

यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वनारब्धत्वमिति न साध्यव्यापकताग्रहोऽपि तत्रैव व्यभिचारादिति सर्वमनवद्यम् ॥१०॥

एवञ्च—'विमतं, ज्ञानव्यतिरेकेणासत्, ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात्, स्वप्नादिवदि'ति—विद्यासागरोक्तमपि साधु ज्ञानव्यतिरेकेणासत्त्वमुक्तमिथ्यात्वान्यतमत्वं साध्यम्। ज्ञानव्यतिरेकेणानुपलभ्य-

---

त्त्वनारब्धत्वमिति चित्सुखीयानुमाने साध्यस्य एतत्तन्त्वनारब्धत्वे व्यापकताग्रहोऽपि न भवितुमर्हति। तत्रैव व्यभिचारात्। संयोगे एव व्यभिचारादित्यर्थः। आचार्येण यत् एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वमुक्तं तत्प्रागभावाङ्गीकर्तुर्मतानुसारेण। ये तु प्रागभावं नाङ्गीकुर्वन्ति तन्मते एतदुपादानकान्यत्वस्यैवोपाधित्वं बोध्यम् इति चित्सुखीयानुमानमनाकुलम् ॥१०॥

## ११—विद्यासागरोक्तमिथ्यात्वानुमानसमर्थनम्।

एवञ्च विमतं ज्ञानव्यतिरेकेणासत् ज्ञानव्यतिरेकेणानुपलभ्यमानत्वादिति विद्यासागरोक्तमपि साधु। विद्यासागरीयानुमाने यज्ज्ञानव्यतिरेकेणासत्त्वमिति साध्यं प्रदर्शितम्, तच्चोक्तमिथ्यान्यतमत्वम्। पञ्चविधं मिथ्यात्वमुक्तमितः प्राक्। तदन्यतमत्वमेव ज्ञानव्यतिरेकेणासत्त्वम्। एवं ज्ञानव्यतिरेकेणानुपलभ्यमानत्वमिति विद्यासागरीयं साधनमपि चिदाभासे सत्येवोपलभ्यमानत्वम्। चिदाभासे सत्येवोपलभ्यमानत्वमित्यस्य सावच्छिन्नां चितं विनाऽनुपलभ्यमानत्वम्। सावच्छिन्नां चितमनपेक्ष्यैव यत्प्रकाशते तदन्यत्वम्। तथा च स्वप्रकाशान्यत्वमेव विद्यासागरीयहेतोर्निष्कर्षः। एवञ्च यद् यत् स्वप्रकाशान्यत् तत्प्रदर्शितपञ्चविधमिथ्यात्वान्यतमरूपम्। अर्थात् यद् यदस्वप्रकाशं तन्मिथ्येत्येव विद्यासागरीयानुमानस्य निष्कर्षः। एतेन यत्पूर्वपक्षिणा न्यायामृतकारेणोक्तं यत्तु विमतं ज्ञानव्यतिरेकेणासत् ज्ञानव्यतिरेकेणानुपलभ्यमानत्वादिति विद्यासागरीयं बौद्धोक्तसहोपलम्भयुक्त्युद्गीरणं तत्र ज्ञानाद्भेदेनानुपलभ्यमानत्वं वा हेतुः, ज्ञानविरहप्रयुक्तोपलब्धिविरहवत्त्वं वा? आद्येऽसिद्धिः, घटस्य ज्ञानमिति हि धीः। न तु घटो ज्ञानमिति। नान्त्यः, ज्ञानस्योपलब्धित्वेन तद्विरहस्य तद्विरहाप्रयुक्तत्वात् इत्यादिकं सर्वमकाण्डताण्डवितमेव। यच्च पूर्वपक्षिणा बौद्धोक्तयुक्त्युद्गीरणमुक्तं तदपि तस्य विद्वेषोद्गीरणमेव। आचार्येण पुनः विद्यासागरीयानुमानस्य यादृशः परिष्कारः

मानत्वं चिदाभासे सत्येवोपलभ्यमानत्वं हेतुरिति न किञ्चिदनुपपन्नम्। एवमन्येषामपि प्रयोगा यथायोगमुपपादनीया इति शिवम्॥११॥

इति अंशित्वहेतूपपत्तिः।

---

प्रदर्शितस्तत्र पूर्वपक्ष्युक्तदोषलेशस्यापि नावसरः। आनन्दपूर्णापरनामधेयेन विद्यासागरेण न्यायचन्द्रिकायामिदमनुमानमुक्तम्। न्यायचन्द्रिकाया व्याख्या न्यायप्रकाशिकाख्या स्वरूपानन्दप्रणीता वर्तते।

अंशित्वहेतुप्रकरणावसाने आचार्येणोक्तम्—**एवमन्येषामपि प्रयोगा यथायोगमुपपादनीया इति शिवम्।** आचार्योक्त्या एवं ज्ञायते अन्येषामपि अद्वैतसिद्धान्ताचार्याणां प्रपञ्चमिथ्यात्वानुमानप्रयोगा वर्तन्ते। ये पूर्वपक्षिणा न्यायामृतकारेण दूषिताः तेऽपि प्रदर्शितदिशा उपपादनीयाः। व्यासतीर्थेन रामाद्वयाचार्यकृतवेदान्ततत्त्वकौमुदीग्रन्थाद् मिथ्यात्वानुमानमुद्धृत्य दूषितम्। तद् यथा—यत्तु विमतं मिथ्या धीकाले एव अन्यथाप्रमितत्वात् चित्रनिम्नोन्नतादिवत्। भारूपवस्तुसंलग्नत्वात् सवितृच्छिद्रवत्। न चासिद्धिः, इदानीमेव "इदं सर्वं यदयमात्मे" ति श्रुत्या अशेषानात्मनः आत्मत्वप्रमितेः घटादिकं स्फुरतीति भारूपवस्तुसंलग्नत्वाच्चेति कौमुद्युक्तम्। तत्राद्ये अन्यथेत्यस्य यद्यात्मत्वेनेत्यर्थः तदा सदा आत्मत्वेन प्रमितत्वस्य अमिथ्यात्वव्याप्यत्वाद्विरुद्धो हेतुः। यदि प्रतिपन्नोपाधिस्थनिषेधप्रतियोगित्वेनेति तर्हि अस्माकमसिद्धिः। व्यर्थविशेषणत्वाच्च, प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेन प्रतीयमानत्वादित्येतावता पूर्तौ धीकाले एवेति विशेषणं व्यर्थमित्यर्थः। द्वितीयस्तु सवित्रादौ आत्मनि चानैकान्तिकः, तस्यापि सविता प्रकाशते, आत्मा स्फुरतीति भारूपसंलग्नत्वादिति दिक्। कौमुदीकारमते शङ्कितं दूषणमुद्धरन्नाह चन्द्रिकाकारः—धीकाले एवाऽन्यथाप्रमितत्वादित्यस्य हेतोरन्यथाप्रमितत्वादित्यस्य प्रपञ्चविलक्षणरूपेण यत् प्रमितं तत्तादात्म्यादित्यर्थः। प्रपञ्चविलक्षणरूपेण प्रमितं सच्चिदात्मकं ब्रह्मैव, तत्तादात्म्यं तस्मिन् कल्पितमनात्मवस्तुमात्रमेव। धीकाले इत्यस्य स्वधीकाले इत्यर्थः। तथा चानात्मधीकाले इत्यर्थो बोध्यः। प्रतीतत्वञ्च चित्तादात्म्यम्। तच्च चिति असिद्धम्। अतो ब्रह्मावृत्तिचित्तादात्म्यमिति फलितम्। तथा च यत्र यत्र ब्रह्मावृत्तिचित्तादात्म्यं वर्तते तत् सर्वं मिथ्येति कौमुदीकारस्याभिप्रायः। भारूपसंलग्नत्वादिति द्वितीयहेतुरपि स्वप्रकाशस्वरूपावृत्तिधर्म-

वत्त्वादित्यर्थः । यद् यत् स्वप्रकाशस्वरूपावृत्तिधर्मवत् तन्मिथ्या, सवितरि तु न व्यभिचारः, तस्यां ऽपि पक्षत्वात्"। पूर्वपक्षिणा मिथ्यात्वघटकात्यन्ताभावस्य तात्त्विकत्वस्वीकारपक्षे अद्वैतश्रुतिविरोध आशङ्कितः। यदि मिथ्यात्वघटकात्यन्ताभावस्य तात्त्विकत्वे ऽपि तस्य तात्त्विकात्यन्ताभावस्य ब्रह्मस्वरूपत्वस्वीकारान्नाद्वैतश्रुतिविरोध इति भवति समाधानं, तथापि मण्डनमिश्रमते भावाद्वैतस्वीकारेण तत्परिहारात्। उक्तस्वीकारे च अद्वैतश्रुतिसंकोचेन विरोधस्य स्फुटत्वात्। किञ्च, मण्डनमते ऽभावस्य सत्यत्वे तत्राभावत्वधर्मस्य ब्रह्मणि च अभावसम्बन्धस्य अवश्यवाच्यत्वाद् भावाद्वैतमपि दुर्लभमिति चेन्न, अभावत्वस्य अभावसम्बन्धस्य चाभावरूपत्वात्। न चाभावस्य तात्त्विकत्वम् तत्तावेदकप्रमाणवेद्यत्वाद् वाच्यम्। तादृशप्रमाणञ्च श्रुतिरेव, तथा चानुपपत्तिः। "एकमेवाऽद्वितीयमि"त्यादि श्रुतिवाक्यस्याखण्डार्थकत्वेनाभावसम्बन्धाप्रमापकत्वादिति वाच्यम्; मिथ्यात्वानुमाने स्वसमानाधिकरणस्य स्वाधिकसत्ताकात्यन्ताभावस्य मण्डनमते साध्ये निवेशेन मिथ्यात्वानुमानस्यैव तत्तावेदकत्वात्। तात्त्विकद्वैताभावविषयकत्वादेव मिथ्यात्वानुमानस्य द्वैतग्राहकप्रत्यक्षादिबाधकत्वमिति मण्डनाभिप्रायः। किञ्च तत्त्वज्ञानोद्देशेन मुमुक्षूणां प्रवृत्तेः तत्त्वज्ञानकार्योऽविद्याध्वंसस्तात्त्विको वाच्यः तस्य मिथ्यात्वे तत्त्वधीबाध्यत्वेन तत्कार्यत्वानुपपत्तेः। एवञ्च मिथ्यात्वघटकोऽत्यन्ताभावोऽविद्याध्वंसश्च मण्डनमिश्रमते तात्त्विकः, न तु अभावान्तरम्। अभावत्वस्यातिरिक्तत्वस्वीकारे तदपि मिथ्या, प्रतियोगितयैव अनुयोगिताविशेषरूपस्याभावत्वस्य मिथ्यात्वसम्भवात्। दृश्यत्वादिकञ्च उक्ताभावव्यावृत्तमेव च मिथ्यात्वे हेतुः इति न व्यभिचारः। तस्मात् मण्डनमतमप्यदोषम्। पूर्वपक्षिणा मिथ्यात्वघटकात्यन्ताभावस्य तात्त्विकत्वपक्षमवलम्ब्य मण्डनमिश्रमतमवतारितं दूषितञ्च। लघुचन्द्रिकायां पुनः मण्डनमते उत्प्रेक्षितानां दोषाणां समाधानाय उक्तमण्डनीयो भावाद्वैतपक्षः, समर्थितः। परन्तु एतत् पूर्वपक्षसिद्धान्तादिकं सर्वमकाण्डताण्डवितमेव। मण्डनमिश्रेण तु ब्रह्मसिद्धौ भावाद्वैतपक्षोऽपि केषाञ्चिद्वेदान्तिनां सम्मत इति एकीयमतमुपन्यस्य स्वयं मण्डनेनैव निरस्तम्। यन्मतं मण्डनेनैव निरस्तं, तन्मतं मण्डनीयमिति प्रवादः वटयक्षप्रवादवन्निर्मूल एव। अन्यत्रापि मण्डनस्य भावाद्वैतमतमिति येन केनाप्युक्तम् तदपि निर्मूलप्रवादमूलकमेवेति ॥ ११ ॥

श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगीन्द्रनाथशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यामंशित्वहेतूपपत्तिः समाप्ता।

## अथ सोपाधिकत्वनिरासः ।

ननु—दृश्यत्वादिहेतवः सोपाधिकाः तथा हि—स्वबाधकाभिमता-बाध्यदोषप्रयुक्तभानत्वं स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वं वा विपक्षाद्व्यावृत्तं समव्याप्तम्, अत एव व्यतिरेकव्याप्ति-

---

१—ननु दृश्यत्वादिहेतवः सोपाधिकाः प्रपञ्चमिथ्यात्वानुमानाय सिद्धान्तिना "विमतं मिथ्या दृश्यत्वाद् जडत्वात् परिच्छिन्नत्वात् शुक्तिरूप्यवदिति प्रयोगः प्रदर्शितः । प्रपञ्चमिथ्यात्वसिद्धये त्रयो हेतवः दृश्यत्वादय उपात्ताः । ते हेतवः सोपाधिकाः । अतः मिथ्यात्वसाध्यस्यासाधका इति पूर्वपक्षिण आशयः । तथा हि स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं स्वबाधकाबाध्यबाधकं प्रतिनिषेध्यत्वेन विषयत्वं वा विपक्षाद्व्यावृत्तं समव्याप्तम् । पूर्वपक्षिणा अत्र उपाधिद्वयं शङ्कितम्—स्वबाधकाभिमताबाध्येति, स्वबाधकाबाध्यबाधकं प्रतीति । प्रथमोपाधिपदे प्रतिपादकवाक्यस्य विवरणमेवम् । यत्रोपाधिः स्थाप्यः सः 'स्व' पदार्थः । दिदर्शयिषितोपाध्यधिकरणं "स्व" शब्दार्थः । स च शुक्तिरूप्यादिः । शुक्तिरूप्यदृष्टान्ते साध्यं मिथ्यात्वमस्ति, अयमुपाधिरप्यस्ति, अतः शुक्तिरूप्यादि-रेव "स्व" पदार्थः । "तद्बाधकत्वेनाभिमतम्" यं शुक्तिरित्यादिज्ञानम् । तद-बाध्यदोषप्रयुक्तं भानं शुक्तिरूप्यादेस्तत्त्वं शुक्तिरूप्यादावेव । अत एव शुक्ति-रूप्यादौ दृष्टान्ते स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वरूप उपाधिरस्ति । शुक्ति-रूप्यादिभ्रमस्य बाधकं "ज्ञानमियं शुक्तिर्नेदं रजतम्" इति वा ज्ञानम् । तेन बाधकेनाबाध्यो यो दोषः शुक्तिरजतभ्रमजनकः काचादिस्तज्जन्यभ्रमरूपं यज्ज्ञानं तद्विषयत्वं शुक्तिरजते वर्तते । दृष्टान्ते शुक्तिरजतादौ मिथ्यात्वरूपसाध्यस्य सत्त्वात्, प्रदर्शितोपाधेरपि सत्त्वादुपाधेः साध्यव्यापकत्वम् । साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । अस्योपाधेः दृष्टान्ते सत्त्वात् साध्यव्यापकत्वं प्रदर्शितम् । साधनाव्यापकत्वमपि प्रदर्श्यते । वियदादिव्यावहारिकप्रपञ्चः प्रद-र्शितमिथ्यात्वानुमाने पक्षत्वेन निर्दिष्टः । पक्षे प्रदर्शितोपाधेरभावाद् भवत्ययमुपाधिः साधनाव्यापकः । अत्र "स्व" शब्देन पक्षीकृतवियदादिप्रपञ्चो ग्राह्यः तद्बाधक-

मदुपाधिः—इति चेत् ? ॥१॥

---

त्वेनाभिमतं यद्वेदान्तजन्यचरमवृत्तिरूपं ज्ञानं तदबाध्यदोषप्रयुक्ताभानविषयत्वं वियदादिपक्षे नास्ति। जगद्भ्रमकारणस्य मायाऽविद्यादिदोषस्य स्वबाधकाभिमतबाध्यत्वस्यैव सत्त्वेन विशेषणाभावप्रयुक्तविशिष्टाभावस्यैव सत्त्वात् साधनाव्यापक इति भवत्युपाधिः। दोषप्रयुक्ताभानत्वमात्रस्योपाधित्वे उपाधेः साधनव्यापकता स्यात्, अत उपाधेः साधनाव्यापकत्वाय स्वबाधकाभिमताबाध्येति दोषविशेषणमुपात्तम्। अतः स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं दृष्टान्ते शुक्तिरूप्यादावस्ति, वियदादिप्रपञ्चरूपे पक्षे नास्ति। उपाधेर्दृष्टान्ते सत्त्वात् साध्यव्यापकत्वम्, पक्षेऽसत्त्वात् साधनाव्यापकत्वम्।

पूर्वपक्षिणा माध्वेन शुक्तिरूप्यादेरलीकत्वस्वीकारात तद्बाधकं न स्वीक्रियते। अत उपाधौ अभिमतपदमुपात्तम्। स्वबाधकत्वेन सिद्धान्त्यभिमतमित्यर्थः। सिद्धान्तिना तु शुक्तिरूप्यादेर्मिथ्यात्वाङ्गीकारात् मिथ्याबाधकमपि स्वीक्रियते। अतः सिद्धान्तिनं प्रत्ययमुपाधिर्वक्तुं शक्यते। सिद्धान्तिन उपाधिज्ञानाद् अनुमित्यसम्भवादिति भावः।

स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वमिति द्वितीयोपाधिवाक्यविवरणन्तु—उपाधिवाक्यस्थस्वपदं शुक्तिरूप्यादिपरम्, तद्बाधकं शुक्तिज्ञानादि। तदबाध्यं बाधकं नात्र रूप्यमित्यादिज्ञानम्। तादृशबाधकं प्रति निषेध्यत्वेन विषयः शुक्तिरूप्यादिः। न्यायामृते पुनरेतस्य विवरणम्—स्वबाधकाभिमतं यन्नेदं रूप्यमिति ज्ञानं तदबाध्यं यद्बाधकज्ञानं तत् स्वयमेव। स्वेन स्वस्याबाध्यत्वात्। तत् [ तं ] प्रति निषेध्यत्वेन विषयत्वं शुक्तिरजतादेरस्ति। अयमाशयः—पूर्वपक्षिणा मिथ्यारजतबाधकं ज्ञानं "नेदं रजतमि"त्येकमेव स्वीकृतम्। वस्तुतः, नेदं रजतमिति ज्ञानस्य रजतबाधकत्वं न सम्भवति। रजतभ्रमानन्तरं रजते रजतभेदग्रहः कथं स्यात् यदि रजतावृत्तिधर्मः शुक्तित्वं न गृह्येत ? भेदकधर्मप्रतिसन्धानं विना भेदग्रहासम्भवात्। प्रातिभासिकरजतस्योपादानं शुक्तित्वप्रकारकाज्ञानं यावद्वर्तेत तावद् बाधज्ञानेन रजतस्य बाधोऽपि न भवितुमर्हति। उपादानेन सहोपादेयस्य निवृत्तेरेव बाधः। एवञ्चेयं शुक्तिरिति ज्ञानमेव शुक्तित्वप्रकारकमज्ञानं निवर्तयत् तदुपादानकं रजतमपि निवर्तयति इति शुक्तिज्ञानमेव

न, ब्रह्मज्ञानमात्रबाध्ये देहात्मैक्ये मिथ्याभूते साध्याव्यापकत्वात्,

---

रजतबाधकम्। शुक्तिज्ञानानन्तरं तदनुनिष्पादि नेदं रजतमिति ज्ञानमपि रजतबाधत्वेन व्यवह्रियते इति सिद्धान्तरहस्यमजानन् पूर्वपक्षी नेदं रजतमिति ज्ञानमेव रजतबाधकमित्युक्तवान्। स्यादेतत्, साधनवति च पक्षे अयमुपाधिर्नास्ति। स्वबाधकाभिमतमर्थात् प्रपञ्चबाधकाभिमतं यज्ज्ञानं चरम-वृत्तिरूपं तद्बाध्यबाधकं प्रत्येव निषेध्यत्वेन विषयत्वं वियदादिप्रपञ्चेऽस्ति। न तु तद्बाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वम्। जगद्बाधकस्य वेदान्तजन्य-चरमवृत्तिरूपज्ञानस्य कतकरजोवत् वेणुसंघर्षाग्निवच्च स्वेनैव स्वस्य बाध्यत्वम्। उक्तञ्चाद्वैतवादिभिः—

वेणुसंघर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम्।
एवं गुणव्यत्ययजो वेदः शाम्यति तद्यथा॥

अस्मिन् पद्ये वेदशब्दो ब्रह्मगोचराऽखण्डाकारवृत्तिज्ञानम्। एवञ्च पक्षे स्वबाधकाभिमताबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वं नास्ति विशेषणाभावप्रयुक्त-विशिष्टाभावस्य सत्त्वादुपाधेः साधनाव्यापकत्वमित्यर्थः। उपाधेः पक्षे साधनाव्या-पकत्वलाभाय स्वबाधकाभिमताबाध्येति बाधकज्ञानविशेषणमुपात्तम्। तथा च द्वितीयोपाधिरपि साध्यव्यापकः साधनाव्यपको भवति। विपक्षाद्व्यावृत्तं सम-व्याप्तम्। विपक्षाद् ब्रह्मणस्तुच्छाच्च। व्यावृत्तम्, अतः समव्याप्तम्। सम-व्याप्तत्वमन्यूनानतिरिक्तवृत्तित्वम्, व्याप्यत्वे सति व्यापकत्वमित्यर्थः। साध्यः समनियतवृत्तिरुपाधिः। उदयनादिनैयायिकमते समव्याप्यस्यैवोपाधित्वादेवमुक्तं मूले। न्यायामृते तु पक्षाद्व्यावृत्तमित्युक्तम्। तेन पक्षावृत्तिः साध्यसमव्याप्त उपाधिरिति तस्याशयः। अत एव व्यतिरेकव्याप्तिमदुपाधिः। अत एव साध्य-समव्याप्तत्वादेव। ययोर्व्यतिरेकव्याप्तिस्तयोरेव व्याप्यवृत्तिव्यतिरेकिणोऽन्वय-व्याप्तिः। अत एव पक्षेतरत्वं नोपाधिः। व्यर्थविशेषणत्वेन व्यतिरेके व्याप्त्यभा-वादिति मते साध्यान्वयव्यतिरेकोन्नायकस्वान्वयव्यतिरेकवत्त्वरूपसाध्यप्रयोजकत्व-घटितमुपाधित्वम्। अत एव पक्षेतरत्वे न तदिति मते चोपाधित्वसंपादनाय इदमुक्तम्।

२—एतस्मिन् पूर्वपक्षे प्राप्ते आह आचार्यः इति चेन्न, ब्रह्मज्ञानमात्र-

पर्वतावयववृत्त्यन्यत्वादिवत् साधनवत्पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरत्वतुल्यत्वाच्च ॥२॥

---

बाध्ये देहात्मैक्ये मिथ्याभूते साध्याव्यापकत्वात् । पूर्वपक्षिणा प्रदर्शितमुपाधिद्वयमपि साध्याव्यापकम् । मिथ्याभूते देहात्मैक्ये साध्यवति प्रदर्शितोपाधिद्वयाभावादुपाधिद्वयं साध्याव्यापकम् । देहात्मैक्यबुद्धिः सर्वमते एव मिथ्या । अतो मिथ्याबुद्धेर्विषयोऽपि मिथ्यैव । मिथ्याविषयकत्वेनैव ज्ञानस्य मिथ्यात्वं नान्यथा । मिथ्याभूतं देहात्मैक्यमविद्यादोषजन्यम् । देहात्मैक्यबाधकस्य ब्रह्मज्ञानस्य यथा देहात्मैक्यं बाध्यं तथा दोषोऽपि बाध्यः । देहात्मैक्यबाधकं ज्ञानं दोषमबाधित्वा केवलं देहात्मैक्यं न बाधते । अतः स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं देहात्मैक्ये नास्ति । स्वबाधकाभिमतबाध्यदोषप्रयुक्तभानत्वमेवास्ति । देहात्मैक्ये सत्यपि मिथ्यात्वे प्रथमोपाधेरभावात्, उपाधेः साध्यव्यापकताभङ्गः । एवं द्वितीयोपाधिरपि, अत्रैव मिथ्याभूते देहात्मैक्ये साध्याव्यापक एव । यद् ब्रह्मज्ञानं देहात्मैक्यबाधकं तत् स्वात्मानमपि बाधते । अतः स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वं नास्ति, किन्तु स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वमस्ति । अतः सुष्ठूक्तं देहात्मैक्ये मिथ्याभूते साध्याव्यापकत्वात् । पर्वतावयववृत्त्यन्यत्वादिवत् साधनवत्पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरत्वतुल्यत्वाच्च । न केवलं प्रदर्शितोपाधिद्वयस्य साध्याव्यापकत्वं पक्षेतरत्वतुल्यत्वञ्चेति प्रदर्शयितुमाह—पर्वतावयववृत्त्यन्यत्वादिवत् । अन्यत्वस्य केवलान्वयित्वेन साधनव्यापकत्वादुपाधेः साधनाव्यापकत्वार्थं पर्वतावयववृत्तित्वोक्तम् । ननु तथापि साधनव्यापकत्वमेव, पर्वतावयववृत्तिरूपादन्यत्वस्य पर्वते सत्त्वादिति चेन्न, अन्योन्याभावस्य स्वप्रतियोगितावच्छेदकव्यधिकरणत्वेन पर्वतावयववृत्तित्वरूपप्रतियोगितावच्छेदकवति पर्वते पर्वतावयववृत्त्यन्यत्वप्रतीतेर्विरुद्धत्वेन साधनाव्यापकत्वमेव । ननु पर्वतावयववृत्तित्वस्य न पक्षमात्रव्यावर्तकत्वं पर्वतावयवगतरूपादिव्यावर्तकत्वात् । तथा च कथं पर्वतावयववृत्त्यन्यत्वस्य पर्वतेतरतत्त्वमिति चेत्, सत्यम्, पक्षमात्रव्यावर्तकविशेषणवत्त्वादित्यापाततः, वस्तुतस्तु हेतुसाध्ययोर्व्याप्तिग्राहकानुकूलतर्कसद्भावेन साध्यस्य पक्षेऽपि निश्चितत्वादुपाधेः साध्यव्यापकताग्राहकानुकूलतर्काभावे पक्षे एव उपाधेः साध्यव्यापकताभङ्गात् । पर्वतावयववृत्त्यन्यत्वादेर्नोपाधित्वं

न च बाधोन्नीतत्वात् सोऽप्युपाधिः; बाधस्याग्रे निरसिस्यमाण-

---

यथा तथा प्रकृतयोरप्युपाध्योर्मिथ्यात्वव्यापकताग्राहकानुकूलतर्काभावान्नोपाधित्वमिति भावः। 'पर्वतावयववृत्त्यन्यत्वादेः पर्वतावयवरूपादिव्यावर्तकत्वेऽपि न साधनवद् व्यावर्तकत्वं किन्तु तस्य साधनवत्पक्षमात्रव्यावर्तकत्वमेव। पक्षेतरसाधनवद्व्या-वर्तकत्वं नास्ति। यथा साधनवत्पक्षमात्रव्यावर्तकविशेषणत्वात् पक्षेतरत्वं नोपाधिः न वोपाधित्वेन कथायामुद्भाव्यते तथा पर्वतावयववृत्त्यन्यत्वादिकं स्वबाधकेत्यादिकं च तर्काभावेन साध्यव्यापकत्वानिश्चयात्। उक्तं हि मणौ—नहि पक्षेतरत्वे स्व-व्याघातकत्वेनानुपाधेः उपाधिलक्षणस्यातिव्याप्तिः। पक्षेतरत्वे अनुकूलतर्काभावेन व्यापकत्वानिश्चयात्। एवं पर्वतावयववृत्त्यन्यत्वादिकं नोपाधिः। साधनवत्पक्षमात्र-व्यावर्तकविशेषणवत्त्वात्। उक्तञ्च दीधितौ—तर्कादिना व्यापकत्वनिश्चये तु पक्षेत-रत्वमपि बाधोन्नीतपक्षेतरत्ववत् निश्चितोपाधिः। पक्षमात्रव्यावर्तकविशेषणवत्त्वं तु नानुपाधिताया बीजम्, परिभाषामात्रत्वात्, किन्तु पक्षमात्रव्यावर्तकविशेषण-स्थलेऽनुकूलतर्काभावेन व्यापकत्वानिश्चय इति। ईश्वरवादे मणावप्युक्तम्—पक्षेतरत्वादौ विपक्षबाधकतर्काभावान्न साध्यव्यापकतानिश्चय इत्येवानुपाधित्वे बीजम्। अत एव स्वाबाधकेत्यादेः सन्दिग्धोपाधित्वमपि नास्ति। दृश्यत्वादिहेतोः साध्येन व्यापकताग्राहकतर्कसत्त्वात्, उक्तोपाधेः साध्यव्यापकताग्राहकतर्कासत्त्वात्। उक्तं हि मणौ—यत्रोपाधिसाध्ययोः साध्यहेत्वोश्च व्याप्तिग्राहकसाम्यात् नैकत्र व्याप्तिनिश्चयस्तत्रैव सन्दिग्धोपाधित्वम्, व्यभिचारसंशयाधायकत्वात्। यत्र तु एकत्र तर्कावतारः तत्र हेतुत्वमुपाधित्वं वा निश्चितम्। अत्र च विपक्षव्यावर्तकत्वेऽपि साधनवद्विपक्षव्यावर्तकत्वं 'प्रकृतोपाध्योर्द्वयोर्नास्ति। पर्वतावयववृत्त्यन्यत्वा-दावपि साधनवद्विपक्षव्यावर्तकत्वं नास्ति, इत्यतः पर्वतावयववृत्त्यन्यत्वमेव दृष्टान्ती-कृतम्। न तु पर्वतेतरत्वादिकम्। पर्वतेतरत्वादौ तदभावात्। तथा च पक्षेतरतु-ल्यत्वेन पर्वतावयववृत्त्यन्यत्वादेर्यथोक्तमणिवाक्येऽनुपाधित्वमुक्तं तथा तत्सदृश-योः स्वबाधकेत्याद्युपाध्योरपीति भावः ॥२॥

३—न च बाधोन्नीतत्वात् सोऽप्युपाधिरिति। पक्षे साध्याभाव-निश्चयरूपेण बाधेन निर्णीतसाध्यव्यापकत्वात् पक्षेतरत्वमुपाधिर्भवति। यथा वह्निरनुष्णः कृतकत्वादित्यादौ पक्षस्य साध्याभाववत्त्वेन निश्चितत्वरूपाद्विपक्ष-

त्वात्। अपि च यद्वयतिरेकस्य साध्यव्यतिरेकसाधकत्वं तस्यैव साध्यव्यापकत्वम्; इतरांशेऽनुकूलतर्काप्रसरात्।

तथा च 'क्षित्यादिकम्, न कर्तृजन्यम्, शरीराजन्यत्वादि'त्यत्र यथाशरीरविशेषणवैयर्थ्यान्न शरीरजन्यत्वं कर्तृजन्यत्वव्यापकम्, 'एवं

---

त्वादनुष्णत्वरूपे साध्ये वह्निभेदस्योपाधेर्व्याप्तिः निश्चीयते इति तत्र वह्नीतरत्वमुपाधिर्भवति। प्रकृतेऽपि तथा भवितुमर्हेत् यदि मिथ्यात्वानुमाने साध्यस्य पक्षे बाधः स्यात्। प्रकृतानुमाने बाधस्तु नास्तीत्याह—बाधस्याग्रे निरसिष्यमाणत्वात् प्रत्यक्षादिबाधोद्धारग्रन्थे इत्यर्थः।

अपि च यद्वयतिरेकस्य साध्यव्यतिरेकसाधकत्वं तस्यैव साध्यव्यापकत्वमितरांशे अनुकूलतर्कप्रसरात्। सम्भवद्वयतिरेकस्थले उपाधेः साध्यव्यापकत्वनिश्चयेऽन्वयव्याप्तिरिव व्यतिरेकव्याप्तिरप्यपेक्षिता। तथा च यथा साध्यसत्त्वे उपाधिसत्त्वं तथा उपाधिव्यतिरेके साध्यव्यतिरेकोऽप्यवश्यमपेक्षणीयः। पक्षे उपाधिव्यतिरेकेण साध्यव्यतिरेकस्य सिषाधयिषितत्वात्। अत एव यद्वयतिरेकात् साध्यव्यतिरेको ज्ञाप्यते स एव साध्यव्यापकः। साध्यव्यतिरेकज्ञापने यदंशव्यतिरेकमात्रस्य ज्ञापकता तदंशस्यैव व्यापकत्वम्। इतरांशस्य तु अनुकूलतर्काप्रसरात् न व्यापकत्वम्। एतदेव दृष्टान्तेन स्पष्टयन्नाहाचार्यः—तथा च क्षित्यादिकमिति। यथा क्षितिः सकर्तृका कार्यत्वात् घटवदित्यनुमाने पूर्वपक्षिभिः शरीरजन्यत्वमुपाधित्वेनोद्भावितम्। अस्मिन्ननुमाने शरीरजन्यत्वमुपाधिर्न भवितुमर्हति। उपाधिव्यतिरेकेण साध्यव्यतिरेकानुमाने शरीरविशेषणस्य व्यर्थत्वेन व्याप्यत्वासिद्धिदोषप्रसङ्गः। अत एवोक्तमुदयनाचार्येण—"एकामसिद्धिं परिहरतो द्वितीयापत्तेः"। तथा हि—क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वात् गगनादिवत् इत्येव प्रतिरोधानुमानमुपाधिवादिभिः प्रदर्शनीयम्। तत्र अजन्यत्वादित्यंशमात्रस्यैव कर्तृजन्यत्वाभावव्याप्यत्वात् तावन्मात्रमेवापेक्षितम्। तावन्मात्रोपादाने क्षित्यादिपक्षस्य जन्यत्वेन हेतोः स्वरूपासिद्धिः स्यात्। स्वरूपासिद्धिपरिहारार्थैव पूर्वपक्षिणा हेतौ शरीरविशेषणमुपात्तम्। क्षित्यादीनां जन्यत्वेऽपि शरीरजन्यत्वं नास्तीति कृत्वा शरीराजन्यत्वं क्षित्यादिपक्षे वर्तते। अतो हेतोर्न स्वरूपासिद्धिः। किन्तु अजन्यत्वमात्रमेव कर्त्रजन्यत्वसाधकमिति कृत्वा तत्र

वियदादिकम्, न मिथ्या, स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वरहितत्वादि'ति साध्यव्यतिरेकसाधने स्वबाधकाभिमताबाध्यभागस्य वैयर्थ्यात् स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं न मिथ्यात्वव्यापकम्। दोषप्रयुक्तभानत्वं तु भवति साध्यव्यापकम्, तच्च साधनव्यापकमपीति नोपाधि.। दृश्यत्वादिनैव मिथ्यात्ववत्तस्यापि साधनात् ॥३॥

---

शरीरविशेषणप्रक्षेपे व्याप्यत्वासिद्धिरेव स्यात्। शरीरविशेषणस्य वैयर्थ्यात् न शरीरजन्यत्वं कर्तृजन्यत्वव्यापकम्। शरीरजन्यत्वं यदि कर्तृजन्यत्वव्यापकं न स्यात्तर्हि शरीराजन्यत्वस्यापि कर्तृजन्यत्वं व्यापकं न स्यात् इति यथा—एवं वियदादिकं न मिथ्या स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानरहितत्वादिति साध्यव्यतिरेकसाधने स्वबाधकाभिमताबाध्यभागस्य वैयर्थ्यात् स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं न मिथ्यात्वव्यापकम्। उक्तञ्च आचार्येण—यद्व्यतिरेकस्य साध्यव्यतिरेकसाधकत्वं तस्यैव साध्यव्यापकत्वम्। उपाधेः साध्यव्यापकत्वं प्रदर्शयताऽवश्यमेव उपाधिव्यतिरेकस्य साध्यव्यतिरेकसाधनत्वमभ्युपगमनीयम्। एवञ्चेदनुमानं पर्यवस्यति। वियदादिकं न मिथ्या स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानरहितत्वात्। अत्र वियदादेः सत्यत्वसाधने दोषप्रयुक्तभानरहितत्वादित्येतावन्मात्रांशस्यैव अनुमापकत्वसम्भवे स्वबाधकाभिमताबाध्यभागस्य वैयर्थ्यात् न स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं मिथ्यात्वव्यापकमित्यर्थः। साध्यव्यतिरेकानुमाने ज्ञापकतया उपाधेर्यावदंशस्य व्यतिरेक उपयुज्यते, उपाधेस्तावन्मात्रांश एव साध्यस्य व्यापको भवति। इतरांशस्तु न व्यापको भवति। अतः दोषप्रयुक्तभानत्वमेव मिथ्यात्वव्यापकम्, न तु स्वबाधकाभिमताबाध्येति विशेषणयुक्तम्। दोषप्रयुक्तभानत्वं तु भवति साध्यव्यापकम्, तच्च साधनव्यापकमपीति नोपाधिः। उद्भावितोपाधेः विशेष्यांशमात्रस्य साध्यव्यापकत्वेऽपि साधनस्यापि व्यापकत्वान्नोपाधिः। पूर्वपक्षिणा साध्यव्यापकत्वांशेऽनुपयुज्यमानं विशेषणमेव उपाधेः साधनाव्यापकत्वाय निवेशितम्। अनपेक्षितविशेषणयोजने च साध्यव्यापकत्वमेव न सिध्यति। दृश्यत्वादिनैव मिथ्यात्ववत् तस्यापि साधनात्। यथा वियदादिकं मिथ्या दृश्यत्वादित्यत्र दृश्यत्वेन हेतुना वियदादीनां मिथ्यात्वमनुमीयते एवमेव

एवं द्वितीयोपाधावपि 'स्वबाधकाबाध्यबाधकं प्रती'ति विशेषणं व्यतिरेकसाधने व्यर्थम् । विशेष्यभागस्तु साध्यसाधनयोर्व्यापक इति नोपाधिः ॥४॥

---

दृश्यत्वादिहेतुना वियदादेः, दोषप्रयुक्तभानत्वमप्यनुमीयते । यतो दोषप्रयुक्तभानत्वमेव दृश्यत्वादिहेतोर्व्यापकम् ॥३॥

४—एवं द्वितीयोपाधिरपि इति । स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वं द्वितीयोपाधिः । यथा प्रथमोपाधौ स्वबाधकाभिमताबाध्येति दोषविशेषणं व्यतिरेकसाधने व्यर्थमिति प्रदर्शितमेव तथा द्वितीयोपाधावपि स्वबाधकाबाध्येति बाधकज्ञानविशेषणम् । मूले स्वबाधकाबाध्यबाधकं प्रतीतिविशेषणं यदुक्तं तस्याऽयमभिप्रायः—बाधकं प्रति स्वबाधकाबाध्येति विशेषणम् । न तु स्वबाधकाबाध्यबाधकं प्रतीत्यंशे विशेषणम् । यदि प्रतीत्यन्तभागस्य विशेषणत्वं स्यात् तर्हि निषेध्यत्वेन विषयत्वमिति विशेष्यभागस्यैव विशेषणं वक्तव्यम् । निषेध्यत्वेन विषयत्वञ्च नोपाधिः किन्तु बाधकं प्रति निषेध्यत्वेन विषयत्वमेवोपाधिः । स्वबाधकाबाध्येति बाधकविशेषणमिति न्यायामृतकृतामाशयः । यथाश्रुतग्रन्थानुसारेणाचार्यस्य स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वमिति द्वितीयोपाधौ निषेध्यत्वेन विषयत्वमितिभागस्यैव विशेष्यत्वम्, प्रतीत्यन्तं विशेषणमभिप्रेतमिति प्रतिभाति । न्यायामृतकारस्याभिप्रायस्तु प्रागेवोक्तः । बाधकं प्रति निषेध्यत्वेन विषयत्वं वा द्वयमपि, मिथ्यात्वरूपसाध्यप्रयोजकत्वादुपाधिर्भवितुमर्हति किन्तु द्वयोरेव साधनव्यापकत्वात् नोपाधित्वम् । यथा दोषप्रयुक्तभानत्वं साध्यव्यापकमेवं बाधकं प्रति निषेध्यत्वेन विषयत्वं निषेध्यत्वेन विषयत्वं वा साध्यव्यापकम् । किन्तु तत्साधनव्यापकमपीति नोपाधिः, विशेषणांशस्य व्यतिरेकसाधने व्यर्थत्वात् । यत्र यत्र मिथ्यात्वं तत्र तत्र स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वमिति व्याप्तिमङ्गीकुर्वता व्यतिरेकव्याप्तिरूपाङ्गीकर्तव्या । यत्र यत्र स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वं नास्ति तत्र मिथ्यात्वमपि नास्ति इति व्यतिरेकव्याप्तेर्ग्रहणभूमिस्तु ब्रह्मैव । ब्रह्मणि निषेध्यत्वेनाविषयत्वादेव मिथ्यात्वाभावः । न तु स्वबाधकाबाध्यबाधकं प्रति निषेध्यत्वेनाविषयत्वात् मिथ्यात्वाभावः । तथा च विशेषणांशस्य व्यर्थत्वमेव । विशेष्यभागस्तु साध्यवत्साधनस्यापि व्यापक इति नोपाधिः ॥४॥

अत एवाधिष्ठानत्वाभिमतसमसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वमुपाधिः। अत्र च ब्रह्मणोऽपि बौद्धकल्पितदोषवद्धेतुजन्यक्षणिकत्वादिज्ञानविषयत्वात् समव्याप्तिसिद्ध्यर्थमधिष्ठानसमसत्ताकेति विशेषणम्, न तु पक्षमात्रव्यावृत्त्यर्थम्, अतो न पक्षेतरतुल्यतेत्यपास्तम्। ब्रह्मणीव ब्रह्मणि कल्पिते क्षणिकत्वादावपि मिथ्याभूते धर्मे अधिष्ठानसमसत्ताक-

---

५—पूर्वपक्षी तृतीयमुपाधिं शङ्कते—अत एव अधिष्ठानत्वाभिमतसमसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वमुपाधिः। अयम्भावः—मिथ्यात्ववति शुक्तिरजतेऽधिष्ठानत्वाभिमतशुक्तिसमानसत्ताककाचादिदोषवदिन्द्रियादिजन्यज्ञानविषयत्वमस्ति इति भवति उपाधिः साध्यव्यापकः। दृश्यत्ववति पक्षे प्रपञ्चे उपाधिर्नास्तीतिभवत्युपाधिः साधनाव्यापकः। प्रपञ्चविषयज्ञानजनके मायाऽविद्यारूपदोषे प्रपञ्चारोपाधिष्ठानीभूतब्रह्मसमानसत्ताकत्वाभावेन विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्त्वात् उपाधेः साधनाव्यापकत्वम्। दोषवद्धेतुजन्यज्ञानविषयत्वं यद्यपिपक्षदृष्टान्तयोरुभयत्रास्ति तेनोपाधेः साधनव्यापकत्वमपि स्यात्। अतः दोषेऽधिष्ठानत्वाभिमतसमानसत्ताकेति विशेषणमुपात्तम्। दोषवद्धेतुजन्यज्ञानविषयत्वं विशेष्यम्, तत्र दोषेऽधिष्ठानत्वाभिमतसमानसत्ताकेति विशेषणम्। अस्योपाधेः पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरत्वमिति शङ्कावारणाय उपाधौ विशेषणकृत्यं दर्शयति—अत्र च ब्रह्मणोऽपीति। ब्रह्मणोऽपि बौद्धकल्पितदोषवद्धेतुजन्यज्ञानविषयत्वात्। समव्याप्तिसिद्ध्यर्थमधिष्ठानत्वाभिमतसमानसत्ताकेति विशेषणम्। न तु पक्षमात्रव्यावृत्त्यर्थम्। अतो न पक्षेतरतुल्यता। अयम्भावः—बौद्धकल्पिता ये दोषा यदनृतं तदप्रमाणं दृष्टं यथोन्मत्तवाक्यम्। अनृतञ्च पुत्रकामः पुत्रेष्ट्या यजेत इत्यादिवेदवाक्यम् कृतायामपीष्टौ पुत्रजन्मानुपलम्भात्। इत्येवमनृतव्याघाताद्या बौद्धकल्पितदोषास्तद्वान् यो हेतुः वेदरूपकरणं तज्जन्यज्ञानविषयत्वेऽपि ब्रह्मणो मिथ्यात्वाभावेन व्यभिचारात् समव्याप्त्यभावादित्यर्थः। अतः अधिष्ठानत्वाभिमतसमानसत्ताकेति दोषविशेषणम्। तथा च वेदे दोषाणां बौद्धकल्पितानां प्रतिभासिकत्वेनाधिष्ठानत्वाभिमतब्रह्मसमानसत्ताकत्वाभावेन तादृशदोषवद्धेतुजन्यज्ञानविषयत्वरूपोपाधेरेवाभावेन न व्यभिचारः इति भावः। इति पूर्वपक्षिणामभिप्रायः। प्रकृतस्थले प्रपञ्चमिथ्यात्वानुमाने दृष्टान्ते शुक्तिरजतेऽधिष्ठान-

दोषवद्धेतुजन्यज्ञानाविषयत्वादुपाधेः साध्याव्याप्तेः, व्यतिरेकसाधने व्यर्थविशेषणत्वस्योक्तत्वाच्च। नापि श्रुतितात्पर्याविषयत्वमुपाधिः ॥५॥

श्रुतितात्पर्यविषयत्वस्य ब्रह्ममात्रनिष्ठतया तदभावस्य, साधनव्यापकत्वात् ॥६॥

---

त्वाभिमतसमसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वोपाधिरस्ति, काचादिदोषाणामधिष्ठानशुक्तिसमानसत्ताकत्वात्। किन्तु पक्षे प्रपञ्चेऽधिष्ठानत्वाभिमतसमानसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वं नास्ति। अधिष्ठानं ब्रह्म। दोषश्चाविद्या। अविद्याया ब्रह्मसमानसत्ताकत्वाभावादुपाधेः पक्षावृत्तितया साधनाव्यापकत्वम्। पूर्वपक्षं निरस्यन्नाहाचार्यः—अत एव'''अपास्तम्। पूर्वपक्षिणा यदुक्तं तदपास्तम्। प्रदर्शितोपाधेः साध्याव्यापकत्वात्। स्वजनकाज्ञानविषयावच्छेदकत्वरूपाधिष्ठानत्वघटितोक्तोपाधिः यथा ब्रह्मणि न सम्भवति, ब्रह्मजनकाज्ञानाप्रसिद्धेः तथा ब्रह्म क्षणिकमिति बौद्धकल्पितदोषवद्धेतुजन्यज्ञानविषये ब्रह्मणि कल्पिते क्षणिकत्वे मिथ्याभूते धर्मे अधिष्ठानसमानसत्ताकदोषवद्धेतुजन्यज्ञानाविषयत्वादुपाधेः साध्याव्याप्तेः। उपाधेः साध्याव्यापकत्वादित्यर्थः। एतेन पूर्वपक्षिणोत्प्रेक्षित उपाधिः साध्यव्यापक एव न भवति। न केवलं साध्याव्यापकत्वमुपाधेः किन्तु व्यर्थविशेषणत्वमपि इत्याहाचार्यः—व्यतिरेकसाधने व्यर्थविशेषणत्वस्योक्तत्वाच्च। साध्योपाध्योर्व्यतिरेकव्याप्तौ उपाध्यभावस्य व्याप्यत्वात् व्यर्थविशेषणघटितस्य व्याप्यस्य व्याप्यत्वासिद्ध्या व्याप्तिरेव न सिध्यति यत्र यत्र अधिष्ठानत्वाभिमतसमानसत्ताकदोषवद्धेतुजन्यज्ञानविषयत्वाभावस्तत्र मिथ्यात्वाभाव इति व्यतिरेकव्याप्तौ दोषवद्धेतुजन्यज्ञानविषयत्वाभावेनैव, मिथ्यात्वाभावसिद्धौ दोषे उपात्तं विशेषणं व्यर्थमेव ॥५॥

६—पूर्वपक्षी उपाध्यन्तरं शङ्कते—श्रुतितात्पर्याविषयत्वमुपाधिः। पूर्वपक्षिणोऽयमभिप्रायः—समग्रपक्षव्यावृत्तोपाधिमुक्त्वा पक्षैकदेशव्यावृत्तमुपाधिमाह—"श्रुतितात्पर्याविषयत्वमि"ति। मिथ्यात्वानुमाने व्यावहारिकप्रपञ्चस्य पक्षीकारेण धर्माधर्मयोरपि पक्षेऽन्तर्भावः। धर्माधर्मयोस्तु श्रुतितात्पर्यविषयत्वात्, श्रुतितात्पर्याविषयत्वं तत्र नास्ति। मिथ्यावस्तुमात्रस्य श्रुतितात्पर्याविषयत्वादुपाधेः साध्यव्यापकत्वमस्ति। मिथ्यात्वव्यापकीभूतोऽयमुपाधिः पक्षैकदेशे धर्माधर्मयोर्नास्ति। अतः साध्यव्यापकोपाधिः पक्षैकदेशे अविद्यमानः सन् साधनाव्यापकोऽपि भवति ॥६॥

नापि प्रातिभासिकत्वमुपाधिः; तद्धि ब्रह्मज्ञानेतरबाध्यत्वम्, तस्य च देहात्मैक्ये मिथ्याभूतेऽप्यसत्त्वेन साध्याव्याप्तेः, व्यतिरेके व्यर्थविशेषणत्वाच्च। नापि प्रतिभासमात्रशरीरत्वमुपाधिः; दृष्टिसृष्टिपक्षे

---

अयमुपाधिर्न भवितुमर्हतीत्याहाचार्यः—नापि श्रुतितात्पर्याविषयत्वमुपाधिः—श्रुतितात्पर्यविषयत्वस्य ब्रह्ममात्रनिष्ठतया तद्भावस्य साधनव्यापकत्वात्। सिद्धान्ते धर्माधर्मयोरपि श्रुतितात्पर्यविषयत्वं नास्ति। अतः पक्षैकदेशे अस्योपाधेः साधनाव्यापकत्वमपि नास्ति। अतः श्रुतितात्पर्याविषयत्वस्योपाधेः यथा मिथ्यात्वव्यापकत्वं तथा दृश्यत्वादिसाधनव्यापकत्वमपि। अत्रेदं बोध्यम्—श्रुतितात्पर्यविषयत्वमित्यत्र श्रुतेः परमतात्पर्यविषयत्वमेव वक्तव्यम्। "अर्थेऽनुपलब्धे तत्प्रमाणमि"ति जैमिन्युक्तेऽज्ञातार्थे एव श्रुतितात्पर्योक्तेः। अज्ञातत्वन्तु ब्रह्मण एव। जडस्याज्ञानविषयत्वाभावात्। अत एव श्रुतिपरमतात्पर्यविषयत्वं जडे न भवितुमर्हति किन्तु ब्रह्मण्येव।

पुनरप्युपाध्यन्तरं शङ्कते—नापि प्रातिभासिकत्वमुपाधिः। मिथ्यात्वरूपसाध्यस्याव्यापकत्वात् प्रातिभासिकत्वं नोपाधिर्भवितुमर्हति। तद्धि ब्रह्मज्ञानेतरबाध्यत्वम् अत्र ज्ञानपदं प्रमापरम्। व्यावहारिकप्रपञ्चस्य ब्रह्मप्रमामात्रबाध्यत्वेन प्रातिभासिकप्रपञ्चस्य शुक्तिरजतादेर्ब्रह्मप्रमेतरशुक्त्यादिप्रमाबाध्यत्वम्। एतत्प्रातिभासिकत्वं मिथ्याभूते शुक्तिरजतादौ यद्यप्यस्ति तथापि मिथ्याभूते देहात्मैक्ये नास्ति। देहात्मैक्यस्य व्यवहारकालाबाध्यत्वेन न प्रातिभासिकत्वं किन्तु व्यावहारिकत्वमेव। "देहात्मैक्यान्तर्भावे प्रातिभासिकत्वस्य मिथ्यात्वाव्यापकत्वात् नोपाधित्वमि"ति भावः। एतदेवोक्तमाचार्येण तस्य च देहात्मैक्ये मिथ्याभूतेऽप्यसत्त्वेन साध्याव्याप्तेः। दोषान्तरमाह—व्यतिरेके व्यर्थविशेषणत्वाच्च। उपाधिव्यतिरेकेण साध्यव्यतिरेकसाधनाय हि उपाधिरुद्भाव्यते। एवञ्च साध्योपाध्योर्व्यतिरेकव्याप्तिरपेक्षिता। सा च यत्र यत्र ब्रह्मप्रमातिरिक्ताबाध्यत्वं तत्र मिथ्यात्वाभावः। अस्याः व्याप्तेर्ग्रहणभूमिस्तु मिथ्यात्वाभाववत् ब्रह्मैव। ब्रह्मणि मिथ्यात्वाभावेऽबाध्यत्वमेवप्रयोजकं—यदबाध्यं तत्सत्यमिति हि व्याप्तिशरीरम्। ब्रह्मप्रमातिरिक्तेति हेतुविशेषणं व्यर्थमेव। उपाध्यन्तरं शङ्कते नापि प्रतिभासमात्रशरीरत्वमुपाधिः। प्रतिभासमात्रशरीरत्वं नाम अज्ञानविषयतानवच्छेदक-

साधनव्यापकत्वात् परेषामसिद्धेश्चेति ॥७॥

इति दृश्यत्वादीनां सोपाधिकत्वभङ्गः ।

---

त्वम् अज्ञातसत्ताराहित्यमित्यर्थः । तच्च सर्वत्र प्रातिभासिके स्वकालावच्छेदे-नास्ति । स्वकालान्यकालावच्छेदेन तत्र प्रातिभासिकेऽज्ञानविषयतावच्छेदकत्वात् । तथा च अज्ञानविषयतानवच्छेदकत्वं दृष्टान्ते शुक्तिरूप्यादौ प्रातिभासिकेऽस्ति इति उपाधेः साध्यव्यापकत्वेऽपि व्यावहारिके देहात्मैक्यादौ मिथ्याभूतेऽभावात् उपाधेः साध्यव्यापकताभङ्गादिति भावः । मिथ्याभूतानां देहात्मैक्यादीनामज्ञात-सत्त्वात् अज्ञानविषयतावच्छेदकत्वमेव । दृष्टिसृष्टिपक्षे साधनव्यापकत्वात् दृष्टिसृष्टिपक्षे पक्षीकृतप्रपञ्चस्यापि प्रातिभासिकत्वात् प्रतिभासमात्रशरीरत्वं पक्षेऽ-प्यस्तीति उपाधेः साधनव्यापकत्वमपीति भावः । तथा च नोपाधिः । या च पूर्वपक्षिणा दृष्टिसृष्टिपक्षे सिद्धान्तिसम्मतप्रतिकर्मव्यवस्थाया अनुपपत्तिरुक्ता सा सिद्धान्तिप्रक्रियाया अज्ञानविजृम्भितैव । सिद्धान्तिनो दृष्टिसृष्टिपक्षे प्रतिकर्मव्य-वस्था नाभ्युपेयते । प्रतिकर्मव्यवस्था मन्दाधिकारिजनव्युत्पादनार्था । दृष्टिसृष्टि-प्रक्रिया तु उत्तमाधिकारिजनसम्मता । परेषां चासिद्धेश्च । परेषां माध्वानाम् । माध्वमतेऽसत्ख्यात्यभ्युपगमेन शुक्तिरूप्यादीनामत्यन्तासतां तदसिद्धेः अपरोक्ष-तया भासमानतैव हि अज्ञानविषयतानवच्छेदकत्वम् । नित्यपरोक्षे तु अलीके "अलीकं न भाती"ति प्रत्ययात्तेषामज्ञानविषयतावच्छेदकत्वमेव । तथा च अज्ञान-विषयतानवच्छेदकत्वरूपोपाधिः माध्वमतेऽलीके न सम्भवतीति उपाधेः साध्या-व्यापकत्वम् ॥७॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेव-शर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां दृश्यत्वादीनां सोपाधिकत्वभङ्गविवरणं समाप्तम् ।

## अथ आभाससाम्यभङ्गः

ननु—विमतं प्रातिभासिकं दृश्यत्वात्, ब्रह्म, मिथ्या, व्यवहार-विषयत्वात् असद्विलक्षणत्वाद्वा शुक्तिरूप्यवदित्याद्याभाससाम्यम्—इति चेत् ॥१॥

---

१—विमतं प्रातिभासिकं दृश्यत्वात्, ब्रह्म मिथ्या व्यावहारविषयत्वात्, असद्विलक्षणत्वाद्वा शुक्तिरूप्यवत् इत्याद्याभाससाम्यमिति चेत् ? प्रदर्शितमनुमानद्वयं दुष्टहेतुजन्यत्वात् न स्वार्थसाधकम् । एतेषां हेतूनां साध्यासाधकत्वं वादिप्रतिवादिनोर्द्वयोरभिमतम् । एवमेव दृश्यत्वादिहेतुकं प्रपञ्चमिथ्यात्वानुमानमपि प्रदर्शिताभासानुमानतुल्ययोगक्षेममिति पूर्वपक्षिणोऽभिमानः । अनुमानदूषणाय आभाससाम्यप्रसञ्जनन्तु तत्रैव भवति यत्र पूर्ववादिप्रदर्शितहेतौ विशेषतो दोषाः परिस्फुरन्ति । हेतुदोषाणां विशेषतोऽस्फुरणे आभाससाम्यापादनेन हेतोरसाधकत्वप्रदर्शनम् ।

प्रपञ्चमिथ्यत्वानुमाने यत्पक्षरूपेण निर्दिष्टं तदेवेह विमतपदेन ग्राह्यम् । सत्यत्वमिथ्यात्वाभ्यां विप्रतिपत्तिविशेष्यम् । तच्च व्यावहारिकप्रपञ्चरूपम् । व्यावहारिकप्रपञ्चो प्रातिभासिकः दृश्यत्वात् शुक्तिरूप्यवदित्येकमनुमानम् । एतेनानुमानेन व्यावहारिकत्वेन प्रसिद्धस्यापि वियदादेः सिद्धान्त्यनभिमतं प्रातिभासिकत्वमेव साध्यते । अत्र हेतुर्दृश्यत्वम् । दृश्यत्वन्तु प्रागेव कृतनिर्वचनम् । शुक्तिरजतदृष्टान्ते दृश्यत्वहेतुरपि वर्तते प्रातिभासिकत्वमपि वर्तते । अतः प्रातिभासिकत्वस्य दृश्यत्वव्यापकत्वम् । अतः दृश्यत्वहेतुना व्यावहारिकस्यापि प्रातिभासिकत्वमनुमीयते । एवं ब्रह्म मिथ्या व्यवहारविषयत्वात् शुक्तिरजतवत् । शुक्तिरजतेऽपि ज्ञानरूपव्यवहारविषयत्वं वर्तते, मिथ्यात्वमपि वर्तते । अतः मिथ्यात्वव्याप्येन व्यवहारविषयत्वेन ब्रह्मणोऽपि मिथ्यात्वमनुमीयते । ब्रह्मणोऽपि व्यवहारविषयत्वं ज्ञानविषयत्वेन विचारविषयत्वेन वा बोध्यम् । अथ वा ब्रह्म मिथ्या असद्विलक्षणत्वात् शुक्तिरूप्यवत् । प्रातिभासिके शुक्तिरजतदृष्टान्ते सदसद्विलक्षणेऽसद्वैलक्षण्यं हेतुर्वर्तते, मिथ्यात्वरूपं साध्यमपि वर्तते । अतो मिथ्यात्वव्याप्येन असद्विलक्षणत्वेन हेतुना

न; जगतो व्यावहारिकसत्यबाधे व्यवहारानुपपत्तिः, ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिश्चेति प्रतिकूलतर्कपराघातेन तयोरसाधकत्वात् प्रकृते च प्रतिकूलतर्कस्य निरसिष्यमाणत्वात्। किञ्च प्रातिभासिकत्वं

---

ब्रह्मणोऽपि मिथ्यात्वमनुमीयते। ब्रह्मणोऽसद्विलक्षणत्वञ्च सर्वसम्मतमेव। तथा च प्रदर्शितेनानुमानत्रयेण आभासीभूतेन साम्यं दृश्यत्वादिलिङ्गकानुमानानामपीति पूर्वपक्षिणोऽभिप्रायः ॥ १॥

२—प्रदर्शिताभाससाम्यं विघटयन्नाहाचार्यः—**न जगतो व्यावहारिकसत्यबाधे व्यवहारानुपपत्तिः। ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिश्चेति प्रतिकूलतर्कपराघातेन तयोरसाधकत्वात्।** अयमभिप्रायः—जगतो व्यावहारिकसत्त्वं नाम अज्ञातसत्त्वम्। जगतो अज्ञातसत्त्वमस्तीति कृत्वैव चक्षुरादिप्रमाणानां प्रामाण्यनिर्वाहः। अनधिगतार्थविषयकज्ञानकरणं हि प्रमाणम्। जगतः प्रातिभासिकसत्त्वे तस्याज्ञातसत्त्वाभावेन तद्ग्राहकप्रमाणानां प्रामाण्यमेव भज्येत। जगतः प्रातिभासिकत्वे व्यवहारानुपपत्तिः। जगतोऽज्ञातत्वावच्छेदकघटाद्यस्वीकारे चक्षुरादिजन्यवृत्तेः विषयेन्द्रियसम्बन्धजन्याया अनुपपत्तिः। अज्ञाते विषये एव चक्षुरादीन्द्रियसम्बन्धो भवति। प्रातिभासिकत्वे तन्नोपपद्यते अज्ञातत्वाभावात्। एवमेव पूर्वदृष्टस्य दृश्यमानेन व्यक्त्यैक्यप्रत्यभिज्ञादेश्चानुपपत्तिः। प्रातिभासिके प्रत्यभिज्ञा न भवितुमर्हति। सर्वेषां प्रातिभासिकत्वे पूर्वदृष्टं दृश्यमानञ्च भिन्नमेव इत्यैक्यप्रतिज्ञा [प्रत्यभिज्ञा] न भवितुमर्हति एवमेव ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिश्च। माध्यमिकबौद्धसम्मतो हि शून्यवादः। अतः प्रदर्शितप्रतिकूलतर्कपराघातेन अभासानुमानयोः साध्यासाधकत्वात्। यद्यप्यनुमानत्रयमत्र प्रदर्शितं तथापि साध्यद्वयमेवोक्तमिति कृत्वा अनुमानयोरिति द्विवचनमुपात्तमाचार्येण। प्रदर्शितप्रतिकूलतर्कपराघातेन प्रदर्शितयोराभासानुमानयोर्यथा साध्यासाधकत्वं न तथा प्रकृते दृश्यत्वादिहेतुकानुमाने इत्याहाचार्यः—**प्रकृते च प्रतिकूलतर्कस्य निरसिष्यमाणत्वात्।** प्रकृते च दृश्यत्वादिहेतुकानुमाने पूर्वपक्षिणो उत्प्रेक्षिता ये प्रतिकूलतर्कास्तेषामग्रे निरसिष्यमाणत्वान्न सिद्धान्त्यभिमतानुमाने प्रतिकूलतर्कपराघातः अत एव आभासानुमानात् सिद्धान्त्यभिमतदृश्यत्वादिलिङ्गकानुमानस्य वैलक्षण्यादाभाससाम्यभङ्गः, किञ्च आभासानुमानानां प्रति-

ब्रह्मज्ञानेतरबाध्यत्वम्, प्रतिभासमात्रशरीरत्वं वा। आद्ये साध्ये देहात्मैक्ये व्यभिचारः, अप्रयोजकत्वं च। द्वितीये दृष्टिसृष्टिमतेन सिद्धसाधनम्। एवं ब्रह्मणि मिथ्यात्वे साध्ये सोपाधिके सिद्धसाधनम्। निरुपाधिके व्यवहारविषयत्वरूपो हेतुरसिद्धः। वेदान्तजन्यवृत्तिविषयत्वाभ्युपगमेऽप्यप्रयोजकः।

---

कूलतर्कपराघातादप्यन्यद् दूषणजातमस्ति यत् सिद्धान्त्यभिमतानुमाने नास्ति। अतोऽप्याभासवैषम्यं सिद्धान्त्यभिमतानुमानस्य आभासप्रथमानुमाने प्रातिभासिकत्वं साध्यम्। तच्च ब्रह्मज्ञानेतरबाध्यत्वं प्रतिभासमात्रशरीरत्वं वा वाच्यम्। आद्ये साध्ये देहात्मैक्ये व्यभिचारः। देहात्मैक्ये दृश्यत्वहेतुरस्ति किन्तु ब्रह्मज्ञानेतरबाध्यत्वरूपं साध्यं नास्ति। देहात्मैक्यस्य ब्रह्मज्ञानमात्रबाध्यत्वात्। अतो दृश्यत्वहेतोर्व्यभिचारः। ब्रह्मज्ञानेतरबाध्यत्वाभावेऽपि यदि दृश्यत्वं स्यात् तर्हि कस्यचिदनिष्टस्यानापातात् हेतोः साध्याप्रयोजकत्वञ्च। हेतोर्विपक्षवृत्तित्वशङ्काया अनिवारणात्। इत्याहाचार्यः—किञ्च, प्रातिभासिकत्वं ब्रह्मज्ञानेतरबाध्यत्वं प्रतिभासमात्रशरीरत्वं वा। आद्ये साध्ये देहात्मैक्य व्यभिचारः अप्रयोजकत्वञ्च। प्रातिभासिकपदस्य द्वितीयार्थग्रहणे सिद्धसाधनमाहाचार्यः—द्वितीये दृष्टिसृष्टिमतेन सिद्धसाधनम्। अयम्भावः—विमतं प्रतिभासमात्रशरीरं दृश्यत्वात् शुक्तिरूप्यवत् अस्मिन्ननुमाने दृष्टिसृष्टिमतेन वियदादिप्रपञ्चस्य प्रतिभासमात्रशरीरत्वाभ्युपगमात् दृश्यत्वेन हेतुना तस्यैव साधने सिद्धसाधनमेव। एवं मिथ्याव्यवहारविषयत्वात् इत्यनुमानेन सोपाधिके ब्रह्मणि मिथ्यात्वे साध्ये सिद्धसाधनमेव। सिद्धान्ते सोपाधिकब्रह्मणि मिथ्यैव। निरुपाधिके ब्रह्मणि व्यवहारविषयत्वरूपो हेतुरसिद्धः। इत्याहाचार्यः—एवं ब्रह्मणि मिथ्यात्वे साध्ये सोपाधिके सिद्धसाधनं निरुपाधिके व्यवहारविषयत्वरूपो हेतुरसिद्धः। निरुपाधिकस्यापि ब्रह्मणः वेदान्तजन्यवृत्तिविषयत्वाभ्युपगमेऽपि अप्रयोजकः। यद्यपि भामतीमते निरुपाधिकब्रह्मणो वेदान्तजन्यवृत्तिविषयत्वं नास्ति तथापि विवरणाचार्यमते निरुपाधिकब्रह्मणोऽपि वेदान्तजन्यवृत्तिविषयत्वमस्तीति कृत्वा वेदान्तजन्यवृत्तिविषयत्वरूपव्यवहारविषयत्वरूपो हेतुः ब्रह्मणि नासिद्धः तथापि हेतोर्विपक्षवृत्तित्वबाधकतर्काभावात् हेतुरप्रयोजक एव। सत्येऽपि वस्तुनि

एवमसद्विलक्षणत्वमपि ब्रह्मण्यसिद्धमेव। क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं ह्यसत्त्वम्, तद्विलक्षणत्वं च क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपम् तच्च शुद्धे ब्रह्मणि नास्त्येव। न च—बाध्यत्वमसत्त्वम्, तद्विलक्षणत्वं चाबाध्यत्वम्, तच्च ब्रह्मण्यस्त्येवेति वाच्यम्, अबाध्यत्वेन बाध्यत्वलक्षणमिथ्यात्वसाधने विरोधात्, शुक्तिरूप्यदृष्टान्तस्य साधनविकलत्वाच्च। शून्यवादस्याग्रे निराकरिष्यमाणत्वाच्च। तस्मान्न दृश्यत्वादीनामाभाससाम्यमिति सिद्धम् ॥२॥

इति आभाससाम्यभङ्गः।

---

यदि व्यवहारविषयत्वं स्यात् तर्हि कस्यचिदप्यनिष्टस्यापादनासम्भवात् हेतोर्विपक्षवृत्तित्वशङ्काया अनिरासात् हेतुरेव साध्यागमकः।

एवमसद्विलक्षणत्वमपि ब्रह्मण्यसिद्धमेव। ब्रह्म मिथ्या असद्विलक्षणत्वात् शुक्तिरूप्यवदित्याभासानुमानम्। तत्रासद्विलक्षणत्वस्य हेतोरसिद्धिरेव। कुत इति चेत् ? क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं ह्यसत्त्वम्। तद्विलक्षणत्वञ्च क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यर्हत्वरूपम्, तच्च शुद्धे ब्रह्मणि नास्त्येव। एतच्चासत्त्वतद्विलक्षणत्वयोरुपादानं प्रथममिथ्यात्वलक्षण एव कृतम्, तत्रैवावगन्तव्यम्। शुद्धे ब्रह्मणि स्वप्रकारकधीविषयत्वाभावेन सत्त्वेन प्रतीत्यर्हत्वरूपं साधनमपि नास्ति। पूर्वपक्षी शङ्कते—असत्त्वतद्वैलक्षण्ययोर्यन्निर्वचनं कृतं तन्नास्मत्सम्मतम्। न च बाध्यत्वमसत्त्वम्। तद्विलक्षणत्वञ्चाबाध्यत्वम्। तच्च ब्रह्मणि अस्त्येवेति वाच्यम्। पूर्वपक्षिणेति यत् शङ्कितं तदतीवासङ्गतम्। ब्रह्म मिथ्या असद्विलक्षणत्वादित्यनुमानेऽसद्विलक्षणत्वमबाध्यत्वम्। बाध्यत्वञ्च मिथ्यात्वम्। तथा चाबाध्यत्वेन बाध्यत्वसाधने विरोधात्। शुक्तिरजतदृष्टान्तस्य च बाध्यत्वेन तत्रासद्विलक्षणत्वरूपसाधनस्य वैकल्यात्। इत्याहाचार्यः—अबाध्यत्वेन बाध्यत्वलक्षणमिथ्यात्वसाधने विरोधात्। शुक्तिरूप्यदृष्टान्तस्य साधनविकलत्वाच्च। शून्यवादस्याग्रे निराकरिष्यमाणत्वाच्च। तस्मान्न दृश्यत्वादीनामाभाससाम्यमिति सिद्धम्। निगदव्याख्यातोऽयं सन्दर्भः ॥२॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यामाभाससाम्यभङ्गः।

## अथ प्रत्यक्षबाधोद्धारे सत्त्वनिर्वचनम्

ननु सन् घट इत्याद्यध्यक्षबाधितविषया दृश्यत्वादय—इति चेन्न, चक्षुराद्यध्यक्षयोग्यमिथ्यात्वविरोधिसत्त्वानिरुक्तेः। तथा हि—न तावत्प्रमाविषयत्वं, तद्योग्यत्वं, भ्रमाविषयत्वं वा तादृक् सत्त्वम्; चक्षुराद्यगम्यभ्रमप्रमाघटितत्वेन चक्षुराद्ययोग्यत्वात्, वक्ष्यमाणदूषणगणग्रा-

---

१—प्रत्यक्षगृहीतसत्त्वविरोधिमिथ्यात्वसाधकमनुमानं प्रत्यक्षबाधितगन्धानुष्णत्वानुमानवदिति मत्वा पूर्वपक्षी शङ्कते—ननु सन् घट इत्याद्यध्यक्षबाधितविषया दृश्यादयः इति चेत् ? प्रबलप्रमाणविरोधाख्यं दोषं विवक्षुः प्रमाणज्येष्ठप्रत्यक्षविरोधं तावदाह—सन् घट इति। घटादीनां मिथ्यात्वसाधकदृश्यत्वादयो हेतवः सन् घट इति प्रत्यक्षबाधितविषया इत्याह पूर्वपक्षी सन् घट इति। ननु न मिथ्यात्वानुमानस्य प्रत्यक्षबाधः प्रत्यक्षगृहीतव्यावहारिकसत्त्वस्यानुमानग्राह्यपारमार्थिकसत्त्वनिषेधरूपमिथ्यात्वाविरोधित्वात्। प्रत्यक्षेण घटादीनां व्यावहारिकं सत्त्वं गृह्यते। अनुमानेन तु घटादीनां पारमार्थिकसत्त्वाभावरूपमिथ्यात्वं साध्यते। अतो न प्रत्यक्षानुमानयोर्विरोधः अनुमानगृहीतमिथ्यात्वविरोधिसत्त्वस्य च प्रत्यक्षेणाग्रहणादित्याह सिद्धान्ती—चक्षुराद्यध्यक्षयोग्यमिथ्यात्वविरोधिसत्त्वानिरुक्तेः। प्रपञ्चमिथ्यात्वविरोधिचक्षुर्ग्रहणयोग्यसत्त्वस्य निर्वक्तुमशक्यत्वात्। तथा हि न तावत् प्रमाविषयत्वम्, तद्योग्यत्वं भ्रमाविषयत्वं वा तादृक्सत्त्वम्। मिथ्यात्वविरोधिचक्षुर्ग्रहणयोग्यसत्त्वनिर्वचने सम्भाविता यावन्तः प्रकाराः स्फुरन्ति तानेकैकशो निर्दिश्य निराकुर्वन्नाह आचार्यः—न तावत् प्रमाविषयत्वं सत्त्वम्, प्रमाविषयत्वयोग्यत्वं वा सत्त्वम्, भ्रमाविषयत्वं वा सत्त्वं चक्षुरिन्द्रिययोग्यम्। एतेषां सत्त्वानां चक्षुर्गम्यत्वासम्भवात्। तादृशसत्त्वानां भ्रमप्रमादिघटितत्वेन भ्रमप्रमयोर्बहिरिन्द्रियप्रत्यक्षत्वाऽयोगात्—तादृशसत्त्वं बहिरिन्द्रियेण चक्षुषा न ग्रहीतुं शक्यते। निरुक्तं त्रिविधमपि सत्त्वं भ्रमप्रमाघटितत्वेन चक्षुराद्ययोग्यत्वात् न मिथ्यात्वविरोधिसत्त्वं प्रत्यक्षवेद्यमित्याह मूलकारः—चक्षुराद्यगम्यभ्रमप्रमाघटितत्वेन चक्षुराद्ययोग्यत्वात्। चक्षुराद्यगम्यभ्रमप्रमाघटितत्वेन प्रदर्शितानां

साच्च । तथा हि नाद्यः; असति प्रमाणाप्रवृत्तेः प्रमाविषयत्वात् प्राक् सत्त्वस्य वक्तव्यत्वेन तस्य तदन्यत्वात्, सत्त्वनिरूपणं विना सदर्थविषयत्वरूपप्रमात्वस्य निरूपणे चान्योन्याश्रयात्, मिथ्याभूतस्य शुक्तिरजतसंसर्गस्य व्यवसायद्वारा साक्षाच्च निषेध्यत्वादिना प्रमाविषयत्वाभ्युप-

---

त्रयाणां पक्षाणां निरस्तत्वेऽपि तेषु पक्षेषु दूषणान्तरप्रद [र्श] नायाह आचार्यः—वक्ष्यमाणदूषणगणग्रासाच्च । दूषणान्येव दर्शयन्नाह—तथा हि नाद्यः, असति प्रमाणाप्रवृत्तेः प्रमाविषयत्वात्प्राक् सत्त्वस्य वक्तव्यत्वेन तस्य तदन्यत्वात् । प्रमाविषयत्वमेव सत्त्वमिति न वक्तुं शक्यते । अयमेवाद्यः पक्षः । सत्त्व एव प्रमाणं प्रवर्तते, नासति इति तावत् सिद्धम् । उक्तञ्च वार्त्तिककारपादैः—

"नाभिव्यनक्ति सविता शशशृङ्गं स्फुरन्नपि" इति ।

तत् कुत इति पृष्टे प्रमाणप्रवृत्तिप्रयोजकीभूतं सत्त्वं सति प्रवर्ततेऽसति च नास्तीति वक्तव्यम् । एवञ्च प्रमाणप्रवृत्तिप्रयोजकतया प्रमितिविषयत्वात् प्राक् सत्त्वस्य वक्तव्यत्वेन प्रमितिविषयत्वस्य सत्त्वादन्यत्वेन प्रमितिविषयत्वमेव सत्त्वं न भवितुमर्हति भिन्नत्वात् । सदर्थविषयत्वरूपमेव प्रमात्वम् । तादृशप्रमाविषयत्वञ्च सत्त्वम् । एवञ्च सत्यन्योन्याश्रयात् न सत्त्वनिर्वचनं सम्भवति इत्याहाचार्यः—सत्त्वनिरूपणं विना सदर्थविषयत्वरूपप्रमात्वस्य निरूपणेऽन्योऽन्याश्रयात् । प्रमात्वनिरूपणात् प्रागेव प्रमानिरपेक्षतयैव सत्त्वं निर्वक्तव्यम् । अन्यथा अन्योऽन्याश्रयः । पूर्वपक्षिणा तु प्रमानैरपेक्ष्येण पृथक्सत्त्वं निरूपयितुं न पारितमिति भावः । अन्यथाख्यातिवादिमते शुक्तिरजतभ्रमे असन् शुक्तिरजतसंसर्गः भासते इत्यङ्गीक्रियते । स एव संसर्गः शुक्तिरजतानुव्यवसाये व्यवसायद्वारा भासते । भ्रमानुव्यवसायस्तु प्रमैव, अथ च प्रमारूपेऽनुव्यवसाये व्यवसायद्वारा विषयीभूतः शुक्तिरजतसंसर्गः असन् तथा चासति संसर्गे प्रमाविषयत्वस्य सत्त्वात् प्रमाविषयत्वं सत्त्वं न भवितुमर्हति । असत्संसर्गो व्यवसायद्वाराऽनुव्यवसाये यथा भासते तथा असत्संसर्गः साक्षादपि निषेध्यत्वेन प्रमायां भासते, यथा "अत्र शुक्तिरजतसंसर्गो नास्ति" इति । एवञ्चासति साक्षान्निषेध्यत्वेन प्रमाविषयत्वं परम्परया अनुव्यवसायरूपप्रमाविषयत्वं च वर्तत इति साक्षात् प्रमाविषयत्वं परम्परया प्रमाविषयत्वं वा सत्त्वं न भवितुमर्हतीत्याहा-

गमाच्च। नापि द्वितीयः; योग्यताया अनिरूपणात्; न तृतीयः; असिद्धेः, सर्वस्यैव क्षणिकत्वादिना भ्रमविषयत्वाभ्युपगमात्।

अत एव नासत्त्वाप्रकारकप्रमाविषयत्वमपि; अन्योन्याश्रयाच्च। नापि सत्त्वप्रकारकप्रमाविषयत्वम्; आत्माश्रयात्। नाप्यसत्त्वप्रकारकभ्रमाविषयत्वं सत्त्वम्, अन्योन्याश्रयात्। नापि प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेधविरहः; आत्माश्रयात्। नापि सत्ता जातिरर्थक्रिया-

---

चार्यः—मिथ्याभूतस्य शुक्तिरजतसंसर्गस्य व्यवसायद्वारा साक्षात् च निषेध्यत्वादिना प्रमाविषयत्वाभ्युपगमाच्च। प्रमाविषयत्वयोग्यत्वं सत्त्वमिति द्वितीयपक्षोऽप्यसङ्गत एव। योग्यतावच्छेदकरूपापरिचये योग्यताया निरूपयितुमशक्यत्वात् इत्याहाचार्यः—नापि द्वितीयः, योग्यताया अनिरूपणात्। एवमेव भ्रमाविषयत्वं सत्त्वमिति तृतीयपक्षोऽप्यसमीचीन एव। सर्वत्रैव भ्रमविषयत्वसत्त्वात् भ्रमाविषयत्वं सर्वत्रैवासिद्धम्। सर्वस्यैव वस्तुनः अन्ततः क्षणिकत्वादिना भ्रमविषयत्वसम्भवात्। बौद्धैर्हि सर्वं क्षणिकमित्यभ्युपेयते। स्थैर्यवादिभिः सर्वेषां क्षणिकत्वज्ञानं भ्रम एवाभ्युपगम्यते। तथा च भ्रमाविषयत्वं कुत्रापि नास्तीति कृत्वा भ्रमाविषयत्वमसिद्धमेवेत्याहाचार्यः—न तृतीयः, असिद्धेः। सर्वस्यैव क्षणिकत्वेन भ्रमविषयत्वाभ्युपगमात्। एवमेव असत्त्वाप्रकारकप्रमाविषयत्वमपि सत्त्वं न भवितुमर्हति। असत्त्वग्रहे सत्त्वग्रहस्यापेक्षितत्वात् सत्त्वाभावो ह्यसत्त्वम्। तथा च सत्त्वग्रहसापेक्षोऽसत्त्वग्रहः, असत्त्वग्रहसापेक्षश्च असत्त्वाप्रकारकप्रमाविषयत्वरूपसत्त्वग्रहः। तथा चान्योन्याश्रय इत्याहाचार्यः—अत एव नासत्त्वाप्रकारकप्रमाविषयत्वमपि, अन्योन्याश्रयाच्च। एवमेव सत्त्वप्रकारकप्रमाविषयत्वमपि न सत्त्वम्। सत्त्वप्रकारकप्रमाविषयत्वस्य सत्त्वरूपत्वे आत्माश्रयः स्पष्ट एवेत्याहाचार्यः—नापि सत्त्वप्रकारकप्रमाविषयत्वमात्माश्रयात् [त्वात्]। एवमेव असत्त्वप्रकारकभ्रमाविषयत्वं सत्त्वं न भवितुमर्हति असत्त्वग्रहस्य सत्त्वग्रहसापेक्षत्वेन पूर्ववदेवान्योन्याश्रयात्। भ्रमादिघटितत्वेन तादृशसत्त्वस्य चक्षुराद्ययोग्यत्वाच्चेत्याहाचार्यः—नापि असत्त्वप्रकारकभ्रमाविषयत्वमन्योन्याश्रयात्। एवमेव प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेधविरहः सत्त्वम्। सत्त्वनिषेधविरहस्य सत्त्वरूपत्वे आत्माश्रयः स्पष्ट एवेत्याहाचार्यः—

कारित्वमसद्वैलक्षण्यं वा; एतेषां मिथ्यात्वाविरोधित्वेन तत्प्रत्यक्षेण मिथ्यात्वानुमाने बाधाभावात्।

नापि वेदान्त्यभिमतमिथ्यात्वाभावः सत्त्वम्; तुच्छेऽतिव्याप्तेः। नाप्यसद्विलक्षणत्वे सत्यनारोपितत्वम्; अनारोपितत्वं हि आरोपाविषयत्वम्, तच्चासंभवि। सर्वस्यापि क्षणिकत्वादिना आरोपविषयत्वात्। नाप्यस्तित्वप्रकारकभ्रमां प्रति कदाचित् साक्षाद्विषयत्वम्, कालसंबन्धित्वं वा सत्त्वम्, अस्तित्वं च वर्तमानत्वम्, न तु सत्त्वमतो

---

नापि प्रतिपन्नोपाधौ त्रैकालिकसत्त्वनिषेधविरहः आत्माश्रयात्। एवमेव सत्ताजातिरेव मिथ्यात्वविरोधिनी। सा च प्रत्यक्षयोग्यैव। अर्थक्रियाकारित्वं वा सत्त्वं, तदपि वस्तुनो मिथ्यात्वविरोधि प्रत्यक्षयोग्यञ्च। असद्वैलक्षण्यं वा सत्त्वं, तदपि मिथ्यात्वविरोधि, प्रत्यक्षयोग्यञ्च। एवं पक्षत्रयं पूर्वपक्षिशङ्कितं न समीचीनमेतेषां मिथ्यात्वाविरोधित्वात्। तादृशसत्त्वप्रत्यक्षेण प्रपञ्चमिथ्यात्वानुमाने बाधाभावात्। न हि प्रपञ्चमिथ्यात्ववादिना प्रपञ्चे सत्ताजातिर्नाङ्गीक्रियते। नापि तस्या जातेः प्रत्यक्षत्वं नाङ्गीकरोति। एवमेवार्थक्रियाकारित्वस्य प्रपञ्चमिथ्यात्ववादिनापि प्रपञ्चेऽङ्गीकारात्। असद्वैलक्षण्यस्य च सदसद्विलक्षणे प्रपञ्चेऽङ्गीकारात् प्रत्यक्षसिद्धित्वाच्च न तद्विषयकप्रत्यक्षेण प्रपञ्चमिथ्यात्वानुमानबाधः सम्भवति इत्याहाचार्यः—नापि सत्ताजातिरर्थक्रियाकारित्वमसद्वैलक्षण्यं वा। एतेषां मिथ्यात्वाविरोधित्वेन तत्प्रत्यक्षत्वेन मिथ्यात्वानुमाने बाधाभावात्। एवमेव वेदान्त्यभिमतमिथ्यात्वाभावः सत्त्वम्। वेदान्त्यभिमतमिथ्यात्वाभावस्य सत्त्वे तुच्छेऽपि शशविषाणादौ मिथ्यात्वाभाववति सत्त्वप्रसङ्गः स्यात् इत्याहाचार्यः—नापि वेदान्त्यभिमतमिथ्यात्वाभावसत्त्वं तुच्छेऽतिव्याप्तेः। एवमेव चासद्विलक्षणत्वे सति अनारोपितत्वं सत्त्वमिति पूर्वपक्षिमतमप्यसङ्गतम्। यतः अनारोपितत्वं हि आरोपाविषयत्वं, तच्चासम्भवि, सर्वस्यापि क्षणिकत्वादिनारोपविषयत्वात्। एतच्च प्रागेवोक्तम्। इत्याहाचार्यः—नापि असद्विलक्षणत्वे सति अनारोपितत्वम्। अनारोपितत्वं ह्यारोपाविषयत्वम्। तच्चासम्भवि। सर्वस्यापि क्षणिकत्वादिनारोपविषयत्वात्। एवमेवास्तित्वप्रकारकभ्रमां प्रति कदाचित् साक्षाद्विषयत्वं सत्त्वम्। कालसम्बन्धित्वं वा सत्त्वम्।

नात्माश्रयः; अतीतादिरपि कदाचिद्वर्तत एवेति नाव्याप्तिः, आरोपितत्वं च कालत्रयासम्बन्धित्वेन बाधेन बोधितमिति न द्वितीयलक्षणेऽतिव्याप्तिरिति वाच्यम्, प्रमात्वस्य सत्त्वघटितत्वेन चक्षुराद्ययोग्यत्वेन च पूर्वोक्तदोषात्, वर्तमानत्वप्रकारकप्रमाविषयत्वेऽपि मिथ्यात्वाविरोधाच्च। द्वितीयमपि न मिथ्यात्वविरोधि; शुक्तिरूप्यस्यापि प्रतिभासकालसम्बन्धित्वात्; बाधेन तात्त्विककालत्रयसम्बन्धनिषेधेऽप्यतात्त्विककालसम्बन्धस्यानिषेधात्। नापि तात्त्विककालसम्बन्धित्वं तत्; तात्त्विकस्याद्याप्यनिरूपणात्, निरूपणे वा शेषवैयर्थ्यात्।

ननु—भवन्मते यत् सत्त्वं ब्रह्मणि तदेवेह मम। उक्तं हि—

यादृशं ब्रह्मणः सत्त्वं तादृशं स्याज्जगत्यपि।
तत्र स्यात्तदनिर्वाच्यं चेदिहापि तथास्तु नः॥ इति॥

---

अस्तित्वञ्च वर्तमानत्वम्। न तु सत्त्वम्। अतो नात्माश्रयः। अतीतादिरपि कदाचिद्वर्तते एवेति नाव्याप्तिः। आरोपितत्वञ्च कालत्रयासम्बन्धित्वेन बाधेन बोधितम्। इति न द्वितीयलक्षणेऽतिव्याप्तिः इति पूर्वपक्षिणा यदुक्तं तन्न सङ्गतम्। अस्तित्वप्रकारकप्रमां प्रतीति यदुक्तं पूर्वपक्षिणा तत्र प्रमात्वस्य सत्त्वघटितत्वेन प्रमायाः चक्षुराद्ययोग्यत्वेन च न मिथ्यात्वविरोधिसत्त्वं प्रत्यक्षयोग्यम्। वर्तमानत्वप्रकारकप्रमाविषयत्वेऽपि मिथ्यात्वाविरोधाच्च। मिथ्यावस्तुनोऽपि वर्तमानत्वप्रकारकप्रमाविषयत्वं प्रपञ्चमिथ्यात्ववादिभिरङ्गीक्रियत एव। यदपि कालसम्बन्धित्वं सत्त्वमुक्तं तदपि न मिथ्यात्वविरोधि शुक्तिरूप्यस्यापि प्रतिभासकालसम्बन्धित्वात्। नासीदस्ति भविष्यतीति बाधेन तात्त्विककालत्रयसम्बन्धनिषेधेऽपि अतात्त्विककालसम्बन्धस्यानिषेधात्। एवमेव पूर्वपक्षिणा तात्त्विककालसम्बन्धित्वं सत्त्वमिति यदुक्तं तदपि न। तात्त्विकस्याद्याप्यनिरूपणात्। चक्षुरादियोग्यं तात्त्विकं रूपं पूर्वपक्षिणाऽद्यापि निरूपयितुमशक्यमेव। तात्त्विकत्वनिरूपणे वा तात्त्विकत्वमेव सत्त्वमस्तु कालसम्बन्धित्वांशस्य वैयर्थ्यात्। एवंरूपेण पूर्वपक्षिसम्मतानां चक्षुरादियोग्यसत्त्वानां खण्डने कृते निरुच्छ्वासतया पूर्वपक्षी शंकते—ननु भवन्मते यत् सत्त्वं ब्रह्मणि तदेवेह प्रपञ्चे मम। उक्तं हि—

न च—तत्रापरिच्छिन्नत्वं सत्त्वम्; तच्च न जगतीति वाच्यम्, तुच्छस्यापरिच्छिन्नत्वेऽपि सत्त्वानभ्युपगमान्नापरिच्छिन्नत्वं सत्त्वम्, किं त्वन्यदेव; तच्च ब्रह्मणीव भ्रमाधिष्ठानत्वाच्छुक्तिकादेरपि भविष्यतीति—चेत्, नूनं विवाहसमये कन्यायाः पित्रा निजगोत्रं पृष्टस्य यदेव भवतां गोत्रं तदेव ममापि गोत्रमिति वदतो वरस्य भ्राता भवान्, यतो जामातृश्वशुरयोरेकगोत्रत्वे विवाहानुपपत्तिवज्जगद्ब्रह्मणोरेकसत्त्वे जगतोऽसत्त्वमेव स्यात्।

---

यादृशं ब्रह्मणः सत्त्वं तादृशं स्याज्जगत्यपि।
तत्र स्यात्तदनिर्वाच्यं चेदिहापि तथास्तु नः ॥इति॥

पूर्वपक्षिणोऽयमाशयः—यद्यपि मिथ्यात्वविरोधि चक्षुरादियोग्यसत्त्वं मया न निर्वक्तुं शक्यते तथापि भवद्भिः ब्रह्मणि किञ्चित् सत्त्वमङ्गीकृतमेव। अस्मन्मते ब्रह्मप्रपञ्चयोरेकसत्ताकत्वात्। ब्रह्मणि भवत्सम्मतं यादृशं सत्त्वं तदेव सत्त्वं प्रपञ्चेऽस्माभिरङ्गीक्रियते। तच्च सत्त्वं मिथ्यात्वविरोधीति अवश्यमेव भवद्भिरङ्गीकरणीयम्। तथा च—प्रपञ्चस्य ब्रह्मवत् सत्यत्वे सिद्धे प्रपञ्चस्य मिथ्यात्वानुमानं बाधितविषयकमेव स्यात्। यदि वैजात्यात ब्रह्मणि यत् सत्त्वं तदपि अनिर्वाच्यमेवोच्येत भवद्भिस्तर्हि अस्माभिरपि प्रपञ्चेऽपि तत् सत्त्वमनिर्वाच्यमेवाङ्गीकरिष्यते। नैतावता ब्रह्मप्रपञ्चयोर्वैलक्षण्यं सेत्स्यति। ब्रह्मप्रपञ्चयोरेकसत्त्वमेवास्माभिः प्रतिपादनीयम्।, न च तत्र ब्रह्मण्यपरिच्छिन्नत्वमेव सत्त्वम्। तच्च सत्त्वं परिच्छिन्ने जगति न सम्भवतीति वाच्यम्। तुच्छस्य शशविषाणादेरपरिच्छिन्नत्वेऽपि सत्त्वानभ्युपगमात् नापरिच्छिन्नत्वं सत्त्वं वेदान्तिभिरङ्गीकर्तुं शक्यम्। किन्तु अपरिच्छिन्नत्वादन्यदेव सत्त्वं ब्रह्मण्यङ्गीकरणीयम्। अपरिच्छिन्नत्वादन्यद् यत्सत्त्वं ब्रह्मण्यङ्गीकरणीयं तदेव सत्त्वं भ्रमाधिष्ठानशुक्तिकादेरपि भविष्यति एतावतैव प्रपञ्चमिथ्यात्वानुमानबाधे सम्भवति स्वतन्त्रतया सत्त्वानिरूपणेऽपि नास्माकं काचित् क्षतिः। उपहासव्याजेन परिहारमाहाचार्यः—नूनं विवाहसमये कन्यायाः पित्रा निजगोत्रं पृष्टस्य "यदेव भवतां गोत्रं तदेव ममापि गोत्रमिति वदतो वरस्य भ्राता भवान्। अर्थस्तु स्पष्टः, यतो जामातृश्वशुरयोरेकगोत्रत्वे विवाहानुपपत्तिवत् जगद्ब्रह्मणोरेकसत्त्वे जगतोऽसत्त्वमेव स्यात्। तथा

तथा हि—स्वप्रकाशाद्वितीयचैतन्यरूपत्वमेव ब्रह्मणः सत्त्वम्; तदेव चेत् जडस्यापि जगतः तदा रजतत्वविरोधिशुक्तिसत्तया रजतस्येव जडत्वविरोधिस्वप्रकाशसत्तया जगतः स्वरूपतो मिथ्यात्वोपपत्तेः।

---

चैकत्वमभ्युपगच्छता जगतोऽसत्त्वमेवापादितम्। तथा हि—स्वप्रकाशाद्वितीयचैतन्यरूपत्वमेव ब्रह्मणः सत्त्वम्। तदेव सत्त्वं चेज्जडस्यापि जगतस्तदा रजतत्वविरोधिशुक्तिसत्तया रजतस्येव जडत्वविरोधिस्वप्रकाशसत्तया जगतः स्वरूपतो मिथ्यात्वोपपत्तेः। अयं भावः—जडे जगति चेत् जडत्वविरोधि स्वप्रकाशाद्वितीयचैतन्यरूपत्वमेव सत्त्वं भवेत् ततो जडस्य जगतो जाड्यं बाधितमेव भवेत्। यथा रजतत्वविरोधिशुक्तिसत्तया रजतं बाधितं भवति। एवञ्च जडस्य जगतः स्वप्रकाशब्रह्मरूपतया पर्यवसानात् प्रतिभातं जडरूपं मिथ्यैव। चन्द्रिकाकृतस्तु वस्तुगत्या स्वप्रकाशा अद्वितीया अबाध्यत्वोपलक्षिता या चित् तत्स्वरूपं ब्रह्मैव यद्यपि तथापि ब्रह्मस्वरूपमेव ब्रह्मणो धर्मत्वेन कल्पितं ब्रह्मणः सत्त्वं, तदेव यदि जगतः सत्त्वं यदा जडेभ्योऽत्यन्तभिन्नत्वात् जडधर्मत्वं वक्तुमशक्यम्; अत्यन्तभेदे धर्मधर्मिभावस्य त्वयाऽपि अस्वीकारात्। तथा च जडात्यन्तभिन्नत्वेन जडत्वविरोध्यपि तादृशं सत्त्वं कल्पितात् जडतादात्म्यात् जडधर्म इति वाच्यम् तनश्च ब्रह्मणः अत्यन्ताभिन्नमपि तत्कल्पितेन ब्रह्मभेदेन यथा ब्रह्मधर्मः तथा जडादत्यन्तभिन्नमपि कल्पितेन जडतादात्म्येन जडानां धर्म इति युज्यते। परन्तु यत् ब्रह्मण्यारोपितं तत्रैव ब्रह्मधर्मस्य तादृशसत्त्वादेः संसर्गारोपः शुक्तिधर्मस्य सत्त्वेदन्तादेः शुक्त्यारोपितरजतादावेव संसर्गारोपवत्। तथा च रजतत्वविरोधिनः शुक्तिसत्त्वादेः संसर्गारोपान्यथानुपपत्त्या रजतस्य शुक्तौ आरोपितत्वसिद्धयेव जडत्वविरोधिब्रह्मसत्त्वादेर्जडे आरोपान्यथानुपपत्त्या जडानां ब्रह्मण्यारोपितत्वसिद्ध्या जडानां मिथ्यात्वसिद्धिरिति भाव इत्याहुः। यत्र यदारोपितं तत्रैव तद्धर्मारोप इति शुक्तिरजतादौ दृष्टः, ब्रह्मधर्मस्यापि जडे आरोपस्वीकारे जडानामपि ब्रह्मण्यारोपितत्वसिद्ध्या जडानां मिथ्यात्वमेव। अत एवाचार्येणोक्तं जगतः स्वरूपतो मिथ्यात्वोपपत्तेः। यापि शुक्त्यादेः रजतारोपाधिष्ठानत्वोक्तिः सापि आपाततः। वस्तुतः चैतन्यस्यैव सर्वत्रारोपेऽधिष्ठानत्वं शुक्त्यादीनां तु अधिष्ठानतावच्छेदकत्व-

चैतन्यस्यैवावच्छिन्नानवच्छिन्नाऽज्ञानविषयत्वेन सर्वभ्रमाधिष्ठानत्वाभ्युपगमान्न भ्रमाधिष्ठानत्वेन शुक्त्यादेः सत्त्वसिद्धिः ॥१॥

नन्वेवमपि सर्वदेशीयत्रैकालिकनिषेधप्रतियोगित्वसत्त्वं तुच्छानिर्वचनीयसाधारणम्, तदभावः सत्त्वम्, तच्च ब्रह्मणीव जगत्यपीति ब्रूमः। न च संयोगेऽव्याप्तिः, तस्याव्याप्यवृत्तित्वानभ्युपगमात्। तदभ्युपगमे

---

मात्रं सावच्छिन्नचैतन्ये रजतादीनामध्यासात् इत्याह आचार्यः—"चैतन्यस्यैव अवच्छिन्नानवच्छिन्नाज्ञानविषयत्वेन सर्वभ्रमाधिष्ठानत्वाभ्युपगमात न भ्रमाधिष्ठानत्वेन शुक्त्यादेः सत्त्वसिद्धिः।" शुक्त्यवच्छिन्नचैतन्यविषयकमेव अज्ञानं प्रातिभासिकरजतादीनामुपादानम्। अवच्छिन्नचैतन्यमेवाधिष्ठानम्। अधिष्ठानीभूतचैतन्ये या अज्ञानविषयता सा शुक्त्यावच्छिद्यते। व्यावहारिकाध्यासे निरवच्छिन्नचैतन्यमेवाधिष्ठानमिति विवेकः। शुक्त्यादीनामनधिष्ठानत्वान्न तेषामधिष्ठानत्वेन सत्त्वसिद्धिः इति भावः ॥१॥

२—पूर्वपक्षी शङ्कते—नन्वेवमपीति। आचार्येण यादृशं मिथ्यात्वं निरुक्तं मिथ्यात्वस्य तादृशत्वे सर्वदेशीयत्रैकालिकनिषेधप्रतियोगित्वमसत्त्वम्। एतदेवासत्त्वं पूर्वपक्षिसम्मतम्। मिथ्यात्वनिरुक्तौ पूर्वपक्षिणोक्तम्—प्रातिभासिकस्यापि सोपादाने नासीदस्ति भविष्यतीति त्रैकालिकनिषेधेन निषेध्यत्वमस्ति। अतः सिद्धान्तिमतेऽपि मिथ्याशुक्तिरजतादेः सर्वदेशीयत्रैकालिकनिषेधप्रतियोगित्वं वर्तते। एतच्चासत्त्वं तुच्छानिर्वचनीयसाधारणम्। तुच्छे शशविषाणादौ यथा एतादृशमसत्त्वमस्ति तथा प्रातिभासिकेऽपि शुक्तिरजतादौ एतादृशमसत्त्वमस्ति। एतादृशस्यासत्त्वस्याभाव एव सत्त्वं सिद्धान्तिनापि वक्तव्यम्। असत्त्वाभावरूपं सत्त्वं यथा ब्रह्मण्यस्ति तथा जगत्यप्यस्ति। अतः असत्त्वाभावरूपसत्त्वस्य जगद्ब्रह्मसाधारण्यमेवाभ्युपगन्तव्यम्। तथा च जगद् व्यावहारिकं सत्, ब्रह्म तु पारमार्थिकं सत् इति वाचो युक्तिः किमालम्ब्येत? इति पूर्वपक्षिणामाशयः। सर्वदेशीयत्रैकालिकनिषेधप्रतियोगित्वं यदि असत्त्वं तर्हि तादृशासत्त्वलक्षणस्य संयोगेऽतिव्याप्तिः। संयोगोऽपि सन्नेव अथ च संयोगे सर्वदेशीयत्रैकालिकनिषेधप्रतियोगित्वं वर्तते संयोगस्याव्याप्यवृत्तित्वात, स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् इत्याशङ्क्याह पूर्वपक्षी—संयोगस्याव्याप्यवृत्तित्वानभ्युपगमात्। किमपि नाव्या-

च व्याप्यवृत्तित्वेनाभावो विशेषणीयः। नापि वियत्यव्याप्तिः; तदत्यन्ताभावस्य केवलान्वयित्वानङ्गीकारेण लक्षणस्य विद्यमानत्वादेव। न हि कस्मिश्चिद्देशे काले वा तस्याभावः, नित्यविभुत्वभङ्गप्रसङ्गात्। आकाशात्यन्ताभावस्य केवलान्वयित्वाभ्युपगमे च वृत्तिमत्प्रतियोगिकत्वेनाभावो विशेषणीय—इति चेत् ?

---

प्यवृत्ति इति सिद्धान्तादरात्। वैशेषिकादिभिः संयोगस्याव्याप्यवृत्तित्वमङ्गीक्रियते, तदनभ्युपगमे वैशेषिकसिद्धान्तविरोधः स्यात्। संयोगस्याव्याप्यवृत्तित्वं प्रतीतिसिद्धमपि, तत्परित्यागे प्रतीतिविरोधोऽपि इत्याशङ्क्याह पूर्वपक्षी—तदभ्युपगमे च व्याप्यवृत्तित्वेनाभावो विशेषणीयः। संयोगादीनामव्याप्यवृत्तित्वाभ्युपगमे असत्त्वघटकात्यन्ताभावस्य व्याप्यवृत्तित्वं विशेषणं देयम्। तथा च सर्वदेशीयत्रैकालिकव्याप्यवृत्ति निषेधप्रतियोगित्वमेवासत्त्वम्। असत्त्वस्य एवं रूपत्वाभ्युपगमेऽपि वियति अतिव्याप्तिः स्यात्। वियदत्यन्ताभावस्य केवलान्वयित्वेन तस्य सर्वदेशीयत्रैकालिकव्याप्यवृत्तिनिषेधत्वात् तत्प्रतियोगित्वं वियदादेः इति वियति असत्त्वलक्षणस्यातिव्याप्तिः स्यादित्याशङ्क्याह पूर्वपक्षी— तदत्यन्ताभावस्य केवलान्वयित्वानङ्गीकारेणासत्त्वलक्षणस्य वियदादावभावात्। उक्तञ्च न्यायामृते—गगनादेरपि अत्यन्ताभावः केवलान्वयी न इत्युक्तत्वात् न गगनादावतिव्याप्तिः।

गगनाद्यत्यन्ताभावस्य केवलान्वयित्वं निरस्यति—न हि कस्मिंश्चिद्देशे काले वा तस्याभावः नित्यत्वविभुत्वभङ्गप्रसङ्गादिति। तस्य—गगनादेः न हि कस्मिंश्चित् काले कस्मिंश्चिद्देशे वा अत्यन्ताभावो वर्तते। वर्तेत चेद् गगनादेर्नित्यत्वविभुत्वभङ्गप्रसङ्गः स्यात्। कस्मिंश्चित् काले गगनादेरत्यन्ताभावे गगनादेः सदातनत्वलक्षणस्य नित्यत्वस्य भङ्गः स्यात्। कस्मिंश्चिद्देशे गगनाद्यत्यन्ताभावे गगनादेर्विभुत्वभङ्गप्रसङ्गः स्यात्। विभुवस्तूनामाधेयत्वासम्भवेन तेषामत्यन्ताभावः तदत्यन्ताभावः केवलान्वय्येव भवितुमर्हतीत्यत आह पूर्वपक्षी—आकाशाद्यत्यन्ताभावस्य केवलान्वयित्वाभ्युपगमे च वृत्तिमत्प्रतियोगिकत्वेनाभावो विशेषणीयः। असत्त्वघटकात्यन्ताभावो वृत्तिमत्प्रतियोगिक एव वाच्यः। तथा च गगनादेर्विभुवस्तुनः वृत्तिमत्त्वाभावाद् गगनात्यन्ताभावादेर्वृत्ति-

न चक्षुराद्ययोग्यानेकपदार्थघटितत्वेनैतादृशसत्त्वस्य ग्रहणे चक्षुरादेरसामर्थ्यात्। न हि सर्वदेशीयत्रैकालिकवृत्तिमत्प्रतियोगिकव्याप्यवृत्तिनिषेधप्रतियोगित्वं कस्यापि प्रत्यक्षम्, येन तदभावः प्रत्यक्षो भवेत्। वृत्तिमत्प्रतियोगिकत्वव्याप्यवृत्तित्वपरित्यागेऽपि सर्वदेशीयत्वत्रैकालिकत्वयोरयोग्यत्वात् ॥२॥

ननु—स्वदेशकालवृत्तिनिषेधप्रतियोगित्वाभावे गृह्यमाणे कालत्रयमध्ये वर्तमानकालस्य सर्वदेशमध्ये प्रकृतदेशस्यापि प्रवेशेन तत्र निषेधप्रतियोगित्वाभावस्य गृहीतत्वात्तत्सम्वलितं कालत्रयवृत्ति सर्व-

---

मत्प्रतियोगिकत्वं नास्ति। एवञ्च सर्वदेशीयत्रैकालिकव्याप्यवृत्तिमत्प्रतियोगिकात्यन्ताभावप्रतियोगित्वमेवासत्त्वम्। उक्तञ्च माध्वेन—

त्रिकालसर्वदेशीयनिषेधाप्रतियोगिता।
सत्तोच्यते अध्यस्ततुच्छे तं प्रतियोगिनी ॥

इति पूर्वपक्षसंक्षेपः ॥

पूर्वपक्षं निरस्यन्नाहाचार्यः—इति चेन्न, चक्षुराद्ययोग्यानेकपदार्थघटितत्वेन एतादृशसत्त्वस्य ग्रहणे चक्षुरादेरसामर्थ्यात्। पूर्वपक्षिणा हि सर्वदेशीयत्रैकालिकवृत्तिमत्प्रतियोगिकव्याप्यवृत्तिनिषेधप्रतियोगित्वमसत्त्वमुक्तम्। तस्याभावः सत्त्वमुक्तम्। प्रतियोगिनोऽसत्त्वस्य सर्वदेशकालादिघटितत्वेन चक्षुराद्ययोग्यत्वात् तत्प्रतियोगिकाभावस्यापि सत्त्वस्य चक्षुराद्ययोग्यत्वमेव। प्रतियोगिनोऽसत्त्वस्य चक्षुराद्ययोग्यत्वात् तत्प्रतियोगिकात्यन्ताभावरूपसत्त्वस्यापि चक्षुराद्ययोग्यत्वमेव। तथा च मिथ्यात्वविरोधिसत्त्वस्य चक्षुरादियोग्यस्य निर्वचनासम्भवात् प्रत्यक्षं न मिथ्यात्वानुमानबाधकम्। वृत्तिमत्प्रतियोगिकत्वव्याप्यवृत्तिपरित्यागेऽपि सर्वदेशीयत्वत्रैकालिकत्वयोरयोग्यत्वात्। असत्त्वघटकात्यन्ताभावे वृत्तिमत्प्रतियोगिकत्वव्याप्यवृत्तित्वयोर्विशेषणयोरुपात्तयोः परित्यागेऽपि सर्वदेशीयत्वत्रैकालिकत्वयोरत्यन्ताभावविशेषणयोः चक्षुराद्ययोग्यत्वेन तदभावः कथं चक्षुरादियोग्यो भवेत् ॥२॥

३—पूर्वपक्षी शङ्कते—प्रत्यक्षमेव मिथ्यात्वानुमानबाधकमिति मयोक्तम्। तच्चैवं सम्भवति। यद्देशे यत्काले च घटादिकवस्त्वस्ति तत्र घटादौ स्वदेशकाल-

देशीयनिषेधप्रतियोगित्वरूपं मिथ्यात्वं नानुमानेन ग्रहीतुं शक्यते— इति चेन्न; स्वदेशकालवृत्तिसकलनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वेन तदभावस्य सुतरां तदयोग्यत्वात्, स्वदेशकालवृत्तियत्किञ्चिन्निषेधाप्रतियोगित्वस्य मिथ्यात्वाविरोधित्वात्, स्वप्रतियोगिकात्यन्ताभावासामानाधिकरण्यस्य च स्वप्रतियोगिकात्यन्ताभावाप्रसिद्धया केवलान्वयिनि, सम्बन्धभेदेन घटादौ चासिद्धेः; स्वात्यन्ताभावयावदधि-

---

वृत्तिनिषेधप्रतियोगित्वाभावः प्रत्यक्षेणैव गृह्यते। एवं स्वदेशकालवृत्तिनिषेधप्रतियोगित्वाभावे चक्षुरादिना गृह्यमाणे कालत्रयमध्ये वर्तमानकालस्य प्रवेशेन सर्वदेशमध्ये प्रकृतदेशस्यापि प्रवेशेन तत्र स्वदेशकालवृत्तिनिषेधप्रतियोगित्वाभावस्य चक्षुरादिना गृहीतत्वात् स्वदेशकालसम्वलितं कालत्रयवृत्तिसर्वदेशीयनिषेधप्रतियोगित्वरूपमिथ्यात्वं नानुमानेन ग्रहीतुं शक्यते इत्येव मयोच्यते। भवति च प्रत्यक्षं मिथ्यात्वानुमानबाधकम्। सिद्धान्ती समाधत्ते—इति चेन्न, पूर्वपक्षिणा हि स्वदेशकालवृत्तिनिषेधप्रतियोगित्वं घटादौ प्रत्यक्षेणैव गृहीतमित्युक्तम्। तन्न सम्भवति। स्वदेशकालवृत्तियत्किञ्चिन्निषेधाप्रतियोगित्वं वा प्रत्यक्षादिना ग्राह्यमथ वा स्वदेशकालवृत्तियावन्निषेधस्याप्रतियोगित्वं वा चक्षुरादिना ग्राह्यम्। स्वदेशकालवृत्तिसकलनिषेधप्रतियोगित्वस्य चक्षुराद्ययोग्यत्वेन तादृशप्रतियोगित्वाभावस्य सुतरां प्रत्यक्षाद्ययोग्यत्वात्। स्वदेशकालवृत्तियत्किञ्चिन्निषेधाप्रतियोगित्वस्य च मिथ्यात्वाविरोधित्वात्। घटादिदेशकालवृत्तियत्किञ्चिन्निषेधः घटादिनिषेधः तदप्रतियोगित्वस्य घटादौ सत्त्वेऽपि घटादेर्मिथ्यात्वविरोधित्वात्। यदि पूर्वपक्षिणा एवमुच्यते—घटादिप्रतियोगिकात्यन्ताभावासामानाधिकरण्यस्य घटादौ प्रत्यक्षेणैव गृहीतत्वात् भवत्येव प्रत्यक्षं मिथ्यात्वानुमानविरोधि। पूर्वपक्षस्य समाधानमाहाचार्यः—स्वप्रतियोगिकात्यन्ताभावासामानाधिकरण्यग्रह एव प्रत्यक्षरूपः मिथ्यात्वानुमानविरोधी इति यदुक्तं पूर्वपक्षिणा तन्न सम्भवति। केवलान्वयिनि प्रमेयत्वादौ स्वप्रतियोगिकात्यन्ताभावाऽप्रसिद्धया स्वप्रतियोगिकात्यन्ताभावासामानाधिकरण्यग्रहः केवलान्वयिनि न भवितुमर्हति। घटादावपि संयोगेन घटवति समवायेन घटात्यन्ताभावासामानाधिकरण्यस्य घटादौ सत्त्वात् स्वप्रतियोगिकात्यन्ताभावासामानाधिकरण्यग्रहो न भवितुमर्हति। यदि च पूर्वपक्षिणा घटादौ स्वात्य-

करणावृत्तित्वं वा, स्वात्यन्ताभावयत्किञ्चिदधिकरणावृत्तित्वं वेति विकल्पेन पूर्वोक्तदोषाच्च ॥३॥

तस्मात्तत्प्रकारान्तरस्य निरूपयितुमशक्यत्वान्मिथ्यात्वाविरोधित्वाच्च। स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वाभावरूपमेव सत्त्वमुपेयम्। तच्च न चक्षुरादियोग्यमित्युक्तम्। ननु यस्मिन् कस्मिश्चित्

---

न्ताभावयावदधिकरणावृत्तित्वं प्रत्यक्षेण घटादौ गृह्यते इत्युच्येत तदा स्वात्यन्ताभावस्य यावत्सु योग्यायोग्याधिकरणेषु घटस्यावृत्तित्वं प्रथमप्रत्यक्षेण ग्रहीतुं शक्येत। स्वात्यन्ताभावयत्किञ्चिदधिकरणावृत्तित्वं तु घटादेर्न मिथ्यात्वानुमानविरोधि। अत एवोक्तमाचार्येण—स्वात्यन्ताभावयावदधिकरणावृत्तित्वं वा स्वात्यन्ताभावयत्किञ्चिदधिकरणावृत्तित्वं वेति विकल्पेन पूर्वोक्तदोषाच्च। स्वात्यन्ताभावयावदधिकरणग्रहणे चक्षुराद्ययोग्यत्वं स्वात्यन्ताभावयत्किञ्चिदधिकरणग्रहणे मिथ्यात्वानुमानाविरोधित्वमिति भावः। प्रकृतं वादमुपसंहरन्नाहाचार्यः—तस्मात् प्रकारान्तरस्य निरूपयितुमशक्यत्वात् मिथ्यात्वाविरोधित्वाच्च स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वाभावरूपमेव सत्त्वमुपेयम्। तच्च न चक्षुरादियोग्यमित्युक्तम्। अयम्भावः—प्रपञ्चमिथ्यात्वविरोधिचक्षुरादियोग्यप्रपञ्चसत्त्वस्य निरूपयितुमशक्यत्वात् यत्किञ्चित्सत्त्वनिरूपणेऽपि मिथ्यात्वाविरोधित्वात् मिथ्यात्वविरोधि प्रपञ्चसत्त्वं स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वाभावरूपमेवाङ्गीकरणीयम्। तत्र यावदत्यन्ताभावे योग्यायोग्यप्रतियोगिकत्वसत्त्वान्न चक्षुरादियोग्यमिति प्रागेवोक्तम् ॥३॥

न्यायामृतपूर्वपक्षसमाधानं समाप्तम्।

४—मूले स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वाभावरूपं सत्त्वं मिथ्यात्वविरोधीत्युक्तम्। तच्च न चक्षुरादियोग्यमित्युक्तं मूले। तस्य सत्त्वस्य चक्षुराद्ययोग्यत्वञ्च इन्द्रियासन्निकर्षे प्रत्यक्षाविषयत्वमेव। तच्च तादृसत्त्वरूपेऽभावे नास्ति। सामान्यप्रत्यासत्तिरूपस्यालौकिकस्येन्द्रियसन्निकर्षस्य सत्त्वात् इत्याशयेनालौकिकसन्निकर्षवादिनैयायिकः शङ्कते। इयं शङ्का न माध्वोत्प्रेक्षिता किन्तु आचार्यः प्रसङ्गात् सामान्यलक्षणालौकिकसन्निकर्षं निरस्यन् अलौकिकसन्निकर्षवादिनमुत्थापयति नन्विति। लौकिकप्रत्यक्षेण यद्यपि मिथ्या-

स्वदेशकालवृत्तिनिषेधे एतद्देशैतत्कालवृत्तिनिषेधत्वं ज्ञात्वा तेन प्रत्यासत्तिभूतेनोपस्थापितानां स्वदेशकालवृत्तिसकलनिषेधानां प्रतियोगित्वस्याभावो घटे ग्राह्यः ततः सार्वदिकसर्वदेशीयनिषेधप्रतियोगित्वस्य ग्रहणं घटे दुर्घटम् इति--चेन्न ॥४॥

एवं सामान्यलक्षणया सर्वनिषेधेषूपस्थितेष्वपि तत्प्रतियोगित्वा-

---

त्वविरोधि सत्त्वं न गृह्यते तथाप्यलौकिकप्रत्यक्षेण तत् सत्त्वं ग्रहीतुं शक्यते। अलौकिकप्रत्यक्षेण च मिथ्यात्वानुमितेर्बाधो भविष्यति इत्याशयेन सामान्यलक्षणमलौकिकसन्निकर्षमवष्टभ्य नैयायिकः शङ्कते।

पूर्वपक्षिणोऽयमभिप्रायः—यद्यपि तादृशोऽभावो लौकिकप्रत्यक्षेण न ग्रहीतुं शक्यते तथापि सामान्यलक्षणसन्निकर्षजेनालौकिकप्रत्यक्षेण तत्सत्त्वं ग्रहीतुं शक्यते। कुत इति चेत्? यस्मिन् कस्मिंश्चित् स्वदेशकालवृत्तिनिषेधे एतद्देशैतत्कालवृत्तिनिषेधत्वं ज्ञात्वा तेन प्रत्यासत्तिभूतेनोपस्थापितानां स्वदेशकालवृत्तिसकलनिषेधानां प्रतियोगित्वस्याभावो घटे ग्राह्यः। ततः सार्वदिकसर्वदेशीयनिषेधप्रतियोगित्वस्य ग्रहणं घटे दुर्घटमिति चेन्न। अभावत्वसामान्यलक्षणप्रत्यासत्त्या स्वदेशकालवृत्तिसकलनिषेधेषु उपस्थितेषु तेषां निषेधानां प्रतियोगित्वस्याभावः प्रत्यक्षेणैव घटे ग्रहीतुं शक्यः। तथा च सार्वदिकसर्वदेशीयनिषेधप्रतियोगित्वरूपस्य मिथ्यात्वस्यानुमानेन घटे ग्रहणं दुर्घटमेव प्रत्यक्षबाधितत्वादित्यर्थः ॥४॥

५—सिद्धान्तयन्नाहाचार्यः—एवं सामान्यलक्षणया सर्वनिषेधेषु उपस्थितेष्वपि तत्प्रतियोगित्वाभावस्य चक्षुरादिना अशक्यत्वात्। स्वसमानाधिकरणा यावन्तोऽभावाः सामान्यलक्षणप्रत्यासत्त्या उपस्थापिताः किन्तु अभावेषु उपस्थितेष्वपि तत्प्रतियोगित्वाभावरूपस्य सत्त्वस्य चक्षुरादिना कथं ग्रहणम्? अशेषनिषेधानां प्रतियोगित्वं केवलमिन्द्रियग्राह्येष्वेव वर्तते इति न, किन्तु तत्प्रतियोगित्वमतीन्द्रियसाधारणम्। अतीन्द्रियसाधारणं प्रतियोगित्वं चक्षुरादिना लौकिकसन्निकर्षेण ग्रहीतुमशक्यत्वात्। चक्षुराद्ययोग्यत्वादतीन्द्रियसाधारणप्रतियोगित्वस्येति भावः। अयोग्यत्वं यदस्माभिरुक्तं प्रारम्भे तल्लौकिकप्रत्यक्षविषयत्वायोग्यत्वमेव। लौकिकप्रत्यक्षरूपस्यैव बाधस्योपक्रान्तत्वात्। तन्मूलीभूतोपादानविषयस्य प्रतियोग्यु-

भावस्य चक्षुरादिना ग्रहीतुमशक्यत्वात्। योग्यप्रतियोगिक एव हि संसर्गाभावो योग्य.। न चाशेषनिषेधानां प्रतियोगित्वमतीन्द्रिय-साधारणं चक्षुरादियोग्यम्। वस्तुतस्तु—सामान्यं नेन्द्रियप्रत्यासत्तिः; मानाभावात्।

न च—महानसीयधूमेन्द्रियसंयोगेन तत्रैव व्याप्तिग्रहे पर्वतीय-

---

पलम्भस्य लौकिकस्यैव अपेक्षितत्वेन तस्यैव मया खण्डनीयत्वात्। तादृशा-योग्यत्वञ्च उक्ताभावेऽस्त्येवेति भावः। सामान्यलक्षणया उपस्थितानाम-भावानां प्रतियोगित्वाभावस्य चक्षुरादिना ग्रहीतुमशक्यत्वादित्युक्तं मूले। कुतोऽशक्यत्वमित्याह—'अयोग्यत्वेनाशक्यत्वम्।' को वा योग्यः, को वा अयोग्य इत्याह मूलकारः। **योग्यप्रतियोगिक एव हि संसर्गाभावो योग्यः** अन्योन्याभावभिन्नाभावत्वरूपसंसर्गाभावत्वाभिप्रायेण मूले संसर्गाभावपदं नोपात्तम्। संसर्गाभावपदेनाभावमात्रं विवक्षितम्। येन संसर्गेण प्रतियोगिनो वैशिष्ट्यं तदुपलम्भस्यापादकं तेन संसर्गेणावच्छिन्नप्रतियोगिताकोऽभावः प्रत्यक्षः इति ज्ञापयितुं मूले संसर्गपदमुक्तम्। संसर्गावच्छिन्नप्रतियोगिताकः अभावः प्रत्यक्ष इत्युक्तम्। प्रागभावीयप्रतियोगितायाः संसर्गानवच्छिन्नत्वात् प्रागभावस्य प्रत्यक्षं न स्यात्। अतः तेन संसर्गेण अवच्छिन्नप्रतियोगिताकः अभाव इत्यत्र तत्संसर्गा-वच्छिन्नत्वं तदन्यसंसर्गानवच्छिन्नत्वं बोध्यम्। तेन तत्संसर्गावच्छिन्नप्रतियो-गितायाः संसर्गानवच्छिन्नप्रतियोगितायाश्च संग्रहः। तथा च यदि उक्तप्रतियो-गितात्वविशिष्टं प्रतियोगित्वं स्यात्तदा उपलभ्येत इत्यापादनासम्भवात् न तादृश-प्रतियोगित्वाभावो लौकिकप्रत्यक्षः न चाशेषनिषेधानां प्रतियोगित्वमतीन्द्रियसाधा-रणं चक्षुरादियोग्यम्। प्रतियोगित्वाभावरूपस्य सत्त्वस्य चक्षुराद्ययोग्यत्वे कारण-माह—**अशेषनिषेधानाम्** प्रतियोगित्वमतीन्द्रियसाधारणम्। तत्प्रतियोगित्व-स्यापादने तदुपलम्भस्यापादयितुमशक्यत्वान्न तादृशप्रतियोगित्वाभावः प्रत्यक्षायोग्यः। सामान्यप्रत्यासत्तिमवष्टभ्यापि मिथ्यात्वविरोधिसत्त्वस्य प्रत्यक्षग्राह्यत्वमुपपादयितुं न शक्यते। वस्तुतस्तु सामान्यं नेन्द्रियप्रत्यासत्तिर्मानाभावात्। नैयायिका-दयो हि सामान्यप्रत्यासत्तिमङ्गीकुर्वन्ति। सिद्धान्ते प्रमाणाभावात् सामान्यमिन्द्रिय-प्रत्यासत्तिः[न]।

धूमादनुमितिर्न स्यात्, सामान्यस्य च धूमत्वादेः प्रत्यासत्तित्वे तस्यापि प्रत्यासन्नत्वात्तत्र व्याप्तिग्रहे ततोऽनुमितिरिति—वाच्यम्।'

पर्वतीयधूमेन्द्रियसन्निकर्षदशायां धूमत्वेन प्रकारेण गृहीतस्मृतव्याप्तेस्तत्र वैशिष्ट्यग्रहसम्भवात्, 'सुरभि चन्दनमि'तिवत् विशेष्ये-

---

सामान्यप्रत्यासत्तिप्रत्यक्षतामसहमानः पूर्वपक्षी शङ्कते महानसीयधूमे[१] इन्द्रियसंयोगेन तत्रैव व्याप्तिग्रहे पर्वतीयानुमितिर्न स्यात्। सामान्यस्य प्रत्यासत्तित्वानभ्युपगमे इति शेषः। पूर्वपक्षिणोऽयमभिप्रायः—प्रत्यक्षविषयतायाः सन्निकर्षाश्रयत्वव्याप्यत्वात् प्रत्यक्षे सन्निकर्षं विना भानं न सम्भवति। तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां भानं कथं भवेत्। सकलधूमवह्नीनां भानार्थं सामान्यलक्षणा उपासनीया। न च सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यम्। प्रत्यक्षधूमे वह्निधूमसम्बन्धस्य गृहीतत्वात् अन्यस्य धूमस्यानुपस्थितत्वात् धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः। सामान्यलक्षणाङ्गीकारे तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसन्देहः सम्भवति। अन्यच्च [२]महानसीयधूमे इन्द्रियसंयोगेन तत्रैव महानसीयधूमे व्याप्तिग्रहे पर्वतीयधूमादनुमितिर्न स्यात्। पर्वतीयधूमे व्याप्यत्वस्यागृहीतत्वादिति भावः। सामान्यस्य च धूमत्वादेः प्रत्यासत्तित्वे तस्यापि पर्वतीयधूमस्यापि प्रत्यासन्नत्वात् तत्र व्याप्तिग्रहे ततोऽनुमितिः। उक्तञ्च नयनप्रसादिन्याम् [पृ० २४०] "कतिपयव्यक्तिषु महानसीयधूमादिषु व्याप्तिग्रहणे पर्वतीयधूमे व्याप्तेरग्रहात् अन्यत्र व्याप्तिरन्यत्रानुमानमिति स्यात्। तथा च गृहीताऽपि व्याप्तिः अनुमित्यसमर्था इति वाचस्पत्युपालम्भप्रसङ्गः"। वाचस्पतिस्तु तात्पर्यटीकायां "पण्डमुद्वाह्य मुग्धायाः पुत्रप्रार्थनामिवे"ति [न्या० वा० तात्पर्यटीका, पृ० ४०] सामान्यलक्षणानङ्गीकर्तृणामुपालम्भमवादीत्। तदेवेहाह आचार्यः—सामान्यस्य च धूमत्वादेः प्रत्यासत्तित्वे तस्यापि प्रत्यासन्नत्वात् तत्र व्याप्तिग्रहे ततोऽनुमितिः।

इति पूर्वपक्षिणामाशयं निरसितुमाहाचार्यः—पर्वतीयधूमेन्द्रियसन्निकर्षदशायां धूमत्वेन प्रकारेण गृहीतस्मृतव्याप्तेस्तत्र वैशिष्ट्यग्रहसम्भ-

न्द्रियसन्निकर्षविशेषणज्ञानासंसर्गाग्रहरूपाया विशिष्टज्ञानसामग्र्याः पूर्णत्वात्। व्याप्तिस्मृतिप्रकारेण वा पक्षधर्मताज्ञानस्य हेतुता; महानसीय एव धूमो धूमत्वेन व्याप्तिस्मृतिविषयो भवति, धूमत्वेन पर्वतीयधूमज्ञानं चापि जातम्, तच्च सामान्यलक्षणां विनैव; तावतैवानुमितिसिद्धेः। न च— सामान्यप्रत्यासत्तिं विना धूमो वह्निव्यभिचारी न

---

वात्। सुरभि चन्दनमितिवत् विशेष्येन्द्रियसन्निकर्षविशेषणज्ञानासंसर्गाग्रहरूपायाः विशिष्टज्ञानसामग्र्याः पूर्णत्वात्। सामान्यलक्षणामनभ्युपगम्यापि प्रदर्शितरूपेण पर्वतीयधूमे वह्निव्याप्तिवैशिष्ट्यग्रहः सम्भवति। पर्वतीयधूमस्य वह्निव्याप्यत्वग्रहाय सामान्यलक्षणा नोपासनीया। महानसादौ महानसीयधूमे धूमत्वप्रकारेण व्याप्तिर्गृह्यते। व्याप्तिग्रहणजन्यसंस्कारस्तु धूमत्वेन पर्वतीयधूमदर्शनादुद्बुद्धो भवति। ततो व्याप्तिस्मृतिः। स्मर्यमाणव्याप्त्या सह पर्वतीयधूमस्यासंसर्गाग्रहो वर्तते। ततश्च वह्निव्याप्तिवैशिष्ट्यं पर्वतीयधूमे गृह्यते। विशिष्टप्रत्यक्षे त्रयं कारणं विशेष्येन्द्रियसन्निकर्षः विशेषणज्ञानं विशेषणेन सह विशेष्यस्यासंसर्गाग्रहश्च। एतत्कारणत्रितयात् सर्वत्र विशिष्टप्रत्यक्षज्ञानं जायते। अतः पर्वतीयधूमस्यापि धूमत्वेन रूपेण वह्निव्याप्तिवैशिष्ट्यस्य प्रत्यक्षज्ञानं सम्भवति। अतः पर्वतीयधूमे वह्निव्याप्तिवैशिष्ट्यग्रहाय सामान्यलक्षणा प्रत्यासत्तिर्नापेक्षिता। सुरभि चन्दनमिति विशिष्टप्रत्यक्षेऽपि एतत्कारणत्रितयजन्यत्वस्य नैयायिकैरभ्युपगमात्। विशेष्यचन्दनांशे इन्द्रियस्य लौकिकसन्निकर्षः, विशेषणस्य सौरभस्य ज्ञानम्, विशेष्यविशेषणयोरसंसर्गाग्रहश्च, अतः सुरभि चन्दनमिति विशिष्टप्रत्यक्षज्ञानं जायत इति यथा तथा प्रकृतेऽपीत्याह आचार्यः—सुरभि चन्दनमितिवत् विशेष्येन्द्रियसन्निकर्षविशेषणज्ञानासंसर्गाग्रहरूपाया विशिष्टज्ञानसामग्र्याः पूर्णत्वात्। प्रदर्शितरूपेण पर्वतीयधूमस्य वह्निव्याप्तिवैशिष्ट्यप्रत्यक्षज्ञानं सामान्यलक्षणां विनैवोपपादितम्। इदानीं पर्वतीयधूमे वह्निव्याप्तिवैशिष्ट्यप्रत्यक्षं विनापि वह्न्यनुमितिर्भवितुमर्हतीत्याहाचार्यः—व्याप्तिस्मृतिप्रकारेण वा पक्षधर्मताज्ञानस्य हेतुता। महानसीय एव धूमो धूमत्वेन व्याप्तिस्मृतिविषयो भवति। धूमत्वेन पर्वतीयधूमज्ञानं चापि जातम्। तच्च सामान्यलक्षणां विनैव तावतैवानुमितिसिद्धेः। व्याप्यतावच्छेदकपक्षधर्मतावच्छेदकयोरैक्ये

वेति अनुभूयमानसंशयो न स्यात्, प्रसिद्धधूमे वह्निसम्बन्धावगमात् अप्रसिद्धस्य चाज्ञानादिति—वाच्यम्; ॥५॥

प्रसिद्धधूम एव तत्तद्धूमत्वादिना व्याप्तिनिश्चयेऽपि धूमत्वेन तत्संशयोपपत्तेः। तथा चोक्तं मणिकृता—'घटत्वेनेतरभेदनिश्चयेऽपि पृथिवीत्वादिना तत्र संशयसिषाधयिषे भवत एवे'ति। निश्चितेऽप्यर्थे

---

पर्वतीयधूमे वह्निव्याप्तिवैशिष्ट्यग्रहं विनापि पर्वते वह्न्यनुमितिर्भवितुमर्हति। येन रूपेण धूमे वह्निव्याप्यता गृहीता तेनैव रूपेण यदि धूमस्य पक्षवृत्तिता गृह्यते तर्हि तत एव वह्न्यनुमितिर्भवितुमर्हतीति वृथा सामान्यलक्षणाकल्पः। अस्मिन् पक्षे वह्निव्याप्तिवैशिष्ट्यज्ञानमपि नापेक्षितम्। प्रकारान्तरेण सामान्यलक्षणावादी शङ्कते—न च सामान्यप्रत्यासत्तिं विना धूमो वह्निव्यभिचारी न वेति अनुभूयमानसंशयो न स्यात् प्रसिद्धधूमे वह्निसम्बन्धावगमादप्रसिद्धस्य चाज्ञानादिति वाच्यम्। कृतविवरणोऽयमाचार्यीयः सन्दर्भः प्रागेव ॥५॥

६—समाधत्ते आचार्यः—प्रसिद्धे एव धूमे तत्तद्धूमत्वादिना व्याप्तिनिश्चयेऽपि धूमत्वेन तत्संशयोपपत्तेः। यस्य कस्यचिद् धूमस्य वह्निव्याप्यत्वेन निश्चितत्वेऽपि धूमत्वेन रूपेण धूमस्य वह्निव्याप्यत्वे सन्देहदर्शनात् यत्रापि धूमे वह्निव्याप्तिर्गृहीता तत्रापि तद्धूमत्वेनैव व्याप्तिर्गृहीता किन्तु शुद्धधूमत्वेन रूपेण व्याप्तिर्न गृहीता। धूमत्वेन रूपेण व्याप्तिर्गृहीता चेत् कदापि धूमत्वेन रूपेण वह्निव्यभिचारसंशयो न स्यात्। तथा च प्रसिद्धमहानसीयादिधूमे महानसीयधूमत्वादिरूपेण वह्निव्याप्तिनिश्चयेऽपि शुद्धधूमत्वेन रूपेण धूमे वह्निव्यभिचारसंशयोपपत्तेः। तथा चोक्तं मणिकृता—घटत्वेनेतरभेदनिश्चयेऽपि पृथिवीत्वादिना तत्र संशयसिषाधयिषे भवत एवेति। किञ्चिद्रूपेण हेतोर्व्याप्तिनिश्चयेऽपि रूपान्तरेण तस्मिन्नेव हेतौ व्याप्तिसंशयः सम्भवतीति मतं समर्थयन् चिन्तामणिकृतां गङ्गेशोपाध्यायानां मतमुपन्यस्यति तथा चोक्तं मणिकृतेति। पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्, पृथिवीत्वाद्वा, यन्नैवं तन्नैवं यथा जलादि इत्येवं केवलव्यतिरेक्यनुमानप्रयोगे पृथिवीत्वेन पृथिवीरूपे पक्षे पृथिवीतरभेदरूपसाध्यस्य संशयसिषाधयिषातः एवास्यानुमानस्य प्रवृत्तिः। सा च न सम्भवति। घटत्वेन रूपेण पृथिवीरूपे घटे पृथिवीतर-

प्रामाण्यसंशयाहितसंशयवत् धूमत्वं वह्निव्यभिचारिवृत्ति न वेति संशयादपि तादृशसंशयोपपत्तेश्च। एतेन वायू रूपवान्नवेति संशयोऽपि व्याख्यातः ॥६॥

ननु—सिद्धे नेच्छा, किन्तु असिद्धे; सा च स्वसमानविषयज्ञानजन्या, तच्च ज्ञानं न सामान्यप्रत्यासत्तिं विना।

---

भेदस्य निश्चितत्वात्। निश्चिते संशयसिषाधयिषयोरभावात् इत्याशङ्क्याह मणिकारः—घटत्वेन रूपेण पृथिव्यां साध्यनिश्चयसत्त्वेऽपि पृथिवीत्वरूपेण पृथिव्यां साध्यनिश्चयाभावात् तेन रूपेण संशयसिषाधयिषे भवत एवेति केवलव्यतिरेक्यनुमानप्रवृत्तिर्निराबाधा। एवमेव प्रकृतस्थलेऽपि। धूमो वह्निव्यभिचारी न वेति संशयस्योपपादनायोपपत्त्यन्तरं दर्शयत्याचार्यः—निश्चितेऽप्यर्थे प्रामाण्यसंशयाहितसंशयवत् धूमत्वं वह्निव्यभिचारिवृत्तिर्न वेति संशयादपि तादृशसंशयोपपत्तेश्च। अयं भावः—निश्चितेऽपि घटादिरूपेऽर्थे कारणान्तरात् घटनिश्चयस्य प्रमात्वसन्देहे जाते "इदं घटज्ञानं प्रमा न वा" एवं रूपेण प्रमात्वसन्देहे जाते ज्ञानप्रमात्वसन्देहेनाहितः प्रमेयसंशयो भवति। अर्थात् घटो न वेति संशयो भवति। ज्ञानप्रामाण्यसंशयात् यथा ज्ञेयसंशयः एवमेव प्रकृते प्रसिद्धमहानसीयधूमे वह्निव्याप्तिनिश्चयेऽपि धूमत्वं वह्निव्यभिचारिवृत्तिर्न वेति संशयात् धूमो वह्निव्यभिचारी न वेति संशयोपपत्तेः। व्याप्यतावच्छेदकधर्मस्य व्यभिचारिवृत्तित्वसन्देहेनाहितः व्याप्यत्वाभिमतस्यापि व्यभिचारसंशयो जायते। तथा च देशान्तरीयधूमादौ व्यभिचारसंशयो नानुपपन्नः। एतेन वायू रूपवान्न वेति संशयो व्याख्यातः। रूपत्वं पार्थिवादित्रिविधरूपभिन्नवृत्तिर्न वेति संशयकाले वायौ पार्थिवादित्रिविधरूपविशेषाभावनिश्चयेऽपि वायू रूपवान्न वेति संशयः यथा वा पार्थिवादिरूपाणि वायुवृत्तित्वाभाववन्ति इति निश्चयेऽपि रूपत्वं पार्थिवादित्रिविधरूपभिन्नवृत्तिर्न वेति संशयकाले रूपं वायुवृत्तिर्न वेति संशयः। तथा धूमो वह्निव्याप्य इति निश्चयेऽपि धूमत्वं तत्तद्धूमभिन्नवृत्तिर्न वेति संशयकाले समानविषयकसंशयस्याप्रतिबन्धकतायामतिरिक्तसम्भावनाया उत्तेजकत्वादिति भावः ॥६॥

७—प्रकारान्तरेण सामान्यलक्षणामुपपादयितुं पूर्वपक्षी शङ्कते—ननु-

न च—सिद्धगोचरसुखत्वप्रकारकज्ञानादेवाज्ञाते सुखे भवतीच्छा, समानप्रकारकत्वमात्रस्य नियामकत्वादिति—वाच्यम्, रजतत्वेन प्रकारेण रजतेऽनुभूयमाने घटादौ रजतत्वप्रकारकेच्छाप्रसङ्गात्। न

---

सिद्धे नेच्छा किन्तु असिद्धे। सा च स्वसमानविषयकज्ञानजन्या, तच्च-ज्ञानं न सामान्यप्रत्यासत्तिं विना। इच्छा साध्यविषयिणी भवति। सिद्धत्व-ज्ञानमिच्छाविरोधि। साध्यमसिद्धमेव भवति। सुखे इच्छा स्वारसिकी। किन्तु सा इच्छा न सिद्धसुखविषयिणी। सिद्धे इच्छा एव न भवितुमर्हति अतो असि-द्धसुखविषयिणी वक्तव्या। इच्छा च स्वसमानविषयकज्ञानजन्या भवति, अज्ञाते इच्छाया असम्भवात्। अतः असिद्धसुखविषयिणी इच्छा असिद्धसुखविषयक-ज्ञानजन्या वक्तव्या। असिद्धसुखविषयकं ज्ञानं च पुनः कुतः? इत्यतः यस्मिन् कस्मिंश्चित् सुखे सुखत्वेन निश्चिते सुखत्वसामान्यलक्षणया प्रत्यासत्त्या निखिल-सुखानामतीतानागतानां ज्ञानं भवति। ततोऽसिद्धसुखज्ञानादिच्छापि जायते। असिद्धसुखज्ञानाय सर्वैरेव सामान्यलक्षणा उपासनीया। अन्यथा सुखेच्छैव जगति अस्तमियात्। इत्यतः सामान्यलक्षणावादी प्रत्यवतिष्ठते—"ननु सिद्धे नेच्छा" इति।

समाधास्यन्नाहाचार्यः—न च सिद्धगोचरसुखत्वप्रकारकज्ञानादेव अज्ञाते सुखे भवतीच्छा। समानप्रकारकत्वमात्रस्य नियामकत्वादिति वाच्यम्। अयं भावः—यस्मिन् कस्मिंश्चित् सिद्धे सुखे सुखत्वप्रकारकज्ञानंताव-दस्ति। असिद्धसुखविषयिणीच्छाऽपि सुखत्वप्रकारिकैव। तथा च सुखत्वप्रकारक-ज्ञानात् सुखत्वप्रकारिका इच्छा भवितुमर्हति। यत्प्रकारिका इच्छा तत्प्रकारकं ज्ञानमेव इच्छाजनकम्। न तु यद्विषयिणी इच्छा तद्विषयकं ज्ञानम् इच्छाया जनकमिति। इच्छाया विषयस्तु असिद्धं सुखं ज्ञानस्य विषयस्तु सिद्धं सुखम्। इच्छायाः स्वविषयकज्ञानजन्यत्वनियमाभ्युपगमे सिद्धसुखज्ञानादसिद्धसुखविषयिणी इच्छा न भवितुमर्हति। किन्तु यत्प्रकारिका इच्छा तत्प्रकारकं ज्ञानमेव तस्या इच्छाया जनकमित्यभ्युपगमे सामान्यलक्षणाया अपेक्षा नास्ति। ज्ञाने इच्छायाः समानविषयत्वसम्पादनायैव सामान्यलक्षणापेक्षिता आसीत्। सा च नास्ति। एवं समाधाने कृते पुनः पूर्वपक्षी शङ्कते—रजतत्वेन प्रकारेण रजतेऽनुभूय-माने घटादौ रजतत्वप्रकारकेच्छाप्रसङ्गात्। पूर्वपक्षी समाधानं दूषयन्नाह—

च– प्रकाराश्रयत्वमपि नियामकम्; रजतभ्रमाच्छुक्ताविच्छानुदय-प्रसङ्गात्। तथा च समानप्रकारकत्वे सति समानविषयकत्वं तन्त्रम्। अत एवाख्यातिपक्षे रजतस्मरणस्यैव शुक्तौ प्रवर्तकत्वमित्यपास्तमिति

---

एवं समाधानं न भवितुमर्हति। कुतो न भवितुमर्हति इत्यत आह—एवं समाधाने कृते रजतत्वेन रूपेण रजतेऽनुभूयमाने रजतत्वप्रकारिका इच्छा घटादावपि स्यात्। ज्ञानेच्छयोः समानविषयत्वं तु सिद्धान्तिना नाङ्गीक्रियते, केवलं समान-प्रकारकत्वमेव। रजतत्वप्रकारकज्ञानात् रजतत्वप्रकारिका इच्छा यस्मिन् कस्मिं-श्चिद् भवेत्। सा च सर्वानिष्टा। सिद्धान्ती समाधत्ते—समानप्रकारकमेव ज्ञानमिच्छाया जनकं किन्तु समानप्रकारकज्ञानात् तत्रैव तत्प्रकारिका इच्छा भवेत् यत्र प्रकारीभूतधर्मस्याश्रयत्वं वर्तते। प्रकारीभूतधर्मस्याश्रयत्वं यत्र न वर्तते, तत्रेच्छा न भवति। एवञ्च, प्रकारीभूतरजतत्वधर्मस्याश्रयत्वं घटे नास्ति। अतो रजतत्वप्रकारकज्ञानात् रजतत्वेन घटे इच्छा न भवितुमर्हति इत्यत आह–न च प्रकाराश्रयत्वमपि नियामकमिति। पूर्वपक्षी समाधानं दूषयति—सिद्धान्तिना यत्समाहितं तदकिञ्चित्करम्। यत एवं समाधाने कृते रजतभ्रमात् शुक्तौ इच्छानुदयप्रसङ्गात्। प्रकाराश्रयत्वस्य इच्छानियामकत्वे शुक्तौ रजतभ्रमात् शुक्तौ रजतत्वप्रकारकज्ञानात् रजतार्थिनः पुरुषस्य शुक्तौ इच्छानुदयप्रसङ्गात्। यतः शुक्तौ प्रकारीभूतरजतत्वस्य आश्रयत्वं नास्ति। अथ च रजतभ्रमात् सर्वेषामेव शुक्तौ इच्छोदयो भवति। तन्न स्यात्। यदि सिद्धान्तिना समाधानमङ्गी-क्रियेत। तथा च समानप्रकारकत्वे सति समानविषयत्वं तन्त्रम्। तथा च सिद्धान्तिना रजतभ्रमात् शुक्तौ इच्छानुदयवारणाय इच्छाजनकज्ञानस्य इच्छा-समानप्रकारकत्वे सति इच्छासमानविषयत्वं कारणत्वेन वक्तव्यम्। एवञ्च इच्छा यत्प्रकारिका यद्विषयिणी च भवति तज्जनकज्ञानेनापि तत्प्रकारकत्वेन तद्विषयत्वेन च भवितव्यम्। तथा च अन्यप्रकारकज्ञानात् अन्यप्रकारिका इच्छा, अन्यविषयकज्ञानादन्यविषयिणी इच्छा न भवितुमर्हति। अतोऽ-सिद्धसुखविषयिण्या इच्छायाः जनकं ज्ञानमपि असिद्धसुखविषयकमेव वाच्यम्, असिद्धसुखज्ञानञ्च सामान्यलक्षणां विना..न भवितुमर्हति। शुक्तौ-रजतभ्रमात् रजतार्थिनः प्रवृत्तिर्भवति। तत्र रजतार्थिनः इच्छाया रजतत्व-

चेन्न; यतो रजतभ्रमाच्छुक्ताविच्छा नास्त्येव, कि त्वनिर्वचनीये रजत इत्यनिर्वचनीयख्यातौ वक्ष्यते। प्रकाराश्रयत्वं नियामकं वदन्नख्यातिवादी परमेवं विभीषणीयः। तथा च प्रकाराश्रयत्वस्य नियामकत्वादन्यथाख्यातिपक्षोऽपि निरस्त एव। न च—तर्हि भ्रमत्वं न स्यात् इदं

---

प्रकारकत्वं रजतविषयकत्वञ्च वर्तते। अस्या इच्छाया जनकीभूते भ्रमज्ञानेऽपि रजतत्वप्रकारकत्वं रजतविषयकत्वञ्च वक्तव्यम्। अथ च रजतभ्रमे रजतत्वप्रकारेण विशेष्यतया शुक्तिरेव भासते, रजतं तु न भासते इत्येव आपाततः अन्यथाख्यातिवादिनो वदन्ति। तथा च समानप्रकारकत्वे सति समानविषयकत्वं तन्त्रमिति सामान्यलक्षणावादिनो मूलग्रन्थ एव असङ्गतः स्यात्। रजतभ्रमे यदि रजतं न भासेत तर्हि ज्ञानस्येच्छासमानविषयत्वं न स्यात्। अत्रेदं वक्तव्यम्। रजतत्वप्रकारकभ्रमे रजतमपि भासत एव, परन्तु रजतं विशेष्यतया न भासते। अत एव प्रमालक्षणे तत्प्रकारकं तद्वद्विशेष्यकं ज्ञानं प्रमेत्युक्तम्। अत्र विशेष्यत्वमनुक्त्वा तद्वद्विषयकमित्युच्यमाने भ्रमे लक्षणस्यातिव्याप्तिः स्यात्। भ्रमज्ञानमपि तद्वद्विषयकं भवति किन्तु तद्वद्विशेष्यकं न भवति। विशेष्यं तु अरजतमेव। अत एव अख्यातिपक्षे रजतस्मरणस्येव शुक्तौ प्रवर्तकत्वमित्यपास्तम्। अत एव ज्ञानप्रकारीभूतधर्माश्रयत्वस्य नियामकत्वादेव अख्यातिपक्षे रजतस्मरणमात्रात् शुक्तौ प्रवृत्तिर्न भवितुमर्हति। शुक्तौ ज्ञानप्रकारीभूतरजतत्वस्याश्रयत्वं नास्ति। ज्ञानप्रकारीभूतरजतत्वाश्रय एव इच्छाविषयत्वात् प्रवृत्तिविषयः। एवञ्च अख्यातिपक्षे ज्ञानप्रकाराश्रयत्वं नास्तीति कृत्वा अख्यातिपक्षः परास्तः। एवं रूपेण पूर्वपक्षिणा सामान्यलक्षणायाः समर्थने कृते आह सिद्धान्ती—

इति चेन्न, यतो रजतभ्रमात् शुक्तौ इच्छा नास्त्येव किन्तु अनिर्वचनीये रजते इति अनिर्वचनीयख्यातौ वक्ष्यते। यदुक्तं पूर्वपक्षिणा रजतभ्रमात् शुक्तौ इच्छानुदयप्रसङ्गात् तदिष्टापत्त्या परिहरति। रजतभ्रमात् शुक्तौ इच्छा नास्त्येव। अस्मन्मते, रजतभ्रमादनिर्वचनीयरजते इच्छा जायते। प्रकाराश्रयत्वं नियामकं वदन् अख्यातिवादी परमेवं विभीषणीयः। पूर्वपक्षिणा ज्ञानप्रकारीभूतसामान्यस्य यत्राश्रयत्वं वर्तते तत्रैव इच्छा भवतीति वदता अख्यातिवादिनामेव भयमुत्पादितम्। तन्मते, प्रकारीभूतरजत्वाश्रयत्वस्य पुरोव-

रजतमिति भ्रमत्वाभिमतज्ञानस्य व्यधिकरणप्रकारत्वानभ्युपगमादिति—वाच्यम्; बाधितविषयत्वेन हि भ्रमत्वं न तु व्यधिकरणप्रकारत्वेन, तस्यापि विषयबाधप्रयोज्यत्वादिति हि वक्ष्यते ॥७॥

ननु अभावज्ञानस्य प्रतियोगिज्ञानजन्यत्वात् प्रौढप्रकाशयावत्तेजो-

---

र्तिनि अभावात्। अस्मन्मते तु रजतत्वप्रकाराश्रयत्वमनिर्वचनीये रजते वर्तते एव। तथा च प्रकाराश्रयत्वस्य नियामकत्वात् अन्यथाख्यातिपक्षोऽपि निरस्त एव। अन्यथाख्यातिपक्षे प्रकारीभूतधर्मस्याश्रयत्वं विशेष्येऽरजते नास्ति। तन्मते भ्रमज्ञानीयप्रकारस्य भ्रमज्ञानीयविशेष्यानाश्रितत्वात्। अन्यथाख्यातिवादी शङ्कते—भ्रमज्ञानीयविशेष्यमपि यदि भ्रमज्ञानीयप्रकारीभूतधर्माश्रयो भवेत् तर्हि ज्ञानस्य भ्रमत्वं न स्यात्। इदं रजतमिति भ्रमत्वाभिमतज्ञानस्य व्यधिकरणप्रकारत्वानभ्युपगमात्। अन्यथाख्यातिवादिमते व्यधिकरणप्रकारकत्वेनैव ज्ञानस्य भ्रमत्वम्। यदि भ्रमज्ञानमपि समानाधिकरणप्रकारकमेव भवेत्तर्हि तस्य भ्रमत्वमेव न स्यात। आह सिद्धान्ती—समानाधिकरणप्रकारत्वेनापि ज्ञानस्य भ्रमत्वं न सिद्धम्, बाधितविषयत्वेनैव ज्ञानस्य भ्रमत्वं, यस्य ज्ञानस्य विषयः प्रमाणान्तरेण बाध्यते तद्विषयकं ज्ञानमेव भ्रमः। न तु व्यधिकरणप्रकारकत्वेन। तस्यापि विषयबाधप्रयोज्यत्वादिति वक्ष्यते। व्यधिकरणप्रकारकत्वस्यापि विषयबाधाधीनसिद्धिकत्वात्। विषयो बाधित इति कृत्वा तत्र ज्ञानं व्यधिकरणप्रकारकं जातम्। विषयस्याबाध्यत्वे तु तत्र ज्ञानस्य व्यधिकरणप्रकारकत्वमेव न सम्भवति। यथा रजते रजतत्वप्रकारकज्ञानमिति अग्रे उपपादयिष्यते ॥७॥

८—पूर्वपक्षी प्रकारान्तरेण सामान्यप्रत्यासत्तेः सिद्धिं शङ्कते ननु अभावज्ञानस्य प्रतियोगिज्ञानजन्यत्वादिति। प्रौढप्रकाशयावत्तेजोविरहरूपस्य तमसः प्रत्यक्षता न स्यात् यावत्तेजोरूपप्रतियोगिज्ञानविरहादिति शङ्कितुरभिप्रायः। सामान्यप्रत्यासत्तिं विना प्रौढप्रकाशयावत्तेजो ज्ञानं न स्यात् यावत्तेजोज्ञानाभावे तमसो ज्ञानं न स्यात्। अतस्तमसः प्रतियोगिनः प्रौढप्रकाशयावत्तेजसः ज्ञानाय सामान्यलक्षणाप्रत्यासत्तिरङ्गीकरणीया। अन्यथा तमसः प्रत्यक्षता न स्यात् इत्याह पूर्वपक्षी—अभावज्ञानस्य [प्रत्यक्षस्य] प्रतियोगिज्ञानजन्य-

विरहरूपस्य तमसः प्रत्यक्षता न स्यात्, सामान्यप्रत्यासत्तिं विना प्रतियोग्यनुपस्थितेः इति—चेन्न; अस्मन्मते तमसो भावान्तरत्वात्।

न च तथापि तद्व्यञ्जकत्वात्तदपेक्षेति—वाच्यम्, स्वरूपसत एव

---

त्वात् प्रौढप्रकाशयावत्तेजोविरहान्यस्य तमसः प्रत्यक्षता न स्यात्। सामान्यप्रत्यासत्तिं विना प्रतियोग्यनुपस्थितेः' इति चेन्न, अस्मन्मते तमसो भावान्तरत्वात्। अस्मन्मते इत्यस्य पूर्वोत्तरमीमांसकमते इत्यर्थः। उक्तञ्च भाट्टवार्तिके—

ननु नाभावमात्रस्य तमस्त्वं वृद्धसम्मतम्।
छायायाः कार्ष्ण्यमित्येव पुराणे भूगुणश्रुतेः॥

भूगुणस्य कार्ष्ण्यस्य छायायां द्रव्यान्तरत्वश्रुतेरित्यर्थः।

दूरासन्न प्रदीपादि देहचेष्टानुसारिणी॥
आसन्नदूरदीपादि महदल्पचलाचला।
देहानुवर्तिनी छाया न वस्तुत्वाद् विना भवेत्॥इति॥

[ न्यायकणिका, पृ० ७६ ]।

तमो नाम आलोकाभावमात्रमिति केचित्, रूपदर्शनाभावमात्रमित्यन्ये। उच्यते—उपचयापचयाद्यवस्थाभेदविशेषविशिष्टरूपवत्तया चोपलभ्यमानं तमः कथं द्वयीमभावविधामासीदेत्।" (विवरणम्, पृ० ५३-५४) उक्तञ्च न्यायकणिकायाम्—असति बाधके द्रव्यान्तरमेकादशं तमो नवगुणञ्चेति सिद्धम्। तमसो नव गुणाश्च—"रूपं, संख्या, संयोगविभागौ, परत्वापरत्वे, पृथक्त्वं, परिमाणं; वेगाख्यः संस्कारः।"

"नादृष्टौ दर्शनं छाया न चाभावोऽस्मृतौ गतेः।
रूपादुपायसद्भावात् द्रव्यं द्रव्यान्तरानुगम्" ॥

[ न्यायकणिका, पृ० ७९ ]।

आह पूर्वपक्षी—तमसो भावान्तरत्वेऽपि सति आलोके तमसोऽदर्शनेन तमसो व्यञ्जकतया आलोकाभावग्रहणापेक्षा, तथा चालोकग्रहणाय सामान्यप्रत्यासत्तिरङ्गीकरणीयैव। 'न च तथापि तद्व्यञ्जकत्वाद् तदपेक्षेति वाच्यम्, इति पूर्वपक्षे प्राप्ते आह आचार्यः—व्यञ्जकग्रहणाय आलोकाभावग्रहण-

तादृक्तेजोविरहस्य तमो व्यञ्जकत्वम्, न तु ज्ञानस्य मानाभावादित्यभ्युपगमात्। अन्येषां मते· तादृक्तेजोविरहज्ञानस्यापेक्षितत्वेऽपि प्रतियोगितावच्छेदकप्रकारकज्ञानादेव तत्सम्भवेन तदर्थं सकलप्रतियोगिज्ञानजनिकायाः सामान्यप्रत्यासत्तेरनुपयोगात् ॥८॥

न च—गोत्वाभावज्ञानं गोत्वत्वप्रकारकज्ञानजन्यम्, तच्च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपं सामान्यप्रत्यासत्तिमन्तरेण न शक्यमवगन्तुमिति—साम्प्रतम्ः यत्किञ्चिद्गोव्यक्तेरेव गोत्वत्वरूपत्वात्।

---

पेक्षा नास्ति। स्वरूपसत एव आलोकाभावस्य प्रौढप्रकाशयावत्तेजोविरहरूपस्य तमसो व्यञ्जकत्वं, न तु तमसो व्यञ्जकत्वाय प्रौढप्रकाशयावत्तेजोविरहस्य ज्ञानमपेक्ष्यते, स्वरूपसन्नेव तादृशालोकाभावस्तमसो व्यञ्जक इत्यस्मन्मतेऽभ्युपगमान्न सामान्यलक्षणापेक्षेत्याह—स्वरूपसत एव तादृक्तेजोविरहस्य तमो व्यञ्जकत्वं, न तु ज्ञानस्य मानाभावादित्यभ्युपगमात्। येषां मते तमसो ग्रहणाय तमोव्यञ्जकालोकाभावग्रहणापेक्षा तेषामपि मते व्यञ्जकग्रहणाय न सामान्यप्रत्यासत्तिरङ्गीकर्तव्या। प्रतियोगितावच्छेदकप्रकारकज्ञानादेव तद्रूपेण यावत्प्रतियोगिनो विरहज्ञानसम्भवे न तदर्थं सकलप्रतियोगिज्ञानजनिकायाः सामान्यप्रत्यासत्तेरुपयोगः। प्रतियोगिज्ञानं विनापि प्रतियोगितावच्छेदकप्रकारकज्ञानादेव तत्प्रतियोगिकाभावग्रहणमुपपद्यते इत्याहाचार्यः—अन्येषां मते तादृक्तेजोविरहज्ञानस्यापेक्षितत्वेऽपि प्रतियोगितावच्छेदकप्रकारकज्ञानादेव तत्सम्भवेन तदर्थं सकलप्रतियोगिज्ञानजनिकायाः सामान्यप्रत्यासत्तेरनुपयोगात्। एतेन घटपटादिसामान्याभावोऽपि व्याख्यातः। घटत्वपटत्वादिप्रतियोगितावच्छेदकप्रकारकज्ञानेन यत्किञ्चिद्घटपटादिज्ञानात् घटपटादिसामान्याभावोऽपि ग्रहीतुं शक्यते। सामान्याभावज्ञानायापि सामान्यप्रत्यासत्त्या यावत्प्रतियोगिज्ञानं नापेक्षणीयम् अतस्तदर्थमपि सामान्यप्रत्यासत्तिर्नोपासनीया ॥८॥

९—प्रकारान्तरेण सामान्यप्रत्यासत्तेः सिद्धिं शङ्कते पूर्वपक्षी—न च गोत्वाभावज्ञानं गोत्वत्वप्रकारकज्ञानजन्यम्, तच्च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपं सामान्यप्रत्यासत्तिमन्तरेण न [शक्यावगमं]

एतेन प्रागभावप्रतीतिरपि व्याख्याता। किं चानागतज्ञानस्यापेक्षितत्वे अनुमानादेव तद्भविष्यति; तथा च न्यायकुसुमाञ्जलौ--

'शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥'

---

शक्यमवगन्तुमिति साम्प्रतम्। गोत्वाभावज्ञाने गोत्वं प्रतियोगिनिरवच्छिन्नप्रतियोगिताकाभावग्रहस्तु न सम्भवति अतोऽत्र गोत्वत्वं प्रतियोगितावच्छेदकमवश्यं ज्ञातव्यम्। गोत्वत्वावच्छिन्नप्रतियोगिताकगोत्वाभावो हि प्रकृतज्ञाने विषयः। गोत्वत्वं च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपं वक्तव्यम्। प्रतियोगितावच्छेदकधर्मग्रहणञ्च सामान्यप्रत्यासत्तिमन्तरेण न भवितुमर्हति। यावद्गोव्यक्तिज्ञानं सामान्यलक्षणं विना कथं स्यादिति पूर्वपक्षिणामाशयः। समाधास्यन्नाह सिद्धान्ती–यत्किञ्चिद्गोव्यक्तेरेव गोत्वत्वरूपत्वात्। अयम्भावः—गोत्वस्य प्रतियोगित्वे प्रतियोगिनो गोत्वस्य किञ्चिद्व्यावर्तकमवश्यमेव वक्तव्यम्। पूर्वपक्षिणा यावद्गोव्यक्तीनामेव गोत्वव्यावर्तकत्वमुक्तम्। आचार्येण पुनः यत्किञ्चिद्गोव्यक्तेर्गोत्वव्यावर्तकत्वे सामान्यलक्षणायाः प्रवेश एव न स्यात्। वस्तुतस्तु, आचार्येण अद्वैतरत्नरक्षणे उक्तम्—"किञ्चिद्धि वस्तु स्वतो व्यावृत्तमिति न्यायेन गोत्वे व्यावर्तकधर्मान्तराभावाच्च; अन्यथा जात्या व्यावृत्ता गोव्यक्तिर्जातिं व्यावर्तयिष्यति, व्यक्त्या च व्यावृत्ता जातिर्व्यक्तिमिति परस्पराश्रयापत्तेः"। [अद्वैतरत्नरक्षणम् पृ० ३१]

एतेन प्रागभावप्रतीतिरपि व्याख्याता। प्रागभावस्य प्रतियोगी अनागत एव कश्चित् प्रागभावव्यावर्तकोऽभ्युपेयः। प्रागभावव्यावर्तकानागतस्य ज्ञानन्तु सामान्यलक्षणां विना न भवितुमर्हतीति पूर्वपक्षिणोऽभिप्रायः। आचार्यस्तु—अभावबुद्धौ प्रतियोग्यंशे प्रकारीभूतधर्मप्रकारकज्ञानस्यैव विशेषणतावच्छेदकप्रकारकधीविधया हेतुत्वम् न तु प्रतियोगिभानस्यापि हेतुता इत्यभिप्रेत्य प्रागभावप्रतीतिरपि व्याख्यातेत्युक्तम्। घटत्वादिना विद्यमानघटादिज्ञानात् भाविघटादिविशेषितप्रागभावत्वेन धीः शब्दादिना जायते। विद्यमानकार्ये शक्तिमत्तया गृहीताल्लिङ्गादिपदात् प्राभाकरमते भाविकार्यधीर्यथा जायते तद्वत् प्रकृतेऽपि। किञ्च, प्रागभावप्रतीतये तत्प्रतियोगिनोऽनागतस्य ज्ञानमपेक्षितमप्यनुमानादेव तद् भविष्यति, अनागतज्ञानाय सामान्यलक्षणा नोपासनीया। उक्तञ्च न्यायकुसुमाञ्जलौ—

इत्यत्र शङ्कोपपादकमनागतज्ञानमनुमानादेवेत्युक्तम्, अनुमानं च वर्तमानपाकः, पाकपूर्वकालीनः, पाकत्वादतीतपाकवदित्यादि। न च चरमपाके व्यभिचारः; साध्यसिद्ध्युपजीवकस्य व्यभिचारज्ञानस्यादोषत्वात्, अन्यथा सिद्ध्यसिद्धिव्याघातात्। किञ्च शब्दादपि सकलधूमपाकादिगोचरज्ञानसंभवः ॥९॥

---

शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः॥

इत्यत्र शङ्कोपपादकमनागतज्ञानमनुमानादेवेत्युक्तम्। अयम्भावः—वर्तमानधूमे वह्निव्यभिचारनिश्चयादनागतधूमे वह्निव्यभिचारः शङ्कनीयः। अनागतधूमज्ञानञ्च सामान्यलक्षणयेति पूर्वपक्षिण आशयः। किन्तु न्यायाचार्येण अनागतज्ञानायानुमानमुक्तम्, न सामान्यलक्षणा। व्यभिचारशङ्कोपपादनाय अनागतधूमज्ञानमपेक्षितञ्चेदनुमानादेव तस्यत्स्यतीत्युक्तम्। तथा च सामान्यलक्षणावादिन आचार्यमतमनङ्गीकुर्वाणाः।

"हन्यतां हन्यतां बालो नानेनार्थोऽस्ति जीवता।
स्वपक्षहानिकर्तृत्वाद् यः कुलाङ्गारतां गतः॥"

इति न्यायविपयतां नातिवर्तन्ते। अनुमानेन भाविज्ञानमुक्तमाचार्येण—कीदृशमनुमानं भाविज्ञानसम्पादकं स्यादित्याहाचार्यः—अनुमानञ्च, वर्तमानपाकः पाकपूर्वकालीनः पाकत्वादतीतपाकवदिति। वर्तमानपाके पाकपूर्वकालीनत्वसिद्धौ भाविपाकसिद्धिः। पूर्वपक्षी शङ्कते—न च चरमपाके व्यभिचारः। चरमपाके पाकत्वहेतौ वर्तमानेऽपि तत्र पाकपूर्वकालीनत्वाभावाद् व्यभिचारः स्यात् इत्याशङ्क्याहाचार्यः—साध्यसिद्ध्युपजीवकस्य व्यभिचारज्ञानस्यादोषत्वादन्यथासिद्ध्यसिद्धिव्याघातात् एतस्मादेवानुमानात् भाविचरमपाकोपस्थितौ तत्र व्यभिचारज्ञानं साध्यसिद्ध्युपजीवकम्। अनुमानात् तत्साध्यसिद्धिमुपजीव्यैवोपस्थितचरमपाके हेतोर्व्यभिचारशङ्का। यद्यनुमानात् चरमपाकस्योपस्थितिस्तदा व्यभिचारज्ञानं किं करिष्यति फलस्य निष्पन्नत्वात्। यदि नोपस्थितिस्तर्हि कुत्र व्यभिचारः प्रदर्शनीयः। एवञ्च एतस्मादनुमानात् चरमपाकसिद्धौ व्यभिचारोऽकिञ्चित्करः। साध्यसिद्धेर्जातत्वात्। चरमपाकासिद्धौ च

न च—शङ्कादिपूर्वं शब्दस्योपस्थितिनियमाभाव इति—वाच्यम्; कदाचिदेव शब्दादनुभूतस्य तदानीं प्रमुष्टतत्ताकस्मृतिसम्भवात् ॥१०॥

ननु—अनुमितेर्विशेषणज्ञानजन्यत्वेन सामान्यप्रत्यासत्तिसिद्धिः, न चानुमानान्तराद्विशेषणज्ञानमनवस्थानात्,—इति चेन्न; विशेषण-

---

व्यभिचारस्थानमेव नास्ति। इत्यत आह "सिद्ध्यसिद्धिव्याघातात्"। इत्युभयथापि सामान्यलक्षणाया व्याघातोक्तिसम्भवात्। किञ्च, शब्दादपि सकलधूमपाकादिगोचरज्ञानसम्भवः। अनागतसकलधूमपाकादिज्ञानमपेक्षितमपि न तदर्थं सामान्यलक्षणाप्रत्यासत्तिरुपासनीया। शब्दादप्यनागतधूमपाकादिगोचरज्ञानसम्भवात्। शब्दादनागतधूमपाकादिज्ञाने जाते तत्र व्यभिचारादिशङ्का सम्भवत्येव ॥९॥

१०—पूर्वपक्षी शङ्कते—न च शङ्कादिपूर्वं शब्दस्योपस्थितिनियमाभाव इति वाच्यम्। अयमाशयः—यत्र यत्र धूमादौ व्यभिचारादिशङ्का तत्र सर्वत्र शङ्कासमर्थनाय शब्दस्य नियमेनोपस्थित्या भाविधूमादिज्ञानमिति वक्तुं न शक्यते सर्वत्र शङ्कायाः पूर्वमुपस्थितिनियमाभावात्। समाधत्ते—कदाचिदेव शब्दादनुभूतस्य तदानीं प्रमुष्टतत्ताकस्मृतिसम्भवात्। कदाचिदेव शब्दादनागतादिधूमाद्यनुभवे जाते शङ्कायाः पूर्वमपि अनुभवजन्यसंस्कारात्। प्रमुष्टतत्ताकस्मृतिसम्भवात् अनुभवजन्यसंस्काराद् अनागतधूमादिगोचरस्मृतिर्भविष्यति, सा च स्मृतिः प्रमुष्टतत्ताका। अन्यथा स धूम इति स्मरणापत्तेः। धूमस्वरूपमात्रस्य स्मरणाय "प्रमुष्टतत्ताके"त्युक्तम् ॥१०॥

११—पूर्वपक्षी शङ्कते—अनुमितेर्विशेषणज्ञानजन्यत्वेन सामान्यप्रत्यासत्तिसिद्धिः। न चानुमानान्तरात् विशेषणज्ञानमनवस्थानात्। अयम्भावः—जन्यविशिष्टबुद्धेर्विशेषणज्ञानजन्यत्वनियमेन साध्यविशेषणकानुमितेरपि जन्यविशिष्टज्ञानत्वात् साध्यरूपविशेषणज्ञानाय सामान्यप्रत्यासत्तिः सेत्स्यति। सामान्यप्रत्यासत्तिमनादृत्यानुमानान्तरात् अनुमितेर्विशेषणज्ञानं भविष्यतीति वादिनो मतेऽनवस्थाप्रसङ्गात्। समाधत्ते सिद्धान्ती—इति चेन्न, विशेषणतावच्छेदकप्रकारकज्ञानादेव साध्यविशेषणकपक्षविशेष्यकानुमितिसम्भवात्। वह्निविशेषणकानुमितौ वह्नित्वं विशेषणत्वावच्छेदकं तत्प्रकारेण कस्यचिद् वह्नेर्ज्ञानमस्त्येव।

तावच्छेदकप्रकारकज्ञानादेव साध्यविशेषणकपक्षविशेष्यकानुमितिसंभवात्। एतेन—सुरभिचन्दनमित्यादिविशिष्टज्ञानाय कल्पिता ज्ञानलक्षणा प्रत्यासत्तिरपि—निरस्ता; चन्दनत्वेन सुरभित्वानुमानोपपत्तेः, अन्यथा साध्यविशिष्टपक्षप्रत्यक्षोपपत्तेरनुमानमात्रोच्छेदप्रसङ्गात्। न च—अभावसाध्यककेवलव्यतिरेकिणि साध्यप्रसिद्धेरनङ्गत्वात्तत्र क्लृप्ताया अनुमितिसामग्र्याः प्रत्यक्षसामग्रीतो बलवत्त्वमिति—वाच्यम्,

---

तथा च विशेषणतावच्छेदकवह्नित्वप्रकारेण यस्य कस्यचिद् वह्नेर्ज्ञानादेव वह्निविशेषणकपर्वतविशेष्यकानुभूतिसम्भवान्न सामान्यप्रत्यासत्तिरङ्गीकरणीया। एतेन सुरभिचन्दनमिति विशिष्टज्ञानाय कल्पिता ज्ञानलक्षणाप्रत्यासत्तिरपि निरस्ता एतेन सामान्यलक्षणप्रत्यासत्तिनिरसनेन ज्ञानलक्षणप्रत्यासत्तिरपि निरस्ता। सुरभिचन्दनमिति चाक्षुषसौरभज्ञानसम्पादनायैव हि पूर्वपक्षिणा सौरभज्ञानप्रत्यासत्तिरङ्गीकृता। ज्ञानलक्षणप्रत्यासत्त्या सुरभिचन्दनमिति चाक्षुषज्ञानं जातमिति पूर्वपक्षिणोऽभिमानः किन्तु ज्ञानलक्षणया सौरभे चाक्षुषज्ञानाभ्युपगमेऽपि सुरभित्वव्याप्योत्कटत्वादिज्ञानं न जायते किन्तु सामान्येन सुरभित्वरूपेणैव सौरभस्य ज्ञानं जायते। एतेन सौरभेण यच्चाक्षुषं ज्ञानं तच्चाक्षुषज्ञानान्तरविपरीतम्। चाक्षुषज्ञाने यद्भासते तत् तद्गतोत्कटत्वादिधर्मरूपेणापि भासते। परोक्षज्ञाने तु विषयः सामान्यधर्मरूपेणैव भासते, न तु विषयगतोत्कटत्वादिविशेषरूपेणापि। सौरभज्ञानं चाक्षुषमपि सामान्यरूपेणैव भासत इति कृत्वा तत्र तज्ज्ञानं परोक्षमेव। एवञ्च चन्दनत्वेन हेतुना चन्दने सुरभित्वानुमानोपपत्तेः। सुरभिचन्दनज्ञानाय न ज्ञानलक्षणा प्रत्यासत्तिरङ्गीकरणीया, अनुमानादेव सौरभज्ञानसिद्धेरिति भावः। अनुमानेन सौरभज्ञानमनभ्युपगम्य ज्ञानलक्षणया सौरभप्रत्यक्षत्वोपपादनेऽनुमानमात्रोच्छेदप्रसङ्गः स्यात्। पर्वतो वह्निमान् धूमादित्यनुमितौ साध्यज्ञानप्रत्यासत्त्या साध्यविशिष्टपक्षप्रत्यक्षोपपत्तेः अनुमानमात्रमुच्छिद्येत। समाने विषये प्रत्यक्षसामग्र्या बलीयस्त्वात्। शङ्कते—न च अभावसाध्यककेवलव्यतिरेकिणि साध्यप्रसिद्धेरनङ्गत्वात्। तत्र क्लृप्ताया अनुमितिसामग्र्याः प्रत्यक्षसामग्रीतो बलवत्त्वमिति वाच्यम्। ज्ञानलक्षणाप्रत्यासत्त्यभ्युपगमेऽनुमानमात्रोच्छेदप्रसङ्गमसहमानः पूर्वपक्षी शङ्कते—"न चाभावसाध्यके"ति। अप्रसिद्धसाध्यककेवलव्यतिरेक्यनुमाने

अर्थापत्तिवादिभिरस्माभिस्तदनभ्युपगमात्। पर्वतवृत्तिधूमो वह्निव्याप्य इति परामर्शात् साध्यविशेष्यकपक्षविशेषणकानुमित्यभ्युपगमे तु नैव काप्यनुपपत्तिः। अनुमितेः पक्षविशेष्यत्वनियमे मानाभावात्।

---

अनुमानाद् प्राक् साध्यसिद्धिरेव न सम्भवति। अतो ज्ञानलक्षणाप्रत्यासत्त्यभ्युपगमेऽपि ज्ञानलक्षणया प्रत्यासत्त्या केवलव्यतिरेक्यनुमानस्य प्रत्यक्षता सम्पाददयितुं न शक्या। अतः प्रत्यक्षाविषयीभूते केवलव्यतिरेकिसाध्यकेऽनुमानं निराबाधमेव। तत्रानुमितेः सम्पादकव्याप्तिपरामर्शादिज्ञानानुव्यवसायं बाधित्वैव केवलव्यतिरेक्यनुमितिर्जायत इति वक्तव्यम्। अतस्तदनुरोधेन प्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलीयस्त्वमङ्गीकरणीयम्। अतो ज्ञानलक्षणाप्रत्यासत्त्यभ्युपगमेऽपि अनुमानमात्रस्य नोच्छेदः। प्रत्युत प्रत्यक्षं बाधित्वैव अनुमितिर्भविष्यति, अनुमितिसामग्र्याः प्रत्यक्षसामग्रीतो बलवत्त्वात्। सामाधानमाहाचार्यः—**अर्थापत्तिवादिभिरस्माभिस्तदनभ्युपगमात्।** अयमभिप्रायः—केवलव्यतिरेकव्याप्तेरनुमानानङ्गत्वात् केवलव्यतिरेक्यनुमानमेव न सम्भवति, अतस्तत्रास्माभिरर्थापत्तिर्मानान्तरमङ्गीक्रियते। अतः ज्ञानलक्षणप्रत्यासत्त्यभ्युपगमेऽनुमानोच्छेदप्रसङ्गः सुदृढ एव। यच्च पूर्वपक्षिणा प्रागुक्तमनुमितेर्विशेषणज्ञानजन्यत्वेन सामान्यप्रत्यासत्तिसिद्धिरिति तदयुक्तमित्याह—**पर्वतवृत्तिधूमो वह्निव्याप्य इति परामर्शात् साध्यविशेष्यकपक्षविशेषणकानुमितौ तु नैव काप्यनुपपत्तिः।** साध्यविशेषणकानुमितावेव अनुमितेर्विशेषणज्ञानजन्यत्वेन पक्षीयसाध्योपस्थितये एव सामान्यलक्षणाङ्गीकरणीया स्यात्। किन्तु साध्यविशेष्यकानुमित्यभ्युपगमे साध्यस्य विशेष्यत्वेनाविशेषणत्वान्न पक्षीयसाध्यज्ञानाय सामान्यप्रत्यासत्तेरपेक्षा इत्यभिप्रेत्याहाचार्यः—पर्वतवृत्तिधूमो वह्निव्याप्य इति परामर्शात्. पक्षविशेष्यकपरामर्श एवानुमितेः कारणमित्यत्र नियामकाभावात् पक्षविशेषणकपरामर्शादपि अनुमितिसम्भवात्। पक्षविशेषणकपरामर्शादनुमितिस्तु पक्षविशेषणिका साध्यविशेष्यिकानुमितिरेव जायते। तादृशानुमित्यभ्युपगमे न विशेषणसाध्यज्ञानाय सामान्यप्रत्यासत्तेरपेक्षा। तादृशानुमित्यभ्युपगमस्तु पक्षधरादिप्राचीनतार्किकसम्मतः। पक्षधरादिमते पर्वतीयवह्नेरज्ञानेऽपि पर्वतीयवह्निविशेष्यकानुमितिसम्भवात्। तन्मते पर्वते वह्निरिति हि अनुमितिशरीरम्। अनुमितेः पक्षविशेष्यकत्वनियमो

किञ्च धूमत्वादिसामान्यं न स्वरूपतः प्रत्यासत्तिः, धूलीपटले धूमभ्रमानन्तरं धूमत्वेन सकलधूमनिष्ठवह्निव्याप्तिग्रहानुदयप्रसङ्गात्, तत्र स्वरूपतो धूमत्वाभावात्, न चेष्टापत्तिः तदुत्तरकालमनुमित्यनुदयापत्तेः, तथा च धूमत्वज्ञानं प्रत्यासत्तिरिति—वाच्यम्; तच्च धूमे-

---

नास्तीति ज्ञापनाय पक्षधरोक्तेरादर आचार्येण कृतः। अत एवाभ्युपगमे तु इत्यस्य पक्षधरादिस्वीकारादरे तु नैव काप्यनुपपत्तिः। साध्यविशेष्यकानुमितौ सामान्यलक्षणाया अपेक्षैव नास्तीति भावः। अत उक्तम् अनुमितेः पक्षविशेष्यकत्वनियमे मानाभावात्। पर्वतपक्षोद्देश्यकसाध्यविधेयकानुमितित्वेनैव तादृशपरामर्शकार्यतास्वीकारात्।

येरपि सामान्यलक्षणाङ्गीक्रियते तैरपीन्द्रियसन्निकृष्टविशेष्यकज्ञानप्रकारीभूतं सामान्यं न सामान्यप्रत्यासत्तित्वेनाङ्गीकर्तुं शक्यम्। यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां भानं न स्यात्, सामान्यस्य घटस्य तदानीमभावात्। किञ्च, इन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसम्बन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य घटत्वस्य सत्त्वात् निखिलघटज्ञानं कुतो न जायते? तस्मात् स्वरूपतः सामान्यं न प्रत्यासत्तिः, किन्तु सामान्यविषयं ज्ञानं प्रत्यासत्तिः इत्यभिप्रेत्याहाचार्यः किञ्च, धूमत्वादिसामान्यं न स्वरूपतः प्रत्यासत्तिः। स्वरूपतः सामान्यं कुतो न प्रत्यासत्तिः? इत्यत आह—धूलिपटले धूमभ्रमान्तरं धूमत्वेन सकलधूमनिष्ठवह्निव्याप्तिग्रहानुदयप्रसङ्गात्, तत्र स्वरूपतो धूमत्वाभावात्। न चेष्टापत्तिः, तदुत्तरकालमनुमित्यनुदयापत्तेः, तथा च धूमत्वज्ञानं प्रत्यासत्तिरिति वाच्यम्। इन्द्रियसन्निकृष्टविशेष्यकज्ञानप्रकारीभूतसामान्यस्य सामान्यप्रत्यासत्तित्वे धूलिपटले धूमभ्रान्त्यनन्तरं धूमत्वसामान्येन सकलधूमनिष्ठवह्निव्याप्तिग्रहानुदयप्रसङ्गः, धूलिपटले स्वरूपतो धूमत्वाभावात्। सामान्यस्य प्रत्यासत्तित्वे धूलिपटले धूमत्वाभावात्तत्र वह्निव्याप्तिग्रहो न स्यात्। ननु धूमत्वसामान्याभावात् यदि धूलिपटले वह्निव्याप्तिर्नैव गृहीता तर्ह्यपि च सेति वाच्यम्, धूलिपटले धूमभ्रमानन्तरं तादृशधूलिपटलादपि भ्रान्त्या ज्ञायमानाद् वह्न्यनुमितेरुदयः सर्वानुभवसिद्धः, स च न स्यात्। तथा च धूमत्वज्ञानं प्रत्यासत्ति-

न्द्रियसन्निकर्षदशायां धूमज्ञानात्प्राङ्नास्त्येव । निर्विकल्पके माना-भावात्, विशिष्टज्ञानत्वेन विशेषणज्ञानत्वेन च कार्यकारणभावानभ्युप-गमात्; अवश्यक्लृप्तकार्यकारणभावविशेषेणैव सर्वव्यवहारोपपत्तेः । न च धूमत्वेन सन्निकृष्टधूमव्यक्तिज्ञानानन्तरं तत्समानाकारमसन्नि-कृष्टधूमगोचरं ज्ञानान्तरमुत्पद्यत इत्यत्र मानमस्ति; धूमत्वेन पुरोवर्तिनं धूमं साक्षात्करोमि न व्यवहितमित्यनुभवाच्च । अन्यथा जगतीगत-सकलधूमव्यक्तीरहं साक्षात्करोमीत्यनुव्यवसीयेत । न चैवमनुभवमात्र-शरणैरभ्युपेयते । किञ्च सामान्यप्रत्यासत्त्यङ्गीकारे यत् प्रमेयम्,

---

रिति वाच्यम् । धूमत्वज्ञानन्तु धूलिपटले अस्त्येव । तच्च सामान्यज्ञानं धूमेन्द्रियसन्निकर्षदशायां धूमज्ञानात् प्राक् नास्त्येव धूमत्वसामान्यज्ञानं तदैव भवितुमर्हति धूमेन्द्रियसन्निकर्षदशायां यदि निर्विकल्पं प्रत्यक्षं प्रमाणसिद्धं भवेत् । विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वनियममभ्युपगम्यैव सविकल्पकप्रत्य-क्षात् प्राक् सामान्यविषयकं निर्विकल्पकं प्रत्यक्षं समर्थनीयम् । किन्तु सिद्धान्ते विशिष्टज्ञानत्वेन विशेषणज्ञानेत्वन च कार्यकारणभावानभ्युपगमाद् विशेषणज्ञानविधया निर्विकल्पकं न सिध्यतीत्याह—निर्विकल्पके मानाभावात् । विशिष्टज्ञानत्वेन विशेषणज्ञानत्वेन च कार्यकारणभावानभ्युपगमात् । अयम्भावः—परोक्ष-ज्ञाने परामर्शादेरेव विशिष्टविषयतानियामकत्वम् । प्रत्यक्षज्ञाने तु सन्निकर्षादेः विशिष्टविषयतानियामकत्वम् । तदवश्यक्लृप्तम् । तेनैव सर्वव्यवहारनिर्वाहः स्यात् । उक्तञ्च भट्टपादैः—

विशेषणं विशेष्यञ्च सम्बन्धं लौकिकीं स्थितिम् ।
गृहीत्वा संकलय्यैव तथा प्रत्येति नान्यथा ॥

स्वरूपतः सामान्यं सामान्यज्ञानञ्च न प्रत्यासत्तिरित्युक्तम् । इदानीं सामान्य-प्रत्यासत्तिजन्यसामान्याश्रयसकलव्यक्तीनां प्रत्यक्षं सर्वानुभवविरुद्धमिति दर्शयितु-मनुभवमेव प्रदर्शयति—नच धूमत्वेन सन्निकृष्टधूमव्यक्तिज्ञानानन्तरं तत्समानाकारमसन्निकृष्टधूमगोचरं ज्ञानान्तरमुत्पद्यते इत्यत्र मान-मस्ति । धूमत्वेन पुरोवर्तिनं धूमं साक्षात्करोमि, न व्यवहितमित्यनु-भवाच्च । अन्यथा—जगतीगतसकलधूमव्यक्तीरहं साक्षात्करो-

तदभिधेयम्, यत्प्रमेयवत्, तदभिधेयवदित्यादिव्याप्तिपरिच्छेदे सार्व ज्ञ्यापत्तिः। न चेष्टैव सा; परज्ञानविषयो घटो न वेत्यादिसंशयानुपपत्तेः ॥११॥

---

मीत्यनुव्यवसीयेत। न चैवमनुभवमात्रशरणैरभ्युपेयते। किञ्च न घटं चक्षुषा पश्यन्तं यदि कश्चित् पृच्छेत् कति घटास्त्वयाऽवलोकिता इति पृच्छन्तं श्रोतैव निगृह्णीयात्—एको घटः सन्निकृष्टः, कति घटा मयावलोकिता इति प्रश्न एवानुपन्नः। सन्निकृष्टविषयकं लौकिकं प्रत्यक्षम्, सामान्यप्रत्यासत्त्या तु सन्निकृष्टासन्निकृष्टसकलघटविषयकमलौकिकं प्रत्यक्षम्। तल्लौकिकालौकिकप्रत्यक्षद्वयं युगपद्वा भवति क्रमशो वा? क्रमेऽभ्युपगम्यमानेऽपि किं परमित्यत्र विनिगमनाभावात् एतादृशस्याक्षेपस्य समाधानाय यथा यथा प्रयत्नः स्यात्तथा तथा लोकानुभवविरोधः स्फुटीभवेत्।

सामान्यप्रत्यासत्त्यङ्गीकारे खण्डनोक्तं दूषणमाह—किञ्च, सामान्यप्रत्यासत्त्यङ्गीकारे यत्प्रमेयं तदभिधेयम्, यत्प्रमेयवत् तदभिधेयवदित्यादिव्याप्तिपरिच्छेदे सार्वज्ञ्यापत्तेः। न चेष्टैव सा, परज्ञानविषयो घटो न वेति संशयानुपपत्तेः। उक्तं हि खण्डने—"तर्हि प्रमेयत्वाद्याधारस्य व्यक्तिभेदस्य कृत्स्नस्य ग्रहणात् सार्वज्ञ्यापत्तिस्तादृश्येवेति। अन्यच्च तथा सति हि एकं प्रमेयं प्रत्यक्षयतः प्रमेयत्वसामान्यप्रत्यासत्त्या विश्वमेव प्रत्यक्षं स्यात्। एवमभ्युपगच्छतश्च श्रद्दधीमहि ते सार्वज्ञ्यमिदम् यदि जानासि किमस्मच्चेतसि विपरिवर्तत" इति। [ख० ख० खा० पृ०३२०] विवृतश्चैतद्विद्यासागरेण—प्रमेयत्वाधिकरणतया साकल्येन ग्रहात् सार्वज्ञ्यापत्तिर्वज्रलेपायितेति। [अनुमानखण्डन; पृ० ६५९] उक्तञ्च चित्सुखेन—"प्रमेयत्वाभिधेयत्वयोर्व्याप्तिं गृह्णतः सर्वज्ञत्वप्रसङ्गात्। ननु प्रमेयतया सर्वं ज्ञायते, न तु रूपान्तरेणेति चेत्, मैवं रूपान्तरस्यापि प्रमेयत्वाधारतया ग्रहणप्रसङ्गात्। अप्रमेयत्वे च सप्तमरसादिवत्तदसिद्धेः। येन येन रूपेण यद् यदस्ति तेन तेनाकारेण तत्तत् प्रमेयमिति स्यादेव सर्वज्ञता।" विवृतञ्चैतन्नयनप्रसादिन्याम्—"ननु प्रमेयत्वाक्रान्ताकारेण सर्वं ज्ञायते, न च रूपान्तरेण तदभावात्तत्र वक्तव्यम्। येनाकारेण तानि न ज्ञायन्ते, स किं प्रमेयो न वा? आद्ये सोऽपि ज्ञात एवेति न पूर्वोक्तदोषान्निर्मोक्षः। उत्तरस्मिंस्तु, स एव

न च—घटत्वप्रकारकघटविषयकनिश्चयो घटसंशयविरोधी, प्रमेयमितिनिश्चयस्तु घटविषयोऽपि न घटत्वप्रकारक इति—वाच्यम्; भासमानवैशिष्ट्यप्रतियोगिन एव प्रकारत्वात्, घटत्वस्यापि प्रमेयमिति ज्ञाने भासमानवैशिष्ट्यप्रतियोगित्वात्। घटत्वप्रकारकनिश्चयस्य घटत्वज्ञानजन्यत्वविशेषणाददोष इति चेत्, न, विशेषणज्ञानत्वेनैव तस्य जनकता वाच्या; तस्याः प्रागेव निरासात्; स्वरूपसम्बन्धविशेषाभ्यु-

---

नास्ति येन न ज्ञायेरन्निति"। (पृ० २३३) एतदालोच्याचार्येण सामान्यप्रत्यासत्त्यङ्गीकारे सार्वज्ञ्यापत्तिः प्रदर्शिता। यदि पूर्वपक्षी ब्रूयात्—प्रमेयत्वेन सर्वेषां ज्ञानात् यत् सार्वज्ञ्यमापादितम् तदिष्टमेव तत्राह—सार्वज्ञ्ये तस्य संशयानुपपत्तिः। परज्ञानविषयो घटो न वेति संशयानुपपत्तिः ॥११॥

१२—पूर्वपक्षी शङ्कते—न च घटत्वप्रकारकघटविषयकनिश्चयो घटसंशयविरोधी। प्रमेयमिति निश्चयस्तु घटविषयोऽपि न घटत्वप्रकारक इति वाच्यम्। पूर्वपक्षिणामयमाशयः—घटत्वप्रकारकघटविषयकनिश्चय एव घटसंशयविरोधी। समानप्रकारकनिश्चयस्यैव संशयविरोधित्वात्। प्रमेयमिति निश्चयस्तु घटविषयोऽपि न घटत्वप्रकारक इति न तादृशनिश्चयस्य संशयविरोधित्वम्। समाधानमाह—भासमानवैशिष्ट्यप्रतियोगिन एव प्रकारत्वात्। भासमानवैशिष्ट्यप्रतियोग्यनुयोगिनोरेव प्रकारताविशेष्यतारूपत्वमित्येव हि सिद्धान्तः। भासमानवैशिष्ट्ये भासमानप्रतियोगिनः एव प्रकारत्वात्। प्रमेयमिति ज्ञाने घटत्वस्य भासमानवैशिष्ट्यप्रतियोगित्वेन प्रकारत्वात्। एवञ्च प्रमेयमिति ज्ञानमपि भवति घटत्वप्रकारकम्। एवञ्च संशयविरोधित्वमपि। पूर्वपक्षी शङ्कते—घटत्वप्रकारकनिश्चय एव संशयविरोधीति मया नोच्यते किन्तु घटत्वज्ञानजन्यघटत्वप्रकारकनिश्चयस्य संशयविरोधित्वम्। प्रमेयमिति ज्ञानस्य घटत्वप्रकारकत्वेऽपि न तस्य घटत्वज्ञानजन्यत्वमिति न दोषः इत्याहाचार्यः—घटत्वप्रकारकनिश्चयस्य घटत्वज्ञानजन्यत्वविशेषणाददोष इति चेत्, घटत्वप्रकारकनिश्चयस्य घटत्वज्ञानजन्यत्वमिति यदुक्तं तद्विशेषणज्ञानत्वेनैव जनकत्वं वक्तव्यम्। विशेषणज्ञानस्य जनकत्वं तु प्रागेव निरस्तम् इत्याह—विशेषणज्ञानत्वेनैव तस्य जनकता वाच्या, तस्याः प्रागेव निरा-

पगमे चानिर्वचनीयवादापत्तेः इत्यादिदूषणानि बहुतरमूहनीयानि। तस्मात् सामान्यप्रत्यासत्त्या निषेधमात्रप्रतियोगित्वोपस्थितौ तदभावग्रहात् बाध इत्यनुपपन्नमेव ॥१२॥

इति सामान्यप्रत्यासत्तिभङ्गेन लौकिकालौकिकप्रत्यक्षबाधोद्धारः।

---

सात्। स्वरूपसम्बन्धविशेषाभ्युपगमे अनिर्वचनीयवादापत्तेः। अयमभिप्रायः—प्रमेयमिति ज्ञानस्य घटे घटत्वप्रकारकत्वेऽपि नोक्तसंशयविरोधित्वम्। ज्ञानरूपविषयताविशेषरूपस्य प्रकारत्वस्य तत्तज्ज्ञानव्यक्तित्वेनैव रूपेण प्रतिबन्धकतावच्छेदके निवेश्यत्वेन प्रमेयमिति ज्ञानव्यक्तेः तद्व्यक्तित्वेन तत्र निवेशासम्भवात्। तत्राह स्वरूपसम्बन्धेत्यादि। स्वं न स्वस्य सम्बन्धः, स्वं न स्वीयमित्यनुभवात्। अथ तद्व्यक्तित्वेन सम्बन्धत्वं, ज्ञानत्वादिना सम्बन्धित्वमितिरूपभेदेन भेदं स्वीकृत्य स्वस्यापि स्वप्रतियोगिकसम्बन्धत्वं वाच्यम्। तथापि ज्ञानत्वविशिष्टस्य तद्व्यक्तित्वविशिष्टाभेदे तयोर्भेदासम्भवः इति अभेदे भेदस्य मिथ्यात्वस्य वाच्यत्वेन अनिर्वचनीयवादापत्तेः।

प्रकरणमुपसंहरन्नाहाचार्यः—इत्यादिदूषणानि बहुतरमूहनीयानि। तस्मात् सामान्यप्रत्यासत्त्या निषेधमात्रप्रतियोगित्वोपस्थितौ तदभावग्रहाद्बाध इत्यनुपपन्नमेव। स्वसमानाधिकरणयावदत्यन्ताभावप्रतियोगित्वाभावरूपं सत्त्वमेव मिथ्यात्वविरोधि। तादृशसत्त्वस्य लौकिकालौकिकप्रत्यक्षाभ्यामुपपादयितुमशक्यत्वात् न मिथ्यात्वानुमाने प्रत्यक्षबाधः सम्भवति इति संक्षेपः ॥१२॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यां सामान्यप्रत्यासत्तिभङ्गेन लौकिकालौकिकप्रत्यक्षबाधोद्धारः समाप्तः।

## अथ साक्षिबाधोद्धारः

ननु—प्रत्यक्षस्य वर्तमानमात्रग्राहित्वे, शुक्तिरूप्यादेः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं कथं प्रत्यक्षं स्यात्? अथ तत्र रजतत्वविरोधिशुक्तित्वे साक्षात्कृते तदन्यथानुपपत्त्या च रज-

---

१—व्यावहारिकप्रत्यक्षं प्रमाणमपि कालत्रयाबाध्यत्वरूपसत्त्वग्रहाक्षममिति प्रतिपादयितुं साक्षिबाधोद्धारप्रकरणमारभते। विवरणाचार्यैः प्रतिपन्नोपाधौ अभावप्रतियोगित्वं मिथ्यात्वं नामेत्युक्तम् [ पृ० २१२ ]। विवरणोक्तिमेवानुश्रित्याचार्येण द्वितीयमिथ्यात्वलक्षणमुक्तं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्यात्वम्। एतदेव मिथ्यात्वं दृश्यत्वादिभिर्हेतुभिः प्रपञ्चेऽनुमितम्। प्रपञ्चमिथ्यात्वानुमानमसहमानः पूर्वपक्षी साक्षिप्रत्यक्षात्मकं बाधकं शङ्कते। साक्षात स्वविषयस्य गगनादेः भाविकालनिषेधाप्रतियोगित्वं सकलकालग्राहिणा साक्षिणा गृह्यते। तथा च भाविकालनिषेधाप्रतियोगित्वं प्रपञ्चस्य यदि साक्षिणा ग्रहीतुं शक्यते तर्हि साक्षिप्रत्यक्षेणैव मिथ्यात्वानुमानबाधः स्यात। तत्रादौ भाविकालसत्त्वग्राहकेण साक्षिणा त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वानुमानं बाध्यते इति पूर्वपक्षिणोऽभिमानः। प्रथमतः पूर्वपक्षी इदमेवाशङ्कते—ननु प्रत्यक्षस्य वर्तमानमात्रग्राहित्वे शुक्तिरूप्यादेः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं कथं प्रत्यक्षं स्यात्। अयमभिप्रायः—विवरणाचार्येण रजतादीनां मिथ्यात्वे साक्षिप्रत्यक्षमेवोपन्यस्तम्। उक्तं च विवरणे—तथा च उभयसंविद्विषयानुभवो नास्त्यत्र रजतं मिथ्यैव रजतमभादिति। [ पृ० १६१ ] पुनरप्युक्तम्—अतः सर्वदोषपरिहाराय यथा प्रतिपन्नस्य मिथ्यात्वं नाम एकस्वभावो नास्त्यत्र रजतं, मिथ्यैव रजतमभादित्यनुभवसिद्धः समाश्रयणीयः। [ पृ० २०५ ]। तत्र पूर्वपक्षी शङ्कते—प्रत्यक्षस्य विद्यमानोपलम्भनत्वात् वर्तमानमात्रग्राहित्वमेव। अतः शुक्तिरूप्यादेः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं कथं साक्षिप्रत्यक्षं स्यात्। शुक्तिरजतादेर्मिथ्यात्वं साक्षिणा न ग्रहीतुं शक्यते इति पूर्वपक्षिणोऽभिप्रायः। समाधत्ते—अथ तत्र रजतत्व-

तत्वाभावे निश्चिते मिथ्यैव रजतमभादिति तादृङ् निषेधप्रत्ययः स्वसम्बन्धसर्वभासकेन साक्षिणैवोपपन्नः ॥१॥

तर्हि साक्षात् स्वविषयस्य गगनादेर्भाविकालनिषेधाप्रतियोगित्वं सकलकालग्राहिणा साक्षिणा गृह्यतामिति—चेन्न, साक्षिणो विद्यमान-

---

विरोधिशुक्तित्वे साक्षीकृते तदन्यथानुपपत्त्या च रजतत्वाभावे निश्चिते मिथ्यैव रजतमभादिति तादृङ् निषेधप्रत्ययः स्वसम्बद्धसर्वाभासकेन साक्षिणैवोपपन्नः। शुक्तौ रजतभ्रमानन्तरमत्र रजतत्वं नास्ति इत्याकारकः प्रात्यक्षिको बाधः प्रायः सर्वैरनुमन्यते। नात्र रजतत्वमिति बाधस्तु प्रथमत एव भवितुं नार्हति रजतभ्रान्तिविरोधात्। किन्तु दोषापगमेऽधिष्ठानशुक्तितत्त्वसाक्षात्कारे जाते इदमि शुक्तित्वस्य साक्षात्कारात् इदमि शुक्तितत्त्वसाक्षात्कारान्यथानुपपत्त्या रजतत्वाभावो निश्चीयते। रजतत्वविरोधिशुक्तित्वसाक्षात्काराभावे रजतत्वाभावनिश्चयो न भवितुमर्हति। अतः भ्रमानन्तरमियं शुक्तिरित्येव साक्षात्कारो जायते। इदमि रजतत्वविरोधिशुक्तित्वसाक्षात्कारान्यथानुपपत्त्या रजतत्वाभावस्तत्र निश्चीयते। तथा च "इयं शुक्ति" रित्येव बाधकज्ञानं, तदनुनिष्पादि "नात्र-रजतम्" वा, "नेदं रजतम्" वेति बाधकज्ञानम्। शुक्तित्वप्रकारिकाऽविद्यैव रजतोपादानम्। शुक्तित्वसाक्षात्कारे जाते समानविषयिणी अविद्या निवर्तते। अविद्यायां निवर्तितायां तदुपादानकं रजतमपि निवर्तते। ततः नेदं रजतमिति बाधबुद्धिरुदेति। शुक्तितत्त्वसाक्षात्कारात् प्रागियं बाधबुद्धिर्नोदेतुमर्हतीति भावः। तादृङ् निषेधप्रत्यय इति प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रत्यय इत्यर्थः। साक्षी तु स्वसम्बद्धं सर्वमवभासयतीति स्थितिः। इदमंशावच्छिन्नचैतन्याभिन्नसाक्षिचैतन्यस्था अविद्या रजतरूपेण परिणता आसीत्। अधिष्ठानतत्त्वसाक्षात्कारे जाते अर्थापत्तिप्रमाणसहायेन रजतत्वाभावे निश्चिते स्वसम्बद्धसर्वावभासकसाक्षी एव तादृङ् निषेधं गृह्णातीति ॥१॥

२—पूर्वपक्षी शङ्कते—तर्हि साक्षात् स्वविषयस्य गगनादेः भाविकालनिषेधाप्रतियोगित्वं सकलकालग्राहिणा साक्षिणा गृह्यताम्। यदि साक्षिणः स्वसम्बद्धसर्वावभासकत्वं तर्हि ज्ञानज्ञानविमेषणैरपेक्ष्येण गगनादेः साक्षात् साक्षिभास्यत्वाङ्गीकारात् गगनादेर्भाविकालनिषेधाप्रतियोगित्वरूपममिथ्यात्वं

सर्वावभासकत्वेनाविद्यमानभाविबाधाभावभासकत्वानुपपत्तेः, साक्षिज्ञानस्य भ्रमप्रमासाधारणत्वेन प्रमाणाबाधकत्वाच्च ॥२॥

ननु—ज्ञानप्रामाण्यं गृह्णन् साक्षी घटादिगतमबाध्यत्वं गृह्णात्येव, न हि विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणं नाम इति चेत् ॥३॥

---

सकलकालग्राहिणा साक्षिणा गृह्यतामिति । साक्षिप्रत्यक्षेणैव तदा गगनादेर्मिथ्यात्वानुमानं बाधिष्यते । समाधत्ते—इति चेन्न, साक्षिणो विद्यमानसर्वावभासकत्वेनाविद्यमानभाविबाधाभावावभासकत्वानुपपत्तेः । विद्यमानसर्वावभासकः साक्षी, तेन विद्यमानं सर्वं गृह्यते, नाविद्यमानम् । भाविबाधाभावस्तु न विद्यमानमतो न साक्षिणा ग्रहीतुं शक्यते । भाविकाले यः प्रतीयमानो निषेधः तस्य अभावो न साक्षिणा ग्रहीतुं शक्यते । अविद्यमानो यो भाविबाधः भाविकालावच्छिन्नं प्रतिपन्नोपाधौ निषेधप्रतियोगित्वधीविषयत्वं तदभावासाधकत्वादित्यर्थः । उक्तधीविषयत्वस्य इदानीं साक्ष्ययोग्यत्वात्तदभावोऽपीदानीं साक्ष्ययोग्य एव । गगनादेर्भाविकालनिषेधाप्रतियोगित्वं साक्षिग्राह्यमिति पूर्वपक्षिमतमभ्युपेत्यापि परिहरति—साक्षिज्ञानस्य भ्रमप्रमासाधारणत्वेन प्रमाणाबाधकत्वाच्च । सुखाद्यंशे साक्षिज्ञानस्य प्रमात्वस्येव शुक्तिरजताद्यंशे साक्षिज्ञानस्य भ्रमत्वस्यापि साक्षिणा गृह्यमाणत्वेन त्रिकालनिषेधाप्रतियोगित्वांशेऽपि साक्षिज्ञानस्य भ्रमत्वशंकासम्भव इति भावः । तथा च साक्षिज्ञानस्य भ्रमप्रमासाधारणत्वात् तस्य मिथ्यात्वानुमानप्रमाणबाधकत्वासम्भवात् । अत एव वेदान्तपरिभाषायां साक्षिज्ञानस्य भ्रमप्रमासाधारणतया अप्रमाणत्वोक्तिरपि सङ्गच्छते । अप्रमाणेन च प्रमाणबाधकत्वमनुपपन्नम् । अतोऽनुमाने साक्षिबाधशङ्कैव नोदेति ॥२॥

३—इदानीं प्रकारान्तरेण पूर्वपक्षी शङ्कते—ननु ज्ञानप्रामाण्यं गृह्णन् साक्षी घटादिगतमबाध्यत्वं गृह्णात्येव । नहि विषयाबाधमनन्तर्भाव्य प्रमाण्यग्रहणं नामेति । वेदान्तिमते प्रामाण्यस्य ज्ञप्तौ स्वतस्त्वमङ्गीक्रियते । तच्च दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वम् । स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानम् । तेनापि साक्षिणा वृत्तिज्ञाने गृह्यमाणे वृत्तिज्ञानगतप्रामाण्यमपि गृह्यते इत्युक्तं वेदान्तपरिभाषायाम् । प्रमा तु अनधिगताबाधितार्थविषयकज्ञानत्वमिति यद्यप्युक्तं परिभाषायां तथापि आचार्येण अद्वैतरत्नरक्षणे "अज्ञातार्थ-

न, व्यवहारकालाबाध्यत्वमात्रेण प्रवृत्तावपि संवादोपपत्तेः तद्रूप-

---

निश्चयात्मकत्वमेव प्रामाण्यमस्मत्पक्षे, तच्च सर्वत्रानुगतं भ्रमज्ञानस्यापि तथा-रूपत्वात् । न च भ्रमज्ञानेऽतिव्याप्तिः, तद्विषयस्य भ्रममात्रकालीनत्वेन अज्ञात-त्वाभावात्" (पृ०३२) इत्युक्तम् । भ्रमज्ञाने लक्षणस्यातिव्याप्तिवारणायैव परि-भाषाकृता अबाधितार्थविषयकत्वमुक्तम् । किन्तु अनधिगतपदेनैव भ्रमवारणात् पुन-र्भ्रमवारणाय "अबाधित" पदोपादानं परिभाषाकृतां वेदान्तरहस्यानवबोधविजृम्भि-तमेव । तत्तु आचार्यीयलक्षणे स्पष्टम् । वेदान्तसिद्धान्तानुसारि प्रमालक्षणं यत् परिभाषायामुक्तं तत् निर्विचारबुद्ध्या सर्वैरेव परिगृह्यते । तेनाज्ञानस्य परिसमाप्तिः कदापि न भविष्यति । लक्षणमिदं पूर्वमीमांसामतानुसारि नोत्तरमीमांसामतानु-सारि । तथा चेयं मीमांसापरिभाषा स्यादपि न वेदान्तपरिभाषा भवितुमर्हति । एवं प्रमालक्षणे समालोचितेऽबाधितत्वं प्रमालक्षण एव न प्रविष्टम् । तथा च पूर्वपक्षि-णामियमाशङ्का सर्वथा स्थाने एव प्रसारिता, तथाप्याचार्यः तुष्यतुदुर्जनन्यायेन सिद्धान्तरहस्यम् ज्ञापयन्नेव पूर्वपक्षिमतमनुवर्तमानः सिद्धान्तयति । वस्तुतस्तु अज्ञा-तार्थनिश्चयत्वं वा अबाधितार्थनिश्चयत्वं वा प्रमालक्षणम् । न तु मिलितं लक्षणम् । मिलितस्य लक्षणत्वे केवलव्यतिरेक्यनुमाने व्यर्थविशेषणत्वेन हेतोर्व्या-प्यत्वासिद्धिः स्यात् । विषयाबाधितत्वघटितं प्रामाण्यमभ्युपेत्यैव पूर्वपक्षी शङ्कते—साक्षिणा प्रामाण्ये गृहीते विषयस्याबाध्यत्वमपि साक्षिणैव ग्रहीतव्यं स्यात् । न हि विषयाबाधमनन्तर्भाव्य प्रामाण्यग्रहणं नामेत्युक्तं पूर्वपक्षिणा । विषयाबाधस्य प्रामा-ण्यशरीरे एवाप्रवेशात् इयं शङ्कैवासङ्गता ॥३॥

४—सिद्धान्ती पूर्वपक्षिणमनुसृत्य समाधत्ते—न, **व्यवहारकालाबाध्यत्वमात्रेण प्रवृत्तावपि सम्वादोपपत्तेः**। प्रमातुः प्रमेये प्रवृत्त्युपपादनायैव प्रामाणस्य स्वतस्त्वं विचार्यते । यादृशे प्रामाण्ये गृहीते प्रमातुः संवादिनी प्रवृत्तिः स्यात् तादृशप्रामाण्यस्य स्वतोग्राह्यत्वं निरूप्यते । प्रवृत्तिसम्वादोपयोगि प्रामाण्यं तु व्यवहारकालाबाध्यविषयकत्वमात्रेणैव सिद्ध्यति, त्रिकालाबाध्यत्वं संवादिप्रवृत्तावनपेक्षितम् । अतो घटादिज्ञानगतप्रामाण्यं गृह्णन् साक्षी घटादीनां व्यवहारकालाबाध्यत्वभागं गृहीत्वैव विरमति, त्रिकालाबाध्यत्वन्तु विषयस्य नैव सम्भाव्यते नापि प्रवृत्तावपेक्षितम् । व्यवहारकालाबाध्यत्वग्रहणेनैव संवादिप्रवृत्त्यु-

गतप्रामाण्यस्य साक्षिणा ग्रहणेऽपि विरोधाभावात्। न हि घटादिज्ञानस्य संवादिप्रवृत्तिजनकतावच्छेदकं प्रामाण्यं त्रिकालाबाध्यविषयकत्वम्; किन्तु शुक्तिरूप्यादिज्ञानव्यावृत्तं व्यवहारकालाबाध्यविषयकसकलज्ञानवृत्तिव्यवहारकालाबाध्यविषयकत्वमेव। तच्च न भाविकालबाधविरोधीत्युक्तम्। भाविकालबाधतदभावौ न च मानं विना साक्षिणा ग्रहीतुं शक्यौ, तस्य विद्यमानमात्रग्राहित्वादिति चोक्तम्। ननु—तर्हि देहात्मैक्यज्ञानमुष्णं जलमित्यादिज्ञानं च प्रमा स्यात्, व्यवहारदशायां विषयाबाधात्—इति—चेन्न; आब्रह्मज्ञानमबाधितत्वेन तेषामपि घटादिज्ञानसमानयोगक्षेमत्वात्। ननु—कालान्तरस्थमपि यत् बाधकं तदपि किं

---

पपत्तेः। व्यवहारकालाबाध्यत्वरूपप्रामाण्यस्य साक्षिणा ग्रहणेऽपि विरोधाभावात्। व्यवहारकालाबाध्यत्वरूपं प्रामाण्यं घटादिज्ञानगतं यदि साक्षिणा गृह्येतापि तथापि प्रकृतानुमाने विरोधाभावात्, न साक्षिणा विरुध्यते। नहि घटादिज्ञानस्य संवादिप्रवृत्तिजनकतावच्छेदकं प्रामाण्यं त्रिकालाबाध्यविषयकत्वं किन्तु शुक्तिरूप्यादिज्ञानव्यावृत्तं व्यवहारकालाबाध्यविषयकसकलज्ञानवृत्तिव्यवहारकालाबाध्यविषयकत्वमेव। तच्च न भाविकालविरोधीत्युक्तम्। घटादिज्ञानस्य संवादिप्रवृत्तिजनकता वर्तते। सा जनकता प्रामाण्येनावच्छिद्यते, तच्च प्रामाण्यं व्यवहारकालाबाध्यविषयकत्वमेव, न तु त्रिकालाबाध्यविषयकत्वम्। व्यवहारकालाबाध्यविषयकत्वं विसंवादिप्रवृत्तिजनके शुक्तिरजतादिज्ञाने नास्ति। किन्तु व्यवहारकालाबाध्यविषयकसंवादिसकलज्ञानवृत्तिव्यवहारकालाबाध्यविषयकत्वम्। एतच्च प्रामाण्यं गृहीतमपि साक्षिणा ज्ञानविषयस्य भाविकालबाधविरोधि। भाविकालबाधतदभावौ न प्रमाणव्यतिरेकेण केवलेन साक्षिणा ग्रहीतुं शक्यौ, साक्षिणो विद्यमानमात्रग्राहित्वादिति भावः। इदानीं पूर्वपक्षी शङ्कते—व्यवहारकालाबाध्यत्वमेव यदि ज्ञानगतं प्रामाण्यं तर्हि देहात्मैक्यज्ञानमुष्णजलज्ञानञ्च व्यवहारकालाबाध्यविषयकमिति कृत्वा तदपि ज्ञानं प्रमा स्यात्, व्यवहारदशायां विषयाबाधादित्याह पूर्वपक्षी—ननु तर्हि देहात्मैक्यज्ञानमुष्णं जलमित्यादि ज्ञानं च प्रमा स्याद् व्यवहारदशायां बाधाभावात्। समाधत्ते सिद्धान्ती—इति चेन्न। आब्रह्मज्ञानमबाधितत्वेन

यत्कालावच्छेदेन अनेन स्वार्थो गृहीतस्तत्कालावच्छेदेनैव तन्निषेधति, उतान्यकालावच्छेदेन, आद्ये कथमस्य प्रामाण्यम्? अन्त्ये अनित्यत्वादिकमेव इति चेत् ॥४॥

न, अबाध्यत्वरूपप्रामाण्यस्य प्रपञ्चज्ञाने मयाऽनङ्गीकारात्।

यत्कालावच्छेदेनैवानेन स्वार्थो गृहीतस्तत्कालावच्छेदेनैव तन्निषेधाभ्युपगमात्। तच्च प्रामाण्यं मयाभ्युपेयते। तत् व्यवहारदशायां

---

तेषामपि घटादिज्ञानसमानयोगक्षेमत्वात्। देहात्मैक्यज्ञानमुष्णं जलमिति ज्ञानञ्च घटादिज्ञानवद् आब्रह्मज्ञानमबाधितविषयकत्वेन व्यवहारतः प्रमैव। सर्वेषां व्यवहारसाधकज्ञानानां व्यवहारकालमात्राबाध्यविषयकत्वेन व्यावहारिकं प्रामाण्यम्। उक्तञ्च सुन्दरपाण्ड्याचार्यैः—

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥"

न तु कालत्रयाबाध्यविषयकत्वेन पारमार्थिकं प्रामाण्यं व्यवहारसाधकज्ञानानामिति भावः। शङ्कते कालान्तरस्थमपि यद् बाधकं तदपि किं यत्कालावच्छेदेनानेन स्वार्थो गृहीतस्तत्कालावच्छेदेनैव तन्निषेधति उत अन्यकालावच्छेदेनाद्ये कथमस्य प्रामाण्यम्, अन्त्येऽनित्यत्वादिकमेव स्यात् न तु मिथ्यात्वमिति। अयम्भावः—त्वन्मते व्यवहारिकप्रमाणानां घटादिज्ञानानां भाविकाले बाधकं प्रमाणमुपगतं व्यवहारिकमानेन यत्कालावच्छेदेन स्वार्थो गृहीतः तत्कालावच्छेदेनैव व्यवहारिकमानार्थं निषेधति ? अन्यकालावच्छेदेन वा ? आद्ये अनेन बाधकप्रमाणेन रजतज्ञानवद् यस्मिन् काले यत्रार्थो गृहीतस्तस्मिन्नेव काले तत्रार्थस्य निषेधात् प्रमाणानां व्यावहारिकमपि प्रामाण्यं न स्यात् शुक्तिरजतज्ञानानामिव प्रातिभासिकमेव प्रामाण्यं स्यात्। अन्त्ये यस्मिन् काले यत्र योऽर्थो गृहीतः पूर्वज्ञानेन तस्मिन्नेव कालादौ बाधकज्ञानेन सोऽर्थोऽप्रतिषिद्ध एव अन्यदैव तु निषिद्ध इति अनित्यत्वमेव न मिथ्यात्वमिति ॥४॥

५—समाधत्ते सिद्धान्ती—चेन्न, अबाध्यत्वरूपप्रामाण्यस्य प्रपञ्चज्ञाने मयाऽनङ्गीकारात्। व्यवहारकालाबाध्यत्वमात्रेणैव व्यावहारिकज्ञानानां प्रामाण्याङ्गीकारात् सर्वथा अबाध्यत्वरूपपारमार्थिकप्रामाण्यस्य व्यवहारिकज्ञानेऽसम्भवात्।

विपरीतप्रमारूपबाधकस्यानुत्पन्नत्वादस्त्येव। न च—यत् भवतां घटादिबुद्धेः प्रातिभासिकबुद्धितो वैलक्षण्यं विषयस्य व्यवहारिकसत्त्वसाधकम्, तदेवेह मम विषयस्य पारमार्थिकसत्त्वसाधकमस्त्विति—वाच्यम्; प्रतिभासिकबुद्धिवैलक्षण्यं हि घटादिबुद्धेः सप्रकारकज्ञानाबाध्यविषयत्वादिरूपम्; तन्न पारमार्थिकसत्त्वम् घटादेः साधयितुं शक्तम्,

---

यत्कालावच्छेदेनैवानेन स्वार्थो गृहीतस्तत्कालावच्छेदेनैव तन्निषेधाभ्युपगमात्। व्यावहारिकमानेन यत्कालाद्यवच्छेदेनैव स्वार्थो गृहीतो भाविबाधकप्रमाणेन तत्कालाद्यवच्छेदेनैव तदर्थनिषेधाभ्युपगमादिति भावः। व्यवहारकालाबाध्यत्वमेव प्रामाण्यं व्यवहारिकमानानामिति तच्च प्रामाण्यं मयाऽभ्युपेयते। तद् व्यवहारदशायां विपरीतप्रमारूपबाधकस्यानुत्पन्नत्वादस्त्येव। एतदेव प्रामाण्यं व्यावहारिकमानानां मया स्वीक्रियते। भाविनि काले विपरीतप्रमारूपबाधके जातेऽपि व्यवहारदशायां बाधकस्यानुत्पन्नत्वाद् व्यवहारकालाबाध्यत्वरूपं व्यावहारिकप्रामाण्यं तेषामक्षतमेव। अत एव यदुक्तं पूर्वपक्षिणा आद्ये कथमस्य प्रमाण्यमिति तन्निरस्तमेव। तेषां व्यावहारिकाप्रामाण्यस्याभ्युपगमात्। बाधकज्ञानोदयं यावत्तेषां प्रामाण्यमक्षतमेवेति भावः। अचिरबाध्यत्वं शुक्तिरजतादेर्घटादेर्व्यावहारिकस्य तु चिरबाध्यत्वमिति विवेकः। बाध्यत्वं द्वयोरविलक्षणमेव। चिराचिरबाध्यत्वेन द्वयोर्वैलक्षण्यमिति भावः। शङ्कते—न च यद् भवतां घटादिबुद्धेः प्रातिभासिकबुद्धितो वैलक्षण्यं विषयस्य व्यावहारिकसत्त्वसाधकं तदेवेह मम विषयस्य पारमार्थिकसत्त्वसाधकमस्त्विति वाच्यम्। उक्तञ्च पूर्वपक्षिणा—

प्रातिभासिकवैधर्म्यं तव येन प्रसिध्यति।
घटादेः परमार्थत्वं मम तेनैव सेत्स्यति॥

प्रत्यक्षस्य त्रिकालाबाध्यत्वरूपपारमार्थिकसत्त्वग्राहित्वाभावेनाप्रामाण्ये घटादेः प्रातिभासिकवैधर्म्यरूपं व्यावहारिकत्वं न सिध्येत्, न चार्थक्रियाकारित्वेन तद्वैधर्म्यसिद्धिरिति वाच्यम्, तस्यैव मम तात्त्विकत्वसाधकत्वादिति पूर्वपक्षिणामाशयः। समाधानमाह—प्रातिभासिकबुद्धिवैलक्षण्यं हि घटादिबुद्धेः सप्रकारकज्ञानाबाध्यविषयकत्वादिरूपं तन्न पारमार्थिकसत्त्वं घटादेः साधयितुं

देहात्मैक्यज्ञाने ब्रह्मज्ञानाव्यवहितभ्रमे च व्यभिचारात् ॥५॥

ननु—"घटस्सन्" "रूप्यं मिथ्ये"ति प्रतीत्योरविशेषे कथं "घटो मिथ्या रूप्यमिथ्यात्वं न मिथ्ये"ति विशेषः? न च तदपि मिथ्यैव; रूप्यतात्त्विकत्वापत्तेः इति चेन्न; मिथ्यात्वमिथ्यात्वेऽपि यथा न रूप्यस्य तात्त्विकत्वं तत्रोपपत्तेरुक्तत्वात्। न च—पारमार्थिकसत्त्वस्य प्रत्यक्षा-

---

शक्तं देहात्मैकत्वज्ञाने ब्रह्मज्ञानाव्यवहितभ्रमे च व्यभिचारात्। प्रातिभासिकबुद्धितो घटादिबुद्धेरेतद् वैलक्षण्यं यत् प्रातिभासिकबुद्धिः सप्रकारकज्ञानबाध्या शुक्तित्वप्रकारकज्ञानबाध्या हि शुक्तिरजतबुद्धिः। घटादिबुद्धिस्तु शुद्धब्रह्मविषयकनिर्विकल्पकापरोक्षज्ञानबाध्या न सप्रकारकज्ञानबाध्या निष्प्रकारकबुद्धिबाध्यत्वेन अबाध्यत्वरूपपारमार्थिकसत्त्वं घटादीनां नैव सिध्यति। बाध्यं कथमबाध्यं स्यात्। यन्निष्प्रकारकबुद्धिबाध्यं तत् पारमार्थिकमिति व्याप्तिर्न सम्भवति देहात्मैक्यादौ व्यभिचारात्। निष्प्रकारकब्रह्मज्ञानबाध्यमपि देहात्मैक्यं न पारमार्थिकं केनापि स्वीकर्तुं शक्यम्। देहात्मैक्यस्य पारमार्थिकत्वे विमतावपि ब्रह्मसाक्षात्काराव्यवहितपूर्वप्रातिभासिकभ्रमे व्यभिचारात्। ब्रह्मसाक्षात्काराव्यवहितपूर्वो भ्रमो निष्प्रकारकब्रह्मज्ञानेनैव बाध्यते। तादृशभ्रमविषयस्तु प्रातीतिकः कथमपि न पारमार्थिकः, तथा च प्रदर्शिताया व्याप्तेः सुदृढो व्यभिचारः ॥५॥

६—पूर्वपक्षी शङ्कते—ननु घटः सन् रूप्यं मिथ्येति प्रतीत्योरविशेषेऽपि कथं घटो मिथ्या रूप्यमिथ्यात्वं न मिथ्येति विशेषः? न च तदपि मिथ्यैव रूप्यतात्त्विकत्वापत्तेः। उक्तञ्च पूर्वपक्षिणा—

"प्रत्यक्षसिद्धं विश्वस्य सत्यत्वं नैव तात्त्विकम्।
तर्ह्यक्षसिद्धं रूप्यादिमिथ्यात्वं तात्त्विकं कथम् ॥"

विश्वसत्यत्वरजतमिथ्यात्वप्रत्यक्षयोरविशेषेऽपि सत्यत्वमतात्त्विकं मिथ्यात्वं तात्त्विकमिति वैलक्षण्यं कथं रूप्यमिथ्यात्वस्यापि मिथ्यात्वेऽर्थात् कालान्तरबाध्यत्वे च रूप्यं तात्त्विकं स्यात्। उक्तञ्च पूर्वपक्षिणा—

"मिथ्यात्वं यद्यबाध्यं स्यात् सदद्वैतमतक्षतिः।
मिथ्यात्वं यदि बाध्यं स्यात् जगत्सत्यत्वमापतेत् ॥"

समाधत्ते—मिथ्यात्वमिथ्यात्वेऽपि यथा न रूप्यस्य तात्त्विकत्वं

गोचरत्वे तन्निषेधश्रुतीनामप्रसक्तप्रतिषेधकता स्यादिति–वाच्यम्; तासां चक्षुरादिप्रसक्तद्वैतनिषेधपरत्वात्, पारमार्थिकत्वेन द्वैतनिषेध-परत्वेऽपि नाप्रसक्तनिषेधकत्वम्; परोक्षप्रसक्तेः संभवात्, "नान्तरिक्षेऽग्निश्चेतव्य" इत्यादिवदप्रसक्तप्रतिषेधस्याप्युपपत्तेश्च ॥६॥

---

तत्रोपपत्तेरुक्तत्वात्, द्वितीयमिथ्यात्वलक्षणनिरूपणावसरे मिथ्यात्वमिथ्यात्ववादे च। तत्र मिथ्यात्वघटकात्यन्ताभावीयप्रतियोगिता दृश्यत्वादिनैवावच्छिद्यते प्रतियोगितावच्छेदकं दृश्यत्वादिकञ्च यथा रजते वर्तते तथा रजतमिथ्यात्वेऽपि वर्तते अतो मिथ्यात्वसाधकं मानं रजतादेर्मिथ्यात्वं साधयन्मिथ्यात्वस्यापि मिथ्यात्वं साधयतीति न मिथ्यात्वस्य मिथ्यात्वे रजतसत्यत्वापत्तिः। नहि मिथ्यात्वस्य मिथ्यात्वसाधकं मानं रजतस्य मिथ्यात्वमसाधयदेवोदेति किन्तु रजतस्य मिथ्यात्वं साधयत् मिथ्यात्वस्यापि मिथ्यात्वं साधयतीति न पूर्वपक्षोक्तदोषावसरः। शङ्कते—न च पारमार्थिकसत्त्वस्य प्रत्यक्षागोचरत्वे तन्निषेधश्रुतीनामसक्तप्रतिषेधकता स्यादिति वाच्यम्। उक्तञ्च पूर्वपक्षिणा—

"पारमार्थिकसत्यत्वं न चेत् प्रत्यक्षगोचरः।
तन्निषेधश्रुतीनां स्यादप्रसक्तनिषेधता ॥

समाधत्ते—तासां चक्षुरादिप्रसक्तद्वैतनिषेधपरत्वात् पारमार्थिकत्वेन द्वैतनिषेधपरत्वेऽपि नाप्रसक्तनिषेधपरत्वं परोक्षप्रसक्तेः सम्भवात्। नान्तरिक्षेऽग्निश्चेतव्यइत्यादिवत् अप्रसक्तप्रतिषेधस्याप्युपपत्तेश्च। दृश्यत्वादिरूपेण चक्षुरादिना ब्रह्मणि ज्ञातस्य द्वैतस्य निषेधपरत्वात्तासां श्रुतीनामिति भावः। ब्रह्मणि प्रपञ्चस्य स्वरूपेण त्रैकालिकनिषेधपरत्वं प्रपञ्चनिषेधश्रुतीनामिति भावः। उपपादितञ्चैतत द्वितीयमिथ्यात्वनिरूपणावसरे। तत्रैव पारमार्थिकत्वेन त्रैकालिकनिषेधपरत्वमपि प्रतिपादितम् पारमार्थिकत्वेन द्वैतनिषेधपरत्वेऽपि नाप्रसक्तनिषेधकत्वं श्रुतीनामनुमानाभासादिना प्रपञ्चे पारमार्थिकत्वस्य परोक्षप्रसक्तेः सम्भवात्। अप्रसक्तप्रतिषेधेऽपि न दोष इत्याह—नान्तरिक्षेऽग्निश्चेतव्य इति। पूर्वतन्त्रे अर्थवादाधिकरणे चिन्तितमेतत् "न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवी"ति अत्र न प्रतिषेधधीः प्रतियोगिनोऽन्तरिक्षादिनिष्ठचयनस्याप्रसक्तत्वात् चयनविधिना पृथिव्यां चयनस्य प्रमितत्वेन प्रतिषेधबुद्ध्यसम्भवात्तस्मादुक्तवाक्य-

न च–अतात्त्विकप्रपञ्चे यदि तात्त्विकत्वमप्यध्यक्षेण न गृह्यते, कथं तर्हि तस्यातत्त्वावेदकत्वम्? नहि तदेव तत्त्वेनावेदयत्तात्त्विकं नाम, दृश्यते च सार्वलौकिकप्रपञ्चे पारमार्थिकत्वानुभव इति वाच्यम्; न ह्यस्माकं तत्त्वावेदकत्वं तद्वति तत्प्रकारकत्वम्, तद्भिन्नत्वमतत्त्वावेदकत्वम्, कि त्ववाधितविषयत्वं तत्त्वावेदकत्वम्, बाधितविषयत्वं चातत्त्वावेदकत्वम्, अबाधितविषयत्वं च श्रौते ब्रह्मज्ञान एव, तद्भिन्नज्ञाने तात्पर्यवद्वेदत्वे-

---

मप्रमाणमिति प्राप्ते न पृथिव्यामिति वाक्यं शुद्धपृथिव्यां चयनाभावस्य नित्यानुवादो "हिरण्यं चेतव्यमि"ति विहितहिरण्यस्तुत्यर्थः, यथा अन्तरिक्षादौ न चयनं तथा शुद्धपृथिव्यामिति सिद्धान्तितम्। यत्र निषेधे तात्पर्यं तत्र प्रतियोगिप्रसक्तिं विना निषेधकल्पनवैयर्थ्यात् प्रतियोगिप्रसक्तेरावश्यकता। यत्र तु न निषेधपरत्वं यथा नान्तरिक्षे इत्यादौ किन्तु मानान्तरसिद्धानुवादद्वारा विधेयस्तुतिपरत्वं तत्र न प्रतियोगिप्रसक्तेरावश्यकता। तथा च सत्यत्वविशिष्टद्वैतरूपप्रतियोगिनो ब्रह्मणि ज्ञानरूपां प्रसक्तिं विनापि मिथ्यात्वानुमानादिसिद्धस्य ब्रह्माश्रितप्रपञ्चस्य द्वैतनिषेधश्रुतीनां विधेयब्रह्मस्तुतिपरत्वमिति भावः ॥६॥

७—पूर्वपक्षी शङ्कते–न चातात्त्विकप्रपञ्चे यदि तात्त्विकत्वमप्यध्यक्षेण न गृह्यते कथं तर्हि तस्यातत्त्वावेदकत्वं न हि तदेव तत्त्वेनावेदयदतात्त्विकं नाम, दृश्यते च सार्वलौकिकप्रपञ्चे पारमार्थिकत्वानुभव इति वाच्यम्। उक्तञ्च पूर्वपक्षिणा—

अतत्त्वं तात्त्विकत्वेन प्रपञ्चं नावभासयेत्।
अक्षं यदि तदा तस्याऽतत्त्वावेदकता कथम्।

प्रदर्शितरीत्या प्रपञ्चे पारमार्थिकत्वं प्रत्यक्षेणैव गृहीतं तद्विपरीतार्थमिथ्यात्वानुमानं प्रत्यक्षबाधितमेवेति पूर्वपक्षिणोऽभिप्रायः। समाधत्ते—तद्वति तत्प्रकारकज्ञानं व्यवहारिकप्रमारूपमपि नास्माकं मते तत्त्वावेदकं नापि तदभाववति तत्प्रकारकज्ञानमतत्त्वावेदकं किन्तु अबाधितविषयत्वं तत्त्वावेदकत्वं बाधितविषयत्वञ्चातत्त्वावेदकत्वमित्याहाचार्यः—न ह्यस्माकं तत्त्वावेदकत्वं तद्वति तत्प्रकारकत्वं तद्भिन्नत्वमतत्त्वावेदकत्वं किन्त्वबाधितविषयत्वं तत्त्वावेदकत्वं बाधितविषयत्वञ्चातत्त्वावेदकत्वम्। अबाधितविषयत्वञ्च श्रौते ब्रह्मज्ञान

नैव तत्त्वावबोधकत्वात् । तथा च प्रपञ्चप्रत्यक्षस्य तात्त्विकत्वागोचरत्वेऽप्यतत्त्वावेदकत्वं संगच्छते । सार्वलौकिकी पारमार्थिकत्वप्रसिद्धिस्तु जलगतपिपासोपशमनसामर्थ्यप्रसिद्धिवत् परोक्षतयाप्युपपन्ना नापरोक्षत्वपर्यवसायिनी ॥

तस्मादध्यक्षयोग्यस्य सत्त्वस्येहानिरुक्तित. ।
नाध्यक्षबाधो मिथ्यात्वलिङ्गस्यात्रोपपद्यते ॥१॥
न लौकिकं न सामान्यजन्यं साक्ष्यात्मकं न च ।
प्रत्यक्षं बाधते लिङ्गं मिथ्यात्वस्यानुमापकम् ॥२॥ ॥७॥

इति प्रत्यक्षयोग्यसत्त्वानिरुक्त्या प्रत्यक्षबाधोद्धारः ।

---

एव न तद्भिन्नज्ञाने । अयं भावः—मिथ्याप्रपञ्चं मिथ्यात्वेन गृह्णदपि ज्ञानमतत्त्वावेदकमेव बाधितविषयकत्वात् अतस्तदेव तत्त्वेनावेदयदतात्त्विकमेव, बाधितविषयकत्वादिति भावः । यस्मिन्नर्थे षड्विधतात्पर्यनिर्णायकलिङ्गेन श्रुतेस्तात्पर्यमवधृतं तस्मिन्नेवार्थे श्रुतेस्तत्त्वावेदकत्वं सर्वथाऽबाधितार्थकत्वादतः प्रपञ्चप्रत्यक्षस्याबाधितार्थाविषयकत्वेनातत्त्वावेदकत्वमेव । प्रपञ्चे सार्वलौकिकी पारमार्थिकत्वप्रसिद्धिरपि जलगतपिपासोपशमनसामर्थ्यप्रसिद्धिवत् परोक्षतयाप्युपपन्ना नापरोक्षत्वपर्यवसायिनी पिपासोपशमनसामर्थ्यस्य शक्तिरूपत्वात् तस्यातीन्द्रियत्वादिति भावः । शक्तेः परोक्षप्रतीतिरेव न प्रत्यक्षप्रतीतिः । तथा च परोक्षप्रतीत्यापि लोकप्रसिद्धिरुपपद्यते । प्रकरणार्थमुपसंहरति—

तस्मादध्यक्षयोग्यस्य सत्त्वस्येहानिरुक्तितः ।
नाध्यक्षबाधो मिथ्यात्वलिङ्गस्यात्रोपपद्यते ॥
न लौकिकं न सामान्यजन्यं साक्ष्यात्मकं न च ।
प्रत्यक्षं बाधते लिङ्गं मिथ्यात्वस्यानुमापकम् ॥

उपसंहारवाक्यस्य स्पष्टोऽर्थः ॥७॥

इतिश्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासियोगेन्द्रनाथदेशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यां साक्षिबाधोद्धारविवरणं समाप्तम् ।

### अथ सन् घट इति प्रत्यक्षेऽधिष्ठानानुवेधः

'किञ्चेदं रूप्यमि'त्यत्र इदमितिवत् सन् घट' इत्यत्रापि सदित्यधिष्ठानभूतं ब्रह्मैव भासते। न च—चाक्षुषादिज्ञाने रूपादिहीनस्य ब्रह्मणः कथं स्फुरणमिति वाच्यम्; रूपादिहीनस्यापि कालादिन्यायेन स्फुरणस्य प्रागेवोपपादितत्वात् ॥१॥

नन्वेवं 'नीलो घटः मिथ्या रूप्यमसन्नृशृंगमि'त्यादावपि 'नील'

---

१—सन्घट इति प्रत्यक्षस्य घटादौ सत्तादौ सत्ताग्राहकत्वेन तद्विरोधो मिथ्यात्वानुमानस्य इति पूर्वपक्षिणोऽभिमानः। तस्य समाधानमाह सिद्धान्ती—**किञ्चेदं रूप्यमित्यत्र इदमितिवत् सन्घट इत्यत्रापि सद् इत्यधिष्ठानभूतं ब्रह्मैव भासते।** अस्यायमर्थः—आरोप्योत्पत्तिकालोत्पन्नतादात्म्यापन्नं सत् सन्घट इति प्रत्यये अपरोक्षतया भाति। यथा इदं रजतमित्यत्र आरोप्यरजतोत्पत्तिकालोत्पन्नरजततादात्म्यापन्नमिदम् इदं रजतमिति प्रतीतौ अपरोक्षतया भाति, तथा सन् घट इत्यत्रापि। यदा आरोप्यो घट उत्पद्यते तदैव घटतादात्म्यमप्युत्पद्यते। घटतादात्म्यापन्नं सद् घटः सन्नित्यपरोक्षप्रतीतौ भासते। सद्रूपश्च ब्रह्मैव। ब्रह्मण्येव सर्वप्रपञ्चाध्यासात् सर्वत्र सत्प्रतीतेरुपपत्तिः। तथा च सत्तादात्म्यांशे लौकिकमपि प्रत्यक्षं न मिथ्यात्वानुमानबाधकम्। सत्तादात्म्यस्यापि मिथ्यात्वात् प्रपञ्चमिथ्यात्वसिद्ध्यनुकूलत्वमेव। पूर्वपक्षी शङ्कते—**न च चाक्षुषादिज्ञाने रूपादिहीनस्य ब्रह्मणः कथं स्फुरणमिति वाच्यम्।** रूपादिरहितद्रव्यस्य चाक्षुषज्ञानविषयत्वाभावात् सन् घट इति चाक्षुषप्रत्यक्षे सद्रूपस्य ब्रह्मणः रूपादिरहितस्य चाक्षुषज्ञानविषयत्वं न संभवति। तथा च सिद्धान्तिना यदुक्तम्—अधिष्ठानभूतं ब्रह्मैव भासत इति तदयुक्तम्। समाधत्ते सिद्धान्ती—**रूपादिहीनस्यापि कालादिन्यायेन स्फुरणस्य प्रागेवोपपादितत्वात्।** रूपादिहीनस्य कालस्य मीमांसकमते सर्वेन्द्रियवेद्यत्वाभ्युपगमेन सर्वप्रत्ययवेद्यब्रह्मणोऽपि न रूपादिहीनत्वेन चाक्षुषत्वानुपपत्तिः। एतच्च मिथ्यात्वविवरणप्रसङ्गे। [ परिच्छिन्नत्वहेतुविवरणे ] प्रागेवोपपादितम् ॥१॥

इत्यादिरधिष्ठानानुवेध इति स्यात्, न च नैल्यं घटादिष्वस्ति, सत्त्वं तु नेति–वाच्यम्; अस्यारोपितत्वसिद्ध्युत्तरकालीनत्वेनान्योन्याश्रयात्; अन्यथा "सत्यं ज्ञानमि"त्यत्रापि सत्यमित्यधिष्ठानानुवेध एव स्यात्॥२॥

इति चेन्न; सन्नित्यस्य 'घट' इत्यनेन सामानाधिकरण्यस्य बाधितत्वात्। तथा हि—सत्ताजातिस्फुरणनिबन्धनं वा स्वरूपसत्त्वनिबन्धनं वा कालत्रयाबाध्यत्वनिबन्धनं वा सामानाधिकरण्यं स्यात्। न चाभावादिसाधारणसत्प्रतीतौ सत्ताजातिस्फुरणं संभवति; अभावादिषु

---

२—पुनः पूर्वपक्षी शङ्कते—नन्वेवं नीलो घटः, मिथ्या रूप्यम्, असन् नृशृङ्गमित्यादावपि नील इत्यादिरधिष्ठानानुवेध इति स्यात्। न च नैल्यं घटादिष्वस्ति सत्त्वं तु न तथा इति वाच्यम्, अस्यारोपितत्वसिद्ध्युत्तरकालीनत्वेन अन्योन्याश्रयात्। अन्यथा सत्यं ज्ञानमित्यत्रापि सत्यमिति अधिष्ठानानुवेध एव स्यादिति। सन् घट इति प्रतीतौ यथा अधिष्ठानत्वेन सद्रूपब्रह्मणोऽनुवेधः तथा नीलो घटः, मिथ्या रूप्यम्, असन्नृशृङ्गमित्यादिप्रतीतिष्वपि नीलमिथ्यासतामधिष्ठानत्वेन अनुवेधः किं न स्यात्? यदि सिद्धान्तिनैवमुच्येत—नैल्यादीनामधिष्ठानत्वेन नानुवेधः, नैल्यादीनां घटादिष्वेव विद्यमानत्वात् सत्त्वं तु न घटादिषु विद्यमानं तत्राह पूर्वपक्षी—अस्यारोपितत्वसिद्ध्यधीनत्वेनान्योन्याश्रयात्। अयमभिप्रायः—सद्रूपे ब्रह्मणि घटादेरारोपितत्वसिद्धौ घटादेः सत्त्वाभावसिद्धिः। घटादौ सत्त्वाभावसिद्धौ चाधिष्ठानगतमेव सत्त्वं घटे प्रतीयते, न वस्तुतः इत्येतत् प्रमेयसिद्ध्या आरोपितत्वसिद्धिरिति अन्योन्याश्रयादित्यर्थः। पूर्वपक्षी प्रतिबन्दिं गृह्णाति—अन्यथेति। सदिति प्रतीतौ सर्वत्राधिष्ठानगतमेव सत्त्वं प्रतीयते इत्यङ्गीकारे सत्यं ज्ञानमित्यत्रापि अधिष्ठानगतमेव सत्त्वं ज्ञाने भासेत। ननु सत्यं ज्ञानमित्यत्र सदित्यधिष्ठानानुवेधो न भवति, ब्रह्मणः सद्रूपत्वात्, घटादौ तु अधिष्ठानानुवेध एव घटादीनां मिथ्यात्वात् इत्यत आह पूर्वपक्षी—न ह्यथापि ब्रह्मैव सद्रूपमन्यत् मिथ्येति सिद्धम् ॥२॥

३—समाधत्ते—इति चेन्न, सन्नित्यस्य घट इत्यनेन सामानाधिकरण्यस्य बाधितत्वात्। तथा हि सत्ताजातिस्फुरणनिबन्धनं वा स्वरूपसत्त्वनिबन्धनं वा कालत्रयाबाध्यत्वनिबन्धनं वा सामानधिकरण्यं स्यात्? न चाभावा-

त्वयापि तदनङ्गीकारात्। न च क्वचित्साक्षात्सम्बधेन क्वचित् परम्परासम्बधेन सदिति प्रतीत्युपपत्तिः; विजातीयसम्बन्धेन समानाकारप्रतीत्यनुपपत्तेः, अन्यथा सम्बन्धभेद एव न सिध्येत्, न च स्वरूपसत्त्वेनाभावादौ तत्प्रतीतिः; अननुगमात्, अननुगतेनापि अनुगतप्रतीतौ जातिमात्रोच्छेदप्रसङ्गात्। अत एव न सर्वत्रापि स्वरूपसत्त्वेनैव सद्व्यवहारः; एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ बहूनां तद्धेतुत्वकल्पने मानाभावात्। नापि कालत्रयाबाध्यत्वनिबन्धनं तत्, तस्य चक्षुराद्यगम्यत्वस्योक्तत्वात्, 'सदिदं रजतमि'त्यादि भ्रमे अभावाच्च।

---

दिसाधारणसत्प्रतीतौ सत्ताजातिस्फुरणं संभवति, अभावादिषु त्वयापि तदनङ्गीकारात्। न च क्वचित् साक्षात्सम्बधेन क्वचित् परम्परासम्बन्धेन सदिति प्रतीत्युपपत्तिः, विजातीयसम्बन्धेन समानाकारप्रतीत्यनुपपत्तेः अन्यथा सम्बन्धभेद एव न सिध्येत्। न च स्वरूपसत्त्वेन अभावादौ तत्प्रतीतिः, अननुगमात्। अननुगतेनापि अनुगतप्रतीतौ जातिमात्रोच्छेदप्रसङ्गात्। अत एव न सर्वत्रापि स्वरूपसत्त्वेन सद्व्यवहारः। एकेनैव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ बहूनां तद्धेतुत्वकल्पने मानाभावात्। नापि कालत्रयाबाध्यत्वनिबन्धनं तत्, तस्य चक्षुराद्यगम्यत्वस्योक्तत्वात्। सदिदं रजतमित्यादिभ्रमे अभावाच्च। अन्योन्याश्रयं दोषं परिहरन् सिद्धान्ती समाधत्ते—सन्नित्यस्य घट इत्यनेन सामानाधिकरण्यस्य बाधितत्वात्। सामानाधिकरण्यस्य तादात्म्यस्य इत्यर्थः। सन् घट इति प्रतीतौ सता सह घटस्य तादात्म्यं प्रतीयते। तच्च तादात्म्यं प्रतीयमानं प्रमाणबाधितमिति कृत्वा अधिष्ठानसद्रूपस्यानुवेधः घटादौ स्वीक्रियते। न तु अरोपितत्वसिद्ध्या अधिष्ठानसत्त्वानुवेधः स्वीक्रियते येनान्योन्याश्रयदोषः स्यात्। तथा हि— सत्ताजातिस्फुरणनिबन्धनं वा स्वरूपसत्त्वनिबन्धनं वा कालत्रयाबाध्यत्वनिबन्धनं वा सामानाधिकरण्यं स्यात्? सन् घट इत्यादिप्रतीतौ घटे सत्ताजातेः स्फुरणनिबन्धना सामानाधिकरण्यप्रतीतिः वा स्यात्, घटस्य स्वरूपसत्त्वनिबन्धनं वा घटः सन्निति सामानाधिकरण्यप्रतीतिः, घटादीनां प्रातिस्विकं यत् स्वरूपं तदेव सत्त्वं घटः सन्नितिप्रतीतौ भासत इति वा वक्तव्यम्? घटादौ

सत्त्वप्रकारकप्रतीतौ कालत्रयाबाध्यत्वरूपं सत्त्वं वा भासते इति वक्तव्यम् । अत्र मूलग्रन्थे निबन्धनपदं घटितपरम् । सत्ताजातिस्फुरणघटितं स्वरूपसत्त्वघटितं कालत्रयाबाध्यत्वघटितं वा सामानाधिकारण्यमित्यर्थः । सन् घट इति प्रतीतेः सत्ताजातेः स्फुणेन समर्थने जातिः सती, समवायः सन्, विशेषः सन्, अभावः सन् इत्यादिसत्प्रतीतेरनुपपत्तिः स्यात् । सत्ताजातेः द्रव्यगुणकर्मसु त्रिष्वेव वृत्तित्वाभ्युपगमात् । सत्ताजात्या जातिः सती, सत्ता सती इति प्रतीतिर्न स्यात् । एवमन्या अपि प्रतीतयो न स्युः । एतदेवोक्तमाचार्येण—नचाभावादिसाधारणसत्प्रतीतौ सत्ताजातिस्फुरणं सम्भवति, अभावादिषु त्वयापि तदनङ्गीकारात् ।

पूर्वपक्षी शङ्कते—"न च क्वचित्साक्षात्सम्बधेन क्वचित् परम्परासम्बन्धेन सदिति प्रतीत्युपपत्तिः" । अयम्भावः-द्रव्यगुणकर्मसु सत्ताजातेः साक्षात्समवायसम्बन्धेन विद्यमानत्वात् त्रिषु सत्प्रतीत्युपपत्तिः । सामान्यविशेषसमवायेषु एकार्थसमवायरूपसामानाधिकरण्यसम्बन्धेन सत्तायाः सत्त्वात् सत्प्रतीत्युपपत्तिः । अभावेऽपि साक्षात्परम्परया सत्तासम्बन्धाभावेऽपि स्वरूपसत्तानिबन्धनैव सत्प्रीतिः । सर्वत्र सत्प्रतीतेरविशिष्टत्वेऽपि क्वचित् समवायसम्बन्धेन क्वचिदेकार्थसमवायसम्बन्धेन, क्वचित् स्वरूपसत्त्वेन तादृशप्रतीतेरुपपत्तिर्न सम्भवति । अनुगतविषयनिबन्धनत्वाद् अनुगतप्रतीतेः । अननुगतविषयेभ्य एव यद्यनुगता प्रतीतिः स्यात् तर्हि विषयनैरपेक्ष्येण प्रतीतेरभ्युपगमे साकारवादिबौद्धमतप्रवेशः स्यात् । अनुगतविषयाभावेऽपि अनुगतप्रतीतेरङ्गीकारादिति भावः । सन् घट इति विशिष्टप्रतीतौ विशेष्यविशेषणतत्सम्बन्धा भासन्ते । सम्बन्धस्त्वननुगतः । तथा च प्रतीतेरनुगमोऽननुगतसम्बन्धेन न भवितुमर्हतीति भावः ।

इदमापाततः । सन् घट इति प्रतीत्या तावत् सद्व्यक्तिमात्राभिन्नत्वं घटे विषयीकृतम् । न तु सत्तासमवायित्वम् । अभेदप्रतीतेर्भेदघटितसम्बन्धानिर्वाह्यत्वात् । एवं द्रव्यं सत्, गुणः सन्नित्यादिप्रतीत्या सर्वाभिन्नत्वं स्वतः सिद्धम् । स्वतः सर्वाभिन्नत्वं सति ब्रह्मणि तादात्म्येन सर्वाध्यासादेवोपपद्यते, नान्यथा । अत एवोक्तमाचार्येण—सामानाधिकरण्यस्य बाधितत्वात् । द्रव्यगुणादीनां सदभिन्नत्वात् । द्रव्यगुणादीनामेव भेदोऽसिद्धः । न तेषु धर्मिषु सत्त्वं नाम धर्मः कल्प्यते,

तस्मादेकं सर्वाधिष्ठानमेव सदिति सर्वत्रानुभूयत इति युक्तम् ॥३॥

---

किन्तु सति धर्मिणि द्रव्यादर्थभिन्नत्वं लाघवात्। तच्चाभिन्नत्वं वास्तवं न सम्भवति। तदुक्तं वार्तिककारैः—

सत्तातोऽपि न भेदः स्यात् द्रव्यत्वादेः कुतोऽन्यतः।
एकाकारा हि संवित्तिः सद्द्रव्यं सन् गुणस्तथा॥

इत्याचार्यचरणैः "नासतो विद्यते भावः" इति गीताश्लोकव्याख्यानावसरे उक्तम्। अननुगतसम्बन्धेनापि एकाकारप्रतीत्युपपत्तौ सम्बन्धभेद एव न सिध्येत्। सम्बन्धभेदसिद्धौ हि प्रतीतिर्नियामिका। प्रतीतिर्यद्येकाकारा कुतः सम्बन्धभेदसिद्धिरित्याह—अन्यथा सम्बन्धभेद एव न सिध्येत्। न च स्वरूपसत्त्वेनाभावादौ तत्प्रतीतिरननुगमात्, अननुगतेनापि अनुगतप्रतीतौ जातिमात्रोच्छेदप्रसङ्गात्। अयम्भावः—अभावादौ स्वरूपसत्तानिबन्धना चेत् सत्प्रतीतिः तदा स्वरूपसत्त्वस्य प्रतिव्यक्तिविश्रान्तत्वेन स्वरूपसत्त्वस्याननुगतत्वादननुगतेनापि स्वरूपसम्बन्धेन सदित्यनुगतप्रतीतौ जातिमात्रोच्छेदप्रसङ्गात्। अननुगतव्यक्तिभिरनुगता प्रतीतिर्नोपपद्यते इत्येव हि अननुगतव्यक्तिषु अनुगता जातिरङ्गीक्रियते। यद्यननुगतेनापि अनुगतप्रतीत्युपपत्तिः स्यात्तर्हि कुत्रापि जातिर्न कल्प्येत। अत एव न सर्वत्रापि स्वरूपसत्त्वेनैव सद्व्यवहारः। यत एव अननुगतेनानुगतप्रतीतिर्नोपपद्यते अत एव स्वरूपसत्त्वेनैव न कुत्रापि सद्व्यवहारोपपत्तिः। स्वरूपसत्त्वस्य प्रतिव्यक्तिविश्रान्तत्वात्। एकेन एव सर्वानुगतेन सर्वत्र सत्प्रतीत्युपपत्तौ बहूनां तद्धेतुत्वकल्पने मानाभावात्। एकेनैव सद्रूपेण ब्रह्मणा सर्वत्र सत्प्रतीत्युपपत्तौ आध्यासिकतादात्म्येन सत्प्रतीत्युपपत्तौ बहूनां तत्तत्स्वरूपाणाम् एकाकारसत्प्रतीतिहेतुत्वकल्पने मानाभावात्। नापि कालत्रयाबाध्यत्वनिबन्धनं तत्। कालत्रयाबाध्यस्वरूपं सत्त्वमेव सर्वत्र सत्प्रतीतौ विषय इति न वक्तुं युज्यते। कालत्रयाबाध्यत्वस्य कालत्रयघटितत्वेन चक्षुराद्यगम्यत्वस्योक्तत्वात्। सदिदं रजतमित्यादिभ्रमेऽभावाच्च। भ्रमे भासमानं रजतं सदित्येव प्रतीयते। न च रजते भासमानं सत्त्वं कालत्रयाबाध्यत्वरूपं भवितुमर्हति। तस्य भ्रमानन्तरमेव बाध्यत्वात्। तस्मादेकं सर्वाधिष्ठानं सदिति सर्वत्रानुभूयत इति युक्तम्। निगदव्याख्यातोऽयं सन्दर्भः ॥३॥

नीलादेस्तु घटादिसामानाधिकरण्ये किमपि नास्ति बाधकम्, न वा नीलादेरधिष्ठानत्वं सम्भवति; प्रागसत्त्वात्, नीलपीतादिप्रातिस्विकानन्ताधिष्ठानकल्पने गौरवात्, अधिष्ठेयतुल्ययोगक्षेमत्वात् च। अधिष्ठेयविषमसत्ताकमेव ह्यधिष्ठानं भवति; "मिथ्या रूप्यमसन्नृश्ङ्गमि"त्यादौ मिथ्यात्वासत्त्वयोरधिष्ठानत्वशङ्काऽपि नास्तीति शून्यवादापत्तेः। तत्र चानुपपत्तिरुक्ता; वक्ष्यते च। यत्तु "सत्यं ज्ञानमनन्तमि"त्यत्रापि तथा स्यात्—इति। तन्न, यतो न तत्र सत्तासम्बन्धेन सत्त्वम्, किन्तु स्वरूपेणैवेत्युक्तदोषानवकाशात्। न चैवं घटादावपि स्वरूपे-

---

४—यच्च पूर्वपक्षिणा नीलो घटः; मिथ्या रूप्यमसन् नृश्ङ्गमित्यादावपि नीलेत्यादिरधिष्ठानानुवेध एव स्यादित्युक्तं तत् समाधानायाह—नीलादेस्तु घटादिसामानाधिकरण्ये न किमप्यस्ति बाधकम्। यथा सन्नित्यस्य घट इत्यनेन सामानाधिकरण्यस्य बाधितत्वम्, न तथा नीलादेर्घटादिसामान्याधिकरण्ये किमपि बाधकम् नीलादेर्घटवृत्तित्वात्। न वा नीलादेरधिष्ठानत्वं सम्भवति, प्रागसत्त्वात्। नीलादीनां घटाद्यधिष्ठानत्वं यदुक्तं तदपि न सम्भवति, घटाद्युत्पत्तेः प्राङ् नीलादेरसत्त्वात्। अध्यस्तात् प्राक् सत्त्वमधिष्ठानस्यापेक्षितम्। घटादेः प्रागसतो नीलादेः कथं घटाधिष्ठानत्वम्। नीलपीतादिप्रातिस्विकानन्ताधिष्ठानकल्पने गौरवात्। अधिष्ठेयतुल्ययोगक्षेमत्वाच्च। नीलादेर्घटाद्यधिष्ठानत्वेऽनन्ताधिष्ठानकल्पनागौरवञ्च स्यात्। नीलादीनामधिष्ठेयघटादितुल्यसत्ताकत्वाच्च नाधिष्ठानत्वम्। अधिष्ठेयविषमसत्ताकमेव हि अधिष्ठानं भवति। नीलादीनां घटसमानसत्ताकत्वान्नाधिष्ठानत्वम्। मिथ्या रूप्यमसन् नृश्ङ्गमित्यादौ मिथ्यात्वासत्त्वयोरधिष्ठानत्वशङ्काऽपि नास्ति, शून्यवादापत्तेः। मिथ्याऽसतोर्नाधिष्ठानत्वं सम्भवति, अधिष्ठेयवदधिष्ठानस्यापि बाध्यत्वात्। अबाध्यमेवाधिष्ठानं भवति। द्वयोर्बाध्यत्वे शून्यवादापत्तिः। ज्ञानयोर्बाध्यबाधकभावानुपपत्तिः भ्रमप्रमाव्यवस्थानुपपत्तिरेव शून्यवादापत्तिः। सर्वं यद्यसत् स्यादसद्विषयकत्वेन समानत्वे ज्ञानयोर्बाध्यबाधकभावो न स्यात्। भ्रमप्रमाविभागश्च न स्यात्। अत्र चानुपपत्तिरुक्ता वक्ष्यते च। अत्र च शून्यवादेऽनुपपत्तिरुक्ता अग्रे वक्ष्यते च। यत्तु, सत्यं ज्ञानमित्यत्रापि तथा स्यादिति तन्न, यतो

णैव तथात्वम्, पूर्वमेव निराकृतत्वात् ॥४॥

इति सन् घट इति प्रत्यक्षेऽधिष्ठानानुवेधनिरूपणम् ।

---

न तत्र सत्तासम्बन्धेन सत्त्वं किन्तु स्वरूपेणैवेति उक्तदोषानवकाशात् । सत्यं ज्ञानमित्यत्र ज्ञानस्य सत्यत्वं सत्ताधिष्ठानकत्वादित्यापत्तिः पूर्वपक्षिणा प्रदर्शिता । तां निरस्यति—न ज्ञानादीनां सद्रूपत्वम्, सत्यस्य वा सद्रूपत्वं सत्तासम्बन्धेन किन्तु स्वरूपसत्त्वेनैव । ब्रह्मैव स्वरूपसत् । स्वरूपसति ब्रह्मणि अन्येषां तादात्म्येनाध्यासादध्यस्तानामपि सद्रूपेण प्रतीतिः । ब्रह्मणः सद्रूपप्रतीतये सत्तासम्बन्धो नापेक्ष्यते । न चैवं घटादावपि स्वरूपेणैव तथात्वम्, पूर्वमेव निराकृतत्वात् । घटादीनां स्वरूपसत्त्वेन सत्प्रतीत्युपपत्तिर्न भवितुमर्हति, स्वरूपसत्त्वस्याननुगतत्वात् अननुगतेन स्वरूपसत्त्वेनानुगतसत्प्रतीत्युपपत्तिर्न भवितुमर्हतीति प्रागेवोक्तम् ॥४॥

इति सन् घट इति प्रत्यक्षेऽधिष्ठानानुवेधनिरूपणम् ।

इतिश्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां सन् घट इति प्रत्यक्षेऽधिष्ठानानुवेधनिरूपणविवरणं समाप्तम् ।

## अथ जात्युपक्रमादिन्यायैः प्रत्यक्षप्राबल्यनिरासः

किञ्च निश्चितप्रामाण्यमेव प्रत्यक्षमितरबाधकं भवेत्, न चात्र प्रामाण्यं निश्चितं, आगमविरोधात्, अनुमानविरोधात्, भाविबाधाभावानिर्णयाच्च। ननु—प्रत्यक्षमेव प्रबलमनुमानागमबाधकम्, नानुमानागमौ; प्रत्यक्षाप्रामाण्ये तद्विरोधाभावेनानुमानागमयोः प्रामाण्यम्, तयोः प्रामाण्ये च तद्विरोधात् प्रत्यक्षाप्रामाण्यमित्यन्योन्याश्रयात्, न हि प्रत्यक्षस्य प्रामाण्येऽप्येवमन्योन्याश्रयः, तस्यानपेक्षत्वात् ॥१॥

---

१—पूर्वपक्षिणा सन् घट इत्यादिप्रत्यक्षं प्रपञ्चमिथ्यात्वानुमानबाधकं भविष्यतीत्येवमाशङ्कितम्। प्रथमतः तस्या निरासाय आचार्य आह—किञ्च, निश्चितप्रामाण्यमेव प्रत्यक्षमितरबाधकं भवेत्। न चात्र प्रामाण्यं निश्चितम्। आगमविरोधाद् अनुमानविरोधाद् भाविबाधाभावानिर्णयाच्च। यत् प्रमाणं प्रमान्तरेणाबाधितमर्थं विषयीकरोति तत्रैव प्रामाण्यनिश्चयो भवितुमर्हति, बाधितार्थग्राहिणस्तु प्रामाण्यनिश्चयो न भवितुमर्हति। अतः सन् घट इत्यादिप्रत्यक्षस्य प्रमाणान्तरबाधितार्थकत्वेन प्रामाण्यनिश्चयो न भवितुमर्हति। प्रपञ्चमिथ्यात्वबोधकागमविरोधात् प्रपञ्चमिथ्यात्वसाधकानुमानविरोधात् सन् घट इत्यादिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वेन तत्काले बाधाभावेऽपि भाविबाधाभावानिर्णयाच्च। प्रत्यक्षेण यद् गृहीतं तद् भविष्यत्यपि काले न बाधिष्यते इति निश्चयो न भवितुमर्हति। अतः सन् घट इतिप्रत्यक्षं प्रपञ्चमिथ्यात्वानुमानबाधकं न भवितुमर्हति। पूर्वपक्षी शङ्कते—न प्रत्यक्षमेव प्रबलमनुमानागमबाधकं नानुमानागमौ, प्रत्यक्षाप्रामाण्ये तद्विरोधाभावेनानुमानागमयोः प्रामाण्यम्। तयोः प्रामाण्ये च तद्विरोधात् प्रत्यक्षाप्रामाण्यमित्यन्योन्याश्रयात्। न हि प्रत्यक्षस्य प्रामाण्येऽपि एवमन्योन्याश्रयः तस्यानपेक्षत्वात्। अयम्भावः—प्रपञ्चसत्त्वग्राहिप्रत्यक्षं किमप्रमाणमेव उत प्रमाणमपि वर्तमानग्राहित्वात् त्रिकालाबाधग्रहाक्षमम्। आद्येऽपि, स्वतः प्राप्तस्य तत्त्वावेदनरूपप्रामाण्यस्य त्यागः किमनुमानविरोधादागमविरोधाद् भाविबाधकशङ्कामात्रेण वा ?

इति चेन्न; चन्द्रतारकादिपरिमाणप्रत्यक्षे अनुमानागमविरोधेन तस्याप्रामाण्यदर्शनात् तेनापि स्वप्रामाण्यसिद्ध्यर्थमितराविरोधस्यावश्यमपेक्षणीयत्वात्। तथा चान्योन्याश्रयतुल्यत्वात् परस्परविरोधेन प्रामाण्यसन्देहे सत्यनाप्ताप्रणीतत्वादिना प्रमाजनकत्वव्याप्तेर्वेदप्रामाण्यनिश्चये जाते तेन स्वतस्सम्भावितदोषस्य प्रत्यक्षस्य बाधात् अस्मन्मते क्वान्योन्याश्रयः? अन्यथा देहात्मैक्यप्रत्यक्षबुद्ध्या बाधाद्देहभिन्नत्वमप्यात्मनो नागमानुमानाभ्यां सिध्येत् ॥ २॥

---

नाद्यौ, तयोः प्रामाण्ये तद्विरोधेन प्रत्यक्षस्याप्रामाण्यम्, सति च प्रत्यक्षाप्रामाण्ये मानाविरोधेन तयोः प्रामाण्यमित्यन्योन्याश्रयः। प्रत्यक्षस्य तु प्रबलस्य प्रमाण्यमनुमानागमविरोधापेक्षं नेति नान्योन्याश्रयः। न हि सिंहः शशशावकाभावमपेक्ष्य वनं गाहते ॥१॥

२—समाधत्ते—इति चेन्न, चन्द्रतारकादिपरिमाणप्रत्यक्षे अनुमानागमविरोधेन तस्याः प्रामाण्यदर्शनात्। प्रत्यक्षस्यानुमानागमाभ्यां प्राबल्ये चन्द्रतारकादिप्रादेशिकत्वग्राहिप्रत्यक्षमनुमानागमौ बाधित्वैव स्वार्थं निश्चाययेत्। न चैवम्। तस्मात् अनुमानागमाभ्यां न प्रत्यक्षस्य प्राबल्यम्। तेनापि स्वप्रामाण्यसिद्ध्यर्थमितराविरोधस्यावश्यमपेक्षणीयत्वात्, तथा चान्योन्याश्रयतुल्यत्वात्। परस्परविरोधेन प्रामाण्यसन्देहे सति अनाप्तप्रणीतत्वादिना प्रमाजनकत्वव्याप्तेः वेदप्रामाण्यनिश्चये जाते तेन स्वतः सम्भावितदोषस्य प्रत्यक्षस्य बाधात्। अस्मन्मते क्वान्योन्याश्रयः. अन्यथा, देहात्मैक्यप्रत्यक्षबुद्ध्या बाधाद् देहभिन्नत्वमपि आत्मनो नागमानुमानाभ्यां सिध्येत्। आगमानुमानाभ्यां बाधितविषयकत्वेन प्रत्यक्षस्याप्रामाण्ये उच्यमानेऽन्योन्याश्रयः पूर्वपक्षिणा शङ्कितः। प्रत्यक्षस्य प्रामाण्ये निरपेक्षत्वान्नान्योन्याश्रयः इति पूर्वपक्षिमतमाशङ्क्य निराकुर्वन्नाहाचार्यः-प्रत्यक्षस्य प्रामाण्येऽपि अन्योन्याश्रयः स्यादेव, इत्यत आह—"तेनापि स्वप्रामाण्यसिद्ध्यर्थमि"ति। प्रत्यक्षेणापि स्वप्रामाण्यसिद्ध्यर्थमनुमानागमाविरोधस्य अवश्यमपेक्षणीयत्वात् चन्द्रप्रादेशिकत्वादिप्रत्यक्षे तथा दृष्टत्वात्। तथा च प्रत्यक्षप्रामाण्येऽपि अन्योन्याश्रयस्तुल्य एव। अनुमानागमयोरप्रामाण्ये तद्विरुद्धार्थग्राहिप्रत्यक्षस्य

ननु प्रत्यक्षमनुमानाद्यपेक्षया जात्यैव प्रबलम्; कथमन्यथा औष्ण्य-प्रत्यक्षेण वह्निशैत्यानुमितिप्रतिबन्धः ? न च तत्रोपजीव्यत्वनिबन्धनं प्रत्यक्षस्य बाधकत्वम्, धर्म्यादिश्चक्षुरादिनैव सिद्धेस्त्वचोऽनुपजीव्यत्वात्, किञ्च प्रत्यक्षस्य प्राबल्यमनुमानाद्यगृहीतरेखोपरेखादिग्राहकत्वादनुमाना-द्यनिवर्तितदिङ्मोहादिनिवर्तकत्वाच्च—इति चेन्न ॥३॥

---

प्रामाण्यम्। प्रत्यक्षस्य प्रामाण्ये चानुमानगमयोरप्रामाण्यमित्यन्योन्याश्रयः सुदृढ एव। आपातत आचार्य उभयत्र अन्योन्याश्रयस्य तुल्यत्वमाह—"अन्योन्याश्रयतुल्यत्वादि"ति। प्रत्युत अस्मन्मते अन्योन्याश्रयशङ्कैव नोदेति। प्रत्यक्षागमयोः परस्परविरोधेन द्वयोः प्रामाण्यसन्देहे सति अनाप्तप्रणीतत्वेनागमस्य प्रमाजनकत्वव्याप्तेः। सन्दिह्यमानप्रामाण्यकागमः प्रमाजनकोऽनाप्तप्रणीतत्वात्, आप्तवाक्यवत्। आप्तवाक्यमपि अनाप्तप्रणीतमेव। प्रदर्शितेनानुमानेन वेदप्रमाण्यनिश्चये जाते तेन निश्चितप्रामाण्यकेन वेदेन स्वतःसम्भावितदोषस्य प्रत्यक्षस्य बाधाद् अस्मन्मते क्वान्योन्याश्रयः। वेदस्यानाप्तप्रणीत्वेन निरस्तसमस्तदोषाशङ्कत्वात् तत्प्राबल्यम्। प्रत्यक्षस्य तु स्वतःसम्भाविताविद्यादिदोषवतः दौर्बल्यम्। प्रबलेन दुर्बलबाधनेऽन्योन्याश्रयशङ्कैव नास्ति। अन्यथा, आगमापेक्षया प्रत्यक्षस्य प्राबल्येऽभ्युपगम्यमाने देहात्मैक्यप्रत्यक्षबुद्ध्या आत्मनो देहभिन्नत्वप्रतिपादकागमस्य बाधाद् देहभिन्नत्वमप्यात्मनो न सिध्येत्। एवं देहात्मैक्यप्रत्यक्षेण आत्मनो देहभिन्नत्वग्राहकानुमानबाधात् देहभिन्नत्वमात्मनो न सिध्येत्। तथा च चार्वाकमतप्रवेशः ॥२॥

३—[प्रत्यक्षस्य जात्या प्राबल्यमिति शङ्का] ननु प्रत्यक्षम् अनुमानाद्यपेक्षया जात्यैव प्रबलम्। कथमन्यथा औष्ण्यप्रत्यक्षेण वह्निशैत्यानुमितिप्रतिबन्धः। न च तत्रोपजीव्यत्वनिबन्धनं प्रत्यक्षस्य बाधकत्वं धर्मादिश्चक्षुरादिनैव सिद्धेस्त्वचोऽनुपजीव्यत्वात्। किञ्च प्रत्यक्षस्य प्राबल्यम् अनुमानाद्यगृहीतरेखोपरेखादिग्राहकत्वात्, अनुमानाद्यनिवर्तितदिङ्मोहादिनिवर्तकत्वाच्च। पूर्वपक्षी शङ्कते—प्रत्यक्षत्वजात्यैव प्रत्यक्षमनुमानादिप्रमाणापेक्षया प्रबलम्। प्रत्यक्षस्य जात्या प्राबल्ये प्रपञ्चमिथ्यात्वानुमानं घटसत्यत्वग्राहिप्रत्यक्षेण बाध्यते। प्रत्यक्षस्य जात्या प्राबल्ये को हेतुरित्यत

त्वाचप्रत्यक्षस्याप्युजीव्यत्वेनैव शैत्यानुमितिप्रतिबन्धकत्वसम्भवात्, चक्षुरादिना धर्म्यादिग्रहेऽपि त्वचं विना साध्यप्रसिद्धेरभावात्। तथा च न जात्या प्राबल्ये मानमस्ति। तदगृहीतग्राहित्वमपि न प्राबल्ये प्रयोजकम्; प्रत्यक्षागृहीतधर्मादिग्राहकत्वेन परोक्षप्रमाणस्यैव प्राबल्यापत्तेः। नाप्यनुमानाद्यनिर्वर्तितदिङ्मोहनादिनिवर्तकत्वेन प्राबल्यम्; एतावता हि वैधर्म्यमात्रं सिद्धम्। न च तावतेतरप्रमाणापेक्षया प्राबल्यं

---

आह—कथमन्यथेति। औष्ण्यप्रत्यक्षेण वह्निशैत्यानुमितिप्रतिबन्धः कथम्? वह्निरनुष्णः कृतकत्वाद् घटवत् इत्यनुमानस्य वह्न्यौष्ण्यप्रत्यक्षेणैव बाध्यत्वम्। अस्मिन्ननुमाने नान्यो हेत्वाभासो वर्तते इति पूर्वपक्षिणोऽभिमानः। उक्तञ्च वात्स्यायनेन—"यदनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः सः"। अत्रैव न्यायभाष्यकारेण प्रत्यक्षबाधितं वह्निशीतत्वानुमानं निदर्शितम्। यदि सिद्धान्तिनाऽत्र एवमाशङ्क्येत—प्रत्यक्षस्य धर्मिग्राहकतयोपजीव्यत्वेन प्राबल्यम्, न तु प्रत्यक्षत्वजात्या तत्राह—धर्म्यादेश्चक्षुरादीति। अस्मिन्ननुमाने वह्निर्धर्मी। अस्य धर्मिणः चक्षुरादिप्रमाणेनैव सिद्धत्वात् त्वगिन्द्रियस्य अनुष्णत्वग्राहकस्य अनुमानानुपजीव्यत्वात्। यदिन्द्रियमनुमानबाधकं तदिन्द्रियं नानुमानोपजीव्यम्। अनुमानानुपजीव्यस्य त्वगिन्द्रियस्यैव अनुमानबाधकत्वात् जात्यैव प्राबल्यमिति वक्तव्यम्। प्रत्यक्षस्य जात्या प्राबल्ये युक्त्यन्तरमाह—अनुमानादिपरोक्षप्रमाणैर्घटे गृह्यमाणेऽपि घटगतरेखोपरेखादिघटगतचिह्नादिविशेषः परोक्षप्रमाणेन न गृह्यते। गृह्यते तु प्रत्यक्षेण। अनुमानाद्यगृहीतग्राहकत्वात् प्रत्यक्षस्यानुमानाद्यपेक्षया प्राबल्यं जात्यैव। किञ्च, अनुमानादिपरोक्षप्रमाणैरनिवर्तितदिङ्मोहादेः निवर्तकत्वादपि प्रत्यक्षस्यैव जात्या प्राबल्यम् ॥३॥

४—समाधत्ते—त्वाचप्रत्यक्षस्यापि उपजीव्यत्वेनैव शैत्यानुमितिप्रतिबन्धकत्वसम्भवात्। चक्षुरादिना धर्मादिग्रहेऽपि त्वचं विना साध्यप्रसिद्धेरभावात्। तथा च न जात्या प्राबल्ये मानमस्ति। तदगृहीतग्राहित्वमपि न प्राबल्ये प्रयोजकम्। प्रत्यक्षागृहीतधर्मादिग्राहकत्वेन परोक्षप्रमाणस्यैव प्राबल्योपपत्तेः। नापि अनुमानाद्यनिर्वर्तितदिङ्मोहादिनिवर्तकत्वेन प्राबल्यम्। एतावता हि वैधर्म्यमात्रं सिद्धम्। न च

भवति; अन्यथा त्वाचप्रत्यक्षानिवर्तितवंशोरगभ्रमनिवर्तकत्वाच्चक्षुषोऽपि त्वगपेक्षया प्राबल्यं स्यात्। ततश्च चित्रनिम्नोन्नतज्ञानस्य चाक्षुषस्य तद्विरोधित्वाचज्ञानात् बाधो न स्यात्। प्रत्युतागमस्यैव सर्वतः प्राबल्यं स्मार्यते। 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इति ॥४॥

---

तावता इतरप्रमाणापेक्षया प्राबल्यं भवति। अन्यथा त्वाचप्रत्यक्षानिवर्तितवंशोरभ्रमनिवर्तकत्वात् चक्षुषोऽपि त्वगपेक्षया प्राबल्यं स्यात्। ततश्च चित्रनिम्नोन्नतादिज्ञानस्य चाक्षुषस्य तद्विरोधित्वाच्च ज्ञानात् बाधो न स्यात्। प्रत्युत, आगमस्यैव सर्वतः प्राबल्यं स्मर्यते। "प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमि"ति। समाधत्ते सिद्धान्ती — चाक्षुषस्यानुमानोपजीव्यत्वेन त्वाचप्रत्यक्षस्यानुपजीव्यत्वाद् अनुपजीव्येन त्वाचप्रत्यक्षेण अनुमानबाधान्नोपजीव्यत्वेन प्रत्यक्षस्य प्राबल्यं किन्तु जात्या इति पूर्वपक्षिणामाशयः तत्राहाचार्यः—त्वाचप्रत्यक्षस्यापि उपजीव्यत्वेनैव शैत्यानुमितिप्रतिबन्धः। अनुमानस्य धर्मिग्रहणे त्वाचप्रत्यक्षस्यानुपजीव्यत्वेनैव शैत्यानुमितिप्रतिबन्धः। अनुमानस्य धर्मिग्रहणे त्वाचप्रत्यक्षस्यानुपजीव्यत्वेऽपि त्वाचप्रत्यक्षेणैव अनुमानापेक्षितसाध्यस्य सिद्धिः। साध्यस्य सत्यस्य त्वाचप्रत्यक्षं विना सिद्धिर्न भवितुमर्हति। न केवलं धर्मिग्राहकमेवानुमानोपजीव्यम्, अनुमानापेक्षितसाध्यग्राहकमपि अनुमानोपजीव्यमेव। त्वाचप्रत्यक्षं विना साध्यस्य शैत्यस्य प्रसिद्धेरसम्भवात्। तथा च जात्या प्रत्यक्षस्य प्राबल्ये न मानमस्ति, तदगृहीतग्राहित्वमपि न प्रत्यक्षस्य प्राबल्ये प्रयोजकम्। तदगृहीतग्राहित्वं यदि प्राबल्ये प्रयोजकं स्यात् तर्हि प्रत्यक्षागृहीतधर्माधर्मादिग्राहकत्वेन आगमानुमानप्रमाणयोरेव प्राबल्यापत्तेः। नापि अनुमानाद्यनिवर्तितदिङ्मोहादिनिवर्तकत्वेन प्रत्यक्षस्य प्राबल्यम्। तदनिवर्तितनिवर्तकत्वं प्रमाणयोर्वैधर्म्यमात्रम्। न च तावतेतरप्रमाणापेक्षया प्राबल्यं भवति। यदि तदनिवर्तितनिवर्तकत्वेनैव प्राबल्यं स्यात्तर्हि त्वाचप्रत्यक्षानिवर्तितवंशोरगभ्रमनिवर्तकत्वात् चक्षुषोऽपि त्वगपेक्षया प्राबल्यं स्यात्। चक्षुषस्त्वगपेक्षया प्राबल्ये च चित्रगतनिम्नोन्नतादिज्ञानस्य चाक्षुषस्य निम्नोन्नतादिज्ञानविरोधित्वाचज्ञानात् निम्नोन्नतादिग्राहकचाक्षुषज्ञानस्य बाधो न स्यात्। अतः प्रत्यक्षस्य जात्या प्राबल्यं तु नास्त्येव किन्तु जात्या आगमस्यैव सर्वप्रमाणापेक्षया बलवत्त्वं स्मर्यते। "प्राब-

न च—तद्वैदिकार्थविषयमिति—वाच्यम्; अद्वैतस्यापि वैदिकार्थत्वात्। क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमिति तु परीक्षितप्रामाण्यप्रत्यक्षविषयम्। ननु प्रत्यक्षस्यासञ्जातविरोधित्वादुपक्रमन्यायेनैव प्राबल्यम्। उक्तं हि—

"असञ्जातविरोधित्वादर्थवादो यथाश्रुतः।
आस्थेयस्तद्विरुद्धस्य विध्युद्देशस्य लक्षणा॥ ॥५॥

---

ल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्।" तेषु त्रिषु प्रत्यक्षानुमानागमेषु आगमस्यैव जात्या प्राबल्यम्। प्रत्यक्षानुमानापेक्षयाऽगमस्यैव प्राबल्यम्। पूर्वपक्षी शङ्कते—प्रत्यक्षानुमानाभ्याम् आगमस्य प्राबल्यस्मरणं वैदिकार्थविषयमेव। वैदिकार्थादितरत्र जात्या प्रत्यक्षस्यैव प्राबल्यम् ॥४॥

५—समाधत्ते—अद्वैतस्यापि वैदिकार्थत्वात्। अद्वैते एवार्थे वैदिके प्रमाणबलाबलचिन्ता प्रस्तुता। अवैदिकेऽर्थे जात्या प्रत्यक्षस्य प्राबल्येऽपि वैदिकेऽर्थे आगमस्यैव प्राबल्यं, तथा चाद्वैतेऽर्थे आगमैकवेद्ये प्रत्यक्षविरोधशङ्काया अनवसर एव। यच्च पूर्वपक्षिणा मध्वाचार्योक्तं वाक्यमुपन्यस्तम्—

"क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितम्"

इति तत् प्रमाणमेव न। क्वचित् प्रामाण्याभ्युपगमेऽपि परीक्षितप्रामाण्यविषयन्तत् इत्याहाचार्यः—क्व च प्रत्यक्षतः प्राप्तमनुमागमबाधितमिति तु परीक्षितप्रामाण्यप्रत्यक्षविषयम्। जात्या प्रत्यक्षस्य आगमापेक्षया प्राबल्याभावेऽपि असंजातविरोधित्वात् प्रत्यक्षस्यागमापेक्षया प्राबल्यं स्यादित्यभिप्रेत्य शङ्कते पूर्वपक्षी—ननु प्रत्यक्षस्यासंजातविरोधित्वात् आगमापेक्षया प्राबल्यम्। जात्या प्राबल्याभावेऽपि असंजातविरोधित्वेन प्राबल्यं भविष्यति इत्यभिप्रेत्य शङ्कते—ननु प्रत्यक्षस्यासंजातविरोधित्वात् उपक्रमन्यायेनैव प्राबल्यम्। उक्तं हि—

असंजातविरोधित्वात् अर्थवादो यथा श्रुतः।
आस्थेयस्तद्विरुद्धस्य विध्युद्देशस्य लक्षणा॥

उपक्रमोपसंहारयोर्विरोधे कतरस्य प्राबल्यमिति चिन्तायामसंजातविरोधित्वेन उपक्रमस्यैव प्राबल्यं, संजातविरोधित्वेन उपसंहारस्य दौर्बल्यमिति सिद्धान्तितं

पूर्वतन्त्रे। तन्न्यायेन प्रत्यक्षस्य प्रथमप्रवृत्तत्वादागमस्य तदनन्तरप्रवृत्तत्वात् पूर्वापरभाविनः प्रत्यक्षागमयोर्विरोधेऽसंजातविरोधित्वेन पूर्वभाविनः प्रत्यक्षस्यैव प्राबल्यमित्यभिप्रेत्य पूर्वतन्त्रे तृतीयाध्याये तृतीयपादे चिन्तितमुपक्रमाधिकरणन्यायमुपस्थापयति पूर्वपक्षी—श्रुतेर्जाताधिकारः स्यादिति मीमांसासूत्रव्याख्यानावसरे भाष्यकारादिभिरुक्तं ज्योतिष्टोमे श्रूयते—प्रजापतिरकामयत प्रजाः सृजेयेति, स तपोऽतप्यत, तस्मात् तपस्तेपानात्, त्रयो देवा असृज्यन्त अग्निर्वायुरादित्यः। ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात् सामवेद इति उपक्रम्य श्रूयते उच्चैः ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्नेति। तत्र सन्देहः—किमुच्चैष्ट्वादयो ऋगादिधर्मा ऋचा मन्त्रेण यत् क्रियते तदुच्चैः कर्तव्यमिति। किं वा ऋग्वेदादिधर्मा ऋग्वेदेनोच्चैरिति तत्र क्रियते इति लकारव्यत्ययेन कुर्यादिति विधेयेऽभिप्रेततया उपसंहारगतेषु विध्युद्देशेषु ऋगादिशब्दश्रवणात् उपक्रमगतार्थवादे ऋग्वेदादिशब्दसत्त्वेऽपि अर्थवादस्य विधिबोधितार्थप्राशस्त्यमात्रप्रतिपादकस्य विधिशेषत्वेन गुणप्रधानयोर्विरोधे प्रधानस्य विध्युद्देशस्यैव अनुसरणीयत्वात् ऋगादिमन्त्रधर्मा उच्चैष्ट्वादयः। तथा चार्थवादगतम् ऋग्वेदादिपदं लक्षणया स्वार्थत्यागेन विध्युद्देशानुसारेण ऋगादिमात्रपरमेव। एवञ्च यजुर्वेदे ऋग्वेदस्य सत्त्वात् यजुर्वेदादिगतेषु अपि ऋगादिषु उच्चैष्ट्वादयः कर्तव्या इति पूर्वः पक्षः। सिद्धान्तस्तु लब्धात्मन एव प्रधानस्य गुणात् बलीयस्त्वं वाच्यम्। न चेह विध्युद्देशानाम् ऋगादिविषयतया लब्धात्मता। उपक्रमे वेदशब्दसङ्कीर्तनेन वेदनामतः परं किञ्चिद्विधास्यते इत्याकाङ्क्षायामनन्तरं विधास्यमानस्योच्चैष्ट्वादेर्वेदधर्मतात्वावगमात् तदेकवाक्यतया पश्चादापतत उपसंहारस्य तद्विरुद्धार्थबोधकत्वासंभवात्। असंजातविरोध्युपक्रमगतार्थवादानुसारेण पश्चादापततस्तद्विरुद्धस्य उपसंहारस्य विध्युद्देश्यस्य लक्षणैव स्यात्। तथा च ऋक्शब्दस्य ऋग्वेदलक्षकत्वेन उच्चैष्ट्वादय ऋग्वेदादिधर्मा एव। एवञ्च ऋग्वेदेन यत्क्रियते तदेवोच्चैः कर्त्तव्यम्। अतो यजुर्वेदादिगतेष्वपि ऋगादिषु उच्चैष्ट्वादिकं न कर्त्तव्यम्। किन्तु उपांशुत्वादिकमेव। एवञ्च यथा असंजातविरोधित्वात् उपक्रमस्योपसंहारापेक्षया प्राबल्यम् 'एवं सन् घट इत्यादिप्रत्यक्षस्यापि असंजातविरोधित्वेन प्रबलत्वात् अद्वैतागमापेक्षया प्राबल्यम् ॥५॥

इति चेन्न, यत् एकवाक्यस्थपरस्परसापेक्षपदत्वेन उभयोः साम्ये सत्युपक्रमस्थवेदपदानुरोधेनोपसंहारस्थर्गादिपदानां मन्त्रमात्रवाचिनां कृत्स्नवेदपरत्वे निर्णीतेऽपि न प्रकृते तन्न्यायः सम्भवति; उभयोः साम्याभावात्, गृहीतप्रमाणभावश्रुत्यपेक्षया भ्रमविलक्षणत्वेनानिश्चितस्य प्रत्यक्षस्य न्यूनबलत्वात्, अन्यथा 'इदं रजतमि'ति भ्रमेऽपि "इयं शुक्तिरि"ति आप्तोपदेशापेक्षया प्रबलं स्यात्। एतेन लिङ्गात् श्रुतेरिव शीघ्रगामित्वात् प्रत्यक्षस्य प्राबल्यम्, तदुक्तम्—

प्रत्यक्षे चानुमाने च यथा लोके बलाबलम्।
शीघ्रमन्थरगामित्वात्तथैव श्रुतिलिङ्गयोः ॥६॥

---

६—समाधत्ते—इति चेन्न, यत एकवाक्यस्थपरस्परसापेक्षपदत्वेन उभयोः साम्ये सति उपक्रमस्थवेदपदानुरोधेन उपसंहारस्थर्गादिपदानां मन्त्रमात्रवाचिनां कृत्स्नवेदपरत्वे निर्णीतेऽपि न प्रकृते तन्न्यायः सम्भवति उभयोः साम्याभावात् गृहीतप्रमाणभावश्रुत्यपेक्षया भ्रमविलक्षणत्वेनानिश्चितस्य प्रत्यक्षस्य न्यूनबलत्वात्, अन्यथा इदं रजतमितिभ्रमोऽपि इयं शुक्तिरित्याप्तोपदेशापेक्षया प्रबलं स्यात्। पूर्वपक्षिणा स्थाने एव उपक्रमाधिकरणं प्रसारितम्। प्रकृते उपक्रमाधिकरणस्य विषय एव नास्ति। तथा हि—एकवाक्यस्थितयोरुपक्रमोपसंहारयोः परस्परसापेक्षत्वेन उभयोः समप्रामाण्यकयोः उपक्रमानुरोधेन उपसंहारस्थपदानां नयनेऽपि प्रकृते तन्न्यायो न संभवति। उपक्रमोपसंहारयोः साम्ये उपक्रमाधिकरणन्यायः प्रवर्तते। प्रकृते प्रत्यक्षागमयोः समानप्रामाण्याभावन्न नायं न्यायः प्रवर्तते। कुत इति चेत्—गृहीतप्रमाणभावा श्रुतिः भ्रमविलक्षणत्वेनानिश्चितप्रत्यक्षापेक्षया प्रबला। श्रुत्यपेक्षया भ्रमविलक्षणत्वेन अनिश्चितस्य प्रत्यक्षस्य न्यूनबलत्वात्। तुल्यबलत्वमनपेक्ष्यैव यद्ययं न्यायः प्रवर्तेत तर्हि इदं रजतमिति भ्रमोऽपि उपक्रमरूपतया असंजातविरोधित्वेन प्रबलः; इयं शुक्तिरित्याप्तोपदेशात् संजातविरोधिनः उपसंहाररूपात्। तथा च आप्तोपदेशात् भ्रमो न बाध्येत। यथा आप्तोपदेशेन भ्रमो बाध्यते एवमेव अद्वैत-श्रुत्या द्वैतसत्यत्वग्राहि प्रत्यक्षं बाध्यते इत्यभिप्रायः।

इत्यपास्तम्, परीक्षितस्य मन्थरगामिनोऽपि प्राबल्यात् ॥७॥

---

प्रकारान्तरेण द्वैतसत्यत्वग्राहिप्रत्यक्षस्य प्राबल्यं शङ्कते—लिङ्गाद्यपेक्षया शीघ्रगामित्वात् यथा श्रुतेः प्राबल्यमेवमागमापेक्षया शीघ्रगामित्वात् प्रत्यक्षस्य प्राबल्यमित्याह—लिङ्गात् श्रुतेरिव शीघ्रगामित्वाच्च । उक्तञ्च—

"प्रत्यक्षे चानुमाने च यथा लोके बलाबलम् ।
शीघ्रमन्थरगामित्वात् तथेह श्रुतिलिङ्गयोरि"ति ॥

जैमिनीये तृतीयाध्याये "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् । [ जै० सू० ३।३।१४ ] इति बलाबलाधिकरण-सूत्रम् । तत्र श्रुतिलिङ्गयोर्विरोधे इदमुदाहरणम् । अग्निचयने श्रूयते—ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति । अत्र लकारव्यत्ययेन गार्हपत्योपस्थानं कुर्यादित्यर्थः । "कदाचन स्तरीरसि नेन्द्र सश्चन दाशुषे" इत्यैन्द्र्या इन्द्रप्रका-शिकया ऋचा इन्द्रस्योपस्थानं कर्तव्यम् उत गार्हपत्यस्याग्नेरिति संशये "वस्तु शक्त्यनुसारी हि शब्दः सर्वः प्रवर्तते" इति न्ययेनाशक्यार्थे केनापि विनियोक्तुमश-क्यत्वात् ऐन्द्र्येतितृतीयया श्रुत्या ऐन्द्री शक्ते एव विनियोक्तव्या । तस्याश्च ऋचः सामर्थ्यमिन्द्रप्रकाशने एवेति तया इन्द्रस्योपस्थानं कर्तव्यम् । गार्हपत्यशब्दस्तु यज्ञसाधनत्वसाधर्म्यादिना इन्द्रे प्रवर्तयितव्य इति पूर्वः पक्षः । सिद्धान्तस्तु यत्र-वस्तुनः सर्वथा असामर्थ्यं तत्रैव विनियोगो न सम्भवति । अस्ति तु इन्द्रशब्दस्य गार्हपत्ये गौणं तत् [ सामर्थ्यम् ] अवश्यञ्च मन्त्रस्थस्य इन्द्रशब्दस्य वा विनियोजकवाक्यपरब्राह्मणस्थगार्हपत्यशब्दस्य वा कस्यचिदमुख्यार्थत्वं कल्पनीयम् । तच्च मन्त्रशब्दे इन्द्रशब्दे एव युक्तम् । विधौ लक्षणाया अन्याय्यत्वात् । न च विध्यनुसारेण ऐन्द्र्या ऋचो लक्षणया गार्हपत्योपस्थाने विनियोगेऽपि इन्द्रप्रकाश-नशक्तिरूपया मुख्यया वृत्त्या लिङ्गाभिधया इन्द्रोपस्थानेऽपि विनियोगोऽस्त्विति वाच्यम्, गार्हपत्यमुपतिष्ठत इति प्रत्यक्षश्रुत्या शीघ्रं मन्त्रे विनियुक्ते सति तावतैव मन्त्राम्नानस्य चरितार्थतया मन्थरगामिलैङ्गिकविनियोगकल्पनायोगात् । तस्मात् गार्हपत्यस्यैवमुपस्थानं कर्तव्यम् । एवञ्च प्रकृते व्याप्त्यादिसापेक्षतया मन्थरगा-म्यनुमानाद्यपेक्षया प्रत्यक्षस्य झटित्यर्थावगाहित्वात् प्राबल्यमित्यर्थः ॥६॥

७—समाधत्ते—इत्यपास्तम्, परीक्षितस्य मन्थरगामिनोऽपि प्राब-

न च—'यदाहवनीये जुहोती'त्यस्मात् 'पदे जुहोती'त्यस्य विशेष-

---

ल्यात्। परीक्षितस्य प्रमाणत्वेन निश्चितस्येत्यर्थः। मन्थरगामिन आकाङ्क्षा-व्याप्त्यादिनिश्चायकमानान्तरसापेक्षत्वेन विलम्बितफलकस्येत्यर्थः। प्राबल्यात् अपरीक्षितमानापेक्षया बलवत्त्वात्। तथा च परीक्षितयोः श्रुतिलिङ्गाद्योराद्येन शीघ्रं विनियोगे कृते विनियुक्तस्य मन्त्रादेः साध्याकाङ्क्षायां निवृत्तायां लिङ्गादेस्तत्-साध्यसमर्पकत्वाभावेन बाधो युक्तः। प्रत्यक्षस्य तु अपरीक्षितत्वेन परीक्षित-श्रुत्यादिबाधकत्वमनुपपन्नमिति भावः ॥७॥

८—पूर्वपक्षी शङ्कते—"विशेषविषयत्वाच्च प्रत्यक्षस्य प्राबल्यम्।" सामा-न्यग्राहकादद्वैतागमात् विशेषतो घटादिसत्त्वग्राहिप्रत्यक्षं प्रबलमिति पूर्वपक्षिणाम-भिमानः। विशेषग्राहिमानस्य सामान्यग्राहकात् मानात् प्राबल्यव्यवस्थापनाय पूर्व-तन्त्रे दशमाध्यायेऽष्टमपादे चिन्तितम्। "अविशेषेण यच्छास्त्रमन्याय्यत्वात् विकल्पस्य तत्सन्दिग्धम् आरात् विशेषशिष्टं स्यादि"ति। ज्योतिष्टोमे श्रूयते— अरुणया एकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्यत्र सोमक्रयणकाले पदे जुहोति वर्त्मनि जुहोति इति श्रूयते। गवां पदसम्बन्धो यत्र तत्र होमादिकं कार्यमित्युक्तेऽतिप्रसङ्गप्राप्तौ गौर्येन वर्त्मना सोमक्रयणार्थं नीयते तद्वर्त्मनि विद्यमाने पदे होमः कर्तव्यः इति तदर्थः। गार्हपत्ये पत्नीसंयाजान् यजति इत्यादि श्रूयते। तथा यदाहवनीये जुहोतीति श्रूयते। तत्र होमसामान्येऽधिकर-णतया श्रुतस्याहवनीयस्य होमविशेषेऽधिकरणत्वेन विहितवर्त्मपदगार्हपत्यादिना विकल्पो बाधो वेति संशये सामान्यविशेषशास्त्रयोर्द्वयोरपि प्रत्यक्षत्वेन क्लृप्ततया बलाबलानवधारणात् विकल्प इति पूर्वः पक्षः। सिद्धान्तस्तु सामान्यविशेष-शास्त्रयोः क्लृप्तत्वेऽपि विशेषशास्त्रतः सोमक्रयणार्थं नीयमानावस्थाविशेषकालीन-होमविशेषे पत्नीसंयाजादिहोमविशेषे च अधिकरणतया वर्त्मपदगार्हपत्यादेः स्पष्टश्रुत्यैव प्राप्तिः। यदाहवनीय इति सामान्यशास्त्रतस्तु आवहनीयादेर्होमसामा-न्याधिकरणताविधानात् श्रुतहोमसामान्यमुखेन तद्विशेषे लक्षणया प्राप्तिः इत्येवं सन्निकर्षविप्रकर्षसद्भावात् विशेषविषयैर्वर्त्मपदगार्हपत्यादिभिः सामान्यतो विहिताहवनीयस्य बाध एव। सूत्रस्यायमर्थः—यत्सामान्यशास्त्रमविशेषेण जुहोतिवाच्यस्य होमसामान्यस्य सर्वहोमसम्बन्धात् लक्षणया होमव्यक्तिषु

विषयत्वेन प्राबल्यवत्, घटविषयसत्त्वग्राहिणः प्रत्यक्षस्य सामान्यतो द्वैतनिषेधकश्रुत्यपेक्षया प्राबल्यमिति—वाच्यम्; सामान्यविशेषन्यायस्य निश्चितप्रमाणभावोभयविषयत्वात्, अन्यथा 'अयं गौरश्व' इत्यादेरपि गोरश्वो न भवतीत्यादितः प्राबल्यं भवेत् ॥८॥

---

आहवनीयसम्बन्धबोधकं तत् पदहोमादिविशेषे तत्सम्बन्धपरत्वेन सन्दिग्धं निर्णेतुमशक्यं, विकल्पस्याष्टदोषयुक्तस्य अन्याय्यत्वात्। अथापि स स्वीक्रियते यदि शास्त्रयोः समबलत्वं स्यात्तर्हि प्रकृते तु यद्विशेषशिष्टं पदादिविशिष्टहोमविशेषविधायकं शास्त्रं तदारात् शीघ्रप्रवृत्तम्। तादृशविशेषस्य प्राकरणिकत्वेन शीघ्रोपस्थितत्वात्। अन्यहोमस्य तथाऽनुपस्थितत्वाच्च तादृशहोममात्रपरत्वनिर्णयात्। सामान्यशास्त्रस्य तदितरपरत्वसम्भवेन विषयप्राप्तेरिति। एवञ्च प्रकृतेऽपि प्रत्यक्षस्य विशेषविषयत्वात् तेन सामान्यविषयिण्याः श्रुतेरेव बाध इत्यर्थः। कथं च प्रत्यक्षश्रुत्योः सामान्यविशेषविषयत्वमित्यत आह—प्रत्यक्षं हि विशिष्य घटसत्त्वग्राहि। श्रुतिस्तु सामान्येन द्वितीयनिषेधिका इत्याहाचार्यः—न च यदाहवनीये जुहोतीत्यस्मात् पदे जुहोतीत्यस्य विशेषविषयत्वेन प्राबल्यवत् घटविषयसत्त्वग्राहिणः प्रत्यक्षस्य सामान्यतो द्वैतनिषेधकश्रुत्यपेक्षया प्राबल्यमिति। समाधत्ते—एवं न वाच्यं, कुतः, सामान्यविशेषन्यायस्य निश्चितप्रमाणभावोभयविषयत्वात्। अन्यथा अयं गौरश्व इत्यादेरपि गौरश्वो न भवतीत्यादितः प्राबल्यं भवेत्। यद्यपि अनात्मप्रपञ्चमात्रस्य मिथ्यात्वबोधकयत्किञ्चिच्छ्रुत्यालोचनया पूर्वपक्षिणैवमुक्तम् एकमेवाद्वितीयमित्यादिश्रुत्यालोचनया आत्मभिन्नप्रपञ्चमात्रस्य सामान्यतो मिथ्यात्वबोधकत्वं श्रुतेः। अतः श्रुतेः सामान्यविषयत्वमुक्तम्। किन्तु श्रुत्या विशेषतोऽपि प्रपञ्चस्य मिथ्यात्वं प्रतिपादितम्। तथा हि—नेह नानास्ति किंचन, नात्र काचन भिदाऽस्ति, इदं सर्वं यदयमात्मा इत्यादिश्रुतिषु किमादिसर्वनामार्थघटत्वादिविशेषरूपविशिष्टेऽपि मिथ्यात्वबोधकत्वम्।

"न पुण्यपापे मम नास्ति नाशो, न जन्यदेहेन्द्रियबुद्धिरस्ति।
न भूमिरापो मम वह्निरस्ति, न चानिलो मेऽस्ति न चाम्बरञ्च ॥"
"एवं विदित्वा परमात्मरूपम्"।

न च—यथा "यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरती"त्यत्रत्यस्य यत्किञ्चिच्छब्दस्य यत्किञ्चित्प्रकृतवाचित्वेन सामान्यविषयत्वेऽपि दक्षीणीयाव्यतिरिक्ते सावकाशत्वात् 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयादि'त्यनेन निरवकाशेन संकोचस्तथा प्रत्यक्षेण निरवकाशेन वृत्त्यन्तरेणानेकार्थत्वेन वा विषयान्तरपरत्वेन सावकाशायाः श्रुतेः संकोचः किं न स्यादिति वाच्यम् ॥९॥

---

"अशब्दमस्पर्शमरूपमि"त्यादिश्रुतेरपि पुण्यत्वादिविशेषविशिष्टे मिथ्यात्वबोधकत्वम् । तथापि पूर्वोक्तमेकमेवाद्वितीयमिति श्रुतिमात्रमालोच्यैव पूर्वपक्षितम् । सिद्धान्ती पुनः पूर्वपक्षिमतमनुसृत्यैव नोक्तन्यायावकाशः इत्याशयेनाह— "सामान्यविशेषन्यायस्ये"ति । यत्रोभयं प्रमाणं निश्चितप्रामाण्यकं तत्रैवायं सामान्यविशेषन्यायः प्रवर्तते । आगमस्य निश्चितप्रामाण्यकत्वेऽपि प्रत्यक्षस्य सम्भावितदोषवत्त्वेनानिश्चितप्रामाण्यकत्वात् । अतो नात्र अस्य न्यायस्यावसरः अन्यथा सामान्यविशेषविषयकत्वमात्रेणैव बाध्यबाधकभावेऽङ्गीक्रियमाणेऽयं गौरश्च इति विशेषविषयकः प्रात्यक्षिको निश्चयः, अयं तु भ्रमरूप एव पुनश्च गौरश्वो न भवति इत्यनेन गोसामान्ये अश्वसामान्यभेदप्रतिपादने भेदप्रतिपादकसामान्यशास्त्रस्य सामान्यविषयकत्वेन दौर्बल्यादयं गौरश्वः इति विशेषविषयको भ्रमो न बाध्येत, बाध्यते च । तस्मात् निश्चितप्रमाणभावोभयविषयकोऽयं न्यायः ॥८॥

९—[५] पूर्वपक्षी सावकाशनिरवकाशयोर्मानयोरुपनिपाते निरवकाशं बलीय इति न्यायेन प्रत्यक्षस्य निरवकाशत्वात् सावकाशायाः श्रुतेः प्राबल्यमित्याह—न च यथा यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरतीत्यत्रत्यस्य यत्किञ्चिच्छब्दस्य यत्किञ्चित्प्रकृतवाचित्वेन सामान्यविषयत्वेऽपि दीक्षणीयाव्यतिरिक्तसावकाशत्वात् यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात् इत्यनेन निरवकाशेन सङ्कोचः । तथा प्रत्यक्षेण निरवकाशेन वृत्त्यन्तरेण अनेकार्थत्वेन वा विषयान्तरपरत्वेन सावकाशायाः श्रुतेः सङ्कोचः किं न स्यात् ? अयमाशयः—पूर्वतन्त्रे नवमेऽध्याये प्रथमपादे चिन्तितम्—ज्योतिष्टोमे श्रूयते—यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरतीति । तत्र अग्नीषोमीयपश्वालम्भनात् पूर्वं यत्-

तात्पर्यलिङ्गैरुपक्रमादिभिर्द्वैतनिषेधपरत्वे अवधृते अद्वैतश्रुतेरपि निरवकाशत्वात्, प्रत्यक्षस्यापि व्यावहारिकद्वैतविषयतया सावकाश-

---

किञ्चित् कर्तव्यं दीक्षाकालमारभ्य क्रियमाणदीक्षणीयेष्टियूपावटबर्हिरास्तरण-र्त्विग्वर्णादि तत्समस्तमपि कर्म किम् उपांशुमन्त्रोच्चारणपूर्वकं कर्तव्यमुत नेति संशयेऽग्नीपोमीयात् पूर्वतनं समस्तमपि उपांश्वेव कर्तव्यम्। समस्तव्यक्तिवाचि-यावदर्थकयत्किञ्चिच्छब्दश्रवणात्, अन्यथा यत्किञ्चिच्छब्दो व्यर्थः स्यादिति पूर्वपक्षे प्राप्ते—सिद्धान्तितम्—न अग्नीपोमीयात् प्राचीनं समस्तमुपांशु कर्तव्यं तत्-साधकाभावात्। न च यत्किञ्चिच्छब्दोऽस्तीति वाच्यम्, तस्य प्रकृताग्नीपोमीय-पूर्वकालीनदीक्षणीयादिसमस्तविशेषवाचित्वेन सामान्यविषयत्वेऽपि दीक्षणीया-व्यतिरिक्ते तस्य सावकाशत्वेन सङ्कोचकरणात्। कुत इति चेत्, यावत्या वाचा कामयेत, तावत्या दीक्षणीयायामनुब्रूयात् इति निरवकाशवाक्यसद्भावात्। अतोऽग्नीपोमीयात् प्राक् दीक्षणीयेष्टिव्यतिरिक्तमेव उपांशु कर्तव्यम्। ननु तर्हि प्रकृते श्रुतिप्रत्यक्षयोः कथं सावकाशत्वनिरवकाशत्वे इति इत्यतस्तदुपपादयति तथा वृत्त्यन्तरेण वा अनेकार्थत्वेन वेति। तत्त्वमसीत्यादौ वृत्त्यन्तरेण लक्षणया यथा तस्मै त्वमसि—तस्मै जगत्कारणाय ब्रह्मणे त्वं त्वदात्मा समर्पणीय इत्यर्थः। अथ वा तस्मात् त्वमसि तस्माज्जातस्त्वमसीत्यर्थः। अथ वा तस्य त्वमसि तत्स्वामिकस्त्व-मित्यर्थः। अथ वा तस्मिंस्त्वमसि तदाश्रितस्त्वमित्यर्थः। अथ वा ब्राह्मणस्त्वं मनुष्य-स्त्वमित्यादिवत् शरीरशरीरिभावनिबन्धनं तत्त्वमिति सामानाधिकरण्यम्। अथ वा अकारप्रश्लेषात् अतत्त्वमसीति। एवं ब्रह्मैव सन् ब्रह्माप्येतीत्यादौ ब्रह्मशब्दस्या-नेकार्थत्वेन सर्वं एकीभवन्तीत्यादौ स्थानैक्यादिरूपविषयान्तरपरत्वेन वा अद्वैत-श्रुतेः सावकाशत्वात्। वृत्त्यन्तरादिना अवकाशानर्हेण प्रत्यक्षेण संकोचः किं न स्यात्। अद्वैतश्रुतेरिति शेषः। पूर्वं सामान्यविशेषभावेन बाधे तात्पर्यम्, अत्र तु सावकाशत्वादिना सङ्कोच इति भेदः। यद्यपि सामान्यविशेषस्थलेऽपि सावकाश-त्वादिना संकोच एव क्रियते तथापि उदाहरणभेदेन शब्दभेदेन चोपपादनमात्र-मिति द्रष्टव्यम् ॥९॥

१०—समाधत्ते—तात्पर्यलिङ्गैरुपक्रमादिभिर्द्वैतनिषेधपरत्वेऽवधृ-तेऽद्वैतश्रुतेरपि निरवकाशत्वात्। प्रत्यक्षस्यापि व्यवहारिकद्वैत-

त्वात्, विरुद्धयोश्च द्वयोरहं मनुष्य इत्यादिप्रत्यक्षे 'आकाशवत्सर्वगतश्च नित्य' इत्यादिश्रुत्योरिव तात्त्विकप्रामाण्यानुपपत्त्या कस्यचिद्व्यावहारिकं कस्यचित्तात्त्विकं प्रामाण्यमभ्युपेयम्; अत्यन्ताप्रामाण्यस्यान्याय्यत्वात्, तत्राद्वैतश्रुतेर्व्यावहारिकप्रामाण्यसम्भवे द्वैतग्राहिप्रत्यक्षादेस्तात्त्विकं प्रामाण्यं भवेत् तदसम्भवे तु बलादेवाद्वैतश्रुतेस्तात्त्विकं प्रामाण्यमिति प्रत्यक्षादेर्व्यावहारिकं प्रामाण्यं पर्यवस्यतीति कृतबुद्धयो विदांकुर्वन्तु ॥१०॥

---

विषयतया सावकाशत्वात्। विरुद्धयोश्च द्वयोरहं मनुष्य इत्यादिप्रत्यक्ष आकाशवत् सर्वगतश्च नित्य इत्यादिश्रुत्योरिव तात्त्विकप्रामाण्यानुपपत्त्या कस्यचिद् व्यावहारिकं कस्यचित्तात्त्विकं प्रामाण्यमभ्युपेयम्। अत्यन्ताप्रामाण्यस्य अन्याय्यत्वात्। तत्र अद्वैतश्रुतेः व्यावहारिकप्रामाण्यसम्भवे द्वैतग्राहिप्रत्यक्षादेस्तात्त्विकं प्रामाण्यं भवेत्। तदसम्भवे तु बलादेव अद्वैतश्रुतेस्तात्त्विकं प्रामाण्यमिति प्रत्यक्षादेर्व्यावहारिकं प्रमाण्यं पर्यवस्यतीति कृतबुद्धयो विदांकुर्वन्तु। पूर्वपक्षिणा सावकाशत्वेन श्रुतेर्दौर्बल्यमुक्तं सावकाशत्वमेव श्रुतेरसिद्धमित्याहाचार्यः—तात्पर्यनिर्णायकैरुपक्रमादिभिः षड्भिर्लिङ्गैर्द्वैतनिषेधपरत्वे श्रुतेरवधृते श्रुतिरपि तात्पर्यविषयादन्यत्र लक्षणादिना नेतुं न शक्यते। तात्पर्यवती श्रुतिरपि यदि तात्पर्यविषयीभूतमर्थं न प्रतिपादयेत् तर्हि सर्वथा आनर्थक्यमेव श्रुतेः स्यात् अतात्पर्यविषयीभूतेऽर्थे तु श्रुतिरप्रतिष्ठितैव। तात्पर्यविषयीभूतेऽप्यर्थे श्रुतिरप्रतिष्ठिता चेत् सर्वथा अप्रतिष्ठितैव सर्वत्र श्रुतिः स्यात्। तस्मात् तात्पर्यविषयीभूतेऽर्थे श्रुतिरपि निरवकाशैव इति न निरवकाशप्रत्यक्षानुरोधेन सावकाशायाः श्रुतेरन्यथा नयनं सम्भवति। किञ्च प्रत्यक्षस्यैव सावकाशत्वमित्याह—प्रत्यक्षस्यापि व्यावहारिकविषयतया सावकाशत्वादिति—प्रत्यक्षेण घटादीनामिव शब्दानुमानादीनां नित्यपरोक्षगुरुत्वपिशाचादीनामपि सत्त्वग्रहेण द्वितीयस्य सर्वस्यैव मानान्तरैः सत्यत्वसिद्ध्या नेह नानेत्यादिश्रुतेर्मिथ्यात्वबोधकत्वासम्भवेन निर्विषयकत्वापत्तेः। न चोक्तश्रुतेः प्रपञ्चविनाशित्वे तात्पर्यमिति वाच्यमुपक्रमादिना द्वैतनिषेधे तात्पर्यग्रहात् तात्पर्यविषयीभूतार्थत्यागे उपक्रमादिप्रमाणस्य बाधापत्तेः। प्रत्यक्षादेरेव व्यावहारिकसत्त्वविषय-

ननु—पञ्चदशरात्रे प्रथमेऽहन्यग्निष्टुन्नामके नामातिदेशेन एकाहाग्निष्टुद्धर्मभूता सुब्रह्मण्याग्नेयी प्राप्ता, तस्या अल्पविषयत्वाच्चतुर्दशाहस्सु चोदकेन प्राप्तया ऐन्द्र्या सुब्रह्मण्यया बहुविषयया यथा बाधः,

---

कत्वेन सावकाशत्वस्य वक्तुं युक्तत्वात्। ननु उक्तरीत्या श्रुतेः सावकाशत्वखण्डने प्रत्यक्षादेरपि सावकाशत्वाभावात् परस्परविरुद्धयोरप्यप्रामाण्यं स्यात् तथा च श्रुतिरपि कथं प्रमाणं प्रत्यक्षस्य व्यावहारिकसत्त्वविषयकत्वोक्तिर्न युक्ता श्रुतेः प्रत्यक्षादेर्वा कस्य व्यावहारिकप्रामाण्यमित्यस्याविनिगम्यत्वात् तत्र आह—**विरुद्धयोश्च द्वयोरिति**।सत्त्वप्रत्यक्षाद्वैतश्रुत्योरिति शेषः। अहं मनुष्य इति प्रत्यक्षेण आत्मनः प्रादेशिकत्वं गृह्यते आकाशवत् सर्वगतश्च नित्य इत्यागमेन आत्मनः विभुत्वं प्रतिपाद्यते। तथा च एकस्यैवात्मनः प्रादेशिकत्वविभुत्वपरिमाणयोर्विरोधात् विरुद्धार्थकयोर्द्वयोः प्रमाणयोः तात्त्विकप्रामाण्यानुपपत्त्या एकस्य तात्त्विकम् अपरस्य व्यावहारिकं प्रामाण्यमवश्यमभ्युपेयम्। स्वविषयकशूरत्वात् प्रमाणानां व्यावहारिकसाधारणप्रामाण्यसामान्याभावस्य अत्यन्ताप्रमाण्यस्य अन्याय्यत्वात्। "तदसम्भवे" अद्वैतश्रुतेर्व्यावहारिकप्रामाण्यासम्भवे इत्यर्थः। व्यावहारिकप्रामाण्यं नाम व्यावहारिकसत्त्वाश्रयविषयकत्वं व्यावहारिकसत्त्वञ्च बाध्यत्वे सति व्यवहारकालाबाध्यत्वं सत्यन्तानुक्तौ तात्त्विकप्रामाण्यस्यापि व्यावहारिकप्रामाण्यापत्तेः व्यावहारिकसत्त्वञ्च न अद्वैतत्वोपलक्षितब्रह्मणः सम्भवति तस्य साक्षिरूपत्वेन चिदानन्दरूपत्वेन च बाध्यत्वासम्भवात्, असाक्षिकबाधस्याप्यप्रसिद्धेः। सक्षिणो विरहे बाधस्यप्यसिद्ध्यापत्तेः तथा च सक्षिबोधवाक्यवाक्ये व्यावहारिकप्रामाण्यसम्भवः ब्रह्मणः साक्ष्यभिन्नत्वान्न ब्रह्मणः बाध्यत्वसम्भवः प्रदर्शितोपपत्त्या अद्वैतश्रुतेः तात्त्विकप्रामाण्ये अत्यन्ताप्रामाण्यस्यान्याय्यत्वात् प्रत्यक्षादेर्व्यावहारिकप्रामाण्य एव पर्यवसानं स्यात्॥१०॥

११—किञ्च बहुबाधस्यान्याय्यत्वादितिन्यायेन द्वैतग्राहिप्रत्यक्षादिबहुप्रमाणाबाधाय अद्वैतवाक्यस्यैकस्यैव प्रमाणस्य प्रतीतार्थबाध एव स्वीकार्य इत्याशयेन पूर्वपक्षी शङ्कते—ननु पञ्चदशरात्रे प्रथमेऽहनि अग्निष्टुन्नामके नामातिदेशेन एकाहाग्निष्टुद्धर्मभूता सुब्रह्मण्याग्नेयी प्राप्ता। तस्या अल्पविषयत्वात् चतुर्दशाहःसु चोदकेन प्राप्तया ऐन्द्र्या सुब्रह्मण्यया बहुविषयया यथा बाधः,

बहुबाधस्यान्याय्यत्वात्; तथा द्वैतग्राहिप्रत्यक्षतदुपजीव्यनुमानकर्मकाण्डसगुणोपासनावाक्यादिरूपबहुप्रमाणाबाधायाद्वैतवाक्यस्य प्रतीतार्थबाधः किं न स्यात्? तदुक्तम्–"बहुप्रमाणविरोधे चैकस्याप्रामाण्यम् दृष्टं शुक्तिरजतादिज्ञाने" इति–चेत् ॥११॥

---

बहुबाधस्यान्याय्यत्वात्तथा द्वैतग्राहिप्रत्यक्षतदुपजीव्यनुमानकर्मकाण्डसगुणोपासनावाक्यादिरूपबहुप्रमाणाबाधाय अद्वैतवाक्यस्य प्रतीतार्थबाधः किं न स्यात्। तदुक्तम्—बहुप्रमाणविरोधे च एकस्याप्रामाण्यं दृष्टं शुक्तिरजतादिज्ञाने इति चेत्। "त्यजेदेकं कुलस्यार्थे" इति न्यायमनुसरन् पूर्वपक्षी पूर्वपक्षमादर्शयति—"किञ्च पञ्चदशरात्रे प्रथमेऽहनी"ति। पूर्वतन्त्रे द्वादशाध्याये द्वितीयपादे सूत्रितम्—"विप्रतिपिद्धधर्माणां समवाये भूयसां स्यात् स्वधर्मत्वम्" [ जै० सू० १२।२।२२ ]। अत्रायमधिकरणनिष्कर्षः—अस्ति च पञ्चदशरात्र्यक्षं सत्रं पञ्चदशसूक्तात्मकम्। तस्य प्रथमं सूक्तमहर्ग्निष्टुन्नामकम् ततः पराणि त्रीण्यहानि ज्योतिर्गौरायुरित्येतन्नामकानि। अग्निष्टुत्, ज्योतिः, गौः, आयुरित्येतन्नामका ऐकाहिका प्रसिद्धा अपरेऽपि क्रतवो वर्तन्ते। तेषां नामानि आग्निष्टुदादीनि। तदीयेतिकर्तव्यताप्राप्त्यर्थं पञ्चदशरात्रस्य प्रथमदिवसचतुष्टये स्थाप्यन्ते ततः पराणि एकादशाहानि द्वादशाहक्रतुप्रकृतिकानि। तत्र पञ्चदशस्वपि अहःसु उपसदः सन्ति, आज्यहविष्का इष्टयो हि उपसदित्युच्यन्ते। तत्र सुब्रह्मण्यानामका यजुर्वेदीयनिगदविशेषाः सन्ति। सा द्विविधा आग्नेयी ऐन्द्रेयी च। अग्निदेवताका इन्द्रदेवताका च इत्येवं सुब्रह्मण्याद्वयमस्ति। तेन यजुर्वेदीयनिगदेन अग्नीन्द्रयोराह्वानं तत्रोपसत्काले कार्यम्। तत्र पञ्चदशरात्रस्य यत् प्रथममहः अग्निष्टुन्नामकं तत्रोपसत्काले एकाहाग्नेरग्निष्टुन्नामधेयसाम्येन आग्नेयीसुब्रह्मण्या प्राप्ता। एकाहाग्निष्टुति उपसत् काले आग्नेय्याः सुब्रह्मण्यायाः सत्त्वात्। ज्योतिर्गौरायुरित्येतत्सञ्ज्ञकेषु त्रिषु अहःसु क्रियमाणोपसत्काले ज्योतिर्गौरायुरित्येतत्सञ्ज्ञकैकाहनामधेयसाम्येन ऐन्द्रीसुब्रह्मण्या प्राप्ता। ऐकाहिकज्योतिरादिदिवसे उपसत्काले ऐन्द्र्याः सुब्रह्मण्यायाः सत्त्वात्। परिशिष्टेषु एकादशाहःसु क्रियमाणोपसत्काले ऐन्द्र्यैव सुब्रह्मण्या चोदकेन प्राप्ता। एतत्प्रकृतिभूते द्वादशाहक्रतौ क्रियमाणोपसत्काले ऐन्द्र्याः सुब्रह्मण्यायाः सत्त्वात्। एवञ्च पञ्चदशरात्रे आद्याहीयोपसदः आग्नेयी सुब्रह्मण्या अङ्गम्। परिशिष्टानां चतुर्दशाना-

न, दृष्टान्ते बहुविषयाबाधोऽत्र बहुभिरिति वैषम्यात्; देहात्मैक्ये प्रत्यक्षानुमानशब्दाभासादिसत्त्वेऽपि देहात्मभेदबोधकस्यानन्यपरत्वेन प्राबल्यवदत्रापि अनन्यपरत्वेनाद्वैतश्रुतेः प्राबल्यात्, विद्याविद्याभेदेन

---

महामैन्द्री अङ्गम्। तत्र च ऐन्द्री त्रिषु अहःसु नामधेयेन प्राप्नोति। एकादशाहःसु च चोदकेनेति विवेकः। तत्राग्निष्टुन्नामके प्रथमेऽहनि उपसत्कालीनसुब्रह्मण्यायां सन्देहात् किमाग्नेयी आहूतव्या ऐन्द्री वा। ननु प्रथमेऽह्नि उपसत्काले ऐन्द्र्याः प्राप्तेरेवाभावात् सन्देह एवानुपपन्न इति चेत्, सम्प्रदायानभिज्ञोऽसि। या उपसदस्ता ऐन्द्र्य इति सामान्यश्रुत्या उपसन्मात्रस्य इन्द्रदेवताकत्वावगमेन ऐन्द्र्याः सुब्रह्मण्याया अग्निष्टुन्नामकप्रथमाहःसम्बन्ध्युपसत्कालेऽपि प्राप्त्या संशयसम्भवात्। तत्रैकाहाग्निष्टुदुपसद आग्नेयीसुब्रह्मण्याङ्गत्वेन तन्नामसाम्येन प्रथमोपस्थितत्वेन मुख्यत्वात्, असञ्जातविरोधित्वेन च आग्नेय्येवाहूतव्या। न तु ऐन्द्री चरमोपस्थितत्वेन सञ्जातविरोधित्वेन चामुख्यत्वात् तथा चैतदनुसारेण चतुर्दशाहःस्वपि आग्नेय्येवाहूतव्येति पूर्वपक्षः। सिद्धान्तस्तु ऐन्द्र्येवाहूतव्येति। चतुर्दशसु अहःसु उपसत्काले ऐन्द्र्या आहूयमानत्वात्। भूयसां साधर्म्याय अत्रापि ऐन्द्र्येवाहूतव्या। बहुबाधस्यान्याय्यत्वात्। अत्राग्नेयी सुब्रह्मण्या अल्पविषया अग्निष्टुन्नामकप्रथमाहःसम्बन्ध्युपसन्मात्रविषयत्वात्। अल्पविषयाग्नेयी सुब्रह्मण्या बहुविषयया ऐन्द्रीसुब्रह्मण्यया बाध्यते। न तु अल्पविषयया आग्नेयीसुब्रह्मण्यया बहुविषया ऐन्द्री सुब्रह्मण्या बाध्यते इति यथा सिद्धान्तितं पूर्वतन्त्रे तथा प्रकृतेऽपि द्वैतग्राहिबहुप्रमाण्यविरोधादेव अद्वैतवाक्यस्य प्रतीतार्थेऽप्रामाण्यमेव युक्तम्। अन्यथा अल्पविषयप्रमाणेन बहुबाधापत्तिः स्यात्। उक्तञ्च मध्वाचार्यैर्बहुप्रमाविरोधे च एकस्याप्रामाण्यमिष्टं शुक्तिरजतादिज्ञाने ॥ ११॥

१२—समाधानमाह—न दृष्टान्ते बहुविषयाबाधोऽत्र बहुभिरिति वैषम्यात्। देहात्मैक्ये प्रत्यक्षानुमानशब्दाभासादिसत्त्वेऽपि देहात्मभेदबोधकस्यानन्यपरत्वेन प्राबल्यवत् अत्रापि अनन्यपरत्वेन अद्वैतश्रुतेः प्राबल्यात्। दृष्टान्तस्य दार्ष्टान्तिकवैषम्यात् पूर्वतन्त्रोक्तं दृष्टान्तमसङ्गतम्, कुतः ? दृष्टान्ते बहुविषयया ऐन्द्र्या सुब्रह्मण्यया अल्पविषयाया आग्नेय्याः सुब्रह्मण्यायाः बाधः। दार्ष्टान्तिके पुनर्बहुभिः प्रमाणैर्द्वैतग्राहिभिः अद्वैतश्रुतेर्बाधोऽभिप्रेतः।

विद्वदविद्वत्पुरुषभेदेन च विरोधाभावादिति ॥१२॥

इति प्रत्यक्षस्य जात्युपक्रमन्यायादिभिः प्राबल्यनिराकरणम् ।

स तु प्रकृतेऽसङ्गतः । बहुविषया श्रुतिर्बाधिकाऽपि बहूनि प्रमाणानि बाधकानि न भवितुमर्हन्ति । वस्तुतः, तात्पर्यवत्त्वेन अद्वैतश्रुतेरनन्यपरत्वेऽवधृते बहुभिरपि प्रमाणैस्तस्य बाधो न भवितुमर्हति । अद्वैतश्रुतिबाधकत्वेन यानि प्रमाणानि शङ्कितानि तानि श्रुतिबाधितार्थविषयकत्वेन प्रमाणाभासरूपाण्येव, न तु प्रमाणानि । बहुभिरपि प्रमाणाभासैः एकाऽपि अनन्यपरा श्रुतिर्न बाधितुं शक्यते इत्यत्र दृष्टान्तमाह — देहात्मैक्ये मनुष्योऽहं गौरोऽहमित्यादिप्रत्यक्षाभाससत्त्वेऽपि यथा न तेन प्रत्यक्षाभासेन देहात्मभेदबोधिकायाः अनन्यपरत्वेन प्रबलायाः श्रुतेर्बाधः, यथा वा देहात्मैक्यग्राहकानुमानाभासेन न भेदबोधिकायाः श्रुतेर्बाधः यथा वा देहात्मैक्यबोधकस्य शब्दाभासस्य न देहात्मभेदबोधिकायाः श्रुतेर्बाधकत्वम् एवं प्रकृतेऽपि द्वैतग्राहकैर्बहुभिः प्रमाणैरपि अनन्यपराया अद्वैतग्राहिकायाः श्रुतेर्बाधः प्रमाणानामाभासतश्चानिश्चितप्रामाण्यकत्वम् , देहात्मविषयकानुमानाभासश्च आत्मा देहात्मैक्यवान् प्रत्यक्षेण तथा प्रतीयमानत्वात् अयं घट इतिप्रत्यक्षवत् । देहात्मैक्यशब्दाभासश्च अहं मनुष्यः, अहं गौर इत्यादिवाक्यमेव शब्दाभासादीत्यत्रादिपदेनार्थापत्त्याभासो ग्राह्यः । अत्रापीति द्वैतसत्यत्वप्रत्यक्षाद्वैतश्रुत्योर्विरोधेऽपि । तथा च बाध्यबाधकमानयोर्द्वयोरपि प्रामाण्येऽनिश्चिते द्वयोरपि प्रामाण्ये निश्चिते वा तादृशन्यायावतारः । न तु एकस्य कस्यचित् प्रामाण्ये निश्चिते अन्येषां च प्रामाण्येऽनिश्चिते शतमप्यन्धानां न पश्यतीति न्यायेन भूयस्त्वस्यानुपयोगात् । अन्यथा देहात्मैक्यप्रत्यक्षाभासादेः प्राबल्यापत्तेरिति भावः । ननु तथापि प्रत्यक्षादीनां कर्मोपासनाश्रुतीनाञ्च प्रमाणत्वेन व्यवहारो विद्यते प्रामाण्याभावे व्यवहारो विरुध्यत इति अतत्त्वविदामेव तद्व्यवहारवत् तत्त्वविदामपि तद्व्यवहारः स्यादित्यत आहाचार्यः—विद्याऽविद्याभेदेन विद्वदविद्वत्पुरुषभेदेन च विरोधाभावादिति । विद्या तत्त्वज्ञानम् । तत्रैव तात्त्विकं प्रामाण्यम् । प्रत्यक्षादौ व्यावहारिकप्रामाण्याश्रये आविद्यकविषयकत्वेन अविद्यारूपे प्रमाणत्वव्यवहारस्तु अतत्त्वविदां दोषादेव । तत्त्वविदां तु दोषाभावान्न तत्र प्रामाण्यव्यवहार इति भावः ॥१२॥

इतिश्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां प्रत्यक्षस्य जात्युपक्रमादिभिः प्राबल्यनिराकरणविवरणं समाप्तम् ।

## अथोपजीव्यत्वेन प्रत्यक्षप्राबल्यनिराकरणम्

ननु उक्तन्यायैः प्रत्यक्षस्य जात्या प्राबल्याभावेऽपि उपजीव्यत्वेन प्राबल्यम् उपजीव्यत्वं चानुमानागमापेक्षिताशेषार्थग्राहकतया, सा च क्वचित् साक्षात् क्वचित्परम्परया; दृष्टं चापेक्षितैकदेशग्राहिणामप्युपजीव्यत्वम्, तद्विरुद्धग्रहणे तेन बाधश्च; यथा—घटविभुत्वानुमाने पक्षग्राहिणा अक्ष्णा, नरशिरःशुचित्वानुमाने साध्यग्राहकेणागमेन, मानोवैभवानुमाने ज्ञानासमवाय्याधारत्वहेतुग्राहकेणानुमानेन, किं वक्तव्यमपेक्षिताशेषग्राहिणा स्वविरुद्धग्राहकस्य बाधः? 'चक्षुरादेश्च शब्दतज्जन्यज्ञानप्रामाण्याद्यग्राहि-

---

१—ननु उक्तन्यायैः प्रत्यक्षस्य जात्या प्राबल्याभावेऽपि उपजीव्यत्वेन प्राबल्यम्। जात्युपक्रमादिभिः प्रत्यक्षस्य शङ्कितं प्राबल्यं निरस्तं तन्निरसनमसहमानः पूर्वपक्षी उपजीव्यत्वेन प्रत्यक्षस्य प्रपञ्चमिथ्यात्वानुमानाद् अद्वैतागमाच्च प्राबल्यं शङ्कते उपजीव्यत्वेन प्राबल्यमिति मिथ्यात्वबोधकानुमानागमापेक्षया प्रत्यक्षस्य बलवत्त्वम्। उपजीव्यत्वञ्च अनुमानागमापेक्षिताशेषार्थग्राहकतया, सा च क्वचित् साक्षात् क्वचित् परम्परया, दृष्टञ्च अपेक्षितैकदेशग्राहिणामपि उपजीव्यत्वं तद्विरुद्धग्रहणे तेन बाधश्च। यथा घटविभुत्वानुमाने पक्षग्राहिणा अक्ष्णा, नरशिरःशुचित्वानुमाने साध्यग्राहकेणागमेन, मनोवैभवानुमाने ज्ञानासमवाय्याधारत्वहेतुग्राहकेणानुमानेन, किमु वक्तव्यमपेक्षिताशेषग्राहिणा स्वविरुद्धग्राहकस्य बाधः। उपजीव्योपजीविनोर्विरोधे उपजीव्यस्यैव प्राबल्यमिति स्थितिः यथा स्मृतीनां श्रुतिमूलकत्वेन श्रुत्युपजीवित्वात् श्रुतितो दौर्बल्यम् उपजीव्यत्वात् श्रुतेः प्राबल्यम्। उपजीव्यत्वञ्च अनेकधा निरूपयिष्यन् प्रथमतो यद् यदपेक्षिताशेषग्राहकं तत्तदुपजीव्यमिति उपजीव्यस्वरूपं निरूप्य प्रकृते योजयति—"उपजीव्यस्यापेक्षितग्राहकत्वमपि द्विविधं क्वचित् साक्षाद् अपेक्षितग्राहकत्वं क्वचित् परम्परया अपेक्षितग्राहकत्वम् अपेक्षिताशेषग्राहकत्वाभावेऽपि अपेक्षितैकदेशग्राहिणोऽपि उपजीव्यत्वं सम्भवति। तादृशोपजीव्यविरोधेन उपजीविनो बाधश्च दृष्टः। यथा घट-

विभुत्वानुमाने• एतदनुमानापेक्षितैकदेशपक्षमात्रग्राहिणा अक्ष्णा—प्रत्यक्षेण अस्यानुमानस्य बाध इति शेषः। घटो व्यापकः सत्त्वात् गगनवदित्यनुमानस्य घटरूपपक्षमात्रग्राहिणा अक्ष्णा बाधः। चक्षुषा घटो गृह्यमाणः परिच्छिन्नत्वेनैव गृह्यते। अतोऽनुमीयमानविभुत्वं तेनैव चक्षुषा बाध्यते। अत्र चक्षुःसिद्धं घटरूपपक्षमुपजीव्यैव एतदनुमानं प्रवर्तते। एवमेव नरशिरःकपालं शुचि प्राण्यङ्गत्वात् शङ्खवत् इत्यनुमानमेव तदपेक्षितशुचित्वरूपसाध्यग्राहकेण आगमेन "नारं स्पृष्ट्वाऽस्थिसस्नेहं सवासा जलमाविशेदि"त्यनेन बाध्यते! शुचित्वाशुचित्वे आगमैकगम्ये, आगमगम्यं शुचित्वमुपजीव्य प्रवृत्तमिदमनुमानमागमविरोधात बाध्यते। अत्रोपजीव्यजातीयविरोधो बोध्यः। दृष्टान्ते शङ्खे शुचित्वञ्च—

"त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया।
शङ्खे तिष्ठन्ति विप्रेन्द्र तस्माच्छङ्खं प्रपूजयेत्॥"

इत्यागमेनैव सिद्धम्। दृष्टान्ते साध्यग्राहकागमसजातीयागमेन पक्षे साध्यस्य बाध इति भावः। एवमेव मनोवैभवानुमाने ज्ञानासमवाय्याधारत्वहेतुग्राहकेणानुमानेनेति। मनो विभु, ज्ञानासमवाय्याधारत्वाद् आत्मवदिति हि मनोवैभवानुमानम् अत्र मनसो ज्ञानासमवाय्याधारत्वं गृह्णदनुमानम् अणुपरिमाणत्वेनैव मनो गृह्णातीति हेतुग्राहकानुमानेनैव उपजीव्यानुमानं बाध्यते। ज्ञानासमवाय्याधारत्वं नाम ज्ञानासमवायिकारणम् आत्ममनःसंयोगः स च आत्मनि मनसि च समवेतः! अतः तादृशसंयोगाधारत्वं मनसि वर्तते। ज्ञानासमवायिकारणात्मनःसंयोगाधारत्वात् इत्येव हेतुशरीरम्। अस्यानुमानगम्यत्वमित्थम्—युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्यक्षपादसूत्रेण एतदुक्तं यत् संयोगवशात् ज्ञाने क्रमः सम्भवति तदेकं क्रमिकज्ञानासमवायिकारणसंयोगाधारभूतं किञ्चिद् द्रव्यमणुपरिमाणमङ्गीकर्तव्यम्। अन्यथा ज्ञानानां युगपदुत्पत्तिप्रसङ्गः स्यात् ज्ञानानामयुगपदुत्पत्तये ज्ञानासमवायिकारणसंयोगाधारभूतं द्रव्यमणुपरिमाणं स्वीकर्तव्यं तदेव मन इति। तथा च ज्ञानसुखादीनां क्रमिकप्रतीतिः क्रमिकसंयोगवत्करणसाध्या क्रमिकक्रियात्वात् क्रमोत्पन्नच्छिदावत्। ज्ञानसुखादीनां क्रियात्वेन करणजन्यत्वमनुमाय ज्ञानसुखादीनां क्रमिकत्वाय क्रमोत्पन्नासमवायिकारणसंयोगजन्यत्वमनुमेयं तच्च मनसो विभुत्वे असमवायिकारणसंयोगस्य यौगपद्यात् ज्ञानादीनां क्रमो न

त्वेऽपि तद्ग्राहिश्रोत्रसाक्ष्यादिसजातीयत्वादुपजीव्यत्वम्। दृष्टं च नरशिरः-कपालाशुचित्वबोधकागमस्य तच्छुचित्वानुमानोपजीव्यशुचित्वागमसजातीयत्वेन तदनुमानाद् प्राबल्यम्, न चेन्द्रियमपि स्वज्ञानार्थमनुमानमुपजीवतीति सम एवोपजीव्योपजीवकभावः, अज्ञातकरणतया ज्ञानजन-

---

स्यात् हेतुमात्रग्राहकत्वेन उपजीव्यमनुमानं तद्विरुद्धं मनोवैभवानुमानमुपजीव्येनानुमानेन बाध्यते। प्रदर्शितस्थलेषु अपेक्षितैकदेशग्राहिणा उपजीव्येन विरोधात् उपजीविनां बाधः किमु वक्तव्यम् अपेक्षिताशेषग्राहिणा उपजीव्येन विरोधे उपजीविनां बाधे इत्याह पूर्वपक्षी—किमु वक्तव्यमपेक्षिताशेषग्राहिणा उपजीव्येन स्वविरुद्धग्राहकस्य उपजीविनो बाध इति। चक्षुरादेश्च शब्दतज्जन्यज्ञानप्रामाण्याद्यग्राहित्वेऽपि तद्ग्राहिश्रोत्रसाक्ष्यादिसजातीयत्वादुपजीव्यत्वम् दृष्टश्च नरशिरःकपालाशुचित्वबोधकागमस्य तच्छुचित्वानुमानोपजीव्यशुचित्वागमसजातीयत्वेन तदनुमानात् प्राबल्यम्। सन् घट इत्यादिचाक्षुषप्रत्यक्षविरोधोऽभिहितः पूर्वपक्षिणा तस्य दृश्यत्वादिलिङ्गापेक्षितग्राहित्वेनोपजीव्यत्वेऽपि "नेह नानास्ति किञ्चने"त्यादिशब्दस्वरूपग्राहकत्वाभावात् शब्दापेक्षितसर्वग्राहित्वेन कथमुपजीव्यत्वं येन प्राबल्यं स्याद् इत्यत आह—चक्षुरादेरिति। सन् घट इत्यादिसत्त्वग्राहिणः चक्षुरादेः नेह नानेति शब्दाग्राहित्वेऽपि एवं शब्दजन्यज्ञानप्रामाण्याद्यग्राहित्वेऽपि शब्दस्वरूपग्राहि श्रोत्रं शब्दजन्यज्ञानप्रामाण्यग्राही च साक्षी इति स्थितिः श्रोत्रसाक्षिणोः प्रत्यक्षत्वात् तत्सजातीयत्वं सन् घट इत्यादिचाक्षुषप्रत्यक्षस्यापि अस्ति। तेनोपजीव्यविरोधाभावेऽपि उपजीव्यसजातीयेन विरोधोऽस्त्येव तेनैव मिथ्यात्वानुमानागमयोर्बाधः स्यादिति भावः। साक्षादनुपजीव्यस्य उपजीव्यसजातीयत्वमात्रेण प्राबल्यमदृष्टचरमित्यत आह—दृष्टञ्चेति नरशिरः कपालशुचित्वानुमानोपजीव्यस्य शङ्खशुचित्वागमस्य सजातीयः नरशिरःकपालाशुचित्वबोधकागमः तेनैवोपजीव्यसजातीयेन आगमेनोपजीविनोऽनुमानस्य बाधो दृष्टः अनुमानापेक्षया उपजीव्यसजातीयस्य प्राबल्यञ्च दृष्टम्। एवमेव प्रकृतेऽपि उपजीव्यसजातीयत्वेन सन् घट इत्यादिप्रत्यक्षस्य प्राबल्यम्। न चेन्द्रियमपि स्वज्ञानार्थमनुमानमुपजीवतीति

नार्थमनुमानानपेक्षणात्, अनुमानागमादिना तु ज्ञानजननार्थमेव तदपेक्षणादिति विशेषात्—इति, चेत् ? ॥१॥

न, उपजीव्याविरोधात्। तथा हि—यत्स्वरूपमुपजीव्यते तन्न बाध्यते; बाध्यते च तात्त्विकत्वाकारः; स च नोपजीव्यते कारणत्वे तस्याप्रवेशात्। तदुक्तम्—

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥

---

सम एव उपजीव्योपजीवकभावः। अज्ञातकारणतया ज्ञानजननार्थम् अनुमानानपेक्षणात् अनुमानागमादिना तु ज्ञानजननार्थमेव तदपेक्षणादितिविशेषात्। ननु तथाप्यनुमानं प्रति प्रत्यक्षं यथोपजीव्यं तथा प्रत्यक्षं प्रति अनुमानमप्युपजीव्यं ज्ञातेन हि चक्षुरादिना घटादिसत्त्वं गृह्यते इति वक्तव्यम्। तत्स्वरूपज्ञानञ्च रूपादिज्ञानादनुमितिरेव। तथा चानुमानस्य यथा व्याप्त्याद्यंशे प्रत्यक्षापेक्षा तथा प्रत्यक्षस्यापि स्वरूपसिद्धि प्रत्यनुमानापेक्षा तुल्येत्याशङ्क्य निराकरोति—न चेन्द्रियमपीति। अज्ञातकरणकं ज्ञानं प्रत्यक्षम्। उक्तञ्च लक्षणावल्यामुदयनेन—ज्ञानकरणजन्यत्वरहितज्ञानत्वमपरोक्षत्वमिति। तथा च प्रत्यक्षेण विषयज्ञानजननाय स्वज्ञानं नापेक्षते स्वज्ञानस्यानुमानजन्यत्वेऽपि विषयज्ञानजननाय प्रत्यक्षस्य नानुमानापेक्षा। अनुमानागमाभ्यां विषयज्ञानजननायैव प्रत्यक्षमपेक्ष्यत इति, प्रत्यक्षमनुमानागमोपजीव्यं न तु अनुमानं प्रत्य- क्षोपजीव्यमिति भावः ॥१॥

२—समाधानमाह—नोपजीव्याविरोधात्। तथा हि यत्स्वरूपमुपजीव्यते तन्न बाध्यते बाध्यते च तत्त्विकत्वाकारः स च नोपजीव्यते कारणत्वे तस्याप्रवेशात्। तदुक्तम्—

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥

इति यद्यप्यतीन्द्रियपक्षसाध्यहेतुकानुमानस्य प्रत्यक्षापेक्षणे मानाभावः पूर्वपूर्वानुमानपरम्परयैव तत्सम्भवात् शाब्दबोधस्य क्वचिदपेक्षणेऽपि तस्य शब्दानुमानदिनैव सम्भवेन शब्दप्रत्यक्षानपेक्षणात्; किञ्च साक्षिणो भ्रमप्रमासाधारणत्वेन

तज्जातीयत्वेन कथं प्राबल्यमपि च। साक्षिजातीयत्वं चक्षुरादिज्ञानस्य न प्रत्यक्षत्वजातिः अस्मन्मते तस्यालीकत्वात् नाप्यनावृतचित्तादात्म्यापन्नविषयताकत्वं तस्यैकस्य साक्षिचाक्षुषादिज्ञानयोरभावेन साक्षिजातीयत्वरूपत्वाभावात्। साक्षिणि हि विषयता विषयतादात्म्यरूपा, चाक्षुषादिज्ञाने तु आश्रयाख्या। किञ्च नोपजीव्यजातीयत्वेन प्राबल्यस्वीकारे मानमस्ति अशौचागमस्य उक्तजातीयत्वमनादृत्यैव प्राबल्यासम्भवात् आगमत्वजात्यैव प्राबल्यस्योक्तत्वात् इत्यादिदूषणानि सन्ति तथापि स्फुटत्वात्तान्युपेक्ष्य वाचस्पत्युक्तं समाधानमाह—**उपजीव्यविरोधा-दिति**। उक्तञ्च वाचस्पत्ये भामतीनिबन्धे "न च ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्वञ्चेति युक्तं तस्य अपौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य बोधकतया च स्वतः सिद्धप्रमाणभावस्य स्वकार्ये प्रमितौ अनपेक्षत्वात्। प्रमितौ अनपेक्षत्वेऽपि उत्पत्तौ प्रत्यक्षापेक्षत्वात् तद्विरोधात् अनुत्पत्तिलक्षणमप्रामाण्यमिति चेत्? न। उत्पादकाप्रतिद्वन्द्वित्वात्। न हि आगमज्ञानं सांव्यावहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति, येन कारणाभावान्न भवेत् अपि तु तात्त्विकं, न च तत् तस्य उत्पादकम्, अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यावहारिकप्रमाणेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात्"। [भामती पृ० ९-१०] व्याख्यातं च कल्पतरौ—आगमस्य किं प्रत्यक्षगतव्यावहारिकप्रामाण्येन विरोधः उत तत्त्वावेदकत्वेन? नाद्य इत्याह **न हीति**—न हि आगमज्ञानं सांव्यावहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति। द्वितीयं प्रत्याह न च तदिति—न च तत्तस्योस्योत्पादकम्। विवृतं चैतत् परिमले—'उत्पादकाप्रतिद्वन्द्विहेतुविवरणग्रन्थे एवं हि यदुपजीव्यं न तेन विरोधः, येन विरोधः न तदुपजीव्यम्, इत्युजीव्यविरोधशङ्का निरस्ता। यत्स्वरूपम्—व्यवहारकालाबाध्यविषयकत्वं ज्ञानस्य तादृशाबाध्यत्वं विषयस्य उपजीव्यते—प्रयोजत्वेनापेक्ष्यते बाध्यते च **तात्त्विकत्वाकारः**—प्रत्यक्षज्ञानस्य तात्त्विकत्वाकारः—त्रिकालाबाध्यत्वम् आगमज्ञानेन बाध्यते। स च नोपजीव्यते। प्रत्यक्षज्ञानस्य त्रिकालाबाध्यत्वम् आगमेन नोपजीव्यते त्रिकालाबाध्यत्वेन प्रत्यक्षज्ञानं नागमज्ञानजनकं त्रिकालाबाध्यत्वे जनकतावच्छेदकत्वाभावात्। व्यवहारकालाबाध्यविषयकत्वेन शब्दनिश्चयादेव शाब्दबोधजननात् शाब्दबोधहेतौ शब्दनिश्चये शाब्दबोधजनकता

इति । किं चापेक्षितग्राहित्वमात्रेण चेदुपजीव्यता, तया च बाधकत्वम्, तदाऽपेक्षितप्रतियोगिग्राहकत्वेन 'इदं रजतमि'ति भ्रमस्य बाधोपजीव्यत्वात् कथं नेदं रजतमिति बाधबुद्धिस्तद्विरुद्धोदोयात् ? ॥२॥

अथ निषेध्यार्थसमर्पकतया प्रतियोगिज्ञानत्वेन तस्योपजीव्यत्वेऽपि तत्प्रामाण्यं नोपजीव्यम्, न हि प्रतियोगिप्रमात्वेनाभावज्ञानजनकता, गौरवात्, प्रतियोगिभ्रमादप्यभावज्ञानदर्शनाच्च, किन्तु तज्ज्ञानत्वेनैव;

---

न तात्त्विकत्वेन अवच्छिद्यते किन्तु व्यवहारकालबाध्यत्वेन । न तु सर्वथा अबाध्यत्वेन अनपेक्षितत्वात् गौरवकरत्वाच्च । शाब्दधीजनकतावच्छेदकत्वं त्रिकालाबाध्यत्वरूपे तात्त्विकत्वे नास्ति । कारणेषु कारणताग्रहः त्रिकालाबाध्यत्वेन तात्त्विकसत्त्वेनैव अस्तु तत्राह—अनपेक्षितत्वेन वृथात्वात् । यदाह खण्डनकारः—पूर्वसम्बन्धनियम इत्यादि । कार्यप्राक्कालघटितो योऽनन्यथासिद्धकार्यव्यापकतावच्छेदकधर्मरूपो नियमः तद्रूपे हेतुत्वे नौ—आवयोः प्रपञ्चसत्यत्वमिथ्यात्ववादिनोः तुल्यत्वे स्वीकृते तादृशहेतुत्वात् बहिर्भूतयोः—अघटकयोः सत्त्वासत्त्वयोः कथा वृथा न युक्ता इति खण्डनपद्यस्यार्थः । तेन तात्त्विकसत्त्वं कारणताशरीरे न प्रविष्टमिति भावः । अपेक्षितग्राहित्वमात्रेण उपजीव्यत्वं बाधकत्वञ्च यत् पूर्वपक्षिणा उक्तं तदपि असंगतमित्याह "किञ्चे"ति । किञ्च, अपेक्षितग्राहित्वमात्रेण चेदुपजीव्यता त्वया च बाधकत्वं तदा अपेक्षितप्रतियोगिग्राहकत्वेन इदं रजतमिति भ्रमस्य बाधोपजीव्यत्वात् कथं नेदं रजतमिति बाधबुद्धिस्तद्विरुद्धा उदीयात् । अपेक्षितग्राहित्वमात्रेण उपजीव्यतया प्राबल्यं न सम्भवति । तथात्वे भ्रमोत्तरबाधज्ञानस्य भ्रमोपजीवित्वं स्यात् । बाधप्रतियोगिन उपस्थापकत्वात् भ्रमस्य । भ्रमोपस्थापितं प्रतियोगिनमपेक्ष्यैव बाधज्ञानं प्रवर्तते । एवञ्च भ्रमस्य बाधोपजीव्यत्वात् उपजीव्यभ्रमविरोधात् बाधज्ञानमेव नोदयमासादयेत् । तथा च भ्रमबाधव्यवस्थैव निरस्ता स्यात् ॥२॥

ई—पूर्वपक्षी स्वाशयमाविष्कुर्वन् परिहरति—अथ निषेध्यार्थसमर्पकतया प्रतियोगिज्ञानत्वेन तस्योपजीव्यत्वेऽपि तत्प्रामाण्यं नोपजीव्यम् । न हि प्रतियोगिप्रमात्वेन अभावज्ञानजनकता, गौरवात् । प्रति-

लाघवात्, अतस्तद्विरुद्धविषयकं ज्ञानमुदीयादेवेति ब्रूषे, तुल्यमिदं प्रकृतेऽपि, पक्षज्ञानत्वादिना कारणता, न तु तत्प्रमात्वादिनाऽपीति ॥३॥

अथ—यत्प्रामाण्यं स्वरूपसिद्ध्यर्थमपवादनिरासार्थं च यत्प्रामा-

---

योगिभ्रमादपि अभावज्ञानदर्शनाच्च। किन्तु तज्ज्ञानत्वेनैव लाघवात्। अतस्तद्विरुद्धविषयकं ज्ञानमुदीयादेवेति ब्रूषे, तुल्यमिदं प्रकृतेऽपि। पक्षज्ञानत्वादिना कारणता, न तु तत्प्रमात्वादिनाऽपीति। प्रतियोगिज्ञानत्वेन भ्रमज्ञानस्य बाधज्ञानोपजीव्यत्वेऽपि प्रतियोगिज्ञानगतप्रामाण्यं न बाधज्ञानस्योपजीव्यम्। न हि प्रतियोगिज्ञानस्य प्रमात्वमपेक्ष्य बाधज्ञानं प्रवर्तते। इत्याह—**न हि प्रतियोगिप्रमात्वेन अभावज्ञानजनकता**। अभावज्ञाने प्रतियोगिज्ञानं कारणम्। प्रतीयोगिज्ञानाभावेऽभावज्ञानासम्भवात्। किन्तु प्रतियोगिप्रमा नाभावज्ञानजनिका, प्रमात्वेन जनकत्वे गौरवात्। प्रतियोगिभ्रमादपि अभावज्ञानदर्शनाच्च। किन्तु प्रतियोगिज्ञानत्वेनैव प्रतियोगिज्ञानस्याभावज्ञानजनकता, लाघवात्। रजतबाधज्ञाने रजतत्वेन प्रतियोगिज्ञानमपेक्षितं, रजतत्वेन प्रतियोगिनो ज्ञानं रजतत्ववति वा रजतत्वाभाववति वा भवितुमर्हति। यदि रजतत्ववति रजतत्वप्रकारकज्ञानं प्रतियोगिप्रसञ्जकं तर्हि तदुत्तरं बाधज्ञानं नोदीयादेव। अतो रजतत्वाभाववति रजतत्वप्रकारकं ज्ञानमपि प्रतियोगिज्ञानत्वेन बाधज्ञानस्योपजीव्यम्। किन्तु प्रतियोगिज्ञानस्य प्रामाण्यं नोपजीव्यम्। बाधज्ञानेनानुपजीव्यप्रामाण्यं निरस्यते। अनुपजीव्यबाधनात् बाधज्ञानस्योपजीव्यबाधकत्वं न भवति। पूर्वपक्षिणा यद्येवं समाहितं तर्हि सिद्धान्तेऽप्येतत्तुल्यमित्यत आह आचार्यः—"तुल्यमिदं प्रकृतेऽपि"। प्रतियोगिप्रसञ्जकतया प्रत्यक्षादीनामुपजीव्यत्वेऽपि प्रत्यक्षादीनां प्रामाण्यं नोपजीव्यम्। आगमानुमानाभ्यां तु प्रतियोगिप्रसञ्जकप्रत्यक्षादीनां प्रामाण्यमुपहन्यते। प्रत्यक्षादीनां प्रामाण्यं तु नोपजीव्यम्। अतोऽनुपजीव्यबाधनात् नोपजीव्यविरोध इति भावः। एवमेव पक्षज्ञानादीनां पक्षज्ञानत्वादिना एव कारणता, न तु पक्षप्रमात्वादिना। व्यवहारकालाबाध्यत्वमात्रेणैव तेषां कारणत्वसम्भवात्। सर्वथाऽबाध्यत्वन्तु नापेक्षितम्॥३॥

४—पूर्वपक्षी प्रकारान्तरेणोपजीव्यत्वं शङ्कते—यत्प्रामाण्यं स्वरूप-

ण्यमुपजीवति तत्तस्योपजीव्यम्; यथा स्मृतेरनुभवः, न च रजतभ्रमस्तथा—इति चेत्, तर्हि व्याप्तिधियोऽपि नानुमित्युपजीव्यत्वं स्यात्; लिङ्गाभासादपि वह्निमति वह्निप्रमादर्शनात् ॥४॥

ननु येन विना यस्योत्थानं नास्ति तत्तस्योपजीव्यमित्येव वक्तव्यम्; तथा च रजतभ्रमस्योपजीव्यत्वमस्त्येव, न तु प्राबल्यम्, न ह्यु-

---

सिद्ध्यर्थमपवादनिरासार्थं च यत् प्रामाण्यमुपजीवति, तत्तस्योपजीव्यम्। यथा स्मृतेरनुभवः। न च रजतभ्रमस्तथा इति चेत्। यस्य प्रामाण्यं स्वरूपसिध्यर्थं—स्वनिश्चयार्थमपवादनिरासार्थं स्वाभाववत्त्वज्ञाननिरासार्थं यत् प्रामाण्यमुपजीवति—यस्य प्रामाण्यमपेक्षते तत्तस्योपजीव्यम्। यथा स्मृतेरनुभव उपजीव्यः। स्मृतेः स्वजनकानुभवविषयकत्वनियमेन स्मृतौ प्रामाण्यस्य प्रमानुभवजन्यस्मृतित्वेनानुमानात्। इयं स्मृतिः प्रमा, प्रमानुभवजन्यस्मृतित्वात्, प्रमात्वव्याप्यतादृशस्मृतित्ववत्तानिश्चयस्य स्मृतौ अप्रमात्वधीनिरासकत्वाच्च अनुभवः स्मृतेरुपजीव्यः। स्मृतेः प्रमात्वसिद्ध्यर्थमप्रमात्वधीनिरासार्थञ्च अनुभवप्रमात्वमपेक्ष्यते इत्यनुभवः स्मृतेरुपजीव्यः। न च रजतभ्रमस्तथा, न हि बाधज्ञानं स्वप्रामाण्याय अपवादनिरासाय वा भ्रमज्ञानस्य प्रामाण्यमुपजीवति। अतो न भ्रमज्ञानं बाधज्ञानस्य उपजीव्यम्।

समाधत्ते—तर्हि व्याप्तिधियोऽपि नानुमित्युपजीव्यत्वं स्यात्। लिङ्गाभासादपि वह्निमति वह्निप्रमादर्शनात्। पूर्वपक्षिणा यादृशमुपजीव्यत्वं निरूपितं तादृशमेव चेदुपजीव्यत्वं तर्हि व्याप्तिधियोऽपि नानुमित्युपजीव्यत्वं स्यात्। कुतो न स्यादित्यत आह—"लिङ्गाभासादपि"। अधूमे "धूमभ्रमाद"यं "वह्निव्याप्य" इति भ्रमादपि वह्न्यनुमितौ दैवगत्या तत्र वह्निसत्त्वेऽनुमितेः प्रमात्वेऽपि व्याप्तिधियो भ्रमत्वात् नानुमितिः स्वप्रामाण्याय व्याप्तिधियः प्रामाण्यमुपजीवति। तथा च एवं रूपे उपजीव्यत्वे व्याप्तिधियोऽनुमित्युपजीव्यत्वं यत्प्रसिद्धं तदपि न स्यात् ॥४॥

५—पूर्वपक्षी उपजीव्यत्वेन प्राबल्यपक्षं परित्यज्य अन्यथा प्राबल्यं निरूपयति—ननु येन विना यस्योत्थानं नास्ति तत्तस्योपजीव्यमित्येव वक्तव्यम्। तथा च रजतभ्रमस्योपजीव्यत्वमस्त्येव। न तु प्राबल्यम्।

पजीव्यत्वमात्रेण प्राबल्यम् किन्तु परीक्षिततया। परीक्षा च सजातीय-विजातीयसंवादविसंवादाभावरूपा। न च तौ रजतभ्रमे स्तः; प्रकृते चाक्षस्य परीक्षितत्वेन प्राबल्यम्। अस्ति हि सन् घट इति विशेष-दर्शनजन्यज्ञानान्तरं घटार्थक्रियाप्रत्यक्षे। क्लृप्तदूरादिदोषाभावाच्च। एवमेव जीवेशाभेदश्रुतौ निषेध्यार्पकभेदश्रुतिः साक्षिप्रत्यक्षं चादोषत्वात् परीक्षितमिति तदपि न बाध्यम्। एवमेव च दोषाभावादिज्ञानरूप-परीक्षायामपि अनाश्वासे वेदे पौरुषेयत्वाभावज्ञाने त्वदुक्तानुमाने च योग्यानुपलब्ध्यादिना हेत्वाभासादिराहित्यज्ञाने ब्रह्ममीमांसायां प्रत्यधि-करणं सिद्धान्त्यभिप्रेतार्थे उपक्रमाद्यानुगुण्यज्ञाने चानाश्वासः स्यादिति प्रमाणतदाभासव्यवस्था न स्यात्—इति चेत् ॥५॥

---

न हि उपजीव्यत्वमात्रेण प्राबल्यं किन्तु परीक्षिततया। परीक्षा च सजातीयविजातीयसंवादविसंवादाभावरूपौ। न च तौ रजतभ्रमे स्तः। प्रकृते च अक्षस्य परीक्षितत्वेन प्राबल्यम्। अस्ति हि सन् घट इति विशेषदर्शनजन्यज्ञानानन्तरं घटार्थक्रियाप्रत्यक्षे क्लृप्तदूरादिदोषा-भावश्च एवमेव जीवेशाभेदश्रुतौ निषेध्यार्पकभेदश्रुतिः साक्षिप्रत्यक्षं च अदोषत्वात् परीक्षितमिति तदपि न बाध्यम्। एवमेव च दोषा-भावादिज्ञानरूपपरीक्षायामपि अनाश्वासे वेदे पौरुषेयत्वाभावज्ञाने त्वदुक्तानुमाने च यज्ञानुपलब्ध्यादिना हेत्वाभासादिराहित्यज्ञाने ब्रह्म-मीमांसायां प्रत्यधिकरणं सिद्धान्त्यभिप्रेतार्थे उपक्रमाद्यानुगुण्ये च अनाश्वासः स्यात्। इति प्रमाणतदाभासव्यवस्था न स्यादिति चेत्।

येन विना यस्य स्वरूपप्रतिलम्भ एव न भवति तत्तस्योपजीव्यम्। "तथा चेदं रूप्यमि"ति धीश्च प्रतिषेध्यार्पकतया धर्म्यर्पकतया च उपजीव्यैव। तथा चोप-जीव्यत्वेऽपि कथं बाध्यत्वमिति न वाच्यम्। न हि उपजीव्यत्वमेव प्राबल्ये तन्त्रं—प्राबल्यव्याप्यमित्यर्थः। यदि यद् यदुपजीव्यं तत्तत्प्रबलमिति न नियमः। इदं रजतमिति ज्ञानं निषेधज्ञानस्योपजीव्यमपि न निषेधज्ञानापेक्षया प्रबलम्। किन्तु परीक्षितत्वविशिष्टमुपजीव्यत्वमेव प्राबल्ये प्रयोजकम्। उक्तञ्च भट्टाचार्यैः—

न, परीक्षा हि प्रवृत्तिसंवादविसंवादाभावदोषाभावादिरूपा; तया

---

यावच्छक्तिपरीक्षायामुपजीव्यस्य बाधने ।
दोषो नाशोऽधिते दोष उपजीव्यत्वमस्त्वलम् ॥ इति ।

तथा च इदं रूप्यमिति ज्ञानस्योपजीव्यत्वेऽपि अपरीक्षितत्वान्न प्राबल्यम् । न हि परत्वमात्रं प्राबल्ये तन्त्रं, किन्तु परीक्षितत्वविशिष्टम् । अन्यथा प्रमाया अनन्तरभ्रमस्य वेदात् परस्य बाह्यागमस्य च परत्वेन प्राबल्यं स्यात् । परीक्षितत्वञ्च न तावत् निषेध्यार्पके शुक्तिरूप्याभेदज्ञानेऽस्ति । परीक्षा च सजातीयविजातीय-सम्वादः विजातीयविसम्वादाभावश्च । "इदं रजतम्", "इदं रजतम्" इति यत्र भ्रमज्ञानद्वयं जातं, तत्रापि स्वसमानविषयकभ्रमरूपज्ञानान्तरसंवादसत्त्वेन भ्रमस्यापि सजातीयसम्वादत्वापत्तिः । अत उक्तं—विशेषदर्शनजन्येति ज्ञानान्तरविशेष-णम् । विशेषदर्शनजन्यस्वसमानविषयकज्ञानान्तररूपः सजातीयसम्वादो नात्रा-स्ति । घटार्थक्रिया घटानयनादौ प्रवृत्त्यादिकम् । अर्थक्रियादिरूपो विजातीय-सम्वादो वात्र नास्ति । प्रत्युत तदविसम्वाद एव । दृश्यते च उत्तर-ज्ञानस्यैव बाधरूपस्य सम्वादादिकमिति तेन पूर्वधीर्बाध्यते । जगत्सत्यत्वप्रत्यक्षे तु विशेषदर्शनजन्यं "सन् घटः" इति ज्ञानान्तरं घटार्थक्रिया, ऽत्यक्षे क्लृप्त-दूरादिदोषाभावश्च अस्ति । इति जगत्सत्यत्वप्रत्यक्षं न बाध्यते । नन्वेवं प्रतिषे-ध्यसमर्पकस्योपजीव्यस्य उपजीवकेन बाधाङ्गीकारेऽभेदश्रुतिरेव प्रतिषेध्यार्पकभेद-श्रुतिं बाधेत इत्यत आह—"जीवेशाभेदश्रुतौ च निषेध्यार्पिका भेदश्रुतिः साक्षिप्रत्यक्षञ्च अदोषत्वात् परीक्षितमिति न तदपि बाध्यम्"। ननु परी-क्षितत्वमप्यप्रयोजकमेव, परीक्षाया अपि दोषाभावादिज्ञानरूपत्वेन तत्रापि अनाश्वास एव इत्यत आह—"एवमेवे"ति । अपौरुषेयत्वेन हेतुना दोषाभावज्ञाने तद्रूपपरी-क्षायामित्यर्थः । अनाश्वास इत्यर्थः । एवमेव तदुक्तानुमाने त्वदुक्ते प्रपञ्चमिथ्या-त्वानुमाने दृश्यत्वाद्यनुमानं हेत्वाभासादिदोषरहितं योग्यानां दोषाणामनुपलम्भात् इत्येवं हेत्वाभासादिराहित्यरूपपरीक्षायामनाश्वास इत्यर्थः । ब्रह्ममीमांसायाञ्च प्रत्य-धिकरणं सिद्धान्ताभिप्रेतार्थे उपक्रमादिषड्विधतात्पर्यलिङ्गानुगुण्यज्ञाने चाना-श्वासः स्यादिति प्रमाणतदाभासव्यवस्थादि न स्यात् ॥५॥

६—समाधानमाह सिद्धान्ती—न, परीक्षा हि प्रवृत्तिसम्वादविस-

च स्वसमानदेशकालीनविषयाबाध्यत्वं प्रामाण्यस्य व्यवस्थाप्यते धूमेन स्वसमानदेशकालीनवह्निरिव। तथा च व्यवहारदशामात्राबाध्यत्वं देहात्मैक्यसाधारणं परीक्षितप्रमाणे व्यवस्थितमिति कथमत्यन्ताबाध्यत्वाभावग्राहकागमानुमानयोः प्रवृत्तिर्न स्यात्? तस्मात् विश्वासप्रमाणतदाभासव्यवस्थाजीवेशभेदादिकं च व्यावहारिकमित्युपपन्नमेव सर्वं जगन्मिथ्येति ॥६॥

---

म्वादाभावदोषाभावादिरूपा। त्वया च स्वसमानसत्ताकदेशकालीनविषयाबाध्यत्वं प्रामाण्यस्य व्यवस्थाप्यते। धूमेन स्वसमानदेशकालीनवह्निरिव। तथा च व्यवहारदशामात्राबाध्यत्वं देहात्मैक्यसाधारणं परीक्षितप्रमाणे व्यवस्थितम् इति कथमत्यन्ताबाध्यत्वाभावग्राहकागमानुमानयोः प्रवृत्तिर्न स्यात्? तस्माद्विश्वासप्रमाणतदाभासव्यवस्थाजीवेशभेदादिकं च व्यावहारिकमित्युपपन्नमेव सर्वं जगन्मिथ्येति। पूर्वपक्षिणा च अक्षस्य परीक्षितत्वेन प्राबल्यमुक्तम्। परीक्षा च तेनैव प्रदर्शिता, सजातीयविजातीयसंवादविसंवादाभावो दोषाभावरूपेत्यादि। तदेव संगृह्य दर्शयति, परीक्षा हि प्रवृत्तिसंवादविसंवादाभावदोषाभावादिरूपा। आदिपदेन अर्थक्रियायाः ग्रहणम्। घटानयनादौ प्रवृत्त्यादिकमेव घटार्थक्रिया। एवमन्यथापि अर्थक्रिया द्रष्टव्या। त्वया परीक्षया परीक्षासमानदेशकालीनविषयाबाध्यत्वं प्रामाण्यस्य व्यवस्थाप्यते। परीक्षितप्रमाणानां प्रामाण्यं परीक्षासमानदेशकालीनविषयाबाध्यत्वमेव। न तु सर्वथाऽबाध्यत्वम्। परीक्षा हि प्रमाणस्य परीक्षासमानदेशकालीनविषयाबाध्यत्वे साक्षिणी न तु अन्यदेशकालाबाध्यत्वे। यथा धूमलिङ्गकवह्न्यनुमाने धूमसमानदेशकालीन एव वह्निर्भासते, न तु तदसमानकालीनः। तथा च व्यवहाररूपया परीक्षया व्यवहारदशामात्राबाध्यत्वरूपं प्रमाण्यं व्यवस्थाप्यते। व्यावहारदशाबाध्यत्वमात्रेण सर्वार्थाऽबाध्यत्वं न सिध्यति, देहात्मैक्यस्य व्यावहारदशामात्राबाध्यत्वेऽपि बाध्यत्वात्। तथा च परीक्षया यादृशं प्रामाण्यं व्यवस्थाप्यते तद्देहात्मैक्यसाधारणम्। परीक्षासमानदेशकालीनविषयाबाध्यत्वव्यवस्थापिकया परीक्षया कथमत्यन्ताबाध्यत्वाभावग्राहकागमानुमानयोः प्रवृत्तिः निरोद्धुं शक्येत। तथा च परीक्षा अत्यन्ताबाध्यत्वाभावग्राहकाद्वैतागमजगन्मिथ्यात्वानुमानयोः प्रवृत्ति

ननु—प्रत्यक्षाप्रामाण्ये तत्सिद्धस्य व्याप्त्यादेर्बाधेनानुमेयादेरनुमित्यादिप्रामाण्यस्य च बाधः; अनुमेयादेर्व्याप्त्यादिना अनुमितिप्रामाण्यादिना च समानयोगक्षेमत्वात्, अन्यथा प्रातिभासिकव्याप्त्यादिमता बाष्पाध्यस्तधूमेन तात्त्विको व्यावहारिको वाग्निर्व्यावहारिकव्याप्त्यादिमता धूमेन तात्त्विकोऽग्निर्व्यावहारिकेणाबाधेन विरुद्धधर्माधिकरणत्वेन च विश्वस्य जीवेशभेदस्य च तात्त्विकं सत्त्वं सिध्येत्—इति चेत् ॥७॥

---

निरोद्धुं न शक्नोति। यच्चोक्तं पूर्वपक्षिणः आनाश्वास स्यादिति प्रमाणतदाभासव्यवस्था च न स्यादिति तन्निरस्यति—तस्माद्विश्वास प्रमाणतदाभासव्यवस्था जीवेशभेदादिकं च व्यावहारिकम्। परीक्षा च व्यावहारिकप्रामाण्यव्यवस्थापिका इत्युक्तम्। तेन बाध्यत्वे सति व्याहारकालाबाध्यत्वरूपं व्यावहारिकत्वं तेषां सिध्यति। न तु सर्वथा अबाध्यत्वम्। एतेषां व्यावहारिकत्वसिद्धावपि तेषां मिथ्यात्वानुमितिरप्रत्यूहैव। मिथ्यात्वानुमाने व्यावहारिकप्रपञ्चस्यैव पक्षत्वात्। तस्य ब्रह्मज्ञानबाध्यत्वेन सर्वथाऽबाध्यत्वाभावात् ॥६॥

७—पूर्वपक्षी–शङ्कते—ननु प्रत्यक्षाप्रमाण्ये तत्सिद्धस्य व्याप्त्यादेर्बाधेन अनुमेयादेरनुमित्यादिप्रामाण्यस्य च बाधः। अनुमेयादेर्व्याप्त्यादिना अनुमितिप्रमाण्यादिना च समानयोगक्षेमत्वात्। अन्यथा प्रातिभासिकव्याप्त्यादिमता बाष्पाध्यस्तधूमेन तात्त्विको व्याहारिको वा अग्निः व्यावहारिकव्याप्त्यादिमता धूमेन तात्त्विकोऽग्निः व्यावहारिकेनाबाधेन विरुद्धधर्माधिकरणत्वेन च विश्वस्य जीवेशभेदस्य च तात्त्विकं सत्त्वं सिध्येदिति चेत्। उक्तञ्च पूर्वपक्षिणा—प्रत्यक्षाप्रामाण्ये हि प्रत्यक्षसिद्धस्य व्याप्त्यादेर्योग्यतादेश्च बाधेन अनुमेयस्य शब्दार्थस्य च बाधः स्यात्। अनुमेयस्य व्याप्त्यादिना अनुमितिप्रामाण्यादिना शब्दार्थस्य च योग्यतादिना शाब्दधीप्रामाण्यादिना च तुल्ययोगक्षेमत्वात्। अन्यथा प्रातिभासिकव्याप्त्यादिमता बाष्पाध्यस्तधूमेन तात्त्विको व्यावहारिको वाऽग्निः व्यावहारिकव्याप्त्यादिमता च धूमेन तात्त्विकोऽग्निः व्यावहारिकेणाबाधेन विरुद्धधर्माधिकरणत्वेन च विश्वस्य जीवेशभेदस्य च तात्त्विकत्वं सिद्ध्येत्। प्रातिभासिकयोग्यतादिमताऽनाप्तवाक्येन च तात्त्विको व्यावहा-

न, एतावता हि व्याप्त्यादिसमानसत्ताकमनुमेयं सिद्धयत्वित्यापत्तेः फलितोऽर्थः, स चास्माकमिष्ट एव; न हि ब्रह्मभिन्नं क्वचिदत्यन्ताबाध्यमस्ति। न चायमनुमेयादेर्व्याप्त्यादिना समसत्ताकत्वनियमोऽप्यस्ति; व्यभिचारिणापि लिङ्गेन साध्यवति पक्षे अनुमितिप्रमादर्शनात्; ध्वनिधर्मह्रस्वत्वदीर्घत्वादिविशिष्टत्वेन मिथ्याभूतैरपि नित्यैर्विभुभिर्वर्णैः सत्या शाब्दप्रमितिः क्रियत इति मीमांसकैरभ्युपगमात्, गन्धप्रागभावावच्छिन्ने घटे तात्त्विकव्याप्त्यादिमताऽपि पृथिवीत्वेनातात्त्विकगन्धानुमितिदर्शनात्, प्रतिविम्बेन च विम्बानुमितिदर्शनात्

---

रिको वार्थः व्यावहारिकयोग्यतादिमता च लौकिकवाक्येन अग्निहोत्रादिवाक्येन च तात्त्विकोऽर्थः सिध्येत्। प्रत्यक्षस्याप्रामाण्ये तद्गृहीता व्याप्तिरपि बाधितैव। न हि अप्रमाणगृहीतमबाधितं भवति। व्याप्त्यादेर्बाधितत्वे अनुमेयस्य अनुमितिप्रामाण्यस्य च बाध एव स्यात्। व्याप्त्यादेरित्यत्रादिपदेन पक्षहेतुदृष्टान्तानां ग्रहणम्। एतेषामप्रमाणीभूतप्रत्यक्षगृहीतानां बाधितत्वेन अबाधितानुमेयस्य अबाधितानुमानप्रामाण्यस्य च सिद्धिर्न भवितुमर्हतीति पूर्वपक्षिणामाशयः। अतः परीक्षया विषयाबाध्यत्वव्यवस्थाऽङ्गीकरणीया। परीक्षितस्य प्रत्यक्षस्यापि अप्रामाण्ये सर्वत्राव्यवस्था स्यात्। बाधितव्याप्त्यादिनापि यद्यबाधितसाध्यानुमितिः स्यात्, यदि व्याप्त्यादिना अनुमेयादेः समानयोगक्षेमत्वं न स्यात् तदा वाष्पाध्यस्तधूमेन तात्त्विको व्यावहारिकोवाग्निः सिध्येत्। विरुद्धधर्मसम्बन्धित्वेन च अनुमीयमानो भेदः तात्त्विकः स्यात्॥७॥

८—समाधत्ते—न, एतावता हि व्याप्त्यादिसमानसत्ताकमनुमेयं सिद्धयतु इत्यापत्तेः फलितोऽर्थः। स च अस्माकमिष्ट एव। न हि ब्रह्मभिन्नं क्वचिदत्यन्ताबाध्यमस्ति न चायमनुमेयादेर्व्याप्त्यादिना समानसत्ताकत्वनियमोऽप्यस्ति। व्यभिचारिणापि लिङ्गेन साध्यवति पक्षेऽनुमितिप्रमादर्शनात्। ध्वनिधर्महस्वत्वदीर्घत्वादिविशिष्टत्वेन मिथ्याभूतैरपि नित्यैर्विभुभिर्वर्णैः सत्या शाब्दप्रमितिः क्रियत इति मीमांसकैरभ्युपगमात् गन्धप्रागभावावच्छिन्ने घटे तात्त्विकव्याप्त्यादिमताऽपि पृथिवीत्वेन अतात्त्विकगन्धानुमितिदर्शनात्। प्रतिविम्बेन च विम्बा-

न च तत्रापि बिम्बरहितावृत्तिरूपा व्याप्तिस्तात्त्विक्यैवेति.—

---

नुमितिदर्शनात् । यदुक्तं पूर्वपक्षिणा अनुमेयादेर्व्याप्त्यादिना अनुमितिप्रामाण्यादिना च समानयोगक्षेमत्वमिति तदस्माकमिष्टमेवेति दर्शयति व्याप्त्यादिसमानसत्ताकमनुमेयं सिध्यतु इत्यापत्तिरस्माकमिष्टैव । असङ्गस्य स्वप्रकाशस्य ब्रह्मणः कुत्राप्यनुमेयत्वं नास्ति । ब्रह्मभिन्नं सर्वं बाध्यमेव इति कृत्वा बाध्यव्याप्त्यादिना बाध्यानुमेयसिद्धौ नास्माकं काचित् क्षतिः । इति पूर्वपक्षोक्तमभ्युपगम्यैव तदुक्तदोषः परिहृतः, इदानीं व्याप्त्यादिसमानसत्ताकमनुमेयमितिनियम एवासिद्ध इत्याह—न चायमनुमेयदिर्व्याप्त्यादिना समानसत्ताकत्वनियमोऽप्यस्ति । कुतो नास्ति ? इत्यत आह—व्यभिचारिणापि लिङ्गेन दैवात् साध्यवति पक्षेऽनुमितिप्रमादर्शनात् । एतच्च प्रागेव व्याख्यातम् । अन्यच्च, मीमांसकमते वर्णा नित्या विभवश्च । तेषां ह्रस्वत्वदीर्घत्वादयो धर्मा आरोपिता एव । ते वर्णव्यञ्जकध्वनिधर्माः, ध्वनिव्यङ्ग्यवर्णे आरोप्यन्ते । अन्यदीयधर्मह्रस्वत्वदीर्घत्वादिविशिष्टा आकारादयो वर्णा स्वरूपतः सन्तोऽपि ह्रस्वत्वदीर्घत्वादिविशिष्टरूपेण मिथ्यैव । अथ च तादृशैर्वर्णैर्जायमाना शाब्दी प्रतीतिः सत्या भवति । उक्तञ्च वाचस्पत्ये भामतीनिबन्धे—"अतात्त्विकप्रमाणभावेभ्योऽपि सांव्यावहारिकप्रमाणेभ्यः तत्त्वज्ञानोत्पत्तिदर्शनात् । तथा च वर्णे ह्रस्वत्वदीर्घत्वादयः अन्यधर्मा अपि समारोपितास्तत्त्वप्रतिपत्तिहेतवः । न हि लौकिका नाग इति वा नग इति वा पदात् कुञ्जरं वा तरुं वा प्रतिपद्यमाना भवन्ति भ्रान्ताः ।" [अध्यासभाष्यम्] । अस्मन्मते, वर्णानामनित्यत्वात् गुणत्वाच्च मीमांसकैरभ्युपगमादित्युक्तम् । गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वात् इत्यनुमानेन पृथिवीत्वहेतौ गन्धस्य तात्त्विकी व्याप्तिर्वर्तते । तात्त्विकव्याप्तिमता च पृथिवीत्वेन गन्धानुमितिरतात्त्विकी जायते । गन्धप्रागभावावच्छिन्ने घटे गन्धस्य बाधितत्वात् । तथा च व्याप्त्यादिसमानसत्ताकमनुमेयमिति नियमो न सिध्यति । अन्यच्च प्रतिबिम्बेन मिथ्याभेदविशिष्टेन बिम्बानुमितेः प्रमात्वदर्शनादपि नाऽयं नियमः सिद्ध्यति । यद्यपि प्रतिबिम्बः बिम्ब एव, बिम्बस्य तात्त्विकत्वात् प्रतिबिम्बोऽपि तात्त्विक एव, तथापि प्रतिबिम्बे बिम्बादिभेदस्य कल्पितत्वात् कल्पितभेदविशिष्टत्वेन प्रतिबिम्बो मिथ्यैव मिथ्याप्रतिबिम्बेन सत्यबिम्बस्यानुमानं यत् सिद्धान्तिना प्रदर्शितं तदसहमानः पूर्वपक्षी शङ्कते—न च तत्रापि बिम्ब-

वाच्यम्; एवं सत्यवृत्तिगगनादेरपि व्याप्यत्वापत्तेः। न च तत्र विम्ब-पूर्वकत्वमेवानुमीयते; विम्बव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपेणाप्रातिभासिकेन हेतुनेति—वाच्यम्, ॥८॥

प्रयुक्तत्वं हि न तज्जनकजन्यत्वादिरूपम्; व्यतिरेकयोः परस्परं तदभावात्, किन्तु व्याप्यव्यापकभावः, तथा च विम्बव्यतिरेकव्यापकव्यतिरेकप्रतियोगित्वं हेतुः, स चाकाशादौ व्यभिचार्यैव। तस्मात्तत्र

---

रहिता वृत्तित्वरूपा व्याप्तिस्तात्त्विक्येवेति वाच्यम्। एवं सति अवृत्तिगगनादेरपि व्याप्यतापत्तेः। व्याप्तिसमानसत्ताकमनुमेयमिति नियमस्य व्यभिचारप्रदर्शनाय यत् प्रतिबिम्बेन बिम्बानुमानं प्रदर्शितं तत्रापि अस्मदीयनियमोऽविकल एव वर्तते। व्याप्यादिसमानसत्ताकमनुमेयमिति हि नियमः। प्रतिबिम्बे बिम्बनिरूपिता या व्याप्तिः सा सत्यैव, बिम्बरहिता वृत्तित्वरूपा। तन्निरस्यति बिम्बरहितावृत्तित्वरूपा व्याप्तिः न भवितुमर्हति। एवं सति गगनादेः बिम्बाव्याप्यस्यापि बिम्बव्याप्यतापत्तेः। गगनस्य सर्वथा वृत्तित्वाद्। बिम्बरहितावृत्तित्वमपि गगने वर्तते। असत्यप्रतिबिम्बेन सत्यबिम्बानुमानं दूषयितुमेव पूर्वपक्षिणा प्रयोजितम्। प्रतिबिम्बस्य असत्यत्वेऽपि व्याप्तेः सत्यत्वासत्यत्वव्याप्त्या सत्यबिम्बानुमानमित्युक्तम्। सिद्धान्तिना प्रदर्शितायाः व्याप्तेर्दूषणेऽभिहिते प्रकारान्तरेण पूर्वपक्षी शङ्कते—न च तत्र बिम्बपूर्वकत्वमेवानुमीयते, बिम्बव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वरूपेणाप्रातिभासिकेन हेतुनेति वाच्यम्। अयम्भावः—अयं प्रदेशो बिम्बवान् प्रतिबिम्बवत्त्वादिति प्रतिबिम्बेन बिम्बानुमानं क्रियते। तत्र बिम्बस्य सत्यत्वात् प्रतिबिम्बस्य प्रातिभासिकतया मिथ्यात्वेन तत्र मिथ्याभूते हेतौ साध्यसामानाधिकरण्यरूपव्याप्तेरेवाभावात् कथं सत्यभूतबिम्बरूपानुमेयस्य व्याप्यादिसमानसत्ताकत्वम्। इति सिद्धान्तिशङ्कायाः समाधानाय पूर्वपक्षिणः व्याप्तेः सत्यत्वप्रसाधनाय प्रयासः। बिम्बव्यतिरेकप्रतियोगित्वं हि बिम्बपूर्वकत्वे साध्ये साधनम्। प्रतियोगित्वरूपं साधनं तु सत्यमेवेति नासत्येन सत्यस्यानुमानम् ॥८॥

९.—अत्र समाधानमाह—प्रयुक्तत्वं हि न तज्जनकजन्यत्वादिरूपम्। व्यतिरेकयोः परस्परं तदभावत्, किन्तु व्याप्यव्यापकभावः। तथा च बिम्बव्यतिरेकव्यापकव्यतिरेकप्रतियोगित्वं हेतुः। स च आका-

प्रतिम्बेनैव्र विम्वानुमानम्, अनुमेयस्य लिङ्गव्याप्त्यादिसमानसत्ता-कत्वनियमस्यापास्तत्वात् ॥९॥

एतेन—शब्देऽपि योग्यतासमानसत्ताकेन शब्दार्थेन भवितव्यम्, योग्यतावाक्यार्थयोः समानसत्ताकत्वनियमादिति कथं वेदान्तवाक्यार्थो योग्यतावाधेऽप्यबाधितः स्यादिति—परास्तम्। वेदान्तवाक्ये अखण्डार्थ-रूपवाक्यार्थाबाधरूपाया योग्यताया अप्यबाधाच ॥१०॥

---

शादौ व्यभिचार्येव। तस्मात्तत्र प्रतिबिम्बनैव बिम्बानुमानम्। अनुमे-यस्य लिङ्गव्याप्त्यादिसमानसत्ताकत्वनियमस्यापास्तत्वात्। अत्र पूर्व-पक्षिणा यत् व्यतिरेकप्रयुक्तत्वमुक्तं तत्प्रयुक्तत्वं न व्यतिरेकयोः जनकजन्यत्वादि-रूपं भवितुमर्हति। व्यतिरेकयोर्नित्यत्वेन परस्परं जन्यजनकभावाभावात्। अतः प्रयुक्तत्वं व्याप्यव्यापकभावरूप एव वाच्यः। व्यतिरेकयोर्व्याप्यव्यापकभावस्तु सम्भवत्येव। तथा च बिम्बव्यतिरेकव्यापकव्यतिरेकप्रतियोगित्वं हेतुः। यत्र यत्र बिम्बव्यतिरेकः तत्र तत्र वर्तते यस्य व्यतिरेकस्तत्प्रतियोगित्वं हेतुर्वाच्यः। तथा च आकाशात्यन्ताभावस्य केवलान्वयित्वेन बिम्बव्यतिरेकव्यापकत्वात् तत्प्रतियोगित्व-माकाशादौ वर्तते। तथा च पूर्वोक्त एव व्यभिचारः। बिम्बपूर्वकत्वाव्याप्ये गगना-दौ प्रदर्शितव्याप्तिसत्त्वाद् व्याप्यत्वापत्तेः। तथा च प्रतिबिम्बेन बिम्बानुमाने सत्येन सत्यानुमानं न सम्भवति, अतो मिथ्याभूतेनैव प्रतिबिम्बेन सत्य-बिम्बानुमानं वक्तव्यम्। तथा चानुमेयस्य लिङ्गव्याप्त्यादिसमानसत्ताकत्वनियमस्य भङ्ग एव। अनुमेयस्य लिङ्गव्याप्त्यादिसमानसत्ताकत्वनियमः यथा न सम्भवति तथोक्तं प्राक् ॥९॥

१०—एतेन शब्देऽपि योग्यतासमानसत्ताकेन शब्दार्थेन भवित-व्यम्। योग्यतावाक्यार्थयोः समानसत्ताकत्वनियमात् इति कथं वेदा-न्तवाक्यार्थो योग्यताबाधेऽपि अबाधितः स्यादिति परास्तम्। अनुमे-यस्य लिङ्गव्याप्त्यादिसमानसत्ताकत्वनियमस्यापास्तत्वादेव योग्यतावाक्यार्थयोः समा-नसत्ताकत्वनियमोऽप्यपास्तः। कार्यकारणभावापन्नधीविषययोः समानसत्ताकत्वानि-यमेन योग्यताज्ञानशाब्दज्ञानविषययोः समानसत्ताकत्वनियमोऽप्यपास्तः। योग्यता-भ्रमेऽपि कुत्रचित् शाब्दप्रमायाः सम्भवात्। प्रकृते च वेदान्तवाक्ये योग्यताया

न च—तथापि वेदान्ततज्ज्ञानप्रामाण्यमिथ्यात्वे कथं तात्त्विकाद्वैतसिद्धिरिति—वाच्यम्; शब्दतज्ज्ञानतात्त्विकत्वं हि न विषयतात्त्विकत्वे तन्त्रम्; इदं रजतमित्यनाप्तवाक्यस्य तज्जन्यभ्रमस्य च त्वन्मते तात्त्विकत्वेऽपि तद्विषयस्यातात्त्विकत्वात्।

न च ज्ञानप्रामाण्यस्य मिथ्यात्वे विषयस्यापि मिथ्यात्वं शुक्तिरूप्यज्ञाने दृष्टमिति प्रकृतेऽपि ज्ञानप्रामाण्यमिथ्यात्वे विषयस्यापि मिथ्यात्वं स्यादिति—वाच्यम्; प्रामाण्यमिथ्यात्वं हि न विषयमिथ्या-

---

अप्यबाध्यत्वाच्च पूर्वपक्ष्युक्तनियमाभ्युपगमेऽपि न दोष इत्याह—वेदान्तवाक्ये अखण्डार्थरूपवाक्यार्थाभावरूपाया योग्यताया अप्यबाधाच्च। वाक्यार्थाबाधो हि योग्यता। वेदान्तवाक्यार्थस्य सर्वथाऽबाधितत्वाद् योग्यताया बाधो नास्ति ॥१०॥

११—पूर्वपक्षी शङ्कते—न च तथापि वेदान्ततज्ज्ञानप्रामाण्यमिथ्यात्वे कथं तात्त्विकाद्वैतसिद्धिरिति वाच्यम्, शब्दतज्ज्ञानतात्त्विकत्वं हि न विषयतात्त्विकत्वे तन्त्रम्। इदं रजतमिति अनाप्तवाक्यस्य तज्जन्यभ्रमस्य च तन्मते तात्त्विकत्वेऽपि तद्विषयस्यातात्त्विकत्वात्। सिद्धान्तिमते वेदान्तवाक्यस्य वेदान्तवाक्यजन्यज्ञानप्रामाण्यस्य मिथ्यात्वात् च कथं तादृशाद् वेदान्तवाक्यात्तात्त्विकाद्वैतसिद्धिः। अनृतञ्च आरम्भणाधिकरणे भाष्यकारेण—कथं चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वमुपपद्येत इति पूर्वपक्षिणां मतम्। तत्राह सिद्धान्ती—शब्दतज्ज्ञानतात्त्विकत्वं हि न विषयतात्त्विकत्वे तन्त्रम्, समव्यापकमित्यर्थः। कथं न समव्यापकम्? इदं रजतमित्यनाप्तवाक्यस्य तज्जन्यज्ञानस्य च पूर्वपक्षिमते सत्यस्य तद्विषयस्यासद्रूपत्वेन अतात्त्विकत्वात् पूर्वपक्षिमते असत्ख्यातेरङ्गीकाराद् विषयस्यासद्रूपत्वेऽपि तज्ज्ञानस्य स्वरूपसत्यत्वाङ्गीकाराद् आचार्येण तथोक्तम्। अतः पूर्वपक्षिणा शब्दतज्ज्ञानादितात्त्विकत्वं न विषयतात्त्विकत्वसमव्यापकं वक्तव्यम्। स्वमते एव तस्य व्यभिचारात्।

पूर्वपक्षी शङ्कते—न च ज्ञानप्रामाण्यस्य मिथ्यात्वे विषयस्यापि मिथ्यात्वं शुक्तिरूप्यादिज्ञाने दृष्टमिति प्रकृतेऽपि ज्ञानप्रामाण्यमिथ्यात्वे विषयस्यापि मिथ्यात्वं स्यादिति वाच्यम्। प्रामाण्यमिथ्यात्वं हि न

त्वे प्रयोजकम्, भ्रमप्रमाबहिर्भूते निर्विकल्पके विषयबाधाभावात्, किन्तु तदभाववति तत्प्रकारकत्वादिरूपमप्रामाण्यमेव तथा, तच्च प्रकृते नास्त्येव। न च अर्थाबाधरूपप्रामाण्यस्य मिथ्यात्वादर्थस्यापि मिथ्यात्वं स्यादिति–वाच्यम्; अबाधितार्थविषयत्वं हि यत्प्रामाण्यं तस्य मिथ्यात्वं प्रकृतेऽर्थाबाधात् तद्बाधकप्रमाणासंभवात्, तस्य सर्वबाधावधित्वात्, किन्तु तद्विषयत्वरूपसंबन्धबाधात्तथा। तथा चाबाधितार्थविषयत्वरूपप्रामाण्यमिथ्यात्वेऽपि नार्थो मिथ्या। विशिष्ट-

---

विषयमिथ्यात्वे प्रयोजकम्, भ्रमप्रमाबहिर्भूते निर्विकल्पके विषयबाधाभावात्। किन्तु तदभाववति तत्प्रकारकरूपप्रामाण्यमेव तथा, तच्च प्रकृते नास्त्येव। समाधत्ते सिद्धान्ती—यत्र यत्र प्रामाण्यमिथ्यात्वं तत्र तत्र ज्ञानविषयस्य मिथ्यात्वम्। ज्ञानप्रामाण्यमिथ्यात्वं न ज्ञानविषयस्य मिथ्यात्वे प्रयोजकम्, न व्याप्यम्। कुतो न व्याप्यम्? न्यायमते भ्रमप्रमाबहिर्भूते निर्विकल्पके प्रत्यक्षे तद्विषयस्याबाध्यत्वात्। अस्मन्मते निर्विकल्पकं प्रत्यक्षं प्रमैव नाऽयं नियमः सिद्ध्यति। अबाधितार्थकत्वं प्रामाण्यमित्यभिप्रेत्य एतदुक्तम्। निर्विकल्पकमपि अबाधितार्थविषयकत्वेन प्रमाणमेव। यदि तदभाववति तत्प्रकारत्वरूपम् अप्रामाण्यं स्यात् तदा पूर्वपक्षिणा यदुक्तं तदेव सत्यम्। तच्च प्रकृते नास्त्येव। ब्रह्मज्ञानस्याबाधितार्थविषयकत्वेनैव प्रामाण्यम्, न तु तद्वति तत्प्रकारकत्वेन। निर्विकल्पकज्ञानस्यापि निष्प्रकारकत्वात् तदभाववति तत्प्रकारकत्वं नास्ति। ब्रह्मज्ञानस्यापि निष्प्रकारकत्वात् तदभाववति तद्वति वा तत्प्रकारकत्वाभावात् व्यावहारिकप्रामाण्याप्रामाण्ये न स्तः, किन्तु सर्वथाऽबाधितार्थकत्वेन पारमार्थिकप्रामाण्यमेव। पूर्वपक्षी शङ्कते—न चार्थाबाधरूपप्रामाण्यस्य मिथ्यात्वात् अर्थस्यापि मिथ्यात्वं स्यादिति वाच्यम्। अर्थाबाधरूपप्रामाण्यस्य अबाधितार्थविषयकत्वरूपप्रामाण्यस्येत्यर्थः। अबाधितार्थविषयकत्वरूपं प्रामाण्यं सिद्धान्तिमते मिथ्या। अतो विषयस्यापि मिथ्यात्वं स्यादिति पूर्वपक्षिणामाशयः। समाधत्ते सिद्धान्ती—अबाधितार्थविषयकत्वं हि यत् प्रामाण्यं तस्य मिथ्यात्वं प्रकृते नार्थबाधात् तद्बाधकप्रमाणासम्भवात, तस्य सर्वबाधावधित्वात्। किन्तु तद्विषयत्वरूपसम्बन्धबाधात्तथा। तथा च अबाधितार्थविषकत्वरूपप्रामाण्यमिथ्या-

स्यैकांशमिथ्यात्वेऽप्यपरांशसत्यत्वात् , यथा दण्डबाधनिबन्धनदण्डिपुरुषबाधेऽपि पुरुषो न बाधित एवेति ॥११॥

इति अद्वैतसिद्धौ प्रत्यक्षस्योपजीव्यत्वभङ्गः ॥

---

त्वेऽपि नाऽर्थो मिथ्या। विशिष्टस्य एकांशमिथ्यात्वेऽपि अपरांशसत्यत्वात्। यथा दण्डबाधनिबन्धनदण्डिपुरुषबाधेऽपि पुरुषो न बाधित एवेति। अबाधितार्थविषयकत्वं वृत्तिज्ञानस्य प्रामाण्यं तस्य मिथ्यात्वमपि न विषयबाधात्। विषयस्य परमार्थसत्यत्वात्। विषयबाधकप्रमाणासम्भवात् विषयस्य सर्वबाधवाधित्वाच्च। किन्तु सर्वथाऽबाधितेऽर्थे ब्रह्मणि यद् वृत्तिज्ञानस्य सम्बन्धः स एव विषयत्वं तस्य कल्पितत्वात् विषयत्वरूपसम्बन्धस्य मिथ्यात्वम्। अतः अबाधितार्थविषयकत्वरूपे प्रामाण्ये विषयकत्वांशो मिथ्या, अर्थस्तु सत्य एव। अतो विशिष्टरूपे प्रामाण्ये एकांशमिथ्यात्वेऽपि अपरांशस्य सत्यत्वमुपपद्यते। यथा दण्डिपुरुष इति विशिष्टस्यार्थस्य विशेषदण्डबाधेन "दण्डिपुरुष"—बाधेऽपि पुरुषोऽबाधित एव, एवमेव अबाधितार्थविषयकत्वरूपप्रामाण्यस्य विशिष्टस्य विषयकत्वांशबाधेऽपि विशेषणांशोऽबाधित एव। तस्य बाधकप्रमाणासम्भवात्, सर्वबाधावधित्वाच्च। अतः प्रामाण्यमिथ्यात्वेऽपि विषयस्य सत्यत्वमुपपन्नमेव। ॥११॥

इत्यद्वैतसिद्धौ प्रत्यक्षस्योपजीव्यत्वभङ्गः

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां प्रत्यक्षस्योपजीव्यत्वभङ्गविवरणं समाप्तम् ॥

## अथ प्रत्यक्षस्यानुमानबाध्यत्वम्

किञ्च विपक्षबाधकसचिवमनुमानमपि प्रत्यक्षबाधकम्। ननु—एवमपि 'औदुम्बरीं स्पृष्ट्वा उद्गायेत्', 'ऐन्द्रचा गार्हपत्यमुपतिष्ठते', 'शरमयं बर्हिर्भवती'ति श्रुतित्रयग्राहिप्रत्यक्षं यथाक्रम "औदुम्बरी सर्वा वेष्टयितव्ये"ति स्मृतिरूपेण सर्ववेष्टनश्रुत्यनुमानेन 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इति मन्त्रसामर्थ्यलक्षणेनेन्द्रशेषत्वश्रुत्यनुमानेन चोदनालिङ्गरूपेण कुशश्रुत्यनुमानेन च बाध्यते इति सर्वमीमांसोन्मृदिता स्यादिति—चेत्; ॥१॥

---

१—पूर्वपक्षिणा द्वैतसत्यग्राहिप्रत्यक्षस्य द्वैतमिथ्यात्वानुमानबाधकत्वमाशङ्कितम्। प्रत्यक्षस्यानुमानापेक्षया प्राबल्यात्। इति पूर्वपक्षिशङ्कामुन्मूलयन् विपक्षबाधकसचिवमनुमानमेव प्रत्यक्षबाधकम्, न तु प्रत्यक्षेण विपक्षबाधकसचिवमनुमानं बाध्यते इति प्रतिपादयन्नाह—किञ्च विपक्षबाधकसचिवमनुमानमपि प्रत्यक्षबाधकम्। प्रपञ्चमिथ्यात्वसाधकमनुमानं विपक्षबाधकतर्कसचिवम्। प्रपञ्चो यदि मिथ्या न स्यात्तर्हि दृश्यत्वादिहेतुविशिष्टो न स्यात्। सत्यस्य दृश्यत्वासम्भवात्। तथा च प्रपञ्चस्य मिथ्यात्वानङ्गीकारे हेतूच्छेदोऽपि विपक्षबाधकस्तर्कः। एतच्चाग्रे प्रपञ्चयिष्यते। इदानीं पूर्वपक्षी शङ्कते—नन्वेवमपि औदुम्बरीं स्पृष्ट्वोद्गायेत्, ऐन्द्रया गार्हपत्यमुपतिष्ठते, शरमयं बर्हिर्भवतीति श्रुतित्रयग्राहिप्रत्यक्षं यथाक्रममौदुम्बरी सर्वा वेष्टयितव्येति स्मृतिरूपेण सर्ववेष्टनश्रुत्यनुमानेन, कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे इति मन्त्रसामर्थ्यलक्षणे न इन्द्रशेषत्वश्रुत्यनुमानेन, चोदनालिङ्गरूपेण कुशश्रुत्यनुमानेन च बाध्यते। इति सर्वमीमांसा उन्मृदिता स्यात् इति चेत्? प्रत्यक्षस्यानुमानबाध्यत्वे प्रदर्शिता मीमांसा उन्मृदिता स्यात् इत्याह पूर्वपक्षी औदुम्बरीं स्पृष्ट्वोद्गायेदिति। प्रमाणलक्षणस्मृतिपादे चिन्तितम् "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि" त्यत्र। ज्योतिष्टोमे औदुम्बरीं स्पृष्ट्वा उद्गायेदिति श्रुत्या औदुम्बरमयीं योग्यसदस्थूणां स्पृष्ट्वा उद्गानं कर्तव्यमिति विहितम्। स्मृतिकारास्तु

तत्स्पर्शनविरुद्धं तस्या औदुम्बर्याः शाखायाः कार्ष्ण्येन वाससा वेष्टनं स्मरन्ति। औदुम्बरी सर्वा वेष्टयितव्येति। तत्स्मरणं प्रमाणमप्रमाणं वेति संशये स्मृत्यधिकरणे स्मृतीनां मूलश्रुत्यनुमापकतया श्रुतिमूलकत्वेन प्रामाण्यसमर्थनात् इयमपि स्मृतिः मूलश्रुतिमनुमापयन्ती प्रमाणमिति पूर्वपक्षः। स्पर्शनवेष्टनयोर्विरुद्धत्वेन तत्कर्तव्यताबोधकयोरपि औष्ण्यशैत्यवत् विरुद्धत्वाद् वह्नौ औष्ण्यप्रत्यक्षेण शैत्यानुमानस्येव प्रत्यक्षसिद्धस्पर्शनश्रुत्या सर्ववेष्टनश्रुत्यनुमानस्य बाधात् मूलश्रुत्यभावेन अप्रमाणं स्मरणमिति सिद्धान्तः। प्रत्यक्षस्यानुमानबाध्यत्वे प्रदर्शितमीमांसकसिद्धान्तः उन्मृदितो भवेत्। एवमेव ऐन्द्र्या गार्हपत्यमुपतिष्ठते। गार्हपत्यं—नक्तमाधानसंस्कृतमग्निमित्यर्थः। गार्हपत्यमिति प्रत्यक्षश्रुत्या बाधात् इन्द्रप्रकाशकम् तेन इन्द्रशेषत्वानुमानमप्रमाणमिति सिद्धान्तितम्। अनुमानस्य प्रत्यक्षापेक्षया प्राबल्ये अयमपि मीमांसकसिद्धान्तो भज्येत। शरमयं बर्हिर्भवति। दशमाध्याये चतुर्थपादे चिन्तितम्। सोमारौद्रचरौ श्रूयते—शरमयं बर्हिर्भवतीति। तत्रैतत्—प्रकृतिभूतदर्शपौर्णमासिकाः कुशाः अतिदिष्टाः न निवर्तन्ते निवर्तन्ते वेति संशये उपदेशेन शराणां प्रकृतिवद् विकृतिः कर्तव्येत्यतिदेशेन कुशानाञ्चावगतत्वेन द्वयोरपि प्रमाणत्वात् समुच्चय इति पूर्वपक्षः। सिद्धान्तस्तु बर्हिः इतिशब्दलक्षिते बर्हिःकार्ये शराणां विधायकस्य वचनस्य प्रत्यक्षत्वात् तैरेव कृतस्वकार्याणां कुशानां प्रापकस्यातिदेशवाक्यस्य कल्पनं न प्रवर्तते। किन्तु कुशव्यतिरिक्ताङ्गप्रापक एवातिदेश इत्यनुमीयते। अतः प्रापकाभावात् कुशा निवर्तन्ते इति सिद्धान्तः। प्रत्यक्षस्यानुमानबाध्यत्वेऽयमपि मीमांसासिद्धान्त उन्मृदितः स्यात्।

पूर्वपक्षिणा प्रत्यक्षस्यानुमानतः प्राबल्यप्रदर्शनाय प्रदर्शितश्रुतित्रयग्राहिप्रत्यक्षं नानुमानेन बाध्यत इत्युक्तम्। अनुमानेन श्रुतित्रयग्राहिप्रत्यक्षस्य बाधे सर्वमीमांसैवोन्मृदिता स्यात्। श्रुतित्रयग्राहिप्रत्यक्षेण यद् यदनुमानं बाध्यते तत् प्रदर्शयति। औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिरूपेण सर्ववेष्टनश्रुत्यनुमानेन औदुम्बरी सर्वा वेष्टयितव्येति श्रुतिग्राहकं प्रत्यक्षं न बाध्यते इति शेषः स्मृतिरूपलिङ्गे न समानविषयकश्रुतेरनुमितिः। अत्र स्मृतेरनुमितिकरणत्वं ज्ञायमानहेतोरनुमानत्वमते बोद्धव्यम्। ज्ञाता स्मृतिः श्रुत्यनुमापिका। हेतुज्ञानस्यानुमानत्वमते तु स्मृतिरूपेणेत्यस्य स्मृतिविषयकधीरूपेणेत्यर्थः। ऐन्द्र्या गार्हपत्यमुपतिष्ठते इति श्रुतिग्राहिप्रत्यक्षं,

न, वैषम्यात्, तथा हि—किमिदमापाद्यते, श्रुतित्रयग्राहिप्रत्यक्षमनुमानैर्बाध्यते इति वा, प्रत्यक्षविषयीभूतश्रुतित्रयमिति वा। नाद्यः, विरोधाभावेन तद्बाध्यबाधकभावस्य शास्त्रार्थत्वाभावात्, अस्माभिरनभ्युपगमाच्च, अनुक्तोपालम्भमात्रत्वे निरनुयोज्यानुयोगापत्तेः। अत एव न द्वितीयः; प्रत्यक्षविषयीभूतश्रुतित्रयस्य लिङ्गबाधकत्वपरेऽपि शास्त्रे प्रत्यक्षस्य लिङ्गबाध्यत्वे विरोधाभावात्, न हि शब्दप्रत्यक्षयोरैक्यमस्ति;

---

नेन्द्र सश्चसि दाशुषे इति मन्त्रसामर्थ्यरूपेण लिङ्गेन इन्द्रशेषत्वश्रुत्यनुमानेन बाध्यत्वे प्रदर्शितमीमांसकसिद्धान्तः बाधितो भवेत्। शरमयं बर्हिर्भवतीति श्रुतिग्राहिप्रत्यक्षं च चोदनालिङ्गसारूप्येण कुशश्रुत्यनुमानेन बाध्येत यदि अनुमानस्यैव प्रत्यक्षतः प्राबल्यं स्यात्। चोदनालिङ्गसारूप्येण इत्यस्यायमर्थः—चोदनाविधिवाक्यम्, तत् सारूप्यरूपलिङ्गेनेत्यर्थः। यथा प्रकृतिवत् विकृतिःकर्तव्येति अतिदेशेन इतराङ्गानां प्राप्तिस्तथा तत्सारूप्येन कुशरूपाङ्गस्यापि प्राप्त्यनुमानम्। तेनानुमानेन प्रत्यक्षस्य बाध्यत्वे मीमांसकसिद्धान्त एव परित्यक्तः स्यात्। अतः मीमांसकसिद्धान्तरक्षणायापि अनुमानेन प्रत्यक्षस्य बाधो न वक्तुं युज्यते ॥१॥

२—सिद्धान्तमाह—न, वैषम्यात्। तथा हि किमिदमापाद्यते [ १ ] श्रुतित्रयग्राहिप्रत्यक्षमनुमानैर्बाध्येतेति वा, [ २ ] प्रत्यक्षविषयीभूतश्रुतित्रयमिति वा। नाद्यः, विरोधाभावेन तद्बाध्यबाधकभावस्य शास्त्रार्थत्वाभावात्। अस्माभिरनभ्युपगमाच्च। अनुक्तोपालम्भमात्रत्वे निरनुयोज्यानुयोगापत्तेः। अयम्भावः—उक्तश्रुतिविषयकप्रत्यक्षस्मृतिहेतुकानुमानयोः बाध्यबाधकभावस्य शास्त्रार्थत्वाभावात्। किन्तु उक्तानुमानस्य श्रुत्यैव बाध्यता शास्त्रार्थः तयोर्विरुद्धविषयकत्वात्। न तु श्रुतिविषयकप्रत्यक्षेण, तयोर्विरुद्धविषयकत्वाभावात। अस्माभिस्तु विरुद्धविषयकप्रत्यक्षस्यैव तर्कानुमानबाध्यताया उक्तत्वेन नोक्तापत्तिर्युक्ता। तथा च उक्तप्रत्यक्षानुमानयोर्विरुद्धविषयकत्वे बाध्यबाधकत्वं शास्त्रार्थः स्यात्। अविरुद्धविषयकत्वात् प्रत्यक्षानुमानयोर्नोक्तापत्तिर्युक्ता। अस्मामिरनुक्तस्योपालम्भे निरनुयोज्यानुयोगरूपं निग्रहस्थानमपि पूर्वपक्षिणः। अत एव न द्वितीयः, प्रत्यक्षविषयीभूतश्रुतित्रयस्य लिङ्गबाधकत्वपरेऽपि शास्त्रे प्रत्यक्षस्य लिङ्गबाध्यत्वे विरोधाभावात्।

शब्दस्य च सर्वप्रमाणापेक्षया बलवत्त्वमवोचाम । तस्मान्मौढ्यमात्रमेतन्मीमांसाविरोधोद्भावनम् ॥२॥

ननु प्रत्यक्षस्य लिङ्गबाध्यत्वे वह्न्यौष्ण्यप्रत्यक्षं शैत्यानुमानस्यात्मस्थायित्वप्रत्यभिज्ञानं च क्षणिकत्वानुमानस्य बाधकं न स्यात्, प्रत्युतानुमानमेव तयोर्बाधकं स्यात् इति चेत्; ॥३॥

---

न हि शब्दप्रत्यक्षयोरैक्यमस्ति । शब्दस्य च सर्वप्रमाणापेक्षया बलवत्त्वमवोचाम । तस्मान्मौढ्यमात्रमेतन्मीमांसाविरोधोद्भावनम् । प्रत्यक्षविषयीभूतश्रुतित्रयमिति द्वितीयपक्षः आपादयितुं न शक्यते । प्रत्यक्षविषयीभूतश्रुतित्रयस्य लिङ्गबाधकत्वं मीमांसाशास्त्रे सिद्धान्तितम् । प्रत्यक्षस्य लिङ्गबाध्यत्वे एतन्मीमांसाशास्त्रमुदासीनमेव । न हि प्रत्यक्षं लिङ्गेन बाध्यत इति मीमांसाशास्त्रे सिद्धान्तितम् । सिद्धान्तितं तु श्रुत्यानुमानं बाध्यत इति । अस्माभिस्तु, अनुमानेन प्रत्यक्षस्य बाध्यत्वमुक्तम् । तत्र मीमांसविरोधावसर एव नास्ति । अनुमानस्य शब्दप्रमाणबाध्यत्वेऽपि न शब्दप्रमाणग्राहिप्रत्यक्षबाध्यत्वमायाति । शब्दप्रत्यक्षयोरैक्याभावात् । शब्दप्रमाणस्य तु सर्वप्रमाणापेक्षया बलवत्त्वं, "प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमि" ति प्रागेवोक्तम् । तस्मात् प्रपञ्चमिथ्यात्वानुमानेन प्रपञ्चसत्यत्वग्राहिप्रत्यक्षस्य बाधने मीमांसासिद्धान्तविरोधोद्भावनं पूर्वपक्षिणः केवलं मौढ्यमेव ॥२॥

३—पूर्वपक्षी शङ्कते—ननु प्रत्यक्षस्य लिङ्गबाध्यत्वे वह्न्युष्णप्रत्यक्षं शैत्यानुमानस्य आत्मस्थायित्वप्रत्यभिज्ञानं च क्षणिकत्वानुमानस्य बाधकं न स्यात् । प्रत्युत अनुमानमेव तयोर्बाधकं स्यात्—इति चेत् । अनुमानस्य प्रत्यक्षात् प्राबल्ये वह्नेरौष्ण्यग्राहिप्रत्यक्षं वह्नेः शैत्यानुमानेन बाध्येत । आत्मनः स्थिरत्वप्रत्यभिज्ञाप्रत्यक्षं च बौद्धाभिमतात्मक्षणिकत्वानुमानेन बाध्येत । तथा च प्रत्यक्षेण वह्नेरपि उष्णत्वसिद्धिर्न स्यात, प्रत्यभिज्ञाप्रत्यक्षेण चात्मनः स्थिरत्वसिद्धिर्न स्यात् । वह्नेरुष्णत्वरक्षणाय, आत्मनः स्थिरत्वरक्षणाय चानुमानात् प्रत्यक्षं प्रबलमिति वक्तव्यम् । तथा च प्रपञ्चमिथ्यात्वानुमानात् प्रपञ्चसत्यत्वग्राहिप्रत्यक्षं प्रत्यक्षेणैव मिथ्यात्वानुमानं बाधिष्यते ॥३॥

न, अर्थक्रियासंवादेन श्रुत्यनुग्रहेण च तत्र प्रत्यक्षयोः प्राबल्येनानुमानबाधकत्वात्। अपरीक्षितप्रत्यक्षं हि परीक्षितानुमानापेक्षया दुर्बलम्, "नीलं नभ" इति प्रत्यक्षमिव नभोनीरूपत्वानुमानापेक्षया, अतो न सामान्यतो दृष्टमात्रेण सर्वसङ्करापत्तिः। नन्वेवं—पशुत्वेन शृङ्गानुमानमपि स्यात्, लाघवात् पशुत्वमेव शृङ्गवत्त्वे तन्त्रम्, न तु तद्विशेषगोत्वादिकम्; अननुगतत्वेन गौरवादित्येतत्तर्कसध्रीचीनत्वेन प्रत्यक्षापेक्षया प्राबल्यात्, अनुकूलतर्कसाचिव्यमेव हि अनुमाने बलम्; एवञ्च येन केनचित् सामान्यधर्मेण सर्वत्र यत्किञ्चिदनुमेयम्। लाघवतर्कसाचिव्यस्य सत्त्वात्, तावतैवं प्रत्यक्षबाधक-

---

४—समाधत्ते सिद्धान्ती—न, अर्थक्रियासंवादेन श्रुत्यनुग्रहेण च तत्र प्रत्यक्षयोः प्राबल्येनानुमानबाधकत्वात्। अपरीक्षितप्रत्यक्षं हि परीक्षितानुमानापेक्षया दुर्बलम् 'नीलं नभ' इति प्रत्यक्षमिव नभोनीरूपत्वानुमानापेक्षया। अतो न सामान्यतो दृष्टमात्रेण सर्वसङ्करापत्तिः। वह्न्यौष्ण्यग्राहिप्रत्यक्षस्य दाहपाकाद्यर्थक्रियासम्वादित्वेन आत्मस्थायित्वप्रत्यभिज्ञाप्रत्यक्षस्य चात्मस्थैर्यग्राहिश्रुत्यनुग्रहेण तयोः प्रत्यक्षयोरनुमानबाधकत्वम्। अतस्तत् प्रत्यक्षद्वयं सुपरीक्षितम्। अनुमानद्वयं तु लिङ्गाभासादिजम् इति परीक्षितत्वेन प्रत्यक्षस्य दुष्टहेतुजन्यत्वेन चानुमानस्य प्राबल्यदौर्बल्ये विद्येते, नैतावता अपरीक्षितप्रत्यक्षं परीक्षितानुमानापेक्षया प्रबलं भवितुमर्हति। प्रत्युत, परीक्षितप्रत्यक्षं परीक्षितानुमानापेक्षया दुर्बलमेव। यथा नीलं नभ इति प्रत्यक्षं नभोनीरूपत्वग्राहकानुमानापेक्षया दुर्बलम्, स्पर्शरहितद्रव्यत्वादिना नभसो नीरूपत्वानुमानात्। अतो न सामान्यतो दृष्टमात्रेण सर्वसङ्करापत्तिः।

पूर्वपक्षी शङ्कते—प्रत्यक्षापेक्षया अनुमानस्य प्राबल्ये दृष्टविपरीतमपि अनुमानापेक्षया दृष्टत्वस्य दुर्बलत्वेन अबाधकत्वात् अतोऽनुमानेन सर्वं दृष्टविपरीतं सिद्ध्येत। नन्वेवं पशुत्वेन शृङ्गानुमानमपि स्यात्। लाघवात् पशुत्वमेव शृङ्गवत्त्वे तन्त्रम्, नतु तद्विशेषगोत्वादिकम्, अननुगतत्वेन गौरवात्, इत्येतत्तर्कसध्रीचीनत्वेन प्रत्यक्षापेक्षया प्राबल्यात्। अनुकूलतर्कसाचिव्यं ह्यनुमाने बलम्। एवञ्च येन केनचित् सामान्यधर्मेण

त्वादिति व्यावहारिक्यपि व्यवस्था न स्यात्, न ह्यत्र प्रत्यक्षबाधादन्यो दोषोऽस्ति—इति चेत् ? ॥४॥

न, अयोग्यशृङ्गादिसाधने प्रत्यक्षबाधस्यासम्भवेन तत्र व्याप्तिग्राहकतर्के स्वाभासत्वस्य त्वयाऽपि वक्तव्यत्वेन व्यवस्थाया उभयसमाधेयत्वात् न हि तर्काभाससध्रीचीनमनुमानं प्रमाणमिति केनाप्यभ्युपेयते; अत उपपन्नं सत्तर्कसचिवमनुमानं प्रत्यक्षस्य बाधकमिति ॥५॥

॥ इति प्रत्यक्षस्यानुमानबाध्यत्वसिद्धिः ॥

---

सर्वत्र यत्किञ्चिदनुमेयम्। लाघवतर्कसाचिव्यस्य सत्त्वात्। तावतैव प्रत्यक्षबाधकत्वात्। इति व्यावहारिक्यपि व्यवस्था न स्यात्। नह्यत्र प्रत्यक्षबाधादन्यो दोषोऽस्ति इति चेत्। अश्वगर्दभादयः शृङ्गवन्तः पशुत्वात् गोमहिषादिवत् इत्यनेनानुमानेन अश्वादीनां निःशृङ्गत्वग्राहिप्रत्यक्षं बाधित्वा शृङ्गवत्त्वमनुमापयेत्। लघवात् शृङ्गवत्त्वमेव पशुत्वव्याप्यम्। शृङ्गवत्त्वे लघुभूतं पशुत्वमपेक्ष्य पशुविशेषगतगोत्वमहिषत्वादीनां गुरुभूतत्वात् न शृङ्गवत्त्वव्याप्यत्वम्, लघुभूतस्य व्याप्यत्वसम्भवे गुरुभूतस्य व्याप्यत्वानङ्गीकारात्। अननुगततत्तत्पशुत्वादीनां गौरवात्। अतो लाघवतर्कसध्रीचीनमेतदनुमानं प्रत्यक्षापेक्षया प्रबलम्। अनुकूलतर्कसाहित्यमेवानुमानस्य बलम्, तेनैतदनुमानं प्रत्यक्षापेक्षया प्रबलं स्यात्। एवञ्च येन केनचित् सामान्येन धर्मेण सर्वत्र यत्किञ्चिदनुमेयम्। सर्वत्रलाघवतर्कस्य सहकारित्वं विद्यत एव। तर्कसहकृतस्यानुमानस्य प्रत्यक्षबाधकत्वाद् व्यावहारिक्यपि व्यवस्था न सिध्येत्। न ह्यस्मिन्ननुमाने प्रत्यक्षबाधादन्यो दोषोऽस्तीति पूर्वपक्षिणोऽभिप्रायः ॥४॥

५—समाधत्ते—न, अयोग्यशृङ्गसाधने प्रत्यक्षबाधस्यासम्भवेन तत्र व्याप्तिग्राहकतर्केषु आभासत्वस्य त्वयाऽपि वक्तव्यत्वेन व्यवस्थाया उभयसमाधेयत्वात्। नहि तर्काभाससध्रीचीनमनुमानं प्रमाणं केनाप्यभ्युपेयते। अत उत्पन्नं सत्तर्कसचिवमनुमानं प्रत्यक्षस्य बाधकमिति। पशुत्वलिङ्गकशृङ्गानुमाने प्रत्यक्षबाध एव केवलं पूर्वपक्षिणा प्रदर्शितः। तत्राह—पशुत्वेन हेतुना यदि प्रत्यक्षायोग्यं शृङ्गमनुमीयेत तर्हि प्रत्यक्षबाधो न त्वया कथयितुं शक्येत। तेन पशुत्वेन हेतुना अश्वादिष्वयोग्यं शृङ्गं सिध्येत्।

अतः पशुत्वे शृङ्गव्याप्तिग्राहकतर्कस्याभासत्वं पूर्वपक्षिणाऽपि वाच्यम् । अन्यथा व्यावहारिक्यपि व्यवस्था पूर्वपक्षिणोऽपि न स्यात् । अतो व्यावहारिक्याः व्यवस्थायाः उभयसमाधेयत्वात् पशुत्वे व्याप्तिग्राहकतर्कस्याभासत्वं पूर्वपक्षिणाऽपि वाच्यम् । तथा च तर्काभाससहकृतमनुमानं प्रमाणमेव न भवति, कुतः प्रत्यक्षबाधकत्वम् ? सत्तर्कसचिवमनुमानं पुनः प्रत्यक्षबाधकं भवत्येव नभोनीरूपत्वग्राहकानुमाने प्रदर्शितम् । अतः सत्तर्कसचिवमनुमानं प्रत्यक्षस्य बाधकमिति सिद्धम् ॥५॥

इति प्रत्यक्षस्यानुमानबाध्यत्वसिद्धिः

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां प्रत्यक्षस्यानुमानबाध्यत्वसिद्धिविवरणं समाप्तम् ।

## अथ प्रत्यक्षस्यागमबाध्यत्वम्

किं च परीक्षितप्रमाणभावशब्दबाध्यमपि प्रत्यक्षं ननु, प्रत्यक्षं यदि शब्दबाध्यं स्यात् तदा जैमिनिना "तस्मात् धूमएवाग्नेर्दिवा ददृशे नार्चिरि"त्याद्यर्थवादस्य अदितिर्द्यौरित्यादिमन्त्रस्य च दृष्टविरोधेनाप्रामाण्ये प्राप्त्ये गुणवादस्तु" "गुणाद्विप्रतिषेधस्यादि"त्यादिना गौणार्थता नोच्येत । "तत्सिद्धिर्जातिसारूप्य प्रसंसा धूमलिगसमवायादि"ति तत् सिद्धिपेटिकायां "यजमानः प्रस्तरः" इत्यादेर्गौणार्थता च नोच्येत । त्वयापि प्रत्यक्षाविरोधाय तत्त्वंपदयोर्लक्षणा नोच्येत । श्रुतिविरोधे प्रत्यक्षस्यैवप्रामाण्यसम्भवात् ॥१॥

---

१—प्रत्यक्षस्यानुमानबाध्यत्वमुपपाद्य प्रत्यक्षस्यागमबाध्यत्वमप्युपपादयितुमेतत्-प्रकरणप्रतिपाद्यमर्थं संक्षिप्याह—किंच, परीक्षित प्रमाणभावशब्दबाध्यमपि प्रत्यक्षम् । यः शब्द परीक्षितप्रमाणभावस्तेन प्रत्यक्षं बाध्यते । प्रमाणभावः प्रामाण्यम् । परीक्षितं प्रामाण्यं यस्य शब्दस्य स परीक्षितप्रमाणभावशब्दः । परीक्षित-प्रमाणभावशब्देन प्रत्यक्षं बाध्यते । इति एतत्प्रकरणप्रतिपाद्योऽर्थः षड्विधता-त्पर्यंनिर्णायकलिंगोपेतत्वं शब्दस्य परीक्षितं प्रामाण्यम् । यया परीक्षया षड्विधतात्पर्य-निर्णायकलिंगोपेतत्वं निश्चीयते स शब्दः परीक्षितप्रमाणभावः । पूर्वपक्षी शंकते—ननु-प्रत्यक्षं यदि शब्दबाध्यं स्यात्तदा जैमिनिना तस्मात् धूम एवाग्नेर्दिवा ददृशे, नार्चिरित्याद्यर्थवादस्य, अदितिर्द्यौरित्यादिमन्त्रस्य च दृष्टविरोधेनाप्रामाण्ये प्राप्ते गुणवादस्तु गुणादविप्रतिषेधः स्यादित्यादिना गौणार्थता नोच्येत तत्सिद्धिर्जातिसारूप्यप्रशंसाभूमलिंगसमवाया इति तत् सिद्धिपेटिकायां यजमानः प्रस्तर इत्यादेर्गौणार्थता नोच्येत । तथापि प्रत्यक्षविरोधाय तत्त्वंपदयोर्लक्षणा नोच्येत । श्रुतिविरोधे प्रत्यक्षस्यैवाप्रामाण्यसम्भवात् । प्रमाणलक्षणे अर्थवादाधिकरणे "तस्माद्धूम एवाग्नेर्दिवा ददृशे, नार्चिस्तस्मादर्चिरेवाग्नेर्नक्तं ददृशे, न धूम" इत्यर्थवादयोर्दिवाऽपि अर्चिर्दर्शनात् नक्तमपि धूमदर्शनात् दृष्टविरोधेनाप्रामाण्यम् । "शास्त्रदृष्टविरोधाच्चे" ति सूत्रेण

पूर्वपक्षयित्वा दिवानक्तं च अर्चिर्धूमयोर्दर्शनशब्दो गौणः इति "गुणवादस्तु" इति सिद्धान्तसूत्रेण दृष्टविरोधः समाहितः। गौणतानिमित्तञ्च दूरभूयस्त्वादि सूत्रेणोक्तम्। यथा दिवा धूमो दूरस्थैर्भूम्ना दृश्येत, न तथार्चिः, रात्रौ च यथाऽर्चिर्दूरस्थैर्दृश्येत, न तथा धूमः। अतो न दृष्टविरोधादप्रामाण्यम्। अदितिर्द्यौरिति प्रमाणलक्षणे मन्त्राधिकरणे "अदितिर्द्यौरदितिरन्तरीक्षं अदितिर्माता स पिता स पुत्र" इति मन्त्रस्य एकस्या अदितेः परस्परभिन्नद्युगगनाद्यनेकात्मकत्वस्य दृष्टविरोधेन अर्थविवक्षाया अयोगात् अप्रामाण्यमिति "विप्रतिषेधादि" ति सूत्रेण पूर्वपक्षयित्वा "गुणादविप्रतिषेधः स्यादि"ति सिद्धान्तसूत्रेण द्व्यन्तरिक्षादिवत् सुखकरत्वादिना द्युशब्दादीनां गौणार्थत्वमङ्गीकृत्य दृष्टविरोधः समाहितः। तदेतत्सर्वं शब्दस्य प्रत्यक्षबाधकत्वे विरुध्येत। प्रत्यक्षं बाधित्वैव शब्दस्य मुख्यार्थपरत्वं स्यात्। तत्सिद्धिरित्यादि.........तत्सिद्धिपेटिकायां यजमानः प्रस्तरः इत्यादेर्गौणार्थता नोच्येत। एकार्थप्रतिपादकानेकाधिकरणसंग्रहः पेटिकेत्युच्यते। पेटिकाशब्दो मीमांसाशास्त्रप्रसिद्धः। प्रमाणलक्षणे नामधेयपादे "चतुर्थपादे तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिंगसमवाया" इति सूत्रेण "यजमानः प्रस्तरः", "अग्निर्ब्राह्मणः" "आदित्यो यूपः" "अपशवो वा अन्ये गोऽश्वेभ्यः" इति श्रुतिषु प्रस्तरस्य योग्यसाधनभूतदर्भमुष्टिविशेषस्य यजमानत्वम्, ब्राह्मणस्याग्नित्वं, यूपस्यादित्यत्वं, गवाश्व व्यतिरिक्तानामजादीनमपशुत्वं प्रत्यक्षविरुद्धमिति तत्परिहाराय प्रस्तरादिषु यजमानादिशब्दा गौणादिति तेषां प्रवृत्तिनिमित्तभूता गुणाः प्रदर्शिताः। तत्र यजमानशब्दस्य प्रस्तरे प्रवृत्तौ तत्सिद्धिः—तत्कार्यकरत्वं गुणः। उभयोरपि प्रस्तरयजमानयोः योग्यसाधनत्वेन एककार्यकरत्वात्। ब्राह्मणेऽग्निशब्दप्रवृत्तौ जातिः जन्म एकप्रभवत्वं गुणः "ब्राह्मणोऽस्य मुखमासीत्", "मुखादिन्द्रश्चाग्निश्चे" ति ब्राह्मणाग्न्योर्मुखजत्वश्रवणात्। यूपे आदित्यशब्दस्य प्रवृत्तौ आर्याञ्जननिमित्तमौज्ज्वल्यं गुणः। तदेव सारूप्यमित्युक्तं सूत्रे। यत् तत् सिद्ध्यादिकमपि सारूप्यमेव तथापि इदमौज्ज्वल्यं चक्षुर्ग्राह्यसारूप्यमिति विशेषात्तथोक्तम्। अपशुशब्दस्य अजादिषु प्रवृत्तौ गवादीनां प्रशंसानिमित्तम्। पशुशब्देन गवाश्वगतेन उपकारातिशयेन प्रशस्तत्वे लक्षिते नञा तदभावः पश्वन्तरेषु बोध्यते। यथोक्तम्—

गवाश्वादिगतां पूर्वमुपादाय प्रशस्तताम्।
तदभावोऽन्यपश्वादौ नञ् समासेन बोध्यते॥

न च तात्पर्यलिङ्गानामुपक्रमादीनामत्र सत्त्वान्नाद्वैतश्रुतीनाममुख्यार्थत्वमिति वाच्यम्। "यजमानः प्रस्तरः" इत्यादावपूर्वत्वाद्येकैकलिंगस्य तात्पर्यग्राहकस्य विद्यमानत्वात्। एकैकलिंगस्य तात्पर्यनिर्णायकत्वे लिगान्तरमनुवादकमेव, त्वन्मते प्रत्यक्षसिद्धे भेदे श्रुतिरिव, किं बाहुल्येन इति—चेत् ॥२॥

---

एतावतैव चरितार्थत्वात् अन्यानि उदाहरणानि न प्रदर्श्यन्ते। यथोक्तं—

तत् सिद्धिजातिस्सारूप्यप्रशंसालिङ्गभूमभिः।
षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिता ॥

त्वयापि प्रत्यक्षाविरोधायेति। त्वया अद्वैतवेदान्तिना इत्यर्थः। सार्वज्ञ्यादिविशिष्टदुःखादिविशिष्टयोरैक्यस्य प्रत्यक्षविरुद्धत्वात् प्रत्यक्षाविरोधाय लक्षणा सार्वज्ञ्यादिभागत्यागेनेति शेषः। त्वयापि भागत्यागलक्षणा नोच्येत। कुत इति चेत्? श्रुतिविरोधे प्रत्यक्षस्यैवाप्रामाण्यसंभवात्। श्रुतिविरुद्धार्थग्राहिप्रत्यक्षस्याप्रामाण्येन अप्रमाणप्रत्यक्षाविरोधाय लक्षणा नाङ्गीकार्या स्यात् ॥१॥

२—पुनः पूर्वपक्षी शंकते—न च तात्पर्यलिंगानामुपक्रमादीनामत्रसत्त्वान्नाद्वैतश्रुतीनाममुख्यार्थत्वमिति वाच्यम्, यजमानः प्रस्तर इत्यादौ अपूर्वत्वाद्येकैकलिंगस्य तात्पर्यग्राहकस्य विद्यमानत्वात्, एकैकलिंगस्य तात्पर्यनिर्णायकत्वे लिगान्तरमनुवादकमेव, त्वन्मते प्रत्यक्षसिद्धे भेदे श्रुतिरिव, किं बाहुल्येन इति . चेत्। पूर्वपक्षिमतानुसारेण प्रत्यक्षाविरोधाय अद्वैतश्रुतीनाममुख्यार्थत्वं न भवितुमर्हति, उपक्रमादिषड्विधतात्पर्यनिर्णायकलिंगोपेतत्वात् अद्वैते तात्पर्यवती श्रुतिः नामुख्यार्थत्वमर्हति। तात्पर्यवत्यः श्रुतेः सर्वप्रमाणापेक्षया बलवत्त्वात् अद्वैतश्रुत्यैवेतरेषां प्रमामाणानां बाधः इति सिद्धान्तिना कथयितुं न युज्यते। कुतो न युज्यत इत्यत आह—तात्पर्यलिंगवत्त्वेन श्रुतेः प्रत्यक्षबाधकत्वं चेत् यजामानः प्रस्तरः इति श्रुतावपि अपूर्वत्वरूपं तात्पर्यनिर्णायकमेकं लिंगमस्त्येव। मानान्तरागृहीतत्वं ह्यपूर्वत्वम्। यजमाने प्रस्तराभेदस्य श्रुतिप्रतिपादितस्य प्रमाणान्तराविषयत्वात् श्रुतेरपूर्वत्वलक्षणं तात्पर्यनिर्णायकं लिंगमस्त्येव अतः, यजमानः प्रस्तरः इति श्रुतिरपि तात्पर्यनिर्णायकलिंगवती, अथ च तस्याः श्रुतेः

न, वाक्यशेषप्रमाणान्तरसंवादार्थक्रियादिपरीक्षापरीक्षितस्य, प्रत्यक्षस्य प्राबल्येन व्यवहारदशायामेव एतत् विरुद्धार्थग्राहिणो "धूम एवाग्नेर्दिवा ददृशे", "अदितिर्द्यौर्यजमानःप्रस्तरः" इत्यादेस्तद्विरोधेनामुख्यार्थत्वेऽपि अद्वैतागमस्य परीक्षितप्रमाणविरोधाभावेन मुख्यार्थत्वोपपत्तेः प्रत्यक्षादेर्हि परीक्षया व्यावहारिकप्रामाण्यमात्रं सिद्धम्; तच्च नाद्वैतागमे बाध्यते। बाध्यते तु तात्त्विकं प्रामाण्यं, तत्तु परीक्षया न सिद्धमेव, अतो न विरोधः। "धूम एवाग्नेरि"त्यादेस्तु मुख्यार्थत्वे प्रत्यक्षादेर्व्यावहारिकं प्रामाण्यं व्याहन्येत। अतो विरोधात्तत्रामुख्यार्थत्वमिति विवेकः।

---

प्रत्यक्षाविरोधायैव अन्यथानयनं मीमांसकैः कृतम्। यच्चुच्येत षड्विधानि हि लिंगानि तात्पर्यनिर्णायकानि नैकमिति—न वाच्यं, एकैकलिंगस्यापि तात्पर्यनिर्णायकत्वे लिंगान्तरमनुवादकमेव। पूर्वलिंगगृहीतार्थप्रतिपादकमेव। यथाऽद्वैतवादिमते जीवेशभेदादौ प्रत्यक्षसिद्धेऽपि "द्वासुपर्णा" इत्यादि श्रुतिः प्रत्यक्षसिद्धभेदानुवादिनीति स्वीक्रियते तथैव लिंगान्तरमप्यनुवादकमेव। तात्पर्यनिर्णायकानां लिंगानां बाहुल्यमनपेक्षितमेकेनैव लिंगेन तात्पर्यस्य निर्णीतत्वादिति पूर्वपक्षिणोऽभिप्रायः ॥२॥

३—समाधत्ते सिद्धान्ती—न, वाक्यशेषप्रमाणान्तरसंवादार्थक्रियादिपरीक्षापरीक्षितस्य प्रत्यक्षस्य प्राबल्येन व्यवहारदशायामेव एतद्विरुद्धार्थग्राहिणो धूम एवाग्नेर्दिवा ददृशे, अदितिर्द्यौः यजमानः प्रस्तरः इत्यादेस्तद्विरोधेनामुख्यार्थत्वेऽपि अद्वैतागमस्य परीक्षितप्रमाणविरोधाभावेन मुख्यार्थत्वोपपत्तेः। प्रत्यक्षादेर्हि परीक्षया व्यावहारिकप्रामाण्यमात्रं सिद्धम्। तच्च नाद्वैतागमेन बाध्यते। बाध्यते तु तात्त्विकं प्रामाण्यं तत्तु परीक्षया न सिद्धमेव। अतो न विरोधः। धूम एवाग्नेरित्यादेस्तु मुख्यार्थत्वे प्रत्यक्षादेर्व्यावहारिकं प्रामाण्यं व्याहन्येत। अतो विरोधात्तत्रामुख्यार्थत्वमिति विवेकः। वाक्यशेषादिपरीक्षापरीक्षितस्य प्रत्यक्षस्य अतात्पर्यकश्रुत्यपेक्षया प्राबल्येऽपि प्रदर्शितपरीक्षया प्रत्यक्षादेर्व्यवहारिकं प्रामाण्यमेव सिद्ध्यति। प्रमाणान्तरसंवादार्थक्रियादिपरीक्षाया अपि व्यावहारिकत्वात् त्वयापि प्रत्यक्षादेर्यत् प्रामाण्यं निर्णीयते तद्व्यावहारिकमेव। तात्त्विक-

यत्तु—प्रत्यक्षाविरोधाय तत्त्वंपदयोर्लक्षणा नाश्रीयेतेति—तन्न;

प्रामाण्यनिरूपणे तस्या असामर्थ्यात् । वाक्यशेषः, प्रमाणान्तरसंवादः, अर्थक्रियादि च परीक्षा उक्ता । तत्र प्रमाणान्तरसंवादार्थक्रियादिपरीक्षा अनायासगम्या । वाक्यशेषरूपा परीक्षा विव्रियते । विधिवाक्यशेषानाम् अर्थवादानां विध्यपेक्षितस्तुतिनिन्दापरत्वनिश्चयाय शाब्दीभावनाया इतिकर्तव्यतात्वेन अर्थवादज्ञाप्यं प्राशस्त्यम् , इतिकर्तव्यतात्वेनान्वेति । एवमेव निन्दार्थवादज्ञाप्यम् अप्राशस्त्यम् । निषेधविधेः निषेध्यान्निवर्तयितुमप्राशस्त्यमितिकर्तव्यतात्वेनापेक्ष्यते । अतो विध्यपेक्षितार्थपरा अर्थवादा न स्वार्थतात्पर्यका अतोऽर्थवादेभ्यो न प्रत्यक्षविरुद्धार्थसिद्धिरिति अर्थवादवशेन प्रत्यक्षं व्यवहारकाले बाधितं न भवति । अतो विधिशेषस्यार्थवादस्य व्यावहारिकप्रमाणप्रत्यक्षाबाधाय अन्यथानयनमपेक्षितम् । अन्यार्थकविधिशेषमात्रार्थवादविरोधिप्रत्यक्षस्यैव व्यावहारिकं प्रामाण्यम् । अतः प्रत्यक्षस्य व्यावहारिकप्रामाण्यस्य सिद्धत्वात् व्यावहारिकप्रमाणभावप्रत्यक्षविरोध्यन्यार्थकार्थवादानां विरोधे प्रत्यक्षस्य व्यावहारिकप्रामाण्यरक्षणाय अर्थवादानामेवान्यथानयनम् , अर्थवादानां स्वार्थे तात्पर्यरहितत्वात् । अन्यतात्पर्यकार्थवादानां प्रत्यक्षविरोधेन अन्यथानयनेऽपि अद्वैतागमस्यपरीक्षितप्रमाणविरोधाभावेन मुख्यार्थत्वोपपत्तेः । अपरीक्षितप्रमाणप्रत्यक्षादिविरोधेऽपि नाद्वैतागमस्य मुख्यार्थत्यागः । अद्वैतागमस्य प्रामाण्यं तात्त्विकं, प्रत्यक्षादीनां व्यावहारिकमिति लोकमर्यादा । न हि व्यावहारिकप्रमाणविरोधेन तात्त्विकप्रमाणस्यान्यथानयनं भवितुमर्हति । प्रत्यक्षादीनामपि व्यावहारिकं प्रामाण्यं नाद्वैतागमेन बाध्यते । प्रत्यक्षादीनां तात्त्विकं प्रामाण्यमद्वैतागमेन बाध्यते । प्रत्यक्षादीनां तात्त्विकं प्रामाण्यं न परीक्षया सिद्धम् । परीक्षया हि प्रत्यक्षादीनां व्यवहारकालाबाध्यविषयकत्वमेव गृह्यते । न तु सर्वथा अबाध्यार्थविषयकत्वम् । धूमएवाग्नेरित्यादेस्तु अर्थवादस्य मुख्यार्थत्वे प्रत्यक्षादेर्व्यावहारिकमपि प्रामाण्यं व्याहन्येत, अतो व्यावहारिकप्रमाणप्रत्यक्षविरोधात् धूम एव अग्नेरित्याद्यर्थवादस्यामुख्यार्थत्वम् । अर्थवादेन प्रत्यक्षादेर्बाधे प्रत्यक्षस्य व्यावहारिकं प्रामाण्यं व्याहन्येत । अद्वैतागमेन तु बाधे न प्रत्यक्षादेर्व्यावहारिकं प्रामाण्यं बाध्यते, अपि तु तात्त्विकम् । तत्तु प्रत्यक्षादीनामसिद्धमेवेत्ययं विवेको भेदः ।

यत्तु प्रत्यक्षाविरोधाय तत्त्वंपदयोर्लक्षणा नाश्रीयेत इति तन्न

षडविधलिङ्गैर्गतिसामान्येन चाखण्ड एवावधार्यमाणस्य तात्पर्यस्यानुपपत्तेः जीवेशगतसर्वज्ञत्वकिञ्चिज्ज्ञत्वादीनामैक्यान्वयेऽनुपपत्तेश्च तात्पर्यविषयीभूताखण्डप्रतीतिनिर्वाहाय लक्षणाङ्गीकरणस्यैवोचितत्वात्, तात्पर्यविषयीभूतान्वयनिर्वाहाय लक्षणाश्रयणस्य सर्वत्र दर्शनात् ॥३॥

न चैवं सति अमुख्यार्थत्वं स्यादितिवाच्यम्; तद्धि प्रतीयमानार्थपरित्यागेनार्थान्तरपरत्वं वा अशक्यार्थत्वं वा ? नाद्यः; सामानाधिकरण्येन प्रतीयमानशक्यस्यात्यागात् । नान्त्यः जहदजलहल्लक्षणाश्रयनेन शक्यैकदेशपरित्यागेऽपि "सोऽयं देवदत्त" इत्यादि वाक्य इव शक्यैक

---

षड्विधलिंगैर्गतिसामान्येन च अखण्ड एवावधार्यमाणस्य तात्पर्यस्यानुपपत्तेः जीवेशगतसर्वज्ञत्वकिंचिज्ज्ञत्वादीनां ऐक्यान्वये अनुपपत्तेश्चतात्पर्यविषयीभूताखण्डप्रतीतिनिर्वाहाय लक्षणाङ्गीकरणस्यैवोचितत्वात्, तात्पर्यविषयीभूतान्वयनिर्वाहाय लक्षणाश्रयणस्य सर्वत्र दर्शनात् । पूर्वपक्षमनूद्य समाधत्ते—प्रत्यक्षाविरोधायैव तत्त्वमोर्लक्षणेति पूर्वपक्षिणो भ्रम एव तात्पर्यविषयीभूतप्रतीतिनिर्वाहायैवात्रास्माभिर्लक्षणा समाश्रिता इति पूर्वपक्षीभ्रमं निरस्यन् आचार्यः 'यत्तु' इत्यादिना पूर्वपक्षमनुवदति । पूर्वपक्षस्तु प्रागेव व्याख्यातः । उपक्रमादिभिः षड्विधतात्पर्यनिर्णायकलिंगैः गति सामान्यादिति ब्रह्मसूत्रेण च अखण्डे चिन्मात्रे उपनिषदामवधार्यमाणतात्पर्यस्यानुपपत्ति परिहाराय सर्वज्ञेन ईशेन किंचिज्ज्ञस्य जीवस्य ऐक्यान्वयानुपपत्तेः तात्पर्यविषयीभूतैक्यप्रतीतिनिर्वाहाय तत्त्वं पदयोर्लक्षणा आश्रियते । न तु प्रत्यक्षाविरोधाय, सर्वत्र तात्पर्यविषयीभूतान्वयनिर्वाहाय लक्षणाश्रयणस्य दर्शनात् । तात्पर्यानुपपत्तिरेव सर्वत्र लक्षणाबीजमिति भावः ॥३॥

४—पूर्वपक्षी शंकते—न चैवं सति अमुख्यार्थत्वं स्यादिति वाच्यम् मुख्यार्थत्वे वाच्यत्वापत्त्या लक्षणाया अङ्गीकारेण अमुख्यार्थत्वाङ्गीकृता सिद्धान्तिना इति पूर्वपक्षी चोदयति न च एवं सतीति । पूर्वपक्षी चोद्यं विकल्प्य समाधत्ते—तद्धि प्रतीयमानार्थपरित्यागेन अर्थान्तरपरत्वं वा, अशक्यार्थत्वं वा ? नाद्यः, सामानाधिकरण्येन प्रतीयमानस्यैकस्य अत्यागात् । नान्त्यः, जहदजहल्लक्षणाश्रयणेन शक्यैकदेशपरित्यागेऽपि सोऽयं

देशस्यान्वयाभ्युपगमात् विशेषणबाधेन विशेष्यमात्रान्वयस्यैवात्र लक्षणा शब्देन व्यपदेशात्। तथा चोक्तं वाचस्पतिमिश्रैः—"प्रस्तरादिवाक्यमनन्यशेषत्वादमुख्यार्थम्, अद्वैतवाक्यं तु अनन्यशेषत्वान्मुख्यार्थमेव"। उक्तं हि शावरभाष्ये—"न विधौ परः शब्दार्थं इती"ति। यथा चापूर्व-

---

देवदत्त इत्यादिवाक्ये इव शक्यैकदेशस्यान्वयाभ्युपगमात्। विशेषणबाधेन विशेष्यमात्रान्वयस्यैवात्र लक्षणाशब्देन व्यपदेशात्। तथा चोक्तं वाचस्पतिमिश्रैः—प्रस्तरादिवाक्यमन्यशेषत्वादमुख्यार्थम्, अद्वैतवाक्यं तु अनन्यशेषत्वान्मुख्यार्थमेव। उक्तं हि शावरभाष्ये न—विधौ परः शब्दार्थः इति। अमुख्यार्थमिति पूर्वपक्षिणा यदुक्तं तत् किं प्रतीयमानार्थपरित्यागेन अर्थान्तरपरत्वं वा अशक्यार्थत्वं वा ? नाद्यः, सामानाधिकरण्येन··· अत्यागात्। अयं भावः—अकार्यकारणद्रव्यमात्रतात्पर्यकसमानविभक्तिकनानानामत्वमेव शब्दनिष्ठसामानाधिकरण्यं तच्च तत्त्वमोर्विद्यते। अकार्यकारणचिन्मात्रतात्पर्यकसमानविभक्तिकनानानामत्वं तत्त्वंपदयोर्विद्यते। ऐक्यस्य—शुद्धव्यक्तिमात्ररूपस्य। एतेन ऐक्यस्य सापेक्षरूपत्वं प्रत्युक्तम्। प्रतीयमानस्य—प्रतीयमानत्वेन विवरणादौ निर्णीतस्य, वाचस्पतिमते शुद्धस्य वृत्तिव्याप्यत्वाभावेऽपि विवरणमते शुद्धस्य वेदान्तजन्यवृत्तिविषयत्वव्यवस्थापनात् प्रतीयमानैक्यस्यात्यागात् नाऽर्थान्तरपरत्वेन अमुख्यार्थत्वमिति भावः। अशक्यार्थपरत्वेन अमुख्यार्थत्वमिति द्वितीयविकल्पोऽपि न सम्भवति तत्त्वंपदयोर्जहदजहल्लक्षणेति साम्प्रदायिकी स्थितिः। अस्यां लक्षणायां शक्यैकदेशपरित्यागेऽपि शक्यैकदेशान्वयाभ्युपगमात् न अशक्यार्थत्वपरत्वमिति भावः। सोऽयं देवदत्त इत्यत्र तदिदंपदयोर्भागत्यागलक्षणया परोक्षत्वप्रत्यक्षत्वरूपविशेषणांशपरित्यागेऽपि शक्यविशेष्यांशैक्यबोधकत्ववत् प्रकृतेऽपि न अशक्यार्थपरत्वेन अमुख्यार्थत्वमिति भावः। यदि तत्त्वंपदयोः शक्यार्थबोधकत्वमेव तर्हि जहदजहल्लक्षणोक्तिः साम्प्रदायिकानां कथमित्याह—विशेषणबाधेन इत्यादि। "अशक्यार्थबोधकत्वेन न लक्षणोक्तिः"। किन्तु शक्यविशेषणांशमात्रपरित्यागादेव लक्षणोक्तिः। एतेन वेदान्तपरिभाषायां आगमपरिच्छेदे वयं तु ब्रूमः इत्युक्त्वा यः पक्षः स्वकीयत्वेनोक्तः स सर्वथा असंगत एव। परिभाषाकृतः प्रागपि

त्वाद्यैकैकतात्पर्यलिंगेन "यजमानः प्रस्तर" इत्याद्यर्थवादवाक्यानां न स्वार्थपरत्वं तथा वक्ष्यामः ॥४॥

---

आचार्येण स एव पक्षः अत्रैव प्रदर्शितः। परकीयं मतं स्वमतत्वेन प्रदर्शनम् अतीवासङ्गतम्। अल्पमयस्तु [ अल्पज्ञास्तु ] अयं पक्षः परिभाषाकृतैव प्रागुद्भावित इति भ्राम्यन्ति। आचार्यग्रन्थानवलोकननिबन्धनैवेयं भ्रान्तिस्तेषाम्। अत एव लघुचन्द्रिकायां बलवदनिष्टाजनकत्वसमानाधिकरणेष्टसाधनत्वशक्तस्यापि विधिप्रत्ययस्य श्येनेनाभिचरन् यजेत इत्यादौ केवलेष्टसाधनत्वबोधकत्वं लक्षणां विनैवेति मणिकारादिभिरप्युक्तं लक्षणाङ्गीकारमात्रेण तत्त्वमस्यादिवाक्यस्यामुख्यार्थत्वे चोदिते तस्य परिहारमुक्त्वा मिश्रसंवादेन परिहारं द्रढयन्नाह—तथा चोक्तं वाचस्पतिमिश्रैः—प्रस्तरादिवाक्यस्यामुख्यार्थत्वे बीजं न लक्षणा, किन्तु अन्यशेषत्वम् अद्वैतवाक्यं तु अनन्यशेषत्वात् मुख्यार्थमेव। तात्पर्यविषयीभूतार्थप्रतिपादकत्वादिति भावः। उक्तं हि—शाबरभाष्ये न विधौ परः शब्दार्थः। विधौ विधायके अज्ञातज्ञापके वाक्ये परः प्रतीयमानादन्यः शब्दार्थः—चन्द्रिकायामुक्तः। ननु सिद्धार्थकवेदान्तमहावाक्यार्थविचारे प्रस्तुते विधिवृत्तप्रकाशकं शाबरवचनं कथं संगच्छते इति चेत्, शृणु—विधौ विधायके शब्दे परो लक्ष्यः शब्दार्थो न भवतीति शबरस्वामिनोक्तं तत्तुल्यं वेदान्तेष्वपि अनधिगतार्थबोधितत्त्वेन तत्परत्वसाम्यात्। विवृतं चैतत् परिमले विधायके शब्दे न लक्षणेति न युक्तं सोमेन यजेत इति विधिवाक्ये सोमवता यागेन इति मत्वर्थलक्षणाङ्गीकारात्। तत्तुल्यमित्यपि अयुक्तं तत्त्वमसि इति वाक्ये भागत्यागलक्षणाङ्गीकारात्। उच्यते विधिवाक्यं तत्तुल्यं वा तात्पर्यवत् वाक्यं यत्किञ्चिदनुग्रहार्थमन्यमर्थं नेतुमयुक्तमित्यभिप्रायः। विशिष्टविधिपरे सोमवाक्ये सोमद्रव्यतादात्म्यविशिष्टयागविद्ध्यभ्युपगमे तस्य विशिष्टस्य विधेयस्य दध्यादिवल्लोकसिद्धत्वाभावेन विधिवाक्यादेव विना तात्पर्यं सिद्धिरेष्टव्या। न च तात्पर्यरहितादागमात् यागसोमलताभेदग्राहिप्रत्यक्षविरुद्धोऽर्थः सिध्यतीति तदविरोधाय मत्वर्थलक्षणाश्रयणम्, अद्वैतश्रुतेस्तु तात्पर्यविषयादन्यत्र नयनमेव नास्तीति न कश्चित् दोषः। परिमलकृद्भिरपि महावाक्ये लक्षणा नाङ्गीकृता कथं परिभाषाकृतां प्राथम्येन उद्भावनम् इदं संगच्छते। यथा च अपूर्वत्वाद्यैकैकतात्पर्यलिंगेन यजमानः प्रस्तरः

ननु अन्यशेषत्वानन्यशेषत्वे नामुख्यार्थत्वमुख्यार्थत्वयोः प्रयोजके, किं तु मानान्तरविरोधाविरोधौ। अन्यशेषेऽपि मानान्तराविरोधे "इयं गौः क्रय्या बहुक्षीरे"त्यादौ लोके "सोऽरोदीदि"त्यादौ च वेदे प्रस्तरादिवाक्यवद् अमुख्यवृत्तेरनाश्रयनात्, अनन्यशेषेऽपि 'सोमेन यजेत' इत्यादौ वैयधिकरण्ये नान्वये विरुद्धत्रिकद्वयापत्त्या सामानाधिकरण्ये नान्वये प्रत्यक्षाविरोधाय च सोमवतायागेनेति मत्वर्थलक्षणाया आश्रयणात्। एवं विचारविधायके 'अथातो ब्रह्मजिज्ञासे'ति सूत्रे तद्विजिज्ञासस्वेति श्रुतौ च मानान्तराविरोधेन विध्यन्वयाय जिज्ञासा शब्देन विचार-

---

इत्याद्यर्थवादवाक्यानां न स्वार्थपरत्वं तथा वक्ष्यामः। उपक्रमोपसंहारयोरेकार्थनिष्ठत्वमभ्यासार्थवादौ च इति त्रयं शब्दगतमपूर्वत्वमज्ञातत्वं, फलं—फलवत्त्वम्, उपपत्तिश्च अबाधितत्वरूपा एतत्त्रयमर्थनिष्ठम्। षडेतानि लिङ्गानि तात्पर्यग्राहकाणि। तेषु अन्त्यत्रयं प्रामाण्यशरीरनिर्वाहकत्वादावश्यकम्। निष्फलार्थे प्रत्यक्षादेः प्रामाण्यसम्भवेऽपि न श्रुतेस्तत्सम्भव. फलवदर्थज्ञानादिकमुद्दिश्य अध्ययनसंस्कृतश्रुतीनां विनियोगेन निष्फलार्थे तात्पर्याभावनिश्चयात्। आद्यत्रये तु अर्थवादस्य विधेयप्राशस्त्यनिषेध्याप्राशस्त्यधीद्वारा विधिनिषेधवाक्ययोः प्रमाजनकतायामावश्यकत्वमन्यथा तद्विषयीभूतयोः प्रवर्तनानिवर्तनयोः तादृशधीरूपेतिकर्तव्यताऽनन्वयेन उक्तप्रमाया अपर्यवसानात्। इतरयोस्तु विरुद्धार्थद्वये तात्पर्यसंशये सति यत्र उपक्रमादिकं तत्रैव तात्पर्यनिश्चयेन तदुपयोगित्वम्। तथा च नापूर्वत्वादेरेकैकमात्रेण तात्पर्यनिर्णयसम्भवः यथा चैतत् तथा आगमबाधोद्धारपरिच्छेदे वक्ष्यामः ॥४॥

५—ननु अन्यशेषत्वानन्यशेषत्वे नामुख्यार्थत्वमुख्यार्थत्वयोः प्रयोजके, किंतु मानान्तरविरोधाविरोधौ। अन्यशेषेऽपि मानान्तराविरोधे "इयं गौः क्रय्या बहुक्षीरेत्यादौ लोके सोऽरोदीदित्यादौ च वेदे प्रस्तरादिवाक्यवदमुख्यवृत्तेरनाश्रयणात् अनन्यशेषेऽपि सोमेन यजेत इत्यादौ वैयधिरण्येनान्वयेविरुद्धत्रिकद्वयापत्त्या सामानाधिकरण्येनान्वये प्रत्यक्षाविरोधाय च सोमवता यागेनेति मत्वर्थलक्षणाया आश्रयणात्। एवं विचारविधायके अथातो ब्रह्मजिज्ञासेति सूत्रे तद् विजिज्ञासस्वेति श्रुतौ

लक्षणायाः "सर्वं खल्विदं ब्रह्मे"त्यादौ च अमुख्यार्थतायाः स्वीकृतत्वात्, सर्वस्यापि वाक्यस्यावाच्ये ब्रह्मणि लक्षणाया एव इष्टत्वेनामुख्यार्थत्वनिषेधायोगाच्च, अन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा लक्षणाबीजस्य विध्यविधिसाधारणत्वाच्च। शाबरं तु वचनं अर्थवादमुख्यत्वाय विधौ न लक्षणेत्येवं परम्, तस्मान्न प्रत्यक्षं शब्दबाध्यं—इति चेत् ॥५॥

---

च मानान्तराविरोधेन विध्यन्वयाय जिज्ञासाशब्देन विचारलक्षणायाः सर्वं खल्विदं ब्रह्मेत्यादौ च अमुख्यार्थतायाः स्वीकृतत्वात्, सर्वस्यापि वाक्यस्यावाच्ये ब्रह्मणि लक्षणाया एव इष्टत्वेन अमुख्यार्थत्वनिषेधायोगाच्च। अन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा लक्षणाबीजस्य विध्यविधिसाधारणत्वाच्च। शाबरं तु वचनमर्थवादमुख्यत्वाय विधौ न लक्षणेत्येवं परं तस्मान्न प्रत्यक्षं शब्दबाध्यमिति चेत्। अयं भावः वाचस्पतिना यदुक्तमन्यशेषत्वात् अमुख्यार्थत्वमनन्यशेषत्वात् मुख्यार्थत्वं तन्न युक्तम्, मुख्यार्थत्वामुख्यार्थत्वयोः के प्रयोजके? इत्यत आह पूर्वपक्षी मानान्तरविरोधाविरोधौ। यत् मानान्तरविरुद्धार्थकं तदमुख्यार्थकं यत् मानान्तराविरुद्धार्थकं तन्मुख्यार्थकमन्याशेषत्वानन्यशेषत्वे नैतयोः प्रयोजके,—न ज्ञापके; कुतो नैवमित्याह 'अन्यशेषेऽपि' इत्यादि। अन्यशेषत्वेऽपि प्रत्यक्षविरोधाभावे लोके वेदे च मुख्यार्थत्वस्यैव च दर्शनात्। लोके तावदाह—इयं गौः क्रय्या बहुक्षीरेति। इयं गौः क्रय्या इत्यस्य विधेः शेषभूते बहुक्षीरास्त्यपत्या समांसमीना इत्यादि वाक्ये प्रत्यक्षविरोधाभावेन प्रतीयमानबहुक्षीरादिसंसर्गपरत्वेन मुख्यार्थत्वात् प्रत्यक्षविरोधे पुनरिदमिवोदाहरणममुख्यार्थमिव स्यात्। यथा इयं गौः क्रय्या यतः कामधेनुः इत्यत्र कामधेन्वभेदस्य प्रत्यक्षसिद्धायां गवि बाधितत्वेन अमुख्यार्थत्वम्। सोऽरोदीदित्यादौ च वेदे—तस्य हिरण्यं दक्षिणेति हिरण्यदक्षिणाविधिशेषे "सोऽरोदीत् यदरोदीत् तत् रुद्रस्य रुद्रत्वं यदश्रु अशीयत तत् रजतमभवत् तस्मात् रजतमदक्षिण्यमश्रुजमित्यादिष्वपि प्रतीयमानसंसर्गे दक्षिणाभागरूपवाक्यार्थे तात्पर्यं विना रजतनिन्दाया असिद्धेः प्रत्यक्षविरोधाभावात् प्रतीयमानसंसर्गपरत्वरूपमुख्यवृत्तिरेवाश्रीयते" प्रस्तरादिवाक्यवत् इति व्यतिरेकदृष्टान्तः। प्रस्तरादिवाक्ये यथा अमुख्यवृत्तिराश्रीयते न तथा सोऽरोदीदित्यादौ। सोऽरोदीदित्यादौ तु मुख्यवृत्ति-

रेवाश्रीयते। लोके वेदे च अन्यशेषेऽपि वाक्ये मुख्या वृत्तिरेवाश्रिता अतो यदुक्तं वाचस्पत्ये अन्यशेषत्वादमुख्यार्थं तदसंगतमिति दर्शितम्। अनन्यशेषत्वन्मुख्यार्थमिति वाचस्पत्युक्तं दूषयितुमाह "अनन्यशेषेऽपि सोमेन यजेत" इत्यादौ। प्रमाणलक्षणे नामधेयपादे चिन्तितं—सोमेन यजेतेति श्रूयते। तत्र लतारूपसोमेन यागं भावयेत् यागेन इष्टं भावयेत् इति वैयधिकरण्येनान्वयो वा सोमेन यागेन इष्टं भावयेत् इति सामानाधिकरण्येनान्वयो वा इति सन्देहे सोमलतायागयोरैक्याभावेन सामानाधिकरण्यायोगात् वैयधिकरण्येनान्वय इति पूर्वपक्षः। सिद्धान्तस्तु वैयधिकरण्येनान्वयेऽपि सोमेन यागं भावयेत् यागेनेष्टं भावयेत् इति वाक्यभेदापत्तेः। तथा विरुद्धत्रिकद्वयमापद्येत। तथा हि सोमेन यागं भावयेदित्यत्र यागं भावयेदिति यत् तत् सोमेनेति सोमरूपगुणविधाने यागे कर्मत्वानुबन्धिप्रधानत्वमनुवाद्यत्वमुद्देश्यत्वम् इति त्रिकं तथा सोमे करणत्वानुबन्धिगुणत्वं विधेयत्वं मुपादेयत्वं चेति त्रिकमस्ति। यागेनेष्टं भावयेदित्यत्र तु यागस्य करणत्वेन पूर्वं कर्मत्वानुबन्धित्रिकवत्त्व एव तद्विरुद्धकरणत्वानुबन्धित्रिकवत्त्वप्राप्तेः अतो वैयधिकरण्येनान्वयायोगात् सामानाधिकरण्येनान्वयः। तत्र च प्रत्यक्षविरोधः समायाति यजेः सोमलतारूपत्वाभावात् अतः प्रत्यक्षाविरोधाय मत्वर्थलक्षणया सोमद्रव्यवता यागेन इष्टं भावयेदित्यर्थाङ्गीकारेण लक्षणया अमुख्यार्थाङ्गीकारादित्यर्थः। "एवं विचारविधायके अथातो ब्रह्मजिज्ञासेति" विधिसम्बन्धस्य कृतिसाध्यत्वव्याप्यत्वात् जिज्ञासायाः ज्ञानस्येव कृत्यसाध्यत्वात् जिज्ञासासूत्रे विधिसम्बन्धाभावात् जिज्ञासासूत्रे अध्याहृतकर्तव्येतिपदलभ्यप्रवर्तनारूपविध्यन्वयाय जिज्ञासायां विधिसम्बन्धाभावग्राहकमानाविरोधाय विधिसम्बन्धयोग्ये विचारे जिज्ञासापदस्य लक्षणायाः स्वीकृतत्वात् अमुख्यार्थतायाः स्वीकारादिति प्रदर्शितेनैव हेतुना विजिज्ञासस्य श्रुतावपि विजिज्ञासधातोः विचारे लक्षणाऽङ्गीकार्या तथा च अमुख्यार्थत्वमिति भावः। सर्वं खल्विदं ब्रह्मेति—अस्याः श्रुतेर्यथाश्रुतार्थग्रहणे घटादीनां सर्वेषां ब्रह्माभेदस्य बाधितत्वात् बाधपरिहाराय लक्षणया श्रुतेरमुख्यार्थतायाः स्वीकृतत्वात्; सर्वस्यापि वाक्यस्यावाच्येति—निर्धर्मकतयाः प्रवृत्तिनिमित्तरहिते पदवाच्यतायाः ब्रह्मणि असम्भवात् अवाच्ये ब्रह्मणि इत्युक्तम्। सर्वस्यापि अद्वैतप्रतिपादकवाक्यस्य ब्रह्मणि लक्षणायाः स्वीकृतत्वात्। मीमांसकमताभिप्रायेण वाक्ये लक्षणेति उक्तं; अन्येषां मते वाक्यस्येत्यत्र वाक्यस्थपदस्येति व्याख्येयम्। "मोक्षार्थत्वे वाच्यत्वापत्त्या लक्षणाया

न, भावानवबोधात्। तात्पर्यविषयीभूतार्थबोधकत्वं हि मुख्यार्थत्वम्। न शक्यार्थमात्रबोधकत्वं; अन्यार्थतात्पर्यकत्वाच्चामुख्यार्थत्वम्; न लाक्षणिकत्वमात्रम्। तथाचाद्वैतागमस्य स्वतात्पर्यविषयीभूतार्थबोधकत्वनिर्वाहाय लक्षणाश्रयणेऽपि मुख्यार्थत्वमुपपन्नमित्यवोचाम्। एवं च "सोमेन यजेत" इत्यादिविशिष्टविधेर्विशेषणे तात्पर्याभावात् मत्वर्थलक्षणायामपि स्वार्थापरित्यागाच्च नामुख्यार्थत्वम्। जिज्ञासापदे तु ज्ञाधातुनामेष्यमाणज्ञानलक्षणाङ्गीकारानङ्गीकारमतभेदेऽपि

---

अङ्गीकारेण अमुख्यार्थतयैव" अङ्गीकृता इति भावः। अद्वैतवाक्यस्य विधिवाक्यतुल्यत्वात् तत्र लक्षणा न युक्ता इति चेन्न लक्षणाबीजसद्भावे विधिवाक्येऽपि लक्षणा आवश्यकी इत्याह अन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा लक्षणाबीजस्येति—गंगायां घोषः इत्यत्र अन्वयानुपपत्तिर्लक्षणाबीजं भोजनसमये यष्टीः प्रवेशय इत्यादौ तात्पर्यानुपपत्तिर्लक्षणाबीजम् लक्षणाबीजसत्त्वात् विधिवाक्येऽपि चेत् लक्षणाऽङ्गीकारः तर्हि शाबरवाक्यस्य का गतिः इत्याह—शाबरं तु वचनं—कयोश्चित् अनुवादकविधायकयोर्वाक्ययोर्मध्ये अनुवादकस्य मुख्यार्थत्वाय विधायकवाक्ये लक्षणा न न्याय्या किंतु विधायकानुसारेण अनुवाद एवामुख्यार्थः इत्येवंपरं शाबरवचनम्। न तु सर्वत्रापि विधिवाक्ये लक्षणैवनास्ति इत्येवंपरम्। तस्मात् शब्दापेक्षया प्रत्यक्षस्य प्राबल्यात् न प्रत्यक्षं शब्दबाध्यमिति भावः। तथा च पूर्वपक्षसंग्रहश्लोकः—

यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत्।
ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषतः ॥५॥

इति प्रत्यक्षस्यागमबाध्यत्वे पूर्वपक्षः समाप्तः ॥

६—सिद्धान्त्यभिप्रायानवबोधविजृम्भितोऽयं पूर्वपक्षः इत्याहाचार्यः—न, भावानवबोधात्, तात्पर्यविषयीभूतार्थबोधकत्वं हि मुख्यार्थत्वं न शक्यमात्रबोधकत्वम्; अन्यार्थतात्पर्यकत्वाच्चामुख्यार्थत्वं; न लाक्षणिकत्वमात्रम्। तथा च अद्वैतागमस्य स्वतात्पर्यविषयीभूतार्थबोधकत्वनिर्वाहाय लक्षणाश्रयणेऽपि मुख्यार्थत्वमुपपन्नम् इत्यवोचम्। एवं च 'सोमेन यजेत' इत्यादिविशिष्टविधेर्विशेषणे तात्पर्याभावात् मत्वर्थलक्षणायामपि स्वार्थापरित्यागाच्च नामुख्यार्थत्वम्। जिज्ञासापदे तु ज्ञाधातुना ईष्य-

सन् प्रत्ययस्य विचारे जहल्लक्षणाभ्युपगमस्योभयत्र तुल्यत्वात्। शक्यार्थपरित्यागेऽपि विधितात्पर्यनिर्वाहात् नामुख्यार्थत्वं न हि वाक्यार्थप्रतीत्यन्यथानुपपत्त्या पदमात्रे लक्षणायामपि वाक्यस्यामुख्यार्थत्वम्; प्रतीतस्यार्थस्यानन्यशेषत्वेन मुख्यत्वात्। यत्र पुनः प्रतीत एव वाक्यार्थो अन्यशेषत्वेन कल्प्यते, तत्र वाक्यस्यामुख्यार्थत्वमेव। अन्यद्धि पदतात्पर्यम् अन्यच्च वाक्यतात्पर्यम्; "सैन्धवमानय गंगायां वसन्ती"-त्यादौ वाक्यतात्पर्यैक्येऽपि पदतात्पर्यभेदात्, "विषं भुङ्क्ष्वेत्यादौ पदतात्पर्याभेदेऽपि वाक्यतात्पर्यभेदात्। अतएव इयं गौः क्रय्या बहुक्षीरेत्यादिवाक्यार्थस्यावश्यं क्रेतव्येति विधिशेषत्वेन तत्प्राशस्त्यलक्षणकत्वात्, "सोऽरदीदित्यादि वाक्यार्थस्य च बर्हिषि रजतं न देयं हिरण्यं दक्षिणे"ति विधिशेषत्वेन रजतनिन्दाद्वारा तत्प्राशस्त्यलक्षकत्वात्सर्वं खल्विदं ब्रह्म तज्जलानितिवाक्यार्थस्य "शान्तोपासीते"ति शमविधिशेषत्वेनात्यनायाससिद्धत्वरूपतत्प्राशस्त्यलक्षकत्वादमुख्यत्वमेव ॥६॥

---

मानलक्षणाङ्गीकारानङ्गीकारमतभेदेऽपि सन्प्रत्ययस्य विचारे जहल्लक्षणाभ्युपगमस्य उभयत्र तुल्यत्वात् सक्यार्थपरित्यागेऽपि विधितात्पर्यनिर्वाहात् नामुख्यार्थत्वम्। न हि वाक्यार्थप्रतीत्यन्यथानुपपत्त्या पदमात्रे लक्षणायामपि वाक्यस्यामुख्यार्थत्वम्। प्रतीतस्यार्थस्यानन्यशेषत्वेन मुख्यत्वात्। यत्र पुनः प्रतीत एव वाक्यार्थोऽन्यशेषत्वेन कल्प्यते, तत्र वाक्यस्य अमुख्यार्थत्वमेव। अन्यद्धि पदतात्पर्यमन्यच्च वाक्यतात्पर्यं; सैन्धवमानय गंगायां वसन्तीत्यादौ वाक्यतापर्यैक्येऽपि पदतात्पर्यभेदात्, विषं भुंक्ष्व इत्यादौ पदतात्पर्याभेदेऽपि वाक्यतात्पर्यभेदात्। अत एव इयं गौः क्रय्या बहुक्षीरेत्यादिवाक्यार्थस्य अवश्यं क्रेतव्येति विधिशेषत्वेन तत्प्राशस्त्यलक्षकत्वात्, सोऽरोदीदित्यादिवाक्यार्थस्य च बर्हिषि रजतं न देयं, हिरण्यं दक्षिणेति विधिशेषत्वेन रजतनिन्दाद्वारा तत्प्राशस्त्यलक्षकत्वात्। सर्वं खल्विदं ब्रह्म तज्जलानिति वाक्यार्थस्य शान्तमुपासीत इति शमविधिशेषत्वेन अत्यनायाससिद्धत्वरूपतत्प्राशस्त्यलक्षकत्वादमुख्यत्वमेव। सिद्धान्ती भावं दर्शयति तात्पर्यविषयीभू-

तार्थबोधकत्वं हि मुख्यार्थत्वमिति स्वकीयमुख्यतात्पर्यविषयवाक्यार्थबोधकत्वं हि मुख्यार्थत्वं यथा अर्थवादवाक्यं विध्यपेक्षितप्राशस्त्यलक्षकमपि प्राशस्त्यधीद्वारीभूतेऽर्थवादबोध्यवाक्यार्थे न मुख्यार्थकम्। द्वारीभूतेऽर्थे अर्थवादस्य न मुख्यं तात्पर्यं किन्तु अवान्तरतात्पर्यं लक्ष्ये प्राशस्त्येऽपि लक्षकं न मुख्यार्थं विधेयस्तुत्यर्थत्वेन प्राशस्त्यस्यापि अन्यार्थत्वात् अतोऽर्थवादवाक्यं कुत्रापि न मुख्यार्थकम्। लक्षणया अर्थप्रतिपादकत्वेन न अर्थवादवाक्यममुख्यार्थकं किन्तु विधिशेषत्वादेव अमुख्यार्थम्। अन्यार्थत्वेनैव अमुख्यार्थत्वम्। अग्निर्हिमस्य भेषजम्, वायुर्वै क्षेपिष्ठा देवता इत्याद्यर्थवादस्य शक्यार्थबोधकत्वेऽपि अन्यार्थकत्वेन अमुख्यार्थत्वमेव। अर्थवादस्य स्वार्थे विश्रान्त्यभावात्। यदनन्यशेषं स्वार्थविश्रान्तं वाक्यं तल्लक्षणया अर्थप्रतिपादकमपि मुख्यार्थमेव। मुख्यार्थत्वामुख्यार्थत्वयोरेषा सर्वशास्त्रसम्मता व्यवस्था। तथा च अद्वैतागमस्य स्वपरमतात्पर्यविषयीभूतार्थबोधकत्वनिर्वाहाय लक्षणाश्रयणेऽपि मुख्यार्थत्वमेव। वस्तुतः तत्त्वमस्यादिवाक्ये लक्षणाश्रयणमेव नास्ति इत्युक्तं प्राक् एतदेवाभिप्रेत्य लक्षणाश्रयणेऽपि इत्यत्र अपिकार उपात्तः। एवं सोमेन यजेत इत्यादिविशिष्टविधेरिति—सोमेन यजेत इति विशिष्टविधेर्विशेषणे तात्पर्याभावात्—यागादिनिष्ठे सोमादिसम्बन्धरूपविशेषणे विशिष्टविधेस्तात्पर्याभावात्। सोमादिविशिष्टयागादिविशिष्टभावनाया विध्यन्वयस्थले विशेषणीभूतसोमादेर्यागादिनिष्ठवैशिष्ट्यादौ श्रूयमाणविधेर्न तात्पर्यम्। यदि हि तत्र तात्पर्यं तदा सोमेन यागं कुर्यादिति यागोद्देश्यकसोमकरणकभावनाविधौ तात्पर्यपर्यवसानं वाच्यम्। एकक्रियायामन्वयमप्राप्तानां कारकाणां मिथोऽन्वयज्ञानाभावनियमात्। विधेययागक्रियाविशेषणत्वाभावे प्रवर्तनारूपविधिसम्बन्धस्य सोमे ज्ञातुमशक्यत्वेन सोमानुष्ठानापर्यवसायिनो यागसोमसम्बन्धमात्रतात्पर्यस्य व्यर्थत्वात् तथा च यागेनेष्टं कुर्यात् सोमेन यागं कुर्यात् इति विशिष्टभावनाद्वयरूपवाक्यार्थभेदात् वाक्यभेदः स्यात् धात्वाख्यातपदावृत्तिप्रसङ्गात्। विरुद्धत्रिकद्वयापत्त्यादिदोषप्रसंगाच्च। तस्मात् विशिष्टविधेः सोमादिविशिष्टरूपसोमादिपदामुख्यार्थविषयकत्वेऽपि नामुख्यार्थकत्वं "यत्परः शब्दः स शब्दार्थः" इति न्यायेन अमुख्यार्थपरस्यैव अमुख्यार्थत्वादिति भावः। विस्तरस्तु लघुचन्द्रिकायां द्रष्टव्यः। जिज्ञासापदे तु इति। उक्तं च विवरणे "तत्र अथातो ब्रह्मजिज्ञासेति सूत्रे अनुवादपरि-

हाराय शास्त्रे पुरुषप्रवृत्तिसिद्धये च कर्तव्येति पदमध्याहर्तव्यम्"। विवृतञ्च तत्त्वदीपने—निरर्थकसिद्धबोधिवाक्यमनुवादशब्दार्थः। तथा च सूत्रमिदं विधिरूपं संवृत्तम्। कर्तव्यपदाध्याहारेऽपि प्रकृतिप्रत्ययार्थयोर्ज्ञनिच्छयोः कर्तव्यत्वासम्भवात् जिज्ञासापदेन अन्तर्णीतं विचारमुपलक्ष्य अनुष्ठानयोग्यतया साधनचतुष्टयसम्पन्नस्य ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रवाक्यस्य श्रौतोऽर्थः सम्पद्यते। [विवरणम्, पृ०-२२] जिज्ञासापदे तु ज्ञाधातुना इष्यमाणज्ञानलक्षणाङ्गीकारानङ्गीकारमतभेदेऽपीति। उक्तं च भावप्रकाशिकायां नृसिंहाश्रमश्रीचरणैः—इच्छापदेन विचारो जहल्लक्षणया ऽउपस्थाप्यते ज्ञानपदमपि सिद्धावस्थज्ञानवाचकं विचारान्वययोग्यं साध्यावस्थं ज्ञानं लक्षयति। उक्तं च चन्द्रिकायां इष्यमाणत्वेन रूपेण पदादनुपस्थितस्य ज्ञानस्य साधनाकांक्षाविरहेण विचाररूपे साधने अन्वयासम्भवात् इष्यमाणज्ञानत्वेन ज्ञाधातुना ज्ञानं लक्ष्यते इति केचित् [नृसिंहाश्रमादयः] तेन रूपेण ज्ञानस्य अनुपस्थितावपि साधनान्वये बाधकाभावः; अन्यथा विचारस्यापि साधनत्वेनानुपस्थितस्य साध्यानाकांक्षत्वापत्त्या साधनविचारत्वेन विचारस्य सन्प्रत्ययलक्षणापत्तेरित्यन्ये। जिज्ञासापदबोध्यस्य ज्ञानसाधनविचारस्य अध्याहृतकर्तव्येतिपदलभ्यभावनायां करणत्वेन अथशब्दलभ्यमुमुक्षाविषयमोक्षस्य कर्मत्वेन अथशब्दलभ्यशमदमादीनाम् इतिकर्तव्यतात्वेन अन्वयादंशत्रयान्वितभावनाया विध्यन्वय इति भावः। श्रौतविधिवाक्यस्य वाक्यान्तरशेषत्वाभावात् मुख्यार्थत्वमेव लक्षणायां सत्यामपि। विधितात्पर्यनिर्वाहायैव लक्षणा मुख्यतात्पर्यानुरोधेन लक्षणायां स्वीकृतायामपि न अमुख्यार्थत्वमिति भावः। नहि वाक्यार्थप्रतीत्यन्यथानुपपत्त्या इति श्रौतविधिवाक्यार्थप्रतीत्यन्यथानुपपत्त्या ज्ञाधातुपदस्य सन्पदस्य च लक्षणायामपि विधिवाक्यार्थस्य न अमुख्यार्थत्वं प्रतीतस्य विधिवाक्यार्थस्य अनन्यशेषत्वेन मुख्यत्वात्। यत्र पुनः प्रतीत एव वाक्यार्थ इति अर्थवादवाक्यात् प्रतीत एव वाक्यार्थः विधिशेषत्वेन कल्प्यते तत्र तादृशार्थबोधकत्वेन अर्थवादस्य अमुख्यार्थत्वमेव। ननु नार्थवादस्य अमुख्यार्थता सम्भवति। अमुख्यार्थता हि स्वप्रतिपाद्यवाक्यार्थभिन्नतात्पर्यकत्वम् अर्थवादानां च प्राशस्त्यादिधीद्वारा वाक्यार्थात् स्वप्रतिपाद्यात् भिन्ने प्राशस्त्यादौ न तात्पर्यम् अर्थवादानां पदविषयप्राशस्त्योपस्थापकत्वात्। पदस्य स्वार्थे तात्पर्याभावात् प्राशस्त्यादिघटिते तु

वाक्यार्थे स्वार्थवादविधेरेव तात्पर्यं न अर्थवादानाम् । यदि तु अर्थवादानां प्राशस्त्यादौ तात्पर्यं स्वीक्रियते तदा स्वतात्पर्यविषयप्राशस्त्यावोधकत्वेन मुख्यार्थत्वं स्यात् अर्थवादस्यापि वाक्यत्वेन तदर्थप्राशस्त्यादेरपि वाक्यार्थत्वात् तत्राह आचार्यः—

**अन्यद्धि पदतात्पर्यम् अन्यच्च वाक्यतात्पर्यं कथं तदित्याह—सैन्धवमानय गंगायां वसन्तीत्यादौ वाक्यतात्पर्यैक्येऽपि पदतात्पर्यभेदात् ।**

सैन्धवपदस्य लवणतुरगरूपपदार्थभेदेऽपि वाच्यतात्पर्यं ऐक्यम्, एवं गंगापदस्य प्रवाहतीररूपपदार्थभेदेऽपि वाक्यतात्पर्यैक्यम् । एकस्यैव सैन्धवपदस्य अर्थद्वये तात्पर्येऽपि तद्घटितवाक्यतात्पर्यस्यैक्यम् । एवमेव गंगायां वसन्तीत्यत्रापि पदवाक्यतात्पर्ययोर्भेदो द्रष्टव्यः । विषं भुङ्क्ष्व इत्यादौ पदतात्पर्याभेदेऽपि वाक्यतात्पर्यभेदात् । विषं भुङ्क्ष्व इति वाक्यस्य विषभोजनमिष्टसाधनमित्यत्र एकं तात्पर्यं, शत्रोरन्नभोजने प्रसक्ते आप्तेनोक्तस्य विषमितिवाक्यस्य यदि शत्रोरन्नं भुज्यते तदा विषं भुङ्क्ष्व इति वाक्यार्थधीद्वारा शत्रोरन्नभोजनमनिष्टसाधनमित्यत्र अपरं तात्पर्यम् । तथा च वाक्यस्य लवणतुरगपदार्थद्वयसाधारणप्रमाजननोपयोगितात्पर्यकत्वेऽपि लवणमात्रपरत्वेन सैन्धवपदज्ञानात् लवणस्यैव प्रमोत्पत्तेः पदतात्पर्यमावश्यकमितिभावः । **अत एव इयं गौः क्रय्या बहुक्षीरेति ।** अत एव—अन्यशेषत्वस्य अमुख्यार्थत्वे प्रयोजकत्वादेव । क्रय्या—क्रयार्हा । अवश्यं क्रेतव्येति विधिशेषत्वेन तत्प्राशस्त्यलक्षकत्वादमुख्यार्थत्वमेवेति । **सोऽरोदीदित्यादिवाक्यार्थस्येति ।** सोऽरोदीद् यदरोदीत् तद्रुद्रस्य रुद्रत्वमित्याद्यर्थवादस्य बर्हिषि रजतं न देयमितिनिषेधस्य हिरण्यं दक्षिणेति विधेश्च शेषत्वादुभयोपकारकत्वम् । अस्यार्थवादस्य निषेधशेषत्वेन रजतस्याप्राशस्त्यलक्षकत्वमावश्यकम् । यदश्रु अशीर्यत तद् रजतमभवत् पुरास्य संवत्सराद्गृहे रोदनं भवति तस्मात् बर्हिषि रजतं न देयम् इत्यत्र बर्हिःशब्दिते यागे रजतदानं निषिध्यते । "यथाश्रद्धं दक्षिणां ददाति" इति विहिते दक्षिणादाने रजतस्य स्वेच्छाप्राप्तत्वेन शास्त्रप्राप्तत्वाभावान्न विकल्पः । हिरण्यं दक्षिणा इति विधेः शेषोऽपि तादृशमर्थवादवाक्यं परन्तु पुरास्येत्यादिस्थाने "तस्माद् रजतमदक्षिण्यमश्रुजं हि तदि"त्यादिकम् । तत्र "नहि निन्दे"ति न्यायेन रजतनिन्दाद्वारा हिरण्यस्तुतिपरमिति भावः । विधिशेषत्वेन स्तुतिनिन्दाद्वारा तत्प्राशस्त्यलक्षकत्वेन अमुख्यार्थमेवेति भावः । "सर्वं खल्विदं ब्रह्म तज्ज-

अत एव मानान्तरविरोध एव लक्षणेत्यपास्तम्। "इयं गौः क्रय्या बहुक्षीरे"त्यादिना प्राशस्त्यलक्षणाया व्यभिचारात्। किन्तु परमतात्पर्यविषयीभूतार्थप्रतीतिनिर्वाहायैव सर्वार्थवादेषु लक्षणा, एतावांस्तु विशेषः विधिप्राशस्त्ये लक्षणातः प्रागर्थवादवाक्यार्थज्ञानम्। तस्य प्रमाणान्तरविरोधे बाध एव; यथा "प्रजापतिरात्मनो वपामुदखीदत्" इत्यादौ। अत एव तत्र गुणवादमात्रं, प्रमाणान्तरप्राप्तौ त्वनुवादमात्रं "अग्निर्हिमस्य भेषजमि"त्यादौ अत एव तदुभयत्राबाधिताज्ञातज्ञापकत्वरूपप्रामाण्यनिर्वाहादप्रामाण्यम्। यत्र पुनः प्रमाणन्तरप्राप्तिविरोधौ न स्तस्तत्र प्रामाण्यशरीरनिर्वाहात् भूतार्थवादत्वम्। यथा "इन्द्रो वृत्राय वज्रमुदयच्छदि"त्यादौ। अयमेव देवताधिकरणन्यायः ॥७॥

---

लानिति वाक्यार्थस्य शान्त उपासीतेत्यादि"—सर्वं ब्रह्म यतः तज्जलान्। जायते इति जः लीयते इति लः अनितीत्यन्। तस्य—ब्रह्मणो जलान्—तज्जलान्। उपादानत्वाधिकरणत्वकरणत्वानि सम्बन्धत्वरूपेण षष्ठ्या प्रतिपाद्यन्ते। शान्त उपासीत इति शान्तः सन् मनोमयत्वादिरूपेण ब्रह्मोपासीत इत्यर्थः। अत्यनायाससिद्धत्वेन इति आयासो दुःखं स्वल्पमपि यथा तथा सिद्धत्वरूपप्राशस्त्यलक्षकत्वादमुख्यत्वमेव। उक्तप्राशस्त्यज्ञानस्य विध्यपेक्षितत्वेन अर्थवादाधिकरणतल्लक्षणेति भावः ॥६॥

७—अत एव मानान्तरविरोधे एव लक्षणेत्यपास्तम्। इयं गौः क्रय्या बहुक्षीरा इत्यादिना प्राशस्त्यलक्षणाया व्यभिचारात्। किन्तु परमतात्पर्यविषयीभूतार्थप्रतीतिनिर्वाहायैव सर्वार्थवादेषु लक्षणा। एतावांस्तु विशेषः विधिप्राशस्त्ये लक्षणातः प्राक् अर्थवादवाक्यार्थज्ञानं तस्य प्रमाणान्तरविरोधे बाध एव यथा प्रजापतिरात्मनो वपामुदखीददित्यादौ, अत एव तत्र गुणवादमात्रम्। प्रमाणान्तरप्राप्तौ त्वनुवादमात्रं अग्निर्हिमस्य भेषजमित्यादौ, अत एव तदुभयत्र अबाधिताज्ञातज्ञापकत्वरूपप्रामाण्याऽनिर्वाहादप्रामाण्यम्। यत्र पुनः प्रमाणान्तरप्राप्तिविरोधौ नस्तः तत्र प्रामाण्यशरीरनिर्वाहात् भूतार्थवादत्वं यथा इन्द्रो वृत्राय वज्रमुदयच्छदित्यादौ। अयमेव देवताधिकरणन्यायः। अनन्य-

शेषत्वान्यशेषत्वयोर्मुख्यार्थत्वामुख्यार्थत्वयोः प्रयोजकं व्यवस्थाप्य परोक्तमानान्तर-विरोधाविरोधयोस्तद्दूषयति अत एवेति । मुख्यामुख्यार्थत्वयोरुक्तप्रयोजकस्यैव प्रामाणिकत्वादेव मानान्तरविरोधे एव लक्षणा इति पूर्वपक्षिमतमपास्तम् । बहुक्षीरा इत्याद्यर्थवादस्य प्राशस्त्यलक्षणायान्तु मानान्तरविरोधाभावात् मानान्तरविरोधाभावेऽपि लक्षणायाः सत्त्वात् प्रदर्शितनियमस्य व्यभिचार इत्यर्थः । मानान्तरविरोधमनपेक्ष्यैव सवार्थवादेषु यत् लक्षणा प्रवर्तते तत् कस्य हेतोरित्यत आह—परमतात्पर्येति । उपक्रमादिभिः निर्णीतपरमतात्पर्यविषये प्रतीतेः निर्वाहाय एव । ननु प्रस्तरादिवाक्येभ्यः सोऽरोदीदित्यादिवाक्यानां को विशेषः येन पूर्वेषामेव तत्सिद्धिपेटिकायां गौणार्थत्वमुक्तं नोत्तरेषां तत्राह एतावांस्तु विशेष इति ।

विरोधे गुणवादः स्याद् अनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ इति

सुरेश्वरवार्तिकमनुसृत्य अर्थवादानां विभागं दर्शयति—प्रजापतिरात्मनो वपामित्यादौ मानान्तरविरोधे गुणवादः । मानान्तरप्राप्तार्थकथने अग्निर्हिमस्य भेषजमित्यादौ अनुवादमात्रम् । अन्यतिरेकश्चार्थेऽनुपलब्धे बादरायणस्यानपेक्षत्वादिति जैमिनेरनुशासनमनुसृत्य प्रमाणशरीरेऽबाधिताज्ञातज्ञापकत्वप्रवेशात् गुणवादेऽनुवादे च अबाधितत्वाज्ञातज्ञापकत्वयोरभावात् अप्रामाण्यमेव । अप्रमाणार्थवादात् प्रमाणार्थवादं भिनत्ति "यत्र पुनरिति" । यस्मिन्नर्थवादे प्रमाणान्तर-प्राप्तिविरोधौ न स्तः तत्र प्रामाण्यशरीरनिर्वाहात् भूतार्थवादत्वम् । इदमेव जैमिन्यनुशासनमनुसृत्य वेदान्तपरिभाषाकृता अनधिगताबाधितार्थविषयज्ञानत्वं प्रमात्वमुक्तं तज्जैमिन्यनुमतमपि न वेदान्तशास्त्रसम्मतमित्युक्तं प्राक् । यदपि स्मृतिसाधारणं प्रमात्वमुक्तं तत्रैव तदपि मिथ्या न्यायाचार्यादिभिः स्मृतेर्यथार्थत्वानङ्गीकारात् । उक्तं च तात्पर्यपरिशुद्धौ उदयनेन "स्मृतेः यथार्थत्वमपि कुतः" [ तात्पर्यपरिशुद्धिः, पृ० १६१ ] विवृतञ्चैतत् प्रकाशकृता वर्द्धमानोपाध्यायेन । अद्वैतमते स्मृतेरविद्यावृत्तिरूपत्वात् प्रमात्वशंकैव नास्ति । यथार्थकार्थवादोदाहरणमाह-"इन्द्रो वृत्राय वज्रमुदयच्छत्" [ इत्यादौ ], "अयमेव देवताधिकरणन्यायः" —देवताविग्रहादिपञ्चकप्रतिपादकस्य वेदभागस्यापि भूतार्थवादत्वेन ततो देवताविग्रहादिसिद्धिः । सूत्रितञ्च शारीरकमीमांसायां "तदुपर्यपि बादरायणः

ननु तर्हि आदित्यो यूप इत्यादौ वाक्यार्थप्रतीत्यर्थमेव लक्षणाङ्गीकारादमुख्यार्थत्वं न स्यात् यदि आदित्यसदृशो यूप इति वाक्यार्थपर्यवसानं स्यात्। किन्तु गुणवृत्त्या प्रतीतस्यापि वाक्यार्थस्य यूपे पशुं बध्नातीति विधिशेषत्वेन तत्प्राशस्त्यलक्षकत्वमस्त्येव तेनैवामुख्यत्वं न त्वादित्यपदगौणतया इति तत्सिद्धिपेटिकायां सर्वोदाहरणेषु अवान्तरवाक्यार्थप्रतीतये गुणवृत्तिप्रकाराः प्रदर्शिता इति द्रष्टव्यम्। कर्मप्राशस्त्यलक्षणा च सर्वार्थवादसाधारणी तत्रास्त्येव इति न अमुख्यार्थ-

---

सम्भवादि"त्युपक्रम्य "भावन्तु बादरायणोऽस्ति ही"ति प्रथमाध्यायतृतीयपादे अष्टमाधिकरणे—तत्रत्य भामत्यां—"न च यस्य यत्र न तात्पर्यं तस्य तत्राप्याप्रामाण्यं" शब्दप्रामाण्यं तात्पर्यव्याप्यं न भवतीति न भावः। विवृतञ्च परिमले—न च तात्पर्याभावमात्रेण शब्दसामर्थ्याज्जायमानं ज्ञानं तस्य ज्ञानस्यौत्सर्गिकं प्रामाण्यं बाधकाभावेन अनपोदितुं निवारयितुं शक्यम्। भूतार्थवादस्यैव देवताधिकरणन्यायविषयत्वमित्युक्तमयमेव देवताधिकरणन्यायः। प्रमाणानामौत्सर्गिकप्रामाण्यकत्वात् तात्पर्याविषयस्यापि तस्य सिद्धिरिति भामतीमते। विवरणमते तु परमतात्पर्याविषयस्यापि अवान्तरतात्पर्यविषयस्य तस्य सिद्धिः। भामतीमते तात्पर्याविषयस्याऽपि प्राप्तिबाधयोरभावे प्रतीतार्थस्य सिद्धिः प्रमाणानां प्रामाण्यस्यौत्सर्गिकत्वात्। विवरणमते तु परमतात्पर्याविषयस्यापि प्रतीतार्थस्य प्राप्तिबाधयोरभावेऽवान्तरतात्पर्यविषयत्वात् सिद्धिरिति विवेकः। अत एव दुःखासंभिन्नसुखादिरूपे स्वर्गस्वरूपे 'यन्न दुःखेन सम्भिन्नमि'त्यादिवाक्यस्य प्रामाण्यं पूर्वमीमांसकसम्मतम्। इदञ्च उत्तरमीमांसकसम्मतमपि उत्तरमीमांसास्थदेवताधिकरणन्यायात् ॥७॥

८—ननु तर्हि आदित्यो यूप इत्यादौ वाक्यार्थप्रतीत्यर्थमेव लक्षणाङ्गीकारादमुख्यार्थत्वं न स्यात्, न स्यात् यदि आदित्यसदृशो यूप इतिवाक्यार्थपर्यवसानं स्यात्, किन्तु गुणवृत्त्या प्रतीतस्यापि वाक्यार्थस्य यूपे पशुं बध्नातीति विधिशेषत्वेन तत्प्राशस्त्यलक्षकत्वमस्त्येव तेनैवामुख्यत्वं न त्वादित्यपदगौणतया इति तत्सिद्धिपेटिकायां सर्वोदाहरणेषु अवान्तरवाक्यार्थप्रतीतये गुणवृत्तिप्रकाराः प्रदर्शिता

त्वानुपपत्तिः। अत उपपन्नं प्रस्तरादिवाक्यवैषम्यम् अद्वैतवाक्यस्य ॥८॥

यच्चोक्तमर्थवादमुख्यार्थत्वाय विधौ न लक्षणेति एवंपरं शबरस्वामिवचनमिति, तन्न, अश्वप्रतिग्रहेष्टौ "प्रतिगृह्णीयादि"ति विधौ

---

इति द्रष्टव्यम्। कर्मप्राशस्त्यलक्षणा च सर्वार्थवादसाधारणी तत्रास्त्येव इति न अमुख्यार्थत्वानुपपत्तिः। अत उपपन्नं प्रस्तरादिवैषम्यम् अद्वैतवाक्यस्य। वाक्यार्थप्रतीतये लक्षणाङ्गीकारे यदि अमुख्यार्थत्वं न स्यात् तर्हि आदित्यो यूप इत्याद्यर्थवादवाक्यस्यापि अमुख्यार्थत्वं न स्यात् अर्थवादानां लक्षणाङ्गीकारादेव अमुख्यार्थत्वमिति पूर्वपक्षिणोऽभिमानः। समाधत्ते—न स्यात् यदि इति लक्षणया यो वाक्यार्थः सिद्ध्यति तत्रैव यदि वाक्यार्थस्य पर्यवसानं स्यात् तत्रैव यदि वाक्यार्थविश्रान्तिः स्यात् तर्हि आदित्यो यूप इत्यर्थवाद वाक्यस्य मुख्यार्थत्वं स्यात्। तत्तु न सम्भवति। विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरिति जैमिन्यनुशासनेन अर्थवादानां विधिस्तुतिद्वारेण विध्येकवाक्यत्वसमर्थनात् अर्थवादानां स्वार्थप्रतिपादनमात्रेण पर्यवसानं न सम्भवति। अर्थवादवाक्यस्य स्वार्थप्रतीत्यनन्तरं विधिप्राशस्त्यलक्षणया विध्येकवाक्यत्वादिति भावः।

यच्च पूर्वपक्षिणा अद्वैतवाक्यस्य प्रशस्ताद्यर्थवादवाक्यसाम्यमुक्तं तत् वैषम्यप्रदर्शनेन समाधत्ते—अत उपपन्नं प्रस्तरादिवाक्यवैषम्यम् अद्वैतवाक्यस्य। अन्यशेषत्वानन्यशेषत्वाभ्यां द्वयोर्महत्वैलक्षण्यम्। अत एव शबरस्वामिना—विध्येकवाक्यतया अर्थवादानां प्रामाण्यं व्यवस्थापयता वायुर्वै क्षेपिष्ठा. इत्यादयो विधिशेषा एवार्थवादा प्रदर्शिताः न लेशतोऽपि अद्वैतप्रतिपादकानि वाक्यानि स्पृष्टाणि वाक्यानां मर्यादाभिज्ञो हि भगवान् शबरस्वामी। अत एव भगवत्पादाः शबरस्वामिनम् शास्त्रतात्पर्यविच्छब्देन निर्दिशन्ति स्म—तथाहि शास्त्रतात्पर्यविद आहुरिति—[ ब्र० सू० १।१।४—पृ० १११] अद्वैतवाक्यार्थवादवाक्ययोः सुमहद्वैलक्षण्यमबुद्ध्वैव पूर्वपक्षिणा प्रलपितमिति ॥८॥

९—पूर्वपक्ष्युक्तं समाधानमनूद्य दूषयति—यच्चोक्तमर्थवादमुख्यार्थत्वाय विधौ न लक्षणेति एवंपरं शबरस्वामिवचनमिति तन्न अश्व-

प्रतिग्राहयेदिति व्यवधारणकल्पनया अर्थवादानुसारेण प्रयोजकव्यापार-लक्षणाया अङ्गीकरणात् तस्मात् विधौ तात्पर्यवति वाक्ये प्रतीयमान-वाक्यातिरिक्तः अन्यः शेषी नास्ति इत्येवंपरमेव तद्वचनम्। अतः सिद्धमद्वैतागमस्य लाक्षणिकत्वेऽपि मुख्यार्थत्वात् प्रत्यक्षबाधकत्वमिति शिवम् ॥९॥

इति प्रत्यक्षस्यागमबाध्यत्वम्।

---

प्रतिग्रहेष्टौ प्रतिगृह्णीयादिति विधौ प्रतिग्राहयेदिति व्यवधारणकल्पनया अर्थवादानुसारेण प्रयोजकव्यापारलक्षणाया अङ्गीकारात् तस्माद् विधौ तात्पर्यवति वाक्ये प्रतीयमानवाक्यार्थातिरिक्तः अन्यः शेषी नास्ति इत्येवंपरं तद्वचनम्। अतः सिद्धमद्वैतागमस्य लाक्षणिकत्वेऽपि मुख्यार्थत्वात् प्रत्यक्षबाधकत्वमिति शिवम्। पूर्वपक्ष्युक्तमसंगतमित्याह—उपक्रमस्यार्थवादानुसारेण—उपसंहारस्थविधिवाक्ये व्यवधारणकल्पनारूपाया लक्षणायाः पूर्वतन्त्रेऽङ्गीकारात्। प्रबलार्थवादानुसारेण अर्थवादविरुद्धार्थकविधौ लक्षणाया मीमांसकैरङ्गीकारात्। अर्थवादमुख्यार्थत्वाय विधौ लक्षणाया मीमांसकैरङ्गीकारात् विधौ न लक्षणेति पूर्वपक्ष्युक्तं हेयमिति भावः। पूर्वतन्त्रे तृतीयचतुर्थे चिन्तितम्—"प्रजापतिर्वरुणायाश्वमनयः स्वस्वं देवतामर्च्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वैप वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतो अश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्" इत्यनारभ्य श्रुता इष्टिरस्ति सा अश्वस्य दातुः प्रतिग्रहीतुर्वेति संशये यद्यप्युपक्रमाधिकरणन्यायेन दातुरेव युक्ता प्रजापतिर्वरुणाय अश्वं प्रापयत् स प्रजापतिः अश्वदाने सम्प्रदानरूपाम् देवताम् वरुणरूपां जलोदररूपेण परिणताम् आर्च्छत्—प्राप्तवान् प्रजापतिः। स पर्यदीर्यत—स प्रजापतिः जलोदरेण पर्यदीर्यत परिदीर्णोऽभूत्। स प्रजापतिः वारुणं चतुष्कपालमपश्यत्। तं वारुणं चतुष्कपालं निरवपत् ततो वै स प्रजापतिः वरुणपाशाद् अमुच्यत। वरुणपाशाद् जलोदरात् अमुच्यत मुक्तोऽभूत् प्रजापतिः। वरुणो वा एतं गृह्णाति यो अश्वं प्रतिगृह्णाति अत्र उपक्रमानुरोधेन अश्वदातुरिष्टिः प्रतीयते उपसंहारानुसारेण प्रतिग्रहीतुरिष्टिः प्रतीयते। एकस्मिन् वाक्ये उपसंहा-

रापेक्षया उपक्रमस्यैव प्राबल्यात् दातुरिष्टिः यद्यपि प्रतीयते तथापि अर्थवादापेक्षया उपसंहारस्थविधेः प्राबल्यं भवितुमर्हति। किञ्च मैत्रायणीयशाखायां प्रतिग्रहोपक्रमाया एव एतदिष्टेरुक्तत्वात् शाखान्तरानुरोधेन शाखान्तरीय उपक्रमवाक्ये आनयदित्यादिवाक्ये दातृवाचकपदस्य प्रतिग्रहे लक्षणेति प्रतिग्रहीतुरेव सा इष्टिरिति पूर्वपक्षे प्राप्ते दातुरेवेयमिष्टिरिति सिद्धान्तः शाखान्तरानुरोधेन शाखान्तरीयोपक्रमवाक्ये लक्षणायां मानाभावात् वैपरीत्यस्यापि संभवात्। तस्मात् उपसंहारस्थविधिरूपेऽपि प्रतिगृह्णातौ प्रतिग्रहप्रयोजके दाने लक्षणेति। अर्थवादस्थत्वेऽपि उपक्रमस्थत्वेन आनयदित्यादिपदस्य प्राबल्यात्। उक्तं च—

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः॥

अप्पयदीक्षितविरचिते उपक्रमपराक्रमे अस्य प्रपञ्चो द्रष्टव्यः। व्यवधारणकल्पनायाः स्वरूपमुक्तं भट्टवार्तिके—यत्र अन्यथा अर्थः प्रतिभातः पौर्वापर्यालोचनेन व्यवधार्य अन्यथा कल्प्यते सा व्यवधारणकल्पना। तद् यथा प्रतीगृह्णीयादिति श्रुतं प्रतिग्राहयेदिति कल्पयिष्यते। [ जै० सू० २।१।२२ ] पूर्वपक्षिसम्मतं शाबरवाक्यार्थं दूषयित्वा शाबरवाक्यस्य सिद्धान्तिसम्मतमर्थमाह—तस्माद्विधौ—तात्पर्यवति वाक्ये तात्पर्यवत्त्वेन अद्वैतवाक्यस्य विधितुल्यत्वात् अद्वैतवाक्यस्यार्थप्रदर्शने विधिवाक्यवृत्तप्रदर्शनं संगच्छते। प्रतीयमानवाक्यातिरिक्तोऽन्यः शेषो नास्ति इत्येवंपरमेव तद्वचनम्। अर्थवादवाक्यं तु विधिवाक्यशेषत्वादन्यशेषरूपमेव। अद्वैतवाक्यं तु अनन्यशेषत्वात् विधिवाक्यतुल्यमेव। शाबरवचनस्य मुख्यतात्पर्यविषयो वाक्यार्थो नान्यशेष इति पिण्डितोऽर्थः। "न विधौ परः शब्दार्थः" इति भामतीवाक्यस्य विधौ—विधायके शब्दे परः—लक्ष्यः शब्दार्थो न भवतीति कल्पतरुव्याख्या न युक्ता इति चेन्न भावानवबोधात्। उपचरितार्थत्वं हि तात्पर्यविषयब्रह्मात्माभेदादन्यार्थबोधकत्वम्। तच्च कर्मविध्यपेक्षितकर्तृस्तुतिबोधकतया। उक्ताभेदोपासनाविधायकतया वा तत्र उक्ताभेदसिद्ध्यननुकूलो लक्ष्योऽर्थः महावाक्येन सम्भवति महावाक्यस्य उक्ताभेदपरत्वात् इत्याशयेन लक्ष्यो नार्थ इत्यनेन तात्पर्यसिद्ध्यननुकूलो नार्थ इत्युक्तम्।

विधायकवाक्ये अन्यशेषो नार्थ इत्युक्तौ तु उपासनापरत्वखण्डनं न स्यात् । अतः तथा नोक्तं लक्ष्यमात्रनिषेधे तु प्रतिगृह्णातौ दाने उच्चैर्ऋचा क्रियते इत्यादौ ऋगादिपदे ऋग्वेदादौ च लक्षणायाः स्वीकारेणासंगतिः अतस्तदपि नोक्तम् । अतः सिद्धम् अद्वैतागमस्य लाक्षणिकत्वेऽपि मुख्यार्थत्वात्—अनन्यशेषत्वात् प्रत्यक्षबाधकत्वमिति शिवम् ॥९॥

इति प्रत्यक्षस्य आगमबाध्यत्वम् ।

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथ देवशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां प्रत्यक्षस्य आगमबाध्यत्वविवरणं समाप्तम् ॥

## अथ अपच्छेदन्यायवैषम्यभङ्गः

किं चापच्छेदन्यायेनाप्यागमस्य प्राबल्यम्। यथा हि—पौर्वापर्ये पूर्व-

---

१—किं च अपच्छेदन्यायेनाप्यागमस्य प्राबल्यम्। पूर्वस्य प्रत्यक्षस्य परेणागमेनापच्छेदन्यायेन बाध इत्युक्तं ब्रह्मसिद्धौ मण्डनमिश्रेण [ ब्र० सि० पृ० ४० ]। मण्डनोक्तमनुस्मृत्य वाचस्पतिमिश्रेणापि भामत्यामपच्छेदन्यायेनागमस्य प्रत्यक्षबाधकत्वमुक्तम् [ भामती पृ० १०ं ]। तथा च पारमर्षं सूत्रं पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् [ जै० सू० ६।५।५४ ] तथा—

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्।<br>
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥

विवृतञ्चैतत् परिमले—ननु प्रत्यक्षज्ञानप्रामाण्यं ज्ञानसमानवित्तिवेद्यतया ज्ञाने प्रकाशमाने विशिष्य नियमेन प्रतीतं नाद्वैतश्रुत्या बाधनमर्हतीत्याशंक्य विशिष्य नियमेन प्रतीतस्यापि पूर्वस्य परेण बाधे भामत्यामपच्छेदन्यायोदाहरणं कृतं तत्र पूर्वस्य परोपजीव्यत्वं नास्तीति वैषम्याशंकानिराकरणपूर्वकं तदवतारयति कल्पतरौ—एवं तावदिति। एवं तावदुपजीव्यत्वं प्रत्यक्षस्य निराकृत्य इति। किमद्वैतश्रुतेः प्रत्यक्षं प्रमाणं सदुपजीव्यमिति प्रत्यक्षप्रामाण्यस्य प्राबल्यमुच्यते उत अनुपजीव्यत्वेऽपि प्रथमप्रतीतत्वमात्रेण, आद्यपक्षो न शंकार्ह इत्याह कल्पतरौ उपजीव्यत्वं प्रत्यक्षस्य निराकृत्येति। द्वितीयपक्षनिराकरणार्थम् उत्तरग्रन्थ इत्याह कल्पतरौ मुख्यत्वमात्रस्य प्राबल्यहेतुतां निराकरोति। ज्येष्ठत्वञ्चेति भामत्यां—ज्येष्ठत्वञ्च अनपेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात्। प्रत्यक्षागमयोर्विरोधेऽपच्छेदन्यायेन प्रत्यक्षस्य दौर्बल्यं प्राबल्यमागमस्यैवेति सिद्धान्तिमतमसहमानः पूर्वपक्षी अपच्छेदन्यायवैषम्यं प्रकृते शंकते—न हि अस्माभिः पूर्वत्वमात्रेण प्रत्यक्षस्य बाधकतोक्ता किंतु उपजीव्यत्वेनेति। न हि अपच्छेदे पूर्वमुपजीव्यम्। प्रत्यक्षस्यागमपोजीव्यत्वम् उपजीव्यत्वेन प्रत्यक्षप्राबल्यनिराकरणप्रकरणे बहुधाकृतमपि भामत्यादावपि निबन्धे प्रत्यक्षस्यागमोपजीव्यत्वं निरस्तमपि श्रुतमपि अश्रुतवत् कृत्वा पूर्वपक्षी

दौर्बल्यं प्रकृतिवत् इत्यधिकरणे [ जै० सू० ६।५।५४ ] उद्गात्रपच्छेद-निमित्तकादक्षिणयागेन परेण प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिण यागस्य पूर्वसिद्धनिमित्तकस्य बाध इति स्थितं, तथा इहापि उदीच्यागमेन पूर्वस्य प्रत्यक्षस्य बाधः ॥१॥

---

प्रत्यक्षस्य उपजीव्यत्वमादायैव अपच्छेदन्यायवैषम्यं शंकते। अपच्छेदन्याये वैषम्यशंकां समाधास्यन् प्रथमतः अपच्छेदन्यायं सूत्रोपन्यासपूर्वकं दर्शयति आचार्यः—यथा हि पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् इत्यधिकरणे [ जै० सु० ६।५।५४ ] उद्गात्रपच्छेदनिमित्तकादक्षिणयागेन परेण प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणयागस्य पूर्वसिद्धनिमित्तकस्य बाध इति स्थितं तथेहापि उदीच्यागमेन पूर्वस्य प्रत्यक्षस्य बाधः। पारमर्षसूत्रस्यायमर्थः—पौर्वापर्ये सति निमित्तयोः पूर्वस्य नैमित्तिकस्य दौर्बल्यम् उत्तरस्य निरपेक्षस्य तद्बाधकतया उदीतत्वात् पूर्वोदयकाले उत्तरस्याप्राप्तत्वेन पूर्वेण बाध्यत्वायोगात्। उक्तं हि—

पूर्वं परमजातत्वाद् अबाधित्वैव जायते।
परस्यानन्यथोत्पादान्न त्वबाधेन सम्भवः॥

प्रकृतिवदिति। यथा हि प्रकृतौ क्लृप्तोपकारकाः कुशा प्रथममतिदेशेन विकृतौ उपकाराकांक्षिण्यां प्राप्ताः कल्प्योपकारतया चरमभाविभिरपि शरैर्निरपेक्षैर्बाध्यन्ते तद्वदिदमिति कल्पतरौ। ज्योतिष्टोमे बहिष्पवमानार्थमन्योन्यं संबध्य यज्ञशालातो बहिर्विनिर्गच्छतां ऋत्विजां गमनं श्रूयते—अध्वर्युं विनिष्क्रामन्तं प्रस्तोता सन्तमीयात् तं प्रतिहर्त्ता तमुद्गाता त्वं ब्रह्मा तं यजमान इत्यध्वर्यादि-कच्छं धृत्वा प्रस्तोत्रादीनां गमनमुक्तं सन्तमीयात्—कच्छं धृत्वा अनुगच्छेत्। तत्र विच्छेदे प्रायश्चित्तं श्रूयते यदि प्रस्तोता अपच्छिन्द्यात् ब्रह्मणि वरं दद्यात् यदि प्रतिहर्ता सर्ववेदसं दद्यात् यद्युद्गाता अदक्षिणं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तत् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यादिति सर्ववेदसं सर्वस्वम् दद्यादिति दक्षिणारूपेणेति शेषः। तत्र क्रमेण प्रतिहर्त्रुद्गात्रोरपच्छेदे किं पूर्वनिमित्तकं सर्वस्वदक्षिणारूपं प्रायश्चित्तं कार्यमुत उत्तरनिमित्तको अदक्षिणको यागः कार्य इति संशये पूर्वस्य असंजातविरोधित्वेन प्रबलत्वात् प्रतिहर्त्रपच्छेदनिमित्तकं

ननु प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणयागस्य प्रतिहर्तृमात्रापच्छेदे युगपदपच्छेदे, क्रमेणापच्छेदेऽपि प्रतिहर्त्रपच्छेदस्य पाश्चात्ये चावकाश इति युक्तः उद्गात्रपच्छेदनिमित्तकादक्षिणयागेन बाध. अन्यथा "यदि प्रतिहर्ता अपच्छिद्यते सर्ववेदसं दद्यात्" इति शास्त्रमप्रमाणं स्यात्। अत एव "विप्रतिषेधात् विकल्पः स्यात्" इत्यधिकरणे द्वयोर्युगपदपच्छेदे विकल्प उक्तः।

---

सर्वस्वदक्षिणारूपं प्रायश्चित्तं कार्यमिति पूर्वपक्षे नानुपमृद्य पूर्वं तद्विरोध्युत्तरम् उत्पत्तुमर्हति इति न्यायेन पूर्वोपमर्देन परप्रावल्यस्यैव न्याय्यत्वात् उद्गात्रपच्छेदनिमित्तकः अदक्षिणको याग एव कार्य इति परेण पूर्वस्य बाध इति सिद्धान्तः तद्वत्प्रकृतेऽपि उत्तरभाविना अद्वैतागमेन पूर्वस्य द्वैतसत्यत्वग्राहिप्रत्यक्षस्य बाधः इत्यद्वैतवादिनां सिद्धान्तः ॥१॥

२—अत्र पूर्वपक्षी एतन्न्यायवैषम्यं दर्शयिष्यन् प्रथमतः सावकाशत्वनिरवकाशत्वरूपं वैषम्यं दर्शयति—ननु प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणयागस्य प्रतिहर्तृमात्रापच्छेदे, युगपदपच्छेदक्रमेणापच्छेदेऽपि प्रतिहर्त्रपच्छेदस्य पाश्चात्यै: च अवकाश इति युक्तः उद्गात्रपच्छेदनिमित्तकादक्षिणयागेन बाधः अन्यथा यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यात् इति शास्त्रमप्रमाणं स्यात्। अत एव विप्रतिषेधात् विकल्प स्याद् इत्यधिकरणे द्वयोर्युगपदपच्छेदे विकल्पः उक्तः। परभाव्युद्गात्रपच्छेदनिमित्तकादक्षिणयागेन पूर्वभाविप्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणयागस्य सावकाशस्यैव बाधः न निरवकाशस्य। निरवकाशस्य बाधे तद्बोधकशास्त्रस्य अत्यन्तमप्रामाण्यं स्यात्। सर्वस्वदक्षिणयागस्य सावकाशत्वमेव दर्शयति—प्रतिहर्तृमात्रापच्छेदे—यदि प्रतिहर्ता अपच्छिद्येत तदा सर्ववेदसं दद्यात् इति शास्त्रस्य प्रामाण्यसंभवात् प्रतिहर्त्रोद्गात्रोर्युगपदपच्छेदे एकस्मिन्नेव प्रयोगे विरुद्धप्रायश्चित्तद्वयमापतितमिति अतो विकल्पः। विकल्पेनानुष्ठानेऽपि प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणकयागकर्तव्यताबोधकशास्त्रस्य पाक्षिकप्रामाण्यसंभवात् न अत्यन्ताप्रामाण्यमिति भावः। क्रमेणापच्छेदेऽपि उद्गात्रपच्छेदात् पाश्चात्ये प्रतिहर्त्रपच्छेदे तन्निमित्तकसर्वस्वदक्षिणयागकर्तव्यताबोधकशास्त्रस्य प्रामाण्यसंभवात् त्रिषु स्थानेषु अस्य सावकाशत्वं कुत्रचित् बाधेऽपि अन्यसावकाशस्य न अत्यन्ताप्रामाण्यम्।

किं च "यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्यात् यथेतरस्मिन्" इत्यधिकरणे उदगात्रपच्छेदस्य प्रतिहर्त्रपेच्छदात् परत्वे उदगात्रपच्छेदनिमित्तं पूर्वं प्रयोगं दक्षिणाहीनं सम्पाद्य कर्तव्यज्योतिष्टोमस्य द्वितीये प्रयोगे "तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्" इति श्रुत्युक्ता या दक्षिणा सा पूर्वभाविप्रतिहर्त्रपच्छेदनिमित्तकपूर्वप्रयोगस्थसर्वस्वदित्सायाअबाधेन सर्वस्वरूपैव। न तु या ज्योतिष्टोमे नित्या-द्वादशशतरूपा। तस्मान्न प्रतिहर्त्रपच्छेदस्य सर्वथा बाधः किन्तु प्रयोगान्तरे निक्षेप इत्युक्तम्। उक्तं हि टुप्टीकायां—"तस्य प्रयोगान्तरे निक्षेप" इति।

---

विधिशास्त्रस्यानुष्ठापकत्वमेव प्रामाण्यं कुत्राप्यननुष्ठापकत्वे अत्यन्तमेव अप्रामाण्यं स्यात्। प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणयागस्य कर्तव्यताबोधकशास्त्रस्य प्रदर्शितस्थानत्रये अनुष्ठापकत्वसम्भवात् सावकाशत्वं सावकाशत्वादेव पाश्चात्ये उद्गात्रपच्छेदतन्निमित्तकादक्षिणयागकर्तव्यताबोधकशास्त्रेण बाध्यते। अन्यथा सावकाशत्वाभावेऽपि बाध्यत्वे यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यात इति शास्त्रं सर्वत्राननुष्ठापकत्वात अप्रमाणमिव स्यात्। क्वचिदवकाशम् अदत्त्वा शास्त्रस्य बाधितुमशक्यत्वादेव विप्रतिषेधात् विकल्पः स्यात् इत्यधिकरणे द्वयोर्युगपदपच्छेदे विकल्पः उक्तः। द्वयोः शास्त्रयोः समबलत्वात् बाध्यबाधकभावासम्भवात् विकल्पः विकल्पे पाक्षिकानुष्ठानादेव शास्त्रस्य सावकाशत्वम्। प्रकृते तु आगमेन निरवकाशप्रत्यक्षबाधासम्भवादिति पूर्वपक्षिणोऽभिमानः। किं च यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्यात् यथेतरस्मिन् इत्यधिकरणे उद्गात्रपच्छेदस्य प्रतिहर्त्रपच्छेदात् परत्वे उद्गात्रपच्छेदनिमित्तं पूर्वं प्रयोगं दक्षिणाहीनं सम्पाद्य कर्तव्यज्योतिष्टोमस्य द्वितीये प्रयोगे तद्दद्यात् यत् पूर्वस्मिन् दास्यन् स्यादिति श्रुत्युक्ता या दक्षिणा सा पूर्वभाविप्रतिहर्त्रपच्छेदनिमित्तकपूर्वप्रयोगस्थ सर्वस्वदित्सायाः अबाधेन सर्वस्वरूपैव न तु या ज्योतिष्टोमे नित्या द्वादशशतरूपा। तस्मान्न प्रतिहर्त्रपच्छेदस्य सर्वथा बाधः। किन्तु प्रयोगान्तरे निक्षेप इत्युक्तम्। उक्तं हि टुप्टीकायां तस्य प्रयोगान्तरे निक्षेप इति। परभाव्यद्यु-

अपि च क्रमिकनिमित्तद्वयेन क्रमेण अदक्षिणसर्वस्वदक्षिणयोः प्रयोगयोः सम्भवेन विरोध एव नास्ति; यथा बदरीफले क्रमिकनिमित्तवतोः श्यामरक्तरूपयोः। उक्तं हि अपच्छेदाधिकरणे नैमित्तिकशास्त्रस्य ह्ययमर्थः, "निमित्तोपजननाद् प्रागन्यथा कर्तव्योऽपि क्रतुर्निमित्ते सति एवं कर्तव्यः" इति तस्मादपच्छेदन्यायः सावकाशविषयः अद्वैतागमेन प्रत्यक्षबाधे तु न प्रत्यक्षप्रामाण्यस्यावकाशोऽस्ति इति चेत् ॥२॥

---

द्गात्रपच्छेदनिमित्तकादक्षिणयागेन पूर्वभाविप्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणयागस्य सावकाशस्य बाध उक्तः। सम्प्रति सर्वस्वदक्षिणयागस्य सावकाशस्यापि न बाधः किन्तु प्रयोगान्तरे निक्षेपस्तथा च आगमेन प्रत्यक्षबाधे नायं न्यायः सम्भवतीत्याह किं चेति। उद्गात्रपच्छेदस्य परत्वे उद्गात्रपच्छेदनिमित्तं पूर्वप्रयोगं दक्षिणाहीनं सम्पाद्य कर्तव्यज्योतिष्टोमस्य द्वितीये प्रयोगे प्रतिहर्त्रपच्छेदनिमित्तकसर्वस्वदित्सायाः अबाधेन सर्वस्वरूपैव दक्षिणा न तु ज्योतिष्टोमे या नित्या द्वादशशतं दक्षिणा। नैमित्तिकेन नित्यस्य बाधात्। तस्मात् प्रतिहर्त्रपच्छेदस्य न सर्वथा बाधः। किंतु पश्चाद्भाविप्रयोगान्तरे उत्कर्ष एव। अत एवोक्तं तस्य प्रयोगान्तरे निक्षेप इति। तथा च अपच्छेदस्थले बाध्यबाधकभावाभावात् तद्दृष्टान्तेन प्रत्यक्षस्य श्रुतिबाध्योक्तिरयुक्ता इति पूर्वपक्षिणोऽभिमानः। अन्यच्च अपच्छेदस्थले विरोधाभावात् बाध्यबाधकभावासंभवं दृष्टान्तेनोपपादयन् आह पूर्वपक्षी अपि च क्रमिकनिमित्तद्वयेन क्रमेण अदक्षिणसर्वस्वदक्षिणयोः प्रयोगयोः सम्भवेन विरोध एव नास्ति यथा बदरीफले क्रमिकनिमित्तवतोः श्यामरक्तरूपयोः। उक्तं हि अपच्छेदाधिकरणे नैमित्तिकशास्त्रस्य ह्ययमर्थः निमित्तजननात् प्रागन्यथा कर्तव्योऽपि क्रतुर्निमित्ते सति एवं कर्तव्यः इति तस्मादपच्छेदन्यायः सावकाशविषयः अद्वैतागमेन प्रत्यक्षबाधे तु न प्रत्यक्षप्रामाण्यस्याप्रकाशोऽस्ति इति क्रमिकनिमित्तद्वयेन क्रमेण अदक्षिणसर्वस्वदक्षिणयोः प्रयोगयोः सम्भवेन क्रमिकनिमित्तिकापच्छेदद्वयेन एकप्रयोगासम्भवेऽपि क्रमिकप्रयोगद्वये नास्ति विरोधः। एकस्मिन् बदरीफले क्रमिकनिमित्तवतोः श्यामरक्तरूपयोः क्रमिकयोर्यथा न विरोधः एवं प्रकृतेऽपि। द्वयोः क्रमिकनिमित्तयोः एकस्मिन् प्रयोगे युगपत्

सन्निपाते भवति विरोधः स नास्तीति पूर्वपक्षिणो भ्रमः। एवमविरोधं वदन्नपि पूर्वपक्षी शक्तौ अविश्वसन् एव उपसंहरति—तस्मादपच्छेदन्यायः सावकाशविषयः। प्रत्यक्षस्य निरवकाशत्वात् नापच्छेदन्यायेनागमबाध्यत्वमिति। विरोधाभावे सावकाशत्वनिरवकाशत्वप्रदर्शनं सर्वथा असंगतमेव। तथा च पूर्वपक्षिणोऽपि हृदये अपच्छेदन्यायेन विरोधो जागर्ति तेनैव एवं ब्रवीतीति। वस्तुतस्तु क्रमिकविरुद्धापच्छेदस्थले विरोधस्तेन बाध्यबाधकभावो वर्तते एव। तथाहि पूर्वपक्षिणा यदुक्तं नैमित्तिकशास्त्रस्य हि अयमर्थ इत्यादिना तदसंगतम्। नानेन वाक्येन अविरोधः प्रतिपाद्यते किंतु बाध्यबाधकभाव एव प्रतिपाद्यते। तथा हि शास्त्रदीपिकायां—पूर्वं परस्य बाध्यं न तु परं पूर्वस्येति सयुक्तिकमुपपाद्य तस्मात् पूर्वदौर्बल्यम् इत्यनेन श्रौतपदेन तत्र सूत्रकारस्वारस्यमुक्त्वा नैमित्तिकेन नित्यं बाधं दृष्टान्तयितुम् उक्तवाक्यमुक्तम्। अत एव न नित्या द्वादशशतरूपा ज्योतिष्टोमे दक्षिणेति वाक्यं शास्त्रदीपिकायां दृष्टान्तबोधकम्। तथा च निमित्तोपजननादित्यादेरयमर्थः—यत्र यत् निमित्तं न जातम् तत्र अन्यथाकर्तव्योऽपि क्रतुर्यत्र निमित्तं जातं तत्रान्यथा क्रियते। तस्मान्नित्यनैमित्तिकशास्त्रयोर्व्यवस्थितविषयकत्वसम्भवेन अप्रामाण्यासम्भवात् बाध्यबाधकत्वसम्भवः। तद्वदेव पूर्वापरीभूतविरुद्धापच्छेदनिमित्तकशास्त्रयोर्व्यवस्थितविषयकत्वसम्भवेन बाध्यबाधकभावः इति। बदरश्यामरक्तत्वधियोस्तु न दृष्टान्तता, तयोर्भिन्नकालीनविषयकत्वेन बाध्यबाधकभावविरहेऽपि प्रकृते यस्मिन् प्रयोगे उत्पन्नं निमित्तापच्छेदद्वयं तस्मिन्नेव प्रयोगे सर्वस्वदक्षिणत्वनिदक्षिणत्वयोः नैमित्तिकयोरनुष्ठेयताप्रसक्त्या विरोधेन बाध्यबाधकत्वस्यावश्यकत्वात्। तस्मादविरोधप्रतिपादकं "नैमित्तिकशास्त्रस्य ह्ययमर्थः निमित्तजननात् प्रागन्यथा कर्तव्योऽपि" इति वाक्यम् इति पूर्वपक्षिणः उक्तिर्मौढ्यादेव। यथा प्रथमप्रयोगे निमित्तसम्बन्धेन अनुष्ठेयतया प्रसक्तमपि तत्र बाधितम् द्वितीयप्रयोगकालेऽनुष्ठेयतया सावकाशं तथा श्रुत्या तात्त्विकप्रामाण्यांशे बाधितमपि प्रत्यक्षं व्यावहारिकप्रामाण्यांशे सावकाशं तावतैव प्रत्यक्षप्रामाण्यग्राहकप्रमाणस्य लब्धविषयकत्वसम्भवादिति भावः। तथा च अस्य प्रकरणस्य प्रारम्भे टीकायां परिमलीयशंकायां प्रदर्शिता "प्रत्यक्षज्ञानप्रामाण्यं ज्ञानसमानवित्तिवेद्यतया ज्ञाने प्रकाशमाने विशिष्य नियमेन प्रतीतं नाद्वैतश्रुत्या बाधमर्हतीति समाहिता। [ अस्याः न्यायामृतकारेण शंकायाः समाधानं परिमले दशमपृष्ठे—"ननु एकस्मि-

न, उद्गात्रपच्छेदाभावे, युगपदुभयापच्छेदे, प्रतिहर्त्रपच्छेदस्य उद्गात्रपच्छेदे पाश्चात्ये च ज्योतिष्टोमद्वितीयप्रयोगे च प्रतिहर्त्रपच्छेदनिमित्तसर्वस्वदक्षिणयागप्रतिपादकशास्त्रस्य सावकाशत्ववद् व्यावहारिकप्रामाण्ये प्रत्यक्षस्यापि सावकाशत्वात्, तत्र एकप्रयोगे विरोधवत् अत्रापि तात्त्विकांशे विरोधात्। अत एव सगुणस्सप्रपञ्चश्रुत्योः

---

न्नपि प्रयोगे क्रमिकाभ्यां निमित्ताभ्यां तत्तन्नैमित्तिककर्तव्यतयोर्बदरफले श्यामरक्तरूपयोरिव क्रमेण उत्पादात् रूपज्ञानद्वयवत् कर्तव्यताज्ञानद्वयमपिप्रमाणमेवेति न परेण पूर्वज्ञानबाधे अपच्छेदन्याय उदाहरणमिति तन्न अंगस्य संतः कर्तव्यत्वं न च पश्चाद्भागे प्रतिहर्त्रपच्छेदवति पूर्ववृत्तोद्गात्रपच्छेदप्रायश्चित्तस्य अङ्गत्वमस्ति आहवनीयशास्त्रस्य पदहोमातिरिक्तहोमविषयत्ववत् तदंगत्वबोधकशास्त्रस्य पश्चाद्भावि प्रतिहर्त्रपच्छेदरहितक्रतुविषयतायाः सिद्धान्तित्वत्वात्। उक्तं हि न्यायरत्नमालायाम्—तत्र एवं सति शास्त्रार्थो भवति पश्चाद्भाव्युद्गात्रपच्छेदविधुरप्रतिहर्त्रपच्छेदक्रतोः सर्ववेदसदानमंगमेव एवमुद्गात्रपच्छेदेऽपि द्रष्टव्यम्। न च मीमांसकमर्यादामतिक्रम्य परकर्तव्यतानिर्वर्त्यं पूर्वकर्तव्यत्वं निर्वक्तुमपि शक्यम्। नहि कृतिसाध्यत्वयोग्यत्वं तत् तस्य पश्चादपि सत्त्वात् नापि फलमुखकृतिसाध्यत्वं तस्य पूर्वमपि अजननात्। नाप्यंगत्वं तस्य सन्निपत्योपकारकत्वफलोपकारकत्वान्यतररूपकारणताविशेषत्वेन तत्र योग्यत्वफलमुखत्वविकल्पे पूर्वोक्तदोपानतिवृत्तेः। न च कर्तव्यत्वं नाम धर्मान्तरमागमापायि कल्पनीयं मानाभावात्। [ पृ० ११ निर्णयसागर सं० ] ॥२॥

३—अपच्छेदन्यायो यथा सावकाशविषयः सावकाशस्यैवापच्छेदन्यायेन बाधः यथा प्रत्यक्षस्यापि व्यावहारिकप्रामाण्ये सावकाशत्वात् अद्वैतागमेन तात्त्विकप्रामाण्यांशे प्रत्यक्षस्य बाध्यत्वमिति मनसि विभाव्य सिद्धान्ती समाधत्ते न, उद्गात्रपच्छेदाभावे, युगपदुभयापच्छेदे, प्रतिहर्त्रपच्छेदस्य पाश्चात्ये ज्योतिष्टोमे द्वितीयप्रयोगे च प्रतिहर्त्रपच्छेदनिमित्तसर्वस्वदक्षिणयागप्रतिपादकशास्त्रस्य सावकाशत्ववत् व्यावहारिकप्रामाण्ये प्रत्यक्षस्यापि सावकाशत्वात्। तत्र एकप्रयोगे विरोधवत् अत्रापि

निर्गुणनिष्प्रपञ्चश्रुतिभ्याम् अपच्छेदन्यायेन बाध इति सुष्टूक्तम्। तदुक्तम् आनन्दबोधाचार्यैः—

तत्परत्वात् परत्वाच्च निर्दोषत्वाच्च वैदिकम्।
पूर्वस्य बाधकं नायं सर्प इत्याप्तवाक्यवत्॥ इति।

ननु—मानान्तरविरोधे श्रुतेस्तत्परत्वमसिद्धम्, परत्वं तु प्रमानन्तर-

---

तात्त्विकांशे विरोधात्। अत एव सगुणसप्रपञ्चश्रुत्योः निर्गुणनिष्प्रपञ्च-श्रुतिभ्याम् अपच्छेदन्यायेन बाध इति सुष्टूक्तम्। तदुक्तम् आनन्दबोधाचार्यैः—

तत्परत्वात् परत्वाच्च निर्दोषत्वाच्च वैदिकम्।
पूर्वस्य बाधकं नायं सर्प इत्याप्तवाक्यवत्॥

चतुर्षु स्थानेषु सावकाशस्य प्रतिहर्त्रपच्छेदनिमित्तसर्वस्वदक्षिणयागप्रतिपादकशास्त्रस्य पाश्चात्येन उद्गात्रपच्छेदनिमित्तादक्षिणयागप्रतिपादकशास्त्रेण यथा बाधः तथा व्यावहारिकप्रामाण्ये सावकाशस्य प्रत्यक्षस्य अद्वैतागमेन प्रत्यक्षस्य तात्त्विकप्रामाण्यांशे विरोधात् बाध्यते। द्वैतग्राहिप्रत्यक्षस्यापि यदि तात्त्विकं प्रामाण्यं द्वैतनिषेधश्रुतेरपि तात्त्विकं प्रामाण्यं तर्हि विरुध्येत अपच्छेदन्यायोदाहरणे एकप्रयोगे विरोधवत्। प्रत्यक्षस्य तात्त्विकप्रामाण्यांशे विरोधेऽपि व्यावहारिकप्रामाण्यांशेऽविरोधात् अद्वैतश्रुतिविरोधेन द्वैतग्राहिप्रत्यक्षं तात्त्विकप्रमाणभावात्प्रच्याव्य व्यावहारिकप्रामाण्ये व्यवस्थाप्यते। एवमेव सगुणसप्रपञ्चब्रह्मप्रतिपादकश्रुतेरपि निर्गुणनिष्प्रपञ्चब्रह्मप्रतिपादकश्रुतिविरोधे गतिः। तयोः श्रुत्योरुपासनादिपरत्वेन व्यावहारिकप्रमाण्यमिति भावः। स्वामिप्रेतेऽर्थे आनन्दबोधोक्तिं सम्वादयति तत्परत्वादिति। तत्परत्वात्—अद्वैतब्रह्मपरत्वात्। सद्वितीयत्वग्राहिमानात् परत्वाच्च एकमेवाद्वितीयमित्यादिश्रुतेः। अत्र आनन्दबोधेनापि अपच्छेदन्यायेन पूर्वमानस्य परमानं बाधकमुक्तम्। अपौरुषेयतया निर्दोषत्वाच्च एकमेवेत्यादि श्रुतिः सदोषप्रत्यक्षादिमानानां बाधिका। यथा रज्जौ सर्पभ्रान्त्यनन्तरं नायं सर्प इत्याप्तवाक्यात् भ्रान्तिगृहीतसर्पस्य बाधः। पूर्वपक्षी आनन्दबोधोक्तदूषणजातं विशदयति ननु मानान्तरविरोधे श्रुतेस्तत्परत्वमसिद्धम्, परत्वं तु प्रमानन्तरभ्रमे व्यभि-

भ्रमे व्यभिचारि, दृश्यते च "न क्त्वा सेडि"ति [१।२।१८ पा० सू०] परं प्रति 'मृडमृदवुधकुशक्लिशवदवशः क्त्वे'ति [१।२।७] पूर्वमपि बाधकम्। निर्दोषत्वं तु अर्थान्तरप्रामाण्येनान्यथासिद्धम्। तदुक्तं—

तत्परत्वमसिद्धत्वात् परत्वं व्यभिचारतः।
निर्दोषतान्यथासिद्धेः प्राबल्यं नैव साधयेत्॥

---

चारि, दृश्यते च न क्त्वा सेडिति [१।२।१८। पा० सू०] परं प्रति मृडमृदवुधकुशक्लिशवदवशः क्त्वेति [१।२।७] पूर्वमपि बाधकम्, निर्दोषत्वं तु अर्थान्तरप्रामाण्ये नान्यथासिद्धं तदुक्तं—

तत्परत्वमसिद्धत्वात् परत्वं व्यभिचारतः।
निर्दोषतान्यथासिद्धेः प्राबल्यं नैव साधयेदिति॥

आनन्दबोधेन श्रुतेरद्वैतब्रह्मतात्पर्यकत्वमुक्तं न संगतम्। अद्वैतविरोधिद्वैतग्राहिप्रत्यक्षादिप्रमाणे जाग्रति श्रुतेरद्वैततात्पर्यकत्वावधारणमेव न स्यात्। परत्वहेतुरपि व्यभिचारी इत्याह प्रमानन्तरभ्रमे प्रमापरत्वंवर्तते न च वर्तते प्रमाबाधकत्वं भ्रमस्य, अतः परत्वात् पूर्वबाधकत्वं न स्यात्। क्वचिच्च पूर्वस्यापि परबाधकत्वं दृश्यते तेन परत्वं बाधकत्वे अहेतुरिति पूर्वस्य परबाधकत्वं दर्शयितुं पाणिनिसूत्रे उदाहरति—मृडमृदवुध इति [१।२।७] पूर्वभाविना सूत्रेण न क्त्वा सेडिति [१।२।१८] परभाविसूत्रं बाध्यते। तेन परेणैव पूर्वस्य बाधः इति नियमोऽपि न सिध्यति। मृडमृदवुध इति सूत्रं प्रथमाध्याये द्वितीयपादे सप्तमसूत्रं न क्त्वा सेट्—१।२।१८ सूत्रस्य प्रथमाध्याये द्वितीयपादे अष्टादशसूत्रस्य बाधकम्। अतः पूर्वं सूत्रं बाधकम् उत्तरं सूत्रं बाध्यम्। न क्त्वा सेट् इति सूत्रस्यायमर्थः इडागमोपेतः क्त्वाककार इत्संज्ञको न स्यात् इत्येवं सेटः क्त्वाप्रत्ययस्य कित्त्वनिषेधः कृतः इति स्थितिः। मृडमृद-इत्यादिना यत् क्त्वाप्रत्ययस्य कित्त्वं विहितं तदनुपपन्नं क्त्वाप्रत्ययस्य कित्त्वं स्वभावत एव सिद्धमिति, तद्विधानवैयर्थ्यात् असिद्धस्यैव विधेयत्वात् अतो व्यर्थं सत् किञ्चिदिष्टं ज्ञापयति इति न्यायेन न क्त्वा सेडिति सेटः क्त्वाप्रत्ययस्य यः कित्त्वनिषेधः कृतः तन्निषेधार्थत्वं मृड इत्यादि विधानस्याङ्गीकृतम्। तथा च शास्त्रेऽपि पूर्वमेव परबाधकं दृष्टमिति परत्वहेतोर्व्यभिचारित्वात् न प्राबल्यसाधकत्वमिति

इति चेन्न, प्रत्यक्षादेर्व्यावहारिकं प्रामाण्यं श्रुतेस्तु तात्त्विकमिति-विरोधाभावेन तत्परत्वसिद्धेः। परशब्देन च मानान्तराबाधितपरत्वं विवक्षितं, तेन प्रमानन्तरभ्रमे न व्यभिचारः। तस्य तदुत्तरभावि-मानबाधितत्वात्।

न क्त्वा सेडित्यस्य तु पाठतः परत्वेऽपि स्वभावसिद्धकित्त्वस्य अनेना-पाकरणं विना पुनस्तत्प्रतिप्रसवार्थं 'मृडमृद' इत्यादेरप्रवृत्तेस्तदपेक्षया अर्थतः पूर्वत्वमेव। अपवादापवादे उत्सर्गस्यैव स्थिरत्वात् अतो निर्दोष-त्वमपि नान्यथासिद्धं; तात्पर्यविषय एव प्रामाण्यस्याभ्युपेयत्वात् इत्य-बोधमात्रविजृम्भितमपच्छेदन्यायवैषम्याभिधानमिति ॥३॥

इत्यपच्छेदन्यायवैषम्यभङ्गः।

---

भावः। निर्दोषत्वं तु अर्थान्तरप्रामाण्ये नान्यथासिद्धमिति अद्वैतवाक्यस्य द्वैत-ग्राहिप्रत्यक्षादिप्रमाणविरोधेन अद्वैते तात्पर्याभावेऽपि अर्थान्तरे प्रामाण्येन निर्दो-षत्वमन्यथासिद्धमिति न तस्य प्राबल्यहेतुत्वमित्यर्थः। आनन्दबोधोक्तदूषणाय पूर्वपक्षिणा यदुक्तं तन्निरसनाय आहाचार्यः—इति चेन्न, प्रत्यक्षादेर्व्यावहारिकं प्रामाण्यं श्रुतेस्तु तात्त्विकमिति विरोधाभावेन तत्परत्वसिद्धेः। पर-शब्देन च मानान्तराबाधितपरत्वं विवक्षितं तेन, प्रमानन्तरभ्रमे न व्य-भिचारः। तस्य तदन्तरभाविमानबाधितत्वात्। न क्त्वा सेडित्यस्य तु पाठतः परत्वेऽपि स्वभावसिद्धकित्त्वस्य अनेनापाकरणं विना पुनस्त-त्प्रतिप्रसवार्थं मृडमृदइत्यादेरप्रवृत्तेस्तदपेक्षया अर्थतः पूर्वत्वमेव। अपवादापवादे उत्सर्गस्यैव स्थिरत्वात् अतो निर्दोषत्वमपि नान्यथासिद्धं तात्पर्यविषये एव प्रामाण्यस्याभ्युपेयत्वात् इत्यबोधमात्रविजृम्भितम् अपच्छेदन्यायवैषम्याभिधानमिति [ इत्यपच्छेदन्यायवैषम्यभंगः ] यदुक्तं मानान्तरविरोधे श्रुतेस्तत्परत्वमसिद्धं तत्राह—प्रत्यक्षादेर्मानान्तरस्य व्यवहारिकं प्रामाण्यमद्वैतश्रुतेस्तु तात्त्विकमिति विरोधाभावेन अद्वैतश्रुतेस्तत्परत्वसिद्धिः। सगुणादिश्रुतेरुपासनाविधिपरत्वेन सगुणत्वादिपरत्वस्याभावात् भावेऽपि 'तस्य परमतात्पर्यरूपत्वाभाव इत्यादेः द्वितीयपरिच्छेदे निर्गुणश्रुत्युपपत्तिप्रकरणे वक्ष्यमा-णत्वात् परमतात्पर्यविषयार्थकश्रुत्या बाध्यता। ननु समप्रपञ्चश्रुतेः प्रपञ्चप्रसक्ति-

हेतुत्वेन अद्वैतश्रुत्यापेक्षणीयत्वेन न तद्बाध्यता इत्यत आह—नायं सर्प इत्याप्तवाक्यवत् । तथा च निषेधधीर्निषेधधर्मिणि प्रतियोगिसमत्त्वज्ञानरूपां प्रसक्तिमपेक्षते न तु तस्याः प्रमात्वमपि इति भावः । परत्वादित्यस्य मानान्तराबाधितपरत्वं विवक्षितं तथा च न भ्रमे व्यभिचारः । "न क्त्वा सेट्" इत्यस्य बाधतः परत्वेऽपि अर्थतः पूर्वत्वमेव । तथा च परेणैव पूर्वस्य बाधः । क्त्वाप्रत्ययस्य स्वभावसिद्धकित्त्वस्य न क्त्वा सेट् इत्यनेन निषेधं विना पुनस्तदकित्त्वस्य प्राप्त्यर्थं मृडमृद इत्यादेरप्रवृत्तेः । स्वभावसिद्धकितः क्त्वाप्रत्ययस्य कित्त्वनिषेधाय न क्त्वा सेडिति सूत्रं प्रवृत्तं, पुनस्तत् प्रतिप्रसवाय क्त्वाप्रत्ययस्य कित्त्वप्राप्तये मृडमृद इति सूत्रं प्रवृत्तम् । अतः पाठतः न क्त्वा सेट् इति सूत्रस्य पूर्वत्वाभावेऽपि अर्थतः पूर्वत्वमेव । अन्यथा कित्त्वस्य निषेधं विना कित्त्वस्य पुनः प्राप्तये मृडमृदेति सूत्रस्य प्रवृत्तिरेव न स्यादिति भावः । अतो न क्त्वा सेडिति सूत्रस्य पाठतः पूर्वत्वाभावेऽपि अर्थतः पूर्वत्वमेव तथा च परेणैव पूर्वस्य बाधः पाणिनीयेपि सूत्रे । तथा च प्रमाणान्तराबाधितेन परेण पूर्वस्यैव बाधात् अपच्छेदन्यायप्रवृत्तिर्निष्प्रत्यूहैवेति प्रकृते अपच्छेदन्यायवैपम्यं नास्ति पूर्वपक्षिणा शंकितं वैपम्यं तु श्रुतक्रतमेवेति शिवम् । इति ॥३॥

श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यामपच्छेदन्यायवैपम्यभङ्गविवरणं समाप्तम् ।

## अथ मिथ्यात्वानुमितेः शैत्यानुमितिसाम्यभङ्गः ।

ननु—यदि प्रत्यक्षबाधितमप्यनुमानं साधयेत् तदा वह्न्यनौष्ण्यमपि साधयेत् तथा च कालात्ययापदिष्टकथा सर्वत्रोच्छिद्येत । न च—औष्ण्यप्रतियोगिकाभावे साध्ये पक्ष एव प्रतियोगिप्रसिद्धिरिति तत्र बाधः सावकाशः प्रकृते तु सत्त्वं व्यावहारिकं प्रत्यक्षसिद्धं, तदविरुद्धं च मिथ्यात्वं; तस्य पारमार्थिकसत्त्वविरोधित्वाद् अतो न व्यावहारिकसत्त्वग्राहकेणाध्यक्षेण बाध्यते इति वाच्यम् ।

---

१—प्रत्यक्षबाधितार्थकानुमितिसाम्यात् प्रपञ्चमिथ्यात्वानुमितिरपि अनुमित्याभासरूपैव यथा वह्निशैत्यानुमितिः प्रत्यक्षबाधितार्थकतया अनुमित्याभासरूपा एवं प्रपञ्चमिथ्यात्वानुमितिरपि प्रत्यक्षबाधितार्थकतया वह्निशैत्यानुमितिसदृशी न मिथ्यात्वसिद्धिरूपा भवितुमर्हतीत्याशयेन पूर्वपक्षी शंकते । वात्स्यायनीये न्यायभाष्ये उक्तं "यदनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासस्सः" । एतद्विवरणावसरे वह्निरनुष्णः कृतकत्वात् घटवदिति प्रत्यक्षविरुद्धानुमानमुदाहृतम् । अतो वह्निशैत्यानुमानस्याभासत्वं सुप्रसिद्धमेव तद्वदेव प्रपञ्चमिथ्यात्वानुमानमिति पूर्वपक्षिणोऽभिमानः । पूर्वपक्षी शंकते—ननु यदि प्रत्यक्षबाधितमप्यनुमानं साधयेत् तदा वह्न्यनौष्ण्यमपि साधयेत् तथा च कालात्ययापदिष्टकथा सर्वत्रोच्छिद्येत प्रपञ्चसत्त्वग्राहिप्रत्यक्षबाधितमपि प्रपञ्चमिथ्यात्वं यद्यनुमानं साधयेत् तर्हि अनुमानं वह्न्यनौष्ण्यमपि साधयेत् । प्रत्यक्षबाधस्य उभयत्र तुल्यत्वादिति भावः । कालात्ययापदिष्टकथा बाधस्य हेत्वाभासेषु परिगणनं न स्यात् बाधितार्थकमप्यनुमानं सदनुमानं स्यात् । वह्न्यनौष्ण्यानुमानवैलक्षण्यं मिथ्यात्वानुमाने आशंक्य निरस्यति न च औष्ण्यप्रतियोगिकाभावे साध्ये पक्ष एव प्रतियोगिप्रसिद्धिरिति तत्र बाधः सावकाशः प्रकृते तु सत्त्वं व्यावहारिकं प्रत्यक्षसिद्धं तदविरुद्धं च मिथ्यात्वं तस्य पारमार्थिकसत्त्वविरोधित्वात् अतो न व्यावहारिकसत्त्वग्राहकेणाध्यक्षेण बाध्यते इति वाच्यम् । बाधकथाया अनुच्छेदाय यदि कश्चित् एवं शंकते वह्न्यनौष्ण्यानु-

वह्निविशेषे औष्ण्याभावानुमाने शैत्यानुमाने वा तदभावात्। पक्षातिरिक्तस्य प्रतियोगिप्रसिद्धिस्थलस्य तत्र सत्त्वात्। न च—यत्र प्रत्यक्षं प्रबलं तत्र बाधव्यवस्था, न चात्र तथा इति न बाध इति वाच्यं; प्रकृतेऽप्यौष्ण्यप्रत्यक्षसमकक्षस्य प्राबल्यप्रयोजकस्य विद्यमानत्वात्, अनौष्ण्यानुमितेर्मिथ्यात्वानुमितेश्च समानयोगक्षेमत्वात्॥१॥

---

माने बाधस्यावकाशः। प्रकृतमिथ्यात्वानुमाने तु प्रत्यक्षबाधस्यावसर एव नास्ति प्रत्यक्षानुमानयोरविरोधात् इति शंका निरसनीयतया दर्शयति पूर्वपक्षी वह्निरनुष्णः कृतकत्वादित्यनुमाने औष्ण्यप्रतियोगिकाभावः साध्यः स च अनौष्ण्यम् अभावरूपसाध्यस्य प्रतियोगि औष्ण्यं तच्च पक्षे वह्नावेव प्रसिद्धम्। तथा च यस्मिन् पक्षे औष्ण्यं प्रत्यक्षेण गृहीतं तस्मिन्नेव पक्षे औष्ण्याभावानुमाने साध्यप्रतियोगिग्राहिणा उपजीव्येन प्रत्यक्षेण विरोधात् उपजीव्यानुमानं बाधितं भवेत्। एवञ्च अत्रैवानुमाने बाधः सावकाशः। प्रकृते तु नावसरो बाधस्येत्याह—प्रत्यक्षसिद्धं सत्त्वं व्यावहारिकम् अनुमीयमानमिथ्यात्वञ्च तदविरुद्धं, मिथ्यात्वं हि प्रपञ्चस्य पारमार्थिकसत्त्वं विरुणद्धि न व्यावहारिक सत्त्वम्। अतो न व्यावहारिकसत्त्वग्राहिणा प्रत्यक्षेण मिथ्यात्वानुमानं बाध्यते। प्रत्यक्षानुमानयोरविरुद्धविषयकत्वात्। सति विरोधे बाध्यबाधकभावः स्यात् अविरोधे तु नेति शंकितुरभिप्रायः।

शंकामिमान्निराचष्टे पूर्वपक्षी—"वह्निविशेषे औष्ण्याभावानुमानेशैत्यानुमानेवा तदभावात् तत्र सत्त्वात् पक्षे एव प्रतियोगिप्रसिद्ध्या यदि अत्र बाधः सावकाशः तर्हि पक्षातिरिक्ते धर्मिणि प्रतियोगिप्रसिद्धौ बाधा नावकाशमासादयेत् इत्यत आह—वह्निविशेषे औष्ण्याभावानुमाने यत्र वह्नौ प्रतियोगिप्रसिद्धिस्तदन्यवह्नौ औष्ण्याभावानुमाने शैत्यानुमाने वा अभावानुमाने प्रतियोगिग्राहकप्रत्यक्षेण बाधः शैत्यानुमाने साध्यग्राहकप्रत्यक्षेण साक्षादेव बाधः। तदभावात् इति पक्षे एव प्रतियोगिप्रसिद्धेरभावात् पक्षे एव साध्यप्रसिद्धेरभावाच्च। तथा च बाधस्य निरवकाशत्वमेव। वह्न्यनौष्ण्यानुमाने प्रात्यक्षिकबाधस्य सम्भवेऽपि प्रकृते मिथ्यात्वानुमाने प्रात्यक्षिकबाधो न सम्भवतीत्याशंक्य निराचष्टे पूर्वपक्षी न च यत्र प्रत्यक्षं प्रबलं तत्र बाधव्यवस्था, न चात्र तथा इति न बाध इति वाच्यम्। प्रकृतेप्यौष्ण्यप्रत्यक्षसमकक्षस्य प्राबल्यप्रयोजकस्य विद्यमानत्वात् अनौष्ण्यानुमितेः

न च मिथ्यात्ववादिनां प्रतिपन्नोपाधावौष्ण्यनिषेधग्राह्यानुमानेन मिथ्यात्वानुमितेः समत्वमिष्टमेवेति वाच्यम्; औष्ण्यानौष्ण्ययोर्भावाभावरूपतया तदनुमितिसाम्येऽपि शैत्यानुमितिसाम्यस्यानभ्युपगमात्। शैत्यस्य औष्ण्याभावरूपत्वाभावात् तस्मात् बाधस्य दोषता वा त्याज्या औष्ण्यप्रत्यक्षायजमानत्वप्रत्यक्षादेः सत्त्वप्रत्यक्षापेक्षया विशेषो वा वक्तव्यः। न च—औष्ण्यप्रत्यक्षं परीक्षितोभयवादिसिद्धप्रामाण्यं सत्त्वप्रत्यक्षं तु न तथा इति विशेष इति वाच्यम्; सत्त्वप्रत्यक्षेऽपि प्रामाण्यासम्मतौ हेत्वभावात्, परीक्षायास्तुल्यत्वादिति चेत् ? ॥२॥

---

मिथ्यात्वानुमितेश्च समानयोगक्षेमत्वात् यत्र निर्दोषत्वेन प्रबलं प्रत्यक्षं बाधकं तत्रानुमानस्य बाधः यथा अनौष्ण्यानुमाने मिथ्यात्वानुमाने च बाधकत्वेनाभिमतं प्रत्यक्षं प्रबलं प्रत्यक्षस्य सम्भावितदोषजन्यत्वात् अतो मिथ्यात्वानुमानं प्रत्यक्षेण न बाध्यते इति शंका निरस्यति अनौष्ण्यानुमानबाधकम् औष्ण्यप्रत्यक्ष यादृशं प्रबलं मिथ्यात्वानुमानबाधकं प्रत्यक्षमपि तादृशप्रबलमेव। द्वयोः प्रत्यक्षयोः परिक्षितत्वादिना समबलत्वावधारणात् समबलत्वेऽपि एकप्रत्यक्षम् अनुमानबाधकं नापरमित्यत्र कस्यापि हेतोरभावात्। प्रत्यक्षबाधितार्थकत्वेन द्वयोरनुमानयोः समानयोगक्षेमत्वात् ॥१॥

२—वह्न्यनौष्ण्यानुमितेः मिथ्यात्वानुमितेश्च यत्समत्वमापादितं पूर्वपक्षिणा तस्य तदिष्टापत्त्या परिहारमाशंक्य निरस्यति न च मिथ्यात्ववादिनां प्रतिपन्नोपाधावौष्ण्यनिषेधग्राह्यानुमानेन मिथ्यात्वानुमितेः समत्वमिष्टमेवेति वाच्यं औष्ण्यानौष्ण्ययोर्भावाभावरूपतया तदनुमितिसाम्येऽपि शैत्यानुमितिसाम्यस्यानभ्युपगमात्। शैत्यस्य औष्ण्याभावरूपत्वाभावात्। तस्मात् बाधस्य दोषता वा त्याज्या औष्ण्यप्रत्यक्षाऽयजमानत्वप्रत्यक्षादेः सत्त्वप्रत्यक्षापेक्षया विशेषो वा वक्तव्यः। न च औष्ण्यप्रत्यक्षं परीक्षितोभयवादिसिद्धप्रामाण्यं सत्त्वप्रत्यक्षं तु न तथा इति विशेष वाच्यं सत्त्वप्रत्यक्षेऽपि प्रामाण्यासम्मतौ हेत्वभावात् परीक्षायास्तुल्यत्वादिति चेत्। द्वयोरनुमानयोः समानयोगक्षेमत्वे इष्टापत्तिमाह प्रपञ्चमिथ्यात्ववादी प्रपञ्चमिथ्यात्वं नाम प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं तच्च स्वप्रकारक-

तीतिविशेष्यनिष्ठत्रैकालिकनिषेधप्रतियोगित्वं स्वपदं मिथ्यात्वेनाभिमतपरम् । वह्निगत-औष्ण्यमपि प्रपञ्चमिथ्यात्ववादिनां मते मिथ्यैव । तथा च औष्ण्यमपि स्वप्रकारक-प्रतीतिविशेष्यनिष्ठात्यन्ताभावप्रतियोगि भवति । उष्णो वह्निः इति प्रतीतौ औष्ण्य-प्रकारकप्रतीतिविशेष्ये वह्नौ विद्यमानात्यन्ताभावप्रतियोगित्वस्य औष्ण्ये सत्त्वात् औ-ष्ण्यस्य मिथ्यात्वं वह्नेरनुष्णत्वानुमानमपि वह्नौ उष्णत्वाभावग्राहि । तथा च औ-ष्णमिथ्यात्वानुमानस्य वह्नेरनुष्णत्वानुमानसाम्यात् इष्टापत्तिरेव इति प्रपञ्चमिथ्यात्व-वादिना कथयितुं न शक्यते । कुतः इत्यत आह औष्ण्यानौष्ण्ययोर्भावाभावरूपतया तदनुमितिसाम्येऽपि औष्ण्यमिथ्यात्वानुमितिसाम्येऽपि औष्ण्यमिथ्यात्वानुमानेन औष्ण्याधिकरणे वह्नौ औष्ण्यात्यन्ताभावः साध्यते अतः अनुष्णत्वानुमान-साम्यं मिथ्यात्वानुमितेः । अनुष्णत्वानुमानस्य मिथ्यात्वानुमानसाम्येऽपि वह्नेः शैत्यानुमितिसाम्यं मिथ्यात्वानुमितौ नास्ति । कुतः औष्ण्यानौष्ण्ययोर्भावाभा-वरूपत्वात् । औष्ण्यशैत्ययोस्तु भावाभावरूपत्वाभावात् । मिथ्यात्वानुमानेन स्वप्रकारकधीविशेष्ये स्वस्य अत्यन्ताभावः साध्यते । अतः वह्नौ औष्ण्याभावसाधनेऽपि मिथ्यात्वानुमानेन वह्नौ शैत्यं न साध्यते । अतः वह्निः शीतः कृतकत्वात् इत्यनुमानं न मिथ्यात्वानुमानसमं भवितुमर्हति । न हि शैत्यम् औष्ण्याभावरूपं शैत्यस्य स्पर्शविशेषरूपतया भावरूपत्वादिति भावः । तथा च यथा वह्नौ शैत्यानुमानं प्रत्यक्षबाधितम् एवं प्रपञ्चमिथ्यात्वानुमानमपि प्रत्यक्षबा-धितमेव । प्रत्यक्षबाधेऽपि यदि प्रपञ्चमिथ्यात्वानुमानमुदयमासादयेत् तर्हि बाधस्य दोषता एव त्याज्या । अथवा प्रपञ्चसत्त्वप्रत्यक्षेण प्रपञ्चमिथ्यात्वानुमानं न बाध्य-ते बाध्यते च औष्ण्यप्रत्यक्षेण वह्नेः शीतत्वानुमानं यजमानः प्रस्तर इत्यागमः प्रस्तरे यजमानत्वप्रत्यक्षयोरनुमानागमबाधकयोः प्रपञ्चमिथ्यात्वानुमानाबाधकात् प्रपञ्च-सत्त्वप्रत्यक्षात् विशेषो वा वक्तव्यः प्रपञ्चमिथ्यात्ववादिनाम् । चित्सुखाचार्यमतमनु-सृत्य द्वयोः पक्षयोर्विशेषमाशंक्य निरस्यति पूर्ववादी न च औष्ण्यप्रत्यक्षं परीक्षि-तोभयवादिप्रसिद्धप्रामाण्यं सत्त्वप्रत्यक्षं तु न तथेति विशेषः इति वाच्यम् । वह्नेरौष्ण्यप्रत्यक्षं परीक्षितप्रामाण्यम् उभयवादिसिद्धप्रामाण्यञ्च प्रपञ्चसत्त्व-प्रत्यक्षं तु न तथा न परीक्षितप्रमाण्यं न, वा उभयवादिसिद्धप्रामाण्यं तेन द्वयोः प्रत्यक्षयोर्विशेषोऽस्ति येन एकं प्रत्यक्षमनुमानबाधकं नापरमिति न च वाच्यं, कुतः सत्त्वप्रत्यक्षेऽपि प्रामाण्यासम्मतो हेत्वभावात् परीक्षायास्तुल्यत्वात्

मैवम्, विरुद्धार्थग्राहित्वेन विशेषात्, प्रत्यक्षसिद्धायजमानत्वौष्ण्यादिवच्छब्दलिंगग्राह्ययजमानत्वानौष्ण्याद्यपि व्याहारिकमिति समत्वात् प्रत्यक्षेण बाध्यते। प्रकृते तु सत्त्वं व्यावहारिकं प्रत्यक्षसिद्धं तद्विरुद्धं च न मिथ्यात्वं; तस्य पारमार्थिकसत्त्वाविरोधात्। अतो न तद्व्यावहारिकसत्त्वग्राहकेणाध्यक्षेण बाध्यते।

---

इति चेत् प्रपञ्चसत्त्वप्रत्यक्षेऽपि प्रपञ्चमिथ्यात्वादिना प्रामाण्यासम्मतौ हेत्वभावात् औष्ण्यप्रत्यक्षं यथा परीक्षितप्रामाण्यं प्रपञ्चसत्त्वप्रत्यक्षमपि तथैव परीक्षितप्रामाण्यं परीक्षितप्रामाण्ये तुल्येऽपि प्रपञ्चमिथ्यात्ववादिनः एकत्र प्रत्यक्षप्रामाण्यसम्मतिः नाऽपरत्र इत्यत्र हेत्वभावात्। तेन मिथ्यात्ववादिनो रुचिरेव प्रमाणम् ॥२॥

३—द्वयोः प्रत्यक्षयोर्विशेषं प्रदर्शयन् समाधत्ते सिद्धान्ती—मैवम्, विरुद्धार्थग्राहित्वेन विशेषात्। प्रत्यक्षसिद्धा यजमानत्वौष्ण्यादिवच्छब्दलिंगग्राह्ययजमानत्वानौष्ण्याद्यपि व्यावहारिकमिति समत्वात् प्रत्यक्षेण बाध्यते। प्रकृते तु सत्त्वं व्यावहारिकं प्रत्यक्षसिद्धं तद्विरुद्धञ्च न मिथ्यात्वं तस्य पारमार्थिकसत्त्वाविरोधित्वात् अतो न तत् व्यावहारिकसत्त्वग्राहकेनाध्यक्षेण बाध्यते अनुमानबाधकाबाधकप्रत्यक्षयोः विशेषः एव पूर्वपक्षिणा जिज्ञास्यते—तत्र उत्तरमाह—विरुद्धार्थग्राहित्वेन विशेषात्। अनुमानविरुद्धार्थग्राहकप्रत्यक्षनुमानबाधकं यत् प्रत्यक्षं नानुमानविरुद्धार्थग्राहकं तत् प्रत्यक्षं नानुमानबाधकमित्ययमेव विशेषो यत् विरुद्धार्थाविरुद्धार्थग्राहित्वमिति तदेव विशदयति—प्रस्तरे अयजमानत्वं प्रत्यक्षसिद्धं वह्नौ उष्णत्वमपि प्रत्यक्षसिद्धं तद्वयमपि व्यावहारिकं यजमानः प्रस्तरः इति शब्देन वह्निरनुष्णः कृतकत्वाद् इत्यनुमानेन च प्रस्तरस्य यजमानत्वं वह्नेरनुष्णत्वं प्रतिपाद्यते तदुभयमपि व्यावहारिकमेव। अत्र प्रत्यक्षानुमानागमानां त्रयेण यत् प्रतिपाद्यते तत् सर्वं व्यावहारिकमिति व्यावहारिकार्थप्रतिपादकत्वेन समत्वात् विरुद्धार्थग्राहिणा प्रत्यक्षेण आगमानुमाने बाध्येते। प्रकृते तु प्रत्यक्षेण प्रपञ्चस्य व्यावहारिकं सत्त्वं गृह्यते प्रपञ्चस्य मिथ्यात्वानुमानं तु प्रपञ्चस्य प्रत्यक्षसिद्धं व्यवहारिकसत्त्वं न विरुणद्धि। कुतो न विरुणद्धि इत्यत आह तस्य पारमार्थिकसत्त्वाविरोधित्वात्

ननु एवं वदतस्तव को वाऽभिप्रायः ? किं तात्त्विकविषयत्वात् बाधकतैव मिथ्यात्वानुमानादेर्न बाध्यता ? उत सत्यमिथ्यात्वग्राहिणो-र्व्यावहारिकतात्त्विकविषययोः परस्परविरुद्धविषयत्वाभावात् न बाध्य-बाधकभावः ? अन्त्येपि किमध्यक्षसिद्धव्यावहारिकसत्त्वमगृहीत्वैव तदसिद्धस्य तात्त्विकसत्त्वस्यैव अभावं गृह्णाति अनुमानादि, उत प्रत्यक्षविषयीकृतस्यैव तात्त्विकमभावम्। नान्त्यः; प्रत्यक्षविषयाभाव-ग्राहिणि तदबाधकत्वोक्त्ययोगात्। न द्वितीयः प्रत्यक्षागृहीतप्रतिषेधक-त्वेन अप्रसक्तप्रतिषेधापत्तेः। प्रत्यक्षविषयस्य तात्त्विकत्वापत्तेश्च। न प्रथमः; उपजीव्यप्रत्यक्षविरोधेन अनुमित्यादिविषयस्य तात्त्विकत्वा-सिद्धेः—इति चेत् ? न, प्रथमे द्वितीये च पक्षे अनुपपत्त्यभावात्।

---

तस्य—व्यावहारिकसत्वस्य, पारमार्थिकसत्त्वाविरोधित्वात् असमत्वादिति भावः। अतो न तत् व्यावहारिकसत्त्वग्राहकेणाध्यक्षेण बाध्यते। असमत्वेन प्रत्यक्षेण नानुमानं बाध्यते इति भावः। अस्मिन् सिद्धान्तिसमाधाने पूर्वपक्षी शंकते—ननु एवं वदतस्तव कोऽभिप्रायः ? किं तात्त्विकविषयत्वात् बाधकतयैव मिथ्यात्वानुमानादेर्न बाध्यता? उत सत्यमिथ्यात्वग्राहिणो-र्व्यावहारिकं तात्त्विकविषययोः परस्परविरुद्धविषयत्वाभावात् न बाध्यबाधकभावः ? अन्तेऽपि किमध्यक्षसिद्धव्यावहारिकसत्त्वमगृही-त्वैव तदसिद्धस्य तात्त्विकसत्त्वस्यैव अभावं गृह्णाति अनुमानादि, उत प्रत्यक्षविषयीकृतस्यैव तात्त्विकमभावम्। नान्त्यः, प्रत्यक्षविषया-भावग्राहिणि तदबाधकत्वोक्त्ययोगात्। न द्वितीयः, प्रत्यक्षागृहीत-प्रतिषेधकत्वेन अप्रसक्तप्रतिषेधापत्तेः। प्रत्यक्षविषयस्य तात्त्विकत्वा-पत्तेश्च। न प्रथमः, उपजीव्यप्रत्यक्षविरोधेन अनुमित्यादिविषयस्य तात्त्विकत्वासिद्धेश्च व्यावहारिकपारमार्थिकसत्त्वग्राहकयोः प्रत्यक्षानुमानयो-रविरोधात् बाध्यबाधकाभावं दूषयितुं पृच्छति एवं वदतस्तव कोऽभिप्रायः इति सिद्धान्तिसमाधानं विकल्पयन् दूषयति मिथ्यात्वानुमानादेस्तात्त्विकविषय-त्वात् किं बाधकतैव ? (१) अथवा किं सत्यमिथ्यात्वग्राहिणोः व्यावहारिक-तात्त्विकविषययोः विरुद्धविषयत्वाभावान्न बाध्यबाधकभावः ? इमां द्वितीयां कोटिं

तथा हि—प्रथमे पक्षे न तात्त्विकत्त्वासिद्धिः यस्मादिदं रजतमित्यनेन नेदं रजतमित्यस्य बाधादर्शनात् परीक्षितमेव बाधकम् अभ्युपेयम्। परीक्षा च प्रवृत्तिसंवादादिरूपा व्यवहारदशायाम् अबाध्यत्वं विना अनुपपन्ना तद्दशाबाधग्राहिणं बाधते, नाद्वैतश्रुत्यनुमानादिकमित्युक्तमेव। द्वितीयेऽपि पक्षे नाप्रसक्तप्रतिषेधः, परोक्षप्रसक्तेः सम्भवात्। यत्तु केचित् आत्मनि तात्त्विकसत्त्वप्रसिद्धया प्रसक्तिमुपपादयन्ति तन्न; न हि प्रतियोगिज्ञानमात्रं प्रसक्तिः, किं तर्हि निषेधाधिकरणकप्रतियोगिज्ञानम्। न चात्मा निषेधाधिकरणं; तस्मात् परोक्षप्रसक्तिरेव दर्शनीया। अथवा मा भूत् प्रसक्तिः; अभावप्रत्यक्षे हि संसर्गारोपत्वेन सोपयुज्यते

---

द्विधा विकल्पयति किं प्रत्यक्षसिद्धव्यावहारिकसत्त्वमगृहीत्वैव प्रत्यक्षासिद्धस्य तात्त्विकसत्त्वस्यैव अभावं गृह्णाति अनुमानादि (२) अथवा किं प्रत्यक्षविषयीकृतस्यैव तात्त्विकमभावमनुमानादि गृह्णाति (३) दूषयति नान्त्यः, न तृतीया कोटिः स्वीकर्तुं युज्यते प्रत्यक्षविषयीकृतस्य तात्त्विकाभावग्रहणे अनुमानादेः प्रत्यक्षबाधकत्वस्यैव स्वीकारात् प्रत्यक्षाबाधकत्वोक्तिर्न सम्भवति। द्वितीयाऽपि कोटिर्न सम्भवति इत्याह न द्वितीयः प्रत्यक्षागृहीतपारमार्थिकसत्त्वनिषेधकत्वेऽनुमानादेरप्रसक्तप्रतिषेधकत्वापत्तेः। प्रत्यक्षविषयस्यानिषेधात् प्रत्यक्षविषयस्य तात्त्विकत्वापत्तेश्च न प्रथमा कोटिः मिथ्यात्वानुमानादेः उपजीव्यप्रत्यक्षविरोधेन अनुमित्यादिविषयस्य तात्त्विकत्वासिद्धेः तात्त्विकविषयत्वेनैवानुमानादेर्बाधकत्वमेवेति उक्तमासीत् तदसिद्धम्। समाधत्ते सिद्धान्ती न, प्रथमे द्वितीये च पक्षे अनुपपत्त्यभात्। प्रथमे पक्षे न तात्त्विकत्वासिद्धिः। यस्मादिदं रजतमित्यनेन नेदं रजतमित्यस्य बाधादर्शनात् परीक्षितमेव बाधकमभ्युपेयम्। परीक्षा च प्रवृत्तिसंवादादिरूपा व्यवहारदशायामबाध्यत्वं विना अनुपपन्ना तद्दशाबाधग्राहिणं बाधते नाद्वैतश्रुत्यनुमानादिकमित्युक्तमेव। द्वितीयेऽपि पक्षे नाप्रसक्तप्रतिषेधः परोक्षप्रसक्तेः संभवात्। यत्तु केचित् आत्मनि तात्त्विकसत्त्वप्रसिद्ध्या प्रसक्तिमुपपादयन्ति तन्न। न हि प्रतियोगिज्ञानमात्रं प्रसक्तिः किन्तर्हि निषेधाधिकरणकप्रतियोगिज्ञानम्। न च आत्मा निषेधाधिकरणम्। तस्मात् परोक्षप्रसक्तिरेव

शब्दानुमानयोस्तु तस्याः क्वोपयोगः। न च अप्रसक्तौ निषेधवैयर्थ्यं; अनर्थनिवृत्तिरूपस्य प्रयोजनस्य विद्यमानत्वात्। न च प्रत्यक्षविषयतात्त्विकत्वापत्तिः; तद्विषयाधिकरणस्यैव पारमार्थिकत्वव्यतिरेकस्य बोधनात्। तथा च न काप्यनुपपत्तिः। तदुक्तं खण्डनकृद्भिः—

---

दर्शनीया अथवा मा भूत् प्रसक्तिः अभावप्रत्यक्षे हि संसर्गारोपत्वेन सोपयुज्यते शब्दानुमानयोस्तु तस्याः क्वोपयोगः न चाप्रसक्तौ निषेधवैयर्थ्यम्, अनर्थनिवृत्तिरूपस्य प्रयोजनस्य विद्यमानत्वात् न च प्रत्यक्षविषयतात्त्विकत्वापत्तिः। तद्विषयाधिकरणस्यैव पारमार्थिकव्यतिरेकस्य बोधनात् तथा च न काप्यनुपपत्तिः। उपजीव्यप्रत्यक्षविरोधेन अनुमित्यादिविषयस्य तात्त्विकत्वसिद्धिर्न भवति इत्याह प्रथमे पक्षे न तात्त्विकत्वासिद्धिः परीक्षितप्रत्यक्षबाधेन हि अनुमानादेरतात्त्विकविषयत्वं वक्तव्यं न तु प्रत्यक्षाभासबाधेन यथा नेदं रजतमिति बुद्धिरिदं रजतमिति आभासीभूतप्रत्यक्षेण न बाध्यते। एवमेव व्यवहारदशाबाध्यविषयकप्रत्यक्षेण सर्वथा अबाध्यविषयकाद्वैतश्रुत्यनुमानादिकं न बाध्यते। यद्यपि बाधकं प्रत्यक्षमपि परीक्षितमेव। तथा च परीक्षितप्रत्यक्षबाधात् श्रुत्यनुमित्यादिविषयस्यातात्त्विकत्वमेव तत्र इत्याह परीक्षा च प्रवृत्तिसंवादादिरूपा। तथा च तादृशपरीक्षा व्यवहारदशायामबाध्यत्वं विना अनुपपन्ना व्यवहारदशाऽबाध्यविषयत्वं साधयति न तु सर्वथा अबाध्यविषयत्वं परीक्षाऽपि व्यवहाररूपैव सम्भवति तथा च व्यवहारदशायाम् अबाध्यविषयत्वमेव साधयतीति भावः। तथा च परीक्षितप्रत्यक्षं व्यवहारदशाबाधग्राहिमानं बाधते नाद्वैतश्रुत्यनुमानादिकम्। तथा च प्रत्यक्षबाधाभावात् अनुमित्यादिविषयस्य तात्त्विकत्वसिद्धिः। यदपि द्वितीये पक्षेऽप्रसक्तप्रतिषेधः उक्तः सोऽपि न इत्याह परोक्षप्रसक्तेः सम्भवात्। प्रपञ्चे पारमार्थिकसत्त्वं यद्यपि प्रत्यक्षसिद्धं न भवति, तथापि अनुमानाभासादिना शब्दाभासादिना च पारमार्थिकसत्त्वप्रसक्तेः सम्भवात्। यथा प्रपञ्चः पारमार्थिकः अर्थक्रियाकारित्वात् लोकेऽपि अर्थक्रियाकारित्वेनैव प्रपञ्चे पारमार्थिकत्वाभिमानदर्शनाद् शब्दाभासेनापि ध्रुव द्यौर्ध्रुवा पृथिवी [ऋक् सं ८।८।३१] इत्यादिनापि प्रपञ्चे पारमार्थिकसत्त्वप्रसक्तेः सम्भवात् नाप्रसक्तप्रतिषेधः। केचित्तु आत्मनि तात्त्विकसत्त्वप्रसिद्ध्या प्रपञ्चे तात्त्विकप्रसक्तिमुपपादयन्ति तन्मूतं

प्रत्यान्दृष्टे यत्तु केचिदिति । तत् सुगमम् । अप्रसक्तप्रतिषेधापत्तेरुद्धरणाय आह अथवा मा भूत् प्रसक्तिरभावप्रत्यक्षे हि संसर्गारोपत्वेन सा उपयुज्यते शब्दानुमानयोस्तु तस्याः कोपयोगः । वस्तुतस्तु प्रतियोगिसंसर्गारोपस्य निषेधधीहेतुत्वमेव नास्ति । यथाहुः आत्मतत्त्वविवेकभावप्रकाशे रघुनाथशिरोमणयः—प्रतियोग्यारोपस्याभावधीहेतुत्वे मानाभावात् अनाहार्यारोपस्य विरोधित्वात् आहार्यस्य च अभावप्रत्ययात् प्रागसम्भवादिति [आत्मतत्त्वविवेक पृ० ५८० सोसाइटी सं] आचार्येणापि अद्वैतसिद्धौ आविद्यकरजतोत्पत्तिप्रकरणे—आरोपस्य हेतुतायां मानाभावेन प्रतियोगिस्मरणाधिकरणानुभवादिनैव तदुपपत्तेरित्युक्तं (अ० सि० पृ० ६४९] न च अप्रसक्तौ निषेधवैयर्थ्यं, अनर्थनिवृत्तिरूपप्रयोजनस्य विद्यमानत्वात् । यथा "न तौ पशौ करोति न सोमे अध्वरे" इति वाक्ये न तौ पशौ करोतीति अत्रैव निषेधविधिः न तु न सोमे अध्वरे इत्यत्र सोमयागे आज्यभागयोरप्राप्तत्वेन तदभावस्य सिद्धत्वेन निषेधविधिवैयर्थ्यात् । तस्मात् तत्र अर्थवादत्वमिति दशमाष्टमे स्थितम् । तथा प्रपञ्चे तात्त्विकत्वस्याप्रसक्तेः तदभावस्य सिद्धत्वेन तद्बोधकश्रुतिरनुवादः स्यादिति भावः । अनर्थनिवृत्तिरूपप्रयोजनस्येति प्रपञ्चतात्त्विकत्वस्य वादिविप्रतिपत्तिभिः सन्दिग्धत्वेन अद्वैतनिश्चयासम्भवात् अद्वैतब्रह्मनिश्चयद्वारा ब्रह्मात्मैक्यनिश्चयाधीनाज्ञाननिवृत्त्यर्थकत्वेन उक्तश्रुतिः नानुवाद इति भावः । यच्चोक्तं पूर्वपक्षिणा अप्रसक्तप्रतिषेधापत्तेः प्रत्यक्षविषयस्य तात्त्विकत्वापत्तेश्च तत्र अप्रसक्तप्रतिषेधापत्तिं परिहृत्य प्रत्यक्षविषयस्य तात्त्विकत्वापत्तिं परिहरति न च प्रत्यक्षविषयतात्त्विकत्वापत्तिः तद्विषयाधिकरणकस्यैव पारमार्थिकत्वव्यतिरिक्तस्य बोधनाद् न काप्यनुपपत्तिः । प्रत्यक्षगृहीतप्रपञ्चे पारमार्थिकत्वाभावबोधनात् न प्रपञ्चस्य तात्त्विकत्वापत्तिः सम्भवति—"तदुक्तं खण्डनकृद्भिः—

> पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः ।
> विरोधादुपजीव्येन न बिभेति मनागपि ॥

[खण्डनखण्डखाद्य पृ० २१९ काशी] अस्यार्थः यस्माद् अविद्याविद्यमानभेदप्रतीतिरुपजीव्यते परमार्थाद्वैतगोचरया श्रुत्या तस्मात् श्रुतिः पारमार्थिकमद्वैतं शरणं प्रविश्य उपजीव्येन बाधनान्न बिभेति मनागपि ईषदपि न बिभेति,

"पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः।
विरोधादुपजीव्येन न बिभेति कदाचन" ॥ इति।

नन्वेवमप्यनौष्ण्यं तात्त्विकमिति तदनुमितिरपि न बाध्येत व्यावहारिकौष्ण्यग्राहिणाध्यक्षेण। एवं च "आदित्यो यूप" इत्यादावपि

"तात्त्विकादित्यतां यूपस्याश्रित्य शरणं श्रुतिः।
विरोधादुपजीव्येन न बिभेति कदाचन ॥" इत्याद्यपि स्यात्

इति चेन्न; अनौष्ण्यं तात्त्विकं स्यादिति कोऽर्थः? यदि तत्त्वतः औष्ण्यं नास्तीत्यर्थः, तदाऽद्वैते पर्यवसानादिष्टापत्तिः। यदि व्यवहारतोऽपि

---

बाध्यबाधकभावस्य द्विष्ठत्वादद्वैते तदभावान्न बाध इति। अत्र शरणपदं श्लिष्टम् आश्रयो गृहं वा शरणपदप्रतिपाद्यं तदुभयमपि प्रकृते संगतम्। श्लोके अद्वैतं द्वैताभावं ब्रह्मस्वरूपम् ब्रह्मगतपारमार्थिकत्वस्याभावरूपं मिथ्यात्वं बोधयन्ती श्रुतिर्नोपजीव्यविरोधात् बिभेति। श्रुत्या अद्वैतबोधनेन प्रत्यक्षविषयस्य तात्त्विकत्वापत्तिः न सम्भवति। एतदभिप्रेत्यैव खण्डनकारिकाया उद्धारः कृतः। प्रकारान्तरेण प्रतिबन्द्या पूर्वपक्षी शंकते—ननु एवमपि अनौष्ण्यं तात्त्विकमिति तदनुमितिरपि न बाध्येत व्यावहारिकौष्ण्यग्राहिणाध्यक्षेण एवमादित्यो यूप इत्यादावपि—

"तात्त्विकादित्यतां यूपस्याश्रित्य शरणं श्रुतिः।
विरोधादुपजीव्येन न बिभेति कदाचन ॥

इत्याद्यपि स्यात्। अद्वैतस्य तात्त्विकत्वाभ्युपगमादेव उपजीव्यविरोधादेः यदि परिहारः स्यात् तर्हि अस्माभिरपि वह्नेरनौष्ण्यस्य तात्त्विकत्वमभ्युपगम्यते। तेन तात्त्विकानौष्ण्यविषयिणी अनुमितिरपि व्यावहारिकौष्ण्यग्राहिणा प्रत्यक्षेण न बाध्येत। एवमेव आदित्यो यूप इति श्रुत्याऽपि यूपस्य तात्त्विकी आदित्यरूपता प्रतिपाद्यते तेन व्यावहारिकादित्यभेदं यूपे गृह्णता प्रत्यक्षेण न बाध्येत। तथा च खण्डनकारीयगाथैव कियदक्षरपरिवृत्त्या अस्माभिरपि पठितुं शक्येति सोपहासमाह .पूर्वपक्षी—तात्त्विकादित्यतां यूपस्याश्रित्येत्यादि। अस्थाने एव पूर्वपक्षिणा प्रतिबन्दिग्रहः कृत इति प्रतिबन्दीं विघटयितुमाहाचार्यः—इति चेन्न अनौष्ण्यं तात्त्विकं स्यादिति कोऽर्थः? यदि तत्त्वतः औष्ण्यं नास्तीत्यर्थः तदाऽ-

नास्तीति, तदा व्यवहाराविसंवादादिरूपपरीक्षितत्वविशिष्टमौष्ण्यप्रत्यक्षं बाधकमिति नानौष्ण्यस्य तात्त्विकत्वसिद्धिः। एतेन शैत्यानुमानं व्याख्यातम्। एवम् आदित्ययूपभेदस्य तत्त्वतो व्यवहारतो वा निषेधे योज्यम् ॥३॥

श्रुतेरन्यशेषतया आदित्ययूपाभेदपरत्वाभावेन परीक्षितप्रत्यक्षविरोधेन गौणार्थतया स्तावकत्वोपपत्तेश्च। अत एव "तात्त्विकादित्यतां यूपस्य" इत्यादिना अद्वैतश्रुतेः आदित्यो यूप इत्यादिश्रुति-

---

द्वैते पर्यवसानादिष्टापत्तिः। यदि व्यवहारतोऽपि नास्तीति तदा व्यवहाराविसंवादादिरूपपरीक्षितत्वविशिष्टमौष्ण्यप्रत्यक्षं बाधकमिति नानौष्ण्यस्य तात्त्विकत्वसिद्धिः। एतेन शैत्यानुमानं व्याख्यातम्। एवमादित्ययूपभेदस्य तत्त्वतो व्यवहारतो वा निषेधे योज्यम्। वह्नेरनौष्ण्यस्य तात्त्विकत्वाभ्युपगन्तुर्यदि अयमभिप्रायः वह्नौ औष्ण्यं तत्त्वतो नास्ति तदा अद्वैते पर्यवसानं स्यात्। द्वैतमात्रस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमेव सिद्धान्त्यभिप्रेतम् औष्ण्यस्य तादृशप्रतियोगित्वाङ्गीकारे अस्मत्साहायकमेवाचरितं भवेदिति महत् कौतुकम्। यदि औष्ण्यं वह्नौ व्यवहारतोऽपि नास्तीत्यभिप्रायः तर्हि व्यवहारकालाबाध्यग्राहि वह्न्यौष्ण्यप्रत्यक्षं बाधकं भवेत् इति न अनौष्ण्यस्य तात्त्विकत्वसिद्धिः। एतेन शैत्यानुमानं व्याख्यातमिति वह्निः शीतः कृतकत्वात् घटवत् इत्यनुमानेन वह्नौ तात्त्विकशीतत्वमनुमीयते। अतो न औष्ण्यग्राहिप्रत्यक्षेण बाधः। अत्रापि औष्ण्यस्य तत्त्वतो निषेधे अद्वैते पर्यवसानम् औष्ण्यस्य व्यवहारतो निषेधे पूर्ववत् प्रत्यक्षबाधः। एवमादित्ययूपभेदस्य तत्त्वतो व्यवहारतो वा निषेधे योज्यमिति आदित्यो यूप इति श्रुतिः यूपे तात्त्विकादित्यतां यदि प्रतिपादयति तर्हि यूपे आदित्यभेदस्तत्त्वतो नास्ति तथा च भेदमात्रनिषेधेन अद्वैतपर्यवसानमस्माकमिष्टमेव त्वयापि आचरितं भवेत्। व्यवहारतोऽपि भेदस्य निषेधे व्यवहारकालाबाध्यग्राहिप्रत्यक्षेण बाधः स्यात् ॥३॥

४—सिद्धान्तरहस्यमाहाचार्यः—श्रुतेरन्यशेषतया आदित्ययूपाभेदपरत्वाभावेन परीक्षितप्रत्यक्षविरोधेन गौणार्थतया स्तावकत्वोपपत्तेः च।

साम्यापादनमपास्तम् । न च अनुमितिसिद्धमिथ्यात्वग्राहकत्वे सत्यद्वैत-श्रुतिरनुवादिका स्यात् यथा 'अग्निर्हिमस्य भेषज' मित्यादिश्रुतिः प्रमाणान्तरगृहीतहिमनिवारणशक्त्यनुवादिका इति वाच्यम्; स्वस्वचमत्कारानुसारिणोऽनुमानस्य सकलसाधारण्याभावेन तस्य श्रुत्यनुवादकत्वाप्रयोजकत्वात् । तदुक्तं—तर्काप्रतिष्ठानादित्यत्र वाचस्पतिमिश्रैः—

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ इति ।

दृष्टान्तीकृतश्रुतौ तु हिमनिवृत्तिकारणताया वह्नौ सर्वसाधारण-प्रत्यक्षार्थापत्तिभ्याम् अवसेयत्वात् वैषम्यम् । तस्मान्मिथ्यात्वानुमानस्य न वह्निशैत्यानुमितिसाम्यम् ॥४॥

इति मिथ्यानुमानस्य शैत्यानुमितिसाम्यभङ्गः ।

---

अत एव तात्त्विकादित्यतां यूपस्य इत्यादिना अद्वैतश्रुतेः आदित्यो यूप इत्यादिश्रुतिसाम्यापादनमपास्तम् । यूपे पशुं बध्नातीति विधेः शेषतया श्रुतस्य आदित्यो यूप इत्यर्थवादस्य विधिस्तुतितात्पर्यकस्य आदित्ययूपाभेदे तात्पर्याभावेन श्रुतेरतात्पर्यविषयीभूते आदित्ययूपाभेदे परीक्षितप्रत्यक्षाविरोधेन श्रुतेर्गौणार्थकतया विधिस्तावकत्वोपपत्तेः । अद्वैतश्रुतेरद्वैते षड्विधतात्पर्यनिर्णायकलिंगोपेतत्वात् श्रुतेः परमतात्पर्यविषयीभूते अद्वैते बाधकप्रमाणानामाभासत्वमेव । सतात्पर्यकनिस्तात्पर्यकश्रुत्योः साम्यापादनं केवलं मौढ्यमेवाविष्करोतीति भावः । अद्वैतश्रुतेरनुवादकत्वं शंकते—न च अनुमितिसिद्धमिथ्यात्वग्राहकत्वे सत्यद्वैतश्रुतिरनुवादिका स्यात् यथा अग्निर्हिमस्य भेषजमित्यादिश्रुतिः प्रमाणान्तरगृहीतहिमनिवारणशक्त्यनुवादिका इति वाच्यम् स्वस्वचमत्कारानुसारिणोऽनुमानस्य सकलसाधारण्याभावेन तस्य श्रुत्यनुवादकत्वाप्रयोजकत्वात् । तदुक्तं तर्काप्रतिष्ठानादित्यत्र वाचस्पतिमिश्रैः—

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥इति॥

दृष्टान्तीकृतश्रुतौ तु हिमनिवृत्तिकारणताया वह्नौ सर्वसाधारणप्रत्यक्षा-

र्थापत्तिभ्यामवसेयत्वाद् वैषम्यम्। तस्मान्मिथ्यात्वानुमानस्य न वह्नि-शैत्यानुमितिसाम्यम्।

अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वात् एकमेवाद्वितीयं ब्रह्मेत्यादिश्रुत्या जायमाने अद्वैतत्वोपलक्षितब्रह्मनिर्विकल्पकनिश्चये ब्रह्मणि द्वैताभावविशिष्टबुद्धेर्द्वार-त्वात् तस्याश्च निषेधत्वे प्राप्तिपूर्वकत्वेन द्वैतवति ब्रह्मणि द्वैतवत्त्वकालावच्छेदेन द्वैताभाववत्त्वविषयकत्वात् द्वैतमिथ्यात्वसिद्धिपूर्विकैवाद्वैतसिद्धिः, द्वैतमिथ्यात्वसिद्धा-वेव द्वैताभावोपलक्षितब्रह्मनिर्विकल्पकनिश्चयः सम्भवति। द्वैतमिथ्यात्वसिद्धिश्च मिथ्यात्वानुमितिरूपैव। तथा च अनुमितिसिद्धद्वैतमिथ्यात्वग्राहिका अद्वैतश्रुतिर-नुवादिनी स्यात् यथा प्रमाणान्तरसिद्धहिमनिवारणशक्तेरनुवादिका अग्निर्हिमस्य भेषजमिति श्रुतिः। तथा च अनुवादिनी अद्वैतश्रुतिर्न स्वार्थे तात्पर्यवती तथा च अर्थवादवाक्यात् श्रुतेर्न वैलक्षण्यम्। सिद्धान्तमाहाचार्यः—न अनुमितिसिद्धमिथ्यात्वानुवादिनी अद्वैतश्रुतिर्भवितुमर्हति अनुमानस्य सकल-साधारण्याभावात् स्वस्वचमत्कारानुसारित्वाद् अनुमानस्य सर्वान् प्रति निर्दोषत्वै-कवाक्यत्वाभावाद्। अनुमानस्य दूषणभूषणादि प्रयोक्तुर्बुद्धिप्रतिभादिकारणकलापम-पेक्षते। अतोऽनुमानस्य सकलसाधारण्यं नास्ति। यथा इदमेव मिथ्यात्वानु-मानं द्वैतवादिनो दूषयन्तो नानुमन्यन्ते। अतो मिथ्यात्वानुमानसिद्धमद्वैतश्रुतिर्ना-नुवदति। अतः अद्वैतश्रुतेरनुवादकत्वे प्रयोजकं न मिथ्यात्वानुमानमिति भावः। अनुमानं स्वस्वचमत्कारानुसारीत्यत्र सूत्राभियुक्तवचने प्रमाणयति—तदुक्तमिति। तर्काप्रतिष्ठानादिति ब्रह्मसूत्रेण तर्कस्य—अनुमानस्य अप्रतिष्ठितत्वं सर्वान् प्रति निर्दो-षत्वैकवाक्येन अर्थसाधकत्वं नास्तीति प्रतिपाद्यते। अस्य सूत्रस्य व्याख्यानावसरे भामत्यां वाचस्पतिः ब्रह्मवित्प्रकाण्डस्य भगवतो भर्तृहरेर्वाक्यपदीयश्लोकमुदाजहार "यत्नेनानुमितोऽप्यर्थः" इत्यादि। स्पष्टोऽर्थः। अत्र भाष्यकारेणाप्युक्तं कैश्चित् अभि-युक्तैर्यत्नेनोत्प्रेक्षितास्तर्काः अभियुक्ततरैरन्यैराभाष्यमाणा दृश्यन्ते तैरपि उत्प्रेक्षिताः सन्तः ततोऽन्यैराभाष्यन्ते इति न प्रतिष्ठितत्वम् तर्काणां शक्यमाश्रयितुम् [२।१। ११ सू०]। अग्निर्हिमस्य भेषजमिति दृष्टान्तीकृतश्रुतौ हिमनिवृत्तिकारणताया वह्नौ सर्वसाधारणप्रत्यक्षार्थापत्तिभ्यामवसेयत्वात् वैषम्यम्। स्वभाववादे कारणताया अस्वीकारात्, कारणतायाः सर्वसाधारणप्रत्यक्षावसेयत्वाभावात् हिमविरुद्धस्वभावतायाः

सर्वसाधारणप्रत्यक्षावसेयतायाः सम्भवात् स एव हिमनिवृत्तिकारणतायाः इत्यस्यार्थो वेदितव्यः। तथा च मिथ्यात्वानुमित्या अद्वैतश्रुतेर्नानुवादकता हिमविरुद्धस्वभावतायाः सर्वसाधारणप्रत्यक्षावसेयत्वात् तेन अग्निर्हिमस्य भेषजमिति श्रुतेरनुवादकत्वमेवेति सिद्धम्। तस्मात् मिथ्यात्वानुमितेः वह्निशैत्यानुमितिवैषम्यमेव ॥४॥

इति श्रीमन्महामहामहोपाध्यायश्रीलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायाम् अद्वैतसिद्धिटीकायां बालबोधिन्यां मिथ्यात्वानुमानस्य वह्निशैत्यानुमितिसाम्यभङ्गविवरणं समाप्तम्।

## अथ प्रत्यक्षस्य लिंगाद्यबाध्यत्वे बाधकम्

किञ्च परीक्षितत्वेनैव प्राबल्यं, नोपजीव्यत्वादिना; अनुमानशब्द-बाध्यत्वस्य प्रत्यक्षेऽपि दर्शनात्। तथा हि—इदं रजतमितिप्रत्यक्षस्या-नुमानाप्तवचनाभ्याम्, नभोनैल्यप्रत्यक्षस्य नीरूपत्वग्राहकानुमानेन, गौरोऽहमित्यस्याहमिहैवास्मि सदने जानानः इत्यस्य चन्द्रप्रादेशिक-त्वप्रत्यक्षस्य च अनुमानागमाभ्यां पीतः शंखस्तिक्तो गुड इत्यादेश्चानु-मानाप्तवचनाभ्यां बाधो दृश्यते ॥१॥

---

१—प्रत्यक्षस्य सयुक्तिकबलवत्प्रत्यक्षबाध्यत्वमेव न तु युक्त्या, तथा च प्रपञ्चसत्योग्राहकं प्रत्यक्षं नानुमानादिरूपया युक्त्या बाध्यते; तथा च प्रपञ्च-मिथ्यात्वानुमानेन प्रपञ्चसत्यग्राहिप्रत्यक्षं न बाध्यते, तथा च अद्वैतासिद्धिः द्वैत-सत्यत्वसिद्धिश्चेति पूर्वपक्षिणोऽभिमानः। अतः पूर्वपक्षिणा प्रत्यक्षस्यैव सर्वतो बलवत्त्वव्यवस्थापने प्रयत्यते। आह च पूर्वपक्षी "इदं रूप्यमिति प्रत्यक्षमपि नेदं रूप्यमिति सयुक्तिकबलवत्प्रत्यक्षेण बाध्यं न तु युक्त्यैव" इति पूर्वपक्षिमतप्रत्या-ख्यानाय आचार्यः पूर्वपक्षमनुपस्थाप्य सिद्धान्तमुखेनैव प्रकरणमारभते किञ्च परीक्षितत्वेनैव प्राबल्यं नोपजीव्यत्वादिना अनुमानशब्दबाध्यत्वस्य प्रत्यक्षेऽपि दर्शनात्। तथा हि इदं रजतमितिप्रत्यक्षस्यानुमानाप्तवचना-भ्यां नभोनैल्यप्रत्यक्षस्य नीरूपत्वग्राहकानुमानेन गौरोऽहमित्यस्य अह-मिहैवास्मि सदने जानानः इत्यस्य, चन्द्रप्रादेशिकत्वप्रत्यक्षस्य च अनुमा-नागमाभ्याम्, पीतः शंखस्तिक्तो गुड इत्यादेश्चानुमानाप्तवचनाभ्यां बाधो दृश्यते। प्रवृत्तिसंवादादिरूपपरीक्षया परीक्षितमानस्य परीक्षितत्वेन प्राब-ल्यम्, न तु यथाकथञ्चित् उपजीव्यत्वादिना। यतः, प्रत्यक्षेऽपि अनुमानशब्द-बाध्यत्वदर्शनात्। प्रत्यक्षे अनुमानशब्दबाध्यत्वं क्व दृष्टमित्यत आह—तथा हीति। इदं रजतमितिभ्रमात्मकप्रत्यक्षस्यानुमानाप्तवचनाभ्यां बाध्यत्वदर्शनात्। एवं नभो-नैल्यप्रत्यक्षस्य नभसो नीरूपत्वग्राहकानुमानेन बाध्यत्वदर्शनात्। गौरोहमित्यादि-प्रत्यक्षस्य "अहमिहैवास्मि सदने जानानः" इति प्रत्यक्षस्य चन्द्रप्रादेशिकत्व-

ननु साक्षात्कारिभ्रमे साक्षात् विशेषदर्शनमेव विरोधीत्यभ्युपेयम्; अन्यथा परोक्षप्रमाया अपरोक्षभ्रमनिवर्तकत्वोपपत्तौ वेदान्तवाक्यानाम् अपरोक्षज्ञानजनकत्वव्युत्पादनप्रयासो व्यर्थः स्यादिति चेत् ॥२॥

न; "नायं सर्पः" इत्यादिवाक्यादिना सविलासाज्ञाननिवृत्त्यभावेऽपि भ्रमगताप्रमाणत्वज्ञापनेन भ्रमप्रमाणत्वबुद्धेः तद्विषयसत्यताबुद्धेश्च निवर्तनात्, तावता च भ्रमनिवर्तकत्वव्यपदेशात्, भ्रमे प्रामाण्यविभ्र-

---

प्रत्यक्षस्य चानुमानागमाभ्यां बाध्यत्वदर्शनात्। पीतः शंखस्तिक्तो गुड इत्यादेश्च प्रत्यक्षस्यानुमानाप्तवचनाभ्यां बाध्यत्वदर्शनाच्च। प्रदर्शितेषु स्थलेषु परीक्षितानुमानाप्तवचनाभ्यां प्रत्यक्षस्य बाध्यत्वदर्शनात् प्रत्यक्षमनुमानागमाभ्यां न बाध्यत इति पूर्वपक्ष्युक्तमसंगतमेव ॥१॥

२—पूर्वपक्षी शंकते—ननु साक्षत्कारिभ्रमे साक्षात्कारिविशेषदर्शनमेव विरोधीत्यभ्युपेयम्। अन्यथा परोक्षप्रमाया अपरोक्षभ्रमनिवर्तकत्वोपपत्तौ वेदान्तवाक्यानामपरोक्षज्ञानजनकत्वव्युत्पादनप्रयासो व्यर्थः स्यात् इति चेत्? साक्षात्कारिभ्रमस्य अनुमानागमाभ्यां बाध्यत्वमुक्तं सिद्धान्तिना। तदसहमानः पूर्वपक्षी शंकते—साक्षात्कारिभ्रमे साक्षात्कारिविशेषदर्शनमेव विरोधि। न तु अनुमानागमौ विरोधिनौ। कुत एवमिति चेत् इत्यत आह—परोक्षप्रामाया अपरोक्षभ्रमनिवर्तकत्वसम्भवे वेदान्तवाक्यानामपरोक्षज्ञानजनकत्वव्युत्पादनं व्यर्थमेव स्यात्। वाक्यानां परोक्षज्ञानजनकत्वस्वाभाव्येऽपि अद्वैतवेदान्तिभिः वेदान्तमहावाक्यादपरोक्षज्ञानमेवोत्पद्यते इति यत् समर्थितं तदपि व्यर्थमेव स्यात, यदि परोक्षप्रमया अपरोक्षभ्रमनिवृत्तिः स्यात्। जीवब्रह्मभेदभ्रान्तिः साक्षात्काररूपा। तस्या भ्रान्तेर्निवर्तनं परोक्षप्रमया न भवितुमर्हति, इत्यत एवाद्वैतवेदान्तिभिः वेदान्तमहावाक्यस्यापरोक्षप्रमाजनकत्वं व्युपादितम्। परोक्षप्रमया तन्निवर्तनसम्भवे शब्दस्वाभाव्यं मुक्त्वा अपरोक्षप्रमाजनकत्वव्युत्पादनं निरर्थकमेव स्यात ॥२॥

३—तादृशव्युत्पादनं न व्यर्थमित्याह सिद्धान्ती—न, नायं सर्प इत्यादिवाक्यादिना सविलासाज्ञाननिवृत्त्यभावेऽपि भ्रमगताप्रमाणत्वज्ञापनेन भ्रमप्रमाणत्वबुद्धेः तद्विषयसत्यताबुद्धेश्च निवर्तनात् तावता

मस्य तद्विषयसत्यताविभ्रमस्य च परोक्षत्वेनापरोक्षबाधानपेक्षत्वात्। न हि दुष्टकरणाजन्यत्वम् अबाधितविषयत्वं वा प्रामाण्यं कस्यचित् प्रत्यक्षम्, न वा सर्वदेशसर्वकालसर्वपुरुषाबाध्यत्वरूपं सत्यत्वम्। अतस्तयोः परोक्षप्रमाबाध्यत्वमुचितमेव। तयोश्च बाधितयोः रजतादिभ्रमः स्वरूपेण सन्नपि स्वकार्याक्षमत्वाद् असन्निवेति बाधित इत्युच्यते इत्यनवद्यम् ॥३॥

---

च भ्रमनिवर्तकत्वव्यपदेशात्। भ्रमे प्रामाण्यविभ्रस्य तद्विषये सत्यताविभ्रमस्य च परोक्षत्वेन अपरोक्षबाधानपेक्षत्वात्। न हि दुष्टकरणाजन्यत्वमबाधितविषयत्वं वा प्रामाण्यम् कस्यचित् प्रत्यक्षं न वा सर्वदेशसर्वकालसर्वपुरुषाबाध्यत्वरूपं सत्यत्वम्। अतस्तयोः परोक्षप्रमाबाध्यत्वमुचितमेव। तयोर्बाधितयोः रजतादिभ्रमः स्वरूपेण सन्नपि स्वकार्याक्षमत्वादसन्निवेति बाधित इत्युच्यते इत्यनवद्यम्। अयं भावः—रज्जुत्वप्रकारिका अविद्या अध्यस्तसर्पस्य सर्पज्ञानाभासस्य उपादानं रज्जुतत्त्वसाक्षात्कारेण अविद्यायां निवर्तितायां तदुपादानकसर्पादिकं निवर्तते। रज्जुविषयकपरीक्षितपरोक्षज्ञानेन नायं सर्प इत्याद्याप्तवाक्यजनितेन स्वकार्याविद्याया अनिवृत्तावपि सर्पभ्रमज्ञानगताप्रमात्वज्ञापनेन भ्रमगतप्रमात्वबुद्धेः सर्पभ्रमज्ञानविषयसर्पस्य सत्यताबुद्धेश्च निवर्तनात् परोक्षतत्त्वज्ञानस्य भ्रमनिवर्तकत्वव्यपदेशोपपत्तेः। भ्रमज्ञाने प्रमात्वाभावेऽपि तस्मिन् प्रमात्वभ्रमस्य भ्रमज्ञानविषये सर्पादौ सत्यत्वभ्रमस्य च परोक्षत्वेन परोक्षबाधेनैव निवृत्तेः परोक्षभ्रमस्य निवृत्तावपरोक्षबाधानपेक्षणात्। भ्रमे प्रमात्वभ्रमः भ्रमविषये सत्यत्वभ्रमश्च परोक्ष एव इति कुतः इत्यत आह नहि दुष्टकरणाजन्यत्वमिति दुष्टकरणाजन्यं ज्ञानम् अबाधितविषयकं वा ज्ञानं प्रमा, भ्रमे दुष्टकरणाजन्यत्वज्ञानम् अबाधितविषयकत्वज्ञानं वा अपरोक्षं भवितुमर्हति एवं भ्रमविषयसत्यत्वभ्रमोऽपि परोक्ष एव न अपरोक्षो भवितुमर्हति इत्याह—सर्वदेशसर्वकालेति। यत्सत्यं तत्सर्वदेशसर्वकालसर्वपुरुषाबाध्यं भवति तादृशाबाध्यत्वज्ञानं न कस्यापि अपरोक्षं भवितुमर्हति, अतः भ्रमे प्रमात्वविभ्रमस्य भ्रमविषये सत्यत्वविभ्रमस्य च परोक्षत्वमेव। परोक्षभ्रमयोः परोक्षप्रमाबाध्यत्वमुचितमेव। तथा च नायं सर्प इत्याप्तवाक्यजनितपरोक्षप्रमया परोक्षभ्रमयोर्निवृत्तिर्युक्तैव।

ननु 'इदं रजतमि'त्यत्र सयुक्तिकं प्रत्यक्षं बाधकं न तु युक्तिमात्रं "गौरोऽहमि"त्यत्रापि मम शरीरमिति बलवत् प्रत्यक्षमेव बाधकम् "अहमिहैवास्मि सदने जानान" इति तु प्रमाणमेव जीवस्य अणुत्वादिति चेन्न; रजताभेदशरीराभेदप्रत्यक्षयोर्जाग्रतोः युक्त्या प्रतिबन्धाक्षमत्वे तद्विपयप्रत्यक्षोत्पत्तेरेवानवकाशात् ।

---

स्वरूपेण भ्रमज्ञानस्य कथं बाध्यत्वमुच्यते इत्यत आह—तयोश्च बाधितयोरित्यादि । भ्रमगतप्रमात्वभ्रमभ्रमविपयसत्यत्वभ्रमयोः बाधितयोः तत्त्वसाक्षात्कारानुदयेन स्वरूपतो विद्यमानस्यापि भ्रमज्ञानस्य स्वोचितप्रवृत्त्यादिकार्याक्षमत्वात् सदपि असदिव इति बाधितम् इत्युच्यते । तथा च पूर्वपक्षिणा यदुक्तं प्रत्यक्षस्य सयुक्तिकबलवत्प्रत्यक्षबाध्यत्वमेव न तु युक्त्या तदसंगतं युक्त्याऽपि प्रत्यक्षस्य बाध्यत्वदर्शनादिति भावः ॥ ३॥

४—पूर्वपक्षी श्रुतमपि अश्रुतवत्कृत्वा पुनः शंकते—ननु इदं रजतमित्यत्र सयुक्तिकं प्रत्यक्षं बाधकं न तु युक्तिमात्रं गौरोऽहमित्यत्रापि मम शरीरमिति बलवत् प्रत्यक्षमेव बाधकमहमिहैवास्मि सदने जानान इति तु प्रमाणमेव जीवस्याणुत्वादिति चेन्न रजताभेदशरीराभेदप्रत्यक्षयोर्जाग्रतोः युक्त्या प्रतिबन्धाक्षमत्वे तद्विपयप्रत्यक्षोत्पत्तेरेवानवकाशात् । परोक्षप्रमाया अपरोक्षभ्रमबाधकत्वम् उपपादितमपि युक्त्या अनुमित्या परोक्षप्रमया अपरोक्षभ्रमो न बाध्यते इति शंकाया अवसर एव नास्ति । यतो युक्तिरपि परोक्षप्रमैव रजताभेदनिश्चये विद्यमानेऽपि रजतत्वाभावव्याप्यवत्त्वानिश्चयरूपा युक्तिरभेदनिश्चयेन अप्रतिबद्ध्यमाना उत्पत्तिमासादयेदेव युक्त्या प्रत्यक्षभ्रमस्योच्छेदाभावेऽपि भ्रमस्य अप्रमात्वज्ञापनेन कार्याक्षमत्वसम्पादनात् भ्रमः स्वरूपेण सन्नपि असन्निवेति युक्त्या बाधित इत्युच्यते । गौरोऽहमिति भ्रमस्य मम शरीरमिति प्रत्यक्षबाधकत्वमेव न भवति । मम शरीरमिति प्रत्यक्षस्य चार्वाकादिसकलपुरुपसाधारणत्वात् देहात्मनोर्भेदाग्राहकत्वात् । अन्यथा मम शरीरमितिवत् मम गौरो मम मनुष्यः मम ब्राह्मणः इत्याद्यपि भेदग्राहिप्रत्यक्षज्ञानं सर्वेपामपि स्यात् । शरीरत्वेन आत्मनि नाध्यासः किन्तु गौरत्वमनुष्यत्वादिरूपैः तद्रूपेणैवाध्यासे भोगविशेषोपपत्तेः, यदि पूर्वपक्षिमते मम शरीरमिति प्रत्यक्षेणैव देहात्मनोर्भेदः

न च तत्र परम्परासम्बन्धेन कर्दमलिप्ते वस्त्रे "नीलं वस्त्रमि"ति-वत् "गौरोऽहमि"तिगौणं; कर्दमवस्त्रयोरिव शरीरात्मनोर्भेदानध्यवसायेन दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। तथा चात्र ऐक्याध्यास एवोचितः ॥४॥

---

सिध्येत् तर्हि मम मनुष्यः मम ब्राह्मण इति भेदप्रत्यक्षज्ञानं कुतो न स्यात् ? कुतो वा न स्यात् नाहं गौरः किन्तु मम गौरः मम शरीमितिवत् ? यादृच्छिक-शब्दोल्लेखमात्रेणैव यदि भेदः सिध्येत् तर्हि मम आत्मा इत्यादिप्रत्यये पूर्व-पक्षिणः का गतिः ? षष्ठ्युल्लेखमात्रेणैव भेदस्य सिद्धत्वात्। देहात्मैक्याध्यासो-पपत्तिप्रकरणे विस्तरेणैतत् उपपादयिष्यते आचार्येण। तथा च मम शरीरमिति प्रत्यक्षं गौरोऽहमिति प्रतीतेर्न बाधकम्। रजताभेदशरीराभेदप्रत्यक्षयोर्विद्यमानयोर्न भेदग्राहिप्रत्यक्षस्योत्पत्तिसम्भवः। युक्त्या अभेदप्रत्यक्षयोः प्रमात्वे बाधिते सति भेदग्राहिप्रत्यक्षस्य उत्पत्तिः सम्भवति। अत एव अभेदग्राहिप्रत्यक्षयोर्जाग्रतोरि-त्युक्तं गृहीतप्रमात्वयोरभेदग्राहिप्रत्यक्षयोर्जाग्रत्त्वं बाधितप्रमात्वयोस्तु सुप्तत्वं भेदग्राहिप्रत्यक्षबाधनाक्षमत्वमेव। अहमिहैवास्मि सदने जानानः इति प्रमाणमेव जीवस्याणुत्वादिति पूर्वपक्षिणा यदुक्तं तदतितुच्छं द्वितीयपरिच्छेदावसाने जीवा-णुत्वखण्डनप्रकरणे जीवाणुत्वस्य खण्डितत्वात्, इहापि अणुत्वखण्डनाय यतिष्यत एव। शंकते—न च तत्र परम्परासम्बन्धेन कर्दमलिप्ते वस्त्रे नीलं वस्त्रमितिवत् गौरोऽहमिति गौणं कर्दमवस्त्रयोरिव शरीरात्मनोर्भेदा-नध्यवसायेन दृष्टान्तदार्ष्टान्तिकयोः वैषम्यात् तथा चात्र ऐक्याध्यास एवोचितः। गौरोऽहमिति प्रतीतेर्भ्रमत्वमभ्युपगम्य तस्य मम शरीरमिति भेदग्रा-हिप्रत्यक्षेण बाधितत्वमुक्त्वा पुनः गौरोऽहमिति प्रतीतिर्न भ्रमः किन्तु गौरोऽह-मिति गौण्या प्रयोगः इत्याह—परम्परासम्बन्धेन कर्दमलिप्तेत्यादि। कर्दमवस्त्रयो-र्भिन्नतयावभासात् नीलं वस्त्रम् इति गौणः प्रयोगः सम्भवति, शरीरात्मनोस्तु भेदानवभासात् न गौणः किन्तु गौरोऽहम् इत्यैक्याध्यास एव। उक्तं च भामत्याम् अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तते इति यत्र प्रयोक्तृप्रतिपत्रोः संप्रतिपत्तिः स गौणः स च भेदप्रत्ययःपुरःसरः न तु अहंकारस्य मुख्योऽर्थो निर्लुठितगर्भतया देहादिभ्यो भिन्नोऽनुभूयते येन परशब्दः शरीरादौ गौणो भवेत्। तत् सिद्धं गौणत्वम् उभयदर्शिनो गौणमुख्यविवेकविज्ञानेन व्याप्तं तदिह व्यापकं विवेकज्ञानं निवर्तमानं गौणतामपि निवर्तयतीति ॥४॥

एवञ्च उष्णं जलमित्यत्रापि यदि कर्दमवस्त्रयोरिव तोयतेजसोर्भेदग्रहः, तदा गौणतैव। यदि च शरीरात्मवत् भेदानध्यवसायस्तदाऽध्यास एव; तथा च युक्तिबाध्यमेव इति तदप्युदाहरणम्। यत्तु अहमिहैवेति प्रमाणमित्युक्तं तन्न; आत्मन "आकाशवत् सर्वगतश्च नित्य" इति सर्वगतत्वेन इहैवेति व्यवच्छेदस्य अप्रामाणिकत्वात्। न च जीवोऽणुः; युगपदेव पादशिरोवच्छेदेन सुखदुःखानुभवात्। न ह्येकोऽणुः एकदा व्यवहितदेशद्वयावच्छिन्नो भवति। न च युगपत्प्रतीतिर्भ्रमः उत्सर्गसिद्धप्रामाण्यपरित्यागे बीजाभावात्। विस्तरेण चैतदग्रे वक्ष्यामः ॥५॥

---

५—एवञ्च उष्णं जलमित्यत्रापि यदि कर्दमवस्त्रयोरिव तोयतेजसोर्भेदग्रहः, तदा गौणतैव। यदि च शरीरात्मवत् भेदानध्यवसायस्तदाऽध्यास एव; तथा च युक्तिबाध्यमेव इति तदप्युदाहरणम् उष्णं जलमिति स्पर्शनभ्रमोऽपि युक्तिबाध्य एव जलत्वेन शीतस्पर्शानुमानात्। यदि तोयतेजसोर्भेदग्रहः तदा न भ्रमः किन्तु गौणत्वमेव। भेदास्फुरणेऽध्यास एव युक्तिबाध्य इति तदपि प्रत्यक्षस्य युक्तिबाध्यत्वे उदाहरणम्। यत्तु अहम् इहैवेति प्रमाणमित्युक्तं तन्न आत्मनः आकाशवत् सर्वगतश्च नित्य इति सर्वगतत्वेन इहैवेतिव्यवच्छेदस्य अप्रामाणिकत्वात् न च जीवोऽणुः युगपदेव पादशिरोऽवच्छेदेन सुखदुःखानुभवात् न ह्येकोऽणुः एकदा व्यवहितदेशद्वयावच्छिन्नो भवति। न च युगपत् प्रतीतिर्भ्रमः उत्सर्गसिद्धप्रामाण्यपरित्यागे बीजाभावात् विस्तरेण चैतदग्रे वक्ष्यामः। उक्तञ्च भामत्याम् अहमिहैवास्मि सदने जानानः इति सर्वव्यापिनः प्रादेशिकत्वेन ग्रहात्। न च अहंकारप्रामाण्याय देहादिवत् आत्मापि प्रादेशिक इति युक्तं, तदा खल्वयम् अणुपरिमाणो वा स्यात् देहपरिमणो वा? अणुपरिमाणत्वे स्थूलोऽहं दीर्घ इति न च स्यात् इति। आकाशवत् सर्वगतश्च नित्यः [ छन्दो ३।१८। ३ ] इति श्रुत्या आत्मनः सर्वगतत्वावधारणात् सर्वगतस्य इहैवास्मीति व्यवच्छेदप्रतीतेर्भ्रमत्वात्। पूर्वपक्षिमते जीवोऽणुः स च न सम्भवति तन्मते स्थूलोऽहं दीर्घ इति प्रतीतेर्भ्रमत्वमेवेति उक्तम्। नापि जीवस्याणुत्वं सम्भवति युगपदेव पादशिरोऽवच्छेन सुखदुःखानुभवात्। सुशीतलजाह्नवीह्रदावगाहने अत्युष्ण-

ननु नभोनैल्यप्रत्यक्षस्य नीरूपत्वग्राहकानुमानेन न बाधः, लिंगाभावात्, न च परममहत्त्वद्रव्यानारम्भकत्वादेर्लिङ्गत्वं; त्वन्मते असिद्धेः। निष्पर्शत्वं तु तमसि व्यभिचारि। पृथिव्यादित्रयेतरभूतत्वादि च अप्रयोजकं तथा च नीरूपत्वग्राहकसाक्षिप्रत्यक्षमेवं तद्बाधकं वाच्यं न च रूपग्रहणासमर्थस्य साक्षिणः कथं नीरूपत्वग्राहकत्वमिति वाच्यं पिशाचाद्यग्राहकस्यापि चक्षुषः तदभावग्राहकत्ववदुपपत्तेः परेणापि साक्षिणोऽपि रूपवत्तमोग्राहकत्वाभ्युपगमाच्च, अचाक्षुषेऽपि नभसि वायाविव चक्षुषैव रूपाभावग्रहणसम्भवेन चाक्षुषप्रत्यक्षबाधादिति चेत्? ॥६॥

---

ज्वालमुख्याद्यवगाहने च सर्वाङ्गशैत्यौष्ण्यप्रतीतेः सर्वलोकसिद्धत्वात्। आत्मनोऽणुत्वे सर्वांगशैत्याद्यनुभवो युगपन्न स्यात्; न च यौगपद्यप्रतीतेर्भ्रमत्वं प्रतीतेरौत्सर्गिकप्रामाण्यपरित्यागे बीजाभावात्। विस्तरेणैतत् जीवाणुत्वखण्डनप्रकरणे वक्ष्यामः ॥५॥

६—दृष्टान्तान्तरावष्टम्भेन पूर्वपक्षी पुनः शंकते—ननु नभोनैल्यप्रत्यक्षस्य नीरूपत्वग्राहकानुमानेन न बाधः लिंगाभावात् न च परममहत्वद्रव्यानारम्भकत्वादेर्लिंगत्वं त्वन्मते असिद्धेः निःस्पर्शत्वं तु तमसि व्यभिचारि पृथिव्यादित्रयभूतत्वादि च अप्रयोजकं तथा च नीरूपत्वग्राहकसाक्षिप्रत्यक्षमेव तद्बाधकं वाच्यं, न च रूपग्रहणासमर्थस्य साक्षिणः नीरूपत्वग्राहकत्वमिति वाच्यं पिशाचाद्यग्राहकस्यापि चक्षुषस्तदभावग्राहकत्ववदुपपत्तेः परेणापि साक्षिणोऽपि रूपवत्तमोग्राहकत्वाभ्युपगमाच्च। अचाक्षुषेऽपि नभसि वायाविव चक्षुषैव रूपाभावग्रहणसम्भवेन चाक्षुषप्रत्यक्षबाधादिति चेत्? आकाशस्य नीरूपत्वं चक्षुषैव सिध्यति ततो नभोनैल्यप्रत्यक्षं प्रत्यक्षेणैव बाध्यते न तु अनुमानादिना लिंगाद्यभावात् इत्याशयेन पूर्वपक्षी शंकते—ननु नभोनैल्यप्रत्यक्षस्येत्यादि। अनुमापकलिंगाभावेन नभसो नीरूपत्वानुमितिर्न सम्भवति। नीरूपत्वानुमापकलिंगान्याशंक्य निराचष्टे—न च परममहत्त्वद्रव्यानारम्भकत्वादेरिति। नभो नीरूपं परममहत्परिमाणवत्त्वात् द्रव्यानारम्भकत्वात् निष्पर्शत्वात् वायुवत् इत्यनुमानैस्तत्सिद्धिसम्भवमाशंक्य निराचष्टे

न, 'नीलं नभ' इति प्रत्यक्षे जाग्रति रूपाभावग्रहणस्य चक्षुषा साक्षिणा च असम्भवात्। तथा च बलवती युक्तिरेव बाधिका। न च

---

परममहत्वादेस्तन्मतेऽसिद्धेः। अयं भावः—सिद्धान्तिमते ब्रह्मणोऽन्यत्र परममहत्वानङ्गीकारात् भूताकाशपरममहत्त्वस्यासिद्धेः। तथा द्रव्यानारम्भकत्वमपि असिद्धमेव। आकाशाद्वायुरित्याकाशस्य वायुरूपद्रव्यारम्भकत्वाङ्गीकारात्। अन्त्यावयविनि घटादौ व्यभिचारोऽपि द्रष्टव्यः। निष्पर्शत्वस्य तमसि व्यभिचारात्। पृथिव्यादित्रयेतरत्वादिहेतुश्च अप्रयोजकत्वात् अनुकूलतर्काभावात्। तथा च नभोनीरूपत्वग्राहकसाक्षिप्रत्यक्षमेव नभोनैल्यप्रत्यक्षबाधकमेष्टव्यम्। अत्राशंक्य समाधत्ते—ननु कथं नैल्यधियः साक्षिप्रत्यक्षबाधितत्वं तथात्वे साक्षिणा नभसि नीलरूपं नास्तीति प्रतीत्या भाव्यं नचेयं प्रतीतिर्युक्ता येनेन्द्रियेण प्रतियोगी गृह्यते तेनैव तदभावोऽपि गृह्यते इति नियमदर्शनात् अत्रापि अभावप्रतियोगिनीलरूपस्य बाह्यपदार्थस्य साक्षिप्रत्यक्षाविषयत्वात् कथं साक्षिणा तदभावग्रह इति चेन्न अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यतायाः तन्त्रत्वेन सकलतार्किकसम्मतत्वात् प्रतियोगियोग्यत्वस्यातन्त्रत्वात्। यथा प्रतियोगिपिशाचस्य अचाक्षुषत्वेऽपि भेदाधिकरणीभूतस्तम्भस्य प्रत्यक्षत्वमात्रेण स्तम्भः पिशाचो न इति अन्योन्याभावस्य ज्ञानं चक्षुषा भवति एवमिहापि अधिकरणाकाशस्य साक्षिसिद्धत्वात् प्रतियोगिनो नीलस्य साक्ष्ययोग्यत्वेऽपि तदत्यन्ताभावज्ञानं साक्षिणा युक्तमेव। परेणापि अद्वैतवेदान्तिना साक्षिणो रूपवत्तमोग्राहकत्वमभ्युपगतम्। तदुक्तं तत्त्वदीपने—अस्मन्मते सन्तमसस्य न परमाणुकारणत्वं किन्तु अविद्यैव चिदधिष्ठिता तमोरूपेण विवर्तते। इत्याह मूलकारणात् इति। विवरणे उक्तम् आलोकविनाशितस्य तमसः पुनर्मूलकारणादेव झटिति महाविद्युदादिजन्मवत् तज्जन्म सिध्यति। [विवरण पृ० ५५ मद्रास] अचाक्षुषे वायौ यथा रूपाभावः चक्षुषा गृह्यते तथा अचाक्षुषे नभसि रूपाभावः चक्षुषा एव गृह्यतां बाधकाभावादिति भावः। पिशाचभेदस्य चाक्षुषत्वेऽपि रूपात्यन्ताभावोऽतीन्द्रिये नभसि कथं गृह्येत इति शंकाऽपि वायौ रूपात्यन्ताभावग्रहणदृष्टान्तेन समाहिता॥६॥

७—समाधत्ते—न, नीलं नभ इति प्रत्यक्षे जाग्रति रूपाभावग्रहणस्य चक्षुषा साक्षिणा च असम्भवात्, तथा च बलवती युक्तिरेव

लिंगाभावः, चक्षुरन्वयव्यतिरेकानुविधायिरूपाविशेषितप्रतीतिविषयत्वात् रूपवदिति लिंगसम्भवात्। न चाप्रयोजकत्वं; नभो यदि सरूपं स्यात् तदा चक्षुरन्वयव्यतिरेकानुविधायिप्रतीतौ रूपासम्बन्धितया विषयो न स्यात् इति तर्कोपपत्तेः। न च इष्टापत्तिः; सविधे रूपासम्बन्धितया नभसः सिद्धेः सर्वजनसम्मतत्वात्। नभसः साक्षिवेद्यतायामपि चक्षुरन्वयव्यतिरेकानुविधानमवर्जनीयमेव। अन्यथा अन्धस्यापि तद्ग्रहणं स्यात् ॥७॥

---

बाधिका। न च लिंगाभावः, चक्षुरन्वयव्यतिरेकानुविधायिरूपाविशेषितप्रतीतिविषयत्वात् रूपवदिति लिंगसम्भवात्। न च अप्रयोजकत्वं, नभो यदि सरूपं स्यात् तदा चक्षुरन्वयव्यतिरेकानुविधायिप्रतीतौ रूपासम्बन्धितया विषयो न स्यात् इति तर्कोपपत्तेः। न चेष्टापत्तिः; सविधे रूपासम्बन्धितया नभसः सिद्धेः सर्वजनसम्मतत्वात्। नभसः साक्षिवेद्यतायामपि चक्षुरन्वयव्यतिरेकानुविधानमवर्जनीयमेव। अन्यथा अन्धस्यापि तद्ग्रहणं स्यात्। चक्षुषा नभसि रूपाभावग्रहो नैव सम्भवति। वायौ रूपाभावग्रहस्य चाक्षुषत्वेऽपि नीलं नभः इति रूपवत्तमः-प्रत्यक्षे विरोधिनि विद्यमाने रूपाभावग्रहणस्य चक्षुषा साक्षिणा च असम्भवात्। अविद्यमाने विरोधिनि यत् स्यात् विद्यमाने विरोधिनि तन्न स्यात्, वायौ रूपाभाव-प्रत्यक्षे किमपि विरोधि नास्ति। अत्र तु नीलं नभः इति प्रत्यक्षमेव विरोधि। तथा च नभसि रूपाभावग्रहः युक्त एव। बलवती युक्तिः नभसि नीलिमग्रहमपबाध्य नभसो नीरूपत्वं साधयिष्यति। तथा च नीलं नभः इति प्रत्यक्षं केवलं युक्त्यैव बाध्यते युक्तिश्चात्रानुमानं नभसो नीरूपत्वानुमितौ प्रदर्शितलिंगानां दुष्टत्वेऽपि चक्षुरन्वयव्यतिरेकानुविधायिरूपाविशेषितप्रतीतिविषयत्वस्य लिंगत्वात्। तथा च इदमनुमानं फलितं—नभो रूपात्यन्ताभाववत् चक्षुरन्वयव्यतिरेकानुविधायिरूपाविशेषितप्रतीतिविषयत्वात् रूपवत्। यद्यदा चक्षुरन्वयव्यतिरेकानुविधायिप्रतीतौ रूपासम्बन्धितया प्रतीतिविषयो भवति तद्रूपात्यन्ताभाववत् भवति यथा रूपम्। रूपं चक्षुरन्वयव्यतिरेकाविधायिन्यां प्रतीतौ रूपाविशेषितया प्रतीतिविषयो भवति, रूपस्य नीरूपत्वात्, रूपात्यन्ताभाववच्च भवति।

न च पञ्चीकरणात् रूपवदारब्धत्वेन नभसो नीरूपत्वं बाधितमिति वाच्यम्; त्रिवृत्करणपक्षे अस्य दूषणस्यानवकाशात्। पञ्चीकरणपक्षेऽपि अपञ्चीकरणदशायां यस्मिन् भूते यो गुणः स पञ्चीकरणाद् व्यवहार-योग्यो भवति एतावन्मात्राभ्युपगमात् नाकाशे रूपारम्भप्रसंगः ॥८॥

---

एतेन अनुमानेन नभसः रूपात्यन्ताभाववत्त्वसिद्धिः। न तु चाक्षुषप्रत्यक्षेण साक्षि-प्रत्यक्षेण वा। पक्षे एव साध्याभावशंकायां तत्रैव हेतोर्व्यभिचारशंका स्यात्, तदुत्सारकतया प्रयोजकस्तर्कः प्रदर्श्यते—न च अप्रयोजकत्वमित्यादि। नभो यदि सरूपं स्यात्तदा चक्षुरन्वयव्यतिरेकानुविधायिप्रतीतौ नभः रूपासम्बन्धितया विषयो न स्यात् इति व्यभिचारशंकोत्सारकस्तर्कः। रूपासम्बन्धितया विषयो न स्यादित्यापत्तौ इष्टत्वं शंकते। न चेष्टापत्तिः नीलस्य नभसः यदि रूपासम्ब-न्धितया विषयत्वं न भवति तर्हि इष्टापत्तिरेव। तत्राह—सविधे रूपासम्बन्धितया नभसः सिद्धेः सर्वसम्मतत्वात्। सविधे स्वसमीपवर्तिनि देशे रूपासम्बन्धितया नभसः सिद्धेः सर्वसम्मतत्वात्। दूरे नभसि नीलिम्नः प्रतिभासेऽपि समीपे नीरूपमेव नभो भासते। नभसः साक्षिवेद्यत्वं सिद्धान्तेऽङ्गीक्रियते। नभसः साक्षिवेद्यत्वा-भ्युपगमेऽपि चक्षुरन्वयव्यतिरेकानुविधानमवश्यमङ्गीकरणीयम्। चक्षुरन्वयव्यति-रेकानुविधानं विनापि नभसः साक्षिवेद्यत्वेऽन्धस्यापि नभसः साक्षिवेद्यत्वापातात्। चक्षुःसंयोगविशिष्टालोकावच्छिन्ननभः साक्षिवेद्यम्। अन्धस्य तन्न भवितुमर्हति ॥७॥

८—प्रकारान्तरेण पूर्वपक्षी शंकते—न च पञ्चीकरणात् रूपवदा-रब्धत्वेन नभसो नीरूपत्वं बाधितमति वाच्यम्, त्रिवृत्करणपक्षेऽस्य दूषणस्यानवकाशात्। पञ्चीकरणपक्षेऽपि अपञ्चीकरणदशायां यस्मिन् भूते यो गुणः स पञ्चीकरणाद् व्यवहारयोग्यो भवति एतावन्मात्रा-भ्युपगमात् नाकाशे रूपारम्भप्रसंगः। पञ्चानां महाभूतानां पञ्चीकरणेन नभसि रूपस्यापि सत्त्वेन नीरूपत्वानुमानं बाधितमेव। साक्षिप्रत्यक्षत्वं च बाधि-तमेव। त्रिवृत्करणपक्षे आकाशे रूपासिद्ध्या पञ्चीकरणेन इत्युक्तं पूर्वपक्षिणा। उक्तं च कल्पतरौ—

> सम्प्रदायाध्वना पञ्चीकरणं यद्यपि स्थितम्।
> तथापि युक्तियुक्तत्वात् वाचस्पतिमतं शुभम् ॥

न च—"नायं सर्पः" इत्युक्तेऽपि किमेवं वदसि परम् ? अपि पुनः परामृश्य पश्यसि ? इति प्रतिवचनदर्शनात् न शब्दमात्रं रज्जुसर्पादि-भ्रमनिवर्तकं; किन्तु प्रत्यक्षमेवेति वाच्यम्; प्रतिवचनस्थले भ्रमप्रमा-

---

वाचस्पतिना त्रिवृत्करणस्यैव समर्थितत्वात्। "तासां त्रिवृतं त्रिवृतमेकैकं करवाणी"ति श्रुत्या त्रिवृत्करणस्यैव सिद्धत्वात्। अन्ये तु त्रिवृत्करणं पञ्चीकरण-स्याप्युपलक्षणमित्याहुः। एवञ्च पञ्चीकरणपक्षे पञ्चानां भूतानां मिश्रीकरणपक्षे आकाशस्य रूपवत्तेजोजलपृथिव्यात्मकतया रूपवत्त्वसद्भावेन रूपाभावानुमाने बाधः स्यादित्यभिप्रायः।

समाधत्ते—वाचस्पतिमते त्रिवृत्करणस्यैव समर्थितत्वात् नभसि रूपवत्त्वा-सिद्ध्या अनुमानबाधशङ्कैव नोदेति। इत्युक्तम्—त्रिवृत्करणपक्षे अस्य दूषणस्या-नवकाशात्। पञ्चीकरणपक्षेऽपि रूपवद्भूतत्रयारब्धत्वमाकाशे नाङ्गीक्रियते। किन्तु अपञ्चीकरणदशायां यस्मिन्भूते यो गुणः न व्यवहारयोग्यः स एव पञ्चीकरणाद् व्यवहारयोग्यो भवतीत्येतावन्मात्रमेव पञ्चीकरणेनाभ्युपगम्यते। अतः पञ्चीकर-णाद् आकाशे न रूपारम्भप्रसङ्गः। एवं रीत्या आकाशे रूपारम्भे वायावपि रूपार-म्भप्रसंगः। एवं गन्धरसादीनापि वायौ आकाशे चोपलब्धिप्रसंगः ॥८॥

९—पुनः पूर्वपक्षी नायं सर्प इत्याप्तवाक्येन अयं सर्प इति चाक्षुषभ्रमस्य बाध इति प्रागुक्तमसहमानः शंकते—न च नायं सर्प इत्युक्तेऽपि किमेवं वदसि इति प्रतिवचनदर्शनात् न शब्दमात्रं रज्जुसर्पादिभ्रमनिवर्तकं किन्तु प्रत्यक्षमेवेति वाच्यम्। पूर्वपक्षिणा परीक्षितप्रत्यक्षेणैव प्रत्यक्षस्य बाधो-ऽङ्गीक्रियते, न शब्दानुमानादिना। अतः प्रत्यक्षभ्रमस्य अयं सर्प इत्यस्य केवल-शब्दबाध्यत्वे नायं सर्प इति शब्दबाध्यत्वे यत् सिद्धान्तिना उदाहृतं तन्न संगतम्। यतोऽयं सर्प इति भ्रमानन्तरं केनचित् अयं सर्प इत्युक्तेऽपि भ्रान्तः पुरुषस्तमेवं वदति—अदृष्ट्वा एव त्वं केवलमेवं वदसि नायं सर्प इति। त्वं पुनः परामृश्य दृष्ट्वा वद इति भ्रान्तस्य प्रतिवचनदर्शनात् न शब्दमात्रं रज्जुसर्पादिभ्रमनिव-र्तकम्। किन्तु प्रत्यक्षमेव रज्जुसर्पादिभ्रमनिवर्तकम्। इति शंकां समाधत्ते—भ्रान्तपुरुषस्य तादृशप्रतिवचनस्थले नायं सर्प इति वाक्यवक्तुर्भ्रमप्रमादादिशंका-क्रान्तत्वेन दुर्बलतया नायं सर्प इत्यादेर्न भ्रमनिवर्तकत्वम्। यत्र पुनः भ्रमप्रमादादि-

दादिशंकाक्रान्तत्वेन "नायं सर्प" इत्यादेर्दुर्बलतया न भ्रमनिवर्तकत्वम् यत्र तु तादृक्शंकानाक्रान्तत्वम्, तत्र भ्रमनिवर्तकतैव। अत एव तादृक्शंकानाक्रान्ते पित्रादिवचसि नेदृक्प्रतिवचनम्, किन्तु सिद्धवत्-प्रवृत्त्यादिकमेव। ज्वालैक्यप्रत्यक्षमपि एवमेव युक्तिबाध्यम्। न च निर्वापितारोपितस्थले स्पष्टतरभेदप्रत्यक्षबाधितमित्यन्यत्रापि दीर्घेयं न ह्रस्वेति भेदप्रत्यक्षमेव तद्बाधकमिति वाच्यम्; निर्वापितारोपिता-तिरिक्तस्थले तावदयं विचारः तत्र दीर्घेयं न ह्रस्वा इति भेदप्रत्यक्षं वक्तुमशक्यम्; यैव ह्रस्वा सैवेदानीं दीर्घा इति ह्रस्वत्वदीर्घत्वाभ्या-मुपस्थितयोरभेदस्य साक्षात्क्रियमाणत्वात्। तथा च ज्वालाप्रत्य-भिज्ञा युक्तिबाध्यैव। सर्वदा पित्तदूषितनेत्रस्य 'पीतः शंख' इति प्रत्यक्षे चन्द्रप्रादेशिकत्वप्रत्यक्षे च परोक्षातिरिक्तस्य बाधकस्य शंकितुमप्यशक्य-त्वात्, युक्त्यादिबाध्यतैव वक्तव्या। ननु—सर्वत्रैवात्र प्रकारान्तरेण

---

शंकाक्रान्तत्वं नास्ति, तत्र नायं सर्प इत्यादेर्भ्रमनिर्वतकतैव। अत एव भ्रमप्रमादादि-शंकानाक्रान्ते पित्रादिवचने नेदृक् प्रतिवचनम्। किन्तु सर्पाभावं निश्चित्य प्रवृत्त्यादिकमेव इत्याहाचार्यः—प्रतिवचनस्थले भ्रमप्रमादादिशंकाक्रान्त-त्वेन नायं सर्प इत्यादेर्दुर्बलतया न भ्रमनिवर्तकत्वम्। यत्र तु तादृक्-शंकानाक्रान्तत्वं तत्र भ्रमनिवर्तकतैव। अत एव तादृक्शंकानाक्रान्ते पित्रादिवचसि नेदृक् प्रतिवचनम्। किन्तु सिद्धवत्प्रवृत्त्यादिकमेव। नभोनैल्यादिप्रत्यक्षं न प्रत्यक्षबाध्यं किन्तु युक्तिबाध्यमेवेत्युपपाद्य अन्यदपि प्रत्यक्षं युक्तिबाध्यमेव भवति इत्याह—ज्वालैक्यप्रत्यक्षमपि एवमेव युक्ति-बाध्यम्। न च निर्वापितारोपितस्थले स्पष्टतरभेदप्रत्यक्षबाधित-मित्यन्यत्रापि दीर्घेयं न ह्रस्वा इति भेदप्रत्यक्षमेव तद्बाधकमिति वाच्यम् निर्वापितारोपितातिरिक्तस्थले तावदयं विचारः। तत्र दीर्घेयं न ह्रस्वा इति भेदप्रत्यक्षं वक्तुमशक्यम्। यैव ह्रस्वा सैवेदानीं दीर्घा इति ह्रस्व-त्वदीर्घत्वाभ्यामुपस्थितयोरभेदस्य साक्षात्क्रियमाणत्वात्। तथा च ज्वालाप्रत्यभिज्ञा युक्तिबाध्यैव। सर्वदा पित्तदूषितनेत्रस्य पीतः शंख इतिप्रत्यक्षे चन्द्रप्रादेशिकत्वप्रत्यक्षे च परोक्षातिरिक्तस्य बाधकस्य

असत्कल्पे प्रत्यक्षे मानान्तरप्रवृत्तिः। तथा हि द्विविधं ज्ञानं, द्विकोटिकम् एककोटिकं च। अन्त्यमपि द्विविधम् अप्रामाण्यशंकाकलंकितं तदकलंकितञ्च। तत्राद्यौ सर्वप्रमाणावकाशदौ; अर्थापरिच्छेदकत्वात् अप्रामाण्यशंकाकलंकितत्वाच्च। अप्रामाण्यधीकलंकितत्वञ्च द्वेधा भवति दुष्टकरण-

---

शंकितुमप्यशक्यत्वात्, युक्त्यादिबाध्यतैव वक्तव्या। प्रतिक्षणविवरणशीलायाः अतः प्रतिक्षणभिन्नायाः वह्निज्वालाया यत् स्थायित्वप्रत्यक्षं सैवेयं वह्निज्वाला भिन्नासु ज्वालासु ऐक्यप्रत्यक्षं तद् भ्रमरूपमेव। एतत् प्रत्यक्षं युक्त्यैव बाध्यते। निरन्तरप्रवृत्तासु ज्वालासु भेदप्रत्यक्षस्यासम्भवात्। पूर्वपक्षी शंकते—अग्नेर्निर्वापने कृते उपशान्तायां ज्वालायां पुनर्वह्नेः प्रज्वालने कृते दृश्यमाना ज्वाला पूर्वज्वालातो भिन्ना इति प्रत्यक्षेणैव ज्वालासु भेदावधारणमतो ज्वालैक्यप्रत्यक्षं भेदप्रत्यक्षेणैव बाध्यते इति। समाधत्ते—पूर्वपक्षिणा नैवं वाच्यम्। निर्वापितारोपिताग्निस्थले एवं सम्भवेऽपि तदतिरिक्तस्थले का गतिःतदतिरिक्तस्थले एव ज्वालैक्यप्रत्यक्षं युक्त्या बाध्यते वा न वा इति विचारः प्रवृत्तः तत्र तु युक्त्यैव ज्वालैक्यप्रत्यक्षस्य बाधोऽङ्गीकरणीयः सन्ततासु ज्वालासु भेदप्रत्यक्षं वक्तुमशक्यं तत्र दीर्घेयं न ह्रस्वा इति भेदप्रत्यक्षं न भवितुमर्हति। ज्वालाया ह्रस्वत्वदीर्घत्वाभ्यां युक्तत्वेऽपि ज्वालायाः सन्ततत्वात् यैव ह्रस्वा सैवेदानीं दीर्घा इति प्रत्यभिज्ञाप्रत्यक्षेण ह्रस्वत्वदीर्घत्वाभ्यामुपस्थितयोरैक्यस्य साक्षात्क्रियमाणत्वात्। तथा च ज्वालाया ऐक्यप्रत्यभिज्ञा युक्तिबाध्यैव। तैलेन्धनादिक्षयदर्शनात् ज्वालायाः भिन्नत्वमनुमेयम्। किञ्च, सर्वदा पित्तदूषितनेत्रस्य पुरुषस्य सर्वदैव पीतः शंख इति प्रत्यक्षं जायते। तस्य कदापि शुक्लः शंख इति प्रत्यक्षं भवितुं नार्हति। तादृशपुरुषस्य पीतः शंख इति भ्रमः युक्त्यैव बाध्य इत्यवश्यमेव वक्तव्यः। एवमेव चन्द्रप्रादेशिकत्वप्रत्यक्षे बाधकं प्रत्यक्षं न भवितुमर्हति सुविपुलायतनः चन्द्र इति प्रत्यक्षस्य कदापि असम्भवात्। आगमाद्यतिरिक्तबाधकस्य शंकितुमप्यशक्यत्वात्। अतः प्रदर्शितद्विविधभ्रमयोः युक्त्यादिबाध्यतैव वक्तव्या। युक्त्या अबाध्यत्वं प्रत्यक्षस्य दर्शयितुं प्रामाणानां बाध्यबाधकभावमर्यादाम् उपस्थाप्य पूर्वपक्षी शंकते—ननु सर्वत्रैवात्र प्रकारान्तरेण असत्कल्पे प्रत्यक्षे मानान्तरप्रवृत्तिः। तथा हि द्विविधं ज्ञानं द्विकोटिकम् एककोटिकञ्च। अन्त्यमपि द्विविधम् अप्रामाण्य-

कत्वनिश्चयात् अर्थाभावनिश्चयाच्च। तथा च शैलाग्रस्थितविटपीनां प्रादेशिकत्वप्रतीतिर्दूरदोषनिबन्धना दृष्टा इति दूरस्थस्य चन्द्रमसः प्रादेशिकत्वप्रत्ययो दोषनिबन्धन एवेति निर्णीयते। एवमाकाशे समीपे नीरूपत्वनिश्चयात् दूरे रूपवत्त्वधीर्दूरदोषजन्येति प्रागेव निश्चीयते। "पीतः शंख" इत्यादि प्रत्यक्षं तु प्राथमिकपरीक्षितप्रत्यक्षेण "शंखो न पीत" इत्यर्थाभावनिश्चयादप्रामाण्यज्ञानास्कन्दितमेव उत्पद्यते। एवं सवितृसुषिरादिप्रत्यक्षमपि। तथा च चन्द्रप्रादेशिकत्वप्रत्यक्षं दूरादि-

---

शंकाकलंकितं तदकलंकितश्च। तत्राद्यौ सर्वप्रमाणावकाशदौ अर्थापरिच्छेदकत्वात् अप्रामाण्यशंकाकलंकितत्वाच्च। अप्रामाण्यशंकाकलंकितत्वं च द्वेधा भवति दुष्टकरणकत्वनिश्चयात् अर्थाभावनिश्चयाच्च। चन्द्रप्रादेशिकत्वप्रत्यक्षवत् सर्वविधापटुप्रत्यक्षवैलक्षण्यं जगत्सत्यत्वप्रत्यक्ष उपपादयितुं चन्द्रप्रादेशिकत्वादिप्रत्यक्षस्यापटुत्वे अनुमानागमाबाध्यत्वं कथं प्रत्युत अपटुत्वादेव अनुमानागमबाध्यत्वमेव स्यादित्याशंकां परिहरन् ज्ञानप्रभेदं तावदाह— द्विविधं ज्ञानमिति। द्विकोटिकं संशयरूपम् एककोटिकं निश्चयरूपम्, अन्त्यम् एककोटिकं ज्ञानमपि अप्रामाण्यशंकाकलंकितत्वाकलंकितत्वाभ्यां द्विविधम्। तत्र आद्यौ द्विकोटिकाप्रामाण्यशंकाकलंकितौ सर्वप्रमाणावकाशदौ सर्वप्रमाणबाध्यौ। कुतस्तौ बाध्येते इत्यत आह—द्विकोटिकज्ञानस्य अर्थापरिच्छेदकत्वात् संशयरूपतया अर्थानिश्चायकत्वात् अप्रामाण्यशंकाकलंकितस्य शंकितविषयकत्वपर्यवसानात् ज्ञानाप्रामाण्यसंशयात् ज्ञानविषयेऽपि संशय आधीयत इति भावः। अप्रामाण्यशंकाकलंकितत्वञ्च द्वेधा भवति दुष्टकरणजन्यनिश्चयात् अर्थाभावनिश्चयाच्च। उक्तञ्च शावरे भाष्ये—"यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्यः" इति [जै०सू०१।१।५]। प्रदर्शितां व्यवस्थां दृष्टान्तेन विशदयन्नाह—तथा च शैलाग्रस्थितविटपीनां प्रादेशिकत्वप्रतीतिर्दूरदोषनिबन्धना दृष्टा इति दूरस्थस्य चन्द्रमसः प्रादेशिकत्वप्रत्ययो दोषनिबन्धन एवेति निर्णीयते। एवमाकाशे समीपे नीरूपत्वनिश्चयात् दूरे रूपवत्त्वधीर्दूरदोषजन्येति प्रागेव निश्चीयते। 'पीतः शंखः इत्यादिप्रत्यक्षं तु प्राथमिकपरीक्षितप्रत्यक्षेण शंखो न पीत इत्यर्थाभाव-

दोषनिश्चयात् "पीतः शंख" इत्यादिप्रत्यक्षं प्राथमिकार्थाभावनिश्चया- देव बाधितमिति पश्चादागमानुमानादिप्रसर इति न ताभ्यां तद्बाधः। येन हि यस्य भ्रमत्वं ज्ञायते तत्तस्य बाधकमित्युच्यते ॥९॥

न च चन्द्रप्रादेशिकत्वादिप्रत्यक्षस्य आगमादिना भ्रमत्वं ज्ञायते, भ्रमत्वज्ञानोत्तरकालमेव तत्प्रवृत्तेः। अप्रामाण्यज्ञानाकलंकितं तु स्वार्थ

---

निश्चयात् अप्रमाण्यज्ञानास्कन्दितमेव उत्पद्यते। एवं सवितृसुपिरादि- प्रत्यक्षमपि। तथा च चन्द्रप्रादेशिकत्वप्रत्यक्षं दूरादिदोषनिश्चयात्, पीतः शंख इत्यादिप्रत्यक्षं प्राथमिकार्थाभावनिश्चयादेव बाधितमिति पश्चा- दागमानुमानादिप्रसर इति न ताभ्यां तद्बाधः। येन हि यस्य भ्रमत्वं ज्ञाप्यते तत्तस्य बाधकमित्युच्यते। चन्द्रप्रादेशिकत्वप्रत्यक्षस्यागमानुमानाभ्यां बाधितत्वे प्राक् प्रत्यक्षतः एव दूरदोषजन्यत्वनिश्चयाद् अप्रामाण्यग्रहः। ततः परमागमादिना बाधः प्रत्यक्षतः दोषजन्यत्वनिश्चये बाधकागमादीनाम् उदय एव न स्यात् प्रत्यक्षेण दोषजन्यत्वनिश्चयादेव असत्कल्पस्य प्रत्यक्षस्य बाधनाय आगमा- दीनां प्रवृत्तिः। एवं पीतः शंखः इत्यादिप्रत्यक्षमपि परीक्षितप्रत्यक्षेण अर्था- भावनिश्चयात् अप्रामाण्यज्ञानास्कन्दितमेव उत्पद्यते। अतः पश्चादनुमानेन बाध्यते परीक्षितप्रत्यक्षेण अप्रामाण्यानिश्चये बाधकानुमानस्य प्रवृत्तिरेव न स्यात्। एवं सवितृसुपिरादिप्रत्यक्षमपि परीक्षितप्रत्यक्षेण अर्थाभावनिश्चयात् अप्रामाण्य- ज्ञानास्कन्दितम् उत्पद्यते पश्चात् अनुमानादिना बाध्यते। तथा च चन्द्रप्रादेशिकत्वप्रत्यक्षं परीक्षितप्रत्यक्षेण दूरादिदोषनिश्चयात् दोषजन्यत्व- ज्ञानेन अप्रामाण्यनिश्चयात् अप्रमाणप्रत्यक्षबाधनाय एव पश्चात् आगमादीनां प्रवृत्तिः। पीतः शंख इत्यादिप्रत्यक्षं परीक्षितप्रत्यक्षेण अर्थाभावनिश्चयाद् बाधितमेव इति पश्चात् तद्बाधनाय अनुमानादीनां प्रवृत्तिः। परीक्षितप्रत्यक्षेण आगमादिभिरपि बाध्यत्वाविशेषे किं बाधकमिति पृच्छायामाह—"येन हि यस्य भ्रमत्वं ज्ञाप्यते तत्तस्य बाधकमित्युच्यते"। तेन प्रथमतः परीक्षितप्रत्यक्षेणैव भ्रमत्वज्ञापनात् प्रत्यक्षमेव बाधकं नागमादि तेषां भ्रमत्वज्ञापनानन्तरं प्रवृत्तत्वादिति भावः ॥९॥

१०—एतदेव विस्पष्टयन्नाह पूर्वपक्षी—न च चन्द्रप्रादेशिकत्वादि- प्रत्यक्षस्यागमादिना भ्रमत्वं ज्ञायते, भ्रमत्वज्ञानोत्तरकालमेव तत्प्रवृत्तेः।

परिच्छेदकं निःशंकप्रवृत्तिजननयोग्यम्। यथा 'वह्निरुष्ण एव', 'प्रस्तरो-यजमानभिन्न एव' 'घटः सन्नेव' इत्यादि। तन्न अन्यस्य अवकाशदं नान्येन बाध्यम्। नह्यत्र प्रागिव दूरादिदोषधीर्वा, अर्थाभावनिश्चयो वा कोट्यन्तरालम्बित्वं वास्ति। किञ्च क्वचित् प्रत्यक्षं प्रत्यक्षान्तरगौरवात् युक्तिबाध्यं भवतु। क्वचिच्च लिंगादिकं श्रुतिगौरवात् श्रुत्यनुसारि-प्रकरणबाध्यं भवतु। राजामात्य इव राजगौरवेण राजभृत्यबाध्यः। तथापि न युक्तिमात्रस्य प्रकरणमात्रस्य वा प्रत्यक्षलिंगादिबाधकत्वं; प्रत्यक्षाद्यनुसारित्वस्य सर्वत्राभावात्। न हि प्रधानभूताचमनादिपदार्थ-विषयया "आचामेदुपवीती दक्षिणाचार" इत्यादिस्मृत्या पदार्थधर्मभूत-

---

अप्रामाण्यज्ञानाकलंकितं तु स्वार्थपरिच्छेदकं निःशंकप्रवृत्तिजननयोग्यं यथा वह्निरुष्ण एव, प्रस्तरो यजमानभिन्न एव, घटः सन्नेव इत्यादि। तन्न अन्यस्यावकाशदं नान्येन बाध्यम्। नह्यत्र प्रागिव दूरादिदोषधीर्वा अर्थाभावनिश्चयो वा कोट्यन्तरालम्बित्वं वास्ति। पूर्वप्रवृत्तेन परीक्षितप्रत्यक्षेणैव चन्द्रप्रादेशिकत्वप्रत्यक्षस्य दूरदोषजन्यत्वावधारणात् तेनैव प्रत्यक्षेण चन्द्रप्रादेशिकत्व-प्रत्यक्षस्य भ्रमत्वं ज्ञायते नागमादिना, तेषां भ्रमत्वज्ञानानन्तरं प्रवृत्तेः। यद् ज्ञानम् अप्रामाण्यज्ञानाकलंकितं तत् स्वार्थपरिच्छेदकमेव निःशंकप्रवृत्तिजननयोग्यं नान्येन बाध्यते—यथा वह्निरुष्ण एव, प्रस्तरो यजमानभिन्न एव, घटः सन्नेव। न एतानि प्रत्यक्षज्ञानानि अन्येन बाध्यन्ते, प्रपञ्चसत्यत्वप्रत्यक्षं नान्येन बाध्यम् इत्येव व्यवस्थापयितुम् एतावान् विचारप्रपञ्चः प्रवृत्तः। तदत्र पूर्वपक्षिणा स्वयमेव उक्तम्। वह्निरुष्ण एव इत्यादिप्रत्यक्षेषु पूर्वप्रत्यक्षवत् बाध्यत्वौपयिकं किमपि रूपं नास्ति। बाध्यत्वौपयिकानि रूपाण्याह—"दोषधीर्वा, अर्थाभावनिश्चयो वा, कोट्यन्तरालम्बित्वं वा"। यत्रापि प्रत्यक्षं युक्त्या बाध्यते तत्रापि युक्तिः प्रत्यक्षान्तरगौरवादेव प्रत्यक्ष-बाधिका भवति; न तु युक्तिमात्रं बाधकमित्याह पूर्वपक्षी—किञ्च क्वचित् प्रत्यक्षं प्रत्यक्षान्तरगौरवात् युक्तिबाध्यं भवतु क्वचिच्च लिंगादिकं श्रुतिगौरवात् श्रुत्यनुसारिप्रकरणबाध्यं भवतु। राजामात्य इव राजगौ-रवेण राजभृत्यबाध्यः। तथापि न युक्तिमात्रस्य प्रकरणमात्रस्य वा प्रत्यक्षलिंगादिबाधकत्वम्। प्रत्यक्षाद्यनुसारित्वस्य सर्वत्राभावात्।

क्रमादिविषया "वेदं कृत्वा वेदीं करोती"ति श्रुतिर्वेदकरणानन्तरं क्षुत-निमित्तकाचमनोपनिपाते बाध्यते इत्यन्यत्रापि तथा भवितव्यमिति

---

नहि प्रधानभूताचमनादिपदार्थविषयया 'आचामेदुपवीती दक्षिणाचार' इत्यादिस्मृत्या पदार्थधर्मभूतक्रमादिविषया 'वेदं कृत्वा वेदीं करोती'ति श्रुतिर्वेदकरणानन्तरं क्षुतनिमित्तकाचमनोपनिपाते बाध्यते इत्यन्यत्रापि तथा भवितव्यमिति। तत्र क्वचित् युक्त्यापि प्रत्यक्षं बाध्यते तत्रापि न केवल-या युक्त्या किन्तु प्रत्यक्षानुगृहीतया युक्त्या। वस्तुतः प्रत्यक्षस्य सर्वप्रमाणापेक्षया प्रबलस्य युक्तिबाध्यत्वं न भवितुमर्हति। यथा प्रत्यक्षानुगृहीता युक्तिः प्रत्यक्ष-बाधिका एवमेव श्रुतिलिंगवाक्यप्रकरणानां पूर्वं पूर्वं प्रबलम् उत्तरमुत्तरं दुर्बल-मिति स्थितं पूर्वतन्त्रे "श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्र-दि"त्यत्र। यथा लिंगापेक्षया दुर्बलमपि प्रकरणं श्रुत्यनुगृहीतं सत् लिंगस्यापि बाधकं भवति तद्वत् प्रकृतेऽपि प्रत्यक्षापेक्षया दुर्बलाऽपि युक्तिः प्रत्यक्षानुगृहीता प्रत्यक्षस्य बाधिका भवति प्रत्यक्षमहात्म्यात्। यथा राजमाहात्म्येन राजभृत्यः राजामात्यात् दुर्बलोऽपि राजामात्यस्य बाधको भवति। प्रबलतरमाहात्म्यात् दुर्बलोऽपि प्रबलबाधको भवति। तदुक्तं भट्टेन—

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः॥

प्रत्यक्षाननुगृहीतयुक्तिमात्रस्य न प्रत्यक्षबाधकत्वं यथा श्रुत्यननुगृहीतस्य प्रकरणस्य न लिंगबाधकत्वं सर्वत्र युक्तेः प्रत्यक्षानुसारित्वाभावात् न सर्वा युक्तिः प्रत्यक्षबाधिका यथा सर्वत्र प्रकरणं न श्रुत्यनुगृहीतम् इति न सर्वत्र प्रकरणेन लिंगस्य बाधः। प्रधानविषया दुर्बलापि प्रबला अप्रधानविषया प्रबलाऽपि दुर्बला इत्यत्र पूर्वतन्त्रस्थितं निदर्शनमाह पूर्वपक्षी—पदार्थक्रमयोर्मध्ये पदार्थः प्रधानम् अङ्गित्वात् क्रमोऽप्रधानम् अङ्गत्वात् पदार्थाश्रितत्वात् क्रमाणां पदार्थः प्रधानं क्रमोऽ-प्रधानमिति स्थितिः। श्रुतिस्मृत्योर्विरोधे श्रुतिः प्रबला दुर्बला स्मृतिरित्यपि पूर्व-तन्त्रीया स्थितिः। 'वेदं कृत्वा वेदीं करोती'ति श्रुतिः वेदकरणवेदीकरणयोर-व्यवहितपौर्वापर्यमाह क्त्वाप्रत्ययश्रवणात् सम्मार्जनसाधनदर्भमुष्टिर्वेदः वेदकर-णानन्तरं क्षुते जाते क्षुते आचामेत् इति स्मृत्या आचमनं प्राप्तं तत्र स्मृतिविहि-

चेत् ? मैवं यतो युक्तिरेवैषा। यद् यद् दूरस्थाल्पपरिमाणज्ञानं तत्तद् दूरदोषनिबन्धनमप्रमा शैलाग्रस्थितविटप्यल्पपरिमाणज्ञानवदिदमपि तथेति। तथा च एवंरूपया युक्त्या एव चन्द्रप्रादेशिकत्वादिप्रत्यक्षस्य बाधं वदन् युक्त्या न प्रत्यक्षस्य बाधः इत्यनेनाजैषीः परं मन्दबुद्धे मन्दाक्षं न तु परम्। एवं "पीतः शंख" इति प्रत्यक्षेऽपि प्राचीनार्थाभावप्रत्यक्षं न बाधकं तस्येदानीमभावात्। न च तत्स्मृतिर्बाधिका तस्या अनुभवाद्दुर्बलत्वात्। केवलं युक्त्युत्पादने एव सोपयुज्यते। तेन युक्त्यागमाभ्याम् एव उदाहृतस्थलेषु बाधः ॥१०॥

---

ताचमनकरणे श्रौतमानन्तर्यं बाध्येत अकरणे अङ्गवैकल्यात् प्रयोगभ्रंशः। अतः क्षुते स्मार्तमाचमनं करणीयं न वेति संशये आचमनरूपपदार्थविषयत्वात् दुर्बलापि स्मृतिः प्रबला क्रमरूपदुर्बलांगविषयत्वाद् श्रुतिः प्रबलाऽपि दुर्बला अतः प्रधानीभूतपदार्थविषयया स्मृत्या दुर्बलक्रमविषया श्रुतिर्बाध्यते इति सिद्धान्तितं पूर्वतन्त्रे। सिद्धान्तमाह—मैवं यतो युक्तिरेवैषा। यद् यद् दूरस्थाल्पपरिमाणज्ञानं तत्तत् दूरदोषनिबन्धनमप्रमा शैलाग्रस्थितविटप्यल्पपरिमाणज्ञानवदिदमपि तथेति। तथा च एवंरूपया युक्त्या एव चन्द्रप्रादेशिकत्वादिप्रत्यक्षस्य बाधं वदन् युक्त्या न प्रत्यक्षस्य बाध इत्यनेनाजैषीः परं मन्दबुद्धे मन्दाक्षं नतु परम्। एवं पीतः शंख इत्यादिप्रत्यक्षेऽपि प्राचीनार्थाभावप्रत्यक्षं न बाधकं तस्येदानीमभावात्। न च स्मृतिर्बाधिका तस्या अनुभवाद् दुर्बलत्वात्। केवलं युक्त्युत्पादने एव सोपयुज्यते। तेन युक्त्यागमाभ्यामेव उदाहृतस्थलेषु बाधः।

पूर्वपक्षी युक्त्यैव प्रत्यक्षस्य बाधं प्रदर्शयन् युक्त्या प्रत्यक्षं न बाध्यते इति च वदन् जनं धन्धयितुं यतते। एतेन मन्दाक्षो धन्धितोऽपि चक्षुष्मान्न धन्धितो भवेत् इत्याह सिद्धान्ती—युक्तिरेवैषा। त्वदीयवाक्येन युक्तिरेव उपस्थापिता। युक्तिमेव दर्शयति—यद्यदिति। यद् यद् दूरस्थाल्पपरिमाणज्ञानं तत्तत् दूरदोषनिबन्धनमप्रमा इति व्याप्तेर्ग्रहणभूमिं दर्शयति—शैलाग्रस्थितविटप्यल्पपरिमाणज्ञानवदिति। शैलाग्रस्थितविटप्यल्पपरिमाणज्ञानं यथा अप्रमा दूरस्थाल्पपरिमाणज्ञानत्वात् एवमेव दूरस्थचन्द्राल्पपरिमाणज्ञानमपि दूरस्थाल्पपरिमाणज्ञानत्वात् अप्रमा शैलाग्रस्थित-

यत्तु—क्वचित् युक्त्यादेर्बाधकत्वदर्शनमात्रेण सर्वत्र न बाधकत्वं वक्तुं शक्यम् युक्त्यादिबाधकताया अनुस्त्रियमाणप्रत्यक्षगौरवनिबन्धनत्वात् इत्युक्तम् एतदनुक्तोपालम्भनम्। न हि मया क्वचिद्दर्शनमात्रेण युक्तेर्बाधकता सर्वत्रोच्यते। अपि तु चन्द्रप्रादेशिकत्वशंखपीतत्वप्रत्यक्षादौ यावदागमादेर्बाधकताप्रयोजकं दृष्टं तावत्सत्त्वेन। न च तत्र अनुस्त्रियमाणं प्रत्यक्षमस्ति; यद्गौरवेण बाधकतायाम् अन्यथासिद्धिं ब्रूयाः। तस्माच्चन्द्रप्रादेशिकत्वप्रत्यक्षस्य प्रपञ्चसत्यप्रत्यक्षस्य च तुल्यवदेव

---

विटप्यल्पपरिमाणज्ञानवत्। अतो युक्त्यैव चन्द्रप्रादेशिकत्वप्रत्यक्षस्य बाधं वदन् "युक्त्या न प्रत्यक्षस्य बाधः" इति मतं च प्रदर्शयन् मन्दबुद्धे मन्दाक्षमजैपीः। अप्रमात्वव्याप्यदूरस्थाल्पपरिमाणज्ञानत्वनिश्चयात् चन्द्रप्रादेशिकत्वप्रत्यक्षमप्रमेति भावः। युक्तिस्वरूपाज्ञानात् मन्दबुद्धिः पूर्वपक्षी। आगमात् चन्द्रमहापरिमाणत्वज्ञानस्य विरुद्धपरिमाणग्राहिणि प्रत्यक्षे विद्यमाने प्रथमतः अनुत्पत्तावपि आगमतात्पर्यविरुद्धविषयकत्वस्य चन्द्रप्रादेशिकत्वप्रत्यक्षे निश्चयात् तादृशप्रत्यक्षज्ञानस्याप्रमात्वग्रहात् प्रत्यक्षज्ञानस्यागमाबाधकत्वात्। एवं पीतः शंखः इत्यादि अयं शंखो न पीतः शंखत्वात् स्मर्यमाणशंखवत् इत्यनुमानेनैव शंखे पीतिम्नो बाधः। पित्तदोषे जाते शंखे शुक्तिमानुभवस्याऽविद्यमानस्य न बाधकत्वं शुक्तिमस्मरणमपि प्रत्यक्षात् दुर्बलमिति न बाधकं किन्तु प्रदर्शितयुक्तिरेव बाधिका, किन्तु स्मरणम् अनुमाने दृष्टान्तसम्पादकमेव। तेन चन्द्रप्रादेशिकत्वप्रत्यक्षं युक्त्या आगमेन च बाध्यते। पीतः शंख इति प्रत्यक्षं तु युक्त्यैव बाध्यते ॥१०॥

११—यत्तु क्वचित् युक्त्यादेः बाधकत्वदर्शनमात्रेण सर्वत्र न बाधकत्वं वक्तुं शक्यं युक्त्यादिबाधकताया अनुस्त्रियमाणप्रत्यक्षगौरवनिबन्धनत्वात् इत्युक्तम् एतदनुक्तोपालम्भनम्। न हि मया क्वचित् दर्शनमात्रेण युक्तेर्बाधकता सर्वत्रोच्यते। अपि तु चन्द्रप्रादेशिकत्वशंखपीतत्वप्रत्यक्षादौ यावदागमादेर्बाधकताप्रयोजकं दृष्टं तावत्सत्त्वेन। न च तत्र अनुस्त्रियमाणं प्रत्यक्षमस्ति यद्गौरवेण बाधकतायाम् अन्यथासिद्धिं ब्रूयाः। तस्माच्चन्द्रप्रादेशिकत्वप्रत्यक्षस्य

बाध्यता युक्त्यागमयोश्च तुल्यवदेव बाधकता इति। नहि चन्द्रप्रादेशिकत्वप्रत्यक्षेऽपि प्रागेव दुष्टकरणत्वनिश्चयः; नैकट्यस्यापि क्वचिद्दोषत्वेन सर्वत्र परिमाणज्ञानाविश्वासप्रसङ्गात् किन्तु आगमादिना बाधानन्तरमेव; तद्वत्प्रकृतेऽपि मिथ्यात्वसिद्ध्यनन्तरमेवाऽविद्यारूपदोषनिश्चयः। तथा च सर्वात्मना साम्यम्। यत्तु—दृष्टस्य 'वस्तुनो बलवद्दृष्टं' विना अन्यद् बाधकं नास्तीत्युक्तं तत् दुर्बलशब्दलिंगादिविषयम्।

---

प्रपञ्चसत्यप्रत्यक्षस्य च तुल्यवदेव बाध्यता। युक्त्यागमयोश्च तुल्यवदेव बाधकता इति। पूर्वपक्ष्युक्तम् अनुक्तोपलम्भनमात्रम् इति परिहरति सिद्धान्ती—क्वचिद्दर्शनमात्रेण सर्वत्र युक्तेर्बाधकता मया नोच्यते किन्तु चन्द्रप्रादेशिकत्वप्रत्यक्षे शंखपीतत्वप्रत्यक्षे च यावदागमादेः प्रत्यक्षबाधकताप्रयोजकं दृष्टं तावत् स्थलेषु आगमादेः प्रत्यक्षबाधकत्वमङ्गीकरणीयम्। अनुस्रियमाणप्रत्यक्षगौरवेण युक्तेर्न प्रत्यक्षबाधकता प्रदर्शितस्थलयोः बाधके अनुस्रियमाणप्रत्यक्षमेव नास्ति। चन्द्रप्रादेशिकत्वप्रत्यक्षं यथा युक्त्यागमाभ्यां बाध्यते तथैव प्रपञ्चसत्यप्रत्यक्षमपि युक्त्यागमाभ्यां बाध्यते।

नहि चन्द्रप्रादेशिकत्वप्रत्यक्षेऽपि प्रागेव दुष्टकरणत्वनिश्चयः नैकट्यस्यापि क्वचिद्दोषत्वेन सर्वत्र परिमाणज्ञानाविश्वासप्रसङ्गात्। किन्तु आगमादिना बाधानन्तरमेव। तद्वत् प्रकृतेऽपि मिथ्यात्वसिद्ध्यनन्तरमेव अविद्यारूपदोषनिश्चयः। तथा च सर्वात्मना साम्यम्। यत्तु दृष्टस्य वस्तुनो बलवद्दृष्टिं विना अन्यद् बाधकं नास्तीत्युक्तं तत् दुर्बलशब्दलिंगादिविषयम्। शीतसमागमे रात्रिषु तृणाद्युपरिनिपतितहिमकणिकानां निकटस्थेन पुंसा अदृश्यत्वात् तासां परिमाणस्याप्यदृश्यत्वात् तासां प्रत्यक्षे दूरत्वमेव गुणः तेन नैकट्यदूरत्वयोः सर्वत्र गुणदोषत्वयोरनिरूपणात् कुत्रचित् नैकट्यं गुणः कुत्रचिद्दोषः एवं दूरत्वेऽपि एवं चन्द्रप्रादेशिकत्वप्रत्यक्षेऽपि दूरत्वं दोषो गुणो वेत्यनिरूपणात् आगमबाधानन्तरमेव दूरत्वस्य अत्र दोषत्वेन निश्चयात्। आगमबाधात् पूर्वं दूरत्वस्य दोषत्वेन निश्चयासम्भवात्। प्रकृतेऽपि प्रपञ्चस्य युक्त्या मिथ्यात्वसिद्ध्यनन्तरमेव प्रपञ्चसत्यप्रत्यक्षेऽविद्यादोषनिश्चयः। तथा च चन्द्रप्रादेशिकत्वप्रत्यक्षस्य प्रपञ्चसत्यप्रत्यक्षस्य युक्त्यागमबाध्य-

यदप्युक्तं विवरणे यत्राविचारपुरःसरमेव प्रत्यक्षावभासमपि अनुमानादिना बाधितमुच्छिन्नव्यवहारं भवति तत्र तथा भवतु, यत्र पुनर्विचारपदवीमुपारूढयोर्ज्ञानयोर्बलाबलचिन्तया बाधनिश्चयस्तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वसिद्धिरिति तदपि गृहीतप्रामाण्यकशब्दतदुपजीव्यनुमानातिरिक्तयुक्तिविषयम्। एकत्र प्रामाण्यनिश्चये बलाबलचिन्ताया एव अनवकाशात् ॥११॥

इति प्रत्यक्षस्य लिंगाद्यबाध्यत्वे बाधकम्।

---

त्वेन सर्वथा साम्यमेव। यत्तु दृष्टस्य वस्तुनः बलवती दृष्टिरेव बाधिकेति अवधारणं तदपि दुर्बलशब्दलिंगाबाध्यत्वेन। बलवच्छब्दलिंगाभ्याम् अपि दृष्टवस्तुनः बाधः भवतीत्यत्रैव प्रदर्शितत्वात्।

यदप्युक्तं विवरणे यत्राविचारपुरःस्सरमेव प्रत्यक्षावभासमपि अनुमानादिना बाधितमुच्छिन्नव्यवहारं भवति तत्र तथा भवतु, यत्र पुनर्विचारपदवीमुपारूढयोर्ज्ञानयोर्बलाबलचिन्तया बाधनिश्चयस्तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वसिद्धिः' इति तदपि गृहीतप्रामाण्यकशब्दतदुपजीव्यनुमानातिरिक्तयुक्तिविषयम्। एकत्र प्रामाण्यनिश्चये बलाबलचिन्ताया एव अनवकाशात्। प्रकृते शंकितं विवरणोक्तिविरोधं समाधत्ते—नानेन विवरणवाक्येन गृहीतप्रामाण्यकः शब्दो न बाधकः न वा तदुपजीव्यनुमानं न बाधकमिति प्रतिपाद्यते। किन्तु अगृहीतप्रामाण्यकशब्देन तदुपजीविना [ तदनुपजीविना ] अनुमानेन वा न बाध्यते इत्यभिप्रायो विवरणकृताम् बाध्यबाधकयोरेकत्र प्रामाण्यनिश्चये बलाबलचिन्तैव न सम्भवति। बाध्यबाधकमानयोरेकत्र प्रामाण्यनिश्चये मानयोर्बाध्यबाधकचिन्ताया अवकाशो न स्यात् ॥११॥

इति श्रीमन्महामहोपाध्यायश्रीलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यां प्रत्यक्षस्य लिंगाद्यबाध्यत्वे बाधकविवरणं समाप्तम्॥

## अथ भाविबाधोपपत्तिः

एवं च भाविबाधनिश्चयाच्चेति यदुक्तं तदप्युपपन्नमेव; प्रकारान्तरेणाबाधितस्य चन्द्रप्रादेशिकत्वप्रत्यक्षस्य यथाऽऽगमेन बाधः, तथा प्रकारान्तरेणाबाधितस्य 'सन् घट' इत्यादिप्रत्यक्षस्य मिथ्यात्वबोधकागमेन बाध इति निर्णयात्। एवं च—भाविबाधशंकामादाय यत्परैर्दूषणमुक्तं तदनुक्तोपालम्भनतयाऽपास्तम्। वस्तुतस्तु बाधशंकामादा-

---

१—द्वैतग्राहिप्रत्यक्षस्य स्वतःप्राप्ततत्त्वावेदनरूपप्रामाण्यस्य द्वैतमिथ्यात्वग्राहकानुमानेन बाधात् अद्वैतागमेन च बाधात् त्यागमुक्त्वा भाविबाधकमानबाधादपि द्वैतग्राहिप्रत्यक्षस्याप्रामाण्यमेवेति प्रतिपादयितुम् एवञ्च भाविबाधनिश्चयाच्च इति यदुक्तं तदपि उपपन्नमेवेति दर्शयति। प्रपञ्चमिथ्यात्वबोधकागमेन प्रपञ्चग्राहिप्रत्यक्षस्य बाधनिश्चयाच्चेति यदुक्तमाचार्यैस्तदप्युपपन्नमेवेति विशदयन्नाहाचार्यः भाविबाधनिश्चयाच्च। प्रत्यक्षस्यागमेन बाधः क्व दृष्ट इत्याह—प्रकारान्तरेणाबाधितस्य चन्द्रप्रादेशिकत्वप्रत्यक्षस्य यथा आगमेन बाधः स्वल्पपरिमाणत्वेन चन्द्रविषयकप्रत्यक्षस्य चन्द्रस्वल्परिमाणत्वग्राहकप्रत्यक्षस्य चन्द्रमहापरिमाणत्वग्राहकागमेन यथा बाधः तथा प्रकारान्तरेणबाधितस्य सन् घट इत्यादिप्रत्यक्षस्य मिथ्यात्वबोधकागमेन बाधः इति-निर्णयात्। सन् घटः इत्यादिप्रत्यक्षस्य प्रत्यक्षान्तरेण अनुमानेन वा अबाधितस्य नेह नानास्ति किञ्चनेत्याद्यागमेन बाधनिर्णयात् प्रत्यक्षस्यागमेन भाविबाधोपपत्तिः। नेह नानास्ति किञ्चनेत्यादिवाक्यस्य यथा प्रपञ्चमिथ्यात्वप्रतिपादकत्वं तथा व्युत्पादितं शास्त्रारम्भे एव। अग्रे च व्युत्पादयिष्यते। आगमेन प्रपञ्चस्य भाविबाधनिर्णय एव भवति न तु भाविबाधशंकामात्रमिति भावः। एवं च भाविबाधशंकामादाय यत् परैर्दूषणमुक्तं तदनुक्तोपालम्भनतया अपास्तम्। उक्तं च न्यायामृते,—प्रत्यक्षप्रामाण्यस्य त्यागः किमनुमानविरोधादागमविरोधाद्वा भाविबाधशंकामात्रेण वा? नाद्यौ, इत्यादिना अनुमानागमविरोधौ शिथिलया युक्त्या परिहृत्य नापि भाविबाधकशंकामात्रेणेति तृतीय

यापि प्रत्यक्षस्य बाधकतोद्धारः समीचीन एव; प्रत्यक्षशब्दयोः बलाबल-विचारात् प्राक् किमयं शब्द उपचरितार्थः आहोस्वित् प्रत्यक्षमप्रमाण-मिति शंकायाम् उभयोरबाधकत्वप्राप्तौ तात्पर्यलिंगैः श्रूयमाणार्थपरतया निश्चितस्यागमस्योपचरितार्थत्वशंकाव्युदासेन लब्धावकाशत्वसम्भ-वात् ॥१॥

न च शब्दलिंगयोः प्रत्यक्षाबाधकतया प्रत्यक्षान्तरस्याप्रमाणतया

---

इत्युक्तम् । भाविबाधशंकामादाय यत् दूषणमुक्तं न्यायामृते तदनुक्तोपालम्भनमेव । अस्माभिर्भाविबाधशंका न प्रदर्शिता किन्तु भाविबाधनिश्चय एव प्रदर्शितः । तथा च शंकामादाय यत् दूषणमभिहितं तदस्माभिरनुक्तस्योपालम्भनमिति तद-पास्तम्, प्रत्यक्षस्यागमेन भाविबाधनिश्चयात् । वस्तुतस्तु बाधशंकामादायापि प्रत्यक्षस्य बाधकतोद्धारः समीचीन एव । प्रत्यक्षागमयोर्विरोधे बलाबल-विचारात् प्राक् द्वयोः समबलयोरुपनिपाते सन्देहादपि प्रत्यक्षस्य यथा नागमबाध-कत्वं सम्भवति तथा प्रदर्शनं समीचीनमेव । आगमस्य प्रत्यक्षबाधकत्वनिश्चये विचारावसर एव नास्ति । बाधकत्वशंकायां तु प्रत्यक्षस्यागमबाधकत्वोद्धारप्रदर्शनं समीचीनमेव इत्याह आचार्यः—**प्रत्यक्षशब्दयोर्बलाबलविचारात् प्राक् किमयं शब्द उपचरितार्थः अहोस्वित् प्रत्यक्षमप्रमाणमिति शंकायाम् उभयोरबाधकत्वप्राप्तौ तात्पर्यलिंगैः श्रूयमाणार्थपरतया निश्चितस्या-गमस्य उपचरितार्थत्वशंकाव्युदासेन लब्धावकाशत्वसम्भवात्** । यत्र प्रत्यक्षशब्दौ विरुद्ध्येते तत्र कतरत् प्रबलम् इति निर्णयात् प्राक् एषा शंका समुदेति किमयं शब्दो लक्षणादिवृत्त्या स्वार्थप्रतिपादकः अथवा प्रत्यक्षमेवाप्रमाण-मितिशंकायां द्वयोः समबलत्वप्राप्तौ बाध्यबाधकभावानिर्णये शब्दस्य तात्पर्य-निर्णायकलिंगैरुपक्रमादिभिः श्रूयमाणार्थतात्पर्यकत्वे निर्णीते शब्दस्य लक्षणादि-वृत्त्या अर्थप्रतिपादकत्वशंकाया अपगमे शब्दस्य प्रत्यक्षापेक्षया प्राबल्यावधारणात् प्रत्यक्षस्यागमबाधकत्वशंकयैव आगमस्य उपचारितार्थकत्वशंका आपतिता, तात्पर्या-वधारणेन उपचरितार्थकत्वशंकायां निरस्तायां प्रत्यक्षस्यैवाप्रामाण्येन शब्द-बाधकत्वशंका निरस्ता भवति । लब्धावकाशत्वसंम्भवादित्यस्य आगमस्य प्रत्यक्षबाधकत्वावकाशसम्भवादित्यर्थः ॥१॥

शंक्यमानत्वेव अबाधकतया च बाधकसामान्याभावे निश्चिते बाधशंका न युक्तेति वाच्यम् ।

शब्दलिंगयोः प्रत्यक्षबाधकत्वस्य व्यवस्थापितत्वात् प्रत्येकं विशेषाभावनिश्चयेऽपि विशेषाणामियत्तानवधारणदशायां संशयसम्भवात् । प्रत्यक्षस्याप्रमाणतया शंक्यमानत्वेन शंकाविरहोपपादनस्य असम्भवदुक्तिकत्वाच्च ।

---

२—अतीतप्रकरणावष्टम्भेन पूर्वपक्षी शंकते—न च शब्दलिंगयोः प्रत्यक्षाबाधकतया प्रत्यक्षान्तरस्य अप्रमाणतया शंक्यमानत्वेन अबाधकतया च बाधकसामान्याभावे निश्चिते बाधशंका न युक्तेति वाच्यम् । जात्या उपक्रमादिन्यायैश्च प्रबलेन प्रत्यक्षेण विरोधात् न लिंगशब्दयोर्बाधकत्वम् । न्यायामृते प्रत्यक्षस्य जात्या प्राबल्यप्रकरणे अभिहितम्—प्रत्यक्षप्रामाण्यस्य त्यागः किमनुमानविरोधादागविरोधाद्भाविबाधकशंकामात्रेण वा ? इति । तत्र अनुमानागविरोधौ परिहृत्य इदानीं तृतीयमनूद्य दूषयति "प्रत्यक्षान्तरस्य अप्रमाणतया शंक्यमानत्वेने"ति । सिद्धान्तिमते प्रपञ्चप्रत्यक्षस्य यथा अप्रामाण्यं तथा प्रपञ्चप्रत्यक्षबाधकप्रत्यक्षान्तरस्यापि अप्रामाण्यशंकया तेन प्रत्यक्षान्तरेण बाध्यत्वायोगात् । तथा च शब्दलिंगप्रत्यक्षान्तराणां प्रपञ्चप्रत्यक्षस्याबाधकत्वेऽवधारिते प्रपञ्चप्रत्यक्षस्य बाधकसामान्याभावे निश्चिते प्रपञ्चप्रत्यक्षे बाधशंका न युक्ता यावद्विशेषाभावनिश्चयेन सामान्याभावनिश्चयादिति पूर्वपक्षिणाम् आशयः । प्रपञ्चप्रत्यक्षे बाधशंका न युक्तेति यदुक्तं तदसिद्धमित्याह सिद्धान्ती—

शब्दलिंगयोः प्रत्यक्षबाधकत्वस्य व्यवस्थापितत्वात् प्रत्येकं विशेषाभावनिश्चयेऽपि विशेषाणामियत्तानवधारणदशायां संशयसम्भवात् । प्रत्यक्षप्रमाणस्याप्रमाणतया शंक्यमानत्वेन शंकाविरहोपपादनस्य असम्भवदुक्तिकत्वाच्च । प्रत्यक्षस्यानुमानबाध्यत्वप्रकरणे प्रत्यक्षस्यागमबाध्यत्वप्रकरणे च शब्दलिंगयोः प्रत्यक्षबाधकत्वस्योपपादितत्वात् शब्दलिंगयोः प्रत्यक्षाबाधकतयेति यदुक्तं पूर्वपक्षिणा तदत्यन्तमसंगतमेव । किञ्च इयन्ति प्रमाणानि प्रत्यक्षस्य बाधकत्वेन अभिमतानिति प्रत्यक्षबाधकप्रमाणविशे-

अथ एवं–जाग्रदादिज्ञानस्याप्रमात्वे स्वप्नदृष्टस्य शुक्तिरूप्यादेश्च बाधासिद्धौ कथं दृष्टान्तसिद्धिः स्यात् इति चेत्? न, आरोप्यसत्ताधिकसत्ताकविषयत्वेनापेक्षिकप्रमाणत्वेन अन्यूनसत्ताकविषयत्वेन वा बाधकत्वात्। अत एव यदुक्तं बौद्धं प्रति भट्टवार्तिके—

प्रतियोगिनि दृष्टे च जाग्रद्बोधे मृषा भवेत्।
स्वप्नादिदृष्टिरस्माकं तव भेदोऽपि किंकृतः॥

इति तत् संगच्छते ॥२॥

---

पाणामियत्तानवधारणदशायां प्रत्यक्षबाधकत्वेनाभिमतप्रमाणविशेषयोः शब्दलिंगयोः प्रत्यक्षाबाधकत्वनिश्चयेऽपि प्रत्यक्षबाधकप्रमाणविशेषान्तरस्य सम्भाव्यमानत्वेन प्रत्यक्षबाधशंकाया अप्रत्यूहमुत्पत्तेः। प्रपञ्चप्रत्यक्षस्य बाधकशंकाविरहोपपादनम् असम्भवदुक्तिकमेव, प्रपञ्चप्रत्यक्षस्याप्रमाणतया इदानीमपि शंक्यमानत्वात् अप्रमाणतया शंक्यमाने बाधकशंकाविरहो न सम्भवतीति भावः। प्रपञ्चप्रत्यक्षस्याप्रामाण्ये प्रपञ्चमिथ्यात्वानुमाने शुक्तिरजतादेर्दृष्टान्तत्वमेव न सम्भवतीति पूर्वपक्षी शंकते—

अथ एवं जाग्रदादिज्ञानस्याप्रमात्वे स्वप्नदृष्टस्य शुक्तिरूप्यादेश्च बाधासिद्धौ कथं दृष्टान्तसिद्धिः स्यादिति चेत्? शब्दलिंगाभ्यां प्रपञ्चप्रत्यक्षस्य बाधितत्वेन जाग्रत्कालीनप्रपञ्चप्रत्यक्षज्ञानमप्रमा स्यात् अप्रमारूपजाग्रत्प्रत्यक्षेण स्वप्नदृष्टस्य शुक्तिरूप्यादेश्च बाधासिद्धौ अबाधितशुक्तिरजतादेः प्रपञ्चमिथ्यात्वानुमाने दृष्टान्तत्वं न स्यात्। प्रातीतिकव्यावहारिकपारमार्थिकसत्तानां पूर्वपूर्वापेक्षया उत्तरोत्तरसत्ताया अधिकत्वात् प्रातिभासिकरातः स्वप्नदृष्टगजादेः शुक्तिरूप्यादेश्च व्यावहारिकसद्विषयेण जाग्रद्बोधेन बाधात् न दृष्टान्तासिद्धिरित्यभिप्रेत्य सिद्धान्ती समाधत्ते—न, आरोप्यसत्ताधिकसत्ताविषयत्वेनापेक्षितप्रमाणत्वेन अन्यूनसत्ताविषयत्वेन वा बाधकत्वात्। अत एव यदुक्तं बौद्धं प्रति भट्टवार्तिके—

प्रतियोगिनि दृष्टे च जाग्रद्बोधे मृषा भवेत्।
स्वप्नादिदृष्टिरस्माकं तव भेदोऽपि किंकृतः॥

इति तत् संगच्छते। यद्यपि सिद्धान्ते अबाध्यत्वमेव सत्त्वं तथापि प्रतिभासकालमात्राबाध्यत्वेन प्रातिभासिकं सत्त्वं व्यवहारकालमात्राबाध्यत्वेन व्यावहारिकं सत्त्वं सर्वदा अबाध्यत्वेन पारमार्थिकं सत्त्वमिति सत्त्वत्रैविध्याङ्गीकारात् सत्त्वस्य न्यूनाधिकभावो विद्यते। प्रातिभासिकव्यावहारिकसत्त्वयोः बाध्यत्वाविशेषेऽपि प्रतिभासकालव्यवहारकालाबाध्यत्वेन तयोर्वैलक्षण्यात् सत्त्वयोर्न्यूनाधिकभावः। व्यावहारिकसत्त्वविषयकेण जाग्रद्बोधेन प्रातिभासिकबोधापेक्षया अधिकप्रमाणेन स्वप्नदृष्टप्रातिभासिकयोर्बाधान्न दृष्टान्तासंगतिः। प्रातीतिकव्यावहारिकपारमार्थिकसत्त्वानां पूर्वपूर्वापेक्षया उत्तरोत्तमधिकम्। तत्र पल्लवाविद्यावच्छिन्नचित् आद्या सदिदं रजतमित्यादिभ्रमे रजतादिनिष्ठतयां भाति। प्रातीतिके रजते या सत्ता सा पल्लवावच्छिन्ना चिदेव। सर्वत्र चिद्रूपत्रह्मैव सर्वाधिष्ठानं सद्रूपेण भाति—मूलाविद्यावच्छिन्ना चित् व्यावहारिकसत्ये घटः सन् इत्यादिज्ञाने घटादिनिष्ठतया भाति। सदहमित्यादिज्ञाने शुद्धचिद्रूपा सत्ता आत्मगतत्वेन भाति। अतः प्रातीतिकापेक्षया व्यावहारिकम् अधिकसत्ताकं तदपेक्षया पारमार्थिकम्। अधिकसत्ताकविषयस्य ज्ञानस्य बाधकत्वं न्यूनसत्ताकविषयस्य ज्ञानस्य बाध्यत्वञ्चोपपद्यते। स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनात् [ निषेधस्य बाध्यत्वं निषेध्यस्य पारमार्थिकसत्त्वाविरोधित्वे न तन्त्रं न व्याप्यं किन्तु निषेध्यापेक्षया न्यूनसत्ताकत्वमित्यादिद्वितीयमिथ्यात्वलक्षणस्थग्रन्थेन अन्यूनसत्ताविषयकत्वेन ज्ञानस्य बाधकत्वं प्रपञ्चितं तदिहाप्यनुसन्धातव्यम्। ]

एवञ्च यदुक्तं बौद्धं प्रति भट्टवार्तिके तदपि अस्मन्मते संगच्छते इत्याह—प्रतियोगिनि दृष्टे चेत्यादि। भट्टवार्तिकस्यायमर्थः—प्रतियोगिनि विरोधिनि बाधकतायोग्ये स्वाप्नगजादिज्ञानविरोधिनि जाग्रद्बोधे जाग्रत्कालीनगजाद्यभावज्ञाने दृष्टे प्रमिते प्रामाणिके प्रमात्वेन निश्चिते—मृषा भवेत् स्वप्नादिदृष्टिः—स्वाप्नगजादिदृष्टिः। आदिपदेन शुक्तिरूप्यादेः प्रातीतिकस्य संग्रहः। मृषा भवेत् बाध्या भवेत्। जाग्रद्बोधेन बाधकेन स्वप्नादिदृष्टिर्बाध्या भवेत्। अस्माकम् ज्ञानातिरिक्तज्ञेयस्य त्रिविधसत्तावादिनां स्वप्नजाग्रज्ज्ञानयोर्बाध्यबाधकत्वव्यवस्था भवेत्। तव—विज्ञानवादिनः शून्यवादिनश्च बौद्धस्य बाध्यबाधकत्वव्यवस्था ज्ञानयोः किं कृता किं प्रयुक्ता? तव मते बाध्यबाधकत्वव्यवस्थाप्रयोजकं नास्तीत्यभिप्रायः। विज्ञानवादियोगाचारमते ज्ञानातिरिक्तं ज्ञेयमलीकम् इत्येकं मतं ज्ञानमेव कल्पित-

ननु भ्रमकालीनापरोक्षबुद्ध्यविषयविशेषविषयैव धीर्बाधिका दृष्टा न च विश्वबाधिका धीस्तथेति चेत् ?

न, अधिष्ठानतत्त्वज्ञानत्वेनैव भ्रमनिवर्तकत्वात् विश्वनिवर्तकब्रह्मज्ञानस्य तथात्वात् ।

---

भेदेन ज्ञेयमित्यपरं मतम् । प्रथमे ज्ञेयम् असत् द्वितीये ज्ञेयं ज्ञानरूपत्वात् सदेव । सर्वं ज्ञानं मिथ्येति वादिनो माध्यमिकस्य च मते बाध्यं स्वप्नादिज्ञानं, बाधकं जाग्रज्ज्ञानम् इति विशेषः किं कृतः ? सर्वेषां ज्ञानानाम् अलीकविषयत्वेन स्वविषयत्वेन वा साम्यात् विज्ञानवादिमते ज्ञानयोर्बाध्यबाधकत्वव्यवस्था न स्यात् । माध्यमिकमते सर्वेषां ज्ञानानां मिथ्यात्वात् स्वप्नजाग्रज्ज्ञानयोर्बाध्यबाधकभावो न स्यात् । किं च माध्यमिकमते प्रपञ्चबाधकज्ञाने अधिकसत्ताकविषयकत्वस्य वक्तुमशक्यत्वात् न शून्यतासिद्धिः । कस्यचित् तत्त्वस्यानभ्युपगमे ज्ञानस्य बाधकत्वमेव न सिध्यति इति भट्टवार्तिकवाक्यम् अस्मन्मते सुसमञ्जसमेव । तेन वेदान्तिमते भट्टवार्तिकवाक्यविरोधोद्भावनं पूर्वपक्षिणोऽज्ञानादेव इति भावः ॥२॥

३—ननु भ्रमकालीनापरोक्षबुद्धिविषयविशेषविषयैव धीर्बाधिका दृष्टा न च विश्वबाधिका धीस्तथेति चेत् ? विश्वबाधकत्वेनाभिमतज्ञाने बाधकत्वव्यापकाभावात् विश्वबाधकत्वाभिमतज्ञानस्य विश्वबाधकत्वं न सम्भवति इति पूर्वपक्षी शंकते—ननु भ्रमकालीनापरोक्षबुद्धीति । भ्रमकालीनापरोक्षबुद्धिर्भ्रम एव स्वस्य स्वकालीनत्वात् भ्रमज्ञानाविषयो यो विशेषः शुक्तीत्यादि तद्विषया इयं शुक्तिरितिधीः बाधिका दृष्टा, प्रकृते तदभावमाह—न च विश्वबाधिका धीस्तथा वेदान्तजन्यशुद्धब्रह्मविषयकचरमवृत्तिः विश्वबाधकत्वेन अद्वैतिनामभिमता सा च भ्रमाविषयविशेषविषया न भवति ब्रह्मणो निर्विशेषत्वात् । तथा च विश्वबाधकज्ञाने बाधकत्वव्यापकं भ्रमाविषयविशेषविषयकत्वं नास्तीति न ब्रह्मज्ञानं विश्वबाधकं भवितुमर्हतीति पूर्वपक्षिणो भावः । समाधत्ते सिद्धान्ती—न, अधिष्ठानतत्त्वज्ञानत्वेनैव भ्रमनिवर्तकत्वात् विश्वनिवर्तकब्रह्मज्ञानस्य तथात्वात् । भ्रमबाधकज्ञानस्य अधिष्ठानतत्त्वज्ञानत्वमेव बाधकत्वव्यापकं, तच्च वेदान्तजन्यब्रह्मविषयकचरमज्ञानस्य अस्त्येव इति भावः । अनात्मप्रपञ्चम् ब्रह्मण्यध्यस्तं सर्वेषामध्यस्तानां शुद्धं ब्रह्मैव अधिष्ठानतत्त्वं तद्विषयकं ज्ञानं भवत्येव विश्वनिवर्तकमिति । अत्रैव ज्ञाने बाधकत्वव्यापकान्तराभावं शंकते पूर्वपक्षी—

न च सप्रकारिकैव धीर्भ्रमनिवर्तिका, इयं निष्प्रकारिका कथं तथेति वाच्यम्,

निवर्तकतायां सप्रकारकत्वस्य गौरवादप्रवेशात् ॥३॥

ननु—आवश्यकः सप्रकारकत्वनियमः व्यावृत्ताकारज्ञानत्वेनैव भ्रमनिवर्तकत्वात् अन्यथा अनुवृत्ताकारज्ञानादपि तन्निवृत्त्यापत्तेरिति चेत् ?

सत्यम्, व्यावृत्ताकारत्वेन ज्ञानस्य भ्रमनिवर्तकता न तु विशेषप्रकारकत्वनियमः। तथा हि व्यावृत्ताकारता हि द्वेधा भवति—विशेषणादुपलक्षणाच्च। तत्राद्ये सप्रकारकत्वनियमः। द्वितीयेऽपि धर्मान्तरस्य

---

न च सप्रकारिकैव धीर्भ्रमनिवर्तिका इयं निष्प्रकारिका कथं तथेति वाच्यम्। भ्रमविरोधिप्रकारप्रकारिका धीर्भ्रमनिवर्तिका न च विश्वबाधिका शुद्धब्रह्मधीः अद्वैतमते सप्रकारिका, तथा च सा न विश्वनिवर्तिका भवितुमर्हति। न च निष्प्रकारिका धीर्भ्रमनिवर्तिका भवितुमर्हति धर्मिमात्रविषयकत्वेन निर्विकल्पकज्ञानस्याबाधकत्वादिति भावः।

सप्रकारकत्वं बाधकत्वव्यापकमेव न भवति गौरवादित्याह सिद्धान्ती—

निवर्तकतायां सप्रकारकत्वस्य गौरवादप्रवेशात्। भासमानवैशिष्ट्यप्रतियोगित्वं हि प्रकारत्वं तद्विषयकत्वेन ज्ञानस्य बाधकत्वे गौरवात् न निवर्तकज्ञानं सप्रकारकम् ॥३॥

४—सप्रकारकत्वस्य बाधकत्वव्यापकत्वं व्यवस्थापयितुं शंकते पूर्वपक्षी—

ननु आवश्यकः सप्रकारकत्वनियमः व्यावृत्ताकारज्ञानत्वेनैव भ्रमनिवर्तकत्वात् अन्यथा अनुवृत्ताकारज्ञानादपि तन्निवृत्त्यापत्तेरिति चेत्? भ्रमविरोधिप्रकारप्रकारिका धीर्भ्रमविरोधिनी। अन्यथा भ्रमे अनुवृत्तधर्मिमात्रविषयकज्ञानादपि भ्रमनिवृत्त्युपपत्तेः निर्विकल्पकज्ञानस्य सप्रकारकभ्रमाविरोधित्वादिति भावः। समाधत्ते सिद्धान्ती—

सत्यम्, व्यावृत्ताकारज्ञानत्वेन ज्ञानस्य भ्रमनिवर्तकता न तु विशेषप्रकारकत्वनियमः। तथा हि व्यावृत्ताकारता हि द्वेधा भवति—विशेषणादुपलक्षणाच्च। तत्राद्ये सप्रकारकत्वनियमः द्वितीये धर्मान्तरस्य

यदुपलक्षणं तस्मात् व्यावृत्ताकारत्वे सप्रकारकतैव। यदि तु स्वरूपोपलक्षणात् व्यवृत्ताकारता तदा निष्प्रकारकतैव। उपलक्षणस्य तत्राप्रवेशात् स्वस्य च स्वस्मिन् अप्रकारत्वात्।

---

यदुपलक्षणं तस्माद् व्यावृत्ताकारत्वे सप्रकारतैव। यदि तु स्वरूपोपलक्षणाद् व्यावृत्ताकारता तदा निष्प्रकारतैव उपलक्षणस्य तत्राप्रवेशात्, स्वस्य च स्वस्मिन् अप्रकारत्वात्। आकारप्रकारयोर्भेदात् व्यावृत्ताकारज्ञानस्यापि सप्रकारकत्वाभावात् इत्यभिप्रेत्य व्यावृत्ताकारज्ञानत्वेन भ्रमनिवर्तकत्वे इष्टापत्तिमाह सिद्धान्ती—सत्यमिति। व्यावृत्ताकारं ज्ञानं भ्रमनिवर्तकम् इत्यस्माभिरपि अभ्युपगम्मते। न च विशेषप्रकारकत्वेन ज्ञानस्य भ्रमनिवर्त्तकता, भ्रमनिवर्तकज्ञानस्य विशेषप्रकारकत्वे मानाभावात्। तदेव विशदयन्नाह—भ्रमनिवर्तकज्ञानस्य व्यावृत्ताकारता द्वेधा सम्भवति। व्यावर्तकधर्माश्रयविषयकत्वेन ज्ञानस्य भ्रमबाधकता, व्यावर्तकधर्माश्रयविषयकज्ञानञ्च व्यावृत्ताकारबुद्धौ भासमानव्यावर्तकधर्ममादाय यदा भवति तदा बाधकज्ञानं सप्रकारकमेव भवति। व्यावृत्ताकारबुद्धौ व्यावर्तकधर्मस्य विशेषणत्वेन भानात् इत्याह—तत्राद्ये सप्रकारत्वनियमः। द्वितीये तु व्यावृत्ताकारबुद्धौ व्यावर्तकधर्मस्य अभासमानत्वे काकवद्गृहं देवदत्तस्य इत्यादौ गृहगतोत्तृणत्वादेर्धर्मान्तरस्य यदुपलक्षणं काकादि तस्मात् काकादेरुपलक्षणात् गृहादेर्व्यावृत्ताकारबुद्धौ काकादुपलक्षितोत्तृणत्वादिप्रकारेण गृहादेर्व्यावृत्ताकारबुद्धेः सप्रकारतैव। गृहस्य व्यावृत्ता कारबुद्धौ उपलक्षणं यः काकः तस्य अभासमानत्वेऽपि काकोपलक्षितस्य उत्तृणत्वादेः धर्मान्तरस्य प्रकारतया भानात्। उपलक्षणमपि द्विविधम् स्वरूपोपलक्षणं तदन्यच्च। यदुपलक्षणं धर्मान्तरमुपस्थापयति तदन्यत् यच्चोपलक्षणं धर्मान्तरं नोपस्थापयति तत्स्वरूपोपलक्षणम्। स्वोपलक्षितस्य शुद्धस्य लक्षणया स्वेनोपस्थापनात्। स्वरूपोपलक्षणात् बुद्धेर्निष्प्रकारतैव। यथा लोके प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्यजन्यबोधे स्वरूपोपलक्षणात् शुद्धचन्द्रस्य बोधः शुद्धचन्द्रस्वरूपविषयकप्रश्नस्य कश्चन्द्र इत्याकारस्य उत्तरवाक्यं प्रकृष्टप्रकाशश्चन्द्र इति प्रश्नवाक्यानुरोधेन उत्तरवाक्यस्यापि चन्द्रस्वरूपमात्रबोधे पर्यवसानात्। अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यापातात् इत्यादि सत्यादिवाक्याखण्डार्थत्वोपपत्तिप्रकरणे द्वितीयपरिच्छेदे निपुणतरमुपपादयिष्यते। विशेषणत्वोपाधित्वाभ्यां शून्यस्य व्यावर्तकस्योपलक्षणस्य तत्र व्यावृत्त्याकारबोधे अप्रवेशात् अविषयत्वात् व्यावृत्ता-

न च प्रमेयत्वादिवत् स्वस्यैव स्वस्मिन् प्रकारत्वमिति वाच्यम् ।
तथापि केवलान्वयिन्येवागत्या तथा अङ्गीकारात् न तु सर्वत्र ।

कारबोधस्य निष्प्रकारतैव । ननु उपलक्षणस्य व्यावृत्ताकारबोधाविषयत्वेऽपि उपलक्ष्यव्यक्तिरेव तादात्म्यसम्बन्धेन स्वस्मिन् प्रकारीभूय भातु तत्राह—स्वस्य स्वस्मिन् अप्रकारत्वात् अत्यन्ताभेदे विशिष्टप्रमा न सम्भवतीति भावः । इदमत्र रहस्यम्—प्रपञ्चभ्रमस्याविद्योपादानकतया अविद्यायाश्च शुद्धब्रह्मविषयिण्यास्तदाश्रितायाः शुद्धब्रह्मविषयकप्रमयैव निवृत्तिसम्भवात् विद्याविद्ययोः समानविषयत्वेनैव निवर्त्यनिवर्तकभावस्य सर्वानुभवसिद्धत्वात् । अतः शुद्धब्रह्मविषयिणी प्रमैव प्रपञ्चभ्रमोपादानाविद्यानिवर्तिका नान्या सप्रकारकब्रह्मविषयिणी बुद्धिरिति । रहस्यमिदमबुद्ध्वा पूर्वपक्षी शुक्तिरजतभ्रमबाधकशुक्तिज्ञानस्य सप्रकारकत्वदर्शनेनैव पुनः पुनः शंकामुत्थापयति । शुक्तिरजतभ्रमोपादानं तु शुक्तित्वप्रकारिका तूलाविद्या शुक्तित्वप्रकारिकया विद्ययैव निवर्तते । विद्याविद्ययोः समानविषयत्वेनैव निवर्त्यनिवर्तकभावात् । प्रपञ्चभ्रमोपादानमूलाविद्या तु शुद्धब्रह्मविषयिणी न विशिष्टब्रह्मविषयिणी भवितुमर्हतीत्यादि अज्ञानस्य विषयनिरूपणप्रकरणे निपुणतरमुपपादयिष्यते । स्वरूपोपलक्षणात् अव्यावृत्ताकारत्वेऽपि सप्रकारतैव ज्ञानस्य स्यात् प्रमेयत्वस्य स्वस्मिन् प्रकारत्वात् इति केवलान्वयिधर्मदृष्टान्तेन पूर्वपक्षी शंकते—**न च प्रमेयत्वादिवत् स्वस्यैव स्वस्मिन् प्रकारत्वम् इति वाच्यम्** । यथा वैशेषिकमते आकाशात्यन्ताभावस्य केवलान्वयितया आकाशात्यन्ताभावे सप्रकारकप्रमाविशेष्यत्वं तथा शुद्धं ब्रह्मैव स्वस्मिन् प्रकारीभूय भातु प्रमेयत्वं प्रमेयमिति प्रमाप्रतीतेः वैशेषिकमतसिद्धत्वात् तथा च प्रपञ्चभ्रमनिवर्तकज्ञानस्य सप्रकारकत्वमेव इति भावः । मन्मते केवलान्वयित्वमेव नास्ति सर्वेषां दृश्यानां निर्धर्मकब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वात्, तथा च दृष्टान्तासिद्धिरित्याह सिद्धान्ती—

**तथापि केवलान्वयिन्येवागत्या तथा अङ्गीकारात् न तु सर्वत्र ।**
प्रमेयत्वस्य स्ववृत्तित्वं तथा अङ्गीक्रियते । न तु सर्वत्र । अस्माभिस्तु केवलान्वयित्वं कस्यापि न स्वीक्रियते, प्रागेव शुद्धब्रह्मस्वरूपस्य । तथा च न स्वस्य स्वस्मिन् प्रकारत्वमिति भावः । ब्रह्माकाराया बुद्धेः ब्रह्मप्रकारत्वमेवेति आकारप्रकारयोरभेदादिति पूर्वपक्षी शंकते—

अथ आकारप्रकारयोरभेदात् ब्रह्माकारतैव ब्रह्मबुद्धेस्तत्प्रकारतेति चेत्? न; विशिष्टबुद्धेः विशेष्याकारत्वेऽपि तदप्रकारकत्वात्, आकारप्रकारयोर्भेदात्। आकारश्च वृत्तिनिष्ठः कश्चिद्धर्मोऽसाधारणव्यवहारहेतुरिति वक्ष्यते। तस्माद् यथा आकाशपदात् शब्दाश्रयत्वोपलक्षितधर्मिस्वरूपमात्रं ज्ञायते तद्वदत्रापि द्वितीयाभावाद्युपलक्षितब्रह्मस्वरूपज्ञानं व्यावृत्ताकारं द्वैतनिवर्तकमपरोक्षम्। यथा च शब्दात् तादृग्ज्ञानसम्भवः तथा वक्ष्यते ॥४॥

---

अथ आकारप्रकारयोरभेदात् ब्रह्माकारतैव ब्रह्मप्रकारतेति चेत्? सिद्धान्तिनापि ब्रह्माकाराया बुद्धेरङ्गीकारात् सैव बुद्धिः ब्रह्मप्रकारिकापि बुद्धेराकारप्रकारयोरभेदात्। बुद्धेराकारप्रकारयोर्भेदात् नैवमिति सिद्धान्ती समाधत्ते—न, विशिष्टबुद्धेः विशेष्याकारत्वेऽपि तदप्रकारकत्वात् अकारप्रकारयोर्भेदात्। आकारश्च वृत्तिनिष्ठः कश्चित् धर्मोऽसाधारणव्यवहारहेतुरिति वक्ष्यते। तस्माद् यथा आकाशपदात् शब्दाश्रयत्वोपलक्षितधर्मिस्वरूपमात्रं ज्ञायते तद्वदत्रापि द्वितीयाभावाद्युपलक्षितब्रह्मस्वरूपमात्रं व्यावृत्ताकारं द्वैतनिवर्तकम् अपरोक्षम्। यथा च शब्दात् तादृग्ज्ञानसम्भवस्तथा वक्ष्यते। आकारप्रकारयोर्भेदं दर्शयन्नाह—विशिष्टबुद्धेरित्यादि। विशिष्टबुद्धौ विशेषणं विशेष्यं तत्सम्बन्धश्च भासन्ते, अतो विशिष्टबुद्धिर्विशेष्याकारा भवति विशिष्टबुद्धेर्विशेष्याकारत्वेऽपि विशेष्यप्रकारकत्वाभावात् न आकारप्रकारयोरभेदः। वह्नेरेवेयम् अनुमितिर्न घटस्य इत्यादिरनुमित्यादिवृत्तेरसाधारणो व्यवहारः वृत्तेरसाधारणो व्यवहारः। वृत्तेरसाधारणव्यवहारश्च वृत्तिनिष्ठं कंचन धर्मं विना अनुपपन्नः। अतः आकाराख्यः कश्चन धर्मो वृत्तिनिष्ठोऽङ्गीक्रियते। एतच्च प्रतिकर्मव्यवस्थादिप्रकरणे वक्ष्यते। यथा वैशेषिका आकाशपदात् शब्दाश्रयत्वोपलक्षितधर्मिस्वरूपमात्रं ज्ञायते इति वदन्ति। उक्तं च किरणावल्याम् "यः शब्दाश्रयस्तदाकाशमित्येवं तु शब्दाश्रयत्वमेव उपाधिः स्यात्? न, शब्दाश्रयत्वस्योपलक्षणतया तटस्थत्वात्। अयमसौ देवदत्त इत्यत्र इदन्तावत्। अन्यथा शब्दगुणकमाकाशम् इति सहप्रयोगो न स्यात्"। तद्वद् एकमेवाद्वितीयमिति वाक्येऽद्वितीयपदात् द्वितीयाभावाद्युपलक्षितब्रह्मस्वरूपमात्रं व्यावृत्ताकारम् द्वैतनिवर्तकम् अपरोक्षं

न च बाधकधियां भ्रमतद्धेत्वज्ञानदोषाध्यस्तद्रष्ट्रादीनामबाधकत्वं दृष्टमिति कथं ब्रह्मज्ञानस्य तद्बाधकत्वं घटतामिति वाच्यम्।

यत्र हि स्वप्ने द्रष्टारं दुष्टकरणवन्तं कल्पयित्वा तस्य भ्रमं कल्पयति, तत्र जागरज्ञानेन सर्वेषां निवृत्तिदर्शनात्। जाग्रद्दशायामपि यदा मनुष्यप्रतिकृतौ चैतन्यं कल्पयित्वा तत्समीपवर्तीन्यनादर्श एव आदर्शत्वं कल्पयित्वा स्वप्रतिबिम्बमयं पश्यति इति कल्पयति, तदा नायं चेतनो न चायमादर्श इति प्रमया सर्वनिवृत्तिदर्शनाच्च नेयमदृष्टचरी कल्पना। तथा चेयं शुक्तिरित्याद्यधिष्ठानज्ञानं रज्ज्वां सर्पभ्रममिव द्रष्ट्राद्यध्यासं मा निवीवृतत्। तत् कस्य हेतोः ? तदधिष्ठानसाक्षात्कार-

---

ज्ञानं जायते। यथा च शब्दात् अपरोक्षज्ञानोपपत्तिस्तथा तृतीयपरिच्छेदावसाने वक्ष्यते ॥४॥

५—शुक्तिरजतादिभ्रमबाधकज्ञानवैषम्यात् प्रपञ्चबाधकब्रह्मज्ञानस्य त्वदभिमतस्य बाधकत्वं न युक्तमिति पूर्वपक्षी शंकते—

न च बाधकधियां भ्रमतद्धेत्वज्ञानदोषाध्यस्तद्रष्ट्रादीनामबाधकत्वं दृष्टमिति कथं ब्रह्मज्ञानस्य तद्बाधकत्वं घटतामिति वाच्यम्। शुक्तिरजतादिभ्रमबाधकज्ञानस्य नेदं रजतमित्यादिरूपस्य भ्रमविषयस्यैव बाधकत्वं दृष्टं न अन्येषां त्वया तु प्रपञ्चबाधकत्वाभिमतब्रह्माकारवृत्त्या भ्रमस्य भ्रमहेत्वज्ञानस्य दोषस्याध्यस्तप्रपञ्चस्य भ्रमद्रष्टुश्च बाधाङ्गीकारेण दृष्टवैरूप्यापातः। दृष्टसाम्यप्रदर्शनेन अधिष्ठानतत्त्वसाक्षात्कारस्य बाधकत्वं वदन् सिद्धान्ती समाधत्ते—

यत्र हि स्वप्ने द्रष्टारं दुष्टकरणवन्तं कल्पयित्वा तस्य भ्रमं कल्पयति तत्र जागरज्ञानेन सर्वेषां निवृत्तिदर्शनात्। जाग्रद्दशायामपि यदा मनुष्यप्रतिकृतौ चैतन्यं कल्पयित्वा तत्समीपवर्तीन्यनादर्शे एव आदर्शत्वं कल्पयित्वा स्वप्रतिबिम्बमयं पश्यति इति कल्पयति तदा नायं चेतनो न चायमादर्श इति प्रमया सर्वनिवृत्तिदर्शनाच्च नेयमदृष्टचरी कल्पना। तथा चेयं शुक्तिरित्याद्यधिष्ठानज्ञानं रज्ज्वां सर्पभ्रममिव द्रष्ट्राद्यध्यासं मा निवीवृतत्। तत् कस्य हेतोः ? तदधिष्ठान-

त्वाभावात्', ब्रह्मज्ञानं तु आकाशादिप्रपञ्चभ्रममिव द्रष्टुर्दोषादिभ्रममपि निवर्तयेदेव। तत् कस्य हेतोः? अशेषभ्रमाधिष्ठानतत्त्वसाक्षात्कारत्वात्। एवञ्च बाधबुद्धित्वं न दोषाद्यबाधकत्वे प्रयोजकमपि तु भ्रमाधिष्ठानतत्त्वसाक्षात्कारभिन्नत्वमिति द्रष्टव्यम्।

---

साक्षात्कारत्वाभावात्, ब्रह्मज्ञानं तु आकाशादिप्रपञ्चभ्रममिव द्रष्टुर्दोषादिभ्रममपि निर्वर्तयेदेव। तत्कस्य हेतोः? अशेषभ्रमाधिष्ठानतत्त्वसाक्षात्कारत्वात्। एवञ्च बाधबुद्धित्वं न दोषाद्यबाधकत्वे प्रयोजकमपि तु भ्रमाधिष्ठानतत्त्वसाक्षात्कारभिन्नत्वमिति द्रष्टव्यम्। यत्र हीति— कश्चित् स्वप्नदृक् स्वप्ने दुष्टकरणवन्तं कञ्चन द्रष्टारं कल्पयित्वा तस्य कल्पितस्य दुष्टकरणवतः द्रष्टुः भ्रमं कल्पयति अनन्तरं तस्य स्वप्नदृशो जागरणे सर्वेषां दोषस्य दुष्टकरणस्य पुरुषस्य द्रष्टुः तद्भ्रमस्य च कल्पितस्य सर्वस्यैव जागरणेऽधिष्ठानतत्त्वसाक्षात्कारात् निवृत्तिर्दृश्यते, अतोऽधिष्ठानतत्त्वसाक्षात्काररूपबाधेन दोषादीनां सर्वेषां निवृत्तिर्नादृष्टचरी इति भावः। स्वप्ने कल्पितानां दोषादीनां सर्वेषां जागरणे निवृत्तिं दर्शयित्वा जागरणेऽपि कल्पितानां दोषादीनाम् अधिष्ठानतत्त्वसाक्षात्कारात् जागरणेऽपि तेषां निवृत्तिर्दृश्यते इत्याह— जाग्रद्दशायामपि यदेति। कश्चित् पुरुषः जाग्रद्दशायामपि मृद्दार्वादिनिर्मितायां कस्यांचित् मनुष्यप्रतिकृतौ दोषात् चैतन्यं कल्पयित्वा तत्प्रतिकृतिसम्मुखवर्तिनि कस्मिंश्चित् अनादर्शे दोषात् आदर्शत्वं कल्पयित्वा आरोपितचैतन्या मनुष्यप्रतिकृतिः स्वप्रतिबिम्बम् आदर्शे पश्यतीति दोषात् कल्पयति एतादृशभ्रमपरम्परानन्तरं यदा नायं चेतनो न चायमादर्श इति भ्रमबाधकं प्रमाज्ञानं समुदेति तदा तया बाधकप्रमया सर्वेषां द्रष्टृदृश्यदर्शनानां निवृत्तिदर्शनात् बाधप्रमया द्रष्टृदृश्यदर्शनदोषाणां निवृत्तिकल्पना नादृष्टचरी। तद्वत् ब्रह्मप्रमया द्रष्टृदृश्यादिप्रपञ्चमात्रस्य निवृत्तिरपि दृष्टानुगुणैव। इदानीं बाधज्ञानेन कल्पितानां निवृत्तौ परमरहस्यं विवृण्वन् आह—तथा चेयं शुक्तिरिति। शुक्तौ रजतभ्रमानन्तरं शुक्तिरियमिति अधिष्ठानसाक्षात्कारात् अध्यस्तं रजतं निवर्तते न निवर्तते रज्ज्वां सर्पभ्रमः एवमेव शुक्तिरियमित्यधिष्ठानसाक्षात्कारात् रजतभ्रमद्रष्टा चाकचिक्यादिदोषश्च न निवर्तते। तत् कस्य हेतोः? अधिष्ठानसाक्षात्कारात् तत्राध्यस्तं निवर्तते यदधिष्ठाने यन्नाध्यस्तम् तत् तत्साक्षात्कारात् तत् न निवर्तते। ब्रह्मणि तु

ननु कल्पितत्वादुक्तदृष्टान्तेन तद्बाध्यतामिह तु कथमिति चेत् ?

हन्त ! ब्रह्मव्यतिरिक्तस्य सर्वस्य कल्पितत्वमङ्गीकुर्वतामस्माकमिदमनिष्टं महदापादितं देवानां प्रियेण ।

ननु साक्षिप्रत्यक्षं न बाध्यं दोषाजन्यत्वात् प्रत्युत श्रुतिजनिताद्वैतज्ञानमेव बाध्यं तात्पर्यभ्रमरूपदोषजन्यत्वादिति चेत् ?

---

आकाशादिप्रपञ्चस्य दोषस्य भ्रान्तेश्च द्वैतमात्रस्य कल्पितत्वात् ब्रह्मरूपाधिष्ठानसाक्षात्कारात् आकाशादिप्रपञ्चेन सह द्वैतमात्रं निवर्तते । अधिष्ठानतत्त्वसाक्षात्कारात् तदध्यस्तस्य निवृत्तिकल्पना सर्वथैव दृष्टचरी नेयमदृष्टचरी कल्पना एवं च बाधबुद्धित्वेन दोषाद्यबाधकत्वं न भवति या या बाधबुद्धिः सा दोषाद्यबाधिकेति न व्याप्तिः बाधबुद्धित्वं दोषाद्यबाधकत्वव्याप्यं न भवति । तर्हि दोषाद्यबाधकत्वस्य किं व्याप्यमित्यत आह—तद्भ्रमाधिष्ठानतत्त्वसाक्षात्कारभिन्नत्वम् । या या बुद्धिः तद्भ्रमाधिष्ठानतत्त्वसाक्षात्कारभिन्ना सा न तद्बाधिकेति भावः । बालचापल्यं कुर्वन्नाह पूर्वपक्षी—

ननु कल्पितत्वात् उक्तदृष्टान्तेन तद् बाध्यताम् इह तु कथमिति चेत् ? स्वप्ने जाग्रद्दशायाञ्च यत् दृष्टान्तद्वयं सिद्धान्तिना उक्तं तत्र द्वयोः दृष्टान्तयोः कल्पितस्यैव बाधः प्रदर्शितः ब्रह्मज्ञानेन प्रपञ्चमात्रस्य बाधस्तु कथमिति पूर्वपक्षिशंकायामाह सिद्धान्ती—

हन्त ! ब्रह्मव्यतिरिक्तस्य सर्वस्य कल्पितत्वमङ्गीकुर्वतामस्माकमिदमनिष्टं महदापादितं देवानां प्रियेण । अधिष्ठानतत्त्वसाक्षात्कारेण तत्र कल्पितस्य निवृत्तिमङ्गीकरोषि चेत् ? तर्हि अस्मन्मतेऽब्रह्मप्रपञ्चमात्रस्य ब्रह्मणि कल्पितत्वाङ्गीकारात् कथं न ब्रह्मसाक्षात्कारेण प्रपञ्चमात्रस्य निवृत्तिः । वियदादिजगत्सत्यत्वग्राहिसाक्षिप्रत्यक्षं दोषाजन्यत्वात् न बाधयोग्यमिति पूर्वपक्षी शंकते—

ननु साक्षिप्रत्यक्षं न बाध्यं दोषाजन्यत्वात् प्रत्युत श्रुतिजनिताद्वैतज्ञानमेव बाध्यं तात्पर्यभ्रमरूपदोषजन्यत्वादिति चेत् ? साक्षिप्रत्यक्षस्य अजन्यत्वान्न दोषजन्यत्वमिति भावः । ननु यथा अपौरुषेयतया वेदस्य दोषाजन्याऽपि अद्वैतश्रुतिर्भेदश्रुतिबाध्येति पूर्वपक्षिभिरुच्यते एवं दोषाजन्यमपि साक्षिज्ञानं बाध्यतामित्यत आह—अद्वैतज्ञानमेवेति । न पूर्वपक्षिभिः भेदश्रुत्या अद्वैत-

न, चैतन्यस्य स्वरूपतो दोषाजन्यत्वेऽपि तदवच्छेदिकाया अविद्या वृत्तेर्दोषजन्यत्वात् तत्प्रतिफलितचैतन्यस्यैव, साक्षिपदार्थत्वात्। अद्वैततात्पर्यग्रहस्य च प्रत्यक्षाद्यविरोधेन प्रमारूपतया दोषत्वाभावात् न तज्जन्यमद्वैतज्ञानं बाध्यम्; भ्रमजन्यत्वस्य विषयबाधाप्रयोजकत्वाच्च।

न च बाधकतुल्यमानताकद्वैतश्रुतिसंवादिद्वैतप्रत्यक्षं कथं बाध्य मिति वाच्यम्।

---

श्रुतिर्बाध्यते इत्युच्यते किंतु अद्वैतश्रुतिजन्यं ज्ञानमेव बाध्यते, तच्च ज्ञानम् अभेदविषयकश्रुतितात्पर्यभ्रमजन्यमेव। साक्षिणोऽजन्यत्वमेवासिद्धमित्याह सिद्धान्ती—

न, चैतन्यस्य स्वरूपतो दोपाजन्यत्वेऽपि तदवच्छेदिकाया अविद्यावृत्तेर्दोपजन्यत्वात् तत्प्रतिफलितचैतन्यस्यैव साक्षिपदार्थत्वात्। अद्वैततात्पर्यग्रहस्य च प्रत्यक्षाद्यविरोधेन प्रमारूपतया दोपत्वाभावात् न तज्जन्यमद्वैतज्ञानं बाध्यं भ्रमजन्यत्वस्य विपयबाधाप्रयोजकत्वाच्च। तद्विपयाकाराऽविद्यावृत्तिप्रतिफलितं चैतन्यं तद्विपयं प्रति साक्षि। तथा च विपयावभासकचैतन्यावच्छेदिकाया अविद्यावृत्तेर्दोपजन्यत्वात् चैतन्यस्य स्वरूपतो दोपाजन्यत्वेऽपि तदवच्छेदकजन्यत्वेनावच्छिन्नस्यापि जन्यत्वम्। अद्वैते तात्पर्यग्रहो भ्रम इति तु न युक्तं षड्विधतात्पर्यनिर्णायकैर्लिंगैः श्रुतेरद्वैते तात्पर्यं गृह्यते। तस्य तात्पर्यग्रहस्य व्यावहारिकमानाविरोधेन अपूर्वार्थकतया च प्रमारूपतया दोपत्वाभावात् अद्वैततात्पर्यग्रहजन्यमद्वैतज्ञानं दोपाजन्यत्वान्न बाध्यम्। अद्वैततात्पर्यग्रहस्य भ्रमत्वेऽपि न तज्जन्याद्वैतज्ञानस्य बाधितार्थकत्वमित्याह—भ्रमजन्यत्वस्येति। भ्रमजन्यत्वस्य विपयबाधाप्रयोजकत्वात्। अप्रयोजकत्वादित्यस्य व्याप्यत्वाभावादित्यर्थः। भ्रमजन्यत्वेन ज्ञानस्य बाधितार्थकत्वं न भवति। धूलिपटले धूमभ्रमात् दैवगत्या वह्निमति जायमानवह्न्यनुमितौ व्यभिचारात् यज्ज्ञानं भ्रमजन्यं तद्बाधितार्थकमिति व्याप्तेरत्रैव व्यभिचारादिति भावः। द्वैतप्रत्यक्षं नाद्वैतश्रुत्या बाधार्हं द्वैतप्रत्यक्षबाधकाद्वैतश्रुतितुल्यमानकद्वैतश्रुतिसंवादित्वात् बाधकतुल्यमानसंवादिबाध्यं न भवति यथा इयं शुक्तिरिति ज्ञानम् इति दृष्टान्तावष्टम्भेन पूर्वपक्षी शंकते—

द्वैतस्य प्रत्यक्षादिलौकिकमानसिद्धत्वेन तद्बोधकश्रुतेरनुवादकतया फलवदज्ञातस्वार्थतात्पर्यकाद्वैतश्रुतिसाम्याभावात् ।

ननु बाधकधीबोध्यं न बाध्यं भेदश्च बाधकधीबोध्यः, तया स्वविषयस्य भिन्नत्वेनैव ग्रहात् नेदं रजतमितिवदभिन्नतया उदासीनतया वा ग्रहणे बाधकत्वायोगात् इति चेत् ?

न, बाधकधियो भेदविषयत्वानभ्युपगमात्, इयं शुक्तिरित्येव बाध-

---

न च बाधकतुल्यमानताकद्वैतश्रुतिसंवादि द्वैतप्रत्यक्षं कथं बाध्यम् इति वाच्यम् । यथा रजतज्ञानबाधकं नेदं रजतमितिज्ञानं तत्तुल्यमानम् इयं शुक्तिरिति आप्तवाक्यजन्यं ज्ञानान्तरं तत्संवादि इयं शुक्तिरिति प्रत्यक्षं तन्न बाध्यं एवम् अद्वैतश्रुतितुल्यमानताकद्वैतश्रुतिसंवादिद्वैतप्रत्यक्षमपि न बाध्यं भवितुमर्हतीति । द्वैतश्रुतेरद्वैतश्रुतितुल्यमानतैव नास्तीत्याह सिद्धान्ती—

द्वैतस्य प्रत्यक्षादिलौकिकमानसिद्धत्वेन तद्बोधकश्रुतेरनुवादकतया फलवदज्ञातस्वार्थतात्पर्यकाद्वैतश्रुतिसाम्याभावात् । अयं भावः—प्रत्यक्षादिलौकिकमानसिद्धद्वैतबोधकश्रुतिरनुवादिनी अद्वैतश्रुतिस्तु फलवदज्ञातस्वार्थप्रतिपादिनी इति न द्वैताद्वैतश्रुत्योः तुल्यमानता । द्वैतज्ञानात् बन्धः अद्वैतज्ञानान्मोक्षः इति सफलत्वाफलत्वाभ्यामपि अनयोर्न साम्यम् । द्वैतस्य अबाध्यत्वे व्याख्यान्तरमाह पूर्वपक्षी—

ननु बाधकधीबोध्यं न बाध्यं भेदश्च बाधकधीबोध्यः तया स्वविषयस्य भिन्नत्वेनैव ग्रहात् नेदं रजतमितिवत् अभिन्नतया उदासीनतया वा ग्रहणे बाधकत्वायोगात् इति चेत् ? अयमर्थः—अनिषेध्यतया बाधकधीबोध्यं न बाध्यं नेदं रजतमिति रजतबाधकधियाऽनिषेध्यत्वेन भेदो बोध्यते । रजतस्य बाधकधीबोध्यत्वेऽपि निषेध्यत्वेनैवेति न दोषः । तया बाधधिया स्वविषयस्य इदमः रजतात् भिन्नत्वेनैव ग्रहात् रजताभिन्नत्वेन ग्रहे भ्रम एव स्यात् न बाधः । दोषान्तरस्थस्य उदासीनस्य इदमो ग्रहणे न भ्रमबाधकता । तथा च भ्रमबाधकधीबोध्यस्य भेदस्याबाध्यत्वमेव । भेदो न भ्रमबाधकधीबोध्यः इति समाधत्ते—

न, बाधधियो भेदविषयत्वानभ्युपगमात्, इयं शुक्तिरित्येव

बुद्ध्युदयात्। तस्यास्तु नेदं रजतमिति भेदबुद्धिः फलम्। व्यावृत्ताकारतैव बाधधिय आवश्यकी, सा च स्वरूपोपलक्षणवलात् निष्प्रकारकब्रह्मज्ञानेऽपि अस्तीति न बाधकधीबोध्यत्वं भेदस्य ॥५॥

ननु स्वप्नविलक्षणं फलपर्यन्तपरीक्षायामिति चेत् शंका स्यात्, तदा अद्वैतश्रुतिप्रत्यक्षतत्प्रामाण्यशंकायामद्वैतश्रुतिरपि न सिध्येत्। बाधेऽपि बाधशंकायामबाधितबाधप्रसिद्धिरपि न स्यात्। बाधितबाधनाकांक्षायाश्च अबाध्यत्वाविरोधित्वात् भाविबोधेपि बाधशंकापातेन

---

बाधबुद्ध्युदयात्। तस्यास्तु नेदं रजतमिति भेदबुद्धिः फलम्, व्यावृत्ताकारतैव बाधधिय आवश्यकी सा च स्वरूपोपलक्षणबलात् निष्प्रकारकब्रह्मज्ञानेऽपि आस्तीति न बाधकधीबोध्यत्वं भेदस्य।

अयं भावः—नेदं रजतमिति बुद्धिर्न रजतभ्रमबाधिका। किंतु इयं शुक्तिरित्येव धी रजतभ्रमबाधिका। इदमि शुक्तित्वाग्रहे इदमः रजतात् भेदग्रहस्यैवासम्भवात्। भेदकधर्मग्रहणं विना भेदग्रहासम्भवात्। शुक्तित्वप्रकारिकाविद्येव रजतोपादनं सा च शुक्तित्वप्रकारिकया विद्यया निवर्तते अविद्याया निवृत्तौ तदुपादानकरजतमपि निवर्तते। अतः इयं शुक्तिरित्येव बाधबुद्धिः प्रथमं जायते भेदविषयिणी नेदं रजतमिति बुद्धिस्तु इयं शुक्तिरिति बुद्धेरनुनिष्पादिनी तस्याः फलभूता। भ्रमेऽनुवृत्तस्य एवकारो भासते व्यावृत्ताकारा धीरेव भ्रमबाधिका व्यावृत्ताकारबुद्धेः व्यावर्तकधर्मस्फुरणं कारणम्। इदन्ता अनुवृत्ताकारः शुक्तित्वं व्यावृत्ताकारः सा च भ्रमबाधकज्ञानस्य व्यावृत्ताकारता निष्प्रकारकब्रह्मज्ञानेऽपि स्वरूपोपलक्षणबलात् अस्त्येव अतो न भेदस्य बाधधीबोध्यत्वम् ॥५॥

६—अद्वैतवादिना उक्ता भाविबाधशंका आत्मानमेव घातयतीत्याह पूर्वपक्षी—

ननु स्वप्नविलक्षणं फलपर्यन्तपरीक्षायामपि चेत् शंका स्यात् तदाऽद्वैतश्रुतिप्रत्यक्षतत्प्रामाण्यशंकायाम् अद्वैतश्रुतिरपि न सिद्ध्येत् बाधेऽपि बाधशंकायामबाधितबाधप्रसिद्धिरपि न स्यात्। बाधितबाधनाकांक्षायाश्च अबाध्यत्वाविरोधित्वात् भाविबाधेऽपि बाधशंकापातेन

स्वक्रियाव्याघातश्च स्यात्। शंकाप्रत्यक्षेऽपि शंकायां शंकापि न सिद्धयेत्। एवं सर्वत्र शंकाप्रसरात् सर्वविप्लवापत्तिरिति चेत् ?

मैवं मंस्थाः। यतः समत्वेन प्रमाणान्तरे उपस्थिते एव निश्चितेऽपि सत्त्वादौ शंका भवतीति ब्रूमः। न तु निश्चितमात्रे शंका भवतीति। तथा च यदुक्तं बौद्धं प्रति भट्टवार्तिके—

---

स्वक्रियाव्याघातश्च स्यात्। शंकाप्रत्यक्षेऽपि शंकायां शंकापि न सिध्येत्। एवं सर्वत्र शंकाप्रसरात् सर्वविप्लवापत्तिरिति चेत् ?

अयं भावः—स्वप्नविलक्षणप्रपञ्चप्रत्यक्षस्य फलपर्यन्तपरीक्षायामपि प्रपञ्चप्रत्यक्षमग्रे बाधिष्यते इत्येवं शंका यदि स्यात् तदाऽद्वैतश्रुतिप्रत्यक्षतत्प्रामाण्यशंकायाम् अद्वैतश्रुतिरपि न सिध्येत्। विषयज्ञानात् फलज्ञानोत्पत्तौ जनकज्ञानस्य प्रामाण्यं निःशंकमवधृतं भवेत्। यथा उदकं दृष्ट्वा प्रवृत्तः उदकमापीय शान्तपिपासः उदकज्ञानस्य प्रामाण्यं निश्चिनोत्येव। तथापि यदि प्रामाण्यनिश्चयो न स्यात्, तर्हि कुत्रापि प्रामाण्यनिश्चयो न स्यात्। एवञ्च संसारे प्रामाण्यकथैवोच्छिद्येत। उदकदर्शनस्य उदकपानादि फलं फलोपलम्भ एव जनकज्ञानस्य फलपर्यन्तपरीक्षा तथैव सर्वत्र प्रामाण्यनिश्चयः ततोऽपि यदि प्रामाण्यनिश्चयो न स्यात्, तर्हि प्रामाण्यनिश्चयः कुत्रापि न स्यात्। एवं च सिद्धान्तिनोऽपि मतेऽद्वैतश्रुतिरपि न सिध्येत्। तथा च स्वव्याघातः स्यात्। सर्वत्र शंकायां प्रपञ्चबाधज्ञानेऽपि बाधशंकायां कुत्रापि अबाधितबाधसिद्धिर्न स्यात्। बाधेन ज्ञानस्य प्रामाण्यमपह्रीयते बाधोऽपि यदि बाधितः स्यात्, तर्हि बाधितबाधेन ज्ञानप्रामाण्यं नापहृतं स्यात्। तेन ज्ञानम् अबाधितार्थकं प्रमाणमेव स्यात्। प्रपञ्चज्ञानस्य भाविबाधेऽपि बाधशंकापातेन भाविबाधोऽपि न सिद्धयेत् इति सिद्धान्तिनां स्वक्रियाव्याघातः स्यात्। एवमेव शंकाप्रत्यक्षेऽपि शंकायां शंकापि न सिद्धयेत् तथा च सर्वमेव विप्लुतं स्यात्। सर्वत्र निश्चितमात्रे शंका जायते इति नास्माभिरुच्यते। अतोऽनुक्तोपालम्भनमेव पूर्वपक्षिणो वचनमित्याह सिद्धान्तयति—

मैवं मंस्थाः, यतः समत्वेन प्रमाणान्तरे उपस्थिते एव निश्चितेऽपि सत्त्वादौ शंका भवतीति ब्रूमः न तु निश्चितमात्रे शंका भवतीति। तथा च यदुक्तं बौद्धं प्रति भट्टवार्तिके—

दुष्टज्ञानगृहीतार्थप्रतिषेधोऽपि युज्यते ।
गृहीतमात्रबाधे तु स्वपक्षेऽपि न सिध्यति ॥

इति तदपि न विरुध्यते । गृहीतमात्रबाधस्य तच्छंकायाश्चानुक्तेः ॥६॥

ननु सत्त्वादिप्रत्यक्षे क्लृप्तदूरादिदोषाभावनिश्चये कथं शंकोदयः ? न च क्लृप्तानामभावनिश्चयेऽपि अक्लृप्तस्य शंका स्यात्, शब्दे क्लृप्तवक्तृनिबन्धनदोषस्य नित्यत्वेन वेदेऽभावेऽपि दोषान्तरशंकायाः सुवचत्वात् । न च—स्वाप्नप्रत्यक्षे तदा दूराद्यभावनिश्चयेऽप्यप्रामाण्य-

---

दुष्टज्ञानगृहीतार्थप्रतिषेधोऽपि युज्यते ।
गृहीतमात्रबाधे तु स्वपक्षोऽपि न सिध्यति ॥ इति ।

तदपि न विरुध्यते । गृहीतमात्रबाधस्य तत्शंकायाश्चानुक्तेः । केनचित् प्रमाणेन निश्चितेऽपि सत्त्वादौ निश्चायकप्रमाणसमबलविरुद्धार्थनिश्चायकप्रमाणान्तरे उपस्थिते एव, पूर्वप्रमाणनिश्चिते सत्त्वादौ शंका भवतीति ब्रूमः । न तु प्रमाणनिश्चितमात्रे शंका भवतीति ब्रूमः, येन सर्वविप्लव आपद्येत । तथा च सर्वत्र बाधशंकिनं बौद्धं प्रति यदुक्तं भट्टेन तदस्मन्मते न विरुध्यते । यतः अस्माभिः प्रमाणनिश्चितमात्रशंका नोक्ता । भट्टवाक्यस्यायमर्थः—दुष्टकरणजन्यज्ञानगृहीतस्यार्थस्य बाधो युज्यते । गृहीतार्थमात्रस्य बाधेऽभ्युपगम्यमाने बौद्धस्य माध्यमिकस्य स्वपक्षः—शून्यवादः न सिध्यति । तात्त्विकविषयकप्रमाणं विना बाधो न सिध्यतीति भावः । किमपि तात्त्विकमनभ्युपगच्छतः माध्यमिकस्य बाध्यबाधकव्यवस्थैव न स्यात् ॥६॥

७—प्रपञ्चसत्यप्रत्यक्षे क्लृप्तदोषाभावनिश्चयेऽपि यदि बाधशंकोदयः स्यात्, तर्हि वेदेऽपि बाधशंका स्यात् इत्याह पूर्वपक्षी—

ननु सत्त्वादिप्रत्यक्षे क्लृप्तदूरादिदोषाभावनिश्चये कथं शंकोदयः ? न च क्लृप्तानामभावनिश्चयेऽपि अक्लृप्तस्य शंका स्यात् । शब्दे क्लृप्तवक्तृनिबन्धनदोषस्य नित्यत्वेन वेदेऽभावेऽपि दोषान्तरशंकायाः सुवचत्वात् । प्रपञ्चसत्त्वादिप्रत्यक्षे क्लृप्तदूरादिदोषाभावनिश्चयात् कथं बाधशंकोदयः ? क्लृप्तदोषानामभावनिश्चयेऽपि यदि अक्लृप्तदोषजन्यत्वशंकया बाधशंकोदयः, तदा नित्ये वेदेऽपि प्रणेतृपुरुषदोषाभावनिश्चयेऽपि अक्लृप्तदोषान्तरशंकया बाधशंका स्यात् । शब्दाप्रामाण्ये प्रणेतृपुरुषदोष एव क्लृप्तः अत एव प्रणेतृ-

दर्शनेन तद्वदत्रापि शंकेति—वाक्यम्; शून्यमेव तत्त्वमिति स्वाप्नवेदेऽपि तदा भ्रान्त्यादिदोषाभावनिश्चयेऽप्यप्रामाण्यदर्शनस्य वेदेऽपि समानत्वात्; स्वप्नवैषम्यानुभवस्तूभयत्रापि समान—इति चेत् ॥७॥

न, सत्त्वप्रत्यक्षाद्वैतागमयोः क्लृप्तदोषाभावनिश्चयस्य समानत्वेन प्रामाण्यशंकायामप्रतिबन्धकत्वात्। नहि सत्प्रतिपक्षे उभयत्र दोषाभाव-

---

पुरुषदोषात् पौरुषेयं वाक्यम् क्वचिदप्रमाणं बाधितार्थकं भवति। अक्लृप्तदोषशंका तु वेदेऽपि सुलभैव। सिद्धान्त्यभिमतं किंचिदाशंक्य पूर्वपक्षी निराचष्टे—

न च स्वाप्नप्रत्यक्षे तदा दूराद्यभावनिश्चयेऽपि अप्रामाण्यदर्शनेन तद्वदत्रापि शंकेति वाच्यं शून्यमेव तत्त्वमिति स्वाप्नवेदेऽपि तदा भ्रान्त्यादिदोषाभावनिश्चयेऽपि अप्रामाण्यदर्शनस्य वेदेऽपि समानत्वात्। स्वाप्नवैषम्यानुभवस्तु उभयत्रापि समान इति चेत्? अयमभावः—स्वप्नकाले गजादिप्रत्यक्षे स्वप्नदशायां दोषसत्त्वेन क्लृप्तदूराद्यभावनिश्चयेऽपि स्वाप्नगजादिप्रत्यक्षस्याप्रामाण्यदर्शनेन जागरेऽपि प्रपञ्चसत्त्वप्रत्यक्षे क्लृप्तदोषाभावनिश्चयेऽपि स्वाप्नप्रत्यक्षवदेव जागरप्रत्यक्षम् अप्रमाणं स्यादिति सिद्धान्तिना न वाच्यम्। कुतो न वाच्यमित्यत आह—स्वाप्नदृष्टान्तेन जागरप्रत्यक्षस्याप्रामाण्यं यदि सिद्धान्तिना उच्येत तर्हि मयापि स्वाप्नदृष्टान्तेन जाग्रत्कालीनवेदस्यापि अप्रामाण्यं कथयितुं शक्यते इत्याह—शून्यमेव तत्त्वमिति। स्वप्नदशायां वेदः शून्यतत्त्वप्रतिपादकः इति ज्ञाने जाते स्वप्नदशायां भ्रान्तेः क्लृप्तदोषाभावनिश्चयेऽपि जाते वेदः शून्यतत्त्वप्रतिपादक इति स्वाप्नं ज्ञानं जागरणे अप्रमाणमेव भवति तद्वत् जाग्रत्कालीनोऽपि वेदः स्वाप्नवेदवत् अप्रमाणं स्यात्, क्लृप्तदोषाभावनिश्चयेऽपि जाग्रत्कालीनो वेद. अप्रमाणं स्यात् स्वाप्नवेदवत्। जाग्रत्कालीने वेदे स्वाप्नवेदवैषम्यानुभवस्तु जाग्रत्प्रपञ्चात् स्वाप्नप्रपञ्चे वैषम्यानुभवेन तुल्य एव इत्याह—वैषम्यानुभवस्तु उभयत्रापि समानः इति ॥७॥

८—अद्वैतागमप्रपञ्चसत्त्वग्राहिप्रत्यक्षयोः निर्दोषत्वनिश्चये समानेऽपि प्रामाण्यशंकायामप्रतिबन्धकत्वात् इत्यभिप्रेत्य सिद्धान्तयति—

न, सत्त्वप्रत्यक्षाऽद्वैतागमयोः क्लृप्तदोषाभावनिश्चयस्य समान-

निश्चयः किमत्र तत्त्वमिति जिज्ञासां प्रतिवध्नाति; विरुद्धविशेषादर्शनकालिकस्यैव विशेषदर्शनस्य शंकाप्रतिवन्धकत्वात्।

अवच्छेदकवृत्त्यनित्यत्वेन च साक्षिप्रत्यक्षस्य दोषजन्यत्वोक्तेः।

अत एव यदुक्तं तार्किकैः"तदेव हि आशंक्यते यस्मिन् आशंक्यमाने स्वक्रियाव्याघातादयो दोषा न भवन्ति"। उक्तञ्च भट्टवार्तिके वौद्धं प्रति–

---

त्वेन प्रामाण्यशंकायामप्रतिबन्धकत्वात्। नहि सत्प्रतिपक्षे उभयत्र दोषाभावनिश्चयः किमत्र तत्त्वमिति जिज्ञासां प्रतिबध्नाति। विरुद्धविशेषादर्शनकालीनस्यैव विशेषदर्शनस्य शंकाप्रतिबन्धकत्वात्, निश्चितक्लृप्तदोषाभावयोरद्वैतागमप्रपञ्चसत्त्वप्रत्यक्षयोः दोषाभावनिश्चये समानेऽपि विरुद्धार्थकत्वात् प्रामाण्यशंका स्यादेव। यथा विरुद्धयोर्हेत्वोः परामर्शे हेत्वोश्च दोषाभावनिश्चये कस्यचित् साध्यस्यानिश्चयात् भवत्येव जिज्ञासा किमत्र तत्त्वमिति। संशयस्थले विरुद्धयोः कोट्योरुपनिपाते एकस्यां कोटौ विशेषादर्शनकाले कोट्यन्तरे विशेषदर्शनस्य शंकाप्रतिबन्धकत्वमुभयत्र विशेषादर्शने शंका स्यादेव। शंकाप्रतिबन्धकस्य कस्यचिदभावात्। तथा च बाधशंका नानुपपन्ना। साक्षिप्रत्यक्षस्यापि दोषजन्यत्वशंकया अप्रामाण्यसंशयः, दोषजन्यत्वनिश्चये तु अप्रामाण्यनिश्चय एव इत्याह सिद्धान्ती—

अवच्छेदकवृत्त्यनित्यत्वेन च साक्षिप्रत्यक्षस्य दोषजन्यत्वोक्तेः। शुद्धं चैतन्यं न साक्षि किन्तु विषयाकाराविद्यावृत्तिप्रातिबिम्बितं चैतन्यं सुखादीनां साक्षिप्रत्यक्षेऽपि सुखाकाराऽविद्यावृत्तिर्दोषजन्या स्वीकार्या अविद्यावृत्त्यनङ्गीकारे सुखानुभवजन्यसंस्काराभावे कालान्तरे सुखस्मरणं न स्यात्। संस्कारस्तु अनित्यानुभवजन्यः। नित्यानुभवस्य संस्काराजनकत्वात् अन्यथा नित्येश्वरीयज्ञानादपि संस्कारः स्यात्। सुखादौऽविद्यावृत्तेरस्वीकारेऽपि सुखादेरिव दोषजन्यत्वेन सुखावच्छिन्नसाक्षिणोऽपि दोषजन्यत्वेनाप्रमात्वात्। एतेन निर्दोषसाक्षिसिद्धं पारमार्थिकमित्यपास्तम्। एतेन आचार्यान्तरोक्तिरपि अस्मदनुकूलेवेति दर्शयन्नाह सिद्धान्ती—

अत एव यदुक्तं तार्किकैः—"तदेव हि आशंक्यते यस्मिन् आशंक्यमाने 'स्वक्रियाव्याघातादयो दोषा न भवन्ति"। उक्तञ्च भट्टवार्तिके बौद्धं प्रति—

इह जन्मनि केषाञ्चिन्न तावदुपपद्यते ।
योग्यवस्थागतानान्तु न विघ्नः किं भविष्यति ॥ इति ।

तथा च प्रामाण्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वात् इह च उत्पत्ति स्वतस्त्वापवादस्य दोषस्य ज्ञप्तिस्वतस्त्वापवादस्य बाधस्य चादर्शनात् निर्मूलशंकायाश्च स्वक्रियाविरोधेनानुत्थानाभ्युपगमात् स्वस्थं प्रत्यक्षस्य प्रामाण्यमिति तदपि निरस्तम् ।

आगमादिप्रमाणमूलकशंकाया एव स्वीकारात् । रूप्यादिनिषेध-

---

इह जन्मनि केषाञ्चिन्न तावदुपपद्यते ।
योग्यवस्थागतानां तु न विघ्नः किं भविष्यति ॥

इति । तथा च प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वात् इह च उत्पत्तिस्वतस्त्वापवादस्य दोषस्य ज्ञप्तिस्वतस्त्वापवादस्य बाधस्य चादर्शनात् निर्मूलशंकायाश्च स्वक्रियाविरोधेनानुत्थानाभ्युपगमात् स्वस्थं प्रत्यक्षस्य प्रामाण्यमिति तदपि निरस्तम् । उक्तञ्च उदयनाचार्यैः कुसुमाञ्जलौ तृतीयस्तबके सप्तमकारिकाविवरणप्रसंगे—तदेव हि आशंक्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो दोषाः न भवन्ति । प्रपञ्चसत्त्वग्राहिप्रत्यक्षस्याप्रामाण्ये शंक्यमाने स्वक्रियाव्याघातादयो दोषा अद्वैतवादिमते अवतरिष्यन्त्येव इति पूर्वपक्षिणामाशयः । भट्टवार्तिकस्यायमभिप्रायः—इह जन्मनि—जन्मावधिकाले सर्वबाधः केषामपि न भवति । योग्यवस्थागतानां सर्वबाधो भविष्यतीति न विघ्नः । सर्वबाधस्यासम्भवात् तादृशयोग्यवस्थायाश्चाप्रामाणिकत्वादिति भट्टवाक्यस्याशयः । अद्वैतिनां सर्वप्रपञ्चबाधाङ्गीकारोऽपि भट्टवाक्येनैव प्रतिहत इति पूर्वपक्षिणामाशयः । प्रपञ्चसत्त्वप्रत्यक्षे प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वात् प्रत्यक्षे प्रसक्तप्रामाण्यस्यापवादाभावात् निर्मूलशंकायाश्च अनभ्युपगमात् "द्वावेव निन्दितौ लोके निराशंकातिशंकितौ" इति भट्टवाक्यानुसारेणातिशंकाया निन्दितत्वात् प्रपञ्चसत्त्वग्राहिप्रत्यक्षस्य प्रामाण्यं स्वस्थमिति पूर्वपक्षिणा यदुक्तं तदपि निरस्तं—यदुक्तमित्यस्य निरस्तमित्यनेनान्वयः । कुतो निरस्तमित्याह सिद्धान्ती—

आगमादिप्रमाणमूलकशंकाया एव स्वीकारात् । रूप्यादिनिषे-

स्य तु नेदं रजतमित्यादेरद्वैतश्रुत्यनुगुणत्वेन नाप्रामाण्यशंकास्कन्दनम्। अतो न वृद्धिमिच्छतो मूलहान्यापत्तिः।

नापि "सन् घटः" इत्यादेर्नेदं रजतमित्यनेन समानयोगक्षेमता, अद्वैतश्रुतिविरोधाविरोधाभ्यां विशेषात्।

अत एव सौषुप्तिकानन्दानुभवस्याप्यप्रामाण्ये कथमात्मन आनन्दरूपता तात्त्विकी, आनन्दश्रुतेरनुभूतातात्त्विकानन्दानुवादकत्वोपपत्ते-

---

धस्य तु नेदं रजतमित्यादेरद्वैतश्रुत्यनुगुणत्वेन नाप्रामाण्यशंकास्कन्दनम्। अतो न वृद्धिमिच्छतो मूलहान्यापत्तिः। प्रपञ्चमिथ्यात्वग्राहकागमानुमानादिमूलिकायाः प्रपञ्चसत्त्वप्रत्यक्षेऽप्रामाण्यशंकाया अस्माभिः स्वीकारात्। अयमत्राशयः—आगमादिभिः प्रपञ्चस्य मिथ्यात्वे सिद्धेऽपि प्रपञ्चसत्त्वग्राहिप्रत्यक्षस्य न सर्वथा अप्रामाण्यं व्यावहारिकसत्त्वविषयकत्वेन प्रत्यक्षस्य व्यावहारिकप्रामाण्यसमर्थनात् सर्वथा अबाध्यत्वरूपसत्त्वाग्राहकत्वेन प्रत्यक्षस्य अप्रामाण्यव्यवस्थापनात्। प्रपञ्चस्य व्यावहारकालाबाध्यत्वेन न तार्किकोक्तस्वक्रियाव्याघातादयो दोषा अस्मत्पक्षे प्रसरन्ति। सर्वशून्यवादिमाध्यमिकपक्षखण्डनाय उपन्यस्तं भट्टवाक्यं नास्मत्पक्षे संगच्छते। सर्वथाऽबाध्यब्रह्मस्वरूपस्वीकारात्। अद्वैतश्रुतिविरुद्धविषयकत्वाभावेन रूप्यादिनिषेधस्य नेदं रजतमित्यादेरद्वैतश्रुत्यनुगुणतया नाप्रामाण्यम्। अतो न वृद्धिमिच्छतः अनुमानेन प्रपञ्चमिथ्यात्वमिच्छतः शुक्तिरजतादिदृष्टान्तासिद्धिरूपो मूलहानिः। उक्तञ्च न्यायामृतकृद्भिः—"नेदं रूप्यमिति प्रत्यक्षप्रामाण्यमावश्यकम् अन्यथा इदं रूप्यमित्यस्याप्रामाण्यं न स्यादिति वृद्धिमिच्छतो मूलहान्यापत्तेः"। विश्वमिथ्यात्वानुमाने शुक्तिरूप्यमिथ्यात्वं मूलं विश्वमिथ्यात्ववृद्धिरिति वृद्धिमूलयोर्विवेकः। नापि सन् घट इत्यादेर्नेदं रजतमित्यनेन समानयोगक्षेमताऽद्वैतश्रुतिविरोधाविरोधाभ्यां विशेषात्। अद्वैतश्रुतिविरुद्धविषयकत्वाभावेन नेदं रजतमिति प्रत्यक्षस्य नाप्रामाण्यमद्वैतश्रुतिविरुद्धविषयकत्वेन सन् घट इत्यादिप्रत्यक्षस्याप्रामाण्यमेव। अतो नानयोः समानयोगक्षेमता। द्वयोर्विशेषस्तु मूले एवोक्तः। अत एव सौषुप्तिकानन्दानुभवस्य नाप्रामाण्यमद्वैतश्रुतिविरोधाभावादित्याह सिद्धान्ती—

अत एव सौषुप्तिकानन्दानुभवस्याप्रामाण्ये कथमात्मन आनन्दरूपता

रित्यपास्तम्; आनन्दस्य ब्रह्मरूपत्वेनाद्वैतश्रुतिविरोधाभावेन तदप्रमाण्य-प्रयोजकाभावात्।

अत एव नानन्दश्रुतेरप्रामाण्यम् तदुक्तं। खण्डने—

अत्यंन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि।
अबाधात्तु प्रमामत्र स्वतःप्रामांण्यनिश्चलाम्॥

इति। उक्तश्च सुरेश्वरवार्तिके—

अतोऽवबोधकत्वेन दुष्टकारणवर्जनात्।
अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादिवत् श्रुतेः॥

इति। अत्र च अक्षादिवदिति निदर्शनं व्यावहारिकप्रामाण्यमात्रेणेति द्रष्टव्यम्। एवं च तात्त्विकप्रामाण्याभावेऽपि प्रत्यक्षादीनां व्यावहा-रिकप्रामाण्याभ्युपगमात् न स्वक्रियाव्याघातः। न वा—

---

तात्त्विकी, आनन्दश्रुतेरनुभूतातात्त्विकानन्दानुवादकत्वोपपत्तेरिपास्तम्। आनन्दस्य ब्रह्मरूपत्वेनाद्वैतश्रुतिविरोधाभावेन तदप्रामाण्यप्रयोजका-भावात्। सौषुप्तानन्दानुभवस्याप्रामाण्ये आत्मनस्तात्त्विकी आनन्दरूपता न सिध्येत, सुषुप्तानुभूतातात्त्विकानन्दानुवादकता आनन्दश्रुतेः स्यादिति पूर्वपक्षयु-क्तमपास्तम्। सुषुप्तानुभूतानन्दस्य ब्रह्मरूपत्वेन सौषुप्तानन्दानुभवस्याद्वैतश्रुति-विरुद्धविषयकत्वाभावेन सौषुप्तानन्दानुभवस्य अप्रामाण्यव्याप्यरूपाभावात् नाप्रा-माण्यमिति भावः। अत एव नानन्दश्रुतेरप्रामाण्यम्। तदुक्तं खण्डने—

अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि।
अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम्॥ इति।

उक्तं च सुरेश्वरवार्तिके—

अतोऽवबोधकत्वेन दुष्टकारणवर्जनात्।
अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादिवत् श्रुतेः॥ इति।

अत्र च अक्षादिवदिति निदर्शनं व्यावहारिकप्रामाण्यमात्रेणेति द्रष्टव्यम्। एवञ्च तात्त्विकप्रामाण्याभावेऽपि प्रत्यक्षादीनां व्यावहारिक-प्रामाण्याभ्युपगमात् न स्वक्रियाव्याघातः। न वा

प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥

इत्यादिस्मृतिविरोधः । तस्मात् सिद्धं बाधनिश्चयेन तच्छंकया वा प्रत्यक्षादेरद्वैतागमानुमानाद्यविरोधित्वम् ॥८॥

इति भाविबाधोपपत्त्या प्रत्यक्षबाधोद्धारः ।

---

प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥

इत्यादिस्मृतिविरोधः । तस्मात् सिद्धं बाधानिश्चयेन तच्छंकया वा प्रत्यक्षादेरद्वैतागमानुमानाद्यविरोधित्वम् । अत एव अप्रामाण्यशंका-प्रयोजकाभावादेव । नानन्दश्रुतेरप्रामाण्यमखण्डाद्वितीयानन्दप्रतिपादिन्याः श्रुतेर्न-अप्रामाण्यम् । एतत् खण्डनोक्त्या समर्थयति—अत्यन्तासत्यपीत्यादि । प्रत्यक्षादि-विरोधात् अद्वैतश्रुतेरप्रामाण्यं परिहृत्य प्रमाणोत्पादकत्वलक्षणमप्रामाण्यं निरस्यन् चोदनासूत्रीयं वार्तिकपद्यमुदाहरति खण्डनकारः—नेदं पद्यं खण्डनकाररचितं किन्तु वार्तिकीयमिति बोध्यम् । तत्र च "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इत्येव पाठो वर्तते । अत्यन्तासति—तात्कालिकबाधधीविषयेऽपि कलहादिस्थले शब्दः ज्ञानं जनयति । शाब्दान्यविशिष्टबुद्धावेव बाधज्ञानस्य प्रतिबन्धकत्वकल्पनात् कलहादिस्थले यदा अचौरं त्वं दारुणश्चौर इति गालयति गर्हयति तदा अचौ-रस्य नाहं चौर इति बाधज्ञाने सत्यपि आहार्यचौरत्वज्ञानं जायते एव । अन्यथा तस्य क्रोधोद्रेको न स्यात्, वाक्यार्थज्ञानाभावात् तात्कालिकबाधधीविषयेऽपि शाब्दबुद्धेरुदयस्य सर्वसम्मतत्वात्, शाब्दबुद्धेरपि आहार्यत्वमङ्गीकरणीयम् । एतेन—प्रमाणन्तराविशायिमहिमा शब्दस्येति सूचितम् । कलहस्थले आहार्य-शाब्दज्ञानोत्पत्त्या शाब्दान्यविशिष्टबुद्धावेव बाधज्ञानस्य प्रतिबन्धकत्वं कल्पनीयम् । अत्र चानन्दश्रुतौ शुद्धानन्दे सद्वितीयत्वादिधीविषयत्वेनात्यन्तबाधितेऽपि श्रुतिः प्रमामेव जनयति न भ्रमं, कुतः अबाधात्, प्रामाण्यस्योत्पत्तिज्ञप्त्योः स्वतस्त्वापवा-दकयोः सदोषत्वबाधयोरभावात् । अद्वैतश्रुतौ न दोषः सम्भाव्यते, न वा अप्रामाण्यज्ञानानास्कन्दितं बाधकज्ञानम् । स्वतः प्रामाण्यनिश्चलामिति—उत्पत्ति-ज्ञप्तिस्वतस्त्वाश्रयप्रामाण्येन निश्चलां—स्वकार्यक्षमाम् । सुरेश्वरवार्तिकस्यायमर्थः—

अवबोधकत्वेन—अज्ञातज्ञापकत्वेन । दुष्टकरणवर्जनादित्यनेन उत्पत्तौ स्वतस्त्वापवादकं निरस्यति । अबाधादित्यनेन ज्ञप्तौ स्वतस्त्वापवादकं निरस्यति । वस्तुनि स्वविषये । अक्षादिवत् इति निदर्शनं व्यावहारिकप्रामाण्यमात्रेण । यथा व्यावहारिके प्रमाणे आगन्तुकदोषाप्रयुक्तविषयकत्वं व्यावहारिकप्रामाण्यव्यवस्थापकं तथा तात्त्विकप्रामाण्ये दोषसामान्याप्रयुक्तविषयकत्वमिति स्वापवादकदोषाप्रयुक्तविषयघटितप्रामाण्यपदार्थत्वेन उभयसाधारणधर्मेण दृष्टान्तदार्ष्टान्तिकभावः । एतेन पूर्वपक्षिणा अद्वैतिमते स्वक्रियाव्याघातादि यदाशंकितं तदपि समाहितम् । प्रत्यक्षादीनां तात्त्विकप्रामाण्याभावेऽपि व्यावहारिकप्रामाण्याभ्युपगमात् । प्रत्यक्षादीनां व्यावहारिकप्रामाण्याभ्युपगमेन मनुवचनमपि अनुकूलितं भवति इत्याह—प्रत्यक्षमनुमानञ्चेति । मनुसंहितायां द्वादशाध्याये पञ्चोत्तरशततमोऽयं श्लोकः । प्रकरणमुपसंहरति—तस्मात् सिद्धमित्यादि ॥८॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधिन्यां भाविबाधोपपत्तिविवरणं समाप्तम् ।

## अथ मिथ्यात्वानुमानस्यानुमानबाधोद्धारः ।

स्यादेतत् ? अध्यक्षस्य भिन्नविषयत्वादिना बाधाक्षमत्वेऽपि अनुमानमेव बाधकं स्यात् । तथा हि—ब्रह्मप्रमान्येन, वेदान्ततात्पर्यप्रमितिजन्यज्ञानान्येन वा, मोक्षहेतुज्ञानान्येन वा, अबाध्यत्वे सति असत्त्वानधिकरणत्वे सति ब्रह्मान्यत्, विमतं वा, सत्, परमार्थसद्वा, प्रातिभसिकत्वानधिकरणत्वे सति असद्विलक्षणत्वात् ब्रह्मवत्, व्यतिरेकेण शशशृंगवद्वेति चेत ॥ १ ॥

---

१—प्रपञ्चमिथ्यात्वानुमाने शंकितं प्रत्यक्षप्रमाणविरोधमुद्धृत्य अनुमानविरोधोद्धाराय वृत्तवर्तिष्यमाणविचारयोरेकवाक्यत्वाय वृत्तं विचारं संक्षेपतो दर्शयति—

स्यादेतत् ? अध्यक्षस्य भिन्नविषयत्वादिना बाधाक्षमत्वेऽपि अनुमानमेव बाधकं स्यात् । तथा हि—ब्रह्मप्रमान्येन वेदान्ततात्पर्यप्रमितिजन्यज्ञानान्येन वा मोक्षहेतुज्ञानान्येन वा अबाध्यत्वे सति असत्त्वानधिकरणत्वे सति ब्रह्मान्यत्, विमतं वा, सत्, परमार्थसद्वा, प्रातिभासिकत्वानधिकरणत्वे सति असद्विलक्षणत्वात्, ब्रह्मवत्, व्यतिरेकेण शशशृङ्गवद्वेति चेत् ? अयमर्थः—श्रुत्यनुमानविषयप्रपञ्चमिथ्यात्वाविरोधिव्यावहारिकसत्त्वविषयकत्वात् प्रत्यक्षस्य तेन भिन्नविषयकप्रत्यक्षेण प्रपञ्चमिथ्यात्वसाधकानुमानस्य बाधः यद्यपि न सम्भवति तथापि प्रपञ्चपारमार्थिकसत्त्वसाधकानुमानेन प्रपञ्चमिथ्यात्वानुमानस्य बाधो भविष्यतीत्यभिप्रेत्य पूर्वपक्षी प्रपञ्चस्य पारमार्थिकसत्त्वसाधकमनुमानमाह—अनुमानबाधितश्च दृश्यत्वादयः । तथा हि—ब्रह्मप्रमान्येन वेति । अयमर्थः—ब्रह्मप्रमान्येनइत्यादिब्रह्मान्यत् इत्यन्तेन पक्षनिर्देशः । गौरवान्मैवं पक्षनिर्देश इत्याशयेन लाघवेन पक्षं निर्दिशति—विमतं वेति । यस्मिन्प्रपञ्चे सत्यत्वमिथ्यात्वाभ्यां माध्ववेदान्तिनो र्विमतिर्विरुद्धा प्रतिपत्तिः तद्विशेष्यं विमतमिति । सत् परमार्थसद्वेति साध्यद्वयनिर्देशः । प्रातिभासिकत्वानधिकरणत्वे सति असद्विलक्षणत्वात् इति हेतुनिर्देशः । अन्वयेन ब्रह्मवदिति दृष्टान्तः, व्यतिरेकेण शशशृंगवदिति । व्यतिरेकदृष्टान्तस्तु न्यायामृते नोक्तः । पक्षप्रतिपादक-

वाक्यस्यायमर्थः—ब्रह्मप्रमान्येनाबाध्यत्वे सत्यसत्त्वानधिकरणत्वे सति ब्रह्मान्यत् इत्येकः पक्षनिर्देशः। द्वितीयस्तु वेदान्ततात्पर्यप्रमितिजन्यज्ञानान्येनाबाध्यत्वे सत्यसत्त्वानधिकरणत्वे सति ब्रह्मान्यत् इति। तृतीयस्तु मोक्षहेतुज्ञानान्येनाबाध्यत्वे सति असत्त्वानधिकरणत्वे सति ब्रह्मान्यदिति। प्रथमविशेषणस्यैव विकल्पेन त्रिधा निर्देशः कृतः, अन्यत् समानम्। प्रथमनिर्दिष्टवाक्यस्यायमर्थः—ब्रह्मान्यत् इति विशेष्यं सत्यन्तभागद्वयं विशेषणम्। केवलविशेष्यभागस्यैवोपादाने ब्रह्मभिन्नस्यासतोऽपि पक्षकोटिनिवेशप्राप्त्या तत्र सत्त्वसाधने बाधः स्यात् तद्वारणायासत्त्वानधिकरणत्वे सतीत्युक्तम्। तथापि प्रातिभासिकस्य पक्षकोटिप्रवेशापत्त्या तत्र सत्त्वसाधने बाधः स्यात् तद्वारणाय ब्रह्मप्रमान्येनाबाध्यत्वे सति इत्युक्तम्। अद्वैतमते प्रपञ्चस्याबाध्यत्वाभावेन आश्रयासिद्धिवारणाय ब्रह्मप्रमान्येनाबाध्यत्वे सतीत्युक्तम्। अद्वैतमते प्रपञ्चस्य ब्रह्मप्रमान्येनाबाध्यत्वात् पक्षलाभः, प्रातिभासिकस्य तु ब्रह्मप्रमान्येन बाध्यत्वात् तद्व्यावृत्तिः। माध्वमते पक्षलभाय नञ्द्वयगर्भता। माध्वमते प्रपञ्चस्य सर्वथा अबाध्यत्वात् ब्रह्मप्रमान्येनाबाध्यत्वमस्ति। अद्वैतमते व्यावहारिकप्रपञ्चस्य बाध्यत्वेऽपि ब्रह्मप्रमान्येनाबाध्यत्वमस्ति इति मतद्वयसाधारणत्वाय नञ्द्वयप्रवेशः। ब्रह्म वृत्तिव्याप्यमिति विवरणमते इदं पक्षविशेषणम्। ब्रह्म वृत्तिव्याप्यमपि न इति भामतीमते ब्रह्मप्रमा इत्येवं वक्तुमशक्यमत आह—वेदान्ततात्पर्यप्रमितीति। वेदान्ततात्पर्यप्रमाजन्यं यज्ज्ञानं चरमवृत्तिरूपं तदन्येन प्रपञ्चस्याबाध्यत्वात् न त्वन्मते पक्षालाभः। प्रातिभासिकस्य तु वेदान्ततात्पर्यप्रमाजन्यज्ञानान्यशुक्त्यादिज्ञानबाध्यत्वात् तद्व्यावृत्तिः। माध्वमते पक्षलाभाय नञ्द्वयगर्भत्वं शाब्दप्रमां प्रति तात्पर्यप्रमा हेतुरितिमते इदं द्वितीयविशेषणम्। शाब्दप्रमां प्रति तात्पर्यप्रमा न हेतुः अन्योन्याश्रयात् मानान्तरागम्यस्य वाक्यार्थस्य वाक्यादुपस्थितौ सत्यां तत्र वाक्यस्य तात्पर्यावधारणं, तात्पर्यावधारणे च सति तेन वाक्यार्थप्रतीतिरित्येवमन्योन्याश्रयात्न शब्दार्थसंसर्गरूपवाक्यार्थप्रमां प्रति तात्पर्यप्रमा हेतुरितिमते तृतीयं विशेषणमाह—मोक्षहेतुज्ञानान्येनेति। मोक्षहेतुभूतं यज्ज्ञानं चरमवृत्तिरूपं तदन्येन प्रपञ्चस्याबाध्यत्वान्नाद्वैतमते पक्षालाभः। माध्वमते पक्षलाभाय नञ्द्वयगर्भता; भावस्तु पूर्ववत्। प्रातिभासिकस्य तु मोक्षहेतुभूतज्ञानान्येन शुक्त्यादिज्ञानेन बाध्यत्वात् तद्व्यावृत्तिः। असत्त्वानधिकरणत्वे सतीत्य-

न, त्वन्मते प्रातिभासिकस्यापि असत्त्वेन व्यर्थविशेषणतया व्याप्यत्वासिद्धेः। अस्मन्मतमाश्रित्य हेतूकरणे च देहात्म्यैक्ये ब्रह्मज्ञानेतराबाध्ये व्यभिचारात्। न हि प्रातिभासिकत्वं ब्रह्मज्ञानेतरबाध्यत्वाद-

---

नेनासतो व्यावृत्तिः। ब्रह्मान्यदित्यनेन ब्रह्मणः। अनेन प्रातिभासिकासद् ब्रह्मभिन्नस्य व्यावहारिकप्रपञ्चमात्रस्यैव पक्षत्वमायातम्। एतत् सर्वं ग्रन्थप्रारम्भे एव प्रपञ्चमिथ्यात्वानुमानविवरणावसरे प्रपञ्चितं पूर्वग्रन्थानुसन्धानरहितस्य कृतेऽत्र पुनरुक्तम्। प्रथमसाध्यनिर्देशस्यायमाशयः—प्रपञ्चे व्यावहारिकसत्त्वं नाम सत्त्वेन प्रतीतिमात्रं वस्तुतोऽर्थगतं सत्त्वं नास्ति। अत एव प्रतिपन्नोपाधौ स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वमङ्गीकुर्वन्ति अद्वैतवादिनः। तन्मतप्रतिक्षेपाय सदित्येव साध्यनिर्देशः कृतः। अर्थगतम् आविद्यकं सत्त्वमस्ति अत एव प्रतिपन्नोपाधौ स्वरूपेण सत्ताप्रतिषेधस्य कर्तुमशक्यत्वात् पारमार्थिकत्वाकारेणैव निषेधमङ्गीकुर्वन्ति अद्वैतवादिनः। तन्मते सदित्येव साध्यनिर्देशे सिद्धसाधनता स्यात् अतः परमार्थसद्वा इत्युक्तम्। अद्वैतवादिना व्यावहारिकप्रपञ्चे पारमार्थिकसत्त्वनिषेधाङ्गीकारात्तत्र पारमार्थसत्त्वं साधयितुमेवं साध्यनिर्देशः कृतः। हेतुवाक्यस्यायमर्थः—प्रतिभासिकत्वानधिकरणत्वे सति असद्विलक्षणत्वात् इति प्रथमो हेतुः; असद्विलक्षणत्वमित्यस्य असत्त्वानधिकरणत्वमर्थः। तथा च अनधिकरणत्वादित्येवोक्ते सत्त्वादिधर्मानधिकरणेऽसति व्यभिचारः स्यात्। अतः असत्त्वानधिकरणत्वादित्युक्तम्। तावत्युक्ते प्रातिभासिके व्यभिचारः स्यात् अतः प्रातिभासिकत्वानधिकरणत्वे सतीति सत्यन्तं विशेषणमुपात्तम्। असति व्यभिचारवारणाय विशेष्यभागः। अन्वयिदृष्टान्ते ब्रह्मणि हेतुसाध्ययोरुभयसम्मतत्वात् ब्रह्मणो दृष्टान्तत्वम्। व्यतिरेकिदृष्टान्ते शशशृंगे साध्यहेत्वोरभावस्य उभयसम्मतत्वात् शशशृंगस्य व्यतिरेकिदृष्टान्तत्वम्। प्रपञ्चमिथ्यात्वानुमानबाधनाय सत्प्रतिपक्षमुद्भावयन् इदं प्रपञ्चसत्यत्वानुमानमुपन्यस्तम् ॥ १ ॥

२—इदं सत्प्रतिपक्षानुमानं दूषयन्नाह सिद्धान्ती—

न, त्वन्मते प्रातिभासिकस्यापि असत्त्वेन व्यर्थविशेषणतया व्याप्यत्वासिद्धेः। अस्मन्मतमाश्रित्य हेतूकरणे च देहात्म्यैक्ये ब्रह्मज्ञानेतराबाध्ये व्यभिचारात्। नहि प्रातिभासिकत्वं ब्रह्मज्ञानेतर-

न्यत् । त्वया हि प्रातिभासिकस्य शुक्तिरूप्यादेरपक्षत्वार्यं सत्यन्तमाद्यं विशेषणत्रयं विकल्पेन पक्षे प्रक्षिप्तम् । तत्र ब्रह्म वृत्तिव्याप्यमितिमतेनाद्यं तदनुभ्युपगमे तु शाब्दप्रमां प्रति तात्पर्यप्रमा हेतुरितिमतेन द्वितीयम् । अन्योन्याश्रयत्वात् न सा हेतुरितिमतेन तृतीयम् । तथा च प्रातिभासिकस्यासत्त्वानधिकरणत्वमङ्गीकृतमेव । अन्यथा तुच्छवारकासत्त्वानधिकत्वविशेषणेनैव तद्व्यावृत्तौ एतावत्प्रयासवैयर्थ्यापत्तेः ।

एवञ्च देहात्म्यैक्यस्यापि पक्षत्वे बाध एव । बाधे च सति पक्षविशेषणस्य पक्षत्वस्यासिद्धया आश्रयासिद्धिरपि ।

---

ध्यत्वादन्यत् । त्वया हि प्रातिभासिकस्य शुक्तिरूप्यादेरपक्षत्वाय सत्यन्तमाद्यं विशेषणत्रयं विकल्पेन पक्षे प्रक्षिप्तम् । तत्र ब्रह्म वृत्तिव्याप्यमिति मतेनाद्यम्, तदनभ्युपगमे तु शाब्दप्रमां प्रति तात्पर्यप्रमा हेतुरितिमतेन द्वितीयम् । अन्योन्याश्रयत्वात् न सा हेतुरिति मतेन तृतीयम् । तथा च प्रातिभासिकस्यासत्त्वानधिकरणत्वमङ्गीकृतमेव । अन्यथा तुच्छवारकासत्त्वानधिकरणत्वविशेषणेनैव तद्व्यावृत्तौ एतावत्प्रयासवैयर्थ्यापत्तेः । व्याप्यत्वासिद्धया हेतुं दूषयन्नाह—स्वन्मते इति । माध्वमते भ्रमस्थलेऽसत्ख्यातेः स्वीकारात् प्रातिभासिकशुक्तिरजतादिस्थलेऽसद्रजतादिस्वीकारात् असद्व्यतिरिक्तं प्रातिभासिकमेव नास्ति इति असद्विलक्षणत्वेनैव प्रातिभासिकवैलक्षण्यस्यापि सिद्धत्वात् पुनः प्रातिभासिकत्वानधिकरणे सति इति हेतौ सत्यन्तभागस्याव्यावर्तकतया व्यर्थत्वात् हेतोर्व्याप्यत्वासिद्धिरेव । व्याप्यत्वावच्छेदकान्तरघटितान्यहेतुतावच्छेदकं व्याप्तिरिति मतेन व्याप्यत्वासिद्धिप्रदर्शनम् । अशक्तिविशेषज्ञापकतया व्यर्थविशेषणत्वन्तु पुरुषनिग्राहकमात्रं न तु हेत्वाभासत्वमिति मते तु व्याप्यत्वासिद्धेरित्यस्य व्याप्यत्वे प्रयोक्तृनिग्राहकान्यहेतुनिष्ठत्वासिद्धेरित्यर्थः । अस्मन्मतमाश्रित्येति । अस्मन्मते प्रातिभासिकस्य असद्विलक्षणत्वात् असद्विलक्षणत्वमात्रेण प्रातिभासिकव्यावृत्तिर्न सिद्धयेदित्यभिप्राये तु देहात्म्यैक्ये हेतोर्व्यभिचारः स्यात्, देहात्म्यैक्ये सत्त्वं परमार्थसत्त्वं वा साध्यं नास्ति अथ च तत्र हेतुरस्तीति व्यभिचारः स्यात् । भवति हि देहात्म्यैक्यं ब्रह्मज्ञानेतराबाध्यम् । देहात्म्यैक्यस्य

अत एव स्वबाधकाभिमताबाध्यदोषजन्यज्ञानाविषयत्वे सति इति वा, स्वबाधकाभिमताबाध्यबाधाविषयत्वे सतीति वा, स्वसमानाधिकरणकर्मप्रागभावसमानकालीनज्ञानाबाध्यत्वे सतीति वा विशेषण-

---

माध्वमते अनङ्गीकारेऽपि अद्वैतमतमाश्रित्य हेतुप्रयोगेऽद्वैतमतसिद्धे देहात्मैक्ये व्यभिचारवारणमावश्यकमेव। न च देहात्म्यैक्यं प्रातिभासिकमेव तथा च तत्र हेतुरेव नास्तीति क्व व्यभिचार इति वाच्यं ब्रह्मज्ञानेतरबाध्यत्वमेव प्रातिभासिकत्वं देहात्म्यैक्यञ्च ब्रह्मज्ञानेतराबाध्यमिति न तस्य प्रातिभासिकत्वम्। तथा च देहात्म्यैक्यस्य प्रदर्शितसत्त्वानुमाने पक्षे अन्तर्भावात् तत्र च प्रदर्शितसाध्यस्याभावात् अंशतो बाधोऽपि स्यात्। एतच्च ग्रन्थकृतैव अनन्तरं वक्ष्यते। प्रातिभासिकशुक्तिरूप्यादेः पक्षबहिर्भावाय माध्वेन विकल्पेन आद्यं पक्षविशेषणं त्रिधा निरूपितम्। विकल्पितपक्षविशेषणत्रयस्य प्रयोजनं पूर्वपक्षविवरणावसरे एव प्रपञ्चितम्; अतोऽत्र न व्याख्यायते। पूर्वपक्षिणा प्रातिभासिकस्यासद्वैलक्षण्यमङ्गीकृत्यैव प्रातिभासिकस्य पक्षबहिर्भावाय आद्यं पक्षविशेषणं विकल्पत्रयेणोपन्यस्तम् अन्यथा द्वितीयपक्षविशेषणेनैव प्रातिभासिकस्य पक्षबहिर्भावे सम्भवति विकल्पितपक्षविशेषणत्रयनिरूपणं व्यर्थमेव स्यात्। तथा च अद्वैतमतमनुसृत्यैव पूर्वपक्षिणा प्रतिरोधानुमाने पक्षहेत्वोर्निर्देशः कृतः। एवं च अद्वैतमतरीत्या देहात्म्यैक्ये व्यभिचारः सुदृढ एव। इदानीं देहात्म्यैक्यं मन्मते असिद्धमिति त्वया कथयितुं न शक्यते। त्वन्मते असद्विलक्षणं प्रातिभासिकमपि असिद्धमेव कथं प्रातिभासिकव्यावर्तकं विशेषणं पक्षहेत्वोरुपात्तमिति विभावय। प्रकृतानुमाने देहात्म्यैक्यस्यापि पक्षकोटौ प्रवेशात् तत्र साध्यस्याभावात् अंशतो बाध एव इत्याह—एवं च सति पक्षविशेषणस्य पक्षत्वस्यासिद्ध्या आश्रयासिद्धिरपि। बाध एव इत्यस्य बाधोऽपि इत्यर्थः प्राचां मते साधकबाधकमानाभावरूपपक्षत्वस्याभावः आश्रयसिद्धिमध्ये निवेश्यते इति असिद्धिबाधयोराश्रयासिद्धत्वम्। प्रातिभासिकस्यापक्षत्वायाद्यं पक्षविशेषणमुक्तं प्रातिभासिकव्यावर्तकपक्षविशेषणं पुनः प्रकारान्तरेण त्रिधा निर्दिशति पूर्वपक्षी—

अत एव स्वबाधकाभिमताबाध्यदोषजन्यज्ञानाविषयत्वे सति इति वा, स्वबाधकाभिमताबाध्यबाधाविषयत्वे सतीति वा, स्वसमाना-

प्रक्षेपेऽपि न निस्तारः। देहात्म्यैक्ये पूर्वदोषाव्यावृत्तेरेव ॥२१॥

---

धिकरणकर्मप्रागभावसमानकालीनज्ञानाबाध्यत्वे सतीति वा विशेषण-प्रक्षेपेऽपि न निस्तारः। देहात्म्यैक्ये पूर्वदोषाव्यावृत्तेरेव। अत एव पूर्वोक्तदोषादेव विशेषणप्रक्षेपेऽपि न निस्तारः इत्यन्वयः। विशेषणत्रयस्यायमर्थः—पूर्वोक्तब्रह्मप्रमाण्येनाबाध्यत्वे सति इत्यादिपक्षविशेषणत्रयस्थाने वक्ष्यमाणं विशेषणत्रयं बोध्यम्। स्वबाधकेति—स्वं प्रातिभातिभासिकरूप्यादिकं तद्बाधकत्वेनाभिमतं नेदं रूप्यमितिज्ञानं तेनाऽबाध्यो यो दोषः चाकचिक्यादि तज्जन्यज्ञानं प्रातिभासिकरूप्यादिज्ञानं तद्विषयत्वं प्रातिभासिके रूप्यादौ तदविषयत्वं व्यावहारिकमात्रे वियदादौ घटपटादौ च, प्रपञ्चबाधकब्रह्मज्ञानेन यथा प्रपञ्चो बाध्यते तथा तज्ज्ञानं तज्ज्ञानजनकाविद्यादोषः च तेनैव ब्रह्मज्ञानेन बाध्यते इति अद्वैतवादिनो वदन्ति किन्तु लोकसिद्धशुक्तिरजताध्यासबाधकज्ञानेन दोषो न बाध्यते अतोऽबाध्यदोषजन्यज्ञानविषयत्वं प्रातिभासिके अबाध्यदोषजन्यज्ञानाविषयत्वं व्यावहारिके प्रपञ्चे वर्तते अतो लोकसिद्धाध्यासवैलक्षण्यात् प्रपञ्चो नाध्यस्तो न मिथ्येति पूर्वपक्षिणोऽभिमानः। द्वितीयविशेषणस्यायमर्थः—स्वं शुक्तिरूप्यं तद्बाधकाभिमतं नेदं रूप्यमिति ज्ञानं; न च तेनैव बाधकज्ञानेन बाधकज्ञानं बाध्यते स्वस्य स्वबाधकत्वाभावात्। तथा च शुक्तिरुप्यादि स्वबाधकाभिमताबाध्यबाधविषयं भवति। अद्वैतमते प्रपञ्चबाधकत्वेनाभिमतं ब्रह्मज्ञानं तच्च तेनैव बाध्यते चरमब्रह्मसाक्षात्कारस्य स्वपरविरोधित्वाङ्गीकारात् तथा च शुक्तिरजतस्य स्वबाधकाभिमताबाध्यबाधविषयत्वेऽपि व्यावहारिकप्रपञ्चस्य स्वबाधकाभिमताबाध्यबाधाविषयत्वमस्ति। प्रपञ्चबाधकज्ञानं स्वस्यापि बाधकं भवतीति अद्वैतवादिनो मन्यन्ते। माध्वमते प्रपञ्चबाधकं ज्ञानमेव सर्वथा अप्रसिद्धं तैः प्रपञ्चस्याबाध्यत्वाङ्गीकारात् अतो बाधकमित्युनुक्त्वा बाधकाभिमतेत्युक्तम्। अद्वैतबाधकं ज्ञानं यत् प्रसिद्धं तदेव माध्वमते बाधकत्वेनाभिमानविषयीभूतं नतु बाधकत्वेन प्रमितम्। द्वितीयविशेषणेनापि प्रातिभासिकव्यावृत्तिरुक्ता। तृतीयविशेषणस्यायमर्थः—स्वसमानाधिकरणेति स्वं बाधकज्ञानम्। ज्ञानाबाध्यत्वे सतीत्येवोक्तेऽद्वैतमते पक्षालाभः स्यात् तैः प्रपञ्चस्य ब्रह्मज्ञनबाध्यत्वाङ्गीकारात्। अतः कर्मप्रागभावसमानकाकालीनेत्युक्तम्। जगद्बाधकं च ज्ञानं न कर्मप्रागभाव-

यत्तु प्रथमे साध्ये व्यावहारिकसत्त्वमादाय सिद्धसाधनं द्वितीयसाध्ये तु वादिनः परमार्थत्वविशेषणं व्यर्थं व्यावर्त्याप्रसिद्धेरिति तन्न, व्यावहारिकसत्त्वं सत्त्वेन प्रतीतिमात्रम् इतिमतेन प्रथमप्रयोगात्। अनुगतं पृथग्व्यावहारिकं सत्त्वमिति तु मते द्वितीयः प्रयोगः। न च विशेषणं व्यर्थं परार्थानुमाने परं प्रति सिद्धसाधनोद्धारस्य तत्प्रयोजनत्वात्। ईश्वरानुमाने जन्यकृत्यजन्यमित्यत्र जन्यत्वस्येव विश्वपरमार्थ-

---

समानकालीनं ब्रह्मसाक्षात्कारानन्तरं "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति वचनात् कर्मणामनुदयेन तदा कर्मप्रागभावाभावात्। अतः कर्मप्रागभावसमानकालीनं यदयं घट इत्यादिज्ञानं तदबाध्यत्वं व्यावहारिकप्रपञ्चेऽस्तीति न पक्षालाभः। ननु तथापि पक्षालाभ एव यज्ञदत्तस्य जगद्बाधकज्ञानोत्पत्तिकाले देवदत्तकर्मप्रागभावसत्त्वेन प्रपञ्चस्य देवदत्तकर्मप्रागभावसमानकालीनयज्ञदत्तज्ञानेन बाध्यत्वादतः समानाधिकरणेति कर्मप्रागभावविशेषणं तथा च बाधकज्ञानधिकरणको यः कर्मप्रागभावः यज्ञदत्तीय एव तत्समानकालीनं यज्ज्ञानम् अयं घट इति ज्ञानं तेनाबाध्यत्वं व्यवहारिकप्रपञ्चेऽस्तीत्यर्थः। प्रातिभासिकशुक्तिरजतादेश्च स्वसमानाधिकरणकर्मप्रागभावसमानकालीनज्ञानबाध्यत्वमेव इति तेषां पक्षबहिर्भावः सिध्यति। स्वबाधकेत्यादिप्रकारत्रयेणापि पक्षनिर्देशेन प्रातिभासिकस्य पक्षाद्व्यावृत्तिः सिद्धा। पूर्वपक्षिणा एवं पक्षविशेषणे उपात्तेऽपि दोषादनिस्तार एव देहात्म्यैक्ये व्यभिचारस्य दर्शितत्वात्, अस्मिन्नपि पक्षे तवैव स एव दोषः अपरमार्थसति देहात्म्यैक्ये हेतोर्वृत्तेरिति भावः ॥२॥

३—पूर्वपक्षिणा सत्, परमार्थसद्वेति साध्यद्वयमुपात्तम्। तत्र दूषणमाशंक्य समाधीयते—

यत्तु प्रथमे साध्ये व्यावहारिकसत्त्वमादाय सिद्धसाधनं द्वितीयसाध्ये तु वादिनः परमार्थत्वविशेषणं व्यर्थम् व्यावर्त्याप्रसिद्धेरिति तन्न, व्यावहारिकसत्त्वं सत्त्वेन प्रतीतिमात्रम् इति मतेन प्रथमप्रयोगात्। अनुगतं पृथग्व्यावहारिकं सत्त्वम् इति तु मते द्वितीयः प्रयोगः। न च विशेषणं व्यर्थं परार्थानुमाने परं इति सिद्धसाधनोद्धारस्य तत्प्रयोजनत्वात्। ईश्वरानुमाने जन्यकृत्यजन्यमित्यत्र जन्यत्वस्येव विश्वपरमार्थ-

त्ववादिनं प्रति परमार्थत्वस्य प्रमेयत्वादिवदुपरञ्जकत्वेन विशेषणत्वोपपत्तेश्च ॥३॥

---

त्ववादिनं प्रति परमार्थत्वस्य प्रमेयत्वादिवदुपरञ्जकत्वेन विशेषणत्वोपपत्तेश्च । प्रथमे तु सदित्येव साध्यनिर्देशेकृते प्रपञ्चे व्यावहारिकसत्त्वस्याद्वैतवादिनाऽङ्गीकारात् सिद्धसाधनं स्यात् । द्वितीये साध्ये तु इति—परमार्थसत् इति द्वितीयसाध्यनिर्देशे माध्वं प्रति परमार्थत्वं विशेषणं व्यर्थं स्यात् । तेन जगतः सदेकस्वभावताङ्गीकारात् ब्रह्मप्रपञ्चयोस्तुल्यसत्ताकत्वात् माध्वमते सत्त्वे परमार्थत्वविशेषणं विशेषणव्यावर्त्याप्रसिद्ध्या व्यर्थमेवेति अद्वैतवादिना चोदयितुं न शक्यम् । कुतो न शक्यमित्याह—व्यावहारिकसत्त्वमिति । सत्त्वत्रैविध्यानङ्गीकारमते सदिदमिति धीप्रकारस्वरूपैक्यसाधने न सिद्धसाधनम् । कृतव्युत्पादनोऽयं पक्षः पूर्वम् । अनुगतं पृथग्व्यावहारिकमिति शुक्तिरूप्यं सत् ब्रह्म सत् इत्यादिधीविषयाभ्यां प्रातीतिकपारमार्थिकसत्त्वाभ्यामन्यत् व्यावहारिकं सत् । त्रिविधसत्त्वानां लक्षणानि तु—पल्लवाविद्याकार्यगतं चैतन्यं प्रातीतिकं सत्, मूलाविद्याकार्यगतं चैतन्यं व्यावहारिकं सत्, शुद्धचिद्रूपं पारमार्थिकम् । पृथक् व्यावहारिकसत्त्वमते परमार्थसदिति द्वितीयं साध्यम् । परमार्थत्वविशेषणं व्यर्थमिति न वाच्यं परं प्रति सिद्धसाधनोद्धारस्य प्रयोजनत्वात् स्वं प्रति प्रयोजनाभावेऽपि प्रातिभासिकव्यावहारिकसत्त्वव्यावृत्त्यर्थत्वात् । न च माध्वमते व्यावर्त्याप्रसिद्धिरिति वाच्यम् परमते प्रयोजनसद्भावेन परप्रसिद्धिमात्रेण व्यावर्त्यत्वोपपत्तेः । अनिर्वाच्यलक्षणे सदसत्त्वानधिकरणत्वे सति इति विशेषणव्यावर्त्यस्य स्वमते असिद्धस्यापि सदसत्त्वस्येव स्याद्वादिमतसिद्धस्य व्यावर्त्यस्य यथोपपत्तिः प्रकृतेऽपि तथा । ईश्वरानुमाने इति । परमते सिद्धसाधनवारणाय विशेषणोपादानं दर्शयितुमाह—मीमांसकं प्रति ईश्वरानुमाने मीमांसकेन ईश्वरानङ्गीकारात् नित्यकृत्यस्वीकारात् तं प्रति जन्यत्वविशेषणं व्यर्थम् । ईश्वरसाधकानुमानञ्च—अदृष्टाद्वारकस्वोपादानगोचरजन्यकृत्यजन्यानि भावकार्याणि स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि; समवेतत्वे सति प्रागभावप्रतियोगित्वात् यदेवं तदेवं यथा घटः । मीमांसकमते जन्याजन्यकृतिद्वयाभावात् कृतिमात्रं जन्यमेव । तथा च कृतेर्जन्यत्वविशेषणम् अव्यावर्तकं स्वमते व्यावर्त्याभावात् । अतः इदमाशंक्योक्तं चिन्तामणौ "न च जन्यत्वस्य व्यावर्त्याप्रसिद्धिः, प्रमेयो घट इतिवदव्यावर्त-

तस्मात् पूर्वोक्त एव दोषः हेतौ च व्यर्थविशेषणत्वदोषः। यद्यपि मतद्वयेऽपि अप्रामाणिकस्यापि निषेधप्रतियोगित्वाभ्युपगमादारोपितत्वेनोभयसम्मतत्वरूपस्य वा प्रतिभासमात्रशरीरत्वरूपस्य वा प्रातिभासिकत्वस्य प्रसिद्धिरस्ति अन्यथा सिद्धान्तेऽपि मिथ्यात्वानुमाने प्रातिभासिकान्यस्यैव पक्षीकर्तव्यत्वात् दोषसाम्यं स्यात् ॥४॥

---

क्त्वेऽपि तदुपरक्तबुद्धेरुद्देश्यत्वेन तस्योपरञ्जकत्वात्"। एवञ्च विश्वपरमार्थत्ववादिनं माध्वं प्रति परमार्थत्वविशेषणस्य प्रमेयो घटः इत्यत्र प्रमेयत्वादिवत् विशेषणत्वोपपत्तेश्च। विशेषणस्योभयसिद्धप्रयोजनवत्त्वं तन्त्रम्। न तु एकस्यैव प्रयोजनस्योभयसिद्धिः। उपरञ्जकत्वेन—अव्यावर्तकत्वेन। व्यावर्तकं विशेषणमव्यावर्तकमपि तदुपरक्तबुद्धिजनकत्वेन उपरञ्जकमित्युच्यते ॥३॥

४—पूर्वोक्तं दोषमनुवदन् दोषान्तरमाह सिद्धान्ती—

तस्मात् पूर्वोक्त एव दोषः हेतौ च व्यर्थविशेषणत्वदोषः। यद्यपि मतद्वयेऽपि अप्रामाणिकस्यापि निषेधप्रतियोगित्वाभ्युपगमात् आरोपितत्वेनोभयसम्मतत्वरूपस्य वा प्रतिभासमात्रशरीरत्वरूपस्य वा प्रातिभासिकत्वस्य प्रसिद्धिरस्ति अन्यथा सिद्धान्तेऽपि मिथ्यात्वानुमाने प्रातिभासिकान्यस्यैव पक्षीकर्तव्यत्वात् दोषसाम्यं स्यात्। सत्प्रतिपक्षानुमाने देहात्म्यैक्यमपि पक्षकोटिप्रविष्टम्, अतः तत्र बाधः देहात्म्यैक्ये हेतोर्व्यभिचारश्च पूर्वोक्तो दोषः सुदृढ एव। प्रातिभासिकत्वानधिकरणत्वे सति असद्विलक्षणत्वादित्याद्यहेतौ च व्यर्थविशेषणत्वदोषः प्रातिभासिकत्वविशेषणं व्यर्थमनधिकरणत्वे सति असद्विलक्षणत्वादित्येतावन्मात्रस्यैव साध्यप्रयोजकत्वसम्भवात्। इदं पुनरत्र न्यायामृते शंकितं—न च आद्यहेतौ वादिनं माध्वं प्रति प्रातिभासिकत्वाप्रसिद्ध्या तदनधिकरणत्वाप्रसिद्धिः। माध्वमतेऽसद्व्यतिरिक्तं प्रातिभासिकमप्रसिद्धम्। अतः प्रातिभासिकत्वानधिकरणत्वमपि माध्वमतेऽप्रसिद्धम्। अतः स्वमतासिद्धहेतुकानुमितिः न स्यात्। उक्तञ्च भट्टैः—

यत्र तावत् स्वयंसिद्धः परासिद्धोऽभिधीयते।
भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया ॥ इति।

तथापि हेतौ प्रातिभासिकत्वविशेषणं व्यर्थम्, अनधिकरणत्वे सति असत्त्वानधिकरणत्वमात्रस्यैव परमार्थसत्त्वसाधकत्वोपपत्तेः। शुद्धं हि ब्रह्म दृष्टान्तत्वेनाभ्युपेयं धर्मवतो दृष्टान्तत्वे साध्यवैकल्यापत्तेः।

---

हेत्वसिद्धिं दर्शयन् परिहरति पूर्वपक्षी—यद्यपीति—मतद्वयेऽद्वैतिमते माध्वमतेऽप्रामाणिकस्य निषेधप्रतियोगित्वं स्वीक्रियते। यद्यप्येतत् नैयायिकैर्न स्वीक्रियते उक्तञ्च तात्पर्यटीकायां सद्भ्यामभावो निरूप्यते इति [पृ० १४४ मेट्रोसं] उदयनाचार्यैरप्युक्तम्—आभासप्रतिपन्नस्य आश्रयत्वप्रतिषेध्यत्वानुपपत्तेः।

व्यावर्त्याभाववत्त्वैव भाविकी हि विशेष्यता।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता॥ इति।

[कुसुमाञ्जलौ तृतीयस्तबके द्वितीयकारिका]

तथापि प्रमाणासिद्धस्य प्रातिभासिकस्य निषेधप्रतियोगित्वम् अद्वैतिभिः अप्रामाणिकस्यासतो निषेधप्रतियोगित्वं माध्वैः स्वीक्रियते अतः अप्रामाणिकस्य निषेधप्रतियोगित्वमुभयमतसिद्धम्। अतः माध्वमते प्रातिभासिकस्याप्रामाणिकत्वेऽपि निषेधप्रतियोगित्वाभ्युपगमात् प्रातिभासिकत्वानधिकरणत्वं नासिद्धमिति भावः। प्रातिभासिकस्य शुक्तिरूप्यादेः आरोपितत्वेनोभयसम्मतत्वात् प्रतिभासमात्रशरीरत्वं प्रसिद्धमेव। वस्तुनः प्रसिद्धत्वमात्रेणैव निषेधप्रतियोगित्वम् अप्रसिद्धप्रतियोगिकनिषेधासम्भवात्। न तु प्रतियोगिनः प्रमितत्वमपेक्षते अनुपयोगात् इति पूर्वपक्षिण आशयः। अन्यथेति—प्रातिभासिकत्वाप्रसिद्ध्या तदनधिकरणत्वाप्रसिद्धौ चोदितायामद्वैतिना त्वयाऽपि सिद्धसाधनतापरिहाराय प्रातिभासिकान्यत् विश्वं मिथ्येति अनुमातव्यं तथा च माध्वमते प्रतियोगिप्रातिभासिकस्य अप्रसिद्ध्या तदन्यत्वाप्रसिद्धेः पक्ष एवाप्रसिद्ध इत्यनुमास्यैवायोग इति दोषसाम्यम्॥४॥

५—सिद्धान्ती माध्वमते प्रातिभासिकाप्रसिद्ध्या प्रातिभासिकत्वानधिकरणत्वस्य हेतोरसिद्धिं न वदति किन्तु हेतौ प्रातिभासिकत्वविशेषणस्य व्यर्थत्वमेव वदति इत्याह—तथापि हेतौ प्रातिभासिकत्वविशेषणं व्यर्थम्, अनधिकरणत्वे सति असत्त्वानधिकरणत्वमात्रस्यैव परमार्थसत्त्वसाधकत्वो-

साध्यं तु बाधाभावरूपत्वात् अधिकरणस्वरूपमेव न धर्मः, धर्म्यतिरिक्ताभावानभ्युपगमस्योक्तत्वात्। तथा च चक्षुस्तैजसत्वानुमाने रूपादिषु मध्ये इत्यसिद्धिवारकस्यापि व्याप्तिग्रहौपयिकत्वेन व्यभिचारवारकविशेषणतुल्यतया यद्यपि सार्थकत्वं व्यभिचारवारकस्यापि सार्थकत्वे व्याप्तिग्रहौपयिकत्वमात्रस्य तन्त्रत्वात् तथापि क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वात् इत्यत्र शरीरस्यैव व्याप्तिग्रहानुपयोगित्वेन

---

पपत्तेः। शुद्धं हि ब्रह्म दृष्टान्तत्वेनाभ्युपेयं धर्मवतो दृष्टान्तत्वे साध्यवैकल्यापत्तेः। हेतोव्यर्थविशेषणत्वमेवाह—अनधिकरणत्वे सति असत्त्वानधिकरणत्वस्यैव परमार्थसाधकत्वोपपत्तेः। निर्धर्मकं शुद्धं ब्रह्म दृष्टान्तत्वेनोपात्तं तच्च ब्रह्म सर्वस्यैवानधिकरणं न केवलं प्रातिभासिकानधिकरणं तथा चानधिकरणत्वे सति इत्येव वक्तुमुचितमन्यथा व्यर्थविशेषणता स्यात्। अनधिकरणत्वमसतोऽपि वर्तते अतोऽसति व्यभिचारः स्यात्। तद्वारणायानधिकरणत्वे सत्यसत्त्वानधिकरणत्वं हेतुत्वेन वक्तव्यं तस्यैव परमार्थत्वसाधकत्वात्। धर्मवतः कस्यचिद्वस्तुनो दृष्टान्तत्वे तस्य मिथ्यात्वात् परमार्थत्वरूपसाध्याभावात् साध्यविकलो दृष्टान्तः स्यात् दृष्टान्तस्य साध्यवैकल्ये हेतौ व्याप्तिग्रह एव न स्यात्। तथा च गतमनुमानेन—इत्याह—धर्मवतो दृष्टान्तत्वे साध्यवैकल्यापत्तेरिति। यदि निर्धर्मकशुद्धब्रह्मणो दृष्टान्तत्वे तत्र यथा अनधिकरणत्वरूपो हेतुर्वर्तते ब्रह्मणः कस्यचिदनधिकरणत्वात् तर्हि शान्तिकर्मणि वेतालोदयः स्यात्। निर्धर्मके ब्रह्मणि साध्यधर्मस्याप्यभावात् साध्यविकलो दृष्टान्तः स्यात्। धर्मवतो दृष्टान्तत्वे यथा साध्यवैकल्यं तथा निर्धर्मकब्रह्मणो दृष्टान्तत्वेऽपि साध्यवैकल्यमेव इत्याशंक्य समाधत्ते—

साध्यं तु बाधाभावरूपत्वादधिकरणस्वरूपमेव न धर्मः, धर्म्यतिरिक्ताभावानभ्युपगमस्योक्तत्वात्। तथा च चक्षुस्तैजसत्वानुमाने रूपादिषु मध्ये इत्यसिद्धिवारकस्यापि व्याप्तिग्रहौपयिकत्वेन व्यभिचारवारकविशेषणतुल्यतया यद्यपि सार्थकत्वं व्यभिचारवारकस्यापि सार्थकत्वे व्याप्तिग्रहौपयिकत्वमात्रस्य तंत्रत्वात्। तथापि क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वात् इत्यत्र शरीरस्यैव व्याप्तिग्रहानुपयोगि-

प्रातिभासिकत्वस्य वैयर्थ्यमेव। आकाशादौ अजन्यत्वकर्तृजन्यत्वाभावयोरिव निर्धर्मके ब्रह्मणि अनधिकरणत्वपरमार्थसत्त्वयोर्व्याप्तिग्रहोपपत्तेः। तथा च एकामसिद्धि परिहरतो द्वितायासिद्ध्यापात्तिः। स्वरूपासिद्धिपरिहारार्थं विशेषणं प्रक्षिपतो व्याप्यत्वासिद्धिरित्यर्थः, व्याप्तौ अनुपयोगस्य दर्शितत्वात्।

---

त्वेन प्रातिभासिकत्वस्य वैयर्थ्यमेव। आकाशादौ अजन्यत्वकर्तृजन्यत्वाभावयोरिव निर्धर्मके ब्रह्मणि अनधिकरणत्वपरमार्थसत्त्वयोर्व्याप्तिग्रहोपपत्तेः। तथा च एकामसिद्धिम् परिहरतो द्वितीयासिद्ध्यापत्तिः। स्वरूपासिद्धिपरिहारार्थं विशेषणं प्रक्षिपतो व्याप्यत्वासिद्धेरित्यर्थः, व्याप्तौ अनुपयोगस्य दर्शितत्वात्। साध्यं यद्यपि धर्मः तथापि प्रकृते साध्यस्याभावरूपत्वादधिकरणस्वरूपत्वमेव न धर्मः अतो दृष्टान्तस्य न साध्यवैकल्पमित्याह—साध्यं तु परमार्थसत्वं बाधाभावरूपं बाध्यस्यैवापरमार्थसत्त्वात् परमार्थसति ब्रह्मणि बाधाभावोऽधिकरणस्वरूपम् एवाधिकरणातिरिक्ताभावानभ्युपगमस्य मिथ्यात्ववादे उक्तत्वात्। तथा च न दृष्टान्तस्य साध्यवैकल्यम्। अस्मिन् सत्प्रतिपक्षानुमाने व्यावहारिकप्रपञ्चः पक्षत्वेन निर्दिष्टः तस्य विविधधर्माधिकरणत्वात् अनधिकरणत्वस्य हेतुत्वे हेतोः पक्षावृत्तितया स्वरूपासिद्धिः स्यात् तद्वारणाय प्रातिभासिकत्वानधिकरणत्वस्य हेतुत्वमुक्तं पूर्वपक्षिणा। हेतौ प्रातिभासिकत्वविशेषणस्य स्वरूपासिद्धिमात्रवारकतया वैयर्थ्यमेव इति प्रतिपादयितुम् असिद्धिवारकविशेषणस्यापि व्याप्तिग्रहौपयिकत्वेन व्यर्थत्वमिति प्रतिपादयितुं चिरंतनवैशेषिकैः चक्षुस्तैजसत्त्वानुमाने स्वरूपासिद्धिवारकविशेषणस्य व्यभिचारस्यापि वारकतया उपात्तम् हेतुविशेषणं न व्यर्थमित्याह—चक्षुस्तैजसत्वानुमाने इति। उक्तं च लक्षणावल्याम् उदयनेन—चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वात् आलोकवदिति। [लक्षणावली पृ. ५] अत्र रूपस्यैवाभिव्यञ्जकत्वात् इत्येवोक्तौ स्वरूपासिद्धिः स्यात् चक्षुषो रूपत्वादेरपि व्यञ्जकत्वात्। न केवलस्य रूपस्य व्यञ्जकत्वम्। अतः स्वरूपासिद्धेर्वारणाय रूपादिषु पञ्चसु विशेषगुणेषु मध्ये इति हेतुविशेषणमुपात्तम्। इदं विशेषणं न केवलं स्वरूपासिद्धिवारकं किन्तु व्याप्तिग्रहौपयिकञ्च। अन्यथा रूपस्यैव व्यञ्जकत्वस्य हेतोरा-

किं च व्यावहारिकसत्त्वमात्रेणैव उपपत्तेः उक्तहेतोरप्रयोज-

---

लोकदृष्टान्तेऽपि अभावात् दृष्टान्तस्य साधनवैकल्येन हेतौ साध्यव्याप्तिग्रह एव न स्यात् । ततश्च गतमनुमानेन । तथा च चिरन्तनवैशेषिकानुमाने असिद्धिवारकस्यापि विशेषणस्य व्याप्तिग्रहौपयिकतया न व्यर्थत्वं किंतु व्याप्तिग्रहौपयिकतया व्यभिचारवारकविशेषणतुल्यत्वेन सार्थकत्वमेव । व्यभिचारवारकस्यापि विशेषणस्य सार्थकत्वे व्याप्तिग्रहौपयिकत्वमात्रस्य प्रयोजकत्वात् यद्विशेषणं व्याप्तिग्रहौपयिकं तत्सार्थकमिति व्याप्तेरिति भावः । यद्यपि असिद्धिवारकस्यापि व्याप्तिग्रहौपयिकत्वेन सार्थकत्वं तथापि व्याप्तिग्रहणौपयिकस्य असिद्धिवारकविशेषणस्य व्यर्थत्वमेव इत्याह—तथापि क्षित्यादिकमिति । उक्तं च आत्मतत्त्वविवेके अनुपलम्भवादे 'अस्तु तर्हि सत्प्रतिपक्षत्वं शरीरजन्यत्वादिति चेत्, न ? असमर्थविशेषणत्वेन असिद्धिभेदस्य अतुल्यबलत्वात् । असिद्धिपरिहारे विशेषणं समर्थमिति चेत् ? न, एकामसिद्धिं परिहरतो द्वितीयापत्तेः' [आत्मतत्त्वविवेक पृ० ८३४] विवृतञ्च तत्र शिरोमणिना—हेतुविशेषणस्यार्थः प्रयोजनं व्यभिचारवारणं तदभावात् असमर्थत्वम् । व्यभिचारवारणवत् स्वरूपासिद्धिवारणमपि प्रयोजनं परामर्शोपयोगित्वात् इत्याशङ्कतेऽसिद्धीति । एकां स्वरूपासिद्धिं, द्वितीयायाः व्याप्यत्वासिद्धेरापत्तेः व्यभिचारावारकविशेषणविशिष्टस्य नीलधूमादेरव्याप्यत्वात्—' पृष्ठ ८३५] । क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वात् गगनवत् इत्यत्र असिद्धिवारकशरीरविशेषणस्य व्याप्तिग्रहानुपयोगित्वेन यथा व्यर्थत्वं तथा प्रातिभासिकत्वविशेषणस्यापि व्यर्थत्वमेव आकाशादौ नित्यद्रव्ये अजन्यत्वकर्तृत्वाभावयोर्यथा व्याप्तिग्रहोपपत्तिः तथा निर्धर्मके ब्रह्मणि अनधिकरणत्वपरमार्थसत्त्वयोरपि व्याप्तिग्रहोपपत्तेः प्रातिभासिकत्वविशेषणं व्याप्तिग्रहानौपयिकत्वेन व्यर्थमेव । तथा च यदुक्तमुदयनेन एकामसिद्धिं परिहरतो द्वितीयापत्तेरिति' तदिहापि स्यात् । प्रतिरोधानुमाने स्वरूपासिद्धिवारणाय प्रातिभासिकत्वविशेषणप्रक्षेपे व्याप्यत्वासिद्धिः स्यात् तथा च प्रतिरोधानुमानं दुष्टत्वात् हीनबलमेवेति भावः । निर्धर्मके ब्रह्मणि दृष्टान्ते हेतौ साध्यव्याप्तिग्रहे प्रातिभासिकत्वविशेषणस्य यथानुपयोगस्तथा निर्धर्मके ब्रह्मणि अनधिकरणत्वपरमार्थसत्त्वयोर्व्याप्तिग्रहोपपत्तेरिति ग्रन्थेन दर्शित एव । किं च अस्मिन् प्रतिरोधानुमाने दूषणान्तरं दर्शयितुमाह—किं च

कत्वम्। परमार्थसत्त्वे बाधानुपपत्तिलक्षणप्रतिकूलतर्कपराघाताच्च ॥५॥

ननु ब्रह्मणि असत्प्रातिभासिकव्यावृत्तिरूपं हेतुं प्रति व्यावर्तकतया प्रयोजकत्वेन परमार्थसत्त्वं क्लृप्तम्। अपृथिवीव्यावृत्तिं पृथिवीत्वस्येव असद्व्यावृत्तिं प्रति तद्विरुद्धसत्त्वस्यैव प्रयोजकत्वात् ज्ञानत्वानन्दत्वादिकं तु न तत्प्रयोजकं साक्षादसत्त्वाविरोधित्वात् प्रपञ्चे तदभावाच्च। तथा च ब्रह्मविश्वसाधारणं परमार्थसत्त्वमेव तत्प्रयोजकम् ॥६॥

---

व्यावहारिकसत्त्वमात्रेणैव उपपत्तेः उक्तहेतोरप्रयोजकत्वम्। परमार्थसत्त्वे बाधानुपपत्तिलक्षणप्रतिकूलतर्कपराघाताच्च। पक्षे हेतुना तादृशसाध्यमेव सिध्यति यादृशसाध्यस्य पक्षेऽसत्त्वे पक्षे हेतोरुच्छेदः स्यात्। यादृशसाध्यं विनापि पक्षे हेतोः सत्त्वं सम्भवति तेन हेतुना तादृशं साध्यं पक्षे न सिध्यतीत्याह—व्यावहारिकसत्त्वमात्रेणेति। व्यावहारिकप्रपञ्चे पक्षे पारमार्थिकसत्त्वाभावेऽपि व्यावहारिकसत्त्वमात्रेण प्रातिभासिकासद्वैलक्षण्यस्य हेतोरुपपत्तेः परमार्थसत्त्वसाधने हेतोरप्रयोजकत्वमेव। व्यावहारिकप्रपञ्चोऽपि प्रातिभासिकासद्विलक्षण एव। प्रपञ्चो यदि पारमार्थिकः स्यात् श्रुत्यनूदितबाधो न स्यात्। प्रपञ्चबाधश्च श्रुत्यानूद्यत एव 'यस्मिन् सर्वाणि भूतानि आत्मैवाहुः विजानतः' इति श्रुत्या प्रपञ्चबाधोऽनूद्यते। पारमार्थिकत्वे स न स्यात्। इति प्रतिकूलतर्कपराहतो हेतुः न पारमार्थिकसत्त्वसाधक इति भावः ॥५॥

६—ब्रह्मप्रपञ्चयोः परमार्थसत्त्वं साधारणमित्यभिप्रेत्य पूर्वपक्षी शंकते—

ननु ब्रह्मणि असत्प्रातिभासिकव्यावृत्तिरूपं हेतुं प्रति व्यावर्तकतया प्रयोजकत्वेन परमार्थसत्त्वं क्लृप्तम्। अपृथिवीव्यावृत्तिं पृथिवीत्वस्येवासद्व्यावृत्तिं प्रति तद्विरुद्धसत्त्वस्येव प्रयोजकत्वात्। ज्ञानत्वानन्दत्वादिकं तु न तत्प्रयोजकं सक्षादसत्त्वाविरोधित्वात् प्रपञ्चे तदभावाच्च। तथा च ब्रह्मविश्वसाधारणं परमार्थसत्त्वमेव तत्प्रयोजकम्। अस्मिन् प्रतिरोधानुमाने असत्प्रातिभासिकव्यावृत्तिरेव हेतुः स च उभयमते एव ब्रह्मणि वर्तते। अत एव शुद्धं ब्रह्मैव दृष्टान्तत्वेन उपादीयते। व्यावृत्तिरूपं हेतुं प्रति अनुमापकतया परमार्थसत्त्वं प्रयोजकं क्लृप्तम्। परमार्थसत्त्वात् ब्रह्मणि असत्प्रातिभासिकव्यावृत्तिर्ज्ञायते। यथा अपृथिवीव्यावृत्तिं प्रति पृथिवीत्वमनुमापकम्।

न च विश्वमिथ्यात्वात् परमार्थसत्त्वमपि न विश्वसाधारणं ज्ञानत्वानन्दत्वादिवदिति वाच्यम्, अन्योन्याश्रयापत्तेरिति चेत् ?

---

या या पृथिवी सा अपृथिवीभिन्नेति ज्ञायते तथा असद्व्यावृत्तिं प्रति असदनधिकरणकसत्त्वस्यैव अनुमापकतया प्रयोजकत्वात्। यत्र यत्र सत्त्वं तत्र असद्व्यावृत्तिर्ज्ञायते। सच्चिदानन्दरूपे ब्रह्मणि सत्त्वेनैवासद्व्यावृत्तिः साध्यते न तु सत्त्वसमानाधिकरणज्ञानत्वानन्दत्वाभ्याम्। कुत एवमिति चेत् ? यथा सत्त्वं साक्षादसत्त्वविरोधि नैवं ज्ञानत्वानन्दत्वे भावाभावरूपत्वाभावात्। यथा सत्त्वाभावोऽसत्त्वमसत्त्वाभावः सत्त्वं नैवं ज्ञानत्वाभावोऽसत्त्वं नापि आनन्दत्वाभावोऽसत्त्वम् साक्षादसत्त्वाविरोधित्वात् भावाभावरूपत्वाभावात्। ज्ञानत्वानन्दत्वयोः प्रपञ्चेऽभावेऽपि सत्त्वादेव प्रपञ्चेऽसत्त्वव्यावृत्तिः सिध्यति। असत्प्रातिभासिकव्यावृत्तिः यथा ब्रह्मणि तथा प्रपञ्चेऽपि वर्तते। परमार्थसत्त्वादेव ब्रह्मणि असत्प्रातिभासिकव्यावृत्तिः सिद्धा तथा प्रपञ्चेऽपि परमार्थसत्त्वादेव असत्प्रातिभासिकव्यावृत्तिः भविष्यतीति पूर्वपक्षिणो हृदयम् ॥६॥

७—ननु प्रातिभासिकासत्त्वव्यावृत्तिः अपरमार्थे प्रपञ्चेऽपि वर्तते अतः कथं पारमार्थिकसत्त्वं प्रातिभासिकासत्त्वव्यावृत्तेः प्रयोजकमिति शंकां समाधत्ते पूर्वपक्षी—

**न च विश्वमिथ्यात्वात् परमार्थसत्त्वमपि न विश्वसाधारणं ज्ञानत्वानन्दत्वादिवदिति वाच्यम् अन्योन्याश्रयापत्तेरिति चेत् ?** यद्यपि परमार्थसत्त्वं ब्रह्मणि वर्तते तत्र प्रातिभासिकासत्त्वव्यावृत्तिरपि वर्तते किन्तु व्यावहारिके प्रपञ्चरूपविश्वस्य मिथ्यात्वात् तत्र परमार्थसत्त्वं नास्ति अथ च व्यावहारिकविश्वे प्रातिभासिकासत्त्वव्यावृत्तिर्वर्तते। अतः परमार्थसत्त्वं न प्रातिभासिकासत्त्वव्यावृत्तेः प्रयोजकं यथा ज्ञानत्वानन्दत्वादिधर्माः न प्रातिभसिकासत्त्वव्यावृत्तेः प्रयोजकाः, ज्ञानत्वादीनां व्यावहारिकविश्ववृत्तित्वाभावात् इति सिद्धान्तिना न वाच्यम् अन्योन्याश्रयग्रस्तत्वात्। सिद्धान्तिना एवमङ्गीकारे दुष्परिहरोऽन्योन्याश्रयः स्यात्। विश्वमिथ्यात्वे सिद्धे व्यावहारिकसत्त्वसिद्ध्या तेनैव विश्वसत्यत्वसाधकहेतोरुपपत्त्या हेतोरप्रयोजकत्वसिद्धिः। तत्सिद्धौ च विश्वसत्यत्वसाधकानुमानस्य दुष्टत्वेन

अयुक्तमेतत्; न हि प्रातिभासिकासतोरेका व्यावृत्तिरुभयी वा समव्याप्ता येन एकप्रयोजकप्रयोज्या भवेत् किन्तु प्रातिभासिक-व्यावृत्तिप्रयोजकं ब्रह्मविश्वासत्साधारणमेव वक्तव्यम्। असत्यपि प्रातिभासिकत्वाभावात्। एवमसद्व्यावृत्तावपि प्रयोजकं ब्रह्मविश्व-प्रातिभासिकसाधारणमेव वक्तव्यम्, प्रातिभासिकेऽप्यसत्त्वाभावात्। तथा च प्रयोजकद्वयसमावेशादेव ब्रह्मण्युभयोर्व्यावृत्त्युपपत्तौ नीलत्व-घटत्वरूपावच्छेदकद्वयसमावेशोपपन्ननीलघटत्ववन्नातिरिक्तप्रयोजककल्प-नायामस्ति किञ्चिन्मानम् इति कृतबुद्धय एव विदांकुर्वन्तु। नित्यत्वं

---

तद्बाधाभावात् विश्वमिथ्यात्वसिद्धिरित्यन्योन्याश्रयात् इति पूर्वपक्षिण आशयः पूर्वपक्षं निरस्यति सिद्धान्ती।

अयुक्तमेतत्; न हि प्रातिभासिकासतोरेका व्यावृत्तिरुभयी वा सम-व्याप्ता येनैकप्रयोजकप्रयोज्या भवेत् किन्तु प्रातिभासिकव्यावृत्ति-प्रयोजकं ब्रह्मविश्वासत्साधारणमेव वक्तव्यम्, असत्यपि प्रातिभासि-कत्वाभावात्। एवमसद्व्यावृत्तावपि प्रयोजकं ब्रह्मविश्वप्रातिभासिक-साधारणमेव वक्तव्यम्, प्रातिभासिकेऽप्यसत्त्वाभावात्। तथा च प्रयोजकद्वयसमावेशादेव ब्रह्मण्युभयव्यावृत्त्युपपत्तौ नीलत्वघटत्वरूपाव-च्छेदकद्वयसमावेशोपपन्ननीलघटत्ववत् नातिरिक्तप्रयोजककल्पनाया-मस्ति किञ्चिन्मानमिति कृतबुद्धय एव विदांकुर्वन्तु। पूर्वपक्षिणा प्रातिभासिकासद्व्यावृत्तिप्रयोजकत्वेन यत्पारमार्थिकसत्त्वमुक्तं तदयुक्तं कुत इति पृच्छायामाह—प्रातिभासिकव्यावृत्तिरसद्व्यावृत्तिश्च भिन्ना नैका नापि द्वयी व्यावृत्तिः समव्याप्ता न समनियता न अन्यूनानतिरिक्तवृत्तिः। व्यावृत्तेरेकत्वे समनियतत्वे वा एकप्रयोजकप्रयोज्या भवेत् किन्तु॰ यावृत्त्योर्भिन्नत्वात् असमनियतत्वाच्च भिन्न-प्रयोजकप्रयोज्यैव। किं किं प्रयोजकमिति पृच्छायामाह—पारमार्थिकं व्यावहा-रिकं प्रातिभासिकम् असच्चेति पक्षचतुष्टयं सिद्धान्तिसम्मतं तत्र ब्रह्मविश्वप्राति-भासिकेषु असद्व्यावृत्तिर्वर्तते। तत्र॰ एषु त्रिषु असद्व्यावृत्तिप्रयोजकं किञ्चिद् वक्तव्यं यत् त्रितयसाधारणं भवेत्।॰ एवं प्रातिभासिकव्यावृत्तिरपि ब्रह्मविश्वासत्सु वर्तते तत् एषु त्रिषु प्रातिभासिकव्यावृत्तिप्रयोजकं किंचित् वक्तव्यं

चोपाधिः तुच्छप्रातिभासिकयोर्नित्यत्वव्यतिरेके साध्यव्यतिरेकदर्शनात् ।

---

यत् एतत्त्रितयसाधारणं भवेत् । माध्वमते असत्प्रातिभासिकयोर्भेदाभावेऽपि सिद्धान्ते तयोर्भेदो वर्तते । माध्वमते असत्ख्यातेः स्वीकारादेवमपि सिद्धान्ते असत्ख्यातेः प्रत्याख्यानात् प्रत्युत अनीर्वचनीयख्यातेः स्वीकारात् असत्प्रातिभासिकयोर्भेदात् । वस्तुतस्तु असन्नामा कश्चित् पक्षः सिद्धान्ते नाङ्गीक्रियते । केवलं पूर्वपक्षिमतमनुसृत्यैव असन्नामा पक्षः सर्वत्र प्रदर्शितः । यथा असत्पक्षः सर्वथैवासंगतः तथा प्रपञ्चितो दृश्यत्वहेतुनिर्वचनविवरणे । एवं पूर्वपक्षिमतानुसरणेऽपि असत्प्रातिभासिकयोर्भेदः अङ्गीकर्तव्य एव मिथ्यात्वनिरूपणे एतयोर्भेद आचार्येणैव प्रदर्शितः । एवञ्च व्यावृत्तिद्वयप्रयोजकद्वयसमावेशादेव ब्रह्मणि उभयव्यावृत्तिः प्रातिभासिकासद्व्यावृत्तिः सिध्यति । प्रातिभासिकासद्व्यावृत्तिद्वयेन सह समावेशः सामानाधिकरण्यं यस्य तेन ब्रह्मविश्वान्यतरत्वादिना ब्रह्मणिप्रातिभासिकासद्व्यावृत्त्युपपत्तौ अन्यतरत्वादिना ब्रह्मणि व्यावृत्तिद्वयानुमानसम्भवे न तदर्थं ब्रह्मविश्वयोरेकजातीयसत्त्यत्वादिकं कल्प्यते । अन्यथा तुच्छब्रह्मणोः प्रपञ्चव्यावर्तकमसत्यत्वं कल्प्येत । क्लृप्तप्रयोजकद्वयसमावेशादेवोपपत्तौ न प्रयोजकान्तरं कल्प्यते इत्यत्र निदर्शनमाह—नीलघटत्ववदिति । नीलघटत्वस्येव उभयव्यावृत्तेः । यथा घटीयनीलरूपं प्रति घटं प्रति च क्लृप्ताभ्यां कपालीयनीलरूपदण्डादिसामग्रीभ्यामेव नीलघटस्योत्पत्तिसिद्धेर्न तत्रान्यत् कारणं कल्प्यते तथा क्लृप्तेन ब्रह्मविश्वान्यतरत्वादिना ब्रह्मणि प्रातिभासिकासद्व्यावृत्त्यनुमानसम्भवात् न तदर्थं ब्रह्मविश्वयोरेकजातीयसत्यत्वं कल्प्यते क्लृप्तेनैव निर्वाहे कल्प्योपस्थितिर्गुर्वी इति भावः । प्रपञ्चमिथ्यात्वानुमानदूषणाय पूर्वपक्षिणा शंकिते प्रतिरोधऽनुमाने उपाधिमुद्भावयति सिद्धान्ती—नित्यत्वं च उपाधिः । तुच्छप्रातिभासिकयोर्नित्यत्वव्यतिरेके साध्यव्यतिरेकदर्शनात् । ब्रह्मणि दृष्टान्ते नित्यत्वं वर्तत इति उपाधेः साध्यव्यापकत्वं पक्षे च व्यावहारिकप्रपञ्चे नित्यत्वमुपाधिर्नास्ति इति उपाधेः साधनाव्यापकत्वमपि । प्रदर्शितसाध्योपाध्योः व्यतिरेकव्याप्तिप्रदर्शनाय व्यातिरेकव्याप्तिग्रहणभूमिमाह—तुच्छप्रातिभासिकयोः उपाधिनित्यत्वस्याभावात् परमार्थसत्त्वस्य साध्यस्यापि अभावः । तथा च साध्योपाध्योः ब्रह्मणि अन्वयव्याप्तिः तुच्छप्रातिभासिकयोर्व्यतिरेकव्याप्तिश्च वर्तते । न च वर्तते

अत एव अनिषेध्यत्वेन प्रमां प्रति साक्षात् विषयत्वादित्यपि न हेतुः ॥७॥

किञ्च प्रमात्वं तद्वति तत्प्रकारकत्वं, तत्त्वावेदकत्वं वा, आद्ये दृष्टान्तस्य साधनवैकल्यम्। न हि परमार्थसतः शुद्धस्य ब्रह्मणः सप्रकारकज्ञानविषयत्वम्। न च धर्मवतो दृष्टान्तता इत्युक्तम्। तस्य पक्षकुक्षिनिक्षिप्तत्वेन निश्चितसाध्यवत्त्वाभावात् द्वितीये तत्त्वावेदकत्वस्याबाधितविषयत्वरूपत्वेन साध्यविशेषपर्यवसानात् हेतुग्रहे सिद्धसाधनं हेत्वग्रहे तु स्वरूपासिद्धिः ॥८॥

---

पक्षे उपाधिः अतः साध्यव्यापकत्वात् साधनाव्यापकत्वाच्च प्रकृतानुमाने नित्यत्वमुपाधिरेव। पूर्वपक्षिणा प्रपञ्चसत्यत्वसिद्धये षड् हेतव उपन्यस्ताः, तत्र प्रथमहेतुं निरस्य द्वितीयहेतुं निराचष्टे—अत एव अनिषेध्यत्वेन प्रमां प्रति साक्षाद्विषयत्वादित्यपि न हेतुः। अयमत्र पूर्वपक्षिणो भावः—पुरोवर्तिनं रजततया जानामीत्याद्यनुव्यवसायरूपप्रमां प्रति व्यवसायद्वारा विषये प्रातिभासिके रजते व्यभिचारवारणाय साक्षादित्युक्तं नेदं रजतमिति बाधकज्ञानरूपप्रमां प्रति निषेध्यतया साक्षात् विषये रजते व्यभिचारपरिहाराय अनिषेध्यत्वेनेति विषयविशेषणम्। इदं रजतमिति भ्रमं प्रति अनिषेध्यत्वेन साक्षाद्विषये रजते व्यभिचारवारणाय प्रमां प्रतीत्युक्तम्। प्रपञ्चस्य श्रुतिबाध्यत्वानुपपत्तिलक्षणप्रतिकूलतर्कपराघातात् नित्यत्वाद्युपाधिमत्त्वाच्च यथा प्रथमो हेतुरसाधकस्तथा द्वितीयोऽपि इत्याह—अत एवेति। श्रुतिबाध्यत्वानुपपत्तिलक्षणप्रतिकूलतर्कश्च पूर्वमेव दर्शितः ॥७॥

८—अस्मिन् द्वितीये हेतौ दूषणान्तरप्रदर्शनाय विकल्पयति—

किञ्च प्रमात्वं तद्वति तत्प्रकारकत्वं, तत्त्वावेदकत्वं वा ? आद्ये दृष्टान्तस्य साधनवैकल्यम्। नहि परमार्थसतः शुद्धस्य ब्रह्मणः सप्रकारकज्ञानविषयत्वम्। न च धर्मवतो दृष्टान्तता इत्युक्तम्। तस्य पक्षकुक्षिनिक्षिप्तत्वेन निश्चितसाध्यवत्त्वाभावात्। द्वितीये तत्त्वावेदकत्वस्याबाधितविषयकत्वरूपत्वेन साध्यविशेषपर्यवसानात् हेतुग्रहे सिद्धसाधनम्। हेत्वग्रहे तु स्वरूपासिद्धिः। हेतुघटकप्रमापदं विकल्पयन् दूषयति—किञ्च प्रमात्वमिति। प्रमात्वं यदि तद्वति तत्प्रकारकत्वं तर्हि दृष्टान्तस्य शुद्धब्रह्मणः साधनवैकल्यम्,

यत्तु प्रमाविषयत्वमात्रेणैव परमार्थत्वोपपत्तौ विशेषणे व्यर्थे इति तन्न, पुरोवर्तिनं रजततया जानामीत्याद्यनुव्यवसायरूपप्रमाविषये प्रातिभासिके व्यभिचारवारकत्वात् साक्षात्पदस्य, तत्रैव च मिथ्यात्वप्रमितेः साक्षात् विषये व्यभिचारवारकत्वात् अनिषेध्यत्वेनेत्यस्य। न ह्यनुव्यवसायमिथ्यात्वप्रमे भ्रमे भवतः ॥९॥

---

शुद्धे ब्रह्मणि कस्यचिद्धर्मस्याभावात् सप्रकारकज्ञानविषयत्वं तत्र नास्ति। इतः प्रागेवोक्तं शुद्धं हि ब्रह्म दृष्टान्तत्वेनाभ्युपेयं धर्मवतो दृष्टान्तत्वे साध्यवैकल्यापत्तेरिति शुद्धस्य ब्रह्मणो दृष्टान्तत्वेन तत्र साधनवैकल्यमेव। तस्य धर्मवतो दृष्टान्तत्वं न सम्भवति तस्य परमार्थत्वाभावेन अस्मिन्ननुमाने पक्षकोटिनिक्षिप्तत्वेन सन्दिग्धसाध्यवत्तया निश्चितसाध्यवत्त्वाभावात् न दृष्टान्तत्वम्। तत्त्वावेदकत्वं वा प्रमात्वमिति द्वितीयकल्पेऽभ्युपगम्यमाने तत्त्वं नाम अबाधितत्वम् अबाधितविषयकज्ञानमेव तत्त्वज्ञानम् अबाधिततत्त्वमेव परमार्थसत्त्वं बाधितमेवापरमार्थसत्। तथा च हेतोः साध्याद्वैलक्षण्याभावात् पक्षे हेतुनिश्चय एव साध्यनिश्चयः ततः साध्यानुमितौ सिद्धसाधनता। सिद्धसाधनताभयात् यदि पक्षे हेतुनिश्चयो नाङ्गीक्रियते तर्हि ह्रदो द्रव्यं धूमवत्त्वात् इत्यत्रेव हेतोः स्वरूपासिद्धिः ॥८॥

९—पूर्वपक्ष्येकदेशिमतमाशंक्य निराकरोति—

यत्तु प्रमाविषयत्वमात्रेणैव परमार्थत्वोपपत्तौ विशेषणे व्यर्थे इति तन्न, पुरोवर्तिनं रजततया जानामीत्याद्यनुव्यवसायरूपप्रमाविषये प्रातिभासिके व्यभिचारवारकत्वात् साक्षात्पदस्य। तत्रैव च मिथ्यात्वप्रमितेः साक्षाद्विषये व्यभिचारवारकत्वात् अनिषेध्यत्वेनेत्यस्य। न ह्यनुव्यवसायमिथ्यात्वप्रमे भ्रमे भवतः। साक्षादिति अनिषेध्यत्वेन इति च विशेषणद्वयं व्यर्थमिति एकदेशिनोऽभिप्रायः। विशेषणद्वयसार्थक्यं तु व्यभिचारवारकतया इतः प्रागेव दर्शितम्। तत्रैव च मिथ्यात्वप्रमितेरिति नेदं रजतमिति बाधकज्ञानरूपप्रमां प्रति निषेध्यतया साक्षाद्विषये रजते व्यभिचारपरिहाराय अनिषेध्यत्वेनेति विषयविशेषणम्। रजतानुव्यवसायः प्रमैव रजतबाधकज्ञानमपि नेदं रजतमिति प्रमैव प्रमाविषयत्वमात्रेण पारमार्थिकत्वे साध्ये प्रदर्शितस्थलयोर्व्यभिचारः स्यात् ॥९॥

नाप्यनिषेध्यत्वेन ईश्वरं प्रति साक्षादपरोक्षत्वं हेतुः, सत्यत्वसिद्धि विना अनिषेध्यत्वेन इत्यस्यासिद्धेः। तथा च अन्योन्याश्रयः। न चेश्वरज्ञानविषयस्य प्रपञ्चस्य मिथ्यात्वे तस्य भ्रान्तत्वप्रसंगः मिथ्याभूतस्य मिथ्यात्वेनैव ग्रहणात् ऐन्द्रजालिकवत् भ्रान्तत्वायोगात्। अन्यथा सर्विषयकभ्रमज्ञातृत्वेन भ्रान्तत्वस्य दुर्वारतापत्तेः। अथ निषेध्यत्वेन ज्ञाने तत्पालनार्थमीश्वरस्य प्रवृत्तिर्न स्यात्? न, ऐन्द्रजालिकप्रवृत्तिवत् ईश्वरप्रवृत्तेरपि तथाविधत्वात् ॥१०॥

---

१०—पूर्वपक्षिप्रदर्शितं तृतीयहेतुं निराचष्टे—नाप्यनिषेध्यत्वेन ईश्वरं प्रति साक्षादपरोक्षत्वं हेतुः। सत्यवत्त्वसिद्धिं विना अनिषेध्यत्वेन इत्यस्यासिद्धेः। तथा च अन्योन्याश्रयः। न चेश्वरज्ञानविषयस्य प्रपञ्चस्य मिथ्यात्वे तस्य भ्रान्तत्वप्रसंगः मिथ्याभूतस्य मिथ्यात्वेनैव ग्रहणात् ऐन्द्रजालिकवत् भ्रान्तत्वायोगात्। अन्यथा सविषयकभ्रमज्ञातृत्वेन भ्रान्तत्वस्य दुर्वारतापत्तेः। अथ निषेध्यत्वेन ज्ञाने तत्पालनार्थमीश्वरस्य प्रवृत्तिर्न स्यात्? न, ऐन्द्रजालिकप्रवृत्तिवदीश्वरप्रवृत्तेरपि तथाविधत्वात्। अयं भावः—इदं रजतमित्यस्मदादिभ्रमरूपं ज्ञानं प्रति अनिषेध्यत्वेन साक्षात् अपरोक्षत्वं रजतेऽप्यस्तीति व्यभिचारवारणाय पूर्वं प्रमां प्रतीत्युक्तम् अत्र च तत्स्थाने ईश्वरं प्रतीति उक्तम्। रजतञ्च ईश्वरं प्रति निषेध्यत्वेनैव साक्षादपरोक्षमित्यदोषः। दूषयति—सत्यत्वसिद्धिं विना अनिषेध्यत्वेन इत्यस्यासिद्धेरिति। यच्चोक्तं पूर्वपक्षिणा ईश्वरः अनिषेध्यत्वेन व्यावहारिकप्रपञ्चमपरोक्षयतीति तत् तदेव वक्तुं शक्यं यदि व्यावहारिकप्रपञ्चस्य सत्यत्वसिद्धिः स्यात्। अनिषेध्यत्वेन ईश्वरम्प्रति साक्षादपरोक्षत्वेन प्रपञ्चस्य सत्यत्वसिद्धिः, प्रपञ्चस्य सत्यत्वसिद्धौ च अनिषेध्यत्वेन ईश्वरं प्रति साक्षादपरोक्षत्वरूपहेतोः सिद्धिरित्यन्योन्याश्रय एव स्यात्। प्रपञ्चस्य मिथ्यात्वे ईश्वरस्य भ्रान्तत्वं स्यात् इति शंकते—न च ईश्वरज्ञानविषयस्येति। सर्वज्ञेश्वरज्ञानविषयः प्रपञ्चो यदि मिथ्या स्यात् ईश्वरो भ्रान्तः स्यात् इत्यनिष्टप्रसंगः। परिहरति सिद्धान्ती—मिथ्याभूतं प्रपञ्चं मिथ्यात्वेनैव जानतः कथमीश्वरस्य भ्रान्तत्वं, यथा ऐन्द्रजालिक एवेन्द्रजालसृष्टं वस्तु मिथ्येति पश्यन् न भ्राम्यति एमीश्वरोऽपि। ईश्वरस्य

नापि सप्रकाराबाध्यार्थक्रियाकारित्वं हेतुः, न सप्रकारकजाग्रद्‌बोधाबाध्यस्वप्नजलावगाहनक्रियासंगमादिविशेषिताप्रमाणीभूतज्ञानस्यार्थक्रियाकारित्वदर्शनेन तद्विषये तत्र व्यभिचारात् ॥११॥

---

विशेषदर्शनवत्त्वेन न भ्रान्तत्वव्यवहारः । अन्यथा उक्तविशेषदर्शनकालीनभ्रममादाय भ्रान्तत्वव्यवहारस्वीकारे भ्रमविषयत्वपर्याप्त्यधिकरणं यन्मुखविशिष्टदर्पणादिकं तस्य भ्रमस्य च मिथ्यात्वेन यत् ज्ञातृत्वं तेन भ्रान्तत्वव्यवहारस्य दुर्वारत्वापत्तेः । शंकते—अथेति । निषेध्यत्वेन प्रपञ्चं जानन् ईश्वरः कथं तत्प्रपञ्चपालनार्थं प्रवर्तते प्रपञ्चस्य निषेध्यत्वेन ज्ञाने तत्पालनार्था प्रवृत्तिरेव ईश्वरस्य न स्यात् । समाधत्ते—यथा ऐन्द्रिजालिकः स्वेन्द्रजालसृष्टवस्तुरक्षणार्थं प्रवर्तते एवमीश्वरोऽपि । ऐन्द्रजालिकप्रवृत्तिवदीश्वरप्रवृत्तेरिति भावः । विस्पष्टं चैतदुक्तं भाष्यकृद्भिः लीलासूत्रव्याख्यानावसरे [२।१।३३ ब्र० सू०] "न चेयं परमार्थविषया सृष्टि-श्रुतिः अविद्याकल्पितनामरूपव्यवहारगोचरत्वात् ब्रह्मात्मभावप्रतिपादनपरत्वाच्च" इत्येदपि नैव विस्मर्तव्यम् ॥१०॥

११—चतुर्थं हेतुं निराचष्टे—नापि सप्रकाराबाध्यार्थक्रियाकारित्वं हेतुः, न, सप्रकारकजाग्रद्बोधाबाध्यस्वप्नजलावगाहनक्रिया-संगमादिविशेषिता प्रमाणीभूतज्ञानस्यार्थक्रियाकारित्वदर्शनेन तद्विषये तत्र व्यभिचारात् । पूर्वपक्षिणोऽयमाशयः—असत्यार्थक्रियाकारित्वस्य ऐन्द्रजालिकेऽपि वस्तुनि सत्त्वात् व्यभिचारवारणायाबाध्येत्युक्तम् । ऐन्द्रजालिकार्थक्रिया तु बाध्येति । नन्वेवं स्वरूपासिद्धिः प्रपञ्चगतार्थक्रियाया निष्प्रकारकब्रह्मज्ञानबाध्यत्वाङ्गीकारात् इत्यत उक्तं सप्रकारकाबाध्येति । तथा च नासिद्धिः प्रपञ्चगतार्थक्रियायाः निष्प्रकारकबाध्यत्वेन सप्रकारकाबाध्यत्वादिति भावः । व्यभिचारेण हेतुमिमं दूषयति सिद्धान्ती—नेति । नायं हेतुरव्यभिचारीत्यर्थः । सप्रकाराबाध्यं यदर्थक्रियाकारि तत्त्वात् इत्येव हेतुवाक्यस्यार्थः । स्वाप्नधियो ब्रह्माधिष्ठानत्वेन सप्रकारकजाग्रद्धीबाध्यत्वाभावेन स्वप्नज्ञाने अयं हेतुरस्ति अथ च तत्र परमार्थत्वरूपसाध्यं नास्तीति स्वप्नज्ञाने व्यभिचारः स्वप्नजलावगाहनप्रिया-संगमादिमिथ्याविषयविशेषितस्वाप्नज्ञानस्य मिथ्यात्वमेव । स्वाप्नार्थविशेषितस्वाप्न-

अथ तत्र ज्ञानमेव सुखादिजनकं तच्चाबाध्यमेवेति मतं तदसत्, ज्ञानमात्रस्य हि तादृक्सुखाजनकत्वेन किञ्चिद्विशेषितस्यैव तथात्वं वाच्यम् ज्ञाने च विशेषो नार्थातिरिक्तः—तदुक्तम्—"अर्थेनैव विशेषो हि निराकारतया धियाम्" इति । अर्थेनेति अर्थ एव इत्यर्थः । तथा च मिथ्याभूतविशेषितस्य जनकत्वाभ्युपगमे 'मिथ्याभूतस्यापि जनकत्वात् व्यभिचार एव ॥१२॥

---

ज्ञानस्य अर्थक्रियाकारित्वेन तज्ज्ञानविषयस्यापि अर्थक्रियाकारित्वमस्त्येव । तथा च स्वाप्नज्ञानविषये मिथ्याभूते हेतोर्व्यभिचारः ॥११॥

१२—पूर्वपक्षी स्वाप्नविषयस्य मिथ्यात्वेऽपि तज्ज्ञानस्य सत्यत्वात् ज्ञानस्यैवार्थक्रियाकारित्वात् नात्र हेतोर्व्यभिचारः इति शंकते—

अथ तत्र ज्ञानमेव सुखादिजनकं तच्चाबाध्यमेवेति मतं तदसत्, ज्ञानमात्रस्य हि तादृक्सुखाजनकत्वेन किञ्चिद्विशेषितस्यैव तथात्वं वाच्यम्, ज्ञाने च विशेषो नार्थातिरिक्तः । तदुक्तम्–'अर्थेनैव विशेषो हि निराकारतया धियाम्' इति । अर्थेनेति अर्थ एव इत्यर्थः । तथा च मिथ्याभूतविशेषितस्य जनकत्वाभ्युपगमे मिथ्याभूतस्यापि जनकत्वात् व्यभिचार एव । सत्यज्ञानमात्रस्यार्थक्रियाकारित्वाभावात् पूर्वपक्ष्युक्तमसत् इत्याह सिद्धान्ती—विषयविशेषितज्ञानमात्रस्य तादृक्सुखाजनकत्वात् स्वप्ने प्रियासंगमादिविषयविशेषितज्ञानस्यैव तादृक्सुखजनकत्वं केवलज्ञानमात्रस्य तादृक्सुखाजनकत्वं च सर्वानुभवसाक्षिकम् । अतो विषयविशेषविशेषितस्यैव ज्ञानस्य तादृगर्थक्रियाकारित्वमवश्यमङ्गीकार्यम् । ज्ञाने च विशेषो नार्थातिरिक्तः । उक्तञ्च कुसुमाञ्जलौ चतुर्थस्तबके—"अर्थेनैव विशेषो हि निराकारतया धियाम्" इति [चतुर्थस्तबके चतुर्थकारिका]। अर्थेनेत्यस्य अर्थ एव ज्ञाने विशेषः । मिथ्याविषयविशेषितज्ञानस्य जनकत्वाभ्युपगमे मिथ्याविषयस्यापि जनकत्वमपरिहार्यम् । तथा च मिथ्याभूते स्वाप्नविषये तादृशार्थक्रियाकारित्वस्य हेतोः सत्त्वात् व्यभिचार एव । मिथ्याविषयविशेषितज्ञानस्यापि मिथ्यात्वात् ज्ञानेऽपि व्यभिचारो बोध्यः । स्वाप्नवृत्तेरविद्यावृत्तिरूपत्वादपि स्वरूपेणापि स्वाप्नज्ञानस्यमिथ्यात्वात् अस्य हेतोर्व्यभिचारः स्पष्टः स्वाप्नप्रपञ्चस्य ब्रह्माधिष्ठानकत्वेन समकारकजाग्रद्-

तथा चोक्तं शास्त्रदीपीकायां बौद्धं प्रति—"अथ सुखज्ञानमेवार्थक्रिया, तच्च अव्यभिचार्येव । न हि क्वचिदपि असति सुखे सुखज्ञानमस्तीत्याशंक्य सत्यमेतन्न तु तेन पूर्वज्ञानप्रामाण्याध्यवसानं युक्तम् अप्रमाणेनापि प्रियासंगमविज्ञानेन स्वप्नावस्थायां सुखदर्शनादि"ति ।

ननु विषयोपलक्षितस्यैव ज्ञानस्य सुखजनकत्वमस्तु तत्कुतो विषयस्य जनकत्वम् इति चेन्न, स्वरूपाणामननुगततया ज्ञानत्वादेश्चातिप्रसक्ततया अनुगतानतिप्रसक्तोपलक्ष्यतावच्छेदकाभावात् उपलक्षणत्वासम्भवात् । ननु विशेषणत्वमपि असम्भवि, अनागतज्ञानजन्ये तत्काला-

---

बोधाबाध्यत्वञ्च । जाग्रद्वृत्त्या स्वाप्नवृत्तेर्निवृत्तिमात्रमेव न बाधः इत्यर्थः ॥१२॥

१३—स्वाप्नज्ञानस्य मिथ्यात्वं शास्त्रान्तरसंवादेन द्रढयन् आह—तथा चोक्तं शास्त्रदीपिकायां बौद्धं प्रति—अथ सुखज्ञानमेव अर्थक्रिया, अव्यभिचार्येव । न हि क्वचिदपि असति सुखे सुखज्ञानमस्तीत्याशंक्य सत्यमेतन्न तु तेन पूर्वज्ञानप्रामाण्याध्यवसानं युक्तम् अप्रमाणेनापि प्रियासंगमविज्ञानेन स्वप्नावस्थायां सुखदर्शनादिति । विस्पष्टार्थोऽयं सन्दर्भः । विषयविशेषितज्ञानस्य न सुखजनकत्वं किन्तु विषयोपलक्षितस्यैव ज्ञानस्य सुखजनकत्वं विषयस्योपलक्षणत्वे न विषयस्य जनकत्वं सेत्स्यति इति पूर्वपक्षी शंकते—

ननु विषयोपलक्षितस्यैव ज्ञानस्य सुखजनकत्वमस्तु, तत्कुतो विषयस्य जनकत्वम् इति चेन्न, स्वरूपाणामननुगततया ज्ञानत्वादेश्च अतिप्रसक्ततया अनुगतानतिप्रसक्तोपलक्ष्यतावच्छेदकाभावात् उपलक्षणत्वासम्भवात् । विषयोपलक्षितज्ञानस्वरूपाणाम् अननुगततया तत्र कारणत्वग्रहासम्भवात् । व्यक्तेरनुगतधर्ममपुरस्कृत्य हेतुत्वग्रहासम्भवात् ज्ञानत्वगुणत्वादेश्च ज्ञानगतकारणत्वातिप्रसक्ततया ज्ञानत्वादिरूपेण ज्ञाने कारणत्वग्रहासम्भवात् विषयस्योपलक्षणत्वे उपलक्ष्ये ज्ञाने अनुगतानतिप्रसक्तोपलक्ष्यतावच्छेदकरूपाभावात् विषयस्य नोपलक्षणत्वमिति भावः । यथा काकवतो गृहं पश्यामीत्यादौ काकोपस्थापितोत्तृणत्वमेव विशेषणं न तु काकः येन उपस्थापितोऽर्थ एव वाक्यार्थबोधे विषयः न तु

विद्यमानस्य विषयस्य पूर्वभावित्वरूपजनकत्वासम्भवात् इति चेन्न, स्वव्यापारजन्ये व्यापारिणोऽसतो जनकत्ववत् स्वज्ञानजन्येऽपि असतो जनकत्वसम्भवात्। अतीतानागतावस्थस्य असत्त्वधर्माश्रयत्वेनैवाभ्युपगमात्, अन्यथा ध्वंसप्रागभावप्रतियोगित्वतज्ज्ञानविषयत्वादीनाम् अनाश्रयत्वापत्तेः, प्रमाणबलात् कारणत्वाभ्युपगमस्यात्रापि तुल्यत्वात्। ॥१३॥

---

स्वयं तदुपलक्षणं प्रकृते तु विषयेनोपस्थापितो ज्ञानगतः कश्चन धर्मो नास्तीति कथं विषयः ज्ञाने उपलक्षणं स्यात् उपलक्ष्यतावच्छेदकाभावात्। अतो विषयस्य ज्ञाने विशेषणत्वमेव। तथा च विषयस्यापि कारणत्वं भविष्यत्येव। विषयास्याविद्यमानत्वेन ज्ञानविशेषणत्वमपि न सम्भवतीति पूर्वपक्षी शंकते—

" ननु विशेषणत्वमपि असम्भवि, अनागतज्ञानजन्ये तत्कालविद्यमानस्य विषयस्य पूर्वभावित्वरूपजनकत्वासंभवात् इति चेन्न, स्वव्यापारजन्ये व्यापारिणोऽसतो जनकत्ववत् स्वज्ञानजन्येऽपि असतो जनकत्वसम्भवात्। अतीतानागतावस्थस्य असत्त्वधर्माश्रयत्वेनैवाभ्युपगमात अन्यथा ध्वंसप्रागभावप्रतियोगित्वतज्ज्ञानविषयत्वादीनाम् अनाश्रयत्वापत्तेः। प्रमाणबलात् कारणत्वाभ्युपगमस्यात्रापि तुल्यत्वात्।

अनागतविषयकवर्तमानज्ञानजन्येऽविद्यमानविषयस्य कथं जनकत्वं नियतपूर्वभावित्वस्य जनकत्वात् भाविविषये कार्यपूर्वभावित्वाभावात् इति शंकां समाधास्यन् आह— व्यापारिणोऽविद्यमानत्वेऽपि तज्जन्यव्यापारस्य विद्यमानत्वादेव व्यापारिणो जनकत्वं यथा अविद्यमानस्यापि अनुभवस्य स्वव्यापारसंस्कारद्वारा स्मृतिजनकत्वं यथा वा यागस्याविद्यमानस्यापि स्वव्यापारादृष्टद्वारा स्वर्गजनकत्वम् एवम् अविद्यमानोऽपि विषयः स्वविषयकज्ञानद्वारा कार्यजनकः यत्र विषयस्य कार्यजनने ज्ञानं द्वारं तत्र द्वारस्य ज्ञानस्य विद्यमानत्वेनैवाविद्यमानस्य द्वारिणो विषयस्य जनकत्वं यथा अतीतानागतावस्थस्य अविद्यमानस्यैवासत्त्वधर्माश्रयत्वमभ्युपगम्यते। अविद्यमानस्य आश्रयत्वानभ्युपगमे ध्वंसप्रागभावप्रतियोगित्वम् अनाश्रितमेव स्यात् ध्वंसप्रागभावप्रतियोगिनोऽविद्यमानत्वात् एवं ध्वंसप्रागभावप्रतियोगित्वविषयकज्ञानस्यापि विषयत्वम् अविद्यमाने ध्वंसप्रागभावप्रतियोगित्वे स्वीक्रियते. एवं अन्यथा तादृग्विषयत्वस्य अनाश्रयत्वापत्तेः। नहि विद्यमान एव धर्मः सर्वत्र सर्वेषां धर्माणामाश्रयः तथात्वे

किञ्च स्वरूपाबाध्यस्य विषयाबाध्यत्वदर्शनेन विषयबाधे स्वरूपबाधस्यावश्यकतया स्वप्नादिज्ञानं सदेव इत्यस्य वक्तुमशक्यत्वात् ।

अनादित्वस्य विषमव्याप्तस्योपाधित्वात् च । न च अर्थक्रियाकारित्वं प्रति परमार्थत्वस्य ब्रह्मणि प्रयोजकत्वेनावधारणादकारणककार्योत्पत्तिरूपविपक्षबाधकतर्केण हेतोः साध्यव्यापकतया तदव्यापकतयोपाधेः साध्याव्यापकत्वमिति वाच्यम् । प्रातिभासिकरज्जुसर्पादौ भयकंपादिकार्यकारित्वदर्शनेन प्रातिभासिकसाधारणस्य तुच्छव्यावृत्तस्य प्रती-

---

व्यवहारोच्छेदः स्यात् । भवति हि कस्यचित् धर्मस्य विद्यमान एव धर्म आश्रयः यथा रूपरसादेः । क्वचित् पुनरविद्यमानोऽपि यथा संख्याविषयत्वादीनाम् । यत्प्रमाणसिद्धं तदभ्युपेयं प्रमाणबलात् कारणत्वाभ्युपगमेऽविद्यमानस्यापि विषयस्य संज्ञानद्वारा कारणत्वमभ्युपेयम् ॥ १३ ॥

१४—बाधितविषयकत्वेन स्वाप्नज्ञानमपि बाध्यमेव इत्याह सिद्धान्ती—

किं च स्वरूपाबाध्यस्य विषयाबाध्यत्वदर्शनेन विषयबाधे स्वरूपबाधस्यावश्यकतया स्वप्नादिज्ञानं सदेव इत्यस्य वक्तुमशक्यत्वात् । यत्र यत्र ज्ञाने स्वरूपतो न बाध्यता तत्र विषयतोऽपि न बाध्यत्वमितिनियमात् विषयाबाधस्य स्वरूपाबाधव्यापकतया व्यापकस्य विषयाबाधस्याभावे व्याप्यस्य स्वरूपाबाधस्यापि अभावः । इदं रजतमिति यज्ज्ञानं जातं तन्मिथ्या इत्यादि प्रत्ययेन विषयविशिष्टज्ञानस्य मिथ्यात्वावगाहनात् विषय एव मिथ्या न तु ज्ञानमिति वक्तुं न शक्यमिति भावः । अत एव अध्यासनिरूपणावसरे विवरणाचार्यैः विषयसहितं ज्ञानं ज्ञानसहितो वा विषयः अध्यास इति महता प्रबन्धेनोपपादितम् । अत एव अप्रमाज्ञानमात्रम् अविद्या इति सिद्धान्तः । एतेन वेदान्तसिद्धान्तरहस्यमज्ञात्वा स्मृतिरपि अन्तःकरणवृत्तिरेवेति यत् केनचिदुक्तं तदुपेक्ष्यमिति भावः [पृ० २३४ विट्ठलेशीये] ।

अस्मिन् चतुर्थे हेतौ उपाधिमुद्भावयति—

अनादित्वस्य विषमव्याप्तस्योपाधित्वाच्च । न चार्थक्रियाकारित्वं प्रति परमार्थत्वस्य ब्रह्मणि प्रयोजकत्वेनावधारणादकारणककार्योत्पत्तिरूपविपक्षबाधतर्केण हेतोः साध्यव्यापकतया तदव्याकतयोपाधेः साध्या-

तिकालसत्त्वस्यैवार्थक्रियाकारित्वं प्रति प्रयोजकत्वात्। प्रातिभासिकस्य अर्थक्रियाकारित्वानभ्युपगमे सप्रकाराबाध्येति हेतुविशेषणवैयर्थ्यापत्तेः। कस्मिन्नपि देशे कस्मिन्नपि काले केनापि पुरुषेण अबाध्यत्वं हि परमार्थसत्त्वं तदपेक्षया प्रतीतिकालसत्त्वस्य लघुत्वाच्च।

---

व्यापकत्वमिति वाच्यं प्रातिभासिकरज्जुसर्पादौ भयकम्पादिकार्यकारित्वदर्शनेन प्रातिभासिकसाधारणस्य तुच्छव्यावृत्तस्य प्रतीतिकालसत्त्वस्यैवार्थक्रियाकारित्वं प्रति प्रयोजकत्वात्। प्रातिभासिकस्य अर्थक्रियाकारित्वानभ्युपगमे सप्रकाराबाध्येति हेतुविशेषणवैयर्थ्यापत्तेः। कस्मिन्नपि देशे कस्मिन्नपि काले केनापि पुरुषेण अबाध्यत्वं हि परमार्थसत्त्वं तदपेक्षया प्रतीतिकालसत्त्वस्य लघुत्वाच्च। विमतं परमार्थसत् सप्रकाराबाध्यार्थक्रियाकारित्वात् ब्रह्मवत् इत्यस्मिन् अनुमाने अनादित्वमुपाधिः। परमार्थसत्त्वरूपसाध्यव्यापकत्वात् दृष्टान्ते ब्रह्मणि परमार्थसत्त्वम् अनादित्वञ्च वर्तते यो यः परमार्थसन् स अनादिः यथा ब्रह्म इति ब्रह्मणि उपाधेः साध्यव्यापकताग्रहो भवति। अस्योपाधेः साध्यसमव्याप्तत्वं नास्तीत्याह—विषमव्याप्तस्येति। यो यः अनादिः स परमार्थसन् इति व्याप्तिः न सम्भवति अनाद्यविद्यातत्सम्बन्धादौ व्यभिचारात्। अत उक्तं विषमव्याप्तस्य साध्यव्यापकस्य न तु साध्यसमव्याप्तस्य। वियदादौ पक्षे अनादित्वाभावात् वियदधिकरणन्यायेन सादित्वसिद्धेः। साधनाव्यापकत्वमपि उपाधौ गृह्यते। अतः सोपाधिको हेतुर्न साध्यगमक इति भावः। उपाधेः साध्याव्यापकत्वं शंकते पूर्वपक्षी—अर्थक्रियाकारित्वरूपहेतुं प्रति पारमार्थिकसत्त्वस्य ब्रह्मणि प्रयोजकत्वावधारणात् व्यापकत्वावधारणमित्यर्थः। यत् यत् अर्थक्रियाकारि तत् परमार्थसत् यथा ब्रह्म। यत् परमार्थसन्न स्यात् तदर्थक्रियाकारि न स्यात् यथा शशविषाणमिति व्याप्त्या कारणस्य परमार्थसत्त्वं सिद्धमपरमार्थसतः कार्योत्पत्तौ अभ्युपगम्यमानायामकारणककार्योत्पत्तिरापद्येत। एषा अनिष्टापत्तिरेव हेतौ विपक्षवृत्तित्वबाधकत्वेन हेतोः साध्यव्याप्यत्वेऽवधृतेऽनादित्वोपाधेरपि साध्याव्यापकत्वं स्यात् व्याप्याव्यापकस्योपाधेर्व्यापकाव्यापकत्वात्। व्याप्याव्यापकस्य व्यापकाव्यापकत्वनियमात्। घटत्वाव्यापकस्य पृथिवीत्वाव्यापकत्वदर्शनात् इति पूर्वपक्षिणा न वाच्यं कुतः यतः अर्थक्रियाकारित्वं न परमार्थसत्त्वव्याप्यम्, प्रातिभासिकरज्जुसर्पादेरपि भयकम्पादिकार्यकारित्वदर्शनात्। अतः असतः कार्य-

किंच शुद्धस्यार्थक्रियाकारित्वाभावात् साधनविकलत्वमुपहितस्य पक्षनिक्षेपात् साध्यविकलत्वम् ॥१४॥

आरोपितमिथ्यात्वकत्वादित्यपि न हेतुः। आरोपितत्वं प्रातिभासिकत्वञ्चेत् प्रपञ्चे हेतोरसिद्धिः तत्सिद्धेः पारमार्थिकत्वसिद्धचुत्तरकालीनत्वात्। व्यावहारिकत्वं चेत् शुक्तिरूप्यादौ व्यभिचारः। उभयसाधारण्येऽपि अयमेव दोषः।

---

कारित्वाभावेन असद्व्यावृत्तस्य प्रतीतिकालसत्त्वस्यैव प्रातिभासिकसाधारणस्यैव अर्थक्रियाकारित्वं प्रति व्यापकत्वात् यद् यद् अर्थक्रियाकारि तत् प्रतीतिकालसत् यथा भयकम्पादिकारी रज्जुसर्पः यथा वा घटादिजनको दण्डादिः। किञ्च प्रातिभासिकस्य अर्थक्रियाकारित्वानभ्युपगमे सप्रकाराबाध्येति हेतुविशेषणं व्यर्थं स्यात् अर्थक्रियाकारित्वमात्रस्य हेतुत्वेऽपि साध्यस्य सिद्धिः स्यात् अर्थक्रियाकारित्वं प्रातिभासिके अभ्युपगम्यैव प्रातिभासिकव्यावर्तनाय सप्रकाराबाध्येति हेतुविशेषणमुपात्तं पूर्वपक्षिणा। प्रातिभासिकरजतादिरेव सप्रकारज्ञानेन शुक्तीत्यादिप्रकारकेण ज्ञानेन बाध्यते। अतः प्रातिभासिकं नार्थक्रियाकारि-इति कथने स्ववचोव्याघातः स्यात्। अन्यच्च सर्वत्र सर्वदा सर्वैरबाध्यत्वं हि परमार्थसत्त्वं तस्यार्थक्रियाकारित्वप्रयोजकत्वकल्पनामपेक्ष्य ततो लघुभूतस्य प्रतीतिकालसत्त्वस्य प्रयोजकत्वकल्पने लाघवाच्च। किञ्च दृष्टान्तस्य साधनसाध्यवैकल्यं दर्शयन्नाह—किञ्च शुद्धस्यार्थक्रियाकारित्वाभावात् साधनविकलत्वमुपहितस्य पक्षनिक्षेपात् साध्यविकलत्वम् मायोपहितस्यैव ब्रह्मणः जगत्स्रष्टृत्वादि न तु शुद्धस्य ब्रह्मणो दृष्टान्तत्वे तत्रार्थक्रियाकारित्वाभावात् साधनविकलो दृष्टान्तः स्यात् मायोपहितस्य ब्रह्मणोऽपरमार्थत्वेन तत्र साध्याभावात् साध्यविकलो दृष्टान्तः स्यात् मायोपहितस्य व्यावहारिकत्वेन तस्यास्मिन्ननुमाने पक्षकोटिप्रवेशाच्च न निश्चितसाध्यवत्त्वमिति भावः ॥१४॥

१५—एवं चतुर्थहेतुं निरस्य पञ्चमं हेतुं निरस्यन्नाह—

आरोपितमिथ्यात्वकत्वादित्यपि न हेतुः। आरोपितत्वं प्रातिभासिकत्वं चेत् प्रपञ्चे हेतोरसिद्धिः तत्सिद्धेः पारमार्थिकत्वसिद्ध्युत्तरकालीनत्वात्। व्यावहारिकत्वञ्चेत् शुक्तिरूप्यादौ व्यभिचारः।

कल्पकरहितत्वादित्यपि न हेतुः असति व्यभिचारात् । यथाश्रुतस्यासिद्धेश्च ।

---

उभयसाधारण्येऽपि अयमेव दोषः । शुक्तिरजतादेः स्वाभाविकमिथ्यात्वकत्वात् नारोपितमिथ्यात्वकत्वं व्यावहारिकप्रपञ्चस्य पूर्वपक्षिमते परमार्थत्वात् . तस्यारोपितमिथ्यात्वकत्वं तदभाववति तस्य प्रतीतिरेवारोपः । शुक्तिरजतादौ व्यभिचारवारणाय आरोपितेत्युक्तम् । इमं हेतुं दूषयन्नाह सिद्धान्ती—आरोपितत्त्वं प्रातिभासिकत्वञ्चेत् प्रपञ्चे हेतोरसिद्धिः, प्रपञ्चे प्रातिभासिकत्वाभावात् प्रत्युत व्यावहारिकत्वस्य सत्त्वात्, पक्षे हेतोरसत्त्वात् स्वरूपासिद्धिः । प्रपञ्चे प्रातिभासिकं मिथ्यात्वं तदैव वक्तुं शक्यं यदि प्रपञ्चस्य पारमार्थिकत्वसिद्धिः स्यात् । हेतोः सिद्ध्यै प्रपञ्चस्य पारमार्थिकत्वसिद्धिः पूर्वमपेक्षिता । प्रपञ्चस्य पारमार्थिककत्वसिद्ध्युत्तरकालं तत्र मिथ्यात्वस्यारोपितत्त्वं सिध्यति । प्रपञ्चस्य पारमार्थिकत्वमद्याप्यसिद्धमिति भावः । आरोपितत्वं व्यावहारिकञ्चेत् तर्हि व्यावहारिकमिथ्यात्ववति शुक्तिरजते पारमार्थिकत्वरूपसाध्यस्याभावात् व्यभिचार एव । उभयसाधारण्येऽपि अयमेव दोष इति. आरोपितपदेन मिथ्यात्वेनोभयवादिसिद्धं वाच्यम् । तदैव साधारणं स्यात् । तत्र सिद्धत्वं यदि ज्ञातत्वं तदा रूप्यादिमिथ्यात्वे कदाचिन्मिथ्यात्वेन ज्ञातत्वात् तत्र व्यभिचारः स्यात् तत्र परमार्थत्वाभावात् । यदि सिद्धत्वं ज्ञातत्वं नाङ्गीक्रियते किन्तु प्रमितत्वमेवोच्यते तदाऽसिद्धम् । प्रपञ्चे सत्त्वसिद्धेः पूर्वं प्रपञ्चमिथ्यात्वज्ञानस्य प्रमात्वासिद्धेः । तथा च अयमेव दोष इत्यनेन हेत्वसिद्धिपर्यवसानम् । उभयसाधारण्येन हेतोरेवासिद्धिः । एवं कल्पकरहितत्वादिति पष्ठहेतुरपि न युक्त इत्याह—

कल्पकरहितत्वादित्यपि न हेतुरसति व्यभिचारात् । यथाश्रुतस्यासिद्धेश्च । अत्र पूर्वपक्षिणोऽयमाशयः—सिद्धान्तिना प्रपञ्चे कल्पितत्वेनाङ्गीकृते कल्पकं विना कल्पनाया असम्भवात् कल्पितप्रपञ्चस्य कः कल्पकः । चिन्मात्रं वा अन्यद्वा ? न चिन्मात्रम्, चिन्मात्रस्याद्रष्टृत्वेन अन्यस्य च कल्पितत्वेनाकल्पकत्वात् । कल्पकं विना कल्पनायायोगात् । अतः कल्पकाभावात् प्रपञ्चस्य कल्पितत्वसिद्धिर्न स्यात् । प्रपञ्चस्य अकल्पितत्वे तस्य पारमार्थिकत्वमेव । दूषयति सिद्धान्ती—यत् यत् कल्पकरहितं तत् परमार्थसत्यमित्यङ्गीकारेऽसति व्यभिचारः

ननु नासिद्धिः, शुद्धं हि चैतन्यं न कल्पकमद्रष्टृत्वात्, नोपहितम्, कल्पितत्वादेव। अन्यथा अनवस्थानात्। तथा च यावद्विशेषाभावे कल्पकसामान्याभावसिद्धिरिति चेन्न, शुद्धस्यापि अनाद्यविद्योपधानवशेन कल्पकत्वोपपत्तेः। कल्पकत्वं हि कल्पनां प्रति आश्रयत्वं विषयत्वं भासकत्वं वा, तच्च सर्वं कल्पनासमसत्ताकत्वेन शुद्धत्वाव्याघातकम्। तदुक्तं संक्षेपशारीरके—

आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥

---

स्यात्। असतः कल्पकरहितत्वेऽपि परमार्थत्वाभावात्। शुद्धस्यापि ब्रह्मणः अनाद्यविद्योपधानवशेन कल्पकत्वोपपत्तेः कल्पकरहितत्वमसिद्धमित्याह—यथाश्रुतस्यासिद्धेश्च—कल्पितस्य प्रपञ्चस्य कल्पकराहित्येन तस्य कल्पितत्वमसिद्धमित्याह पूर्वपक्षी—

ननु नासिद्धिः, शुद्धं हि चैतन्यं न कल्पकमद्रष्टृत्वात् नोपहितं कल्पितत्वादेव। अन्यथा अनवस्थानात्। तथा च यावद्विशेषाभावे कल्पकसामान्याभावसिद्धिरिति चेन्न, शुद्धस्यापि अनाद्यविद्योपधानवशेन कल्पकत्वोपपत्तेः। कल्पकत्वं हि कल्पनां प्रति आश्रयत्वं विषयत्वं भासकत्वं वा। तच्च सर्वं कल्पनासमसत्ताकत्वेन शुद्धत्वाव्याघातकम्। तदुक्तम् संक्षेपशारीरके—

आश्रयत्वविषयत्वभागिनी विनिर्भागचितिरेव केवला।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥

सिद्धान्तिना कल्पितप्रपञ्चस्य कल्पकराहित्यं नाङ्गीक्रियते। अतः कल्पकराहित्यमसिद्धम्। तत्प्रत्याख्यानाय कल्पकराहित्यं नासिद्धं किन्तु कल्पकराहित्यं सिद्धमेवेत्याह पूर्वपक्षी—ननु नासिद्धिः। सिद्धान्तिमते कल्पको न सम्भवति इत्याह—शुद्धं हि चैतन्यं न कल्पकमद्रष्टृत्वात्। कल्पकत्वं हि कल्पनां प्रतिकर्तृत्वम्। कल्पनां प्रति कर्तृत्वं च कल्पितद्रष्टृत्वमेव। शुद्धस्य ब्रह्मणः अद्रष्टृत्वात् न कल्पनाद्रष्टृत्वं संभवति। नापि उपहितं ब्रह्म कल्पकम्। उपहितस्यैव कल्पितत्वात्, तस्य कल्पकत्वानुपपत्तेः। उपहितस्य कल्पकत्वे कल्पनापरम्पराया-

अस्तु वोपहितस्य कल्पकत्वम् । न चानवस्था, ह्यविद्याध्यासस्याध्यासान्तरानपेक्षत्वात् स्वपरसाधारणसर्वनिर्वाहकत्वोपपत्तेः । अकल्पितस्य कल्पकत्वादर्शनाच्च । कल्पितप्रतिबिम्बविशिष्टादर्शादेरादर्शान्तरे प्रतिबिम्बकल्पकत्वदर्शनाच्च । बिम्बस्य द्वितीयादर्शसम्मुखत्वाभावेन तत्र कल्पकत्वायोगात् । अन्यथातिप्रसङ्गात् ।

---

मनवस्था स्यात् । तथा च शुद्धे उपहिते च चैतन्ये कल्पकत्वाभावात् यावद्विशेषाभावे कल्पकसामान्याभावसिद्धिरिति पूर्वपक्षिण आशयस्तन्निरस्यति सिद्धान्ती—न, शुद्धस्यापि ब्रह्मणः कल्पकत्वोपपत्तेः । शुद्धस्य द्रष्टृत्वाभावेऽपि अनाद्यविद्योपाधानवशात् द्रष्टृत्वेन कल्पकत्वम् । कल्पकत्वं हि विकल्प्य शुद्धस्य कल्पकत्वमुपपादयन्नाह—कल्पनां प्रति आश्रयत्वं विषयत्वं भासकत्वं वा कल्पकत्वं वक्तव्यम् । तच्च सर्वं मिथ्यात्वेन कल्पनासमानसत्त्वाकमिति कृत्वा शुद्धत्वाव्याघातकम् । शुद्धस्यैव यावन्मिथ्याधिष्ठानत्वात् । अविद्यावशेनाधिष्ठानत्वेऽपि न शुद्धत्वहानिः । शुद्धस्यैव सर्वकल्पनाश्रयत्वं संक्षेपशरीरकोक्त्या द्रढयति—अज्ञानस्याश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव, विशुद्धचैतन्यमेव । अनाद्यज्ञानस्यानाद्येव आश्रयो विषयश्च भवितुमर्हति, न सादि वस्तु इत्याह—पूर्वसिद्धतमसोऽज्ञानस्य पश्चिमः परसिद्धं वस्तु नाश्रयो भवति, नापि विषयो भवति । निर्विषयाज्ञानासम्भवात् अनाद्यज्ञानस्य विषयोऽपि अनाद्येव भवितुमर्हति । तच्चानादिवस्तु शुद्धं चैतन्यम् । शुद्धं चैतन्यमाश्रित्य तदेव विषयीकृत्य अज्ञानं चैतन्येन भासते । उक्तञ्च वार्तिककृद्भिः—

"अक्षमा भवतः केयं साधकत्वप्रकल्पने ।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥"

शुद्धस्य कल्पकत्वमुपपाद्योपहितचैतन्यस्यापि कल्पकत्वमुपपादयन्नाह—

अस्तु वोपहितस्य कल्पकत्वम् । न चानवस्था, अविद्याध्यासस्याध्यासान्तरानपेक्षत्वात् स्वपरसाधारणसर्वनिर्वाहकत्वोपपत्तेः । अकल्पितस्य कल्पकत्वादर्शनाच्च । कल्पितप्रतिबिम्बविशिष्टादर्शादेरादर्शान्तरे प्रतिबिम्बकल्पकत्वदर्शनाच्च बिम्बस्य द्वितीयादर्शसम्मुखत्वाभावेन तत्र कल्पकत्वायोगात् । अन्यथातिप्रसंगात् । विस्तरेण

विस्तरेण चैतदग्रे वक्ष्यामः। तदेवं निराकृताः परमार्थसत्त्वे साध्ये षडमी हेतवः। एवमन्येऽपि निराकार्याः ॥१५॥

अथ विमतं न सद्विलक्षणम्, असद्विलक्षणत्वादात्मवदिति अनुमानान्तरं भविष्यतीति मतम्? तन्न, प्रातिभासिके शुक्तिरूप्यादौ व्यभिचा-

---

चैतदग्रे वक्ष्यामः। तदेवं निराकृताः परमार्थसत्त्वे साध्ये षडमी हेतवः। एवमन्येऽपि निराकार्याः। उपहितस्य कल्पकत्वे पूर्वपक्षिणा अनवस्था चोदिता। तन्निरस्यन्नाह—न चानवस्था, अनाद्यविद्याध्यासस्याध्यासान्तरानपेक्षत्वात्। यत् सादि तदेव स्वोत्पत्तयेऽन्यदपेक्षते। यच्चानादि तन्नान्यदपेक्षते। अविद्यायाः कल्पितत्वेनकल्पकापेक्षायामपि अविद्योपहितमेवाविद्याकल्पकम्। अविद्योपहितं यथाऽविद्याकल्पकं तथा अन्येषामपि कल्पकम्। तथा च आनाद्यविद्योपाधेःस्वपरनिर्वाहकत्वम्। अविद्याकल्पकत्वं नाम अनाद्यविद्याया भासकत्वमेव अविद्याभासिका अविद्योपहिता चिदेव। पूर्वपक्षिणा उपहितस्य कल्पकत्वे दोष आशंकितः प्रत्युत, कल्पितस्यैव कल्पकत्वम्। अकल्पितस्य कल्पकत्वादर्शनात्। यथा कल्पितप्रतिबिम्बविशिष्टादर्शः आदर्शान्तरे प्रतिबिम्बते। अतः द्वितीयप्रतिबिम्बस्य प्रतिबिम्बविशिष्टादर्श एव कल्पकः। न तु प्रथमप्रतिबिम्बस्य बिम्बः। बिम्बस्य द्वितीयादर्शसमुत्थत्वाभावेन बिम्बस्य द्वितीयप्रतिबिम्बकल्पकत्वायोगात्। सम्मुखत्वाभावेऽपि प्रतिबिम्बकल्पकत्वेऽन्यत्रापि तथा प्रसंगः। बिम्बसाम्मुख्यं विनैव सर्वत्र प्रतिबिम्बोदयप्रसंगादित्याह—अन्यथा अतिप्रसंगात्। विस्तरेण च कल्पितस्य कल्पकत्वमग्रे वक्ष्यामः। तदेवं प्रपञ्चस्य परमार्थसाधकत्वेन ये षड् हेतवः पूर्वपक्षिणोपन्यस्तास्ते निराकृताः। एवमन्येऽपि प्रपञ्चपरमार्थत्वसाधकहेतवः निराकार्या। प्रपञ्चमिथ्यात्वसाधकस्थापनानुमानप्रतिरोधाय यानि षडनुमानानि पूर्वपक्षिणा-उपन्यस्तानि तानि हीनबलत्वात् न स्थापनानुमानप्रतिरोधाय समर्थानि। समबलयोरेव प्रतिरोधो भवति, न तु हीनाधिकबलयोः। उक्तञ्च तात्पर्यटीकायां वाचस्पतिमिश्रैः—नहि भवति तरक्षुः प्रतिपक्षो हरिणशावकस्य किन्तु समरकण्डूविघ्नविषाणकोटिसमुल्लिखितगण्डशैलस्य विपिनमहिषस्य ॥१५॥

१६—अनुमानान्तरेण व्यावहारिकप्रपञ्चस्य सत्यत्वं साधयितुं पूर्वपक्षी अनुमानानि प्रदर्शयति—अथ विमतं न सद्विलक्षणम्, असद्विलक्षणत्वादात्मवदिति

रात्। न च तत्रासद्विलक्षणत्वहेतुरेव नास्तीति वाच्यम्, असद्विलक्षणत्वाभावे हि अपरोक्षतया प्रतीतिरेव न स्यात्। ननु तर्हि असद्विलक्षणत्वे तद्विरुद्धसद्विलक्षणत्वायोगः तथा च साध्यस्यापि विद्यमानत्वान्न व्यभिचारः इति चेन्न, सत्त्वे सर्वजनसिद्धबाधविरोधात्। गजादौ गोवैलक्षण्येऽपि तद्विरुद्धाश्ववैलक्षण्ययोगवत् सद्वैलक्षण्येऽपि असद्वैलक्षण्ययोगोपपत्तेः प्रथममिथ्यात्वनिरुक्तौ उक्तत्वात् ॥१६॥

---

अनुमानान्तरं भविष्यतीति मतम्। तन्न, प्रातिभासिके शुक्तिरूप्यादौ व्यभिचारात्। न च तत्रासद्विलक्षणत्वहेतुरेव नास्तीति वाच्यम्, असद्विलक्षणत्वाभावे हि अपरोक्षतया प्रतीतिरेव न स्यात्। ननु तर्हि असद्विलक्षणत्वे तद्विरुद्धसद्विलक्षणत्वायोगः। तथा च साध्यस्यापि विद्यमानत्वान्न व्यभिचार इति चेन्न, सत्त्वे सर्वजनसिद्धबाधविरोधात्। गजादौ गोवैलक्षण्येऽपि तद्विरुद्धाश्ववैलक्षण्ययोगवत् सद्वैलक्षण्येऽपि असद्वैलक्षण्ययोगोपपत्तेः प्रथममिथ्यात्वनिरुक्तौ उक्तत्वात्। सत्यत्वमिथ्यात्वाभ्यां संशयविशेष्यभूतं व्यावहारिकप्रपञ्चं पक्षीकृत्य तस्य सत्यत्वसाधनाय अनुमानान्तरं दर्शयति—अथ विमतमिति। सिद्धान्ते प्रपञ्चे सदसद्वैलक्षण्याङ्गीकारेण सद्विलक्षणत्वमप्यङ्गीकृतम्। पूर्वपक्षिणा प्रपञ्चस्य सत्यत्वसाधनाय "न सद्विलक्षणम्" इति साध्यं प्रदर्शितम्। तत्र हेतोरसद्विलक्षणत्वात्। असच्छशविषाणादिविलक्षणत्वात् प्रपञ्चस्य। आत्मवदिति दृष्टान्तः। आत्मनि दृष्टान्ते सत्स्वरूपेऽसद्विलक्षणत्वहेतुरस्ति। सत्स्वरूपत्वादेव सद्विलक्षणत्वाभावरूपं साध्यमपि वर्तते। अतः व्यावहारिके प्रपञ्चे असद्विलक्षणत्वात् सद्विलक्षणत्वाभावरूपं साध्यं सिध्यति। प्रपञ्चस्य सद्विलक्षणत्वाभावे सिद्धे तस्य सत्यत्वमेव सिध्यति इति पूर्वपक्षिणो हृदयम्। निरस्यति सिद्धान्ती—तन्न, प्रातिभासिके शुक्तिरूप्यादौ साध्याभाववति प्रदर्शितस्य हेतोः सत्त्वात् व्यभिचारात् नेदमनुमानं सम्भवति। शुक्तिरूप्यस्य सदसद्विलक्षणत्वात्। असद्विलक्षणे शुक्तिरूप्यादौ सद्वैलक्षण्यमपि वर्तते। न च असत्ख्यातिवादिपूर्वपक्षिमते भ्रमविषयस्यासद्रूपत्वात् शुक्तिरजतादौ असत्यसद्विलक्षणत्वहेतुरेव नास्तीति वाच्यम्। शुक्तिरजस्य असद्विलक्षणत्वाभावेऽर्थादसत्त्वे तस्यापरोक्षतया प्रतीतिर्न स्यात्। न हि असतः शशविषाणादेरपरोक्ष-

ननु विमतं न चैतन्याज्ञानकार्यम्, न तत्कार्यधीविषयः, न तत्कार्यसत्त्ववत्, न तज्ज्ञानबाध्यसत्त्ववद्वा; तस्मिन्नपरोक्षेऽपि अनिषेध्यत्वेन साक्षाद्भासमानत्वात्। यदेवं तदेवं यथा घटे अपरोक्षेऽपि साक्षाद्भासमानः पटो न घटाज्ञानकार्यादिः। विपक्षे च तदपारोक्ष्ये तदज्ञानव्याहतिरेव बाधिका। न चासिद्धिः अधिष्ठानतया सुखादिसाक्षित्वेन च तदानीमपि चैतन्यापारोक्ष्यात् इति चेत्?

---

प्रतीतिः संभवति। अतः शुक्तिरजतादेर्नासत्त्वं किन्तु असद्वैलक्षण्यमेव। पुनः पूर्वपक्षी शंकते—ननु तर्हीति। शुक्तिरजस्य असद्विलक्षणत्वे स्वीकृते शुक्तिरजते सद्विलक्षणत्वायोगः, सद्विलक्षणत्वासद्विलक्षणत्वयोर्विरुद्धत्वात्। तथा च असद्विलक्षणे शुक्तिरजते सद्विलक्षणत्वाभावेन तत्र साध्यस्यापि विद्यमानत्वात् न शुक्तिरजते हेतोर्व्यभिचारः इति पूर्वपक्षिणा न वाच्यम्। कुतो न वाच्यम् इत्याह सिद्धान्ती—सत्त्वे सर्वजनसिद्धबाधविरोधात्। शुक्तिरजतस्य सद्रूपत्वे नेदं रजतम्, नात्र रजतमित्यादि सर्वजनसिद्धबाधविरोधः स्यात्। अबाध्यत्वमेव सत्त्वम्। बाध्यञ्च सच्चेति विरुद्धम्। गजादौ गोवैलक्षण्ये सत्यपि तद्विरुद्धाश्ववैलक्षण्यस्यापि भाववत् सद्विलक्षणेऽपि रजतेऽसद्विलक्षणत्वस्याप्युपपत्तेः। प्रथममिथ्यात्वलक्षणे एव एतत् सर्वमुक्तम्। सत्त्वासत्त्वयोः परस्परविरुद्धरूपतामङ्गीकृत्यैव पूर्वपक्षिणा एवमुक्तम्। सत्त्वाभाववति असत्त्वस्याप्यभावे व्याघातः स्यात्। तत्रेदमुक्तं सिद्धान्तिना—न च व्याहतिः, सा हि सत्त्वासत्त्वयोः परस्परविरहरूपतया वा परस्परविरहव्यापकतया वा परस्परविरहव्याप्यतया वा इत्युक्त्वा प्राथमिकपक्षद्वयं निरस्य तृतीयं पक्षं निराचष्टे—नापि तृतीयः, तस्य व्याघाताप्रयोजकत्वात्, गोत्वाश्वत्वयोः परस्परविरहव्याप्यत्वेऽपि तदभावयोः उष्ट्रादौ एकत्र सहोपलम्भात् इति प्रथममिथ्यात्वनिर्वचने यदुक्तं तदेवेहानुसंहितम् ॥१६॥

१७—प्रपञ्चसत्त्वसाधकान्यनुमानान्तराणि पूर्वपक्षी शंकते—ननु विमतं न चैतन्याज्ञानकार्यम्, न तत्कार्यधीविषयः, न तत्कार्यसत्त्ववत्, न तज्ज्ञानबाध्यसत्त्ववद्वा तस्मिन्नपरोक्षेऽपि अनिषेध्यत्वेन साक्षाद्भासमानत्वात्। यदेवं तदेवं यथा घटेऽपरोक्षेऽपि साक्षाद् भासमानः पटो न घटाज्ञानकार्यादिः। विपक्षे च तदापरोक्षे तदज्ञानव्याहतिरेव

बाधिका । न चासिद्धिः, अधिष्ठानतया सुखादिसाक्षित्वे च तदानीमपि चैतन्यापारोक्ष्यादिति, चेत् ? अत्रापि विमतपदेन व्यावहारिकप्रपञ्चस्यैव पक्षत्वेन निर्देशः। सिद्धान्ते प्रपञ्चस्य चैतन्यविषयकाज्ञानकार्यत्वाङ्गीकारात् तन्निषेधाय न चैतन्याज्ञानकार्यमिति साध्यं निर्दिष्टम्। अत्रैव द्वितीयं साध्यं निर्दिशति—न तत्कार्यधीविषयं इति। चैतन्यविषयकाज्ञानकार्यं यज्ज्ञानं तद्विषयः प्रपञ्चो न भावतीति साध्यते। सिद्धान्तिमते वृत्तिज्ञानमात्रस्याज्ञान-कार्यत्वात् अज्ञानकार्यधीविषयत्वं प्रपञ्चे वर्तते। पूर्वपक्षी तन्निषेधति। तृतीयं साध्यं निर्दिशति—न चैतन्याज्ञानकार्यसत्त्ववद्वा। सिद्धान्तिमते प्रपञ्चस्य यद्व्या-वहारिकं सत्त्वं तच्चैतन्यविषयकाज्ञानकार्यम् इत्यभिप्रेत्य पूर्वपक्षिणा न चैतन्याज्ञान-कार्यसत्त्ववदित्युक्तम्। अर्थात् प्रपञ्चेऽज्ञानकार्यं सत्त्वं न किंतु पारमार्थिकमेवेति पूर्वपक्षिणो भावः। चतुर्थं साध्यं निर्दिशति—न तज्ज्ञानबाध्यसत्त्ववद्वा। सिद्धान्तिमते प्रपञ्चस्य यद्व्यावहारिकं सत्त्वं तच्चैतन्यविषयकज्ञानेन बाध्यते। पूर्वक्षिणा तु तन्न बाध्यते इति साध्यते। न्यायामृते अत्र पञ्चममपि साध्यं निर्दि-ष्टम्—न चैतन्यज्ञानबाध्यं वेति। विमतं व्यावहारिकं वस्तु चैतन्यज्ञानेन न बाध्यते इत्येव साध्यवाक्यस्यार्थः। सिद्धान्तिमते व्यावहारिकप्रपञ्चः चैतन्य-ज्ञानेन बाध्यत एव। अद्वैतसिद्धौ त्वेष पञ्चमसाध्यनिर्देशो न वर्तते। तल्लेखक-प्रमादाद्वा भ्रमाद् वा स्खलितमिति मन्ये। सिद्धान्तिमते अर्थज्ञानात्मकोभयविधा-ध्यासाङ्गीकारात् तद्विरोधित्वेन प्राथमिकसाध्यद्वयं बोध्यम्। हेतुं निर्दिशति—तस्मिन्नति। तस्मिन् चैतन्येऽपरोक्षेऽपि अनिषेध्यत्वेन साक्षाद्भासमानत्वात्। नेदं रजतमिति ज्ञानं प्रति निषेध्यत्वेन साक्षाद्विषये प्रातिभासिकरजते, व्यवसायः द्वारा अनुव्यवसायविषये रजतमहं जनामीत्यादौ प्रातिभासके रजते व्यभिचार-वारणायानिषेध्यत्वेन साक्षादिति च विशेषणद्वयम्। यदेवं तदेवमिति। यद् यस्मिन्नपरोक्षेऽपि अनिषेध्यत्वेन साक्षाद् भासते न तत् तदज्ञानकार्यादि इति सामान्यव्याप्तिः। यथा घटेऽपरोक्षेऽपि अनिषेध्यत्वेन साक्षाद्भासमानः पटो न घटाज्ञानकार्यादिः। हेतोर्विपक्षवृत्तित्वशंकायाम् अज्ञानव्याहतिरेव बाधिका। चैतन्ये अपरोक्षतया भासमानेऽपि अनिषेध्यत्वेन साक्षाद्भासमानः प्रपञ्चः यदि चैतन्यविषयकाज्ञानकार्यः स्यात्तर्हि चैतन्यविषयकमज्ञानं व्याहन्येत। अपरोक्षतया

न, सामान्याकारेणापरोक्षेऽपि शुक्त्यादौ रजतादेरनिषेध्यत्वेन साक्षाद्भासमानतया तत्र व्यभिचारात्। अथ व्यावृत्ताकारेण यस्मिन् भासमाने यदनिषेध्यत्वेन साक्षात् भासते तत्र तदज्ञानकार्यादि इति व्याप्तिरिति मन्यसे तर्हि असिद्धिः। न हि चैतन्यमिदानीं भ्रमनिवर्तकत्वाभिमतव्यावृत्ताकारापरोक्षप्रतीतिविषयः। तथा सति अधिष्ठानमेव न स्यात् यदा तु वेदान्तवाक्यजन्यवृत्तौ व्यावृत्ताकारतयाऽपरोक्षं तदाऽनिषेध्यत्वेन प्रपञ्चे अपारोक्ष्यशंकापि नास्ति। अतः प्रमाणजन्यासाधारणाकारभानस्यैवाज्ञानविरोधित्वात् नापरोक्षतामात्रेण अज्ञानपराहतिप्रसङ्गः। यत्तु अज्ञानपदेन ज्ञानाभावोक्तौ सिद्धसाधनम् अनिर्वचनीयाज्ञानोक्तौ च तस्य खपुष्पायमानत्वेन प्रतियोग्यप्रसिद्धिरिति

---

भासमानेऽपि यदि अज्ञानं स्यात् तर्हि तदज्ञानमेव न स्यात्। अज्ञानस्य ज्ञाननिवर्त्यत्वात्। ज्ञानानिवर्त्यस्याज्ञानत्वहानेः। प्रपञ्चप्रतिभासकाले चैतन्यस्यापरोक्षतया भानमेवासिद्धम्, तथा च हेतोः पक्षावृत्तित्वादसिद्धिरित्याशंक्य निषेधति—न चासिद्धिः। चैतन्यस्य सर्वप्रत्ययवेद्यत्वाङ्गीकारे नायं घटः इत्यादावपि अधिष्ठात्वेन चैतन्यस्य स्फुरणात्। सुखादीनां साक्षिवेद्यत्वाङ्गीकारात् सुखादिसाक्षात्कारकाले साक्षिचैतन्यस्य स्फुरणात् इत्याह—अधिष्ठानतया सुखादिसाक्षित्वेन च तदानीमपि स्फुरणात्

निराचष्टे सिद्धान्ती—न, सामान्याकारेणापरोक्षेऽपि शुक्त्यादौ रजतादेरनिषेध्यत्वेन साक्षाद्भासमानतया तत्र व्यभिचारात्। अथ व्यावृत्त्याकारेण यस्मिन् भासमाने यदनिषेध्यत्वेन साक्षाद्भासते तत्र तदज्ञानकार्यादि इति व्याप्तिरिति मन्यसे तर्हि असिद्धिः। न हि चैतन्यमिदानीं भ्रमनिवर्तकत्वाभिमतव्यावृत्त्याकारापरोक्षप्रतीतिविषयः। तथा सति अधिष्ठानमेव न स्यात्। यदा तु वेदान्तवाक्यजन्यवृत्तौ व्यावृत्त्याकारतया परोक्षं तदनिषेध्यत्वेन प्रपञ्चे अपारोक्ष्यशंकापि नास्ति। अतः प्रमाणजन्यासाधारणाकारभानस्यैवाज्ञानविरोधित्वात् नापरोक्षतामात्रेणाज्ञानपराहतिप्रसङ्गः। यत्तु अज्ञानपदेन ज्ञानाभावोक्तौ सिद्धसाधनम् अनिर्वचनीयाज्ञानोक्तौ

तत्तुच्छम्, असत्प्रतियोगिकाभावं स्वीकुर्वतः पराभ्युपगममात्रेणैव प्रतियोगिप्रसिद्धिसम्भवात् ॥१७॥

---

च तस्य खपुष्पायमानत्वेन प्रतियोग्यप्यप्रसिद्धिरिति तत्तुच्छम्, असत्प्रतियोगिकाभावं स्वीकुर्वतः, पराभ्युपगममात्रेणैव प्रतियोगिप्रसिद्धिसम्भवात्। प्रथमतो व्यभिचारमुद्भावयति—शुक्तिरजताध्यासे शुक्तेः सामान्याकारेणापरोक्षेऽपि अर्थादिदन्तया शुक्तेरपरोक्षतया भासमानत्वेऽपि रजतादेरनिषेध्यत्वेन साक्षाद्भासमानत्वात्, शुक्तिरजते हेतुरस्ति, अथ च तत्र साध्यं नास्ति रजतस्य शुक्त्यज्ञानकार्यत्वात् शुक्तिविषयाज्ञानकार्यधीविषयत्वाच्च। विषयज्ञानयोर्द्वयोरपि अज्ञानकार्यत्वात्। अतः शुक्तिरजतादौ हेतोर्व्यभिचार एव। ननु अधिष्ठानस्य सामान्याकारेणापारोक्ष्यमादाय व्यभिचारोद्भावनं न सङ्गतम्। किन्तु अधिष्ठानस्य व्यावृत्त्याकारेणापरोक्षे यदनिषेध्यत्वेन साक्षाद्भासते तत्र तदज्ञानकार्यादि, एवं यद्युच्येत तर्हि असिद्धिरेव स्यात्। कुत इत्यत आह—नहि चैतन्यमिदानीं व्यवहारदशायां भ्रमनिवर्तकत्वाभिमताखण्डानन्दरूपतया व्यावृत्त्याकारापरोक्षप्रतीतिविषयः। भ्रमनिवर्तकत्वाभिमतव्यावृत्त्याकारेणाधिष्ठाने भासमाने तस्याधिष्ठानत्वमेव न स्यात्। सामान्येन ज्ञातत्वं विशेषेणाज्ञातत्वमेव हि अधिष्ठानत्वप्रयोजकम्। यदा तु वेदान्तवाक्यजन्यवृत्तौ चैतन्यं व्यावृत्त्याकारतया पूर्णानन्दरूपतया अपरोक्षं भवति तदाऽनिषेध्यत्वेन प्रपञ्चे अपारोक्ष्यशंकापि नास्ति। अतः प्रमाणजन्यासाधारणाकारभानस्यैव तद्विषयकाज्ञानविरोधित्वात् सामान्याकारेणापरोक्षतामात्रेण नाज्ञानपराहतिप्रसंगः। यत्तु अज्ञानपदेन ज्ञानाभावोक्तौ सिद्धसाधनं तदनुक्तोपालम्भनम्। न ह्यस्माभिर्ज्ञानाभावरूपमज्ञानमिष्यते। अनिर्वचनीयाज्ञानोक्तौ तु अनिर्वचनीयस्यैव सर्वथा अप्रसिद्धत्वेन खपुष्पायमानत्वात् अप्रमितप्रतियोगिकाभावाप्रसिद्धिः इति पूर्वपक्षिणा यदुक्तं तदतीव तुच्छम्। असत्प्रतियोगिकाभावं स्वीकुर्वतो माध्वस्य असत्ख्यातिवादिनः प्रतीतप्रतियोगिकाभावं स्वीकुर्वतः पराभ्युपगममात्रेणैव अनिर्वचनीयत्वेनाज्ञानस्य सिद्धान्तिस्वीकृतत्वमात्रेण अज्ञानस्य प्रतियोगित्वसम्भवात्। माध्वमते असत एवाभावप्रतियोगित्वाङ्गीकारात्। यद् यदत्यन्ताभावप्रतियोगि तदसत् इत्येवं तैः सिद्धान्तितत्वात्। तेषां मते अनिर्वचनीयाज्ञानस्यापि असत्ख्यात्युपनीतत्वसम्भवात्। असत्प्रतियोगिकाभावो नाङ्गीकरिष्यते इति वक्तुं तैरशक्यत्वादिति भावः ॥१७॥

ननु विमतं नात्मन्यध्यस्तं आत्मसाक्षात्कारवत्प्रवृत्तिविषयत्वात् [ आत्मेतिस्थले तत्त्वेति न्यायामृतसम्मतः पाठः ] यदेवं तदेवं यथा घटसाक्षात्कारवत्प्रवृत्तिविषयः पटः न तत्राध्यस्तः । न चासिद्धिः ईशजीवन्मुक्तयोरात्मसाक्षात्कारवतोरपि जगद्रक्षणभिक्षाटनादौ प्रवृत्तेः । शंखेऽध्यस्तमपि पीतत्वं न शंखश्वेतत्वसाक्षात्कारवत्प्रवृत्तिविषय इति न तत्र व्यभिचारः इति चेत् ?

न, प्रतिबिम्बे व्यभिचारात् । स हि मुखैक्यसाक्षात्कारवत्प्रवृत्तिविषये मुखेऽध्यस्तः । तद्व्यतिरेकेणोपलभ्यमानत्वस्योपाधित्वाच्च ॥१८॥

---

१८—प्रपञ्चसत्यत्वसाधकमनुमानान्तरं दर्शयति पूर्वपक्षी—ननु विमतं नात्मन्यध्यस्तं आत्मसाक्षात्कारवत्प्रवृत्तिविषयत्वात् [ आत्मेतिस्थले तत्त्वेति न्यायामृतसम्मतः पाठः ] यदेवं तदेवं यथा घटसाक्षात्कारवत्प्रवृत्तिविषयः पटः न तत्राध्यस्तः । न च असिद्धिः, ईशजीवन्मुक्तयोरात्मसाक्षात्कारवतोरपि जगद्रक्षणभिक्षाटनादौ प्रवृत्तेः । शंखेऽध्यस्तमपि पीतत्वं न शंखश्वेतत्वसाक्षात्कारवत्प्रवृत्तिविषय इति न तत्र व्यभिचारः इति चेत् ? विमतमित्यनेन व्यावहारिकप्रपञ्चस्यैव पक्षत्वेन निर्देशः ।' व्यावहारिकप्रपञ्चस्य आत्मनि अध्यस्तत्वं सिद्धान्तिना स्वीक्रियते अतस्तदभावः पूर्वपक्षिणा साध्यते । शुद्धात्मतत्त्वसाक्षात्कारवान् ईश्वरः शुकादिजीवन्मुक्तश्च तयोर्या प्रवृत्तिः जगत्पालनभिक्षाटनादिरूपा तद्विषयत्वाद् व्यावहारिकप्रपञ्चस्य । यत्तत्वसाक्षात्कारवत्प्रवृत्तिविषयो यः स न तत्र अध्यस्तः यथा घटतत्त्वसाक्षात्कारप्रवृत्तिविषयः पटः न घटेऽध्यस्तः । न च पक्षे हेतोरसिद्धिः आत्मसाक्षात्कारवतोरपि ईशजीवन्मुक्तयोः जगद्रक्षणभिक्षाटनादौ प्रवृत्तेः । नापि व्यभिचार इत्याह—शंखेऽध्यस्तमपीति । शंखतत्त्वं न शंखत्वं किन्तु श्वैत्यमेव अतः शंखेऽध्यस्तं पीतत्वं न शंखतत्त्वसाक्षात्कारवत्प्रवृत्तिविषय इति न व्यभिचारः ।

व्यभिचारोपाध्योरुद्भावनेन निरस्यति सिद्धान्ती—

न, प्रतिबिम्बे व्यभिचारात् । स हि मुखैकसाक्षात्कारवत्प्रवृत्तिविषयो मुखेऽध्यस्तः । तद्व्यतिरेकेणोपलभ्यमानत्वस्योपाधित्वाच्च । दर्पणे दृश्यमानो मुखप्रतिबिम्बः बिम्बमुखेऽध्यस्तः अथ च मुखतत्त्वसाक्षात्कारवत्-

एवञ्च विमतं नेश्वरमायाकल्पितं तं प्रति अपरोक्षत्वात् यदेवं तदेवं यथा चैत्रं प्रति अपरोक्षो घटो न चैत्रमायाकल्पितः। विमतं न जीवकल्पितं तस्मिन् सुषुप्ते अप्यवस्थितत्वात् आत्मवत्। न चासिद्धिः प्रत्यभिज्ञानात् अदृष्टादेरभावे पुनरुत्थानायोगाच्च—इत्यपि

---

प्रवृत्तिविषयो मुखप्रतिबिम्बः। तथा च तत्त्वसाक्षात्कारवत्प्रवृत्तिविषयोऽपि मुखप्रतिबिम्बो मुखेऽध्यस्त इति हेतोर्व्यभिचार एव। दर्पणाद्युपाधिसन्निधानरूपदोषविशेषाजन्यभ्रमज्ञानस्येव विशेषदर्शनप्रतिबध्यत्वं तथा च प्रतिबिम्बविभ्रमः न विशेषदर्शनेन बाधितो भवति। उपाधिमुद्भावयति—तद्व्यतिरेकेणेत्यादि। तद्व्यतिरेकेणोपलभ्यमानत्वं नाम तदविषयकोपलब्धिविषयत्वम्। घटाविषयकोपलब्धिविषयत्वं पटे वर्तते न च आत्मविषयकोपलब्धिविषयत्वं प्रपञ्चे सम्भवति। प्रपञ्चोपलब्धेः सद्रूपात्मविषयकनियमात् पक्षावृत्तित्वादुपाधेः साधनाव्यापकत्वं दृष्टान्ते चोपाधेः सत्त्वात् साध्यव्यापकत्वञ्च ॥१८॥

१९—प्रपञ्चसत्यत्वसाधकमनुमानद्वयं दर्शयति पूर्वपक्षी—

एवञ्च विमतं नेश्वरमायाकल्पितं तं प्रति अपरोक्षत्वात् यदेवं तदेवं यथा चैत्रं प्रति अपरोक्षो घटो न चैत्रमायाकल्पितः। विमतं न जीवकल्पितं तस्मिन् सुषुप्तेऽप्यवस्थितत्वात् आत्मवत्। न चासिद्धिः प्रत्यभिज्ञानात् अदृष्टादेरभावे पुनरुत्थानायोगाच्च। अयमाशयः—

"न च मायां विना माया दृश्यते विश्वमीश्वरः।
सदा पश्यति तेनेदं न मायेत्यवधार्यताम्" ॥ इति ॥

प्रमाणोक्तानुमानमाह—विमतं नेश्वरमायेति। यत् यं प्रति अपरोक्षं तन्न तन्मायाकल्पितं यथा चैत्रं प्रति अपरोक्षो घटः न चैत्रमायाकल्पितः एवम् ईश्वरं प्रति अपरोक्षं जगत् न तन्मायाकल्पितम्। द्वितीयमनुमानमाह—विमतं न जीवकल्पितमिति सुषुप्तौ जगद्विलयाङ्गीकारे पुनरुत्थानान्तरं पूर्वस्मिन्दिने यं घटमहमद्राक्षं स एवायं घट इति प्रत्यभिज्ञाविरोधात्। प्रत्यभिज्ञाया अप्रामाण्ये बौद्धोक्तक्षणिकत्वनिरासोपायाभावेन क्षणिकवादापातात् अप्रामाण्यस्य बाधकैकोन्नेयत्वेन प्रत्यभिज्ञाप्रामाण्ये बाधकाभावाच्च। यदि सुषुप्त्यवस्थायां जगद्विलयमङ्गीकृत्य हेतोरसिद्धिः शंक्यते तर्हि सुषुप्त्यनन्तरं पुनरुद्बोधो न स्यात् उद्बोकादृष्ट-

निरस्तम् आद्ये ऐन्द्रजालिकं प्रति अपरोक्षे तन्मायाकल्पिते व्यभिचारात्। मायाविद्ययोरभेदेन देहात्म्यैक्यभ्रमे व्यभिचाराच्च। द्वितीये त्वसिद्धेः। न च प्रत्यभिज्ञया प्रपञ्चस्य स्थायित्वसिद्धेर्नासिद्धिः सुषुप्तिकालस्थायित्वासाधकत्वस्य प्रत्यभिज्ञाया दृष्टिसृष्टिसमर्थने वक्ष्यमाणत्वात् अदृष्टादेः कारणात्मावस्थायित्वेन पुनरुत्थानसम्भवाच्च। ॥१९॥

---

संस्कारादेर्नाशात् इत्याह—अदृष्टादेरभावे इति। व्यभिचारासिद्धिभ्याम् अनुमानद्वयं दूषयन्नाह—इत्यपि निरुस्तम्, आद्ये ऐन्द्रिजालिकं प्रति अपरोक्षे तन्मायाकल्पिते व्यभिचारात्। मायाविद्ययोरभेदेन देहात्मैक्यभ्रमे व्यभिचाराच्च। द्वितीये त्वसिद्धेः। न च प्रत्यभिज्ञया प्रपञ्चस्य स्थायित्वसिद्धेर्नासिद्धिः सुपुप्तिकालस्थायित्वासाधकत्वस्य प्रत्यभिज्ञाया दृष्टिसृष्टिसमर्थने वक्ष्यमाणत्वात्। अदृष्टादेः कारणात्मावस्थायित्वेन पुनरुत्थानसम्भवाच्च। ऐन्द्रजालिको हि स्वमायापरिकल्पितवस्तुनि प्रवृत्तो दृश्यते। हरिवंशादौ प्रद्युम्नसंवरयुद्धादौ श्रूयते—

"ततो मायां परां चक्रे देवशत्रुः प्रतापवान्।
सिंहान् व्याघ्रान् वराहांश्च तरक्षूनृक्षवानरान्॥
मुमोच धनुरादाय प्रद्युम्नस्य रथोपरि।
गन्धर्वास्त्रेण चिच्छेद सर्वांस्तान् खण्डशस्तदा॥
प्रद्युम्नेन तु सा माया हता तां वीक्ष्य संवरः।
अन्यां मायां मुमोचाथ दानवः क्रोधमूर्छितः॥"

इत्यादौ स्वमायानिर्मितसिंहव्याघ्रादेः रक्षणादौ प्रवृत्तिस्तत्प्रत्यक्षं विना न सम्भवति। प्रवृत्तौ उपादानप्रत्यक्षस्य हेतुत्वात् तन्मायाकल्पितस्यापि तं प्रति अपरोक्षत्वात् हेतोर्व्यभिचारात्। मायाविद्ययोरभेदेन जीवाविद्याकल्पिते देहात्मैक्यादौ जीवापरोक्षे हेतोर्व्यभिचाराच्च। सुपुप्ते प्रपञ्चस्य प्रविलयात् प्रत्यभिज्ञया न स्थायित्वसिद्धिः दृष्टिसृष्टिसमर्थने सादृश्यात् प्रत्यभिज्ञाया उपपत्तेर्वक्ष्यमाणत्वात् प्रत्यभिज्ञया प्रपञ्चस्य न सुपुप्तिकाले स्थायित्वसिद्धिः। सुपुप्तौ अदृष्टसंस्कारयोः कारणगतसंस्काररूपेणावस्थानात् पुनरुद्बोधोपपत्तेः। न च सुपुप्तौ अदृष्टसंस्कारयोः सत्त्वे तत्रैव जीवकल्पितत्वाभावः साध्यते इति वाच्यम्, अवस्थितत्वं हि

मिथ्यात्वं न आत्मान्यसर्ववृत्ति मिथ्यामात्रवृत्तित्वात् शुक्तिरूप्यत्ववत् इत्यपि न, मिथ्यात्वन्यूनवृत्तित्वस्योपाधित्वात्। मिथ्यात्वञ्च सदसद्विलक्षणत्वम्, सद्विलक्षणत्वमात्रं वा? आद्ये सिद्धसाधनं तस्यात्मान्यसर्वमध्यपतितासद्वृत्तित्वाभावात्। द्वितीये तु हेतौ मिथ्यापदस्य सदसद्वैलक्षण्यपरत्वे स्वरूपासिद्धिः सद्वैलक्षण्यरूपे पक्षे तुच्छसाधारणे सदसद्विलक्षणेतरावृत्तित्वरूपहेत्वभावात्। तस्यापि सद्वैलक्षण्यमात्रपरत्वे सन्दिग्धानैकान्तिकता साध्याभाववति आत्मभेदे हेतुसन्देहात्। अप्रयोजकत्वादिकञ्च पूर्वोक्तं दूषणमनुवर्तत एव ॥२०॥

---

स्थूलावस्थावत्त्वं वाचयन् अन्यथाऽवस्थितत्वान्यांशस्य तस्मिन् सुपुप्ते इत्यंशस्य वैयर्थ्यापातात्। तर्हि अवस्थितत्वादित्येव हेतुरस्तु इति न वाच्यम् अवस्थितत्वस्य कल्पितत्वाविरोधेनाकल्पितत्वासाधकत्वादिति भावः ॥१९॥

२०—सामान्यतः आत्मव्यतिरिक्तं किञ्चिदनात्मभूतं सत्यमस्तीति साधयितुं वक्ष्यमाणानि अनुमानान्याह पूर्वपक्षी—मिथ्यात्वं नात्मान्यसर्ववृत्ति मिथ्यामात्रवृत्तित्वात् शुक्तिरूप्यत्ववत्। आत्मान्यस्मिन् अनात्मनि कुत्रचित् मिथ्यात्वं नास्तीति प्राप्त्या आत्मान्यदनात्मभूतं किञ्चित् सत्यभूतं सेत्स्यतीति भावः। हेतौ मात्रपदेन मिथ्यात्वस्य सत्यवृत्तित्वव्यावृत्तिः

उपाध्युद्भावनादिभिः अनुमानं निरस्यन् आह सिद्धान्ती—

इत्यपि न, मिथ्यात्वन्यूनवृत्तित्वस्योपाधित्वात्। मिथ्यात्वञ्च सदसद्विलक्षणत्वं, सद्विलक्षणत्वमात्रं वा? आद्ये सिद्धसाधनं तस्यात्मान्यसर्वमध्यपतितासद्वृत्तित्वाभावात्। द्वितीये तु हेतौ मिथ्यापदस्य सदसद्वैलक्षण्यपरत्वे स्वरूपासिद्धिः सद्वैलक्षण्यरूपे पक्षे तुच्छसाधारणे सदसद्विलक्षणेतरावृत्तित्वरूपहेत्वभावात्। तस्यापि सद्वैलक्षण्यमात्रपरत्वे सन्दिग्धानैकान्तिकता साध्याभाववति आत्मभेदे हेतुसन्देहात्। अप्रयोजकत्वादिकञ्च पूर्वोक्तं दूषणमनुवर्तते एव। अस्मिन्ननुमाने मिथ्यात्वन्यूनवृत्तित्वमुपाधिः। शुक्तिरूप्यत्वदृष्टान्ते मिथ्यात्वन्यूनवृत्तित्वं वर्तते, शुक्तिरूप्यत्वं सर्वमिथ्यावृत्ति न भवति रज्जुसर्पादौ शुक्तिरूप्यत्वस्याभावात्। पक्षे-

मिथ्यात्वे मिथ्यात्वन्यूनवृत्तित्वं न वर्तते उपाधेः दृष्टान्तवृत्तितया साध्यव्यापकत्वं पक्षावृत्तितया च साधनाव्यापकत्वं लब्धम्। अतः सोपाधिकतया हेतुर्न साध्यगमक इति भावः। किञ्च पक्षत्वेन निर्दिष्टं मिथ्यात्वं किं सदसद्विलक्षणत्वं विवक्षितं सद्विलक्षणत्वमात्रं वा विवक्षितम्? आद्ये सिद्धसाधनम्। तथा हि सदसद्विलक्षणत्वरूपे पक्षे आत्मान्यसर्वान्तर्गतेऽसति अभावस्य सिद्धत्वात् सिद्धसाधनम् इत्याह सिद्धान्ती—तस्यात्मान्यसर्वमध्यपतितासद्वृत्तित्वाभावात्। तस्य सदसद्विलक्षणत्वस्य पक्षत्वेन निर्दिष्टस्य। असति शशविषाणादौ अभावस्य सिद्धत्वात् सिद्धसाधनम्। द्वितीयपक्षाङ्गीकारे तु पृच्छ्यते—मिथ्यामात्रवृत्तित्वादितिहेतौ मिथ्यापदस्य सदसद्वैलक्षण्यपरत्वे स्वरूपासिद्धिः स्यात्। कुत इति चेत्? तत्राह—सद्वैलक्षण्यरूपे पक्षे इति। द्वितीयपक्षे सद्वैलक्षण्यरूपं मिथ्यात्वमङ्गीकृतम्। सद्वैलक्षण्यं च तुच्छसाधारणम्, सत्यपि सद्वैलक्षण्यं वर्तते। अतस्तुच्छमपि पक्षकोटौ प्रविष्टम्। तत्र च हेतुर्नास्ति। अतः स्वरूपासिद्धिः। हेतुश्च मिथ्यामात्रवृत्तित्वम्। हेतौ मिथ्यापदञ्च सदसद्वैलक्षण्यपरम्। मिथ्यामात्रवृत्तित्वञ्च सदसद्विलक्षणेतरावृत्तित्वरूपम्। तच्च तुच्छे पक्षैकदेशे न वर्तते इति कृत्वाऽशंतोऽसिद्धिरेव। हेतौ मिथ्यापदस्य सद्वैलक्षण्यमात्रपरत्वे सन्दिग्धानैकान्तिकता इत्याह—तस्यापि सद्वैलक्षण्यमात्रपरत्वे इति। हेतुघटकमिथ्यापदस्य सद्वैलक्षण्यमात्रपरत्वे सन्दिग्धानैकान्तिकता। निश्चितसाध्याभाववति हेतुसन्देहे एव सन्दिग्धानैकान्तिकता। आत्मभेदस्तु आत्मान्यसर्ववृत्तिः। अतस्तत्र आत्मान्यसर्ववृत्तित्वाभावरूपं साध्यं नास्ति। अतः आत्मभेदो विपक्ष एव। तत्र हेतोः मिथ्यामात्रवृत्तित्वस्य सद्वैलक्षण्येतरावृत्तित्वरूपस्य सन्देहात्। यद्यपि सिद्धान्तिमते आत्मभेदे विपक्षे मिथ्यामात्रवृत्तित्वरूपस्य हेतोरनिश्चय एव तथापि पूर्वपक्षिमते निश्चयाभावात् सन्दिग्धानैकान्तिकतेत्युक्तम्। विपक्षे बाधकतर्काभावात् अस्य हेतोरप्रयोजकत्वञ्च—मिथ्यामात्रवृत्तित्वस्य हेतोरात्मान्यसर्ववृत्तित्वेऽपि कस्यचिदनिष्टस्य अभावात्। एवमप्रयोजकत्वमुदाहृतेषु अन्येष्वपि हेतुषु बोध्यम्। प्रयोजकत्वादिकञ्च इतिमूले आदिपदेन अन्योऽपि दोषः ऊहनीयः स च सत्यत्वं प्रातिभासिकान्यसर्ववृत्ति न, सत्यमात्रवृत्तित्वात् आत्मत्ववत् इत्याभाससाम्यम् आदिपदेन सूचितम्। पूर्वपक्षिमते प्रातिभासिकान्यसर्ववृत्ति एव सत्यत्वम्। सिद्धान्तिमते न। अतः सिद्धान्तिसम्मतसिद्धये पूर्वपक्षिवदेव अनुमानं प्रयोक्तुं

आत्मा परमार्थसदन्यः पदार्थत्वादनात्मवत्। न च कल्पितात्मप्रतियोगिकभेदेनार्थान्तरम्, कल्पितमिथ्यात्वेन मिथ्यात्वानुमानेऽपि सिद्धसाधनापत्तेः इत्यपि न। व्यावहारिकपदार्थमादाय सिद्धसाधने अतिप्रसङ्गाभावात्। अनानन्दत्वस्य उपाधित्वाच्च ॥२१॥

---

शक्नोति। यथाकथञ्चित् अनुमानप्रयोगमात्रेणैव यदि स्वार्थसिद्धिः स्यात् तदा इदमपि मदीयमनुमानं सिद्धान्त्यभिप्रेतं साधयेदेव ॥२०॥

२१—अनुमानान्तरमाह पूर्वपक्षी—आत्मा परमार्थसदन्यः पदार्थत्वादनात्मवत्। न च कल्पितात्मप्रतियोगिकभेदेनार्थान्तरम् कल्पितमिथ्यात्वेन मिथ्यात्वानुमानेऽपि सिद्धसाधनापत्तेः इत्यपि न, व्यावहारिकपदार्थमादाय सिद्धसाधनेऽतिप्रसंगाभावात् अनानन्दत्वस्योपाधित्वाच्च। आत्मनि परमार्थसत्प्रतियोगिकभेदसिद्धौ द्वैतसत्यत्वसिद्धिः इत्यभिप्रेत्याह पूर्वपक्षी—परमार्थसदन्यः। भावाद्वैतमते परमार्थसन् योऽभावः तदन्यत्वस्यात्मनि सिद्ध्या सिद्धसाधनता स्यादित्यत आह पूर्वपक्षी—परमार्थसद्भावान्यो वा। अयं पक्षस्तु अद्वैतसिद्धौ नास्ति। मन्ये प्रमादाद् गलितम् (गलितः)। अनेनानुमानेन आत्मव्यतिरिक्तस्य कस्यचिदनात्मनः परमार्थसत्त्वं परमार्थसद्भावत्वं वा लब्धमिति हृदयम्। दृष्टान्तेऽनात्मनि परमार्थसद्भावभूतब्रह्मणोऽन्यत्वमस्ति इति द्रष्टव्यम्। अस्यानुमानस्य निरासाय अर्थान्तरत्वं शंकते। साध्यं च परमार्थसत्प्रतियोगिकभेदवत्त्वम्? स च भेदः कल्पितत्वेनापि उपपद्यते। आत्मनि कल्पितात्मभेदमादायापि साध्यसिद्धौ अर्थान्तरता स्यात्। पूर्वपक्षिणा साध्ये भेदमात्रमुपात्तम्। न तु अकल्पितो भेदः। तथा च कल्पितभेदेनैव साध्यसिद्ध्या अर्थान्तरता इत्याह मूलकारः—न च कल्पितप्रतियोगिकभेदेनेति। सिद्धान्तिमते अन्यत्रार्थान्तरत्वमापाद्य प्रकृतेऽर्थान्तरत्वं निरस्यति पूर्वपक्षी—कल्पितमिथ्यात्वेनेति। निरस्यति सिद्धान्ती—इत्यपि नेति। प्रपञ्चमिथ्यात्वानुमानेऽपि कल्पितमिथ्यात्वेनैव साध्यसिद्धौ सिद्धसाधनता स्यादिति पूर्वपक्षिणा न वाच्यम्। व्यावहारिकपदार्थमादायपीति। यावद्व्यवहारमबाध्यत्वेनानुवर्तमानं व्यावहारिकपदार्थप्रतियोगिकभेदमादायापि साध्यस्योपपत्तौ सिद्धसाधनता। परमार्थसन् व्यावहारिकः तदन्यत्वमात्मनि वर्तते। किञ्च, अत्र पदार्थत्वं हेतुत्वेनोपात्तम्। तत्पदार्थत्वं यदि पदशक्यत्वं तर्हि असिद्धत्वान्न हेतुः

अथ आत्मा यावत्स्वरूपमनुवर्तमानानात्मवान्, यावत्स्वरूपमनुवर्तमानभावरूपानात्मवान् वा, स्वज्ञानाबाध्यानात्मवान्, स्वज्ञानाबाध्यभावरूपानात्मवान् वा पदार्थत्वात् भावत्वाद्वा घटादिवत्। अत्र पञ्चमप्रकाराविद्यानिवृत्त्यभ्युपगमपक्षे सिद्धसाधनपरिहाराय साध्ययोर्भावि-

---

आत्मनः पदशक्यत्वाभावात। नापि पदलक्ष्यत्वम् पदार्थत्वम् पदत्वलक्ष्यत्वयोः अननुगतत्वेन पक्षदृष्टान्तसाधारण्याभावेन उक्तदोषापत्तेः। अस्मिन्ननुमाने उपाधिमुद्भावयति—अनात्मनो दृष्टान्तत्वेन उपादानात् तत्र अनानन्दत्वं वर्तते। आत्मनः पक्षत्वेनोपादानात् तस्य चानन्दरूपत्वात् अनानन्दत्वं तत्र न वर्तते। अतः दृष्टान्ते उपाधेः सत्त्वात् साध्यव्यापकत्वं पक्षेऽभावाच्च हेतोरव्यापकत्वम्। तथा च अनानन्दत्वमपि भवत्येवोपाधिः ॥२१॥

२२—अनुमानान्तरं शंकते—अथात्मा यावत्स्वरूपमनुवर्तमानानात्मवान्, यावत्स्वरूपमनुवर्तमानभावरूपानात्मवान् वा, स्वज्ञानाबाध्यानात्मवान्, स्वज्ञानाबाध्यभावरूपानात्मवान् वा पदार्थत्वात् भावत्वाद्वा घटादिवत्। अत्र पञ्चमप्रकाराविद्यानिवृत्त्यभ्युपगमपक्षे सिद्धसाधनपरिहाराय साध्ययोर्भावरूपपदमनात्मविशेषणमिति। अनेनानुमानेन अनात्मनः अव्याकृतादेर्यावदात्मस्वरूपमनुवर्तमानत्वोक्त्या त्रैकालिकनिषेधरूपमिथ्यात्वाभावसिद्धिः। अभावमादाय सिद्धसाधनवारणायाह— यावस्वरूपमनुवर्तमानभावरूपानात्मवान् स्वज्ञानाबाध्यभावरूपानात्मवान् वा। इष्टसिद्धिकृन्मतेऽविद्यानिवृत्तिर्न सद्रूपा, नासद्रूपा, न सदसद्रूपा, नापि अनुभयरूपा किन्तु पञ्चमप्रकारा। कोटिचतुष्टयोत्तीर्णा काचित् पञ्चमी कोटिरविद्यानिवृत्तिः।

"न सन्नासन्न सदसन्नोभयो नाऽपि तत्क्षयः।
यक्षानुरूपो हि बलिरित्याचार्या व्यचीकरन् ॥

एवं रूपेण इष्टसिद्धिकृन्मते पञ्चमप्रकाराविद्यानिवृत्त्यभ्युपगमे तस्या यावदात्मस्वरूपमनुवर्तमानत्वात् सिद्धसाधनता स्यादतः साध्ययोर्भावरूपपदमनात्मविशेषणम्। स्वज्ञानाबाध्येति अद्वैतमते स्वात्मतत्त्वसाक्षात्कारेण बन्धो निवर्तते इत्यङ्गीकृतं ज्ञानेन बन्धनिवृत्तिदशायां सर्वस्यापि अनात्मनो बाध्यत्वञ्च अङ्गीकृतं

रूपपदमनात्मविशेषणम् इत्यपि मन्दम्, यावत्स्वरूपमित्यस्य, यत्किञ्चित्स्वरूपपरत्वे सिद्धसाधनात् आत्मस्वरूपपरत्वे साध्याप्रसिद्धेः । न हि यावदात्मस्वरूपमनुवर्तमानोऽनात्मा प्रसिद्धोऽस्ति तथा सति अनुमानवैयर्थ्यात् । अथ स्वरूपपदस्य समभिव्याहृतपरत्वात् व्याप्तिग्रहदशायां दृष्टान्तस्वरूपं पक्षधर्मताग्रहदशायां चात्मस्वरूपमेव प्राप्यते इति न साध्याप्रसिद्धिः न वा सिद्धसाधनमिति चेन्न, शब्दस्वभावोपन्यासस्यानु मानेऽनुपयोगात् । स्वज्ञानाबाध्येत्यत्र स्वशब्देऽपि तुल्यो दोषः ॥२२॥

---

तदानीं बन्धनिवृत्तिदशायाम् आत्मसमानकालीनः अबाध्यः कश्चनानात्मास्तीति साध्यते । यो यः पदार्थः स यावत्स्वरूपमनुवर्तमानानात्मवान्, यावत्स्वरूपमनुवर्तमानभावरूपानात्मवान् वा यथा घटादिः । आत्मा च पदार्थः सोऽपि यावत्स्वरूपमनुवर्तमानानात्मवान् भविष्यतीति आत्मनो यावत्स्वरूपम् अनुवर्तमानानात्मपदार्थसिद्धौ सिद्ध पूर्वपक्षिणः समीहितं द्वैतसत्यत्वमिति पूर्वपक्षिणो भावः । इदमनुमानं निरस्यति सिद्धान्ती—

इत्यपि मन्दम्, यावत्स्वरूपमित्यस्य यत्किञ्चित्स्वरूपपरत्वे सिद्धसाधनात् आत्मस्वरूपपरत्वे साध्याप्रसिद्धेः । न हि यावदात्मस्वरूपमनुवर्तमानोऽनात्मा प्रसिद्धोऽस्ति तथा सति अनुमानवैयर्थ्यात् । अथ स्वरूपपदस्य समभिव्याहृतपरत्वात् व्याप्तिग्रहदशायां दृष्टान्तस्वरूपं पक्षधर्मताग्रहदशायां चात्मस्वरूपमेव प्राप्यते इति न साध्याप्रसिद्धिः न वा सिद्धसाधनमिति चेन्न, शब्दस्वभावोपन्यासस्यानुमानेऽनुपयोगात् । स्वज्ञानाबाध्येत्यत्र स्वशब्देऽपि तुल्यो दोषः । प्रथमसाध्यद्वये यावत्स्वरूपमित्यस्य कोऽर्थः किं यत्किञ्चित्स्वरूपम् आत्मस्वरूपं वा ? आद्ये सिद्धसाधनात् यत्किञ्चित्स्वरूपमनुवर्तमानानात्मवत्त्वमात्मनि सिद्धमेवेति सिद्धान्तिनापि अङ्गीक्रियते । द्वितीये साध्याप्रसिद्धेः यावदात्मस्वरूपमनुवर्तमानानात्मा सिद्धान्तेऽप्रसिद्ध एव । मुक्तिदशायाम् आत्मस्वरूपे विद्यमानेऽपि तदानीम् अनात्ममात्रस्य बाधात् । मुक्तावपि यदि अनात्मा तिष्ठेत् तर्हि तस्यैवानात्मनः सत्यत्वात् अनात्मसत्यत्वसाधनायानुमानप्रदर्शनम् व्यर्थं स्यात् । स्वरूपपदस्यापि अननुगतार्थत्वात् पक्षदृष्टान्तसाधारण्याभावात् । किन्तु साध्येनोभयसाधारण्येन भवि-

अत एव विमता बंन्धनिवृत्तिः स्वप्रतियोगिविषयविषयकज्ञाना-बाध्यानात्मसमानकालीना उक्तज्ञानाबाध्यभावरूपानात्मसमानकालीना

---

तव्यम् अन्यथा अनुमानाप्रवृत्तेः। स्वरूपपदस्य समभिव्याहृतपरत्वे व्याप्तिग्रहदशायां दृष्टान्तस्वरूपं पक्षधर्मताग्रहदशायाम् आत्मस्वरूपपक्षरूपमेव प्राप्यते इति न वाच्यं न हि शब्दस्वाभाव्येनानुमानप्रवृत्तिः न हि भवति वाक् विषाणिनी गोशब्द-वाच्यत्वात् गोवृषादिवदिति। उक्तञ्च तात्पर्यटीकायां वाचस्पतिमिश्रैः—न कथञ्चित् शब्दाभेदमात्रम् अनुमानाङ्गं माभूत् गोशब्दसाम्येन वागादीनामपि विषाणीत्वम्। इति [न्या० सू० १।१।५] अत एव पञ्चपदार्थवृत्तिशब्दप्रतिपाद्यत्वात् इति हेतुं दूषयन्तो वार्त्तिककारा हेत्वनन्तरम् उपस्थापयन्ति। [ न्या० सू० १।१।५॥ ] स्वज्ञानाबाध्येति साध्यघटकस्वपदस्यापि अननुगतार्थकत्वात् समभिव्याहृत-परत्वं स्वशब्दस्य वाच्यं तथा च शब्दस्वाभाव्येनानुमानप्रवृत्तिः स्यात् सा च न सम्भवतीत्युक्तं प्राक्। किञ्च पदार्थत्वमपि न हेतुः तस्य दूषणं तु प्रागेवोक्तम्। तथैव भावत्वमपि न हेतुः,आत्मनो निर्धर्मकत्वेन भावत्वहेतोः स्वरूपासिद्धेः। किञ्च तस्यापि दुर्निरूप्यत्वात्। भावत्वस्य दुर्निरूप्यत्वं चित्सुखाचार्यैः प्रतिपादितम्। तथा हि—किञ्चेदं भावत्वं किमस्तीतिप्रत्ययविषयत्वं नास्तीतिप्रत्ययाविषयत्वं वा प्रतियोग्यनपेक्षनिरूपणत्वं वा निर्विकल्पकबुद्धिबोध्यत्वं वा षड्लक्षणलक्षितत्वं वा षड्लक्षणान्यतमलक्षणलक्षितत्वं वा इति षड्विधविकल्पान्युद्भाव्य भावत्वस्य दुर्निरूप्यत्वप्रतिपादनात् पदार्थत्वभावत्वनिर्वचनोदासीनेनापि आचार्येण पूर्वपक्षीय-मनुमानं दूषितमिति वेदितव्यम् ॥२२॥

२३—प्रपञ्चसत्यत्वसाधकानुमानान्तरमाह पूर्वपक्षी—अत एव विमता बन्धनिवृत्तिः स्वप्रतियोगिविषयविषयकज्ञानाबाध्यानात्मसमानका-लीना उक्तज्ञानाबाध्यभावरूपानात्मसमानकालीना वा बन्धनिवृत्ति-त्वात् निगडबन्धनिवृत्तिवत्। अयमाशयः—स्वशब्दनिर्दिष्टा बन्धनिवृत्तिः तस्याः प्रतियोगी बन्धः तस्य विषयः बन्धकर्मीभूतो बन्ध्य इति यावत् एतादृश आत्मा जीवः तद्विषयकं यज्ज्ञानम् आत्मतत्त्वसाक्षात्कारः तेनाबाध्यो योऽनात्मा तत्समानकालीना बन्धनिवृत्तिरित्यर्थः। भावाद्वैतमते तादृशाबाध्याभावमादाय सिद्धसाधनतापरिहाराय साध्ये भावरूपानात्मेति विशेषणम्। निगडबन्धनिवृत्ति-प्रतियोगी निगडबन्धः बद्धोऽपराधी पुरुषः तद्विषयकज्ञानाबाध्यः घटाद्यनात्मा तत्स-

वा बन्धनिवृत्तित्वात् निगडबन्धनिवृत्तिवत् इत्यपि निरस्तम्, पक्ष-दृष्टान्तयोर्बन्धपदार्थस्यैकस्याभावेन स्वरूपासिद्धिसाधनवैकल्यान्यतरा-पातात्। स्वपदे चोक्तः साध्याप्रसिद्धिदोषः। हेतौ च बन्धेतिविशेषण-वैयर्थ्यात् व्याप्यत्वासिद्धिः। अप्रयोजकत्वञ्च कस्याश्चिन्निवृत्तेरनात्म-समानकालीनत्वदर्शनं निवृत्तिमात्रस्य तथात्वसाधने संसारकालीनाया दुःखनिवृत्तेः समानाधिकरणदुःखप्रागभावसमानकालीनत्वदर्शनमिव दुःखनिवृत्तिमात्रस्य तथात्वसाधने ॥२३॥

---

मानकालीनत्वं निगडबन्धनिवृत्तावस्तीति दृष्टान्तसंगतिः। दूषयति सिद्धान्ती—

इत्यपि निरस्तम्, पक्षदृष्टान्तयोर्बन्धपदार्थस्यैकस्याभावेन स्वरूपा-सिद्धिसाधनवैकल्यान्यतरापातात्। स्वपदे चोक्तः साध्याप्रसिद्धिदोषः हेतौ च बन्धेति विशेषणवैयर्थ्यात् व्याप्यत्वासिद्धिः। अप्रयोजकत्वञ्च कस्याश्चिन्निवृत्तेरनात्मसमानकालीनत्वदर्शनं निवृत्तिमात्रस्य तथात्व-साधने। संसारकालीनाया दुःखनिवृत्तेः समानाधिकरणदुःखप्राग-भावसमानकालीनत्वदर्शनमिव दुःखनिवृत्तिमात्रस्य तथात्वसाधने।

बन्धपदस्य नानार्थकत्वात् पक्षदृष्टान्तसाधारणहेतौ बन्धो नास्ति। नानार्थकं बन्धपदम्। अत एवाविद्यावतामपि निगडादिबन्धविमोके निर्बन्धत्वं व्यवहरन्ति निगडबन्धनिवृत्तिरूपदृष्टान्ते यद्बन्धनिवृत्तित्वं तन्न पक्षीकृत-बन्धनिवृत्तौ अतः हेतोः स्वरूपासिद्धिः। यच्च बन्धनिवृत्तित्वं पक्षे वर्तते तन्न दृष्टान्ते इति दृष्टान्तस्य साधनवैकल्यम्। अतः स्वरूपासिद्धिसाधनवैकल्ययो-रन्यतरापातः स्यादेव। स्वपदे चेति स्वपदस्य दृष्टान्तपरत्वे निगडबन्धविषया-प्रसिद्ध्यादिः। स्वपदस्य पक्षपरत्वेऽज्ञानविषयविषयकज्ञानाबाध्यानात्मनोऽ-प्रसिद्धिः। अयं भावः—बन्धनिवृत्तेः प्रतियोगी बन्धः स च अज्ञानमेव "अविद्या-स्तमयो मोक्षः सा च बन्ध उदाहृत" इति वचनात्। अज्ञानविषयः शुद्धचैतन्यं तद्विषयकज्ञानं मोक्षजनकचरमसाक्षात्कारः तेन आनात्ममात्रस्य बाध्यत्वात् तदबाध्यानात्मनोऽप्रसिद्धिः इत्याह मूले—साध्याप्रसिद्धिदोष इति। साध्याप्रसिद्धौ चानुमानवैयर्थ्यमेव। एतदपि प्रागवोक्तम् अतः स्वपदे चोक्तः साध्याप्रसिद्धिदोषः। निवृत्तिमात्रस्य हेतुत्वे सम्भवति बन्धेति विशेषणं व्यर्थम् अतो नीलधूमादिवत्

आत्मधीः न स्वविषयविषयकधीवाध्या धीत्वात् शुक्तिधीवत् इत्यपि बालभाषितं स्वविरोध्यविषयकप्रत्ययविषयकत्वस्योपाधित्वात्। अन्धोऽयं रूपज्ञानवान् इत्यन्धस्य रूपविषयतया कल्पितं यज्ज्ञानं तस्य रूपं नान्धगम्यमिति स्वविषयविषकप्रत्ययबाध्यत्वदर्शनेन व्यभिचारात्। कल्पितत्वात्तत्र तद्बाधने प्रकृतेऽपि वृत्तेः कल्पितत्वं समम्। धीपदेन चैतन्यमात्रविविक्षायां तु सिद्धसाधनमेव ॥२४॥

---

व्याप्यत्वासिद्धिः। निवृत्तिमात्रस्य अनात्मसमानकालीनत्वसाधने कस्याश्चिन्निवृत्तेरनात्मसमानकालीनत्वदर्शनमप्रयोजकम् अगमकं व्याप्त्यभावादिति भावः। अप्रयोजकहेत्वन्तरनिदर्शनेन प्रकृतहेतोरप्रयोजकत्वं दूषयितुमाह—संसारकालीनाया इति—दुःखनिवृत्तिः, समानाधिकरणदुःखप्रागभावसमानकालीना, दुःखनिवृत्तित्वात् संसारकालीनदुःखनिवृत्तिवत् इत्यत्र हेतोर्यथा सध्यागमकत्वं तथा प्रकृतेऽपीति भावः। चरमदुःखनिवृत्तेरपि यदि समानाधिकरणदुःखप्रागभावसमानकालीनत्वं स्यात् मुक्तिकथैवोच्छिद्येत ॥२३॥

२४—इदानीं पूर्वपक्षी सामान्यतः 'अनात्मवस्तुनः सत्यत्वसाधकानुमानेषु निरस्तेषु विशिष्य अनात्मवस्तुनः निर्दिष्टस्य कस्यचिद् अनात्मवस्तुनः सत्यत्वसाधनाय अनुमानमाह—आत्मधीः न स्वविषयविषयकधीबाध्या धीत्वात् शुक्तिधीवत्। अयमाशयः—आत्मधीः चरमसाक्षात्कारः। साध्यघटकस्वपदेन आत्मधीः तद्विषयः आत्मा तद्विषयिणी या धीः सैव स्वयमेवात्मधीः तद्बाध्या स्वयं धीरेव कतकरजोवदिति सिद्धान्तिनाऽङ्गीकृतम्। सा धीः स्वबाध्या न भवतीति पूर्वपक्षिणा साध्यते। तथा चानेनानुमानेन विशिष्यात्मधीः रूपा नात्मसत्यत्वसिद्धिरिति पूर्वपक्षाशयः। यथा शुक्तिधीरारोपितरजतादेर्बाधिकापि स्वयं स्वेनैव न बाध्यते एवम् आत्मधीरपि आत्माध्यस्तवस्तुनो बाधिकापि न स्वयं स्वेन बाध्यते इत्यभिप्रायः। उपाध्युद्भावनेन व्यभिचारप्रदर्शनेन च सिद्धान्ती निराचष्टे—इत्यपि बालभाषितम्, स्वविरुद्धविषयप्रत्ययविषयकत्वस्योपाधित्वात्। अन्धोऽयं रूपज्ञानवान् इत्यन्धस्य रूपविषयतयाकल्पितं यज्ज्ञानं तस्य रूपं नान्धगम्यमिति स्वविषयविषयकप्रत्ययबाध्यत्वदर्शनेन व्यभिचारात्। कल्पितत्वात्तद्बाधने प्रकृतेऽपि वृत्तेः कल्पितत्वं

आत्माधिष्ठानकभ्रमहेतुः न स्वकार्यभ्रमाधिष्ठानज्ञानबाध्यः, भ्रमहेतुत्वात् यदेवं तदेवं यथा शुक्त्यधिष्ठानकभ्रमहेतुकाचादिः' इत्यपि

---

समम्। धीपदेन चैतन्यमात्रविवक्षायां तु सिद्धसाधनमेव। ज्ञानमज्ञानस्यैव निवर्तकं तथा च शुक्तिज्ञानं शुक्तिविषयमज्ञानमेव निवर्तयति। शुक्त्यज्ञाने निवृत्ते तदज्ञानोपादानकं रजताद्यपि निवर्तते। उपादाननिवृत्तेरुपादेयस्यापि निवृत्तिरवश्यम्भाविनी। आत्मविषयकं ज्ञानम् आत्मविषयकमज्ञानमेव निवर्तयति। निवृत्ते चात्माज्ञाने तदुपादानकं यत् यत् तत् सर्वं निवर्तते। सर्वप्रपञ्चस्य आत्माज्ञानोपादानकत्वात् उपादाननिवृत्तौ उपादेयस्यापि निवृत्तिः। आत्मज्ञानमपि चित्तवृत्तिरूपम् आत्माज्ञानोपादानकमेव। अतः स्वोपादाननिवर्तकमात्मज्ञानं शुक्तिज्ञानन्तु न स्वोपादानाज्ञाननिवर्तकं रजताद्युपादानाज्ञाननिवर्तकं तत्। अतः स्वोपादानानिवर्तकत्वमेवोपाधिः स्वोपादानानिवर्तकत्वं शुक्तिज्ञाने वर्तते, न वर्तते चात्मज्ञाने इत्येव द्वयोः धियोर्वैलक्षण्यम् इत्याह—स्वविरोध्यविषयकप्रत्ययविषयकत्वमुपाधिः। स च दृष्टान्ते शुक्तिज्ञाने वर्तते। शुक्तिज्ञानं स्वविरोध्यविषयकम्, आत्मज्ञानं तु स्वविरोधिविषयकम्। तथा च स्वविरोध्यविषयकत्वमुपाधिः। तदेव मूलकृतां स्पष्टीकृतम्। व्यभिचारमाह—अन्धोऽयमिति। रूपस्यानन्धगम्यत्वेन ज्ञानेन अन्धस्य रूपज्ञानमपि बाधितं भवति। धीविषयविषयकधिया धियोऽपि बाधाद्। स्वविषयविषयकेति स्वम् अन्धस्य रूपज्ञानं तद्विषयः अन्धगम्यं रूपं तद्विषयकप्रत्ययो रूपं नान्धगम्यमिति ज्ञानं तेन बाध्यम् अन्धस्य रूपज्ञानं स्वविषयविषयकज्ञानेन स्वस्यापि बाधात् व्यभिचारः। अन्धज्ञानस्य कल्पितत्वेन बाध्यत्वे आत्मज्ञानस्यापि कल्पितत्वात् बाध्यत्वमेव। आत्मधीपदेन यदि आत्मरूपं चैतन्यमुच्यते तर्हि सिद्धसाधनमेव चैतन्यस्याबाध्यत्वात् इति भावः ॥२४॥

२५—अनात्मविशेषस्य सत्यत्वसाधकमनुमानान्तरमाह पूर्वपक्षी—आत्माधिष्ठानकभ्रमहेतुः न स्वकार्यभ्रमाधिष्ठानज्ञानबाध्यः, भ्रमहेतुत्वात् यदेवं तदेवं यथा शुक्त्यधिष्ठानकभ्रमहेतुकाचादिः। भ्रमबाधकाधिष्ठानसाक्षात्कारेण भ्रमहेतुर्दोषो न बाध्यते सिद्धान्तिना तु प्रपञ्चभ्रमबाधकात्मसाक्षात्कारेण प्रपञ्चभ्रमहेतुदोषस्याज्ञानस्यापि बाधः अङ्गीक्रियते। स च दृष्टविपरीत इत्याह—आत्माधिष्ठानकेति। आत्माधिष्ठानकभ्रमहेतुः अज्ञानादिः

न, व्यावृत्त्याकाराधिष्ठानज्ञानानवधित्वस्य, स्वकार्यभ्रमाधिष्ठाना-नारोपितत्वस्य वा उपाधित्वात्। दूरादिदोषादुपलादौ यत्र चाकचिक्यकल्पना तेन चाकचिक्यदोषेण शुक्ताविव रजतकल्पना तत्राधिष्ठान-ज्ञानेन चाकचिक्यरूप्ययोरुभयोरपि बाधदर्शनेन व्यभिचाराच्च। ॥२५॥

---

साध्यघटकस्वशब्देन निर्दिश्यते। तत्कार्यो यो भ्रमः जगद्भ्रमः तदधिष्ठानमात्मा तज्ज्ञानबाध्यः भ्रमहेतुरिति सिद्धान्तिनाऽङ्गीक्रियते। तदभावस्तु पूर्वपक्षिणा साध्यते। दृष्टान्ते स्वशब्देन काचादिः तत्कार्यो यो रजतभ्रमः तदधिष्ठानशुक्ति-ज्ञानबाध्यो न भवति। नन्वेवं चेच्छुक्त्यज्ञाने व्यभिचारः भ्रमहेतुत्वे सत्यपि शुक्त्यज्ञानकार्यभ्रमाधिष्ठानशुक्तिज्ञानबाध्यत्वेन साध्याभावात् इत्यतः उक्तं न्यायामृते शुक्त्यज्ञानमपि पक्षतुल्यं शुक्त्यज्ञानेऽपि स्वकार्यभ्रमाधिष्ठानज्ञान-बाध्यत्वाभावोऽपि अस्माभिः साध्यते इति तस्यापि पक्षतुल्यत्वान्न व्यभिचारः। दूषयति सिद्धान्ती—इत्यपि न, व्यावृत्त्याकाराधिष्ठानज्ञाना-नवधित्वस्य, स्वकार्यभ्रमाधिष्ठानानारोपितत्वस्य वा उपाधित्वात्। दूरादिदोषात् उपलादौ यत्र चाकचिक्यकल्पना तेन चाकचिक्यदोषेण शुक्तावपि रजतकल्पना तत्राधिष्ठानज्ञानेन चाकचिक्यरूप्ययोरुभयो-रपि बाधदर्शनेन व्यभिचाराच्च। पूर्वपक्ष्यनुमाने उपाधिद्वयं दर्शयति—व्यावृत्त्याकारेति। शुक्त्यधिष्ठानकभ्रमहेतुकाचादिदोषे दृष्टान्ते व्यावृत्त्याकारा-धिष्ठानज्ञानानवधित्वस्य सत्त्वात् उपाधेः साध्यव्यापकता। रजताधिष्ठानभूतायाः शुक्तेः रजतव्यावृत्त्याकारज्ञाने रजतस्यावधित्वं न तु काचादेरवधित्वम्, अतः काचादौ अनवधित्वं वर्तते। अविद्यादिकं प्रति व्यावर्तकं द्वितीयाभावादिकं तद्वत्तया ज्ञातम् अविद्यादिदोषजन्यभ्रमाधिष्ठानं ब्रह्माविद्यादिभ्रमनिवर्तकम्। अतः पक्षे व्यावृत्त्या-काराधिष्ठानज्ञानावधित्वस्य सत्त्वात् उपाधेः साधनाव्यापकता। द्वितीयमुपाधि-माह—स्वकार्यभ्रमाधिष्ठानानारोपितत्वस्य वोपाधित्वात्। अत्र स्वपदेनात्माधिष्ठा-नकभ्रमहेतुः, तत्कार्यो यो भ्रमः, तस्य यदधिष्ठानं तत्राधिष्ठाने अनारोपितत्वं दृष्टान्ते काचादिदोषे काचादिदोषजन्यभ्रमाधिष्ठाने शुक्तौ काचादेरनारोपितत्वात् उपाधेः सपक्षे सत्त्वात् साध्यव्यापकत्वम् पक्षे आत्माधिष्ठानकभ्रमहेतौ अज्ञानादौ स्वकार्यभ्रमाधिष्ठाने आत्मनि आरोपितत्वस्य सत्त्वात् उपाधेः पक्षावृत्तित्वेन

ब्रह्मान्यदनादि परमार्थसत् अनादित्वात् ब्रह्मवत् इत्यपि न भद्रम्, ध्वंसाप्रतियोगित्वस्योपाधित्वात् ॥२६॥

ब्रह्म देशकालसम्बन्धं विना नावतिष्ठते, पदार्थत्वात्, घटवत्

---

साधनाव्यापकता । स एव दोषः अधिष्ठानतत्त्वसाक्षात्कारेण बाध्यते यो दोषः अधिष्ठाने आरोपितः । अविद्यादिदोषस्य अधिष्ठाने आरोपितत्वात् बाध्यत्वं काचादिदोषस्य चाधिष्ठाने शुक्त्यादौ अनारोपितत्वात् अबाध्यत्वम् । एवमुपाधिद्वयमुक्त्वा साक्षाद् व्यभिचारमाह—दूरादिदोषात् यत्रोपलादौ चाकचिक्यकल्पना, कल्पितेन चाकचिक्यादिदोषेण शुक्ताविव उपले रजतकल्पना तत्राधिष्ठानोपलादिज्ञानेन कल्पितचाकचिक्यस्य कल्पितरजतस्य चोभयोरपि बाधदर्शनेन भ्रमहेतुत्वस्य हेतोर्व्यभिचारात् ॥२५॥

२६—अनुमानान्तरं शंकते—ब्रह्मान्यदनादि परमार्थसत्, अनादित्वात् ब्रह्मवत् । सिद्धान्तिमते—

"जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥"

इति श्लोकोक्तमनादिजातम् । अत्र ब्रह्मान्यदनादिजातं पक्षः । तत्र परमार्थसत्त्वं साध्यते । अनादित्वं हेतुः । अविद्याचित्सम्बन्धादीनामनादित्वेऽपि अध्यस्तत्वमेवास्तु इति अप्रयोजकताशंकायामाह न्यायामृतकारः—दोषजन्यज्ञानात् पूर्वं स्वतोऽपि अनादेरनाद्यध्यस्तत्वे ब्रह्मापि अनाद्यनन्ताध्यस्तं स्यात् । खण्डयति सिद्धान्ती—इत्यपि न भद्रम्, ध्वंसाप्रतियोगित्वस्योपाधित्वात् । ब्रह्मणि दृष्टान्ते ध्वंसाप्रतियोगित्वं वर्तते । अत उपाधेः साध्यव्यापकता । पक्षे च ब्रह्मान्यदनादिवस्तुनि ध्वंसप्रतियोगित्वमेव वर्तते । अत उपाधेः पक्षावृत्तितया साधनाव्यापकता च ॥२६॥

२७—अनुमानान्तरं शंकते—'ब्रह्म देशकालसम्बन्धं विना नावतिष्ठते पदार्थत्वात् घटवत् ।' यो यः पदार्थः स देशकालसम्बन्धं विना नावतिष्ठते यथा घटादिः ब्रह्मापि पदार्थः अतस्तदपि देशकालसम्बन्धं विना न स्थास्यति । अतो देशकालयोः ब्रह्मसम्बन्धाविनाभावात् तयोरपि ब्रह्मवत् सत्यत्वम् इति

न, व्यावृत्त्याकाराधिष्ठानज्ञानानवधित्वस्य, स्वकार्यभ्रमाधिष्ठानानारोपितत्वस्य वा उपाधित्वात्। दूरादिदोषादुपलादौ यत्र चाकचिक्यकल्पना तेन चाकचिक्यदोषेण शुक्ताविव रजतकल्पना तत्राधिष्ठानज्ञानेन चाकचिक्यरूप्ययोरुभयोरपि बाधदर्शनेन व्यभिचाराच्च। ॥२५॥

---

साध्यघटकस्वशब्देन निर्दिश्यते। तत्कार्यो यो भ्रमः जगद्भ्रमः तदधिष्ठानमात्मा तज्ज्ञानबाध्यः भ्रमहेतुरिति सिद्धान्तिनाऽङ्गीक्रियते। तदभावस्तु पूर्वपक्षिणा साध्यते। दृष्टान्ते स्वशब्देन काचादिः तत्कार्यो यो रजतभ्रमः तदधिष्ठानशुक्तिज्ञानबाध्यो न भवति। नन्वेवं चेच्छुक्त्यज्ञाने व्यभिचारः भ्रमहेतुत्वे सत्यपि शुक्त्यज्ञानकार्यभ्रमाधिष्ठानशुक्तिज्ञानबाध्यत्वेन साध्याभावात् इत्यतः उक्तं न्यायामृते शुक्त्यज्ञानमपि पक्षतुल्यं शुक्त्यज्ञानेऽपि स्वकार्यभ्रमाधिष्ठानज्ञानबाध्यत्वाभावोऽपि अस्माभिः साध्यते इति तस्यापि पक्षतुल्यत्वान्न व्यभिचारः। दूषयति सिद्धान्ती—इत्यपि न, व्यावृत्त्याकाराधिष्ठानज्ञानानवधित्वस्य, स्वकार्यभ्रमाधिष्ठानानारोपितत्वस्य वा उपाधित्वात्। दूरादिदोषात् उपलादौ यत्र चाकचिक्यकल्पना तेन चाकचिक्यदोषेण शुक्तावपि रजतकल्पना तत्राधिष्ठानज्ञानेन चाकचिक्यरूप्ययोरुभयोरपि बाधदर्शनेन व्यभिचाराच्च। पूर्वपक्ष्यनुमाने उपाधिद्वयं दर्शयति—व्यावृत्त्याकारेति। शुक्त्यधिष्ठानकभ्रमहेतुकाचादिदोषे दृष्टान्ते व्यावृत्त्याकाराधिष्ठानज्ञानानवधित्वस्य सत्त्वात उपाधेः साध्यव्यापकता। रजताधिष्ठानभूतायाः शुक्तेः रजतव्यावृत्त्याकारज्ञाने रजतस्यावधित्वं न तु काचादेरवधित्वम्, अतः काचादौ अनवधित्वं वर्तते। अविद्यादिकं प्रति व्यावर्तकं द्वितीयाभावादिकं तद्वृत्त्या ज्ञातम् अविद्यादिदोषजन्यभ्रमाधिष्ठानं ब्रह्माविद्यादिभ्रमनिवर्तकम्। अतः पक्षे व्यावृत्त्याकाराधिष्ठानज्ञानावधित्वस्य सत्त्वात् उपाधेः साधनाव्यापकता। द्वितीयमुपाधिमाह—स्वकार्यभ्रमाधिष्ठानानारोपितत्वस्य वोपाधित्वात्। अत्र स्वपदेनात्माधिष्ठानकभ्रमहेतुः, तत्कार्यो यो भ्रमः, तस्य यदधिष्ठानं तत्राधिष्ठाने अनारोपितत्वं दृष्टान्ते काचादिदोषे काचादिदोषजन्यभ्रमाधिष्ठाने शुक्तौ काचादेरनारोपितत्वात् उपाधेः सपक्षे सत्त्वात् साध्यव्यापकत्वम् पक्षे आत्माधिष्ठानकभ्रमहेतौ अज्ञानादौ स्वकार्यभ्रमाधिष्ठाने आत्मनि आरोपितत्वस्य सत्त्वात उपाधेः पक्षावृत्तित्वेन

ब्रह्मान्यदनादि परमार्थसत् अनादित्वात् ब्रह्मवत् इत्यपि न भद्रम्, ध्वंसाप्रतियोगित्वस्योपाधित्वात् ॥२६॥

ब्रह्म देशकालसम्बन्धं विना नावतिष्ठते, पदार्थत्वात्, घटवत्

---

साधनाव्यापकता। स एव दोषः अधिष्ठानतत्त्वसाक्षात्कारेण बाध्यते यो दोषः अधिष्ठाने आरोपितः। अविद्यादिदोषस्य अधिष्ठाने आरोपितत्वात् बाध्यत्वं काचादिदोषस्य चाधिष्ठाने शुक्त्यादौ अनारोपितत्वात् अबाध्यत्वम्। एवमुपाधिद्वयमुक्त्वा साक्षाद् व्यभिचारमाह—दूरादिदोषात् यत्रोपलादौ चाकचिक्यकल्पना, कल्पितेन चाकचिक्यादिदोषेण शुक्ताविव उपले रजतकल्पना तत्राधिष्ठानोपलादिज्ञानेन कल्पितचाकचिक्यस्य कल्पितरजतस्य चोभयोरपि बाधदर्शनेन भ्रमहेतुत्वस्य हेतोर्व्यभिचारात् ॥२५॥

२६—अनुमानान्तरं शंकते—ब्रह्मान्यदनादि परमार्थसत्, अनादित्वात् ब्रह्मवत्। सिद्धान्तिमते—

"जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥"

इति श्लोकोक्तमनादिजातम्। अत्र ब्रह्मान्यदनादिजातं पक्षः। तत्र परमार्थसत्त्वं साध्यते। अनादित्वं हेतुः। अविद्याचित्सम्बन्धादीनामनादित्वेऽपि अध्यस्तत्वमेवास्तु इति अप्रयोजकताशंकायामाह न्यायामृतकारः—दोषजन्यज्ञानात् पूर्वं स्वतोऽपि अनादेरनाद्यध्यस्तत्वे ब्रह्मापि अनाद्यनन्ताध्यस्तं स्यात्। खण्डयति सिद्धान्ती—इत्यपि न भद्रम्, ध्वंसाप्रतियोगित्वस्योपाधित्वात्। ब्रह्मणि दृष्टान्ते ध्वंसाप्रतियोगित्वं वर्तते। अत उपाधेः साध्यव्यापकता। पक्षे च ब्रह्मान्यदनादिवस्तुनि ध्वंसप्रतियोगित्वमेव वर्तते। अत उपाधेः पक्षावृत्तितया साधनाव्यापकता च ॥२६॥

२७—अनुमानान्तरं शंकते—ब्रह्म देशकालसम्बन्धं विना नावतिष्ठते पदार्थत्वात् घटवत्। यो यः पदार्थः स देशकालसम्बन्धं विना नावतिष्ठते यथा घटादिः ब्रह्मापि पदार्थः अतस्तदपि देशकालसम्बन्धं विना न स्थास्यति। अतो देशकालयोः ब्रह्मसम्बन्धाविनाभावात् तयोरपि ब्रह्मवत् सत्यत्वम् इति

इत्यपि न, कालसम्बन्धं विना नावतिष्ठते इत्यस्य यदा ब्रह्म तदावश्यं कालसम्बन्धः इत्येवंरूपा व्याप्तिरित्यर्थः। तथा च सुस्थिरं सिद्धसाधनम्। न हि यस्मिन् काले ब्रह्म तस्मिन् काले ब्रह्मणः कालसम्बन्धो नास्ति। एवं यत्रात्मा तत्र देशसम्बन्धः इति दैशिक्यामपि व्याप्तौ सिद्धसाधनम्। न हि देशकालासम्बन्धः कदाप्यस्ति। परममुक्तौ तु न देशो न काल इति सुस्थिरं सिद्धसाधनम् ॥२७॥

ब्रह्मान्यद्वेदैकगम्यं धर्मादि परमार्थसत् श्रुतितात्पर्यविषयत्वात् ब्रह्मवत् इत्यपि न साधु; पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्वस्योपाधित्वात् ॥२८॥

---

पूर्वपक्षिणो हृदयम्। निरस्यति सिद्धान्ती—इत्यपि न, कालसम्बन्धं विना नावतिष्ठते इत्यस्य यदा ब्रह्म तदावश्यं कलसम्बन्धः इत्येवंरूपा व्याप्तिरित्यर्थः। तथा च सुस्थिरं सिद्धसाधनम्। न हि यस्मिन् काले ब्रह्म तस्मिन् काले ब्रह्मणः कालसम्बन्धो नास्ति। एवं यत्रात्मा तत्र देशसम्बन्धः इति दैशिक्यामपि व्याप्तौ सिद्धसाधनम्। न हि देशकालासम्बन्धः कदापि अस्ति। परममुक्तौ तु न देशो न काल इति सुस्थिरं सिद्धसाधनम्। देशकालसम्बन्धं विना नावतिष्ठते इत्यस्य कोऽर्थः? यदा ब्रह्म तदावश्यं कालसम्बन्धः इत्येवंरूपा व्याप्तिरभिप्रेयते चेत्तर्हि सुस्थिरं सिद्धसाधनम्। न हि यस्मिन् काले ब्रह्म तस्मिन् काले ब्रह्मणः कालसम्बन्धो नास्तीत्यस्माभिरुच्यते। एवमेव यत्र ब्रह्म तत्र देशसम्बन्धोऽपि वर्तते इति सिद्धसाधनमेव। न हि देशकालासम्बन्धः कदाप्यस्तीति। कालविशेषान्तर्भावेन देशविशेषान्तर्भावेन च ब्रह्मणः प्रतिभासे देशकालसम्बन्धो वर्तते एव। परममुक्तौ देशकालाद्यभावे देशकालसम्बन्धकथैव न सम्भवति इति देशकालाद्यन्तर्भावे ब्रह्मणः प्रतिभासे ब्रह्मणि देशकालसम्बन्धस्य विद्यमानत्वात् पूर्वोक्तं सिद्धसाधनं सुस्थिरम्। पदार्थत्वं यथा न हेतुस्तथोक्तमितः प्रागेव इति ॥२७॥

२८—अनुमानान्तरं शंकते—ब्रह्मान्यद्वेदैकगम्यं धर्मादि परमार्थसत् श्रुतितात्पर्यविषयत्वात् ब्रह्मवत्। ब्रह्म यथा श्रुतितात्पर्यत्वेन परमार्थसत् एवं धर्मादिरपि वेदैकगम्यत्वात् परमार्थसन्नेव इति पूर्वपक्षिणो भावः। निरस्यति

साक्षिवेद्यं सुखादि परमार्थसत्, अनिषेध्यत्वेन दोषाजन्यज्ञानं प्रति साक्षाद्विषयत्वात् आत्मवत् इत्यपि न, शुक्तिरूप्यादिषु व्यभिचारात्। तेषां दोषजन्यवृत्तिविषयत्वेऽपि दोषाजन्यसाक्षिविषयत्वात्, शुद्धस्य वृत्तिविषयत्वानभ्युपगमे दृष्टान्तस्य साधनविकलत्वाच्च। दोषजन्य-ज्ञानाविषयत्वविवक्षायां वा असिद्धो हेतुः, साक्ष्यवच्छेदिकाया अविद्या-वृत्तेर्दोषजन्यत्वात्, असद्गोचरशाब्दज्ञानात्मकविकल्पस्य दोषाजन्य-

---

सिद्धान्ती—इत्यपि न साधुः। परमार्थिकत्वेन श्रुतितात्पर्यविष-यत्वस्योपाधित्वात्। यद्यपि धर्मे श्रुतितात्पर्यविषयत्वं वर्तते तथापि पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्वं नास्ति। अतो न परमार्थसन्। ब्रह्मणि तु पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्वमस्ति। अतस्तदेव परमार्थसदिति भावः। अज्ञातस्यैव पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्वम्। अत एवोक्तं जैमिनिना—"अर्थेऽनुपलब्धे"ति। अज्ञानत्वन्तु चिद्रूपस्यैव ब्रह्मणः तत्रैवाज्ञानावरणं सप्रयोजनम्। जडे तु अज्ञानावरणाभावात् जडधर्मादीनाम् अज्ञातत्वमेव नास्ति। अतस्तत्र पारमार्थिकत्वेन श्रुतितात्पर्याविषयत्वेन धर्मादीनां व्यावहारिकत्वमेव ॥२८॥

२९—[अनुमानान्तरं] शंकते—साक्षिवेद्यं सुखादि परमार्थसत्, अनिषेध्यत्वेन दोषजन्यज्ञानं प्रति साक्षाद्विषयत्वात् आत्मवत्। सुखादेः दोषाजन्यज्ञानविषयत्वोपपादनाय साक्षिवेद्यमिति पक्षविशेषणम्। साक्षिरूप-ज्ञानस्य नित्यत्वेन दोषाजन्यत्वादिति भावः। बाधकज्ञानस्य दोषाजन्यत्वात्तं प्रति निषेध्यत्वेन साक्षाद्विषये रजते व्यभिचारवारणाय अनिषेध्यत्वेनेति हेतुविशेषणम्। इदं रूप्यमितिज्ञानं प्रत्येव साक्षादनिषेध्यत्वेन विषये रूप्ये व्यभिचारवारणाय दोषा-जन्यज्ञानं प्रतीत्युक्तम्। इदं रूप्यमित्यस्य च दोषजन्यत्वान्न व्यभिचारः। व्यवसायद्वारा रजतमहं जानामीति अनुव्यवसायं प्रति विषये रूप्ये व्यभिचार-वारणाय साक्षादित्युक्तम्।

सिद्धान्ती निराचष्टे—इत्यपि न, शुक्तिरूप्यादिषु व्यभिचारात्। तेषां दोषजन्यवृत्तिविषयत्वेऽपि दोषजन्यसाक्षिविषयत्वात्। शुद्धस्य वृत्तिविषयत्वानभ्युपगमे दृष्टान्तस्य साधनविकलत्वाच्च। दोष-जन्यज्ञानविषयत्वविवक्षायां वा। असिद्धो हेतुः। साक्ष्यवच्छेदिकाया

त्वेनासति व्यभिचाराच्च । आत्मनो वृत्तिविषयत्वाभ्युपगमे दोषजन्यदेहात्मैक्यभ्रमविषयत्वात् साधनविकलो दृष्टान्तः । तदनभ्युपगमे तु अविषयत्वमात्रस्यैव परमार्थसत्त्वसाधकत्वोपपत्तौ दोषजन्यज्ञानेतिविशेषणवैयर्थ्यात् व्याप्यत्वासिद्धिः । तावन्मात्रञ्च पक्षे स्वरूपासिद्धमित्यन्यत्र विस्तरः ॥२९॥

---

अविद्यावृत्तेर्दोषजन्यत्वात् असद्गोचरशाब्दज्ञानात्मकविकल्पस्य दोषजन्यत्वेनासति व्यभिचाराच्च । आत्मनो वृत्तिविषयत्वाभ्युपगमे दोषजन्यदेहात्मैक्यभ्रमविषयत्वात् साधनविकलो दृष्टान्तः । तदनभ्युपगमे तु अविषयत्वमात्रस्यैव परमार्थसत्त्वसाधकत्वोपपत्तौ दोषजन्यज्ञानेति विशेषणवैयर्थ्यात् व्याप्यत्वासिद्धिः । तावन्मात्रं च पक्षे स्वरूपासिद्धमित्यन्यत्र विस्तरः । शुक्तिरूप्यादिषु हेतोर्व्यभिचारमाह—शुक्तिरूप्येति । शुक्तिरूप्यस्य साक्षिवेद्यत्वात् साक्षिणश्च दोषजन्यत्वात् इदं रजतमिति साक्षिप्रत्यक्षे भासमानरजते अनिषेध्यत्वेन दोषाजन्यज्ञानं प्रति साक्षाद्विषयत्वमस्ति परमार्थसत्त्वरूपसाध्यञ्च नास्तीति व्यभिचार एव । तेषां प्रातिभासिकरजतादीनां चाकचिक्यादिदोषजन्याविद्यावृत्तिविषयत्वेऽपि दोषाजन्यसाक्षिप्रत्यक्षविषयत्वात् तत्र व्यभिचारः सुदृढ एव । अस्मिन्ननुमाने शुद्धस्यात्मनो दृष्टान्तत्वात् तस्य एव परमार्थसत्त्वात् तस्य च भामतीमते वृत्तिविषयत्वानभ्युपगमात् दृष्टान्तस्य साधनवैकल्यं साक्षाद्विषयत्वस्य हेतोस्तत्राभावात् दृष्टान्ते साधनवैकल्यपरिहाराय हेतोर्दोषजन्यज्ञानाविषयत्वविवक्षायां साधनवैकल्यपरिहारेऽपि साक्षिवेद्यसुखादिरूपे पक्षे हेतोरसत्त्वात् स्वरूपासिद्धिरेव स्यात् । सुखाकाराविद्यावृत्तिप्रतिबिम्बितं चैतन्यं सुखसाक्षीत्यतः साक्ष्यवच्छेदिकाया अविद्यावृत्तेर्दोषजन्यत्वात् साक्षिवेद्य सुखादिपक्षे हेतोरसत्त्वात् स्वरूपासिद्धिरेव । शशविषाणादिशब्दजन्यशाब्दज्ञानात्मकविकल्पवृत्तिविषयेऽसति शशविषाणे हेतोर्व्यभिचारः शाब्दज्ञानात्मकविकल्पवृत्तेर्दोषाजन्यत्वात् । शुद्धस्यात्मनो वृत्तिविषयत्वाभ्युपगमेऽपि दोषजन्यदेहात्म्यैक्यभ्रमे आत्मनोऽपि भासमानत्वात् साधनविकलो दृष्टान्तः । दोषजन्यज्ञानविषयत्वस्यात्मनि दृष्टान्ते सत्त्वात् । दृष्टान्तीकृतस्य शुद्धस्यात्मनो वृत्तिविषयत्वानभ्युपगमेऽविषयत्वमात्रेणैव परमार्थसत्त्वसाधकमिति शुद्धात्मनि दृष्टान्ते गृहीतम् । शुद्धात्मा वृत्तेरविषयोऽपि परमार्थसन्नपि दृष्टान्ते साध्यसिद्धये अविषयत्वमात्रमपेक्षितम् । साध्यसिद्धये

विमतं परमार्थसत् स्वविषयज्ञानात् पूर्वभावित्वात् आत्मवत् इत्यपि न, दृष्टिसृष्टिपक्षेऽसिद्धेः। विषमव्याप्तस्यानादित्वस्योपाधित्वाच्च ॥३०॥

---

अनपेक्षितदोषजन्यज्ञानेति हेतुविशेषणवैयर्थ्यात् नीलधूमादाविव व्याप्यत्वासिद्धिः। दृष्टान्तभूमौ साध्यसिद्धिप्रयोजकत्वेन अविषयत्वमात्रमपेक्षितं साध्यसिद्धये अविषयत्वमात्रस्यापेक्षितत्वेऽपि अविषयत्वहेतुत्वेनोपादाने साक्षिवेद्यसुखादिपक्षे साक्षिविषये अविषयत्वरूपहेतोरभावात् स्वरूपासिद्धिरेव ॥२९॥

३०—पूर्वपक्षी अनुमानान्तरं शंकते—

**विमतं परमार्थसत् स्वविषयज्ञानात् पूर्वभावित्वात् आत्मवत्।** अयं भावः—प्रतिभासकालमात्रस्थायिनि प्रातिभासिके रजतादौ अपरमार्थसति शुक्तिरजतादिविषयकज्ञानात् पूर्वभावित्वं शुक्तिरजतादीनां नास्ति। अतोऽपरमार्थवस्तुमात्रस्यैव स्वविषयज्ञानात् पूर्वभावित्वं न वर्तते। वर्तते च व्यावहारिके प्रपञ्चे। अतः व्यावहारिकप्रपञ्चस्यापारमार्थिकवस्तुवैलक्षण्यात् परमार्थसत्त्वमेव इत्याशयेन पूर्वपक्षी अनुमानं दर्शयति—विमतमिति। विमतं व्यावहारिकवस्तु सत्यत्वमिथ्यात्वाभ्यां सन्दिग्धम् अतस्तदेव विमतम्। तस्य परमार्थसत्त्वमनुमीयते। तस्य सिद्धान्तिना अपारमार्थिकत्वाङ्गीकारात् तन्निषेधाय परमार्थसदिति साध्यते। तच्च व्यावहारिकं वस्तु स्वविषयज्ञानात् पूर्वं वर्तते। व्यावहारिकस्य प्रपञ्चस्य अज्ञातसत्त्वं वादिप्रतिवादिभ्यामुभाभ्यामेव स्वीक्रियते। व्यावहारिकवस्तुनोऽसत्त्वभावत्वे सन्निकर्षादिजन्यं तज्ज्ञानं न स्यादिति प्रतिकर्मव्यवस्थानुपपत्तिः। सिद्धान्ती निराचष्टे—**इत्यपि न, दृष्टिसृष्टिपक्षेऽसिद्धेः। विषमव्याप्तस्यानादित्वस्योपाधित्वाच्च।** दृष्टिसृष्टिपक्षेऽर्थात् दृष्टिसमानकालीना सृष्टिरितिमते दृष्टेः प्राक्कालीनं सत्त्वं प्रपञ्चस्य नास्त्येव। अतः प्रपञ्चे स्वविषयज्ञानात् पूर्वभावित्वरूपहेतुरेव नास्त्यतः स्वरूपासिद्धिः। दृष्टिसृष्टिप्रक्रिया चाग्रे अचार्येणैव व्युत्पादयिष्यते। दृष्टिसृष्ट्यनभ्युपगमेऽपि दृश्यत्वान्यथानुपपत्त्या व्यावहारिकप्रपञ्चस्य मिथ्यात्वमेव सेत्स्यति इति दृग्दृश्यसम्बन्धभंगप्रकरणे साधयिष्यते। असिद्धिमभिधायोपाधिं दर्शयति—अनादित्वस्योपाधित्वाच्च। आत्मनि दृष्टान्ते अनादित्वं वर्तते, अतोऽनादित्वस्य साध्यव्यापकत्वम्; न वर्तते च पक्षे विमते प्रपञ्चे इति

अन्योन्याभावातिरिक्तैतद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावत्वम् एतद्घटसमानकालीनावृत्ति अन्योन्याभावातिरिक्तैतद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावमात्रवृत्तित्वात्, एतद्घटप्रागभावत्ववत्। व्यधिकरणधर्मावच्छिन्नभावपक्षे व्यधिकरणधर्मानवच्छिन्नेत्यपि विशेषणीयम्। अत्र च स्वसमानाधिकरणः स्वसमानकालीनो योऽत्यन्ताभावस्तदप्रतियोगित्वलक्षणसत्त्वसिद्धिरिति इत्यपि न साधुः। साधनावच्छिन्नसाध्यव्यापकस्यैतद्घटप्रतियोगिकजन्यजनकान्यतरमात्रवृत्तित्वस्योपाधित्वात्।

---

साधनाव्यापकत्वम्। अस्योपाधेः साध्यसमव्याप्तत्वाभावात् विषमव्याप्तेत्युक्तम्। व्याप्यत्वे सति व्यापकत्वं समव्याप्तत्वम्। अयमुपाधिः पुनः साध्यव्यापक एव न साध्यव्याप्योऽपि—अनाद्यविद्यादौ साध्याभावात् ॥३०॥

३१—अनुमानान्तरं शंकते—अन्योन्याभावातिरिक्तैतद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावत्वम् एतद्घटसमानकालीनावृत्तिः, अन्योन्याभावातिरिक्तैतद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावमात्रवृत्तित्वात्, एतद्घटप्रागभावत्ववत्। व्यधिकरणधर्मावच्छिन्नाभावपक्षे व्यधिकरणधर्मानवच्छिन्नेत्यपि विशेषणीयम्। अत्र च स्वसमानाधिकरणः स्वसमानकालीनो योऽत्यन्ताभावस्तदप्रतियोगित्वलक्षणसत्त्वसिद्धिरिति। सिद्धान्तिमते घटादेरन्यत्रासत्त्वस्य सिद्धत्वात् स्वयं यत्रास्ति तत्रापि तदत्यन्ताभावोऽस्तीत्युच्यते। तद्विरोधितया पूर्वपक्षिणा साध्यते। अन्योन्याभावातिरिक्तैतद्घटसमानाधिकरणैतद्घटप्रतियोगिको योऽत्यन्ताभावः स एतद्घटसमानकालीन इति सिद्धान्तिनोच्यते। पूर्वपक्षिभिस्तु एतद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावत्वम् एतद्घटसमानकालीनो योऽत्यन्ताभावस्तद्वृत्तीत्युच्यते। एतद्घटात्यन्ताभावः एतद्घटसमानाधिकरणः एतद्घटसमानकालीनश्च न भवति इति पूर्वपक्षिणामाशयः। एवञ्च स्वसमानधिकरणस्वसमानकालीनात्यन्ताभावाप्रतियोगित्वरोपमसत्त्वसिद्धिः। अन्योन्याभावातिरिक्तेति अभावविशेषणम्। एतद्घटसमानाधिकरणैतद्घटप्रतियोगिकाभावः अन्योन्याभावोऽपि भवति। कपालमेतद्घटो नेति प्रतीत्या एतद्घटान्योन्याभावस्य कपाले एतद्घटसमानाधिकरणत्वात्। स चान्योन्याभाव एतद्घटसमानकालीनोऽपि भवति। एवञ्च एतद्घटसमाना-

धिकरणैतद्धटप्रतियोगिकाभावत्वम् एतद्धटसमानकालीनावृत्तीति साधने एतद्धटा-न्योन्याभावत्वमादाय बाधः स्यादतो बाधवारणायन्योन्याभावातिरिक्तेति विशेषणम्। तावत्युक्ते तन्त्वादौ. एतद्धटप्रतियोगिकात्यन्ताभावस्तावदस्ति। स चान्योन्याभाव-व्यतिरिक्तैतद्घटसमानकालीनश्च। एतद्धटस्य तन्त्वादौ अभावे तद्धटात्यन्ताभावस्य च समानकालीनत्वात्। एवञ्च एतद्धटप्रतियोगिकाभावत्वम् एतद्धटसमानकालीनावृत्ति इतिसाधने तन्त्वादिनिष्ठैतद्घटात्यताभावमादाय बाधः स्यात्। अत एतद्धटसमा-नाधिकरणेत्युक्तम्। तन्त्वादिनिष्ठे तद्घटात्यन्ताभावस्य एतद्धटसमानाधिकरण-त्वाभावान्न बाधः। अन्योन्याभावातिरिक्तैतद्घटसमानाधिकरणनिष्ठधर्मत्वम् इत्येता-वत्युक्ते कपालरूपादिकमन्योन्याभावातिरिक्तम्, एतद्धटसमानाधिकरणम् एतद्धट-समानकालीनञ्च भवति, एवञ्च कपालरूपत्वे एतद्धटसमानकालीनावृत्तित्वसाधने बाधः स्यादतः अभावत्वमित्युक्तम्। तावत्युक्ते अन्योन्याभावातिरिक्ते कपाले एतद्धट-समानाधिकरणो यः पटात्यन्ताभावः स एतद्धटसमानकालीनश्च भवति। तथा च तन्निष्ठे पटात्यन्ताभावत्वे एतद्धटसमानकालीनावृत्तित्वसाधने बाधः स्यात्, अतः एतद्धटप्रतियोगीत्युक्तम्। नन्वेतद्धटप्रतियोगिपदेनैव कपालरूपत्वमादाय बाधस्यापि परिहृतत्वात् एतद्धटप्रतियोगिकनिष्ठधर्मत्वमित्येवास्तु। अभावत्वमित्येतत् किमर्थमिति चेदुच्यते—एतद्धटसमवायो द्विष्ठत्वेन कपाले एतद्धटसमानाधिकरणः, सप्रतियोगिकत्वेनैतद्धटप्रतियोगिकत्वेन एतद्धटप्रतियोगिकश्च भवति। तद्वृत्ति यदेतद्धटकपालसमवायत्वम् तदादाय बाधः स्यात्। तस्य एतद्धटसमानकालीनो य एतद्धटसमवायः तद्वृत्तित्वात्। अतोऽभावत्वमित्युक्तम्। नन्वेवं चेत् पुनर्बाधः, व्यधिकरणधर्मावच्छिन्नाभावपक्षे संयोगेन सम्बन्धेन घटवति भूतलेऽसमवेतत्वावच्छिन्नघटो नास्तीतिप्रतीत्या अन्योन्याभावातिरिक्तः भूत-लादौ एतद्धटसमानाधिकरणो यः एतद्धटात्यन्ताभावः असमवेतत्वरूपव्यधिकरण-धर्मावच्छिन्नत्वात अत्यन्ताभावः स एतद्धटसमानकालीनश्च भवति। एवं च व्यधिकरणधर्मावच्छिन्नैतद्धटात्यन्ताभावत्वे एतद्धटसमानकालीनावृत्तित्वसाधने बाधः स्यादतोऽन्योन्याभावातिरिक्तैतद्धटसमानाधिकरणधर्मानवच्छिन्नैतद्धटात्यन्ताभावत्वमि-ति विशेषणीयमतो न बाधः। हेतौ आद्यविशेषणत्यागे एतद्धटान्योन्याभावत्वे एतद्धट-समानकालीनान्योन्याभाववर्तिनि हेतोर्व्यभिचारः स्यादतः आद्यमन्योन्याभावाति-

न च पक्षीकृतधर्मस्यात्यन्ताभाववृत्तित्वसन्देहे साधनाव्यापकत्व-सन्देहः इति वाच्यम्, विपक्षसाधकतर्कानवतारदशायां सन्दिग्धोपाधे-

---

रिक्तेत्यभावविशेषणम्, तावत्युक्ते तन्त्वादिनिष्ठैतद्घटात्यन्ताभावत्वे एतद्घट-समानकालीनतन्तुनिष्ठैतद्घटात्यन्ताभाववर्तिनि हेतोर्व्यभिचारः स्यादतः एतद्घट-समानाधिकरणेति द्वितीयं विशेषणम्। तावत्युक्ते एतद्घटसमानाधिकरणैतद्घटसमान-कालीनकपालरूपवर्तिनि कपालरूपत्वे व्यभिचारः स्यात्। अत एतद्घटप्रतियोगि-काभाववृत्तित्वादित्युक्तम्। तावत्युक्ते एतद्घटसमानाधिकरणात्यन्ताभाववर्तिनि पटा-त्यन्ताभावत्वे एतद्घटसमानकालीनपटात्यन्ताभाववर्तिनि च व्यभिचारः स्यात् अतः एतद्घटप्रतियोगिकेत्युक्तम्। तावत्युक्ते एतद्घटकापालसमवायो द्विष्ठत्वेन कपाले एत-द्घटसमानाधिकरणः सप्रतियोगिकत्वेन एतद्घटप्रतियोगिकश्च भवति। तद्वर्तिनि एतद्घटकपालसमवाये एतद्घटसमानकालीनो यः एतद्घटसमवायः तद्वर्तिनि व्यभिचारः स्यादतः अभावेत्युक्तम्। तावत्युक्ते प्रमेयत्वे एतद्घटसमानकालीनपट-समवेतादिवर्तिनि व्यभिचारः स्यात् अतो मात्रपदम्। तावत्युक्तेऽसमवेतत्वरूप-व्यधिकरणधर्मावच्छिन्नैतद्घटात्यन्ताभावत्वे एतद्घटसमानकालीनो यः असमवेतत्वा-वच्छिन्नैतद्घटात्यन्ताभावः तद्वर्तिनि व्यभिचारः स्यात्। अतो व्यधिकरणधर्मा-न्नेत्यपि विशेषणं देयम्। दृष्टान्ते पटप्रागभावत्वे एतद्घटसमानकालीनो यः पट-प्रागभावः तद्वृत्तित्वेन साधनवैकल्यम् स्यात्। एतद्घटप्रतियोगिकाभाववृत्तित्वा-भावेन साधनवैकल्यञ्च स्यात्। अत एतद्घटप्रतियोगिकेत्युक्तमिति पदानां कृत्यानि।

दूषयति सिद्धान्ती—इत्यपि न साधुः। साधनावच्छिन्न-साध्यव्यापकस्यैतद्घटप्रतियोगिकजन्यजनकान्यतरमात्रवृत्तित्वस्योपाधि-त्वात्। एतद्घटप्रतियोगिकजन्यजनकान्यतरमात्रवृत्तित्वमुपाधिः। तस्यायमर्थः—एत-द्घटप्रतियोगिकं यदेतद्घटस्य जन्यं जनकञ्च द्वयोरन्यतरत् एतद्घटस्य ध्वंसः प्राग-भावश्च। घटजन्यो घटध्वंसः, घटजनको घटप्रागभावः। साध्यसमव्याप्तिरक्षार्थ-मुपाधौ मात्रपदम्। विषमव्यापकस्याप्युपाधित्वं साध्यव्याप्यत्वस्य दूषकतायामनु-पयोगादिति मते तु मात्रपदं न देयम्। शुद्धसाध्यस्य एतद्घटासमानकालीनतत्त-द्व्यक्तित्वेऽपि सत्त्वात्तत्रोपाध्यसत्त्वादाह—साधनावच्छिन्नेति। शंकते—न च

रपि दूषणत्वसम्भवात्; घटात्यन्ताभावत्वे च व्यभिचारात् संयोग-संबन्धेन घटवत्यपि भूतले समवायसम्बन्धेन घटात्यन्ताभावसत्त्वात्। साध्याभाववति हेतोर्वृत्तेरित्यलमतिविस्तरेण ॥३१॥

इति अद्वैतसिद्धौ विश्वसत्यत्वानुमानभङ्गः।

---

पक्षीकृतधर्मस्यात्यन्ताभाववृत्तित्वसन्देहे साधनाव्यापकत्वसन्देहः। पक्षीभूतधर्मस्य एतद्घटप्रतियोगिकाभावत्वस्य एतद्घटसमानकालीनात्यन्ताभाववृत्तित्व-सन्देहे उपाधेः साधनाव्यापकत्वसन्देहः। तथा च सन्दिग्धोपाधिः न हेतोः साध्य-व्यभिचारं निश्चाययति। तत्रोक्तम्—"विपक्षबाधकतर्कानवतारदशयां सन्दिग्धोपाधे-रपि दूषकत्वसम्भवात्"। स्थापनानुमाने साधनस्य विपक्षबाधकतर्कानवतारदशायां सन्दिग्धोपाधेरपि व्यभिचारोन्नायकत्वसम्भवात्। विपक्षबाधकतर्कसत्त्वदशायामेव सन्दिग्धोपाधिर्व्यभिचारं नानुमापयति। उपाधिं प्रदर्श्य व्यभिचारमाह— घटात्यन्ताभावे च व्यभिचारात्। संयोगसम्बन्धेन घटवत्यपि भूतले समवायसम्बन्धेन घटात्यन्ताभावसत्त्वात्। साध्याभाववृति हेतोर्वृत्ते-रित्यलमतिविस्तरेण।

संयोगसम्बन्धेन घटवत्यपि भूतले समवायसम्बन्धेन घटात्यन्ताभावसत्त्वात् तादृशघटात्यन्ताभाववृत्तिघटात्यन्ताभावत्वे साध्यं नास्ति। अर्थात् एतद्घटसमकालीनावृत्तित्वं नास्ति। अथ च हेतुरस्ति, एतद्घटप्रतियोगिकाभावमात्रवृत्तित्वस्य हेतुत्वात्। तथा च हेतोर्व्यभिचार एव ॥३१॥

इतिश्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्रनाथ-देवशर्मतर्कसांख्यवेदान्ततीर्थकृतायामद्वैतसिद्धिटीकायां बाल-बोधिन्यां विश्वसत्यत्वानुमानभंगविवरणं समाप्तम्।

## मिथ्यात्वे विशेषानुमानम्

मिथ्यात्वे च विशेषतोऽनुमानानि—[१] ब्रह्मज्ञानेतराबाध्य-ब्रह्मान्यासत्त्वानधिकरणत्वं पारमार्थिकसत्त्वाधिकरणावृत्ति, ब्रह्मावृत्तित्वात्, शुक्तिरूप्यत्ववत्, परमार्थसद्भेदवच्च ।

[२] विमतं मिथ्या, ब्रह्मान्यत्वात्, शुक्तिरूप्यवत् ।

---

१—पूर्वपक्षिणा प्रपञ्चसत्यत्वे बहूनि अनुमानानि प्रदर्शितानि । तत्प्रतिरोधाय पूर्वपक्ष्यनुमानापेक्षया अधिकसंख्यकानुमानानि प्रपञ्चमिथ्यात्वसाधकानि प्रदर्श्यन्ते । तेन च प्रपञ्चमिथ्यात्वसाधकबहूनाम् अनुमानानाम् अप्रामाण्य-कल्पनामपेक्ष्य परकीयाल्पहेतुष्वेव अप्रामाण्यं युक्तमित्यभिप्रेत्य क्रमशो बहूनि अनुमानानि प्रपञ्चमिथ्यात्वसाधकानि प्रदर्शयन् आह सिद्धान्ती—मिथ्यात्वे च विशेषतोऽनुमानानि—ब्रह्मज्ञानेतराबाध्यब्रह्मान्यासत्त्वानधिकरणत्वं पारमार्थिकसत्त्वाधिकरणावृत्ति, ब्रह्मावृत्तित्वात्, शुक्तिरूप्यत्ववत् परमार्थसद्भेदवच्च । अयमर्थः—ब्रह्मज्ञानान्याबाध्यं यद्ब्रह्मान्यत् तद्वृत्तित्वविशिष्टः असत्त्वाभावः पक्षः । अयं च सामान्यतो मिथ्यात्वानुमाने यः पक्षस्तत्सदृश एव व्यावहारिकप्रपञ्चमात्रवृत्तिधर्मः पक्षः । पारमार्थिकसत्त्वाधिकरणावृत्तीति साध्यं पारमार्थिकसत्त्वं न पारमार्थिकं किन्तु व्यावहारिकमेव, तच्च सामान्यानुमानोक्तरीत्या धीविशेषविषयत्वादिकरूपम्. एतादृशपारमार्थिकसत्त्वाधिकरणे ब्रह्मणि न वर्तते । व्यावहारिकप्रपञ्चमात्रवृत्तिधर्मरूपे पक्षे ब्रह्मावृत्तित्वं हेतुर्वर्तते । शुक्तिरूप्यत्वं परमार्थसद्भेदश्च दृष्टान्तः तत्र ब्रह्मावृत्तित्वे हेतुः वर्तते । पारमार्थिकसत्त्वाधिकरणावृत्तित्वञ्च साध्यमपि वर्तते । दृष्टान्ते हेतु-साध्ययोः सामानाधिकरण्येन व्याप्तिग्रहात् पक्षे हेतोः सत्त्वेन साध्यस्य सिद्धि-रिति भावः । व्यावहारिकप्रपञ्चमात्रवृत्तिधर्मस्य पारमार्थिकसत्त्वाधिकरणावृत्तित्वे सिद्धेः प्रपञ्चस्यापारमार्थिकत्वमेव सिध्यति इति सिद्धान्तिनोऽभिप्रायः ।

द्वितीयमनुमानमाह—विमतं मिथ्या ब्रह्मान्यत्वात् शुक्तिरूप्यवत् अत्र साध्यबोधकमिथ्यापदस्य सद्विलक्षणत्वमर्थः, न सदसद्विलक्षणत्वम् असति

[३] परमार्थसत्त्वं स्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्ति, सदितरावृत्तित्वाद् ब्रह्मत्ववत्

[४] ब्रह्मत्वमेकत्वं वा सत्त्वव्यापकम्, सत्त्वसमानाधिकरणत्वात्, असद्वैलक्षण्यवत्। ॥११॥

---

ब्रह्मान्यत्वस्य हेतोः सत्त्वेऽपि सदसद्विलक्षणत्वं साध्यं नास्तीति व्यभिचारः स्यात्। अतोऽत्र सद्विलक्षणत्वमेव मिथ्यात्वं प्रपञ्चे सद्वैलक्षण्यमात्रसिद्धावपि पारमार्थिकत्वापहारात् समीहितसिद्धिः। दृष्टान्ते हेतुसाध्ययोरनुगमः स्पष्टः। इदमेवानुमानं वेदान्तपरिभाषाकृता अनुमानपरिच्छेदे उपन्यस्तम्। किन्तु तत्रासति व्यभिचारो दुष्परिहर एव। अत्र च व्यभिचारपरिहारोपायः प्रदर्शित एव।

तृतीयमनुमानमाह—परमार्थसत्त्वं स्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्ति सदितरावृत्तित्वात् ब्रह्मत्ववत्। साध्ये स्वपदं परमार्थसत्त्वपरम्। परमार्थसत्त्व समानाधिकरणो योऽन्योन्याभावः स तु अपरमार्थसत्प्रतियोगिक एव। तस्य प्रतियोगि अपरमार्थसत्। तदवृत्तित्वं परमार्थसत्त्वे वर्तते इति साध्यपदस्यार्थः। परमार्थसत्त्वम् एकस्मिन्नेव ब्रह्मणि वर्तते। यदि परमार्थसत्त्वमन्यत्रापि वर्तेत तर्हि परमार्थसत्त्वसमानाधिकरणान्योन्याभावप्रतियोगिनि परमार्थसत्त्वमपि वर्तेत। परमार्थसद्वस्तुनोर्भेदे एकस्मिन् परमार्थसति अपरस्य परमार्थसतः भेदोऽपि वर्तितुमर्हति। किन्तु परमार्थसद्वस्तु एकमेव। अतः परमार्थसदन्तरस्य भेदो न वर्तते, परमार्थसदन्तरस्यैवाभावात् पूर्वपक्षिमते परमार्थसद्वस्तुनो बहुत्वात् एकस्मिन् परमार्थसति परमार्थसदन्तरस्य भेदोऽपि वर्तते। अतस्तन्मते परमार्थसत्त्वं स्वसमानाधिकरणान्योन्याभावप्रतियोगिवृत्ति भवत्येव, तन्निषेधाय प्रतियोग्यवृत्तीत्युक्तम्। सदितरावृत्तित्वादिति हेतुः। परमार्थसत्त्वं सदितरावृत्ति भवति। सदितरदसत्। परमार्थसत्त्वं तदवृत्त्येव। ब्रह्मत्ववदिति दृष्टान्तः। ब्रह्मत्वं हि परमार्थसत्त्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्ति, ब्रह्मणि ब्रह्मणो भेदो नास्ति। ब्रह्मत्वे दृष्टान्ते सदितरावृत्तित्वरूपहेतुरपि वर्तते। एतेन चानुमानेन परमार्थसत एकत्वसिद्ध्या बहूनां परमार्थसत्त्वाभावात् ब्रह्मव्यतिरिक्तप्रपञ्चस्य परमार्थसत्त्वराहित्यं सिद्धम्। तथा च प्रपञ्चस्य मिथ्यात्वमेव पर्यवस्यति।

चतुर्थानुमानमाह—ब्रह्मत्वम् एकत्वं वा सत्त्वव्यापकम्, सत्त्वसमानाधिकरणत्वात् असद्वैलक्षण्यवत्। एकत्वमत्राद्वितीयत्वं बोध्यम्।

[५] व्याप्यवृत्तिघटादिः जन्याभावातिरिक्तस्वसमानाधिकरणाभावमात्रप्रतियोगी, अभावप्रतियोगित्वात्, अभिधेयत्ववत्। अभिधेयत्वं

---

ब्रह्मत्वमेकत्वं वा सत्त्वव्यापकमित्युक्तौ ब्रह्मत्वाभाववति अब्रह्मणि एकत्वाभाववत्सु अनेकेषु सत्त्वं न वर्तते।' अतः ब्रह्मत्वस्य एकत्वस्य वा सत्त्वव्यापकत्वं भवति। अब्रह्मणि यदि सत्त्वं न स्यात् तर्हि प्रपञ्चेऽपि वस्तुगत्या सत्त्वं न स्यात् इति प्रपञ्चस्य मिथ्यात्वं सिद्ध्येत्। असद्वैलक्षण्ये दृष्टान्ते सत्त्वसमानाधिकरणत्वरूपो हेतुर्वर्तते, सत्त्वव्यापकत्वरूपं साध्यमपि वर्तते। अतः [पक्षे] सत्त्वसमानाधिकरणत्वस्य [हेतुसिद्ध्या] साध्यव्यापकत्वसिद्धिः। सत्त्वसमानाधिकरणत्वात् ब्रह्मत्वमेकत्वं वा सत्त्वव्यापकमेव। अनेनानुमानेन यथा प्रपञ्चस्य मिथ्यात्वसिद्धिस्तथा प्रदर्शितैव। ॥१॥

२—पञ्चममनुमानमाह—व्याप्यवृत्तिघटादिः जन्याभावातिरिक्तस्वसमानाधिकरणाभावमात्रप्रतियोगी, अभावप्रतियोगित्वात्, अभिधेयत्ववत्। घटादेः पक्षत्वे तत्र स्वसमानाधिकरणभावमात्रप्रतियोगित्वसिद्धावपि घटादेरव्याप्यवृत्तित्वं स्यात्। तथा च अव्याप्यवृत्तिघटादिकमादाय सिद्धसाधनता स्यात्, तत्परिहाराय व्याप्यवृत्तीति पक्षविशेषणम्। न कस्याप्यव्याप्यवृत्तित्वम् इत्यद्वैतसिद्धान्तः मिथ्यात्वनिरुक्तौ एव द्वितीयमिथ्यात्वलक्षणे उक्तः। परेषां मते संयोगेन भूतलादौ यदवच्छेदेन घटो वर्तते तस्मिन्नेव भूतलेऽन्यावच्छेदेन संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटात्यन्ताभावोऽपि वर्तते। संयोगेन घटस्याव्याप्यवृत्तित्वात्। अस्मन्मते तु, घटसंयुक्तावच्छेदकदेशस्यैव घटाधिकरणता न भूतलस्य भूतलीयप्राग्देशो घटवान्, भूतलीयपराग्देशो घटाभाववान् न तु भूतलमेव घटवत् घटाभाववच्च। एकस्मिन् भावाभावयोर्विरोधात्। जन्याभावेति। जन्याभावो ध्वंसः। तदतिरिक्तः स्वसमानाधिकरणो योऽभावः। अत्र स्वपदं पक्षीकृतघटादिपरम्। तथा च व्याप्यवृत्तिघटादिसमानाधिकरणं यदभावमात्रं तत्प्रतियोगी घटः। घटादेः स्वसमानाधिकरणाभावमात्रप्रतियोगित्वे स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमपि घटादेः स्यात्। तथा च घटादेर्मिथ्यात्वे पर्यवसानम्। अभावप्रतियोगित्वादिति हेतुः। 'अभिधेयत्वं दृष्टान्तः। साध्ये अभावमात्रमनुक्त्वा अभावप्रतियोगित्वमित्येवोक्तौ स्वसमानाधिकरणभेदप्रतियोगित्वमादाय सिद्धसाधनं

हि परमते केवलान्वयित्वादन्योन्याभावमात्रप्रतियोगि । स च समानाधिकरण एव । अस्मन्मते तु मिथ्यैव इति न उभयथापि साध्यवैकल्यम् ॥२॥

[६] अत्यन्ताभावः प्रतियोग्यवच्छिन्नवृत्तिः, नित्याभावत्वात्, अन्योन्याभाववत् ।

---

स्यादतोऽभावमात्रेति । कपालादिनाशनाश्यघटादौ स्वसमानाधिकरणनाशप्रतियोगित्वाभावात् स्वसमाधिकरणान्यनाशप्रतियोगित्वमेव घटादौ स्यात् । तथा च पक्षे साध्याभावात् बाधः । कपालमेव घटस्याधिकरणम् । कपालवृत्तिर्यो घटध्वंसः स एव घटसमानाधिकरणः । कपालस्य पूर्वं नाशाद् घटनाशस्तु कपाले न वर्तते । अतः स नाशो न स्वसमानाधिकरणः । अतः स्वासमानाधिकरण एव । तथा च पक्षे साध्याभावात् बाधः तद्वारणाय—जन्यभावातिरिक्तेति विशेषणम् । शब्दवाच्यत्वरूपाभिधेयत्वे दृष्टान्ते अभावप्रतियोगित्वं हेतुर्वर्तते । अभिधेयत्वस्य जन्याभावाप्रतियोगित्वेऽपि भेदमात्रप्रतियोगित्वसत्त्वात् दृष्टान्ते हेतोः सत्त्वम् । एतदेव उक्तं मूलकृता—**अभिधेयत्वं हि परमते केवलान्वयित्वादन्योन्याभावमात्रप्रतियोगि । स च समानाधिकरण एव ।** तथा च दृष्टान्ते साध्यसत्त्वं स्वसमानाधिकरणाभावमात्रप्रतियोगित्वस्यैव साध्यत्वात् । तथा च प्रमेयत्वसमानाधिकरणभेदप्रतियोगित्वस्य प्रमेयत्वे सत्त्वात् स्वसमानाधिकरणाभावप्रतियोगित्वरूपं साध्यं वर्तते । मूलकृतोक्तम्—**अस्मन्मते तु मिथ्यैव ।** अद्वैतमते प्रमेयत्वस्य न केवलान्वयित्वम् । किन्तु अभिधेयत्वं मिथ्यैव । तेन च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमपि अभिधेयत्वे वर्तते । **न उभयथापि साध्यवैकल्यम्**—उभयथापि परमते अस्मन्मते च न अभिधेयत्वरूपे दृष्टान्ते साध्यवैकल्यम् । स्वसमानाधिकरणभेदप्रतियोगित्वमादाय परमते दृष्टान्ते साध्यसत्त्वम् । अस्मन्मते च मिथ्यात्वेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेनैव साध्यसत्त्वम् । तथा चोभयमतेऽपि न दृष्टान्तस्य साध्यवैकल्यमिति भावः । तथा च व्याप्यवृत्तिघटादेः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसिद्धया मिथ्यात्वसिद्धिरिति भावः ॥२॥

३—षष्ठमनुमानमाह—**अत्यन्ताभावः प्रतियोग्यवच्छिन्नवृत्तिः नित्याभावत्वात्, अन्योन्याभाववत् ।** अत्यन्ताभावो यदि स्वप्रतियोग्यवच्छि-

[७] अत्यन्ताभावत्वम्, प्रतियोग्यशेषाधिकरणवृत्तिमात्रवृत्ति, प्रतियोग्यवच्छिन्नवृत्तिमात्रवृत्ति वा नित्याभावमात्रवृत्तित्वात्, अन्योन्याभावत्ववत् ॥३॥

[८] घटात्यन्ताभावत्वं स्वप्रतियोगिजनकाभावसमानाधिकरण-

---

न्नवृत्तिः सिद्ध्येत्तर्हि प्रतियोगिनो मिथ्यात्वमेव पर्यवस्येत। स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव हि मिथ्यात्वम्। अतोऽत्यन्ताभावस्य प्रतियोग्यवच्छिन्नवृत्तित्वं साध्यते। प्रतियोग्यवच्छिन्नवृत्तिरित्यस्य प्रतियोगी यत्र वर्तते तत्रैव योऽत्यन्ताभावो वर्तते इत्यर्थः। नित्याभावत्वादिति हेतुः। अन्योन्याभावात्यन्ताभावयोरेव नित्याभावत्वम्। अतोऽत्यन्ताभावे नित्याभावत्वरूपहेतुर्वर्तते। अन्योन्याभावो दृष्टान्तः। अन्योन्याभावे नित्याभावत्वं हेतुर्वर्तते, प्रतियोग्यवच्छिन्नवृत्तित्वमपि साध्यम् वर्तते अन्योन्याभावप्रतियोग्यधिकरणे देशेऽन्योन्याभावो वर्तते। अतोऽन्योन्याभावः प्रतियोग्यवच्छिन्नवृत्तिः भवतीति भावः।

सप्तममनुमानमाह—अत्यन्ताभावत्वम् प्रतियोग्यशेषाधिकरणवृत्तिमात्रवृत्ति, प्रतियोग्यवच्छिन्नवृत्तिमात्रवृत्ति वा, नित्याभावमात्रवृत्तित्वात्, अन्योन्याभावत्ववत्। स्वप्रतियोग्यधिकरणत्वव्यापको योऽत्यन्ताभावः स प्रतियोग्यशेषाधिकरणवृत्तिः तन्मात्रवृत्तित्वम् अत्यन्ताभावत्वरूपे पक्षे वर्तते। अत्र साध्यद्वयमुक्तं प्रथमं साध्यमुक्त्वा द्वितीयमाह—प्रतियोग्यवच्छिन्नेति। योऽत्यन्ताभावः प्रतियोग्यवच्छिन्नवृत्तिः, प्रतियोग्यधिकरणमात्रवृत्तिः तन्मात्रवृत्तित्वमत्यन्ताभावत्वरूपे पक्षे वर्तते। अत्यन्ताभावत्वे पक्षे नित्याभावमात्रवृत्तित्वरूपहेतुरपि वर्तते अत्यन्ताभावस्य नित्याभावरूपत्वात्। अन्योन्याभावत्वरूपे दृष्टान्ते नित्याभावमात्रवृत्तित्वरूपहेतुः वर्तते अन्योन्याभावस्य नित्यत्वात्। प्रतियोगिनोऽन्योन्याभावस्तु प्रतियोग्यधिकरणे वर्तते अतोऽन्योन्याभावत्वं प्रतियोग्यधिकरणवृत्तिमात्रवृत्ति भवति। पक्षे दृष्टान्ते च हेतुसाध्ययोः सत्त्वं स्पष्टम्। अनेनानुमानेनात्यन्ताभावस्य स्वप्रतियोगिसामानाधिकरण्यसाधनेन प्रतियोगिनो मिथ्यात्वं पर्यवसितम्। स्वात्यन्ताभावसामानाधिकरण्यस्यैव मिथ्यात्वादिति भावः ॥३॥

४—अष्टममनुमानमाह—घटात्यन्ताभावत्वं स्वप्रतियोगिजनका-

वृत्ति, एतत्कपालकालीनैतद्घटप्रतियोगिकाभाववृत्तित्वात्, प्रमेयत्ववत् ॥४॥

[६] एतत्कपालम् एतद्घटात्यन्ताभावाधिकरणम्, आधारत्वात्, पटादिवत् ॥५॥

---

भावसमानाधिकरणवृत्ति, एतत्कपालकालीनैतद्घटप्रतियोगिकाभाववृत्तित्वात्, प्रमेयत्ववत्। स्वं घटात्यन्ताभावः तस्य प्रतियोगी घटः तज्जनकाभावः घटप्रागभावः तस्याधिकरणं घटसमवायिकारणं कपालः, कार्यसमवायिकारणं कपालः कार्यसमवायिकारणमेव कार्यप्रागभावाधिकरणम्। घटप्रागभावसमानाधिकरणो यदि घटात्यन्ताभावः स्यात् तर्हि घटात्यन्ताभाववत्वं घटप्रागभावसमानाधिकरणवृत्तिः स्यात्, प्रागभावसमानाधिकरणात्यन्ताभावसिद्धौ च प्रतियोगिनो मिथ्यात्वं सिध्येत्। एतत्कपालसमानकालीनैतद्घटप्रतियोगिकाभावः एतद्घटात्यन्ताभावोऽपि भवति। केवलं कपालनाशजन्यघटनाशः कपालसमानकालीनो न भवति। अन्ये सर्वे एतद्घटप्रतियोगिकाऽभावाः एतत्कपालसमानकालीना एव। एतत्कपालसमानकालीनैतद्घटप्रतियोगिकात्यन्ताभाववृत्तित्वं घटात्यन्ताभावत्वे पक्षे वर्तते। तथा च हेतोः पक्षसत्त्वमेव। प्रमेयत्वदृष्टान्ते साध्यसाधनयोः सद्भावः स्पष्टः। दृष्टान्ते साध्यनिरूपिता व्याप्तिः साधने गृहीता। गृहीतव्याप्तिकसाधनश्च पक्षे वर्तते अतः साध्यमपि पक्षे वर्तते। पक्षे साध्यसिद्धौ च प्रतियोगिनो घटस्य मिथ्यात्वसिद्धिः, स्वात्यन्ताभावसामानाधिकरण्यमेव स्वस्य मिथ्यात्वमिति भावः ॥४॥

५—नवममनुमानमाह—एतत् कपालम् एतद्घटात्यन्ताभावाधिकरणम्, आधारत्वात्, पटादिवत्। पटादौ दृष्टान्ते हेतुसाध्ययोः सद्भावः पटीयरूपाद्याधारत्वमपि वर्तते घटात्यन्ताभावोऽपि वर्तते। तथा च पक्षातिरिक्ते सर्वत्राधारत्वं घटात्यन्ताभावश्च वर्तते। एतत्कपाले पक्षेऽपि आधारत्वहेतुर्वर्तते पक्षे साध्यव्याप्यहेतोः सत्त्वात् साध्यमपि सिध्यति। एतत्कपाले एतद्घटात्यन्ताभावसिद्धौ एतद्घटस्य मिथ्यात्वमेव पर्यवस्येत्। न च एतद्कपाले एतद्घटात्यन्ताभावानुमाने बाधः स्यादिति वाच्यम्, प्रात्यक्षिकबाधस्य उद्धृत्वात्; अनुमानबाधस्य

[१०] ब्रह्मत्वं न परमार्थसन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकम्, ब्रह्मवृत्तित्वादसद्वैलक्षण्यवत् ॥६॥

[११] परमार्थसत्प्रतियोगिको भेदः न परमार्थसन्निष्ठः, परमार्थसत्प्रतियोगिकत्वात्, परमार्थसत्त्वावच्छिन्नप्रतियोगिकाभाववत् ॥७॥

[१२] भेदत्वावच्छिन्नं सद्विलक्षणप्रतियोग्यधिकरणान्यतरवत्, अभावत्वात्, शुक्तिरूप्यप्रतियोगिकाभाववत् ॥८॥

---

चोद्धृतत्वात्। आगमबाधश्च अग्रे एवोद्धरिष्यते। तथा च एतन्मिथ्यात्वानुमानमनाविलमिति भावः ॥५॥

६—दशममनुमानमाह—ब्रह्मत्वं न परमार्थसन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकम्, ब्रह्मवृत्तित्वादसद्वैलक्षण्यवत्। परमार्थसदनुयोगिकान्योन्याभावीयप्रतियोगिताया अवच्छेदकत्वं ब्रह्मत्वे न वर्तते। ब्रह्मत्वं तदैव परमार्थसदनुयोगिकभेदीयप्रतियोगिताया अवच्छेदकं भवितुमर्हति यदि परमार्थसद्द्वयं न स्यात्, अन्यदपि परमार्थसत् स्यात्। एकस्यैव परमार्थसतो ब्रह्मणोऽन्यस्य अपरमार्थसत्त्वे तु प्रपञ्चस्य अपरमार्थसत्त्वम् अर्थात् मिथ्यात्वम्, तथा च ब्रह्मत्वं परमार्थसत्प्रपञ्चानुयोगिकभेदीयप्रतिप्रतियोगिताया अवच्छेदकं नैव भवति। ब्रह्मवृत्तित्वादिति हेतुः यद् यद् ब्रह्मवृत्ति तन्न परमार्थसन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकं यथा असद्वैलक्षण्यम्। ब्रह्मापि असद्विलक्षणमेव। परमार्थसति ब्रह्मणि असद्विलक्षणं नेति भेदो न तिष्ठति। अतोऽसद्वैलक्षण्यं परमार्थसन्निष्ठभेदीयप्रतियोगिताया अवच्छेदकं न भवति ॥६॥

७—एकादशमनुमानमाह—परमार्थसत्प्रतियोगिको भेदः न परमार्थसन्निष्ठः परमार्थसत्प्रतियोगित्वात् परमार्थसत्त्वावच्छिन्नप्रतियोगिकाभाववत्। परमार्थसद्द्वयानभ्युपगमात् परमार्थसत्प्रतियोगिको भेदः न परमार्थसन्निष्ठो भवितुमर्हति। स्वप्रतियोगिको भेदः कदापि न स्वानुयोगिको भवति स्वस्मिन् स्वस्य भेदाभावात्। प्रपञ्चमिथ्यात्वं विना साध्यसिद्धिर्न स्यादिति भावः। दृष्टान्तस्तु परमार्थसत्त्वावच्छिन्नप्रतियोगिकाभावः तादृशाभावश्च भेद एव पूर्वपक्षिमते परमार्थत्वस्य मेयत्वादिवत् केवलान्वयितया अत्यन्ताभावस्य प्रतियोगित्वानवच्छेदकत्वात्। सिद्धान्तिमतेऽपि परमार्थसत्त्वस्य अत्यन्ताभावीयप्रति-

[१३] परमार्थसन्निष्ठो भेदः न परमार्थसत्प्रतियोगिकः; परमार्थसदधिकरणत्वात्, शुक्तिरूप्यप्रतियोगिकभेदवत् ॥९॥

[१४] मिथ्यात्वं ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकं सकलमिथ्यावृत्तित्वात्, मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वाद्वा दृश्यत्ववत् ॥१०॥

---

योगितानवच्छेदकत्वात् परमार्थसत्त्वस्य तत्तद्धीविषयत्वाद्यपेक्षया गुरुत्वात् इति भावः ॥७॥

८—द्वादशमनुमानमाह—भेदत्वावच्छिन्नं सद्विलक्षणप्रतियोग्यधिकरणान्यतरवत् अभावत्वात् शुक्तिरूप्यप्रतियोगिकाभाववत्। भेदमात्रं पक्षः भेदश्च अभावत्वादेव प्रतियोग्यनुयोग्यनुयोगिभ्यां निरूपणीयो भवति। कोऽपि भेदः एवं न भवितुमर्हति यस्य प्रतियोगी अनुयोगी वा सद्विलक्षणो न भवति। सत्प्रतियोगिकसदनुयोगिकभेदः तदैव भवितुमर्हति यदि सद्द्वयं भवेत् सिद्धान्ते ब्रह्मैव सत् नान्यत्। तथा च प्रपञ्चस्य मिथ्यात्वे पर्यवसानम् अन्यथा-साध्यसिद्धिरेव न स्यात्। घटप्रतियोगिकपटानुयोगिकभेदेऽपि साध्यमस्त्येव अनुयोगिप्रतियोगिनोर्द्वयोः सद्विलक्षणत्वादन्यतरवत्त्वं वर्तत एव। दृष्टान्ते शुक्तिरूप्यस्य सद्विलक्षणत्वात् साध्यसत्वं हेतुसत्त्वं च स्पष्टम् ॥८॥

९—त्रयोदशमनुमानमाह—(१३) परमार्थसन्निष्ठो भेदः न परमार्थसत्प्रतियोगिकः परमार्थसदधिकरणत्वात् शुक्तिरूप्यप्रतियोगिकभेदवत्। परमार्थसद्वस्तुद्वयाभावात्, परमार्थसद्वस्तुनिष्ठभेदस्य प्रतियोगि न परमार्थसत् किन्तु अपरमार्थसत् मिथ्यैव। तथा च प्रपञ्चस्य मिथ्यात्वे पर्यवसानम्। ब्रह्मनिष्ठभेदस्य प्रतियोगी व्यावहारिको वा प्रातिभासिको वा असद्वा सर्वथा अपरमार्थ एव तद्भेदस्य प्रतियोगी। दृष्टान्ते शुक्तिरूप्यप्रतियोगिकभेदस्य प्रतियोगी न परमार्थसन् किन्तु प्रातिभासिक एव। परमार्थसति ब्रह्मणि शुक्तिरूप्यप्रतियोगिकभेदो वर्तत एव। तथा च हेतुसाध्ययोः सत्त्वात् हेतौ साध्यव्याप्तिग्रहः ॥९॥

१०—चतुर्दशमनुमानमाह—मिथ्यात्वं ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकम्, सकलमिथ्यावृत्तित्वात्, मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वाद्वा दृश्यत्ववत्। ब्रह्मतुच्छोभयातिरिक्तत्वं व्यावहारिके

[१५] दृश्यत्वं परमार्थसदवृत्ति, अभिधेयमात्रवृत्तित्वात्, शुक्ति-रूप्यत्ववत् ॥११॥

[१६] दृश्यत्वं परमार्थसद्भिन्नत्वव्याप्यं दृश्येतरावृत्तिधर्मत्वात्, प्रातिभासिकत्ववत् ॥१२॥

---

प्रातिभासिके च मिथ्याप्रपञ्चे वर्तते तथा च मिथ्यात्वं ब्रह्मतुच्छोभयातिरिक्तत्व-व्यापकम्। ब्रह्मतुच्छोभयातिरिक्तत्वं व्यावहारिके प्रपञ्चे वर्तते अतस्तत्र मिथ्यात्व-मपि वर्तते। तथा च व्याहारिकस्य मिथ्यात्वं सिध्यति। मिथ्यात्वे पक्षे सकलमिथ्या-वृत्तित्वं यथा वर्तते तथैव मिथ्यात्वसमानाधिकरणात्यन्ताभावस्य अप्रतियोगित्व-मपि वर्तते। तथा च हेतोः पक्षसत्त्वं निर्विवादम्। दृश्यत्वं दृष्टान्तः। दृश्यत्वञ्च ब्रह्मतुच्छोभयातिरिक्ते व्यावहारिके प्रातिभासिके च प्रपञ्चे एव वर्तते। तथा च यत्र यत्र ब्रह्मतुच्छोभयातिरिक्तत्वं यथा दृश्यत्वे सकलमिथ्यावृत्तित्वं हेतुर्वर्तते तत्र ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकत्वमपि वर्तते। अतो दृष्टान्ते हेतुसाध्ययोः समानाधिकरण्ये हेतौ साध्यनिरूपिता व्याप्तिः सिध्यतीति भावः। व्याप्तिग्राहका-नुकूलतर्कास्तु अग्रे वक्ष्यन्ते ॥१०॥

११—पञ्चदशमनुमानमाह—दृश्यत्वं परमार्थसदवृत्ति, अभिधेय-मात्रवृत्तित्वात् शुक्तिरूप्यत्ववत्। वाङ्मनसातीते ब्रह्मणि शब्दशक्यत्व-रूपाभिधेयत्वाभावात् अनभिधेयं तत्। मिथ्यात्वसाधकं दृश्यत्वं व्यावहारिके प्रातिभासिके प्रपञ्चे एवास्ति तयोरेव मिथ्यात्वात्। तथा च दृश्यत्वं ब्रह्मणि नास्ति। अतः दृश्यत्वं परमार्थसदवृत्ति भवति। दृश्यत्वस्य अभिधेयमात्रे व्यावहारिके प्रातिभासिके च प्रपञ्चमात्रे वृत्तित्वात् पक्षे हेतोः सत्त्वं सिध्यति। शुक्तिरूप्यत्व-दृष्टान्ते हेतोः साध्यस्य च सत्त्वं स्पष्टम्। अतः हेतोः साध्ये व्याप्तिग्रहे दृश्यत्वपक्षे हेतोः सत्त्वात् साध्यस्य सिद्धिः। दृश्यत्वस्य यदि परमार्थसदवृत्तित्वं सिध्येत् तर्हि दृश्यमात्रस्य व्यावहारिकप्रातिभासिकप्रपञ्चमात्रस्य मिथ्यात्वमेव पर्यवस्येत् इति भावः ॥११॥

१२—षोडशमनुमानमाह—दृश्यत्वं परमार्थसद्भिन्नत्वव्याप्यं, दृश्येतरावृत्तिधर्मत्वात् प्रातिभासिकत्ववत्। यत्र यत्र दृश्यत्वं तत्र परमार्थसद्भेदः। यथा शुक्तिरजतम्। दृश्यत्वं व्यावहारिकप्रातिभासिकप्रपञ्च-

[१७] उभयसिद्धमसद्विलक्षणम् मिथ्यात्वासमानाधिकरणधर्मानधिकरणम्, आधारत्वात्, शुक्तिरूप्यत्ववत् ॥१३॥

[१८] प्रतियोग्यवच्छिन्नो देशः अत्यन्ताभावाश्रयः, आधारत्वात्, कालवत् ॥१४॥

---

मात्रे वर्तते तत्र परमार्थसद्ब्रह्मणो भेदोऽपि वर्तते अतो दृश्यत्वं परमार्थसद्भेदस्य व्याप्यं भवति। दृश्यत्वं दृश्यमात्रवृत्ति अतो दृश्येतरावृत्ति। अतः पक्षे हेतोः सत्त्वम्। प्रातिभासिकत्वदृष्टान्ते हेतुरस्ति यतः प्रातिभासिकत्वं प्रातिभासिके शुक्तिरजतादिदृश्ये एव वर्तते, तत्र परमार्थसद्भिन्नत्वमपि वर्तते। अतो दृष्टान्ते हेतुसाध्ययोः सामानाधिकरण्यात् हेतौ साध्यव्याप्तिर्गृहीता। साध्यव्याप्यहेतुना पक्षे दृश्यत्वे साध्यसिद्धौ व्यावहारिकप्रपञ्चस्य मिथ्यात्वमेव पर्यवसितम्। प्रपञ्चे दृश्यत्वात् परमार्थसद्भेदसिद्धौ प्रपञ्चस्य अपरमार्थसत्त्वरूपमिथ्यात्वमेव सिध्यतीति भावः ॥१२॥

१३—सप्तदशमनुमानमाह—उभयसिद्धमसद्विलक्षणं मिथ्यात्वासमानाधिकरणधर्मानधिकरणम्, आधारत्वात्, शुक्तिरूप्यत्ववत्। माध्वमते प्रातिभासिकस्यापि असत्त्वाङ्गीकारात् तन्मते प्रातिभासिकशुक्तिरजताद्यपि असदेव न असद्विलक्षणम्। तन्मते असत्ख्यातेः स्वीकारात् बाध्यमात्रस्य असत्त्वात् तेन उभयसिद्धोऽसद्विलक्षणो व्यावहारिकप्रपञ्चः। यद्यपि ब्रह्मापि असद्विलक्षणमेव तथापि ब्रह्मणि निर्धर्मके आधारत्वधर्मस्य हेतोरभावात् न तस्य पक्षत्वेन ग्रहणं सम्भवति। व्यावहारिकप्रपञ्चे आधारत्वहेतोः सत्त्वात् तस्यैव पक्षत्वेन ग्रहणं वाच्यम्। तत्र व्यावहारिके प्रपञ्चे ये धर्मा विद्यन्ते ते सर्वे मिथ्यात्वसमानाधिकरणा एव। अत एव मिथ्यात्वासमानाधिकरणधर्मस्यानधिकरणं व्यावहारिकप्रपञ्चो भविष्यतीति साध्यते। आधारत्वं हेतुः पक्षे वर्तत एव। शुक्तिरूप्यमेव दृष्टान्तो भवितुं युक्तः तद्धर्मानुसरणे प्रयोजनाभावात्। तथा च दृष्टान्ते हेतुसाध्ययोः सत्त्वं स्पष्टमेव। पक्षे साध्यसिद्धौ व्यावहारिकप्रपञ्चमात्रस्य मिथ्यात्वे पर्यवसानम् ॥१३॥

१४—अष्टादशमनुमानमाह—प्रतियोग्यवच्छिन्नो देशः अत्यन्ताभावाश्रयः, आधारत्वात्, कालवत्। प्रतियोग्यवच्छिन्नदेशत्वावच्छेदेन

[१९] आत्मत्वावच्छिन्नम् परमार्थसत्त्वाधिकरणप्रतियोगिकभेदत्वावच्छिन्नरहितम्, परमार्थसत्त्वात्, परमार्थसत्त्वावच्छिन्नवत् ॥१५॥

---

प्रतियोग्यत्यन्ताभावाश्रयत्वसिद्धौ प्रतियोग्याधारत्वव्यापकात्यन्ताभावप्रतियोगित्वसिद्धया प्रपञ्चस्य मिथ्यात्वसिद्धिः। स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वमेव मिथ्यात्वं चतुर्थमिथ्यात्वलक्षणे निरूपितम्। आधारत्वं हेतुः, यो यदाधारः स तदत्यन्ताभावाश्रयः यथा कालः। कालस्य जगदाधारत्वात् प्रतियोगितदत्यन्ताभावयोरपि आधारः कालः। तथा च काले हेतुसाध्ययोः सामानाधिकरण्यग्रहेण हेतौ साध्यव्याप्तिग्रहात् प्रतियोग्यवच्छिन्नदेशेऽपि हेतुसत्त्वात् साध्यस्य सिद्धिः। यथा च न. प्रत्यक्षादिप्रमाणेन बाधः तथा अधस्तादेव निरस्तः अग्रे च आगमबाधो निरसिष्यते। अनुकूलतर्काश्च अग्रे वक्ष्यन्ते। तथा च अनाविलमिदमनुमानम् ॥१४॥

१५—ऊनविंशमनुमानमाह—आत्मत्वावच्छिन्नं परमार्थसत्त्वाधिकरणप्रतियोगिकभेदत्वावच्छिन्नरहितम्, परमार्थसत्त्वात्, पारमार्थसत्त्वावच्छिन्नवत्। पूर्वपक्षिमते आत्मनि परमार्थसत्प्रतियोगिको भेदः स्वीक्रियते एव। तन्मते प्रपञ्चस्यापि पारमार्थिकत्वात्। वियद्घटादिप्रतियोगिकभेदवान् आत्मा इति प्रतीतेः तैः प्रमात्वाऽङ्गीकारात्। सिद्धान्ते तन्नाङ्गीक्रियते। कस्मिन्नपि आत्मनि परमार्थसत्प्रतियोगिको भेदो यदि न सिद्धयेत् तर्हि व्यावहारिकप्रपञ्चस्य मिथ्यात्वमेव पर्यवस्येत्। परमार्थसत्त्वाधिकरणं परमार्थसदेव। तत्प्रतियोगिकभेदमात्रस्य पक्षेऽसिद्धौ प्रपञ्चस्य मिथ्यात्वं सिध्यतीति भावः। परमार्थसत्त्वावच्छिन्नं परमार्थसदेव तदेव दृष्टान्तः। दृष्टान्ते परमार्थसति परमार्थसत्प्रतियोगिको भेदो न सम्भवति परमार्थसद्द्वयाभावात्। दृष्टान्ते हेतुसत्त्वं स्पष्टम्। तथा च दृष्टान्ते हेतुसाध्ययोः सामानाधिकरण्यग्रहात् हेतौ साध्यव्याप्तिर्गृहीता तेन हेतुना पक्षे साध्यसिद्धौ प्रपञ्चस्य मिथ्यात्वसिद्धिरेव। परमार्थसति परमार्थसद्भेदाङ्गीकारवादिमतेऽपि सद्भेदो न परमार्थसत्त्ववन्निष्ठः किन्तु घटत्वाद्यवच्छिन्ननिष्ठ एव। पूर्वपक्षिमते सत्परमार्थसतोर्भेदाभावात् परमार्थत्वं सत उपरञ्जकमेव न तु व्यावर्तकं विशेषणं सद्द्वैविध्यानङ्गीकारात्। तथा च पूर्वपक्षिमते परमार्थसति घटादौ परमार्थसत्प्रतियोगिकभेदाङ्गीकारात् पटादिप्रतियोगिकभेदा-

[२०] शुक्तिरूप्यं मिथ्यात्वेन प्रपञ्चान्न भिद्यते, व्यवहारविषयत्वात्, ब्रह्मवत्। साध्यसत्त्वमत्र त्रेधा—स्वस्यामिथ्यात्वेनोभयोर्मिथ्यात्वेन उभयोरमिथ्यात्वेन वा। तत्रान्तिमपक्षस्यासम्भवात् पक्षे साध्यसिद्धिपर्यवसानं मध्यमपक्षेण, दृष्टान्ते तु प्रथमपक्षेणेति विवेकः ॥१६॥

---

ङ्गीकारेऽपि सत्प्रतियोगिको भेदः न परमार्थसत्त्वविनिष्ठः, परमार्थसत् सत्रेति प्रतीते. प्रमात्वासम्भवात्। अस्याः प्रतीतेराहार्यत्वादिति भावः। किन्तु घटत्वाद्यवच्छिन्ने सत्त्वाद्यवच्छिन्नप्रतियोगिको भेदो वर्तते, भेदीयप्रतियोगितावच्छेदकभेदात् ॥१५॥

१६—विंशमनुमाह—शुक्तिरूप्यत्वं मिथ्यात्वेन प्रपञ्चान्न भिद्यते, व्यवहारविषयत्वात्, ब्रह्मवत्। साध्यसत्त्वमत्र त्रेधा—स्वस्यामिथ्यात्वेन, उभयोर्मिथ्यात्वेन, उभयोरमिथ्यात्वेन वा। तत्रान्तिमपक्षस्यासम्भवात् पक्षे साध्यसिद्धिपर्यवसानं मध्यमपक्षेण, दृष्टान्ते तु प्रथमपक्षेणेति विवेकः। अत्र शुक्तिरूप्यधर्मिकमिथ्यात्वलिंगकप्रपञ्चप्रतियोगिकः यो भेदः तस्यात्यन्ताभावः साध्यतया निर्दिश्यते। शुक्तिरूप्यं प्रपञ्चप्रतियोगिकभेदवत् मिथ्यात्वात् रज्जुसर्पवत् इत्यनुमानेन साध्यीभूतो यो भेदः तस्य अत्यन्ताभावः प्रकृतानुमानेन साध्यतया निर्दिश्यते। अत्र प्रकृतानुमाने साध्यस्य सत्त्वं प्रकारत्रयेण सम्भवति। स्वस्यामिथ्यात्वेनेति। यत्र साध्यं स्थाप्यं तत् स्वशब्देन ग्राह्यम्। तथा च साध्यधर्मित्वेन विवक्षितेऽमिथ्यात्वस्य सत्त्वेन साध्यधर्मिणि अमिथ्याभूते मिथ्यात्वरूपलिंगाभावान्मिथ्यात्वलिंगकप्रपञ्चप्रतियोगिकभेदस्य अत्यन्ताभावरूपं साध्यममिथ्यात्मभूते धर्मिणि वर्तत। उभयोर्मिथ्यात्वेनेति—यत्प्रतियोगिकभेदस्यात्यन्ताभावः साध्यते तस्य प्रतियोगिनः एव यस्मिन् धर्मिणि अत्यन्ताभावः साध्यते तस्य धर्मिणः तयोः प्रतियोगिधर्मिणोः उभयोर्मिथ्यात्वेन साध्यस्य सत्त्वमायाति। यदा प्रतियोगिधर्मिणो द्वौ मिथ्याभवतः तदा मिथ्यात्वलिंगकैकप्रतियोगिको भेदः अपरत्र न स्यात् यथा द्वयोर्घटयोर्घटत्वेन हेतुना एकस्य भेदो न अपरत्र सिध्यति, भेदकधर्मस्यैक्यात्। तथा च उभयोर्मिथ्यात्वात् मिथ्यात्वेन हेतुना द्वयोर्भेदाभावात् भेदात्यन्ताभावरूपं साध्यं सिध्यतीत्यभिप्रायः। वा—अथवा उभयोरमिथ्यात्वेन। यत्प्रतियोगिकभेदस्यात्यन्ताभावः

[२१] विमतं मिथ्या, मोक्षहेतुज्ञानाविषयत्वे सति असदन्यत्वात्, शुक्तिरूप्यवत्।

[२२]मोक्षहेतुज्ञानविषयत्वम् परमार्थसत्त्वव्यापकम्, परमार्थसत्त्व-

---

साध्यते तस्य प्रतियोगिनः भेदात्यन्ताभावधर्मित्वेन च यो विवक्षितः तस्य चोभयोरमिथ्यात्वेन साध्यस्य सत्त्वमायाति। यतः द्वयोरमिथ्यात्वेन द्वयोरेकस्मिन्नपि मिथ्यात्वरूपलिंगस्याभावात् मिथ्यात्वलिंगकभेदस्यात्यन्ताभावः सिध्यति। तत्र—एषु त्रिपु पक्षेपु—अन्तिमपक्षस्यात्र समुच्चयार्थकचकाराध्याहारेण प्रथमपक्षस्यापि समुच्चयो बोध्यः। तेन प्रथमान्तिमपक्षयोरसम्भवात् मध्यमपक्षेणैव पक्षे साध्यसिद्धि-पर्यवसानं भविष्यति। प्रथमपक्षे साध्यधर्मित्वेन विवक्षितस्यामिथ्यात्वमपेक्षितमन्तिम-पक्षे द्वयोरमिथ्यात्वमपेक्षितम्। परन्तु पक्षीभूतशुक्तिरूप्ये मिथ्याभूते आद्यन्तपक्षयोर-सम्भवात् मध्यमपक्षेणैव पक्षे साध्यसिद्धिः स्यात्। ब्रह्मरूपे दृष्टान्ते साध्यपर्यवसानं प्रथमपक्षेणैव भविष्यति यतो ब्रह्म अमिथ्याभूतम्। मिथ्यात्वलिंगकप्रपञ्चप्रतियोगिक-भेदस्यात्यन्ताभावो ब्रह्मणि वर्तते। मिथ्यात्वरूपं लिंगमेव ब्रह्मणि न वर्तते स्वतः [यतः] अत एव. स्वस्यामिथ्यात्वेनेति प्रथमपक्षस्य सद्भावो दृष्टान्ते ब्रह्मणि वर्तते। व्यवहारविपयत्वं हेतुः स च पूर्वपक्षिरीत्या ब्रह्मणि वर्तते एव सिद्धान्ति-रीत्याऽरोपितं विपयत्वं ब्रह्मणि। तथा च दृष्टान्ते ब्रह्मणि प्रथमपक्षोक्तरीत्या साध्यस्यं हेतोश्च सत्त्वात् दृष्टान्ते हेतौ साध्यव्याप्तिग्रहः ॥१६॥

१७—एकविंशमनुमानमाह—विमतं मिथ्या, मोक्षहेतुज्ञानाविपयत्वे सति असदन्यत्वात् शुक्तिरूप्यवत्। मोक्षहेतुविपयं ब्रह्म एव। शुद्धब्रह्मणो भामतीमते ज्ञानविपयत्वेऽपि मोक्षहेतुचरमज्ञानविपयीभूतं शुद्धं ब्रह्मैव चरमवृत्त्या वस्तुगत्या उपहितमेव। तादृशज्ञानाविपयीभूतं ब्रह्मान्यत् सर्वं दृश्यजातम्। मोक्षहेतुज्ञानाविपयत्वम् असति शशविपाणादावपि वर्तते अत उक्तम् असदन्यत्। यत्र यत्र मोक्षहेतुज्ञानाविपयत्वे सति असदन्यत्वं तत्र तत्र मिथ्यात्वं यथा शुक्तिरजतं। शुक्तिरजतं मोक्षहेतुज्ञानविषयो न भवति असद-न्यच्च भवति अतो दृष्टान्ते हेतोः सत्त्वात् साध्यस्य मिथ्यात्वस्य च सत्त्वम्। एवं च दृष्टान्ते हेतौ साध्यव्याप्तिग्रहात् . विमते व्यावहारिकप्रपञ्चे पक्षे हेतोः सत्त्वात् साध्यस्यापि सिद्धिर्भवतीति भावः।

समानाधिकरणत्वात्, पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्ववत् ॥१७॥

[२३] एतत्पटात्यन्ताभाव एतत्तन्तुनिष्ठः, एतत्पटानाद्यभावत्वात्, एतत्पटान्योन्याभाववत्। तन्तुनाशजन्यपटनाशस्य कदापि तन्तुवृत्तिता नास्तीति तत्र व्यभिचारवारणायानादिपदम्। यस्य पटस्याश्रयविभागेन नाशस्तदन्ताभावस्य पक्षत्वे तु अनादिपदमनादेयमेव। अत्र चैतत्पट-प्रतियोगिकात्यन्ताभावत्वावच्छिन्नस्य पक्षीकरणात् न सम्बन्धान्तरेणा-त्यन्ताभावमादायांशतः सिद्धसाधनम्, पक्षतावच्छेदकावच्छेदेन साध्य-सिद्धेरुद्देश्यत्वात्। समवायसम्बन्धावच्छिन्नः व्यधिकरणधर्मानवच्छिन्नश्च य एतत्पटात्यन्ताभावः स एव वा पक्षः। तन्तुशब्देन च पटोपादानकारण-

---

द्वाविंशमनुमानमाह—मोक्षहेतुज्ञानविषयत्वम् परमार्थसत्त्वव्या-पकम्, परमार्थसत्त्वसमानाधिकरणत्वात् पारमार्थिकत्वेन श्रुतितात्पर्य-विषयत्ववत्। मोक्षहेतुज्ञानविषयत्वं शुद्धब्रह्मण्येव मोक्षहेतुज्ञानविषयत्वं यदि परमार्थसत्त्वव्यापकं स्यात् तर्हि प्रपञ्चस्य मिथ्यात्व एव पर्यवसानं स्यात यतः यत्र यत्र परमार्थसत्त्वं तत्र मोक्षहेतुज्ञानविषयत्वम्। प्रपञ्चे मोक्षहेतुज्ञान-विषयत्वं व्यावर्तमानं परमार्थसत्त्वमपि व्यावर्तयति। तथा च प्रपञ्चस्य मिथ्यात्व-सिद्धिः। मोक्षहेतुज्ञानविषयत्वे परमार्थसत्त्वसमानाधिकरणत्वं वर्तते। यतो ब्रह्मण्येव मोक्षहेतुज्ञानविषयत्वं परमार्थसत्त्वञ्च वर्तते। मोक्षहेतुज्ञानविषयत्वे पक्षे हेतुसाध्ययोः सत्त्वं स्पष्टम्। पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्वदृष्टान्तेऽपि हेतुसाध्ययोः सत्त्वं स्पष्टमेव यतः श्रुतीनां परमतात्पर्यं शुद्धे ब्रह्मण्येवेति ॥१७॥

१८—त्रयोविंशमनुमाह—एतत्पटात्यन्ताभावः एतत्तन्तुनिष्ठः एतत्पटानाद्यभावत्वात्, एतत्पटान्योन्याभाववत्। तन्तुनाशजन्य-पटनाशस्य कदापि तन्तुवृत्तिता नास्तीति तत्र व्यभिचारावारणायाना-दिपदम्। यस्य पटस्याश्रयविभागेन नाशस्तदत्यन्ताभावस्य पक्षत्वे तु अनादिपदमनादेयमेव। अत्र चैतत्पटप्रतियोगिकात्यन्ताभावत्वावच्छि-न्नस्य पक्षीकरणात् न सम्बन्धान्तरेणात्यन्ताभावमादायांशतः सिद्धसाध-नम्, पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्। समवायसम्ब-न्धावच्छिन्नः व्यधिकरणधर्मानवच्छिन्नश्च य एतत्पटात्यन्ताभावः

मुक्तम्। तत्र च पटप्रागभावस्य सत्त्वात् न तेन व्यभिचारः। कार्यकारणयोरभेदेन सिद्धसाधनादिदूषणाणि प्रागेव तत्त्वप्रदीपिकानुमानोपन्यासे निराकृतानि ॥१८॥

---

स एव वा पक्षः। तन्तुशब्देन च पटोपादानकारणमुक्तम्, तत्र च पटप्रागभावस्य सत्त्वात् न तेन व्यभिचारः। कार्यकारणयोरभेदेन सिद्धसाधनादिदूषणानि प्रागेव तत्त्वप्रदीपिकानुमानोपन्यासे निराकृतानि। भंग्यन्तरेण चित्सुखीयमिथ्यात्वानुमानमेव अत्र प्रदर्शयन्नाह—एतत्पटात्यन्ताभावः स यदि एतत्पटोपादानैतत्तन्तुनिष्ठः सिद्ध्येत् तर्हि एतत्पटस्य मिथ्यात्वमेव पर्यवस्येदित्याह—एतत्पटात्यन्ताभाव एतत्तन्तुनिष्ठ इति। एतत्पटानाद्यभावत्वादिति हेत्वर्थः। अत्यन्ताभावादिति हेत्वर्थः। अत्यन्ताभावान्योन्याभावप्रागभावास्त्रय एव अनाद्यभावाः। अभावेषु केवलं ध्वंस एव सादिरभावः। तथा च एतत्पटात्यन्ताभावे पक्षे एतत्पटानाद्यभावत्वं हेतुर्वर्तते एव, अत्यन्ताभावस्यानाद्यभावत्वात्। एतत्पटान्योन्याभाववदिति दृष्टान्तः। अन्योन्याभावोऽप्यनादिरेव। तथा च दृष्टान्ते हेतुसाध्ययोः सत्त्वं स्पष्टमेव। एतत्पटान्योन्याभावस्य एतत्तन्तुनिष्ठत्वात्। हेतौ अनादिपदस्य अभावविशेषणत्वेनोपादाने प्रयोजनमाह—तन्तुनाशजन्यपटनाशस्यापीत्यादि। कार्यद्रव्यस्य नाशो द्वेधा सम्भवति। समवायिकारणनाशात् असमवायिकारणनाशाच्च। यदा तन्तुनाशजन्यपटनाशो भवति तत्र नाशे एतत्पटाभावत्वहेतुर्वर्तते, अथ च तस्य तत्तन्तुवृत्तितां नास्ति, तन्तूनां पूर्वमेव नष्टत्वात्। अतस्तादृशनाशे एतत्पटाभावत्वहेतोर्व्यभिचारः स्यादतस्तद्वारणाय अनादीत्यभावविशेषणम्। ध्वंसस्तु सादिरभाव इत्यत उक्तम्—तत्र व्यभिचारवारणायानादिपदम्। अभावे अनादिविशेषणं परित्यज्यापि हेतुं प्रदर्शयन्नाह—यस्य पटस्येत्यादि। यस्य पटस्याश्रयविभागेन नाशः अर्थात् असमवायिकारणनाशेन नाशः तस्य पटस्यात्यन्ताभावः पक्षत्वेनोपादीयते चेत्तदा अनादिपदमभावविशेषणमनुपादेयमेव। आश्रयनाशाजन्यनाशप्रतियोगिनः पटस्य योऽत्यन्ताभावः तस्य पक्षत्वे अनादिपदमभावविशेषणमनुपादेयम्, तादृशपटध्वंसोऽपि स्वोपादानीभूततन्तुष्वेव वर्तते, तत्र चैतत्पटाभावत्वहेतुरपि वर्तत इति न व्यभिचारः। अतस्तादृशपटात्यन्ताभावस्य पक्षत्वेऽनादिविशेषणमनुपादेयमेव। अंशतः

सिद्धसाधनमाशंक्य निराचष्टे—अत्र चैतत्पटप्रतियोगिकात्यन्ताभावत्वावच्छिन्नेति। एतत्पटात्यन्ताभावत्वावच्छिन्ना यावन्त एतत्पटात्यन्ताभावास्तेषां सर्वेषामेतत्पटात्यन्ताभावत्वेन पक्षीकरणम्। तेन समवायेन पटवति तन्तौ संयोगेन पटात्यन्ताभावस्य विद्यमानत्वादंशतः सिद्धसाधनता स्यादिति शंकाप्यपास्ता। यस्य कस्यचिदेतत्पटात्यन्ताभावस्य न पक्षत्वमिति भावः। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् न पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्ध्या सिद्धसाधनता। एतत्सर्वं ग्रन्थप्रारम्भे पक्षतावच्छेदकनिरुक्तौ प्रपञ्चितम्। यद्व्यक्तौ साध्यं सिद्धं तत्र नानुमितिर्भवति, व्यक्त्यन्तरे तु भवत्येव। समानविशेष्यत्वसम्बन्धेन बाधविशिष्टबुद्ध्योरिव सिद्ध्यनुमित्योः प्रतिबध्यप्रतिबन्धकत्वौचित्यादिति प्राचां मतम्। अत एव अतिप्राचीना अवच्छेदकावच्छेदेनानुमितौ अंशतः सिद्धसाधनस्य दोषत्वमुररीकुर्वन्तो ध्वनिव्यावर्तनाय शब्दानित्यत्वानुमाने वर्णात्मकत्वं पक्षे निवेशयन्ति। नव्यमते तु, यद्धर्मविशिष्टे क्वचित् साध्यं सिद्धं तद्धर्मविशिष्टे व्यक्त्यन्तरेऽपि नानुमितिरित्यभिप्रेत्यांशतः सिद्धसाधनतादोषाऽनाशंकितं पक्षं निर्दिशति—समवायसम्बन्धावच्छिन्नेति। समवायसम्बन्धावच्छिन्नो व्यधिकरणधर्मानवच्छिन्नश्च य एतत्पटात्यन्ताभावः स एव वा पक्षः, न एतत्पटात्यन्ताभावमात्रं पक्षः। एतत्पटात्यन्ताभावमात्रस्य पक्षत्वे प्रदर्शितरूपेणांशतः सिद्धसाधनता स्यात्, किन्तु अस्मिन् पक्षे सम्बन्धान्तरेणाभावमादाय सिद्धसाधनताशंकापि न भवति। समवायसम्बन्धावच्छिन्न एतत्पटात्यन्ताभावः पक्षः। किन्तु स पटात्यन्ताभावः यदि व्यधिकरणधर्मावच्छिन्नः स्यात् तदापि सिद्धसाधनं स्यात्। समवायेनैतत्पटाधिकरणे तन्तौ असमवेतत्वेन पटो नास्ति, घटत्वेन वा पटो नास्ति इत्यादि व्यधिकरणधर्मावच्छिन्नात्यन्ताभावस्तन्तुषु अस्त्येव, अतः सिद्धसाधनम्, व्यधिकरणधर्मावच्छिन्नात्यन्ताभावस्य केवलान्वयित्वेन सर्वत्र विद्यमानत्वात्। अतस्तत्परिहाराय पक्षीकृतात्यन्ताभावे व्यधिकरणधर्मानवच्छिन्नत्वं विशेषणम्। साध्यघटकतन्तुशब्देन पटोपादानकारणमुक्तम्। पटोपादानकारणे तन्तौ एतत्पटप्रागभावस्य विद्यमानत्वात् तत्र एतत्पटानाद्यभावत्वं हेतुर्वर्तते, एतत्तन्तुनिष्ठत्वं च वर्तते, अतो न व्यभिचारः। हेतुमति साध्यसत्त्वात्। कार्यकारणयोरभेदेनेति। उक्तञ्च चित्सुखीयानुमाने—"नच कार्यस्य कारणाभेदेन तदनाश्रितत्वात् सिद्धसाधनम्, अनाश्रितत्वेन अन्याश्रितत्वेन वोपपत्त्या अर्थान्तरञ्चेति वाच्यम्, अभेदे कार्यकारणभावव्याहत्या

[२४] यद्वा समवायसम्बन्धावच्छिन्नोऽयमेतत्पटात्यन्ताभावः एतत्तन्तुनिष्ठः, एतत्पटप्रतियोगिकात्यन्ताभावत्वात्, सम्बन्धान्तरावच्छिन्नैतत्पटात्यन्ताभाववदिति विशिष्यानुमानम् ॥१९॥

[२५] अव्याप्यवृत्तित्वानधिकरणत्वे सति उक्तपक्षतावच्छेदकवत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगि, अनात्मत्वात् संयोगवत्। न च विश्वात्यन्ताभावे व्यभिचारः, तस्याधिकरणस्वरूपत्वेऽनात्मत्वहेतोरेवाभावात्। अतिरिक्तत्वे तस्य मिथ्यात्वेनात्यन्ताभावप्रतियोगितया साध्यस्यैव सत्त्वात्। न चात्यन्ताभावस्यात्यन्ताभावे तत्प्रतियोगित्वलक्षणमिथ्यात्वासिद्धिरिति वाच्यम्, अभावेऽभावप्रतियोगित्वस्य भावगता-

---

कथञ्चिदपि भेदस्यावश्याभ्युपेयत्वात्।" तदेवात्र अनुसन्धत्ते—कार्यकारणयोरभेदेन सिद्धसाधनादिदूषणानि प्रागेव तत्त्वप्रदीपिकानुमानोपन्यासे निराकृतानि ॥१८॥

१९—चतुर्विंशमनुमानमाह—यद्वा समवायसम्बन्धावच्छिन्नोऽयमेतत्पटात्यन्ताभावः, एतत्तन्तुनिष्ठः, एतत्पटप्रतिप्रतियोगिकात्यन्ताभावत्वात् सम्बन्धान्तरावच्छिन्नैतत्पटात्यन्ताभाववदिति विशिष्यानुमानम्। समवायसम्बन्धेन एतत्पटः एतत्तन्तुष्वेव वर्तते तत्रापि यदि एतत्पटात्यन्ताभावः सिध्येत् तर्हि एतत्पटस्य बलात् मिथ्यात्वे पर्यवसानं स्यात्। उक्तञ्च वेदान्तसम्प्रदायविद्भिः "नान्यत्र कारणात् कार्यं न चेत् तत्र क्व तद्भवेत्" इति। एतत्तन्तुषु समवायान्यसम्बन्धावच्छिन्नप्रतियोगिताकैतत्पटात्यन्ताभावः सर्वमतसिद्ध एव तद्दृष्टान्तेन समवायसम्बन्धावच्छिन्नोऽयमेतत्पटात्यन्ताभावः एतत्तन्तुषु सिध्येत्। बाधोद्धारादिकञ्चोक्तमग्रे च वक्ष्यत इति भावः। विशिष्य कस्यचिद्व्यावहारिकपटस्य मिथ्यात्वसिद्धये इदमनुमानम्। एतद्दिशा अन्येषामपि व्यावहारिकाणां प्रपञ्चानां मिथ्यात्वं वेदितव्यम् ॥१९॥

२०—पञ्चविंशमनुमानमाह—अव्याप्यवृत्तित्वानधिकरणत्वे सत्युक्तपक्षतावच्छेदकवत् स्वसमानाधिकरणात्यन्ताभावप्रतियोगि, अनात्मत्वात् संयोगवत्। न च विश्वात्यन्ताभावे व्यभिचारः, तस्याधिकरणस्वरूपत्वे अनात्मत्वहेतोरेवाभावात्। अतिरिक्तत्वे तस्य मिथ्यात्वेन अत्यान्ताभावप्रतियोगितया साध्यस्यैव सत्त्वात्। न चात्यन्ता-

भावप्रतियोगित्वाविरोधित्वात् प्रागभावस्यात्यन्ताभावप्रतियोगित्वेऽपि तत्प्रतियोगित्वस्य घटादौ सर्वसिद्धत्वात्। उपपादितञ्चैतत् मिथ्यात्वमिथ्यात्वे। अत्र चाव्याप्यवृत्तित्वानधिकरणशब्देन एकदेशावच्छेदेनाविद्यमानत्वं पक्षविशेषणं विवक्षितम्। एतेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वोक्तौ बाधः, अवयववृत्तित्वानधिकरणत्वोक्तौ घटादीनामपक्षत्वापत्तिरिति दूशणद्वयमपास्तम्। अनात्मत्वहेतुस्तु जडत्वहेतुव्याख्यानेनैव व्याख्यातः ॥२०॥

---

भावस्यात्यन्ताभावे तत्प्रतियोगित्वलक्षणमिथ्यात्वासिद्धिरिति वाच्यम्, अभावेऽभावप्रतियोगित्वस्य भावगताभावप्रतियोगित्वाविरोधित्वात्। प्रागभावस्यात्यन्ताभावप्रतियोगित्वेऽपि तत्प्रतियोगित्वस्य घटादौ सर्वसिद्धत्वात्। उपपादितश्चैतन्मिथ्यात्वमिथ्यात्वे। अत्र च अव्याप्यवृत्तित्वानधिकरणशब्देन एकदेशावच्छेदेनाविद्यमानत्वं पक्षविशेषणं विवक्षितम्। एतेन स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वोक्तौ बाधः। अवयववृत्तित्वानधिकरणत्वोक्तौ घटादीनामपक्षत्वापत्तिरिति दूषणद्वयमपास्तम्। अनात्मत्वहेतुस्तु जडत्वहेतुव्याख्यानेनैव व्याख्यातः।

उक्तपक्षतावच्छेदकवदिति परकीयप्रपञ्चसत्यत्वानुमानेषु आद्यानुमानेषु आद्यानुमाने उक्तं यत् पक्षतावच्छेदकं तद्वान् अस्मिन्ननुमाने पक्षः। परकीयाद्यानुमाने च पक्षतावच्छेदकं ब्रह्मप्रमान्येनाबाध्यत्वे सति असत्त्वानधिकरणत्वे सति ब्रह्मान्यत्वं तद्वान् अस्मिन्ननुमाने पक्षः पूर्वपक्षिणा यादृशे पक्षे सत्यत्वानुमानं प्रदर्शितम् अस्माभिस्तु तादृशे एव मिथ्यात्वानुमानं प्रदर्श्यत इति द्योतनायोक्तपक्षतावच्छेदकत्ववदित्युक्तम्। पक्षस्याव्याप्यवृत्तित्वमादाय सिद्धसाधनादेर्वारणाय अव्याप्यवृत्तित्वानधिकरणत्वे सतीति सत्यन्तं पक्षविशेषणमधिकमुक्तम्। यः एव पक्षः सत्यत्वानुमाने स एव मिथ्यानुमानेऽपि। साध्यं निर्दिशति—स्वसमानाधिकरणेति। स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वम्, अतस्तदेव साध्यते। अनात्मत्वादिति हेतुनिर्देशः। दृश्यत्वजडत्वादीनां हेतूनां सामान्यतो मिथ्यात्वानुमाने निर्देशादत्र विशेषानुमानेऽनात्मत्वं मिथ्यात्वसाधकहेतुत्वेन निर्दिश्यते। साध्ये स्वपदस्य पक्षदृष्टान्तोभयसाधारण्याभावेन बाधसाध्यवैकल्यादेर्वारणाय सम्बन्धघटताय

सत्त्वस्य प्रवेशः कार्यः तेन एवं वाच्यम्। उक्तपक्षतावच्छेदकसमानाधिकरण-धर्मे स्वप्रतियोगितावच्छेदकत्वस्वाश्रयनिष्ठाधिकरणतानिरूपकतावच्छेदकत्वोभय-सम्बन्धेनात्यन्ताभावः साध्य इति तु निष्कर्षः। सन्बन्धघटकस्वपदम् अत्यन्ता-भावपरम्। तेन साध्यस्य पक्षदृष्टान्तोभयसाधारण्यं भवतीति भावः।' अनात्मत्वहेतु-विववणञ्च जडत्वहेतुनिर्वचने एवं कृतम्—किमिदं जडत्वम् अज्ञातृत्वं वा अज्ञानत्वं वा एवं विकल्प्य उक्तं द्वितीयतृतीयपक्षयोर्दोषाभावादिति। अत्रैवानात्मत्वहेतोः समर्थनं कृतं तच्च प्रागेव कृतविवरणं तत्रैव द्रष्टव्यम्। संयोगवदिति दृष्टान्तः संयोगस्याव्याप्यवृत्तितामभ्युपगम्य संयोगस्य दृष्टान्तत्वं बोध्यम्। संयोगस्याव्याप्य-वृत्तित्वात् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं सिद्धमेव। अतो दृष्टान्ते साध्य-सत्त्वं स्पष्टम्। अनात्मत्वहेतुरपि दृष्टान्ते संयोगे वर्तत एव। अतो दृष्टान्ते हेतु-साध्ययोः सत्त्वं सुस्पष्टम्। अनेनानुमानेन व्यावहारिकप्रपञ्चमात्रे पक्षीकृते तत्र स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसाधने व्यावहारिकप्रपञ्चस्य मिथ्यात्वं पर्य-वसितम्। हेतोर्व्यभिचारं शंकते—विश्वात्यन्ताभावेति। विश्वात्यन्ताभावस्य प्रपञ्चात्य-न्ताभावस्येत्यर्थः। प्रपञ्चत्यन्ताभावस्य ब्रह्मरूपत्वेनाधिकरणाप्रसिद्ध्या नोक्तसाध्यवत्त्वं किन्तु विश्वाभावत्वविशिष्टरूपेण अत्रानात्मत्वस्य हेतोः सत्त्वाद् व्यभिचारः इति पूर्वपक्षिशंकायामाह—तस्याधिकरणरूपत्वे इति। विश्वात्यन्ताभावस्याधिकरणात्म-रूपत्वेऽनात्मत्वस्य हेतोरभावान्न व्यभिचारः। अध्यस्तस्यात्यन्ताभावोऽधिष्ठान-मेवेति भावः। विश्वात्यन्ताभावस्याधिकरणात्मस्वरूपातिरिक्तत्वे अभ्युपगम्यमानेऽपि आत्मस्वरूपातिरिक्तात्यन्ताभावस्य मिथ्यात्वेन साध्यस्यैव सत्त्वान्न व्यभिचारः। स्वसानाधिकरणात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वम्। विश्वात्यन्ताभावस्यापि मिथ्यात्वे अत्यन्ताभावस्यापि अत्यन्ताभावप्रतियोगित्वं स्वीकार्यम्, तथा च विश्वस्य मिथ्यात्वासिद्धिरिति पूर्वपक्षी शंकते—न चात्यन्ताभावास्यात्यन्ताभाव इति। अत्य-न्ताभावस्यात्यन्ताभावे निषेध्यस्यात्यन्ताभावस्य प्रतियोगिनि विश्वे मिथ्यात्वासिद्धिः। विश्वात्यन्ताभावस्यापि अत्यन्ताभावप्रतियोगित्वे विश्वस्य स्वसमानाधिकरणात्यन्ता-भावप्रतियोगित्वलक्षणमिथ्यात्वसिद्धिरिति न वाच्यम्। कुत इति चेत्? शृणु, भाव-प्रतियोगिकाभावस्य अभावप्रतियोगित्वेऽपि भावस्याभावप्रतियोगित्वं न विरुद्ध्यते न हीयते इत्यर्थः इत्याह—अभावेऽभावप्रतियोगित्वस्येति। कुतो न विरुद्ध्यते इत्याह—प्रागभावस्यात्यन्ताभावप्रतियोगित्वेऽपीति। घटादिप्रागभावस्यात्यन्ता-

[२६] अत एव नित्यद्रव्यान्यदव्याप्यवृत्तित्वानधिकरणमुक्तपक्षतावच्छेदकवत्, केवलान्वय्यत्यन्ताभावप्रतियोगि,पदार्थत्वात्, नित्यद्रव्यवत् इत्यपि साधुः। दृष्टान्तश्चायं परीत्या, स्वमते तु शुक्तिरूप्यादिवदित्येव। न च स्वरूपेणात्यन्ताभावप्रतियोगित्वेऽत्यन्तासत्त्वापातः,

---

भावप्रतियोगित्वेऽपि घटादेः प्रागभावप्रतियोगित्वस्य सर्वसिद्धत्वात्। उपपादितश्चैतन्मिथ्यात्वमिथ्यात्वे इति। मिथ्यात्वमिथ्यात्वप्रकरणे प्रपञ्चमिथ्यात्वस्य मिथ्यात्वेऽपि यथा न प्रपञ्चसत्यत्वापत्तिस्तथोक्तम्। दृश्यत्वादिरूपेण यथा प्रपञ्चस्य निषेध्यत्वं तथा प्रपञ्चनिषेधस्यापि दृश्यत्वात् तस्यापि निषेध्यत्वं निषेधस्यापि निषेधे न प्रपञ्चसत्यत्वापत्तिः निषेध्यत्वावच्छेदकदृश्यत्वादेः प्रपञ्चे तन्निषेधे च समानत्वादित्यादि तत्रोक्तम्। अत्र चाव्याप्यवृत्तित्वानधिकरणशब्देनेति—पक्षविशेषणत्वेन यत्प्रागुक्तं तस्यैकदेशावच्छेदेनाविद्यमानत्वमर्थः। अधिकरणैकदेशावच्छेदेनेति यावत्। तेन येषां भूतलादौ घटादेरधिकरणता पूर्वादिदेशेनावच्छिद्यते इति मतं तस्य निरसनाय इदं पक्षविशेषणमुक्तं यस्य भूतलादेरेकदेशे यो वर्तते तस्यैकदेश एवाधिकरणं न तु भूतलादीत्यर्थः। तेनाव्याप्यवृत्तिवस्तुनोऽनङ्गीकार एव। यत्र यद् वर्तते तदेव तस्याधिकरणं यत्र यन्न वर्तते तदपि अधिकरणमध्ये प्रवेश्य वस्तुनोऽव्यावृत्तित्वसमर्थनं न युक्तमिति भावः। अत एव वृक्षीयाग्रदेश एव विहङ्गसंयोगाधिकरणं न वृक्ष इति प्रतीतिरपि सर्वमम्मतैव। एतेनेति—स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसाधने स्वाधिकरणत्वग्राहकमानेन बाधः स्यादिति पूर्वपक्षिशंका न युक्ता, बाधस्योद्धृतत्वात् उद्धरिष्यमाणत्वाच्च। स्वावयववृत्तिघटादीनां स्वावयववृत्तित्वानधिकरणत्वे घटादीनामपक्षत्वापत्तिरित्यपि निरस्तम्। घटादीनां स्वावयववृत्तित्वग्राहकमानानां भ्रमत्वं सम्पाद्य घटादीनां मिथ्यात्वसाधकानुमानं घटादीनां स्वावयववृत्तित्वानधिकरणत्वं साधयतीति भावः। अनात्मत्वहेतोर्विवरणं जडत्वहेतुनिर्वचने प्रागेवोक्तमिति सर्वमनाकुलम् ॥२०॥

२१—षड्विंशमनुमानमाह—अत एव नित्यद्रव्यान्यदव्याप्यवृत्तित्वानधिकरणम् उक्तपक्षतावच्छेदकवत्, केवलान्वय्यत्यन्ताभावप्रतियोगि, पदार्थत्वात् नित्यद्रव्यवदित्यपि साधु। दृष्टान्तश्चायं पररीत्या, स्वमते तु शुक्तिरूप्यादिवदित्येव। न च स्वरूपेणात्यन्ताभाव-

तद्वैलक्षण्यप्रयोजकाभावादिति वाच्यम्, उत्पत्तिनिवृत्त्योरन्यतरप्रति-योगित्वेन परिहारात् ॥२१॥

---

प्रतियोगित्वेऽत्यन्तासत्त्वापातः तद्वैलक्षण्यप्रयोजकाभावादिति वाच्यम्, उत्पत्तिनिवृत्त्योरन्यतरप्रतियोगित्वेन परिहारात्। पूर्वानुमाने यः पक्षः स एव अत्रापि पक्षः केवलं नित्यद्रव्यभेदस्य पक्षविशेषणत्वेन वैलक्षण्यम्। केवलान्वय्यत्यन्ताभावप्रतियोगित्वं साध्यम्। अयं भावः—मिथ्यात्वाभिमतस्य स्वाधिकरणादन्यत्र अत्यन्ताभावो वर्तते इति सर्वसम्मत एव मिथ्यात्वानुमानेन स्वाधिकरणे एव स्वस्यात्यन्ताभावः सिध्यतीति मिथ्यात्वाभिमतस्य अत्यन्ताभाव सर्वत्रैव विद्यते इति कृत्वा मिथ्यात्वघटकात्यन्ताभावः केवलान्वयी संवृत्तः। अत एव केवलान्वय्यत्यन्ताभावप्रतियोगित्वं साध्यत्वेन निर्दिष्टम्। पदार्थत्वात्—पदशक्यत्वात्। पदाशक्ये ब्रह्मणि विपक्षेऽसति च शशविषाणादौ विपक्षेहेतोरवृत्तेर्न व्यभिचारशंकाऽपीति भावः। पररीत्या वैशेषिकादिरीत्या नित्यद्रव्यं दृष्टान्तः नित्यद्रव्याधिकरणाप्रसिद्ध्या केवलान्वय्यत्यन्ताभावप्रतियोगित्वरूपसाध्यं दृष्टान्ते वर्तते। पदार्थत्वहेतुरपि तत्र वर्तते। स्वमते दृष्टान्तस्तु शुक्तिरूप्यादिरेव। शुक्तिरूप्यस्य मिथ्यात्वात् केवलान्वय्यत्यन्ताभावप्रतियोगित्वं तत्र वर्तते पदार्थत्वहेतुरपि तत्र वर्तते। मिथ्यात्वाभिमतस्य स्वरूपेण केवलान्वय्यत्यन्ताभावप्रतियोगित्वसाधने तस्यात्यन्तासत्त्वापातः अत्यन्तासतोऽपि एतदेवात्यन्तासत्त्वम् यत् स्वरूपेण केवलान्वय्यत्यन्ताभावप्रतियोगित्वं नाम, माध्वमते विभूनां सर्वदेशवृत्तित्वाङ्गीकारात् न केवलान्वय्यत्यन्ताभावप्रतियोगित्वमिति भावः। अस्याः पूर्वपक्षिशंकाया द्वितीयमिथ्यात्वलक्षणनिर्वचानवसरे उन्मूलितत्वेऽपि समाधानान्तराभिधित्सया पुनरुत्थापिता इति ज्ञेयम्। मिथ्याऽसतोर्वैलक्षण्यमाह—उत्पत्तिनिवृत्त्योरन्यतरप्रतियोगित्वम्। असत् कदापि नोत्पद्यते नापि विनश्यति। मिथ्यावस्तु उत्पद्यते च विनश्यति च। अविद्याद्यनादि मिथ्यावस्तु यद्यपि नोत्पद्यते तथापि तत्त्वज्ञानात् विनश्यति। तथा च सादि मिथ्यावस्तुनः उत्पत्तिनिवृत्त्युभयप्रतियोगित्वम् अनादिमिथ्यावस्तुनः केवलं निवृत्तिप्रतियोगित्वमेव। अतः अन्यतरप्रतियोगित्वमुक्तमुभयप्रतियोगित्वं विहाय। यद्यपि निवृत्तिप्रतियोगित्वमात्रेणैव मिथ्यासतोर्वैलक्षण्यं सिध्यति तथापि उत्पत्तिप्रतियोगित्वमपि सादिमिथ्यासतोर्वैलक्ष्यण्यान्तरं वर्तते इति प्रदर्शयितुम् अन्यतरेत्युक्तम् ॥२१॥

आत्मत्वावच्छिन्नधर्मिको भेदो, न परमार्थसत्प्रतियोगिकः, आत्माप्रतियोगित्वात्; शुक्तिरूप्यप्रतियोगिकभेदवत्। न च घटपटसंयोगे व्यभिचारः, हेतुमत्तया निर्णीते अङ्कुरादाविव साध्यसन्देहस्यादोषत्वात्। एवमन्येऽपि प्रयोगाः यथोचितमारचनीया विपश्चिद्भिरिति दिक्।

हेतवोऽभीष्टसिद्ध्यर्थं सम्यञ्चो बहवश्च नः।
अल्पाः परस्य दुष्टाश्चेत्यत्र स्पष्टमुदीरितम्॥
अभीष्टसिद्धावनुकूलतर्कबलाबलं चात्र परीक्ष्य यत्नात्।
प्रवक्ष्यते दोषगणः परेषां न खेदनीयं तु मनोऽधुनैव ॥२२॥

इत्यद्वैतसिद्धौ विश्वमिथ्यात्वे विशेषतोऽनुमानानि।

---

२२—सप्तविंशमनुमानमाह— आत्मत्वावच्छिन्नधर्मिको भेदः, सत्प्रतियोगिकः आत्माप्रतियोगित्वात् शुक्तिरूप्यप्रतियोगिकभेदवत्। न च घटपटसंयोगे व्यभिचारः, हेतुमत्तया निर्णीते अंकुरादाविव साध्यसन्देहस्यादोषत्वात्। एवमन्येऽपि प्रयोगा यथोचितमारचनीया विपश्चिद्भिरिति।

हेतवोऽभीष्टसिद्ध्यर्थं सम्यञ्चो बहवश्च नः।
अल्पाः परस्य दुष्टाश्चेत्यत्र स्पष्टमुदीरितम्॥
अभीष्टसिद्धावनुकूलतर्कबलाबलं चात्र परीक्ष्य यत्नात्।
प्रवक्ष्यते दोषगणः परेषां न खेदनीयं तु मनोऽधुनैव॥

आत्मत्वावच्छिन्नधर्मिकभेदस्य प्रतियोगि न परमार्थसद्वस्तु भवितुमर्हति परमार्थसद्वस्तुद्वयाभावात्। आत्मत्वानवच्छिन्नस्य परमार्थसत्त्वमुभयमतसिद्धमेव। अतः आत्मानुयोगिकभेदस्य प्रतियोगि अपरमार्थसदेव भविष्यति। तथा च अनात्मप्रपञ्चमात्रस्य मिथ्यात्वे पर्यवसानमेव। आत्माप्रतियोगित्वादिति हेतुः। आत्मद्वयाप्रसिद्ध्या आत्मानुयोगिकभेदस्य प्रतियोगी कथमपि आत्मा न भवितुमर्हति। अतः आत्मानुयोगिकभेदेऽवश्यमेवानात्मप्रतियोगिकत्वं स्वीकार्यम्। तथा च हेतोः पक्षसत्त्वं सिद्धम्। शुक्तिरूप्यप्रतियोगिकभेदो दृष्टान्तः। अस्मिन् दृष्टान्तेऽनात्मप्रति-

योगिकत्वरूपहेतुरस्ति शुक्तिरूप्यस्यानात्मत्वात् । शुक्तिरूप्यस्यापरमार्थत्वम् उभयमतसिद्धमेव । अतः शुक्तिरूप्यप्रतियोगिकभेदस्य न परमार्थसत्प्रतियोगिकत्वम् । एवं च दृष्टान्ते साध्यसत्त्वमपि सिद्धम् । दृष्टान्ते हेतुसाध्ययोः समानाधिकरण्यात् विपक्षबाधकतर्कप्रसराच्च हेतौ साध्यस्य व्याप्तिनिश्चयः तेन च पक्षवृत्तिहेतुना पक्षे साध्यनिश्चयो जायते । पक्षे साध्यसिद्धया अनात्मप्रपञ्चस्य मिथ्यात्वं सिध्यतीति भावः । हेतोर्व्यभिचारमाशङ्क्य समाधत्ते—न च घटपटसंयोगे व्यभिचार इति । घटपटयोरनात्मत्वात् घटपटसंयोगः अनात्मप्रतियोगिक एव, तथा च तादृशसंयोगेऽनात्मप्रतियोगिकत्वरूपहेतोर्निश्चयेऽपि स स्वसंयोगः परमार्थसत्प्रतियोगिको न वेति सन्देहात् साध्यसन्देह एव । तथा च हेतुमत्तयानिश्चिते साध्यसन्देहे हेतोः सन्दिग्धव्यभिचारिता स्यात् सन्दिग्धव्यभिचारेण हेतुना साध्यानुमितिर्न स्यादिति पूर्वपक्षिणः शङ्का । घटपटयोरपरमार्थसत्त्वं नाद्यापि सिद्धमिति व्यभिचारशंकावसरः । समाधत्ते—हेतुमत्तया निर्णीते इति । साध्याभाववत्त्वांशे संशयरूपस्य व्यभिचारज्ञानस्य व्याप्तिग्राहकतर्काभावसहकृतस्यैव व्याप्तिग्रहविरोधित्वं न तु व्याप्तिग्राहकतर्कसहकृतस्य अन्यथा सन्दिग्धसाध्यवत्पक्षकानुमानमात्रोच्छेदापत्तेः । प्रकृते च तर्का वक्ष्यन्ते तथा च न तद्विरोधीति भावः । व्याप्तिग्राहकतर्कसहकृतस्य व्यभिचारसंशयस्यादोषत्वे दृष्टान्तमाह—अङ्कुरादाविवेति । क्षितिः सकर्तृका कार्यत्वात् घटवत् इति ईश्वरसाधकानुमानेऽङ्कुरादौ हेतुमत्तया निश्चतेऽपि सकर्तृकत्वरूपसाध्यसन्देहात् व्यभिचारसंशयस्य यथा न हेतौ साध्यव्याप्तिनिश्चयविरोधित्वं तथा प्रकृतेऽपीति भावः । व्याप्तिग्राहकतर्कसत्त्वात् यथा अङ्कुरादौ सकर्तृकत्वसंशयेऽपि कार्यत्वहेतौ यथा न सकर्तृकत्वरूपसाध्यस्य व्याप्तिनिश्चयविरोधित्वम् एवं व्याप्तिग्राहकतर्कसत्त्वात् प्रकृतेऽपि हेतोः साध्यव्याप्तिनिश्चयविरोधित्वं व्यभिचारसंशयस्येति भावः । प्रपञ्चमिथ्यात्वसाधकानुमानप्रयोगाः सप्तविंशतिप्रकाराः प्रदर्शिताः एवमन्येऽपि प्रयोगाः विद्वद्भिरारचनीयाः ।

अभीष्टसिद्धयर्थं—पक्षीभूते व्यावहारिकप्रपञ्चे मिथ्यात्वसिद्धयर्थं सम्यञ्चो निर्दोषाः बहवश्च हेतवः प्रदर्शिता परस्य पूर्वपक्षिणो माध्वस्य प्रपञ्चसत्यत्वसाधका हेतवो अल्पाः दुष्टाश्च एतत्सर्वं स्पष्टमात्रोदीरितम् । प्रपञ्चमिथ्यात्वसाधकानुमानानामनुग्राहकानुकूलतर्काणां निग्राहकप्रतिकूलतर्काणाञ्च बलाबलं यत्नात् परीक्ष्य परेषां

दोषगणः प्रवक्ष्यते । अनुकूलतर्काणामप्रतिपादने प्रतिकूलतर्काणामाभासताया अप्रतिपादनेन च अधुनैव पूर्वपक्षिणा मनो न खेदनीयम् । अग्रे तेषां मनःसन्तोषाय प्रपञ्चमिथ्यात्वानुमानप्रसक्ताः अनुकूलतर्कप्रतिकूलतर्कोद्धारादयः वक्ष्यन्ते, कृत्स्नः प्रथमोऽध्यायः प्रपञ्चमिथ्यात्वानुमानसमर्थनायैव विरच्यते इति भावः ॥२२॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्री-
योगेन्द्रनाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बाल-
बोधिन्यां मिथ्यात्वे विशेषानुमानविवरणम् ।

## अथ आगमबाधोद्धारः

नन्वस्तु शब्दबाधः, तथा हि—विश्वं सत्यम्, "यच्चिकेत सत्यमित्तन्न मोघं"—"याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः" इत्यादिश्रुतिभिः "असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्" इत्यादिस्मृतिभिः "नाभाव उपलब्धेः, "वैधर्म्याच्च न स्वप्नादिवदि"त्यादिसूत्रैश्च विश्वस्य सत्यत्वप्रतिपादनात् इति चेत् ?

---

१—प्रपञ्चमिथ्यात्वानुमानबाधकत्वेन शङ्कितयोः प्रत्यक्षानुमानयोः अबाधकत्वे प्रतिपादिते पूर्वपक्षी निरुद्धगतिकः सन् मिथ्यात्वानुमानबाधकत्वेनागमप्रमाणमुपस्थापयति—ननु अस्तु शब्दबाधः इति। विश्वमिथ्यात्वानुमानस्य आगमबाधमाह पूर्वपक्षी-तथा हि विश्वं सत्यं, 'यच्चिकेत सत्यमित्तन्न मोघम्', याथातथ्यतोऽर्थं व्यदधाच्छाश्वतीभ्यः समाभ्यः' इत्यादिश्रुतिभिः 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्' इत्यादिस्मृतिभिः 'नाभावः उपलब्धेः' वैधर्म्याच्च न स्वप्नादिवद्' इत्यादिसूत्रैश्च विश्वस्य सत्यत्वप्रतिपादनादिति चेत् ? ऋक्संहितातः प्रथमद्वितीयौ मन्त्रौ शुक्लयजुःसंहितान्तर्गतेशावास्योपनिषद एको मन्त्रः इति त्रयो मन्त्राः विश्वमिथ्यात्वानुमानबाधकत्वेन पूर्वपक्षिणोपस्थापिताः। प्रदर्शितमन्त्रत्रयबाधिताः दृश्यत्वादयो हेतव इति पूर्वपक्षिणो भावः। प्रथमो मन्त्रः ऋक्संहितायां २।७।३ वर्गे समाम्नातः, द्वितोयो मन्त्रः ऋक्संहितायां ८।१।१७ वर्गे समाम्नातः। तृतीयमन्त्रः शुक्लयजुःसंहितायां चत्वारिंशत्तमाध्याये ईशावास्योपनिषदि अष्टमो मन्त्रः। स्मृतिश्च भगवद्गीतासु षोडशाध्याये अष्टमः श्लोकः। ब्रह्मसूत्राच्च सूत्रद्वयं नाभावः उपलब्धेः—[ब्र० सू० २।२।२८] वैधर्म्याच्च न स्वप्नादिवत्—[ ब्र० सू० २।२।२९ ] एतानि मन्त्रस्मृतिसूत्राणि प्रपञ्चमिथ्यात्वानुमानबाधकत्वेन पूर्वपक्षिणा उपस्थापितानि। मन्त्रत्रयोपन्यासे प्रयोजनमेतत् यत् प्रथममन्त्रे विश्वं सत्यमित्यत्र विश्वसत्यत्वमात्रस्य प्रत्यक्षप्राप्तत्वसम्भावनयापि कथञ्चित् अनुवादकत्वशङ्कायां यच्चिकेतेति मन्त्रद्वये नानुवादकत्वशङ्का। मन्त्रद्वये ईश्वरस्य सत्यजगत्स्रष्टृत्वोक्तेः। तस्य च प्रत्यक्षाद्यवेद्य-

न, श्रुतेस्तत्परत्वाभावात्। तथा हि—"विश्वं सत्यं मघवाना युवयोरिदापश्च न प्रमिणन्ति व्रतं वाम्। अच्छेन्द्राब्रह्मणस्पती हविर्नो अन्नं युजेव वाजिना जिगातम्॥" इति ऋक्संहिताद्वितीयाष्टकवाक्यस्यायमर्थः। हे इन्द्र ब्रह्मणस्पती ? मघवाना मघवानौ" मघमिति धननाम, धनवन्तौ मघवन्तौवेति वा। विश्वं सर्वं। सत्यं कर्म, सद्भूतत्वात्। फलस्य अवश्यम्भावित्वाद्वा। तादृशं कर्म, युवयोरित् युवयोः, इत् इत्थमवधारणे वा। युवामेवोद्दिश्य सर्वाणि कर्माणि अनुष्ठेयानीत्यर्थः। आपो व्यापनशीला देवताः चन इत्येतत् पदद्वयसमुदायः, ऐकपद्यं त्वध्यापकसम्प्रदायसिद्धम्। वां युवयोर्व्रतं संकल्पं कर्म वा। न प्रमिणन्ति न हिंसन्ति [मीङ् हिंसायां क्रैयादिकः] किन्तु अनुमोदन्ते इति यावत्। नोऽस्माकं हविर्दध्यादिकम् अन्नं च पुरोडाशादिकं च अच्छ अभिलक्ष्य वाजिना वेगवन्तौ अश्वाविव। युजा युक्तौ सन्तौ। जिगातम्—देवयजनमागच्छतम्,[जिगातिर्गतिकर्मा जौहोत्यादिकः] अन्नं

---

तया प्राप्त्यभावात् तत्प्रतिपादकश्रुतिद्वयस्य नानुवादकत्वमिति भावः। प्रदर्शितबाधमुद्धरन्नाह—न, श्रुतेस्तत्परत्वाभावात्—तथा हि 'विश्वं सत्यं मघवाना युवयोरिदापश्च न प्रमिणन्ति व्रतं वाम्। अच्छेन्द्रा ब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम्' ॥ इति ऋक्संहिताद्वितीयाष्टकवाक्यस्य अयमर्थः। हे इन्द्रब्रह्मणस्पती मघवाना—मघवानौ मघमिति धननाम धनवन्तौ मघवन्तौ इति वा—विश्वं सर्वं सत्यं कर्म संद्भूतत्वात्। फलस्य अवश्यम्भावित्वाद्वा। तादृशं कर्म युवयोरित् युवयोः इत् इत्थमवधारणे वा। युवामेवोद्दिश्य सर्वाणि कर्माणि अनुष्ठेयानीत्यर्थः। आपो व्यापनशीला देवताः चन इत्येतत्पदद्वयसमुदायः, ऐकपद्यं त्वध्यापकसम्प्रदायसिद्धम्। वां युवयोर्व्रतं संकल्पं कर्म वा न प्रमिणन्ति न हिंसन्ति। [ मीङ हिंसायां क्रैयादिकः ] किन्तु अनुमोदन्ते इति यावत्। नोऽस्माकं हविर्दध्यादिकम् अन्नं च पुरोडाशादिकं च अच्छ अभिलक्ष्य वाजिना वेगवन्तौ अश्वौ इव युजा युक्तौ सन्तौ जिगातम्—देवयजनमागच्छतम्। जिगातिर्गति-

घासं प्रति अश्वाविवेति वा। यद्वा—हे इन्द्रब्रह्मणस्पती ? विश्वं सत्येन परिदृश्यमानं जगद्, युवयोरित् युवयोरेव, युवाभ्यामेव सृष्टम्, अथ वा युवयोरेव विश्वं सर्वं स्तोत्रं, सत्यं यथार्थम्। यद् यत् गुणजातं स्तुत्या प्रतिपाद्यते तत्सर्वं युवयोर्विद्यमानमेव न तु आरोपितम् इत्यर्थः। आपो व्यापनशीला देवताः, अबुलक्षितानि पञ्चभूतानि वा। युवयोर्व्रतम् जगदुपादानाख्यं कर्म न हिंसन्ति इत्थं माहानुभावौ युवां जिगातम्। शेषं पूर्ववद्व्याख्येयम्। तथा च स्तुतिपरतया नास्य विश्वसत्यत्वे तात्पर्यम्।

शाक्मना शाको अरुणः सुपर्णं आयो महः शूरः सनादनीलः। यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥ ऋक् सं०—

---

कर्मा जौहोत्यादिकः अन्नं घासं प्रति अश्वाविवेति वा। यद्वा हे इन्द्रब्रह्मणस्पती विश्वं सत्येन परिदृश्यमानं जगत् युवयोरित् युवयोरेव, युवाभ्यामेव सृष्टम्। अथ वा युवयोरेव विश्वं सर्वं स्तोत्रं सत्यं यथार्थम्। यत् यत् गुणजातं स्तुत्या प्रतिपाद्यते तत्सर्वं युवयोर्विद्यमानमेव न तु आरोपितम् इत्यर्थः। आपो व्यापनशीला देवताः अबुपलक्षितानि पञ्चभूतानि वा युवयोर्व्रतं जगदुपादानाख्यं कर्म न हिंसन्ति इत्थं महानुभावौ युवां जिगातं शेषं पूर्ववद् व्याख्येयम्। तथा च स्तुतिपरतया नास्य विश्वसत्यत्वे तात्पर्यम्। विश्वम् इति मन्त्रांशस्य त्रिधा अर्थनिर्देशः कृतः आचार्येण। माधवीयभाष्येऽपि एतादृश एव मन्त्रार्थः प्रदर्शितः। तथा च कृत्स्नमन्त्रस्य देवतास्तुतितात्पर्यकत्वेन प्रपञ्चसत्यत्वे तात्पर्यं नास्तीति न प्रपञ्चमिथ्यात्वबाधकोऽयं मन्त्र इति भावः। वाक्यभेदभयेन एकस्य मन्त्रवाक्यस्य तात्पर्यद्वयासम्भवात् नायं मन्त्रः विश्वस्य सत्यत्वं प्रतिपादयति। यच्चोक्तं पूर्वपक्षिणा प्रत्यक्षप्राप्तविश्वसत्यत्वानुवादकोऽयं मन्त्र इति तदपि निरस्तम्। स्तुतितात्पर्यकोऽयं मन्त्रः न विश्वसत्यत्वमपि अनुवदति इति भावः। अस्य मन्त्रस्य यादृशोऽर्थः सम्भवति स च प्रदर्शित एव, तत्र विश्वसत्यत्वकथापि लेशतो नास्ति। अस्य मन्त्रस्य अर्थानुधावनमकृत्वैव पूर्वपक्षिणा विश्वं सत्यमितिमन्त्रस्थपदद्वयश्रवणमात्रेणैव विप्रलब्धः मिथ्यात्वानुमानबाधकत्वेन मन्त्रमिममुपस्थापयति। शाक्मना शाकः अरुणः सुपर्णं आयोमहः शूरः सनादनीलः। यच्चिकेत सत्यमित्तन्न मोघं वसु

८।१।१७।६ इत्यस्यापि अष्टमाष्टकस्थस्य येन्द्रस्तुतिपरतया न विश्व-सत्यत्वे तात्पर्यम्। तथा हि शाक्मना शाकैव शाक्मा तेन शाक्मना बलेन। शाकः शक्तः, स्वशक्त्यैव सर्वं कर्तुं शक्त इत्यर्थः। न हीन्द्रस्य सहायान्तरापेक्षाऽस्ति इन्द्रत्वादेव। अरुणः अरुणवर्णः कश्चित् शोभन-वर्णः पक्षी आगच्छतीत्यध्याहारः; उपसर्गश्रुतेः। यो महो महान् शूरः विक्रान्तः, सनात् पुराणः, अनीलः अनीडः नीडस्याकर्ता। न ही-न्द्रोऽग्निवत् कुत्रचिदपि यज्ञे पक्षे निकेतनं करोति। एवं सुपर्ण इत्या-दिरूपकेण इन्द्रमाह—स इन्द्र इदमिदानीं कर्तव्यमिति यच्चिकेत जानाति, तत्सत्यमित् सत्यमेव, न मोघं, न व्यर्थं, सः स्पार्हं, स्पृह-णीयं, वसु, निवासार्हं धनं जेता जयति। शत्रुभ्यः सकाशात्। उत अपि, दाता ददाति च स्तोत्रेभ्यः। जेता दातेति तृजन्तेन 'न लोके'-त्यादिना षष्ठीप्रतिषेधः। एवमेवमन्यदपि सत्यत्वप्रतिपादकमुन्नेयम् ॥१॥

---

स्पार्हमुत जेतोत दाता ॥ [ऋक्० सं० ८।१।१७।६] इत्यस्यापि अष्टमाष्ट-कस्थस्य इन्द्रस्तुतिपरतया न विश्वसत्यत्वे तात्पर्यम्। तथा हि—शाक्मना शाकैव शाक्मा तेन शाक्मना बलेन। शाकः शक्तः स्वशक्त्यैव सर्वं कर्तुं शक्त इत्यर्थः। न हीन्द्रस्य सहायान्तरापेक्षा अस्ति इन्द्रत्वादेव। अरुणः अरुणवर्णः कश्चित् शोभनवर्णः पक्षी आगच्छतीत्यध्याहारः-उपसर्ग-श्रुतेः। यो महो महान् शूरः विक्रान्तः सनात्—पुराणः अनीलः—अनीडः नीडस्याकर्ता। न हीन्द्रो अग्निवत् कुत्रचिदपि यज्ञे पक्षे निकेतनं करोति। एवं सुपर्ण इत्यादिरूपकेण इन्द्रमाह—स इन्द्र इदमिदानीं कर्त्तव्यमिति यच्चिकेत—जानाति, तत् सत्यमित्—सत्यमेव न मोघम्—न व्यर्थं, सः स्पार्हं—स्पृहणीयम्, वसु—निवासार्हं धनं जेता जयति शत्रुभ्यः सकाशात्। उत अपि दाता ददाति च स्तोतृभ्यः। जेता दातेति तृजन्तेन 'न लोक' इत्यादिना षष्ठीप्रतिषेधः। एवमन्यदपि सत्यत्वप्रतिपादकमुन्नेयम्।'

पूर्वपक्षिणा विश्वमिथ्यात्वबाधनाय विश्वसत्यत्वप्रतिपादकद्वितीयो मन्त्र उपस्थापितः। स च ऋक्संहिताया अष्टमे अष्टके प्रथमेऽध्याये सप्तदशवर्गे

याथातथ्यतोऽर्थान् व्यदधात्—इत्यपि वाक्यं न प्रपञ्चसत्यत्वे प्रमाणम्, तस्य पूर्वसृष्टप्रकारेण सर्जनमर्थः न तु जगत्सत्यत्वं जगत्-सर्जनगतसत्यत्वं वा। यत्र च स्तुत्यादिपरत्वं नास्ति तत्रापि प्रत्यक्ष-सिद्धानुवादकतया "अग्निर्हिमस्य भेषजमि"त्यादिवाक्यवन्न तत्परत्वम्।

---

षष्ठो मन्त्रः। अस्य मन्त्रस्य आचार्येणैव स्थाननिर्देशः कृतः। अस्य मन्त्रस्य माधवीयभाष्यमेवाचार्येणोद्धृतम्। तच्च स्पष्टमेव न व्याख्यानमपेक्षते। अयं मन्त्र इन्द्र-स्तुतिपरतया पूर्वमन्त्रवन्न विश्वसत्यत्वतात्पर्यकः। एकस्यैव मन्त्रस्य इन्द्रस्तुतौ विश्वसत्यत्वे च तात्पर्यद्वयासम्भवात्। तात्पर्यद्वयाङ्गीकारे मन्त्रस्यैव भेदापत्तेः। 'न लोक' इत्यादिना षष्ठीप्रतिषेधः—'न लोकाव्यय' इत्यादिना पाणिनीयसूत्रेण [पा० सू० २।३।६९] षष्ठीप्रतिषेधः। एतत्सर्वं माधवीयभाष्यस्थमेव। न विवरणमपेक्षते।

एवमन्यदपि सत्यत्वप्रतिपादकमुन्नेयम्—पूर्वपक्षिणा ऋक्संहितास्थ-मन्त्रद्वयमुदाहृतम्। अन्येऽपि मन्त्रा एवम्विधा उदाहर्तुं शक्यन्ते—यथा—"ध्रुवा द्यौ ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामयम्।" [८।८।३२।४] "ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्। ध्रुवासः पर्वता इमे ध्रुवा पतिकुले इयम्" [म० ब्रा० १।४।४] एवं "ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः [८।८।३२।५] एवमेव अन्येऽपि मन्त्राः स्तुतिता-त्पर्यकाः उदाहर्तुं शक्यन्ते। येषु मन्त्रेषु प्रपञ्चसत्यत्वोल्लेखमात्रेण न तेषां मन्त्राणां विश्वसत्यत्वे तात्पर्यम्। अत एव भगवता भाष्यकारेण स्वाभिप्रेत-सिद्धये प्रायशः ऋङ्मन्त्रा नोदाहृताः। तेषां मन्त्राणां प्रायशः स्तुतावेव तात्पर्यम्, न वस्तुतत्त्वप्रतिपादने ॥१॥

२—याथातथ्यतोऽर्थान् व्यदधात्—इत्यपि वाक्यं न प्रपञ्चसत्यत्वे प्रमाणम्; तस्य पूर्वसृष्टप्रकारेण सर्जनमर्थः। न तु जगत्सत्यत्वं जगत्-सर्जनसत्यत्वं वा। यत्र च स्तुत्यादिपरत्वं नास्ति तत्रापि प्रत्यक्षसिद्धानु-वादकतया अग्निर्हिमस्य भेषजमित्यादिवाक्यवत् न तत्परत्वम्—ईशोप-निषदीयमष्टममन्त्रमाह, स च मन्त्रः—"स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्, कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात् शाश्व-

तीभ्यः समाभ्यः"॥ पूर्वसृष्टप्रकारेण सर्जनमर्थः। ननु याथातथ्येत्यस्य नायमर्थो युक्तः, तथा शब्दस्यैवाभावात्, किन्तु यथार्थं तु यथातथमित्यमरोक्तेः यथातथशब्दस्य सत्यार्थकत्वेन स्वार्थिकतद्धितान्तेन च सत्यार्थकत्वमिति चेन्न, तथ्यशब्दस्यापि सत्यार्थकत्वेनं "यथा" इत्यस्य व्यर्थतापत्तेः, प्रत्ययस्य स्वार्थिकत्वे व्यर्थतापत्तेश्च। तस्माद् भावार्थकस्तद्धितः। ल्यब्लोपे पञ्चम्यास्तसिल्प्रत्ययः। तथा च पूर्वसृष्टा अर्था यथा तथाभावं प्रतिसन्धाय व्यदधादिति वाक्यार्थः। किञ्च कविर्मनीषी परिभूः स्वयम्भूरिति पूर्वभागस्य त्वन्मते वाक्यार्थेऽनुपयोगः। मन्मते तु यतः कविः पूर्वकान्तं सर्वं दृष्टवान्, यतश्च मनीषी मनसा ईष्टे ऊहापोहकुशलः, यतश्च पूर्वसृष्टविरुद्धमिच्छतां परिभवसमर्थः, यतश्च स्वयमन्यनैरपेक्ष्येण जगद्भवनसमर्थः, ततो हेतोः पूर्वसृष्टभावं प्रतिसन्धाय जगत् सृष्टवान्—इति सकलं वाक्यं युक्तार्थकम्। यथातथार्थान्—इति वाक्येऽपि त्वन्मते यथेति पदं व्यर्थं, तथा शब्दस्य सत्यार्थकत्वेऽपि यथाशब्दस्य तदभावात्। तथाशब्दस्य तु तथ्यपदप्रकृतित्वेन तथागतेत्यस्मिन् बौद्धनामनि तथाशब्दस्य सत्यार्थकतायाः प्रामाणिकैरुक्तत्वात्। एतेन यदुक्तं पूर्वपक्षिणा—यच्चिकेत इत्यादिमन्त्रद्वये ईश्वरस्य मानान्तराप्राप्तसत्यजगत्स्रष्टृत्वस्यैवोक्तेनेति निरस्तम्। ईश्वराप्रतिपादकत्वात् सत्यजगत्स्रष्टृत्वाप्रतिपादकत्वाच्च। एतेन अन्यदपि निरस्तम्। यच्चोक्तं—विश्वं सत्यमित्यत्र सत्यत्वमात्रस्य प्रत्यक्षप्राप्तत्वसम्भावनया यथाकथञ्चिदनुवादकत्वशंकायामपि यच्चिकेत इत्यादिमन्त्रद्वये अनुवादकत्वशंका नास्ति ईश्वरस्य सत्यजगत्स्रष्टृत्वोक्तेश्च तस्य च प्रत्यक्षाद्यवेद्यतया प्राप्त्यभावात् तत्प्रतिपादकमन्त्रद्वयस्य नानुवादकत्वमिति, तदपि मन्त्रद्वयव्याख्याप्रदर्शनेन निरस्तम्।

यत्र च स्तुत्यादिपरत्वं नास्तीति। यत्र च वेदमन्त्रभागे देवतादिस्तुत्यादिपरत्वं नास्ति यथा माध्यन्दिनसंहितायाम् अश्वमेधप्रकरणे ऋत्विजां प्रश्नोत्तरप्रतिपादकमन्त्रेषु "कःस्विदेकाकी चरति कः स्विज्जायते पुनः किं स्विद्धिमस्य भेषजं किं वाऽवनं महदि"ति प्रश्नस्योत्तरमन्त्रे "सूर्य एकाकी चरति चन्द्रमा जायते पुनः। अग्निर्हिमस्य भेषजं भूमिरावपनं महद्" इति शुक्लयजुःसंहितायास्त्रयोविंशेऽध्याये नवमदशमौ मन्त्रौ प्रश्नोत्तररूपौ, न देवतास्तुतिपरौ। अत्रापि प्रत्यक्षसिद्धवस्त्वनुवादकतया न प्रतिपाद्यवस्तुपरत्वम्। अग्नेर्हिमनिवारकत्वं मानान्तरसिद्धमिति कृत्वा न मन्त्रस्य तत्र तात्पर्यम्। प्रत्यक्षसिद्धव्यावहारिकसत्त्वानुवादकत्व-

न च त्वन्मते सर्वत्र ब्रह्मसत्त्वस्यैव स्फुरणात् तदतिरिक्तस्य कालत्रयाबाध्यत्वरूपस्य घटादिसत्त्वस्य, प्रत्यक्षेणाप्राप्तेः तद्बोधकत्वेन श्रुतेर्नानुवादकत्वमिति वाच्यम्, इतरसत्त्वबाधपुरस्सरत्वात् ब्रह्म सत्त्व-स्फुरणाभ्युपगमस्य तत्रैव सत्यादिपदप्रवृत्तिस्वीकारेण तदतिरिक्तविश्व-सत्यत्वस्य शाब्दबोधाविषयत्वात् तदादाय अनुवादकत्वापरिहारात्।

---

सम्भवे अद्वैतश्रुत्यादिविरुद्धार्थविश्वतात्त्विकत्वपरत्वकल्पना न युक्ता। न हि विश्वस्य तात्त्विकत्वं विना किञ्चिदनुपपन्नमिति भावः।

सिद्धान्तिमते सर्वत्र एव ब्रह्मसत्त्वस्यैव स्फुरणात् तदतिरिक्तस्य कालत्रयाबाध्यत्वरूपस्य घटादिसत्त्वस्य प्रत्यक्षेणाप्राप्तेः तद्बोधकत्वेन श्रुतेर्नानुवादकत्वमिति इति। पूर्वपक्षी शंकते—विश्वं सत्यमित्यादिमन्त्रे विश्वस्य यत्सत्यत्वमुक्तं न तत्प्रत्यक्षप्राप्तविश्वसत्यत्वानुवादमात्रम्, यतः सिद्धा-न्तिमते घटः सन्नित्यादिप्रत्यक्षेण गृहीतस्य सदर्थस्य व्यावृत्तघटाद्यन्यानुवृत्तब्रह्म-त्वेन घटादिसत्त्वस्याप्राप्तेः घटाद्यधिष्ठानीभूतसद्ब्रह्मानुवेधमात्रं घटः सन्निति प्रतीतौ भासते अतः घटः सन्निति प्रत्यक्षेण घटादिषु सत्यत्वस्याप्राप्तेः विश्वसत्य-त्वश्रुतेरनुवादकत्वायोगात्। विश्वं सत्यमिति श्रुत्या त्वन्मते व्यावहारिकविश्वस्यैव कालत्रयाबाध्यत्वरूपसत्त्वस्य प्रत्यक्षागृहीतस्य विश्वसत्यश्रुत्या बोधनात् न श्रुतेर-नुवादकतेति पूर्वपक्षिणो भावः। सिद्धान्ती समाधत्ते—इतरसत्त्वबाधपुरस्सर-त्वात् ब्रह्मसत्त्वस्फुरणाभ्युपगमस्य तत्रैव सत्यादिपदप्रवृत्तिस्वीकारेण तदतिरिक्तविश्वसत्यत्वस्य शाब्दबोधाविषयत्वात् तदादाय अनुवाद-कत्वापरिहारात्। प्रपञ्चे सत्प्रतीतौ ब्रह्मसत्त्वमेव भासते इति यद्वयमङ्गीकुर्म-स्तत्कस्य हेतोः? ब्रह्मणोऽन्यत्र त्रिकालाबाध्यत्वरूपं सत्त्वं प्रमाणान्तरबाधितमिति कृत्वा बाधात् घटादिप्रपञ्चे तादृशसत्त्वाङ्गीकारासम्भवात् ब्रह्मसत्त्वमेव सर्वत्र स्फुरतीत्यङ्गीकुर्मः। अतः सर्वत्र प्रपञ्चे ब्रह्मसत्त्वस्यैव स्फुरणात् तत्रैव सत्यादिपद-प्रवृत्तेः ब्रह्मसत्त्वमेव सत्यादिपदस्यार्थः। तदेव मन्त्रस्थसत्यादिपदेनोपस्था-प्यते। तदतिरिक्तसत्त्वस्य सत्यादिपदाप्रतिपाद्यतया मन्त्रवाक्यजन्यशाब्दबोधा-विषयत्वात्। प्रत्यक्षे ब्रह्मरूपं सत्त्वं प्रपञ्चगतत्वेन भासते। तस्यैव सत्यादि-पदार्थत्वात् सत्यादिपदघटितमन्त्रेणापि तदेव सत्त्वं बोध्यते। अतो गृहीतग्राहितया

अथ पृथिवी इतरभिन्ना, 'न हिंस्यात् सर्वाभूतानि' इत्यादौ घटादावेकदेशे प्रत्यक्षेण, ब्राह्मणादावेकदेशे वाक्यान्तरेण, विधेयसिद्धावपि सर्वत्रासिद्धत्वात् यथा नानुवादकत्वं तथा विश्वमात्रसत्यत्वस्य प्रत्यक्षेणाप्राप्तत्वात् नानुवादकत्वमिति मन्यसे ? ॥२॥

मैवम् , दृष्टान्ते हि पृथिवीत्वं हिंसात्वञ्च एकोऽनुगतो धर्म इति तदवच्छेदेन विधेयस्याप्राप्तत्वेन तत्र नानुवादकत्वं युक्तम्, इह तु विश्वत्वं नाम नैको धर्मोऽस्ति, किन्तु विश्वशब्दः सर्वनामत्वात्तेन तेन रूपेण घटपटादीनामुपस्थापकः, तेषु च प्रत्येकं सत्त्वं गृहीतमेवेति कथं नानुवादकत्वं; प्रकारवैलक्षण्याभावात् ।

---

मन्त्रस्थसत्यादिपदानामनुवादकत्वापरिहारात् । प्रत्यक्षगृहीतसत्त्वानुवादी एव सत्यादिपदघटितो मन्त्रः ।

पूर्वपक्षी शंकते—अथ पृथिवीतरभिन्ना, न हिंस्यात् सर्वाभूतानीत्यादौ घटादावेकदेशे प्रत्यक्षेण, ब्राह्मणादावेकदेशे वाक्यान्तरेण, विधेयसिद्धावपि सर्वत्रासिद्धत्वात् यथा नानुवादकत्वं तथा विश्वमात्रसत्यत्वस्य प्रत्यक्षेणाप्राप्तत्वात् नानुवादकत्वमिति मन्यसे ? यथा पृथिवी इतरभिन्ना पृथिवीत्वात् यन्नैवं तन्नैवं यथा जलादीति व्यतिरेक्यनुमाने पृथिव्येकदेशे घटाद्यवच्छेदेन पृथिवीतरभेदस्य प्रत्यक्षेण सिद्धावपि पृथिवीत्वावच्छेदेन सर्वत्रासिद्धया अनुमानस्य नानुवादकत्वं, यथा च न हिंस्यात् सर्वा भूतानीत्यत्र, ब्राह्मणो न हन्तव्य इत्यादिना ब्राह्मणादावेकदेशे हिंसाभावस्य सिद्धावपि भूतपदोक्तप्राणिमात्रे तदसिद्धया न हिंस्यादिति वाक्यस्य नानुवादकत्वं तथेहापि विश्वं सत्यमित्यत्र विश्वैकदेशघटाद्यवच्छेदेन प्रत्यक्षेण सत्त्वग्रहेऽपि विश्वत्वावच्छेदेन प्रत्यक्षेण तद्ग्रहात् प्रत्यक्षायोग्येषु धर्मादिषु श्रुत्या सत्यत्वबोधनात् न विश्वं सत्यम् इत्यस्याः श्रुतेः अनुवादकत्वमित्यर्थः ॥२॥

३—समाधत्ते सिद्धान्ती—मैवम् , दृष्टान्ते हि पृथिवीत्वं हिंसात्वञ्च एकोऽनुगतो धर्मः इति तदवच्छेदेन विधेयस्याप्राप्तत्वेन तत्र नानुवादकत्वं युक्तम्, किन्तु विश्वत्वं नाम न एको धर्मोऽस्ति, किन्तु विश्वशब्दः सर्वनामत्वात् तेन तेन रूपेण घटादीनामुपस्थापकः । तेषु च प्रत्येकं सत्त्वं गृहीतमेवेति कथं नानुवादकत्वं, प्रकार-

न चैकशाखास्थविधिवाक्यैकार्थशाखान्तरस्थविधिवाक्यस्य पुरुषान्तरं प्रतीव येन पुंसा वादिविप्रतिपत्त्यादिना घटादिसत्ता प्रत्यक्षेण न निर्णीता तं प्रत्यर्थवत्त्वेन नानुवादकत्वमिति वाच्यम्, एवं सति

---

वैलक्षण्याभावात्। दृष्टान्ते पृथिवीतरभिन्ना न हिंस्यात् सर्वाभूतानीत्यत्र पृथिवीत्वं हिंसात्वञ्च एकोऽनुगतो धर्मोऽस्तीति तद्धर्मावच्छेदेन विधेयस्येतरभेदस्य निषेधस्य च अप्राप्तत्वेन तयोर्नानुवादकत्वं युक्तम्। इह तु विश्वं सत्यमिति श्रुतौ पृथिवीत्यादिवत् विश्वत्वं नामैको धर्मो नास्ति सर्वविश्वसाधारणः। किन्तु विश्वशब्दस्य सर्वनामत्वात् सर्वनाम्नस्तु बुद्धिविषयत्वोपलक्षिते शक्तत्वात्। यथा तदादिसर्वनाम्नः बुद्धिविषयत्वोपलक्षितशक्तत्वेऽपि घटत्वादिविशेषरूपं स्वरूपतो विषयीकुर्वति शाब्दानुभवे तदादेः सर्वनाम्नः हेतुत्वं तथा विश्वशब्दस्यापि घटत्वादिकं स्वरूपतो विषयीकुर्वति शाब्दबोधे हेतुत्वम्। अतो विश्वशब्दः बुद्धिविषयत्वोपलक्षितेन तेन तेन घटत्वादिरूपेण घटपटादीनामुपस्थापकः। तथा च विश्वशब्दात् घटत्वादिरूपेणोपस्थापिता घटादयः, तेषु च घटादिषु प्रत्येकं सत्त्वं प्रत्यक्षेणैव गृहीतमिति कथं विश्वसत्यत्वश्रुतेर्नानुवादकत्वम्? प्रकारवैलक्षण्याभावात्। विश्वशब्देनापि येन प्रकारेण घटत्वादिना घटादय उपस्थाप्यन्ते प्रत्यक्षेणापि तेनैव घटत्वादिना घटादिषु सत्त्वं गृह्यते। अतः प्रकारवैलक्षण्याभावात् विश्वसत्यत्वश्रुतेरनुवादकत्वमेव। पुनः प्रकारान्तरेण विश्वसत्यत्वबोधकागमस्य अननुवादकत्वं शङ्कते पूर्वपक्षी—न च एकशाखास्थविधिवाक्यैकार्थशाखान्तरस्थविधिवाक्यस्य पुरुषान्तरं प्रतीव येन पुंसा वादिविप्रतिपत्त्यादिना घटादिसत्ता प्रत्यक्षेण न निर्णीता तं प्रति अर्थवत्त्वेन नानुवादकत्वमिति वाच्यम्। एकशाखेति—प्रातः सन्ध्यामुपासीत इति ऋग्वेदशाखागतं वाक्यं तत्समानार्थकमपि यजुःशाखागतं प्रातः सन्ध्यामिति वाक्यं न व्यर्थं ऋक्शाखाध्यायिनं प्रति व्यर्थत्वेऽपि येन पुंसा ऋक्शाखाध्ययनं न कृतं तं प्रति अर्थवत्त्वाङ्गीकारात् एवं प्रत्यक्षेण विश्वसत्यता येन न निर्णीता वादिविप्रतिपत्त्यादिना प्रत्यक्षे अप्रामाण्यशङ्कनात् तं प्रति विश्वं सत्यमिति वाक्यस्यार्थवत्त्वसम्भवादित्यर्थः।

एकशाखेत्युक्त्या पूर्वमीमांसान्यायः सूचितः। तथा हि द्वितीयाध्याये चतुर्थपादे चिन्तितम् "शाखान्तरेषु कर्मभेदः स्यात्" इत्यत्र नानाशाखाम्नातमग्निहोत्रादिकं कर्म

अनुवादस्थलस्यैवाभावप्रसंगात्। न च सर्वाविवादस्थलमेवोदाहरणं सर्वाविवादस्य निश्चेतुमशक्यत्वात्, पुरोवादपूर्वकत्वादनुवादस्यात्रायं पुरोवाद इत्यस्यैवाभावात् न शाखान्तरस्थवाक्यस्यानुवादकत्वप्रसङ्गः। यत्तु—बृहदारण्यकभाष्ये देहभिन्नात्मबोधिकायाः 'अस्तीत्येवोपलब्धव्य' इत्यादिश्रुतेः प्रत्यक्षप्राप्तानुवादित्वमाशंक्य वादिविप्रतिपत्तिदर्शनादित्यादिना तत्परिहृतम्। तथा च प्रत्यक्षसिद्धसत्त्वग्राहकत्वेऽपि वादिविप्रतिपत्तिनिरासार्थकत्वेन नानुवादकत्वं प्रकृतेऽपि इत्युक्तम् ॥३॥

---

भिद्यते न वेति संशये—अविशेषेण पुनः श्रुतिरूपाभ्यासस्य कर्मभेदाभावे वैयर्थ्यापत्तेः कर्म भिद्यते इति पूर्वपक्षः। सिद्धान्तस्तु पुनः श्रुत्या शाखान्तरोक्तमेव कर्म विधीयते इति सिध्यति न तु कर्मभेदः। तर्हि वैयर्थ्यमिति न शङ्कनीयं शाखाभेदानामध्येतृभेदनियतत्वेन विहितस्यापि विधानं पुरुषान्तराधिकारेण सम्भवत्येवेति तस्यैव कर्मणः विधानेऽपि न वैयर्थ्यमिति भावः। समाधत्ते सिद्धान्ती—एवं सति अनुवादस्थलस्यैवाभावप्रसङ्गात्। न च सर्वाविवादस्थलमेवोदाहरणं सर्वाविवादस्य निश्चेतुमशक्यत्वात्। पुरोवादपूर्वकत्वादनुवादस्य अत्रायं पुरोवाद इत्यस्यैवाभावात् न शाखान्तरस्थवाक्यस्यानुवादकत्वप्रसंगः। पूर्वप्रमाणसमानार्थकानुवादवाक्यस्यापि वादिविप्रतिपत्त्यादिना अननुवादत्वेऽनुवादस्थलस्यैव अभावः स्यात् अनुवादकथैवोच्छिद्येत। सर्वाविवादस्थलमेव अनुवादोदाहरणं भविष्यतीति पूर्वपक्षिशङ्कायामाह—इदं सर्वाविवादस्थलमिति निश्चेतुमशक्यमेव। तथा च अनुवादकथोच्छेद एव। शाखान्तरवाक्येऽनुवादत्वशङ्कैव नास्तीत्याह—पुरोवादपूर्वकत्वादिति। वादद्वयस्य पौर्वापर्यावधारणे सति अयं पुरोवादः अयमनुवादः इति स्यात् सर्वेषां वेदानामपौरुषेयत्वात् अनादित्वात् वेदानां पौर्वापर्याभावात् कस्यापि वेदवाक्यस्यानुवादत्वासम्भवात् शाखान्तरस्थवाक्यस्य नानुवादरूपतेति भावः। अन्यत् किञ्चित् पूर्वपक्ष्युक्तमाशङ्कयते—यत्तु बृहदारण्यकभाष्ये देहभिन्नात्मबोधिकायाः 'अस्तीत्येवोपलब्धव्य' इत्यादिश्रुतेः प्रत्यक्षप्राप्तानुवादित्वमाशङ्क्य वादिविप्रतिपत्तिदर्शनात् इत्यादिना परिहृतम्। तथा च प्रत्यक्षसिद्धसत्त्वग्राहकत्वेऽपि वादिविप्रतिपत्तिनिरासार्थकत्वेन नानुवादकत्वं प्रकृतेऽपीत्युक्तम्। बृहदारण्यकभाष्योपोद्घाते

तदयुक्तम्, भाष्यार्थानवबोधात्। तथा हि– तत्र वादिविप्रतिपत्तिदर्शनेन देहव्यतिरिक्तत्वेनात्मनः प्रत्यक्षतैव नास्ति। अन्यथा प्रत्यक्षप्रामाण्यवादिनश्चार्वाकादेस्तत्र विप्रतिपत्तिर्न स्यादित्युक्तम्। न तु वादिविप्रतिपत्तिनिरासेनास्तीत्यादेस्सार्थकत्वम्, अननुवादकत्वं वा। तथा चोक्तं तत्रैव––तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारविशेषोपाये च शास्त्रं प्रवर्तत इति।

---

[ आनन्दाश्रमः सं० पृ० ६ ] "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति च ज्ञपयिष्यामी'त्युपक्रम्य विज्ञानमय इति च व्यतिरिक्तात्मास्तित्वम् तत्प्रत्यक्षविषयमेवेति चेत् न ? वादिविप्रतिपत्तिदर्शनात्। अस्याधस्तादपि भाष्ये उक्तं "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके" इत्युपक्रम्य "अस्तीत्येवोपलब्धव्य" इत्येवमादिनिर्णयदर्शनात् इति भाष्यवाक्यस्य पूर्वपक्षिणा एवमभिप्रायो वर्ण्यते। मम देह इति प्रत्यक्षेण देहात्मभेदस्य प्रत्यक्षसिद्धत्वात् पुनरपि श्रुत्या "अस्तीत्येवोपलब्धव्य" इत्यादिकया देहातिरिक्तात्मास्तित्वप्रतिपादनं प्रत्यक्षगृहीतदेहात्मभेदविषयेण समानविषयतया श्रुतेरनुवादित्वं स्यादित्याशङ्क्य भाष्यकृता वादिविप्रतिपत्तिदर्शनादित्यनेन श्रुतेरनुवादित्वशङ्का निराकृता। चार्वाकादिभिर्वादिभिर्देहात्मनोरैक्यस्याभ्युपगतत्वात् मम देह इत्यादिप्रतीतिरभेदे भेदारोपेण औपचारिकी न तात्त्विकी। अतः चार्वाकादिवादिविप्रतिपत्त्या देहात्मभेदप्रत्यक्षस्याप्रामाण्यशङ्कायां न प्रत्यक्षेण देहात्मनो भेदः सिध्यति। अतः श्रुत्या देहात्मनोभेदो ज्ञाप्यते इति यथा वादिविप्रतिपत्त्युपन्यासेन श्रुतेरनुवादकत्वशङ्का भाष्यकृता निराकृता, एवं विश्वसत्यत्वश्रुतेरपि वादिविप्रतिपत्त्यादिना अनुवादकत्वशङ्का निराकरणीया ; विश्वस्य सत्यत्वं प्रत्यक्षेण गृहीतमपि वादिविप्रतिपत्त्यादिना तदप्रामाण्यशङ्कायां प्रत्यक्षं सत्यत्वासाधकमिति श्रुत्या विश्वस्य सत्यत्वं प्रतिपाद्यते। अतः विश्वसत्यत्वश्रुतिर्नानुवादिनीति पूर्वपक्षिणो भावः ॥३॥

४–सिद्धान्ती निराचष्टे–तदयुक्तं, भाष्यार्थानवबोधात्। तथा हि तत्र वादिविप्रतिपत्तिदर्शनेन देहव्यतिरिक्तत्वेनात्मनः प्रत्यक्षतैव नास्ति। अन्यथा प्रत्यक्षप्रामाण्यवादिनः चार्वाकादेस्तत्र विप्रतिपत्तिर्न स्यादित्युक्तम्। न तु वादिविप्रतिपत्तिनिरासेन अस्तीत्यादेः सार्थकत्वम्। अननु-

ननु चातुर्मास्यमध्यपर्वणोः "द्वयोः प्रणयन्ती"ति वाक्यस्य चोद-

---

वादकत्वं वा। तथा चोक्तं तत्रैव—तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तीत्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारविशेषोपाये च शास्त्रं प्रवर्तते इति। भाष्याभिप्रायमनवगच्छता पूर्वपक्षिणैवमुक्तं। वादिविप्रतिपत्तिदर्शनेन देहव्यतिरिक्तत्वेनात्मनः प्रत्यक्षतैव नास्ति। यदि देहव्यतिरिक्तत्वेनात्मनः प्रत्यक्षता स्यात्तर्हि चार्वाकादीनां विप्रतिपत्तिरेव न स्यात्। चार्वाका हि प्रत्यक्षैकप्रमाणवादिनः। प्रत्यक्षसिद्धे तेषामपि विप्रतिपत्तिर्नास्ति। देहव्यतिरक्तत्वेनात्मनः प्रत्यक्षसिद्धत्वे देहव्यतिरक्ते आत्मनि तेषां संप्रतिपत्तिरेव स्यात्, न विप्रतिपत्तिः। ननु मम देह इति भेदप्रत्यक्षस्य जागरूकत्वात् कथं चार्वाकादिमतेऽपि देहाभिन्नत्वेनात्मनः सिद्धिरिति चेन्न, मम देह इत्यादिवत् मम गौरः मम मनुष्य इत्यादिभेदप्रतीतेरदर्शनात् न देहात्मनोर्भेदस्य प्रत्यक्षत्वम्। देहात्मनोर्भेदे सिद्धे मम देह इत्यादिवत् मम गौरः, मम मनुष्यः इत्यादयोऽपि प्रत्ययाः प्राप्नुयुः। तथा च देहात्मनोर्भेदस्य असिद्धत्वात् मम देह इत्यादिप्रतीतिः अभेदे कथञ्चिद् भेदमारोप्य भ्रान्तिरेव। अतः देहव्यतिरिक्तत्वेनात्मनः प्रत्यक्षतैव नास्ति। अन्यथा तत्र चार्वाकादेर्विप्रतिपत्तिर्न स्यात्। अत एवोक्तं भाष्यकृता न हि देहान्तरसम्बन्धिनः आत्मनः प्रत्यक्षे नास्तीत्यविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युर्नास्ति आत्मा इति वदन्तः। तस्मात् प्रत्यक्षविषयवैलक्षण्यात् प्रत्यक्षान्नात्मास्तित्वसिद्धिः। आत्मास्तित्वसिद्धिरिति देहव्यतिरिक्तात्मास्तित्वसिद्धिरित्यर्थः। अतो न वादिविप्रतिपत्तिनिरासेन अस्तीत्येवोपलब्धव्ये इत्यादिश्रुतेः सार्थक्यं, अननुवादकत्वं वा। उक्तञ्च तत्रैव भाष्यकृता—न चासति जन्मान्तरसम्बन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात् स्वभाववादिदर्शनात्। तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारे च शास्त्रं प्रवर्तते। जन्मान्तरसम्बन्ध्यात्मास्तित्वे न प्रत्यक्षं प्रमाणं नानुमानमपि। किन्तु केवलं शास्त्रमेव इत्येवोक्तं भाष्यकृता। तथा च भाष्याशयमविद्वान् पूर्वपक्षी यत्किञ्चिदाह तदतीव तुच्छम्। आत्मनो जन्मान्तरसम्बन्धित्वं वेदैकवेद्यमेव।

प्रत्यक्षसिद्धव्यावहारिकसत्त्वविलक्षणपारमार्थिकसत्त्वस्य प्रपञ्चे प्रतिपादनाय विश्वं सत्यमिति श्रुतिः प्रवर्तते इत्याशङ्कते पूर्वपक्षी—ननु चातुर्मास्यपर्वणो

कप्राप्ताग्निप्रणयनव्यतिरिक्ताग्निप्रणयनविधायकत्ववत् प्रत्यक्षप्राप्तव्यावहारिकसत्त्वविलक्षणत्रिकालनिषेधाप्रतियोगित्वरूपसत्त्वप्रमापकत्वं प्रकृतेऽस्त्विति चेत् ?॥४॥

---

द्वयोः प्रणयन्तीति वाक्यस्य चोदकप्राप्ताग्निप्रणयनव्यतिरिक्ताग्निप्रणयनविधायकत्ववत् प्रत्यक्षप्राप्तव्यावहारिकसत्त्वविलक्षणत्रिकालनिषेधाप्रतियोगित्वरूपसत्त्वप्रमापकत्वं प्रकृतेऽस्त्विति चेत् ? यथा हि सिद्धान्तिमते सन् पटः सन् घटः, सद्घटज्ञानं सत्सुखस्फुरणमित्यादिप्रत्यक्षेण सत्यज्ञानसुखरूपस्यात्मनः सत्यत्वस्य प्राप्तेः आत्मसत्यत्वप्रतिपादिकायाः सत्यात्मा इत्यादिश्रुतेर्वैयर्थ्यं स्यात्तन्माभूदित्येवमर्थं प्रत्यक्षेण वर्तमानकाले एव सत्ताग्रहणात् वर्तमानकालमात्रे सत्ताग्राहिप्रत्यक्षाप्राप्तत्रिकालाबाध्यत्वरूपसत्यत्वप्रतिपादकत्वमङ्गीकृतम्। एवं प्रकृतेऽपि वयं सन् घटः इत्यादिप्रत्यक्षेण विश्वसत्यत्वस्य प्राप्तत्वात् विश्वं सत्यमित्यादिश्रुतेर्वैयर्थ्यं स्यात्तन्माभूदित्येवमर्थं वर्तमानकालमात्रे सत्ताग्राहिप्रत्यक्षाप्राप्तत्रिकालाबाध्यत्वरूपसत्यत्वप्रतिपादकत्वमङ्गीकुर्मः अतो न दोष इत्याह—चातुर्मास्यपर्वणो द्वयोरिति। अत्र पूर्वतन्त्रसिद्धः दृष्टान्तः। पूर्वतन्त्रे सप्तमाध्याये द्वितीयपादे चिन्तितम्। चातुर्मास्येषु यज्ञेषु वैश्वदेववरुणप्रघासशाकमेधशुनासीरसंज्ञक पर्वचतुष्टयमस्ति। मासानामेव पर्वसंज्ञा। तत्र द्वयोः प्रणयन्तीति श्रूयते। मध्यस्थयोर्द्वयोः पर्वणोः प्रणयन्ति, गार्हपत्यादाहवनीयं प्रति अग्निर्नेतव्य इत्यर्थः। चातुर्मास्यं च कर्म दर्शपौर्णमासाख्यकर्मप्रकृतिकम्। तत्र चातुर्मास्यपर्वणां मध्ये मध्यस्थयोर्द्वयोः पर्वणोरुच्यमानमग्निप्रणयनं किं दर्शपौर्णमासधर्मकमुतापूर्वं तद्विलक्षणमिति संशये चातुर्मास्यानां दर्शपौर्णमासप्रकृतिकतया अतिदेशप्राप्तत्वेन तदीयाङ्गकलापयुक्ततया च अतिदेशप्राप्तप्रणयनप्रापकत्वमेवेति पूर्वपक्षे प्राप्ते द्वयोः पर्वणोरग्निप्रणयनस्य दर्शपौर्णमासप्रकृतिकतया सिद्धत्वेन पुनर्यद्द्वयोः प्रणयन्तीत्यस्य वैयर्थ्यापत्तेः तद्वैयर्थ्याय अतिदेशप्राप्ताङ्गकलापयुक्तापूर्वप्रणयनप्रतिपादकत्वमेवेति सिद्धान्तितम्। तद्वदिहापि वयमपि सन् घट इत्यादिप्रत्यक्षेण विश्वसत्यत्वस्य प्राप्तत्वात् विश्वं सत्यमित्यादिश्रुतेर्वैयर्थ्यं स्यात्तन्माभूद् इत्येवमर्थं वर्तमानकालमात्रे सत्ताग्राहिप्रत्यक्षाप्राप्तत्रिकालाबाध्यत्वरूपसत्यत्वप्रतिपादकत्वमङ्गीकुर्मः। चोदकप्राप्ताग्निप्रणयनव्यतिरिक्ताग्निप्रणयनविधायकत्ववदिति। चोदकप्राप्ताग्निप्रणयननाम दर्शपौर्णमासिकाग्निप्रणयनम्।

न, त्रैकालिकसत्त्वनिषेधकश्रुतिविरोधेन विश्वसत्यत्वश्रुतेस्त्रैकालिकसत्त्वपरत्वाभावात्। न च वैपरीत्यमेव किं न स्यात्? विनिगमकाभावादिति वाच्यम्, तात्पर्यान्यथानुपपत्तिगतिसामान्यानामेव विनिगमकत्वात्।

अद्वैतश्रुतिर्हि षड्विधतात्पर्यलिङ्गोपेता। तत्र त्रिविधं तात्पर्यलिङ्गम्—

---

तच्चाधर्मकं व्यतिरिक्ताग्निप्रणयनं तु सौमिकाग्निप्रणयनम्। तच्च सधर्मकम्। अधर्मकाग्निप्रणयनव्यतिरिक्तसधर्मकाग्निप्रणयनविधायकत्ववत् प्रकृतेऽपीति भावः ॥४॥

५—समाधत्ते सिद्धान्ती—न त्रैकालिकसत्त्वनिषेधकश्रुतिविरोधेन विश्वसत्यत्वश्रुतेः त्रैकालिकसत्त्वपरत्वाभावात्। न च वैपरीत्यमेव किं न स्याद्, विनिगमकाभावात् इति वाच्यम्, तात्पर्यान्यथानुपपत्तिगतिसामान्यानामेव विनिगमकत्वात्। 'नेह नानास्ति किञ्चन' एकमेवाद्वितीयमि'त्यादि श्रुत्या प्रपञ्चस्य त्रैकालिकसत्त्वनिषेधप्रतिपादनात् एतच्छ्रुत्यनुसार्यनुमानेनापि प्रपञ्चस्य त्रैकालिकसत्त्वनिषेधप्रतिपादनात् अनुमानप्रमाणोपोद्गलिता प्रपञ्चस्य त्रैकालिकसत्त्वनिषेधकश्रुतिर्बलवती। विश्वं सत्यमित्यादिश्रुतिस्तु निषेधप्रतियोगिप्रसञ्जकतया दुर्बला। अतः त्रैकालिकसत्त्वनिषेधकश्रुत्या प्रबलया विरोधेन विश्वसत्यत्वश्रुतेस्त्रैकालिकसत्त्वपरत्वाभावात्। विश्वसत्यत्वप्रतिपादकत्रैकालिकसत्त्वनिषेधप्रतिपादकश्रुत्योर्विरोधे एकश्रुतिवशेनापराश्रुतिरवश्यमेव नीयेत इत्यत्र कस्या अन्यथानयनम्? सत्यत्वश्रुतेर्वा, निषेधकश्रुतेर्वा इति विशये सिद्धान्तिना निषेधकश्रुतिबलेन सत्यत्वश्रुतिरेव नीता। किन्तु वैपरीत्यमेव कुतो न स्यात्, विनिगमकाभावात्। विश्वसत्यत्वश्रुतिविरोधेन त्रैकालिकसत्त्वनिषेधकश्रुतिरेवान्यथा नीयतामिति जिज्ञासायामाह—तात्पर्यान्यथानुपपत्तिगतिसामान्यानामेव विनिगमकत्वात्। षड्विधतात्पर्यनिर्णायकलिङ्गोपेता निषेधश्रुतिः तत्परा। अतः तात्पर्यवती निषेधश्रुतिरतत्परां विश्वसत्यत्वश्रुतिं बाधते इत्येव युक्तम्। न तु तात्पर्यरहितया विश्वसत्यत्वश्रुत्या तात्पर्यवती श्रुतिर्बाध्यते इति सम्भवति। तात्पर्यसत्त्वासत्त्वमेव श्रुत्योर्बाध्यबाधकभावे विनिगमकम्। गतिसामान्यञ्च सर्ववेदान्तवाक्यानामद्वैतावगतिजनकत्वेन समानता। अद्वैतावगतिजनकानां सर्ववेदान्तवाक्यानां विश्वसत्यत्वश्रुत्या बाधो न सम्भवति। एतदेव स्पष्टीकुर्वन्नाहाचार्यः—अद्वैत-

प्रामाण्यशरीरघटकमर्थनिष्ठम्, अज्ञातत्वमबाधितत्वं प्रयोजनवत्त्वञ्च त्रिविधं तु शब्दनिष्ठम् । अतिप्रसङ्गवारकम्, उपक्रमोपसंहारयोरैकरूप्यम्, अभ्यासोऽर्थवादश्चेति । तत्र शब्दनिष्ठलिङ्गत्रये तावन्न विवादः, सर्वासामेवोपनिषदामेवं प्रवृत्तत्वात् । मानान्तरासिद्धतया मोक्षहेतुज्ञानविषयतया च अज्ञातत्वं सप्रयोजनत्वञ्च निर्विवादमेव । अबाधितत्वमात्रं सन्दिग्धम् तच्चान्यथानुपत्तिगतिसामान्याभ्याञ्च निर्णीयते । न हि सर्वप्रपञ्चनिषेधरूपमद्वैतं व्यावहारिकं येन तत्र श्रुतेर्व्यावहारिकं प्रामाण्यं स्यात् । अतस्तत्र तात्त्विकमेव प्रामाण्यम् । द्वैतसत्यत्वं तु व्यावहारिकम् । अतस्तत्र न श्रुतेस्तात्त्विकं प्रामाण्यम् । परस्परविरुद्धयोर्द्वयोस्तात्त्विकत्वायोगात् । वस्तुनि च विकल्पासम्भवात् तात्त्विकव्यावहारिकप्रामाण्यभेदेन च व्यवस्थोपपत्तेः । अतत्परत्वेनावधारितस्य विश्वसत्यत्ववाक्यस्यैवान्यथाव्याख्यातुमुचितत्वात् ।

---

श्रुतिर्हि षड्विधतात्पर्यलिङ्गोपेता । तत्र त्रिविधं तात्पर्यलिङ्गम्— प्रामाण्यशरीरघटकमर्थनिष्ठम् । अज्ञातत्वमबाधितत्वं प्रयोजनवत्त्वञ्च । त्रिविधं तु शब्दनिष्ठम् । अतिप्रसंगवारकम् । उपक्रमोपसंहारयोरैकरूप्यम्, अभ्यासोऽर्थवादश्चेति । तत्र शब्दनिष्ठलिङ्गत्रये तावन्न विवादः, सर्वासामेवोपनिषदामेवं प्रवृत्तत्वात् । मानान्तरासिद्धतया मोक्षहेतुज्ञानविषयतया चाज्ञातत्वम् सप्रयोजनत्वञ्च निर्विवादमेव । अबाधितत्वमात्रं सन्दिग्धम् । तच्चान्यथानुपपत्तिगतिसामान्याभ्यां च निर्णीयते । न हि सर्वप्रपञ्चनिषेधरूपमद्वैतं व्यावहारिकं येन तत्र श्रुतेर्व्यावहारिकं प्रामाण्यं स्याद् । अतस्तत्र तात्त्विकमेव प्रामाण्यम् । द्वैतसत्यत्वन्तु व्यावहारिकम् । अतस्तत्र न श्रुतेस्तात्त्विकं प्रामाण्यम् । परस्परविरुद्धयोस्तात्त्विकत्वायोगात् । वस्तुनि च विकल्पासम्भवात् तात्त्विकव्यावहारिकप्रामाण्यभेदेन च व्यवस्थोपपत्तेः । अतत्परत्वेनावधारितस्य विश्वसत्यत्ववाक्यस्यैवान्यथा व्याख्यातुमुचितत्वात् । तात्पर्यवती अद्वैतश्रुतिर्बाधिकेत्युक्तं तात्पर्यवत्त्वं श्रुतेः कथं ज्ञायते इत्याकांक्षायामाह— अद्वैतश्रुतिर्हि षड्विधतात्पर्यलिङ्गोपेतेति । षड्विधानि तात्पर्यनिर्णायकलिङ्गानि च—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥"

इत्यभियुक्तोक्त्या ज्ञेयानि । पद्यमिदं बृहत्संहितायामिति केचिदाहुः । तेषु षड्विधतात्पर्यलिङ्गेषु त्रिविधं तात्पर्यलिङ्गमर्थनिष्ठं प्रामाण्यशरीरघटकम् अपूर्वता, फलम् उपपत्तिश्च एतत्त्रयं प्रामाण्यशरीरघटकत्वात् अर्थनिष्ठम् । प्रकृतवाक्यार्थधीविषये उक्तधीपूर्वमज्ञातत्वमपूर्वता, उक्तधियः प्रयोजनवत्त्वं फलम् । उक्तधीविषयस्याबाधितत्वमुपपत्तिः । एतस्य च त्रयस्य प्रमात्वघटकतया तात्पर्यं प्रति व्यापकतया लिङ्गत्वम् । यथा यज्ञोपवीतादिकं ब्राह्मण्यं प्रति । एतदेवोक्तं मूले त्रिविधं तात्पर्यलिङ्गं प्रामाण्यशरीरघटकमिति । त्रिविधं तु शब्दनिष्ठमिति— उपक्रमोपसंहारयोरैकरूप्यम्, अभ्यासः, अर्थवादश्चेति । विचार्यवाक्यस्याद्यन्तभागयोरेकार्थपर्यवसानम् उपक्रमोपसंहारपदाभ्यां लक्ष्यते । अनन्यपरं पुनः श्रवणम् अभ्यासः । स्तुतिनिन्दान्यतरबोधकं वाक्यमर्थवादः । एतत्त्रयं शब्दघटितत्वात् शब्दनिष्ठं तत्र उपक्रमोपसंहारयोरैकरूप्यस्याद्यस्यैकार्थतात्पर्यनिर्णायकत्वेन लिङ्गत्वम् । तात्पर्यविषयत्वेन सन्दिग्धानां बहूनां मध्ये यस्मिन्नर्थे आद्यन्तभागयोः पर्यवसानं तस्मिन्नेव तात्पर्यनिर्णयात् । अन्यथा तस्मिन्नर्थे आद्यन्तभागयोः पर्यवसानं व्यर्थं स्यात् । क्वचिच्च अनुवादत्वादिशङ्कापसारकतयापि तस्य लिङ्गत्वं यदि हि तस्मिन्नर्थे वाक्यमनुवादकं स्यात् तदा उक्तपर्यवसानं व्यर्थं स्यादिति युक्तेः । अभ्यासरूपं द्वितीयं लिङ्गं तु यद्यपि समिधादिवाक्येषु दर्शपूर्णमासांगपञ्चप्रयाजविधायकेषु विलक्षणनानाकर्मविधाने तात्पर्यग्राहकं विहितविधानायोगात् समिधो यजति बर्हिर्यजति इडो यजतीत्यादिषु यजतिपदाभ्यासात् कर्मभेदः इति सिद्धान्तितं पूर्वतन्त्रे द्वितीयाध्याये तथापि सिद्धार्थविषयकं सत् एकार्थतात्पर्यज्ञापकम् । अन्यथा पुनः श्रवणवैयर्थ्यात् तस्मादादरज्ञापनद्वारा अभ्यासस्य तात्पर्यज्ञापकत्वम् । तदुक्तं यास्कप्रणीते निरुक्ते अभ्यासे भूयांसमर्थं मन्यन्ते यथाहो दर्शनीयाहो दर्शनीयेति [ निरुक्तदैवतकाण्डम् ] भामत्यामप्युक्तम्— अभ्यासे हि भूयस्त्वमर्थस्य भवति यथा अहो दर्शनीया अहो दर्शनीयेति । आदरश्च यद्यपि प्राशस्त्यरूपोऽभ्यस्यमानस्यार्थस्य विधेयत्वानुमानद्वारा तात्पर्यविषयत्वं ज्ञापयति अर्थवादोऽपि प्राशस्त्यज्ञापनद्वारा तथैव तज्ज्ञापकः तथापि अर्थवादबोध्यं प्राशस्त्यं बलवदनिष्टाजनकत्वरूपं अभ्यासबोध्यन्तु प्राशस्त्यम् अर्थान्तरा-

दुत्कृष्टत्वरूपमिति न अभ्यासार्थवादयोरैक्यम्। प्रामाण्यशरीरघटकेषु त्रिषु लिङ्गेषु आद्यमपूर्वत्वम् अनुवादवाक्यस्य स्वार्थे प्रामाण्यवारणाय द्वितीयं फलमुत्ताना वै देव गवा वहन्तीत्यादेः स्वार्थे प्रामाण्यवारणाय। तृतीयन्तु उपपत्तिरूपं लिङ्गं ग्रावाणः प्लवन्ते इत्यादेः स्वार्थे प्रामाण्यवारणाय। न चोत्तानादिवाक्यस्य निष्प्रयोजनार्थ-परत्वे तदध्ययने प्रवृत्त्यनुपपत्तेः स्वार्थे तात्पर्याभावेऽपि प्रामाण्यशरीरे प्रयोजनवत्त्व-निवेशो व्यर्थ इति वाच्यम्? यादृशं ज्ञानं प्रवृत्तिनिवृत्तिद्वारा साक्षाद्वा प्रमातुरिष्ट-प्रयोजकं तस्यैव प्रमात्वेन लोके व्यवहारेण निष्प्रयोजनस्याप्रमात्वात्। अत एव औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः तस्य ज्ञानमुपदेशः अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् इति जैमिनिसूत्रे तथैवोक्तम्। सूत्रस्यायमर्थः औत्पत्तिकः शब्दार्थयोः सम्बन्धः न तु दोषवत् पुरुषकृतः संकेतः। अतस्तस्य धर्मस्य ज्ञानं—ज्ञापकं वाक्यमप्युत्पत्तिकं निर्दोषत्वेनानादि किञ्च तादृशोपदेशोऽव्यतिरेकः बाधकज्ञानवत्त्वरूपेण प्रमाणवैधर्म्येण शून्यः। किञ्चानुपलब्धेऽज्ञातेऽर्थे—सप्रयोजने धर्मे उपदेशरूपत्वात् तद्वाक्यं प्रमाणमेवेति सूत्रार्थो वार्तिकादौ उक्तः। तदितत् सर्वमभिप्रेत्याह आचार्यः—षड्विधतात्पर्यलिङ्गो-पेतेति। तत्र शब्दनिष्ठलिङ्गत्रये न विवादः। सर्वासां उपनिषदामेवं प्रवृत्तत्वात् अर्थनिष्ठलिङ्गत्रयेऽपि अज्ञातत्वं सप्रयोजनत्वञ्च लिङ्गद्वयं निर्विवादमेव। अबाधितत्व-मात्रमेकं लिङ्गं सन्दिग्धं तच्च अन्यथानुपपत्तिगतिसामान्याभ्यां च निर्णीयते। अन्यथानुपपत्तिमेवाह—द्वैतसत्यत्वे प्रपञ्चनिषेधरूपाद्वैतयोः विरुद्धयोः द्वयोस्तात्त्विक-प्रामाण्यासम्भवे एकतरस्य तात्त्विकं प्रामाण्यं स्वीकार्यमन्यतरस्य व्यावहारिकं प्रामाण्यं तत्र कस्य तात्त्विकं प्रामाण्यं कस्य वा व्यावहारिकं प्रामाण्यमिति विमर्शे अद्वैतस्य व्यावहारिकत्वासम्भवात् तस्यैव पारमार्थिकमेव प्रामाण्यमितरस्य सुतरां व्यावहारिकं प्रामाण्यमनयैव व्यवस्थया सप्रपञ्चनिष्प्रपञ्चश्रुतीनामविरोधोपपत्तेः षड्विधतात्पर्यलिङ्गोपेतत्वेन अद्वैतश्रुतिस्तत्परा षड्विधलिङ्गाभावाच्च विश्वसत्यत्व-श्रुतिरतत्परेति तस्या एव अन्यथानयनम्। न तु तत्पराया अद्वैतश्रुतेरिति भावः। सर्वञ्चैतत् सप्रपञ्चमुक्तं श्रीगुरुचरणैः खण्डनखण्डखाद्यभूमिकायामिति। अन्यथानुप-पत्त्या अद्वैतश्रुतेः पारमार्थिकं प्रामाण्यमबाधितार्थकत्वात् एवं गतिसामान्येन च अद्वैतश्रुतीनामेव अबाधितार्थकत्वं न विश्वसत्यत्वश्रुतीनां यतः जिज्ञास्ये ब्रह्मणि श्रुतीनामवगतिसामान्यादजिज्ञास्ये विश्वसत्यत्वे श्रुतीनामवगतिसामान्याभावादपि न

तथा हि—चतुर्धा हि सामानाधिकरण्यम्; अध्यासे 'इदं रजतमि'-त्यादौ, बाधायां 'स्थाणुः पुमानि'त्येवमादौ, विशेषणविशेष्यभावेन 'नील-मुत्पलमि'त्यादौ, अभेदेन 'तत्त्वमसी'त्येवमादौ। अत्र च बाधायामध्यासे वा सामानाधिकरण्योपपत्तेर्न सत्यत्वबोधकश्रुतेः षड्विधतात्पर्यलिङ्गो-पेताद्वैतश्रुतिबाधकत्वम्।

---

विश्वसत्यत्वश्रुतिरबाधितार्था। उक्तञ्च भाष्यकृद्भिः गतिसामान्याद् [ ब्र० सू० १।१।१०। ] इति सूत्रभाष्ये "महच्च प्रामाण्यकारणमेतत् यद्वेदान्तवाक्यानां चेतन-कारणत्वे समानगतित्वम्। सूत्रकृतापि जिज्ञास्ये ब्रह्मण्येव वेदान्तानां गतिसामान्यं प्रतिपादितमन्यथा सूत्राणां पूर्वापरविरोधः स्यात् जिज्ञास्यञ्च ब्रह्मसाक्षादिच्छा-व्याप्यत्वात् ज्ञानस्वरूपं ब्रह्म। वृत्तिव्यक्तब्रह्मस्वरूपज्ञानम्। ब्रह्मस्वरूपज्ञानमेव समस्तदुःखोपशमरूपमानन्दैकरसं परमं प्रयोजनमिति। परमप्रयोजनाद्वैतब्रह्म-प्रतिपादिनी श्रुतिरेवाबाधितार्था न तु निष्प्रयोजनविश्वसत्यत्वप्रतिपादिनी श्रुतिरिति भावः। विश्वसत्यत्वश्रुतेरेवान्यथा व्याख्यानमुचितमित्युक्तं तत् प्रतिपादयन्नाह—तथा हि चतुर्धा हि सामानाधिकरण्यं—अध्यासे इदं रजतमित्यादौ, बाधायां स्थाणुः पुमान् इत्येवमादौ, विशेषणविशेष्यभावेन नीलमुत्पल-मित्यादौ, अभेदेन तत्त्वमसीत्येवमादौ। अत्र च बाधायामध्यासे वा सामानाधिकरण्योपपत्तेः न सत्यत्वबोधकत्वश्रुतेः षड्विधतात्पर्यलिङ्गो-पेताद्वैतश्रुतिबाधकत्वम्। विश्वं सत्यमिति श्रुतौ विश्वसत्ययोः सामानाधिकरण्यं प्रतीयते समानविभक्तिकपदद्वयोपस्थाप्यत्वम्, तच्च सामानाधिकरण्यं चतुर्धा भवति—क्वचिदध्यासे यथा इदं रजतमित्यादौ शुक्तिसामान्यांशरूपे इदमि अध्यासाधारे रजतस्य तादात्म्येन अध्यासात् इदमभिन्नं रजतं प्रतीयते। इदमि रजतस्याध्यासिकतादात्म्येन प्रथनात् द्वयोः समानविभक्तिकपदोपस्थाप्यत्वेन आध्यासिकसामानाधिकरण्यम्। बाधायां स्थाणुः पुमान् इत्येवमादौ, उक्तञ्च नैष्कर्म्यसिद्धौ सुरेश्वराचार्यैः—

"योऽयं स्थाणुः पुमानेष पुंधियः स्थाणुधीरिव।
ब्रह्मास्मीति धिया शेषाहं बुद्धिर्निवर्तते॥ [२२९]

ननु आत्मन आनन्दत्वबोधिका श्रुतिरपि सुखं सुप्तोऽस्मीति साक्षिप्रत्यक्षसिद्धानन्दानुवादिनी सत्त्वश्रुतिवद्भवेदिति चेत् ।

---

भ्रमगृहीतो योऽयं स्थाणुः नायं स्थाणुः किन्तु एष पुमानिति सम्यक्धिया स्थाणुविशेषिता स्थाणुबुद्धिर्यथा बाध्यते तथा ब्रह्मास्मीति धिया अहं बुद्धिर्बाध्यते । सम्यक्बुद्ध्या भ्रमबुद्धेर्बाधे उक्तेऽपि भ्रमविषयस्यापि बाधो बोद्धव्यः । भ्रमविषयस्य सत्यत्वासम्भवात् । विषयसहितस्य ज्ञानस्य अध्यासात् । विशेषणविशेष्यभावेन नीलमुत्पलमित्यादौ—समानविभक्तिकपदोपस्थाप्यत्वात् नीलोत्पलयोर्विशेषणविशेष्यभावेन सामानाधिकरण्यम् । नीलं विशेषणम् उत्पलं विशेष्यम् । अभेदेन तत्त्वमसीत्यादौ—छान्दोग्ये तत्त्वमसीति महावाक्येऽभेदेन सामानाधिकरण्यम् । त्वंपदार्थस्य चित्प्रतिबिम्बस्य जीवस्य बिम्बेन चिताभेदेन सामानाधिकरण्यं एकस्यैव चिद्वस्तुनः अविद्योपधानवशेन बिम्बप्रतिबिम्बभावेन भेदे कल्पिते जीवेश्वरभावेन भ्रान्त्या भिन्नत्वेन प्रतिभासिते जीवेश्वरतादात्म्यबोधनाय तत्त्वमसीति महावाक्यस्योपदेशः । प्रतिबिम्बस्यापि बिम्बवत् सत्यत्वात् अभेदेन सामानाधिकरण्यं महावाक्येन. अभेदे बोधिते भेदभ्रमो निवर्तते । एवं चतुर्धा सामानाधिकरण्ये व्यवस्थिते प्रकृते विश्वं सत्यमित्यादौ कीदृशं सामानाधिकरण्यमित्यपेक्षायाम् अत्र च बाधायामध्यासे वा सामानाधिकरण्योपपत्तेरिति । यदिदं विश्वं तन्न किन्तु सत्यं ब्रह्मैवेति बाधायां सामानाधिकरण्यं योऽयं स्थाणुः एष पुमानितिवत् । अथ वा अध्यासे सामानाधिकरण्यं सत्ये ब्रह्मणि विश्वस्याध्यासात् सत्यविश्वयोराध्यासिकतादात्म्येन सामानाधिकरण्यमिदं रजतमितिवत् । एवञ्च प्रकारद्वयेन विश्वसत्यत्वश्रुतेरुपपत्तौ न तस्याः विश्वसत्यत्वश्रुतेरद्वैतश्रुतिबाधकत्वकल्पनं युक्तमद्वैतश्रुतेः षड्विधतात्पर्यनिर्णायकलिङ्गोपेतत्वेन विश्वसत्यत्वश्रुत्यपेक्षया प्रबलत्वात् न हि दुर्बलेन प्रबलस्य बाध्यत्वं युक्तमिति भावः । विश्वं सत्यमित्यादिश्रुतेरनुवादकत्वव्यवस्थापनमसहमानः पूर्वपक्षी सिद्धान्तिमतेऽपि ब्रह्मणः आनन्दत्वप्रतिपादिकायाः श्रुतेरपि अनुवादकत्वं स्यादिति शङ्कते । ननु आत्मन आनन्दत्वबोधिका श्रुतिरपि सुखं सुप्तोऽस्मीति साक्षिप्रत्यक्षसिद्धानन्दानुवादिसत्त्वश्रुतिवद्भवेदिति चेत् । विश्वं सत्यमित्यादेरपूर्वसत्यत्वप्रतिपादकत्वाभावे आत्मनो आनन्दत्वबोधिका श्रुतिरपि विज्ञानमानन्दं ब्रह्मेत्यादिका आनन्दानुवादिनी भवेत्,

न, साक्षिण उपहितानन्दविषयत्वेन श्रुतेश्च निरुपाधिकानन्दविषयत्वेन भिन्नविषयत्वात् अनुवादत्वायोगात्। तदा हि स्वरूपानन्दो गृह्यते। स्वरूपश्चाज्ञानोपहितमेव साक्षिविषयः।

ननु, तत्त्वमसीत्यादौ नवकृत्वोऽभ्यासवत्, पिपासितस्य जलगोचरप्रमाणसंप्लववदैक्ये षड्विधतात्पर्यलिङ्गवत्, भावरूपाज्ञानिप्रत्यक्षसिद्धे तम आसीदित्यादिश्रुतिवत् सत्त्वश्रुतिर्दार्ढ्यार्था इति चेत्।

---

कुतः इति चेत् सुखं सुप्तोऽस्मीति सौषुप्तसाक्षिप्रत्यक्षसिद्धस्य स्वरूपसुखस्यैव श्रुत्याऽनुवादात् तथा च सुखानुवादिन्या श्रुत्या आत्मनोऽपि आनन्दरूपत्वं न सिध्येदिति भावः। समाधत्ते सिद्धान्ती—न साक्षिण उपहितानन्दविषयत्वेन श्रुतेश्च निरुपाधिकानन्दविषयत्वेन भिन्नविषयत्वात् अनुवादत्वायोगात्। तदा हि स्वरूपानन्दो गृह्यते स्वरूपश्च अज्ञानोपहितमेव साक्षिविषयः। अज्ञानोपहितचैतन्यं साक्षि नानुपहितचैतन्यं सुषुप्तौ स्वरूपसुखाकारा अविद्यावृत्तिर्जायते। अविद्यावृत्तिकवलितं साक्षिस्वरूपसुखं सुषुप्तौ गृह्यते आनन्दश्रुतिश्च निरुपाधिकानन्दविषयिणी तथा च उपहितानुपहितत्वेन आनन्दस्य भेदात् न श्रुतेरनुवादत्वमिति भावः। उपहितविषयकस्य शुद्धविषयकत्वनियमोऽपि बाधकाभावे सत्येव उक्तनियमः प्रकृते तु शुद्धानन्दस्याज्ञानावृतत्वमेव बाधकमिति भावः। गृहीतग्राहित्वेनानुवादकत्वेऽपि न दोषः दार्ढ्यहेतुत्वात् अत एव गृहीतस्य दार्ढ्याय प्रमाणसंप्लवोऽपि प्रामाणिकैरङ्गीक्रियते इत्याह पूर्वपक्षी ननु तत्त्वमसीत्यादौ नवकृत्वोऽभ्यासवत्, पिपासितस्य जलगोचरप्रमाणसंप्लववत्, ऐक्ये षड्विधतात्पर्यलिङ्गवत् भावरूपाज्ञाने प्रत्यक्षसिद्धे तम आसीदित्यादिश्रुतिवत् सत्त्वश्रुतिदार्ढ्यार्थम् इति चेत्। छान्दोग्ये षष्ठप्रपाठके तत्त्वमसीत्युपदेशस्य नवकृत्वोऽभ्यासः श्रूयते। सकृदुपदेशेनैव उद्दिष्टार्थप्रतीतिसिद्धौ यथा अभ्यासो दार्ढ्याय पिपासितस्येति हेतुगर्भविशेषणमत्यन्ततृषितत्वादेव एकप्रमाणोक्तौ विश्वासाभावात् एकजलरूपार्थविषयकलिङ्गशब्दादिबहुप्रमाणापेक्षावत्, जीवब्रह्मणोरैक्ये उपक्रमादिषड्विधतात्पर्यलिङ्गवत् एकेनैव लिङ्गेन तात्पर्यनिर्णयेऽपि लिङ्गान्तराणि यथा तात्पर्यनिर्णयदार्ढ्याय अपेक्ष्यन्ते तद्वत् प्रकृतेऽपि अहमज्ञ इति प्रत्यक्षसिद्धे भावरूपाज्ञाने भावरूपाज्ञान-

न, अशेषविशेषग्राहिप्रत्यक्षप्राप्ते तद्दाढर्चार्थमन्यानपेक्षणात् । पिपासितस्य शब्दलिङ्गानन्तरं जले प्रत्यक्षमपेक्षितं, न तु प्रत्यक्षानन्तरं शब्दलिङ्गे । न च तर्हि तम आसीदित्यादेः न किञ्चिदवेदिषमिति प्रत्यक्षसिद्धाज्ञानदाढर्चार्थत्वं न स्यादिति वाच्यम् तम आसीदित्यस्य सृष्टिपूर्वकालसम्बन्धित्वेनाज्ञानग्राहितया सुषुप्तिकालसम्बन्धित्वेनाज्ञानग्राहकं प्रत्यक्षमपेक्ष्य भिन्नविषयत्वेनैव प्रामाण्यसम्भवात् ।

---

प्रतिपादक तम आसीत् तमसा गूढमग्रे इत्यादि नासदासीयसूक्तवत् प्रत्यक्षसिद्धेऽपि विश्वसत्यत्वे विश्वं सत्यमित्यादिश्रुतिर्विश्वसत्यत्वदाढर्चार्था इति नानुवादो दोषाय इति भावः । दाढर्चार्थमनुवादस्यादोषत्वेऽनुवादकत्वदोषस्यैव उच्छेदः स्यादित्याह—सिद्धान्ती—

नाशेषविशेषग्राहिप्रत्यक्षप्राप्ते तद्दार्ढचार्थमन्यानपेक्षणात् । पिपासितस्य शब्दलिङ्गानन्तरं जलप्रत्यक्षमपेक्षितं न तु प्रत्यक्षानन्तरं शब्दलिङ्गे । न च तर्हि तम आसीदित्यादेः न किञ्चिदवेदिषमिति प्रत्यक्षसिद्धाज्ञानदार्ढ्यार्थत्वं न स्यादिति वाच्यं ? तम आसीदित्यस्य सृष्टिपूर्वकालसम्बन्धित्वेनाज्ञानग्राहितया सुषुप्तिकालसम्बन्धित्वेनाज्ञाने ग्राहकं प्रत्यक्षमपेक्ष्य भिन्नविषयत्वेनैव प्रामाण्यसम्भवात् ।

यावद्विशेषग्राहिप्रत्यक्षसिद्धे तद्दार्ढ्यार्थमन्यस्यापेक्षैव न स्यात् पिपासितस्य जले प्रमाणसंप्लवस्तु जले प्रत्यक्षमपेक्षितमिति जलप्रत्यक्षात् प्राक् जलविषयकशब्दलिङ्गयोरपेक्षितत्वेऽपि , जलप्रत्यक्षानन्तरं शब्दलिङ्गे नापेक्षेते इति न कुत्रापि दार्ढ्यार्था प्रमाणान्तरापेक्षा । तदसहमानः पूर्वपक्षी शंकते—न च तर्हीति । सुप्तोत्थितस्य न किञ्चिदवेदिषमितिस्मृतिः सौषुप्तसाक्षिप्रत्यक्षसिद्धाज्ञानविषया । तया स्मृत्या सौषुप्तसाक्षिप्रत्यक्षसिद्धमज्ञानं पुनः तम आसीदित्यादिश्रुत्यापि तद्दार्ढ्यायैव अनूद्यते । अन्यथा अनुवादिनी श्रुतिरप्रमाणं स्यात् । समाधत्ते श्रुतिप्रत्यक्षयोर्भिन्नविषयत्वेनानुवादशंकैव नास्तीत्याह—श्रुत्या सृष्टिपूर्वकालसम्बन्धित्वेन अज्ञानं गृह्यते साक्षिणा च सुषुप्तिकालसम्बन्धित्वेनाज्ञानं गृह्यते अतः श्रुतिप्रत्यक्षयोर्भिन्नविषयत्वमेव नानुवादत्वशंका । प्रत्यक्षप्राप्तस्य जगत्सत्यस्याद्वैतश्रुत्या अपोदितस्य प्रतिप्रसवार्थं विश्वं सत्यमिति

ननु षड्विंशतिरस्य वंक्रयः इति मन्त्रस्य अश्वमेधे चोदकप्राप्तस्य चतुस्त्रिंशद्वाजिनो देवबन्धोरिति वैशेषिकमन्त्रेण अपोदितस्य षड्विंशतिरित्येव ब्रूयादिति वचनवत् प्रत्यक्षप्राप्तजगत्सत्त्वस्य मिथ्यात्वश्रुत्यापाततोऽपोदितस्य प्रतिप्रसवार्थं सत्त्वश्रुतिरिति चेत् ।

न, मिथ्यात्वश्रुतेः प्रत्यक्षबाधकत्वाभ्युपगमे तस्याः बलवत्त्वेन

---

श्रुतिः प्रवर्तते इति प्रतिप्रसवार्था विश्वसत्यत्वश्रुतिरिति शंकते पूर्वपक्षी—

**ननु षड्विंशतिरस्य वंक्रय इति अश्वमेधे चोदकप्राप्तस्य चतुस्त्रिंशद्वाजिनो देवबन्धोरिति वैशेषिकमात्रेणापोदितस्य षड्विंशतिरित्येव ब्रूयादिति वचनवत् प्रत्यक्षप्राप्तजगत्सत्यत्वस्य मिथ्यात्वश्रुत्या आपाततो अपोदितस्य प्रतिप्रसवार्थं सत्त्वश्रुतिरिति चेत् ।**

नवमाध्याये चतुर्थपादे चिन्तितं अग्निष्टोमीयपशौ श्रूयते षड्विंशतिरस्य वंक्रयः ताः आनुष्ट्याच्यावयतादिति । अस्यायमर्थः अग्निष्टोमीयपशोर्वंक्रयः पार्श्वस्थास्थीनि षड्विंशतिसंख्यकानि एकैकस्मिन् पार्श्वे त्रयोदशानामवस्थितत्वात् ताश्च वंक्रीः अनुष्ट्य अनुक्रमेण गणयित्वेति यावत् । उच्यावयतात्—उद्धरतात् इति । षड्विंशतिवंक्रीकपशुयुताग्निष्टोमीये प्रकृतिके अश्वमेधे श्रूयते "चतुस्त्रिंशद् वाजिनो देवबन्धोः वंक्रीरश्वस्येति तथा न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयादिति च ।" तत्र सन्देहः किं चोदकप्राप्तस्य षड्विंशतिरिति मन्त्रस्य बाधोऽस्तु उत नेति तत्राश्वमेधे प्रकृतिवद् विकृतिः कर्तव्येति चोदकेन षड्विंशतिमन्त्रप्राप्तौ चतुस्त्रिंशदिति वैशेषिकमन्त्रस्य प्रेषणपठितस्य बाधायोगात् चोदकप्राप्तस्यैव बाध इति प्राप्ते षड्विंशतिरित्येव ब्रूयादिति प्रतिप्रसवसद्भावात् "अपवादस्यापवादे पुनरुत्सर्गस्यैवावस्थिति"रिति न्यायेन चोदकप्राप्तः षड्विंशतिरस्येतिमन्त्र एव प्रयोक्तव्यः अतो न तस्य बाधः । चतुस्त्रिंशदित्यस्य तु मन्त्रस्यास्मात् प्रकरणात् स्थानान्तरं प्रति उत्कर्षः कार्यः इति सिद्धान्तः । तद्वत्प्रत्यक्षप्राप्तजगत्सत्यत्वस्य जगन्मिथ्यात्वश्रुत्या आपाततो अपोदितस्य पुनः विश्वसत्यत्वश्रुत्या अपवादस्य अपवादे विश्वसत्यत्वमेव स्थितं किं न स्यात् अपवादप्रतिप्रसवार्थी विश्वसत्यत्वश्रुतिः किं न स्यादिति पूर्वपक्षिणः शंका । समाधत्ते सिद्धान्ती—न, मिथ्यात्वश्रुतेः प्रत्यक्ष-

तद्विरोधात् । सत्यत्वश्रुतेरन्यपरत्वाद्देवताधिकरणन्यायासम्भवाच्च प्रतिप्रसवार्थत्वस्य वक्तुमशक्यत्वात् ।

ननु सत्त्वप्रत्यक्षप्रामाण्ये तेनैव मिथ्यात्वश्रुत्यनुमानादिबाधः । तदप्रामाण्ये न तेन सत्त्वश्रुतेरनुवादकत्वमिति चेत् ॥५॥

---

बाधकत्वाभ्युपगमे तस्याः बलवत्त्वेन तद्विरोधात् सत्यत्वश्रुतेरन्यपरत्वात् देवताधिकरणन्यायासम्भवाच्च प्रतिप्रसवार्थत्वस्य वक्तुमशक्यत्वात् । मिथ्यात्वश्रुतेः प्रपञ्चसत्यत्वप्रत्यक्षरूपप्रतिपक्षवत्त्वेन कथंचित् सत्त्वस्वश्रुतिबाध्यतापि स्यान्न मिथ्यात्वश्रुतेः प्रपञ्चसत्यत्वप्रत्यक्षबाधकत्वाभ्युपगमे तु प्रबलायाः मिथ्यात्वश्रुतेः विरोधात् विश्वसत्यत्वश्रुतितः विश्वसत्यत्वं न सिध्येत् । न च देवताधिकरणन्यायात्रकाशः । देवताधिकरणे हि अन्यपरादपि श्रुतिवाक्यात् स्वार्थसिद्धिः स्यात् यदि बाधकप्रमाणं न तिष्ठेत् । साधकबाधकप्रमाणाभावे अन्यपरादपि श्रुतिवाक्यात् योऽर्थः प्रतीयते सोऽपि सिध्यति । तथा च देवतायाः विग्रहादिपञ्चकप्रतिपादकत्वात् [ मन्त्रात् ] देवतास्तुतिपरात् साधकबाधकप्रमाणाभावात् देवताविग्रहपञ्चकस्य सिद्धिर्भवति । अयमेव देवताधिकरणन्यायः ब्रह्मसूत्रप्रथमाध्यायतृतीयपादे निरूपितः । तथैवात्रापि स्तुतिपरादपि विश्वं सत्यमिति मन्त्रात् विश्वसत्यत्वसिद्धिः तदैव भवितुमर्हति यदि बाधकप्रमाणं न स्यात् । अस्तीत्यत्र बाधकं प्रमाणम् । प्रपञ्चमिथ्यात्वश्रुतिः प्रपञ्चसत्यत्वप्रत्यक्षबाधिका प्रबला । मिथ्यात्वश्रुतेः प्रत्यक्षबाधकत्वानभ्युपगमे विश्वसत्यत्वश्रुतिः प्रत्यक्षसिद्धद्वैतसत्यत्वानुवादिन्येव स्यात् । ननु सत्यश्रुतेः प्रमाणत्वस्यावश्यकत्वात् तस्य सत्त्वपरत्वमित्येव आह—सत्यत्वश्रुतेरन्यपरत्वात्, देवतास्तुतिपरत्वादित्यर्थः । विश्वं सत्यमितिमन्त्रस्य देवतास्तुतिपरत्वं प्रारम्भे एव दर्शितम् । प्रपञ्चमिथ्यात्वश्रुतेरज्ञातज्ञापकत्वेन प्रामाण्यस्यावश्यकत्वात् विश्वसत्यत्वश्रुतेः प्रत्यक्षसिद्धव्यावहारिकसत्त्वानुवादकतया देवतास्तुतिपरत्वमेव । प्रपञ्चस्य सत्यत्वे तु व्यावहारिकमिथ्यात्वप्रतिपादिन्यपि मिथ्यात्वश्रुतिर्न स्यात् । अपवादापवादो हि प्रतिप्रसवः । प्रत्यक्षसिद्धविश्वसत्यत्वापवादिकायाः प्रपञ्चमिथ्यात्वश्रुतेः विश्वसत्यत्वश्रुत्यापवादकत्वसम्भवात् न प्रतिप्रसवो भवितुमर्हति । विश्वसत्यत्वश्रुत्या यथा प्रपञ्चमिथ्यात्वश्रुतेरपवादो न भवितुमर्हति तथा अधस्तादेवोक्तम् । विश्वसत्यत्वश्रुतेरनुवादत्वपरिहाराय पूर्वपक्षी शंकते—ननु सत्त्वप्रत्यक्षप्रामाण्ये तेनैव

न, प्रत्यक्षाप्रामाण्येऽपि तत्सिद्धबोधकस्यानुवादकत्वसम्भवात्। न हि प्रमितप्रमापकत्वमनुवादकत्वम्। किन्तु पश्चाद्बोधकत्वमात्रम्। पश्चात्त्वञ्च प्रमाणावधिकमप्रमाणावधिकञ्चेति न कश्चिद् विशेषः।

न च श्रुतेः सर्वसिद्धप्रमाणभावायाः सदर्थत्वाय अननुवादकत्वाय च प्रत्यक्षाप्राप्ततात्त्विकसत्त्वविषयत्वमवश्यं वक्तव्यम्। तथाचाप्रमाणेन प्रत्यक्षेण कथं श्रुतेरनुवादकत्वमिति वाच्यम्।

---

मिथ्यात्वश्रुत्यनुमानादिबाधः। तदप्रामाण्ये न तेन सत्त्वश्रुतेरनुवादकत्वमिति चेत्। प्रपञ्चसत्यत्वप्रत्यक्षस्य प्रामाण्येऽभ्युपगम्यमाने तेन प्रमाणभूतेन प्रत्यक्षेणैव प्रपञ्चमिथ्यात्वश्रुतिः प्रपञ्चमिथ्यात्वानुमानञ्च बाध्यते। विश्वसत्यत्वप्रत्यक्षस्याप्रामाण्ये न विश्वसत्यत्वश्रुतेरनुवादकत्वम्। प्रमाणसिद्धं ह्यर्थं श्रुतिरनुवदति। प्रमाणासिद्धमर्थं कथं श्रुतिरनुवदेत्। विश्वसत्यत्वश्रुतेरनुवादत्वाय तथापि विश्वसत्यत्वप्रत्यक्षस्य प्रामाण्यं स्वीकार्यम्। स्वीकृते च प्रामाण्ये तेनैव मिथ्यात्वश्रुतिमिथ्यात्वानुमानयोर्बाधः स्यात् इति पूर्वपक्षः ॥५॥

६—सिद्धान्तमाह—न प्रत्यक्षाप्रामाण्येऽपि तत्सिद्धबोधकस्यानुवादकत्वसम्भवात्। नहि प्रमितप्रापकत्वमनुवादकत्वम्। किन्तु पश्चाद् बोधकत्वमात्रम्। पश्चात्त्वञ्च प्रमाणावधिकमप्रमाणावधिकञ्चेति न कश्चिद् विशेषः। प्रपञ्चसत्यत्वग्राहिप्रत्यक्षस्याप्रामाण्येऽपि अप्रमाणप्रत्यक्षगृहीतस्य प्रपञ्चसत्यत्वस्य श्रुत्या अनुवादसम्भवात्। नहि प्रमितस्यैव कथनमनुवादः किन्तु पश्चाद्बोधकत्वमनुवादः, गृहीतग्राहित्वमात्रम्। गृहीतञ्च प्रमाणेनाप्रमाणेन वेति न कश्चिद्विशेषः। प्रमाणगृहीतस्य बोधकत्वे यथा अनुवादः, तथा अप्रमाणगृहीतस्यापि बोधकत्वेऽनुवादः। प्रमाणमनुबोधकत्वम्, अप्रमाणमनुबोधकत्वं वेत्युभयथापि अनुवादकत्वमव्याहतमेव। श्रुतेः प्रामाण्यनिर्वाहायाऽपि विश्वसत्यत्वश्रुतेरनुवादकत्वं वक्तव्यम् इत्याह पूर्वपक्षी—न च श्रुतेः सर्वसिद्धप्रमाणभावायाः सदर्थत्वाय अननुवादकत्वाय च प्रत्यक्षाप्राप्ततात्त्विकसत्त्वविषयकत्वमवश्यं वक्तव्यम्। तथा चाप्रमाणेन प्रत्यक्षेण कथं श्रुतेरनुवादकत्वमिति वाच्यम्। श्रुतेः प्रामाण्यं सर्वसिद्धम्। वादिप्रतिवादिनोरुभयोरेव श्रुतिप्रामाण्यं सम्मतमेव। यत् प्रमाणं तदनधिगताबाधितार्थविषयकम्।

सत्त्वांशस्य प्रत्यक्षसिद्धत्वेऽपि वाक्यार्थस्य क्रियादिसमभिव्याहारसिद्धस्य अपूर्वत्वेन तद्विषयतयैव अननुवादकत्वोपपत्तौ अद्वैतश्रुतिविरुद्धतात्त्विकसत्त्वविषयत्वकल्पनायास्तदर्थमयोगात्। परमार्थसद्विषयता तु सर्वश्रुतीनां शुद्धब्रह्मतात्पर्यकत्वेनैव। अवान्तरतात्पर्यमादाय व्यावहारिकसद्विषयतेति कर्मकाण्डप्रामाण्योपपादने वक्ष्यते।

---

तथा च श्रुतेः प्रामाण्यरक्षणाय तस्याः सदर्थकत्वमर्थादबाधितार्थविषयकत्वं अननुवादकत्वञ्च त्वयापि वक्तव्यम्। श्रुतेरननुवादकत्वाय प्रत्यक्षप्राप्तसत्यत्वप्रतिपादकत्वं नाङ्गीकरणीयम्। किन्तु प्रत्यक्षाप्राप्ततात्त्विकसत्त्वविषय[क]त्वमेव वक्तव्यम्, प्रत्यक्षस्य च व्यावहारिकसत्त्वविषयकत्वात्। तथा च व्यावहारिकसत्त्वविषयकेण प्रत्यक्षेण तात्त्विकसत्त्वविषयिण्याः श्रुतेरनुवादकत्वं कथम्? प्रत्यक्षश्रुत्योर्विषयभेदात्। समाधत्ते सिद्धान्ती—सत्त्वांशस्य प्रत्यक्षसिद्धत्वेऽपि वाक्यार्थस्य क्रियाकारकादिसमभिव्याहारसिद्धस्यापूर्वत्वेन तद्विषयतयैव अननुवादकत्वोपपत्तौ अद्वैतश्रुतिविरुद्धतात्त्विकसत्त्वविषयकत्वकल्पनायास्तदर्थमयोगात्। परमार्थसद्विषयता तु सर्वश्रुतीनां शुद्धब्रह्मतात्पर्यकत्वेनैव। अवान्तरतात्पर्यमादाय व्यावहारिकसद्विषयतेति कर्मकाण्डप्रामाण्योपपादने वक्ष्यते। विश्वं सत्यं मघवाना इति कृत्स्नमन्त्रे तदेकदेशविश्वसत्त्वांशस्य प्रत्यक्षसिद्धत्वेऽपि कृत्स्नवाक्यार्थस्य स्तुतिरूपस्य क्रियाकारकादिसमभिव्याहारः सिद्धिश्च अपूर्वत्वेन मानान्तरानधिगतत्वेन मानान्तरानधिगतस्तुतिरूपविषयकत्वेनैव मन्त्रस्याननुवादकत्वोपपत्तौ मन्त्रस्याननुवादकत्वाय अद्वैतश्रुतिविरुद्धपारमार्थिकविश्वसत्त्वविषयकत्वस्य कल्पनाया अयोगात्। सर्वत्र वाक्ये वाक्यार्थघटकपदार्थस्यानुवाद्यत्वेऽपि पदार्थसंसर्गरूपवाक्यार्थस्यापूर्वतया अननुवादकत्वोपपत्तिः। वाक्यार्थस्यापूर्वत्वाय पदार्थस्य वाक्यार्थांशस्य वा अपूर्वत्वं नापेक्षितम्। सर्वत्र पदार्थस्यानुवाद्यत्वमेव। सर्वासां श्रुतीनां शुद्धब्रह्मतात्पर्यकत्वेनैव परमार्थसद्विषयता। शुद्धं ब्रह्मैव परमार्थसत्। तत्रैव सर्वेषां श्रुतिवाक्यानां चरमतात्पर्यात्। सर्वेषां श्रुतिवाक्यानां शुद्धे ब्रह्मणि परमतात्पर्येऽपि अवान्तरतात्पर्यमादाय तेषां व्यावहारिकसद्विषयता इति कर्मकाण्डप्रामाण्योपपादने वक्ष्यते। व्यावहारिके कर्मकाण्डे श्रुतीनामवान्तरतात्पर्यम्, परमतात्पर्यन्तु शुद्धे ब्रह्मण्ये-

न च प्रत्यक्षं स्वप्रामाण्यनिर्णयार्थं श्रुतिसंवादमपेक्षत इति न तेन श्रुतेरनुवादकत्वम्। अन्यथा सत्यं ज्ञानं, नेह नानेत्यादिश्रुतिरप्यनुवादिनी स्यात्। ब्रह्मसत्त्वस्य लोकतो भ्रमाधिष्ठानत्वेन लिङ्गेन च मिथ्यात्वस्य दृश्यत्वाद्यनुमानेन अवेदमूलप्रवाहानादिविज्ञानवादिना च प्राप्तेरिति वाच्यम्।

---

व। यस्मिन्नर्थे सर्वेषां तात्पर्यनिर्णायकलिङ्गानामुपक्रमादीनां समवधानं तत्रैव परमतात्पर्यम्। अन्यत्र अवान्तरतात्पर्यम् इति चरमावान्तरतात्पर्ययोर्विवेकः। प्रकारान्तरेण पूर्वपक्षी विश्वसत्यत्वश्रुतेरननुवादकत्वं शङ्कते—न च प्रत्यक्षं स्वप्रामाण्यनिर्णयार्थं श्रुतिसंवादमपेक्षत इति न तेन श्रुतेरनुवादकत्वम्। अन्यथा सत्यं ज्ञानं, नेह नानेत्यादिश्रुतिरप्यनुवादिनी स्यात्। ब्रह्मसत्त्वस्य लोकतो भ्रमाधिष्ठानत्वेन लिङ्गेन च मिथ्यात्वस्य दृश्यत्वाद्यनुमानेन अवेदमूलप्रवाहानादिविज्ञानवादेन च प्राप्तेरिति वाच्यम्। प्रत्यक्षं स्वप्रामाण्यनिर्णयाय श्रुतिसंवादापेक्षं सन्न श्रुत्यनुवादकत्वापादकमिति वक्तुं शक्यम्। अन्यौष्ण्यप्रत्यक्षस्य प्रामाण्यानिश्चये अग्निर्हिमस्य भेषजमित्यादिरपि अनुवादो न स्यादेव। अन्यथेति—विश्वसत्यत्वश्रुतेः प्रत्यक्षप्राप्तसत्यत्वानुवादकत्वे सत्यं ज्ञानं, नेह नानेति श्रुतिरप्यनुवादिनी स्यात्। ननु ब्रह्मसत्त्वस्याप्राप्तत्वात् कथमनुवादकत्वमित्यत आह—लोकत इति। सत्सुखस्फुरणमिति लौकिकप्रत्यक्षेणेत्यर्थः। न च ब्रह्मत्वसामानाधिकरण्येन सत्त्वं न लौकिकप्रत्यक्षसिद्धमिति वाच्यम्, स्फुरणस्यैव ब्रह्मत्वादिति भावः। ब्रह्मसत्त्वस्य लोकत इति—सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते इति मण्डनोक्तरीत्या ब्रह्मणः सर्वलौकिकप्रत्ययवेद्यत्वाभ्युपगमात् ब्रह्मसत्त्वस्य लोकतः सिद्धिः। भ्रमाधिष्ठानत्वेन लिङ्गेनेति—यद् भ्रमाधिष्ठानं तत् सदिति दर्शनात् जगत्भ्रमाधिष्ठानं ब्रह्म सदिति सिद्धान्तिरीत्या अनुमानेनेत्यर्थः विश्वमिथ्यात्वप्रतिपादिकायाः नेह नानेति श्रुतेरपि अनुवादित्वमित्याह—विश्वं मिथ्या दृश्यत्वादित्यनुमानेन सिद्धस्य मिथ्यात्वस्यानुवादिनी नेह नानेति श्रुतिः स्यात्। अवेदमूलप्रवाहानादीति—नन्वनादिश्रुतेः कथं वादिप्राप्तानुवादि[त्वम्]? अत उक्तं प्रवाहानादीति। अवेदमूलप्रवाहानादिविज्ञानवादिबौद्धपरिकल्पितो विज्ञानवादः अवेदमूलोऽपि

यदि हि दृष्टेऽप्यर्थे प्रत्यक्षं स्वप्रामाण्यनिर्णयाय श्रुतिसंवादमपेक्षेत तदा श्रुतिसंवादविरहिणि दृष्टे कुत्रापि निःशङ्कप्रवृत्तिर्न स्यात्। न स्याच्चैवमग्निर्हिमस्य भेषजमित्याद्यपि अनुवादकम्। न चेष्टापत्तिः, मानान्तरगृहीतप्रमाणभावप्रत्यक्षनिर्णीते मानान्तरस्य अननुवादकत्वे जगति अनुवादकत्वकथोच्छेदप्रसंगात्। न च सत्यं ज्ञानं, नेह नानेत्यादेरप्यनुवादकतापत्तिः, अनुवादकता हि न तावत् प्रत्यक्षेण, ब्रह्मत्वसामानाधिकरण्येन सत्त्वादिकं हि अनेन प्रतिपादनीयम्, तच्च न प्रत्यक्षगम्यम्। नाप्यनुमानेन, न हि तर्कः सर्वदेशकालीनपुरुषसाधारण इत्यादिना प्रागेव निराकृतत्वात्। नापि प्रवाहानादिविज्ञानवादिमतेन, तस्यापौरुषेयश्रुत्यवधिकपूर्वत्वाभावात्। न च सत्त्वश्रुतेः सत्त्वप्रत्यक्षान-

---

प्रवाहरूपेणानादिः। अनादिविज्ञानवादप्रापितविश्वमिथ्यात्वस्यानुवादिनी नेह नानेति श्रुतिः स्यात्। यदि प्रदर्शितस्थलेषु श्रुतेर्नानुवादत्वं तर्हि प्रत्यक्षप्राप्तविश्वसत्यत्वस्य नानुवादिनी विश्वं सत्यमिति श्रुतिः। समाधत्ते सिद्धान्ती—"यदि हि दृष्टेऽप्यर्थे प्रत्यक्षं स्वप्रामाण्यनिर्णयाय श्रुतिसंवादमपेक्षेत तदा" श्रुतिसंवादविरहिणि दृष्टे कुत्रापि निःशंकप्रवृत्तिर्न स्यात्। न स्याच्चैवमग्निर्हिमस्य भेषजमित्याद्यपि अनुवादकम्। न चेष्टापत्तिः, मानान्तरगृहीतप्रमाणभावप्रत्यक्षनिर्णीते मानान्तरस्याननुवादकत्वे जगति अनुवादकत्वकथोच्छेदप्रसंगात्। न च सत्यं ज्ञानं, नेह नानेत्यादेरनुवादकत्वापत्तिः, अनुवादकता हि न तावत् प्रत्यक्षेण, ब्रह्मत्वसामानाधिकरण्येन सत्त्वादिकं हि अनेन प्रतिपादनीयं, तच्च न प्रत्यक्षगम्यम्। नाप्यनुमानेन; न हि तर्कः सर्वदेशकालीनपुरुषसाधारणेत्यादिना प्रागेव निराकृतत्वात्। नापि प्रवाहानादिविज्ञानवादिमतेन, तस्यापौरुषेयश्रुत्यवधिकपूर्वत्वाभावात्। पूर्वपक्षिणा यदुक्तं प्रत्यक्षं स्वप्रामाण्यनिर्णयार्थं श्रुतिसंवादमपेक्षते इति न प्रत्यक्षेण श्रुतेरनुवादकत्वं तदतीव तुच्छम्। यदि हि दृष्टेऽप्यर्थे प्रत्यक्षं स्वप्रामाण्यनिर्णयाय श्रुतिसंवादमपेक्षेत, श्रुतिसंवादमपेक्ष्यैव प्रत्यक्षस्य प्रामाण्यनिर्णयः स्यात् तर्हि श्रुतिसंवादविरहिणि दृष्टेऽर्थे कुत्रापि निःशंकप्रवृत्तिर्न स्यात्। श्रुतिसंवादविरहितदृष्टार्थग्राहकप्रत्यक्षस्य श्रुतिसंवादविरहेण

प्रामाण्यानिर्णयात्। अनिर्णीतप्रामाण्यकप्रत्यक्षेतः निःशंकप्रवृत्तिर्न भवितुमर्हति। अन्यच्च, दृष्टेऽप्यर्थे प्रत्यक्षं यदि स्वप्रामाण्यनिर्णयाय श्रुतिसंवादमपेक्षेत इति कृत्वा प्रत्यक्षेण न श्रुतेरनुवादकत्वं तर्हि अग्निर्हिमस्य भेषजमित्याद्यपि प्रत्यक्षेण नानुवादकं स्यात्। अग्नेर्हिमनिवारकत्वं प्रत्यक्षसिद्धमिति कृत्वैव अग्निर्हिमस्य भेषजमिति श्रुतिरनुवादिनी। प्रत्यक्षमपि यदि स्वप्रामाण्यनिर्णयाय श्रुतिसंवादमपेक्षेत तेन प्रत्यक्षेण श्रुतेरनुवादकत्वे अग्निर्हिमस्य भेषजमिति श्रुतिरपि नानुवादिनी स्यात्। न चेष्टापत्तिः, मानान्तरगृहीतप्रामाण्यकप्रत्यक्षनिर्णीतेऽप्यर्थे मानान्तरस्याननुवादकत्वे जगति अनुवादकथोच्छेदप्रसंगात्। अग्नेर्हिमनिवारकत्वविषयकं प्रत्यक्षमर्थक्रियाकारित्वादिभिः मानान्तरैः गृहीतप्रामाण्यकमेव। तेनापि निर्णीते मानान्तरस्याननुवादकत्वेऽनुवादकत्वकथैव उच्छिद्येत। यच्चोक्तं पूर्वपक्षिणा सत्यं ज्ञानमिति श्रुतिरप्यनुवादिनी स्यात् तदप्ययुक्तम्। कुत इति चेत्? सत्यं ज्ञानमित्यादिश्रुत्या ब्रह्मत्वसामानाधिकरण्येन सत्तादिकं प्रतिपाद्यते। न च तत् सत्तादिकं सन् घट इत्यादिप्रत्यक्षेण मण्डनरीत्या वा ब्रह्मत्वसामानाधिकरण्येन गृह्यते। ब्रह्मत्वसामानाधिकरण्येन सत्तादिकं न प्रत्यक्षगम्यम्। नापि अनुमानेन, नहि तर्कः सर्वदेशकालीनपुरुषसाधारण इत्यादिना प्रागेव निराकृतत्वात्। मिथ्यात्वानुमितेः शैत्यानुमितिसाम्यभंगप्रकरणे उक्तं स्वस्वचमत्कारानुसारिणोऽनुमानस्य सकलसाधारण्याभावेन तस्य श्रुत्यनुवादकत्वाप्रयोजकत्वात्। [पृ० ३८७] उक्तञ्च वाचस्पतिमिश्रैः—

"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥" इति।

नहि तर्क इत्यत्र तर्कपदमनुमानपरम्। अनुमानस्य सर्वपुरुषसाधारण्याभावेन सर्वपुरुषसाधरणीभूतायाः श्रुतेः असाधारणानुमानेनानुवादत्वम्। स्वस्वबुद्धिचमत्कारशालिनः पुरुषस्यैवानुमानप्रवृत्तिः। श्रुतिस्तु सर्वसाधारणी। अतः प्रमातृभेदात् नानुमानेन श्रुतेरनुवादत्वम्। नापि विज्ञानवादेन श्रुतेरनुवादत्वम्। विज्ञानवादस्य श्रुत्यवधिकपूर्वत्वाभावात्। किञ्च विज्ञानवादे प्रपञ्चस्य ज्ञानातिरिक्तकालीनत्वं स्वीक्रियते, न तु मिथ्यात्वम्। श्रुत्या मिथ्यात्वं प्रतिपाद्यते, अतो भिन्नविषयत्वात् कथं विज्ञानवादेन श्रुतेरनुवादत्वम्। मूले विज्ञानवादादिमतेन इति आदिपदेन

पेक्षत्वात् न सापेक्षानुवादकत्वम्। निरपेक्षानुवादकत्वं तु धारावहन-वन्नाप्रामाण्यहेतुः। उक्तं हि नयविवेके—सापेक्षानुवादे हि न प्रमितिः, न तु दैवादनुवादे धारावहनवदिति वाच्यम् ॥६॥

यतो लाघवादनुवादकत्वमेवाप्रामाण्ये प्रयोजकम्, न तु सापेक्षानुवादकत्वम्। अनधिगतार्थबोधकत्वस्य प्रामाण्यघटकत्वस्य तावतैव गतार्थत्वात्। न च तर्हि धारावहनबुद्धौ अप्रामाण्यम्, तस्याः वर्त-

---

शून्यवादस्य परिग्रहः। शून्यवादे ज्ञानज्ञेयादिसर्वप्रपञ्चस्य मिथ्यात्वं स्वीक्रियते। श्रुत्या तु ज्ञेयस्यैव मिथ्यात्वम्, न तु ज्ञानस्य, तस्य पारमार्थिकसत्त्वप्रतिपादनात् शून्यवादेनापि श्रुतेर्नानुवादकत्वशंका। अनुवादस्य पुरोवादसापेक्षत्वात् श्रुतेरनुवादत्वे विज्ञानवादस्य पुरोवादत्वं वक्तव्यम्। श्रुत्यवधिकपूर्वत्वस्य विज्ञानवादेऽसिद्धत्वात् न तेन श्रुतेरनुवादत्वम्। अपौरुषेयश्रुत्यपेक्षयापि विज्ञानवादः पूर्वभावीति कथमपि न भवितुमर्हति। सत्त्वश्रुतेरनुवादित्वेऽपि न सापेक्षानुवादत्वम्। सापेक्षानुवादे हि अप्रामाण्यम्। न तु दैवादनुवादे इत्याह पूर्वपक्षी—न च सत्त्वश्रुतेः सत्त्वप्रत्यक्षानपेक्षत्वात् न सापेक्षानुवाद-कत्वम्। निरपेक्षानुवादकत्वं तु धारावहनवन्नाप्रामाण्यहेतुः। उक्तं हि नयविवेके—सापेक्षानुवादे हि न प्रमितिः न तु दैवादनुवादे धारा-वहनवदिति वाच्यम्। अयं भावः—अपौरुषेयी सत्त्वश्रुतिः न सत्त्वप्रत्यक्षमुप-जीव्य प्रवर्तते। अतः सत्त्वप्रत्यक्षानपेक्षत्वात् श्रुतेरनुवादत्वेऽपि न सत्त्वप्रत्यक्ष-सापेक्षानुवादत्वम्। निरपेक्षानुवादकत्वं तु नाप्रामाण्यहेतुः। अतो निरपेक्षानुवा-दिनी श्रुतिर्न अप्रमाणमिति भावः। धारावाहिकप्रत्यक्षवत्। धारावाहिकप्रत्यक्षे हि द्वितीयादिप्रत्यक्षं न प्रथमप्रत्यक्षमुपजीव्य उत्पद्यते। सर्वेषामेव प्रत्यक्षाणां निरपेक्ष-स्वस्वसामग्रीत एवोत्पत्तेः। तथा च धारावाहिकज्ञानानां सर्वेषामेव प्रामाण्यम्। प्रभाकरमतानुसारिणा भवनाथमिश्रेणापि नयविवेके उक्तं—सापेक्षानुवादे हि न प्रमितिः। ननु दैवादनुवादे, धारावहनवत्। निरपेक्षानुवादे न प्रामाण्यं वाक्यस्य यथा धारावाहिकबुद्धौ ॥६॥

७—समाधत्ते—यतो लाघवादनुवादकत्वमेवाप्रामाण्ये प्रयोजकम्, न तु सापेक्षानुवादकत्वम्। अनधिगतार्थबोधकत्वस्य प्रामाण्यघट-कत्वस्य तावतैव गतार्थत्वात्। न च तर्हि धारावहनबुद्धौ अप्रामाण्यम्,

मानार्थग्राहकत्वेन तत्तत्क्षणविशिष्टग्राहकतया अनुवादकत्वाभावात्। किन्तु श्रुतेरतत्परत्वे प्राप्तत्वमात्रमेव प्रयोजकम्। अन्यथा वैफल्येन स्वाध्यायविधिग्रहणानुपपत्तेः।

---

तस्या वर्तमानार्थग्राहकत्वेन तत्तत्क्षणविशिष्टग्राहकतया अनुवादकत्वा-भावात्। किन्तु श्रुतेरतत्परत्वे प्राप्तत्वमात्रमेव प्रयोजकम्। अन्यथा वैफल्येन स्वाध्यायविधिग्रहणानुपपत्तेः। अर्थेऽनुपलब्धे इति जैमिनि-शासनेन अनधिगतार्थबोधकत्वस्य प्रामाण्यघटकत्वं सापेक्षानुवादे निरपेक्षानुवादे वा उभयथापि अधिगतार्थबोधकत्वमेव स्यात् अधिगतार्थबोधकत्वे च अप्रामाण्यम्। अत उक्तं लाघवादनुवादकत्वमेवाप्रामाण्ये प्रयोजकमिति। सापेक्षानुवादकत्वमेव अधिगतार्थबोधकत्वं निरपेक्षानुवादकत्वं तु अनधिगतार्थबोधकत्वमिति तु केनापि वक्तुं न शक्यते। न च निरपेक्षानुवादेऽपि यद्यप्रामाण्यं तर्हि धारावाहिक-प्रत्यक्षाणामपि अप्रामाण्यं स्यात् प्रत्यक्षधारायां द्वितीयादिज्ञानस्य पूर्वप्रत्यक्षगृहीतार्थ-कत्वादिति वाच्यम्? तस्याः धारावहनबुद्धेः प्रत्यक्षज्ञानधारायाः इत्यर्थः, परो-क्षानुभवधारायां असम्भवात्। प्रत्यक्षस्य त्रियमाणोपलंभनत्वेन तत्तत्क्षणेति तत्तत्प्रत्यक्षज्ञानव्यक्त्यधिकरणक्षणविशेषितार्थविषयकत्वं तत्तत्प्रत्यक्षज्ञानव्यक्तेरित्यर्थः। तथा च धाराप्रत्यक्षस्य तत्तत्क्षणविशेषितार्थविषयकत्वेन अगृहीतार्थग्राहकत्वमेव। अतो धारावाहिकप्रत्यक्षं नानुवादकम्। उक्तञ्च तात्पर्यपरिशुद्धिप्रकाशे वर्धमानो-पाध्यायेन—प्रतीतेः समयविशेषविषयत्वनियमात्। ज्ञानसामग्रीमहिम्ना च अननुभूते समयांशे स्मृतिः, न तत्र संस्कारो व्यापारः, अन्यथासिद्धत्वात्।-अत एव पाकरक्ते श्यामोऽयमिति प्रतीतेरयथार्थव्यवहार इत्यादि। [पृ० १६४] स्मृतेरयथार्थत्वनिरूपणप्रसंगे वर्धमानोपाध्यायेन—अस्मत्पितृचरणास्त्वित्युक्त्वा एतत् सर्वमुक्तम्। तेन ज्ञानमात्रं ज्ञानसामान्यसामग्रीमहिम्ना ज्ञानाधिकरण-क्षणाविशेषितं ज्ञेयं विषयीकरोति। उक्तञ्च मीमांसकैः "न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते" इति। अत एवोक्तं लघुचन्द्रिकायां —वस्तुतो ज्ञानसामान्यस्य स्वोत्पत्तिक्षणविशिष्टार्थग्राहकत्वं स्वीक्रियते। तच्च न इन्द्रियसन्निकर्षादिकारणविशेषप्रयुक्तं किन्तु "न सोऽस्ति प्रत्ययो लोके" इत्यादिमीमांसकसिद्धान्ते, ज्ञानसामान्यस्य कारणं तादृशार्थविषयकमेव ज्ञानं

अपि चेयं सत्त्वश्रुतिरपि सत्त्वप्रत्यक्षसापेक्षत्वात् सापेक्षानुवादिन्येव नहि सत्त्वप्रत्यक्षं विना तन्मूलशक्त्यादिग्रहमूलकशब्दप्रवृत्तिसम्भवः। अत एव यत्र तु प्रमाणान्तरसंवादस्तत्र प्रमाणान्तरादिव अर्थवादादपि सोऽर्थः प्रसिध्यति; द्वयोः परस्परानपेक्षयोः प्रत्यक्षानुमानयोरिव एकार्थ-प्रवृत्तेः। प्रमात्रपेक्षया तु अनुवादकत्वम्। प्रमाता हि अव्युत्पन्नः, प्रथमं प्रत्यक्षादिभ्यो यथाऽर्थमवगच्छति, न तथा आम्नायतः। तत्र व्युत्पत्त्य-पेक्षत्वादिति। वाचस्पतिमतमप्येतमर्थं संवादयति। तेन आम्नायस्य व्युत्पत्त्यपेक्षत्वेन प्रत्यक्षसापेक्षत्वस्यैवोक्तेः।

---

जनयति इति नियमेन ज्ञानकारणमात्रनियम्यम्। किन्तु श्रुतेः प्राप्ते विषये तात्पर्याभावात् प्राप्ते विषये श्रुतिर्न प्रमाणम्। अपूर्वतायास्तात्पर्यलिङ्गत्वात्। प्राप्तेऽर्थेऽपि यदि श्रुतेः प्रामाण्यं स्यात्तर्हि श्रुतेः स्वाध्यायविधिग्रहणानु-पपत्तिः स्यादित्याह—अन्यथा वैफल्येनेति। अध्ययनस्य हि प्रयोजनवदर्थज्ञा-नोद्देशेन विधानं स्वाध्यायोऽध्येतव्य इति। न तु अक्षराव्याप्त्युद्देशेनेति भाट्टसिद्धान्ते आदर्शज्ञानस्यान्यतः सिद्धत्वात् तदुद्देशेनानुवादकवाक्यस्या-ध्ययनेऽध्ययनविधिना प्रवृत्तिर्न स्यादित्यर्थः। को हि नाम सुचेता ब्रह्मचर्याद्यने-कविधदुःखमनुभूय दीर्घकालमनुवादकवाक्यमधीयीत। निष्फले प्रेक्षावत्-प्रवृत्तेरनुपपत्तेरिति भावः। किञ्च अपि चेयं सत्त्वश्रुतिरपि सत्त्वप्रत्यक्षसा-पेक्षत्वात् सापेक्षानुवादिन्येव। न हि सत्त्वप्रत्यक्षं विना तन्मूलशक्त्या-दिग्रहमूलकशब्दप्रवृत्तिरसम्भवः। अत एव यत्र तु प्रमाणान्तरसंवादस्त-त्र प्रमाणान्तरादिव अर्थवादादपि सोऽर्थः प्रसिध्यति द्वयोः परस्परानपे-क्षयोः प्रत्यक्षानुमानयोरिव एकार्थे प्रवृत्तेः। प्रमात्रपेक्षया तु अनुवाद-कत्वम्। प्रमाता हि अव्युत्पन्नः, प्रथमं प्रत्यक्षादिभ्यो यथार्थमवगच्छति, न तथा आम्नायतः तत्र व्युत्पत्त्यपेक्षत्वादिति। वाचस्पतिमतमप्येतमर्थं संवादयति। तेनाम्नायस्य व्युत्पत्त्यपेक्षत्वेन प्रत्यक्षसापेक्षत्वस्यैवोक्तेः। परिहाररहस्यमुक्त्वा पूर्वपक्षिणमुपलालयन्नाह—अपि चेति। सापेक्षानुवादे एव प्रामाण्यहानिः, न निरपेक्षानुवादे इत्यत्र अभिनिविशमानं पूर्वपक्षिणं प्रति विश्वसत्यत्वश्रुतेः सापेक्षानुवादत्वमेव दर्शयन्नाह सत्त्वश्रुतिरपि सत्त्वप्रत्यक्ष-

न च वादिविप्रतिपत्तिनिरासप्रयोजनकत्वेन न निष्प्रयोजनानुवादकत्वं सप्रयोजनानुवादकत्वं तु न स्वार्थपरत्वविरोधि; विद्वद्वाक्ये समुदायद्वित्वापादनरूपप्रयोजनवत्त्वेनानुवाद्यस्वार्थपरताया दृष्टत्वात् अत एव तत्र वाक्यैकवाक्यता उक्ता, अन्यथा

---

सापेक्षत्वात् सापेक्षानुवादिन्येव । विश्वसत्यत्वश्रुतिः सापेक्षानुवादिनीत्यर्थः । कुत इति चेत् ? इत्याह—नहि सत्त्वप्रत्यक्षं विनेत्यादि । श्रुत्यन्तर्गतं सत्यपदं सत्यपदार्थे गृहीतसंकेतं सत् स्वार्थमुपस्थापयति, नान्यथा । सत्यपदार्थे सत्यपदस्य संकेतग्रहस्तु प्रत्यक्षादिप्रमाणान्तरेण सत्यपदार्थे उपस्थिते एव संभवति । सर्वथानुपस्थितेऽर्थे पदसंकेतग्रहासम्भवादित्याह—नहि सत्त्वप्रत्यक्षं विनेति । प्रमाणान्तरेणापि सत्त्वस्योपस्थितौ सत्त्वप्रत्यक्षमेव मूलम् । प्रत्यक्षपूर्वकत्वादितरेषां प्रमाणानाम् । सत्त्वप्रत्यक्षं विना सत्त्वप्रत्यक्षमूलसत्यशब्दशक्त्यादिग्रहमूलकशब्दप्रवृत्त्यसम्भवः । अगृहीतसंकेतेन पदेनार्थप्रतिपादनासम्भवात् । अत एव यत्र शब्दस्य प्रमाणान्तरसंवादः तत्र प्रमाणान्तरादिव प्रमाणान्तरसंवाद्यर्थवादादपि सोऽर्थः प्रसिध्यति । यथा अग्निर्हिमस्य भेषजमित्यादौ । संवादिसंवादप्रमाणयोर्द्वयोः परस्परानपेक्षयोः प्रमाणयोः द्वाभ्यामपि प्रमाणाभ्यां सोऽर्थः सिध्यति । यथा परस्परानपेक्षयोः प्रत्यक्षानुमानयोरेकत्रार्थे प्रवृत्तौ एवं प्रत्यक्षशब्दयोरपि परस्परानपेक्षयोरेकत्रार्थे प्रवृत्तौ प्रमात्रपेक्षया शब्दस्यानुवादकत्वम् । प्रत्यक्षशब्दयोः परस्परानपेक्षत्वेन कथं शब्दस्यैवानुवादकत्वम्, न प्रत्यक्षस्य । इत्यत आह—प्रमात्र्यपेक्षया तु शब्दस्यानुवादकत्वम् । यथा अव्युत्पन्नः प्रमाता प्रत्यक्षादिभ्यः प्रागर्थमवगच्छति, न तथा वेदवाक्यतः । वेदवाक्यादर्थप्रतीतौ व्युत्पत्त्यपेक्षाया भावात् । व्युत्पत्तिरहितस्याव्युत्पन्नस्य प्रथमतो वेदवाक्यादर्थप्रतीतिर्न भवितुमर्हति । इति वाचस्पतिमिश्रेणापि भामत्यामयमर्थ उक्तः । तेन व्युत्पत्त्यपेक्षस्य आम्नायस्य प्रत्यक्षसापेक्षत्वेन सापेक्षानुवादकत्वमेव । सप्रयोजनानुवादकत्वेन स्वार्थपरत्वात् विश्वसत्यत्वश्रुत्या विश्वस्य सत्यत्वं सिध्यतीति पूर्वपक्षी शंकते—न च वादिविप्रतिपत्तिनिरासप्रयोजनकत्वेन न निष्प्रयोजनानुवादकत्वं सप्रयोजनानुवादकत्वं तु न स्वार्थपरत्वविरोधि । विद्वद्वाक्ये समुदायद्वित्वापादनरूपप्रयोजनवत्त्वेन अनुवाद्यस्वार्थपरताया दृष्टत्वात् अत एव

अर्थवादवत् पदैकवाक्यतैव स्यादिति वाच्यम् ॥७॥

---

तत्र वाक्यैकवाक्यता उक्ता अन्यथा अर्थवादवत् पदैकवाक्यतैव स्यादिति वाच्यम् । ये किल वादिनः प्रपञ्चसत्यत्वे विप्रतिपन्नाः यथा बौद्धाद्वैतवादिनः तेषां विप्रतिपत्त्या प्रत्यक्षेण गृहीतमपि विश्वस्य सत्यत्वं सन्दिग्धमेव स्यान्न सत्यत्वं सिध्येत् सत्यत्वसिद्धये वादिविप्रतिपत्तिनिरासोऽपेक्षित एव श्रुत्या अतो वादिविप्रतिपत्तिनिरसनरूपप्रयोजनवत्त्वेन प्रत्यक्षप्राप्तविश्वसत्यत्वानुवादः श्रुतेर्न निष्प्रयोजनः सुप्रयोजनानुवादकत्वे तु अनुवादिन्याः श्रुतेः स्वार्थपरत्वमेव । सप्रयोजनानुवादस्य स्वार्थपरत्वे मीमांसकसम्मतिमाह—विद्वद्वाक्य इति । मीमांसाद्वितीयाध्यायें द्वितीयपादे चिन्तितं—प्रकरणं तु पौर्णमास्यां रूपावचनादिति । यदाग्नेयोऽष्टाकपालो भवति अमावस्यायां पौर्णमास्यां च अच्युतो भवति ऐन्द्रं दध्यमावस्यायामैन्द्रं पयोऽमावस्यायामिति त्रयो यागाः अमावस्यायां गृहीता आग्नेयोऽष्टाकपालः, उपांशुयागः, अग्नीषोमीय एकादशः कपाल इति त्रयो यागा पौर्णमास्यां विहिता एषां विहितानां षण्णां यागानां दर्शपूर्णमाससंज्ञा । अमावस्यायामुक्तयागत्रयं विधाय तत्सन्निधौ य एवं विद्वान् अमावस्यायां यजते इत्युक्तमेवं पौर्णमास्यामुक्तयागत्रयं विधाय तत्सन्निधौ य एवं विद्वान् पौर्णमासीं यजते इत्युक्तम् । य एवं विद्वान् इत्येवं रूपेणोक्तं वाक्यद्वयमेव विद्वद्वाक्यमिति मीमांसकैरुच्यते । तथा दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत इति च श्रुतम् । तत्र य एवं विद्वान् इति विद्वद्वाक्यद्वये सन्देहः । य एवं विद्वान् इति वाक्याभ्यां पौर्णमास्यमावस्यासंज्ञको यागान्तरौ विधीयेते उत अमावस्यायां विहितयागत्रयस्य पौर्णमास्यां विहितयागत्रयस्य अनुवाद एव क्रियते इति सन्देहे अनुवादस्य व्यर्थत्वात् अपूर्वयागान्तरयोर्विधायकौ इति पूर्वपक्षे पूर्वविहितषड्यागानुवादित्वमेव । न चैवं प्रयोजनाभावात् अनुवादवैयर्थ्यमिति वाच्यं, दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत इति फलसम्बन्धविधायके वाक्ये द्विवचनप्रयोगोपपादनमेव प्रयोजनम् । पूर्वप्राप्तषड्यागेषु द्विवचनप्रयोगासम्भवात् । अतः फलवाक्ये द्विवचनेन सम्यग्व्यवहारोपपत्त्यर्थं षण्णां यागानां द्वित्वं सम्पाद्यते विद्वद्वाक्यद्वयेन अमावस्यापौर्णमासीसम्बन्धिनं आग्नेयादिषड्यागं त्रिकत्वेन एकीकृत्य य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वान् अमावास्यां यजते इत्युक्तमिति सिद्धान्तितं षड्यागस-

प्रत्यक्षसिद्धे वादिविप्रतिपत्तिनिरासरूपप्रयोजनवत्त्वेन प्रमाणान्तरस्य सप्रयोजनतया स्वार्थपरत्वोक्तौ अग्निर्हिमस्य भेषजमित्याद्यपि तेनैव प्रयोजनेन सप्रयोजनं स्वार्थपरञ्च स्यात्। तथा च न प्रत्यक्षसिद्धे वादिविप्रतिपत्तिनिरासार्थमन्यापेक्षा। दृष्टान्ते तु सामुदायानुवादेन द्वित्वसम्पादनस्योद्देश्यस्य अन्यतो लब्धुमशक्यतया तेन प्रयोजनेव स्वार्थपरत्वस्य वक्तुं शक्यत्वात्। एतदभिप्रायश्च पूर्वोक्तं नयविवेक-वाक्यम्।

---

मुदायस्य द्वित्वापादनरूपप्रयोजनसद्भावात् तदपि द्वित्वापादनं दर्शपौर्णमासाभ्यामिति फलवाक्ये द्वित्वोपपत्त्यर्थमिति विद्वद्वाक्यस्य फलवाक्येन एकवाक्यत्वमुक्तम्। यथा वायुर्वै क्षेपिष्ठा देवता इत्याद्यर्थवादानां मानान्तरप्राप्तमनुवदतामनुवाद्यस्वार्थे तात्पर्याभावेन आलभतिपदप्रतिपाद्यालम्भने प्राशस्त्यबोधकतया पदैकवाक्यता उच्यते। नैवं विद्वद्वाक्ये। समुदायद्वित्वापादनरूपप्रयोजनवत्त्वेन विद्वद्वाक्यस्यानुवाद्यस्वार्थपरत्वात् वाक्यैकवाक्यता स्वार्थपरत्वाभावे हि क्षेपिष्ठेत्यर्थवादवत् पदैकवाक्यतोच्येत ॥७॥

८—सिद्धान्ती समाधत्ते—प्रत्यक्षसिद्धे वादिविप्रतिपत्तिनिरासरूपप्रयोजनवत्त्वेन प्रमाणान्तरस्य सप्रयोजनतया स्वार्थपरत्वोक्तौ अग्निर्हिमस्य भेषजमित्याद्यपि तेनैव प्रयोजनेन सप्रयोजनं स्वार्थपरञ्च स्यात्। तथा च न प्रत्यक्षसिद्धे वादिविप्रतिपत्तिनिरासार्थमन्यापेक्षा। दृष्टान्ते तु समुदायानुवादेन द्वित्वसम्पादकस्योद्देश्यस्यान्यतो लब्धुमशक्यतया तेन प्रयोजनेन स्वार्थपरत्वस्य वक्तुं शक्यत्वात्। एतदभिप्रायश्च पूर्वोक्तं नयविवेकवाक्यम्। वादिनामसंख्यत्वात् प्रत्यक्षस्यापि [सर्वस्य] अनुवादके वाक्ये यस्य कस्यचिद्वादिनो विप्रतिपत्तेर्निरासार्थकत्वं स्यादेव। यथा घटोऽस्ति, घटो नीलः इत्यादिप्रत्यक्षसिद्धानुवादके वाक्ये वादिविप्रतिपत्तिनिरासार्थकत्वं वक्तुं शक्यत एव। माध्यमिकादिमते सर्वस्य शून्यत्वात् प्रत्यक्षसिद्धघटाद्यनुवादकं वाक्यं वादिविप्रतिपत्तिनिरासार्थं स्यात्। तथा च तदपि वाक्यं सप्रयोजनमेव। एवं रीत्या प्रत्यक्षसिद्धवस्तुमात्रानुवादिनो न निष्प्रयोजनत्वम्, किन्तु सप्रयोजनत्वमेव। तथा चाग्निर्हिमस्य भेषजमित्यादिप्रत्यक्ष-

न चानुवादत्वेऽपि नैष्फल्यमात्रम्, न तु अप्रामाण्यम्। याथार्थ्यमेव प्रामाण्यम्। न त्वनधिगतार्थत्वे सति याथार्थ्यमिति वाच्यम्।

तात्पर्यविषये शब्दः प्रमाणम्। यत्परः शब्दः स शब्दार्थः इत्यभियुक्ताभ्युपगमात्। अन्यथा स्वाध्यायविधिग्रहणानुपपत्तेरुक्तत्वाच्च। नह्यन्यतः सिद्धेऽर्थे शास्त्रतात्पर्यम्। अतो न तत्र प्रामाण्यम्। यदाहुर्भट्टाचार्याः—अप्राप्ते शास्त्रमर्थवदिति ॥८॥

---

सिद्धानुवादस्यापि सप्रयोजनानुवादकत्वं स्यात्। एवञ्च तदपि वाक्यं स्वार्थपरं भवेत्। तथा च सर्वा मीमांसकमर्यादा उन्मृदिता स्यात् तथा च न प्रत्यक्षसिद्धे वादिविप्रतिपत्तिनिरासार्थमनुवादापेक्षा। दृष्टान्ते तु विद्वद्वाक्ये त्रिकद्वयरूपेण षड्यागानुवादस्य द्वित्वसम्पादनस्योद्देश्यस्यान्यतो लब्धुमशक्यतया द्वित्वसम्पादनप्रयोजनेन विद्वद्वाक्यस्य स्वार्थपरत्वं सिद्धमेव। यदपि प्राक्सापेक्षानुवादे हि न प्रमितिः, न तु दैवादनुवादे इति यत् नयविवेकवाक्यं पूर्वपक्षिणोपन्यस्तं तदपि एतदभिप्रायकमेव। सप्रयोजनानुवादे हि अर्थवादवाक्यं स्वार्थकम्। न तु निष्प्रयोजनानुवादे। निष्प्रयोजनानुवादस्य गृहीतग्राहित्वेन अप्रामाण्यमेव। प्रकारान्तरेणानुवादवाक्यस्य प्रामाण्यं शङ्कते पूर्वपक्षी—"न चानुवादत्वेऽपि नैष्फल्यमात्रम्, न तु अप्रामाण्यम्। याथार्थ्यमेव प्रामाण्यम्। न तु अनधिगतार्थत्वे सति याथार्थ्यमिति वाच्यम्। प्रमाणगृहीतार्थस्यानुवादके वाक्ये नाप्रामाण्यम्। अबाधितार्थकत्वात्। बाधितार्थकमेव हि अप्रमाणं भवति। उक्तं चोदयनेन—यथार्थ्यानुभवः प्रमा। यथार्थत्वमेव हि ज्ञानस्य प्रमात्वम्। तच्चाबाधितार्थकत्वम्। प्रमाणगृहीतार्थानुवादेऽपि यथार्थत्वमस्त्येव। यथार्थकत्वेऽपि अनुवादस्याप्रामाण्यं कुतः? अनधिगतार्थत्वे सति यथार्थत्वं प्रामाण्यमिति न संगतम्। अधिगतार्थकत्वेऽपि याथार्थ्यमात्रेणैव प्रामाण्यसम्भवात्। तथा च प्रमाणगृहीतार्थानुवादेऽपि प्रामाण्यमक्षतमेव। मीमांसकमतावष्टम्भेन प्रामाण्यं व्यवस्थापयन् समाधत्ते सिद्धान्ती—"तात्पर्यविषये शब्दः प्रमाणम्। यत्परः शब्दः स शब्दार्थः इत्यभियुक्ताभ्युपगमात् अन्यथा स्वाध्यायविधिग्रहणानुपपत्तेरुक्तत्वाच्च नह्यन्यतः सिद्धेऽर्थे शास्त्रतात्पर्यम्। अतो न तत्र प्रामाण्यम्। यदाहुर्भट्टाचार्याः अप्राप्ते शास्त्रमर्थवदिति। शब्दप्रामाण्यं तात्पर्यव्याप्यम्। यत्र

ननु अयमनुवादो न "वायुर्वै क्षेपिष्ठा देवता" इत्यादिवत् स्तुत्यर्थः "न वा दध्ना जुहोती"त्यादिवत् अन्यविधानार्थः। अनुवाद्यत्वेऽपि अन्यविधानाय प्रमाणानूदितस्य तात्त्विकत्वनियमात्। न हि व्रीहीन् प्रोक्षतीत्यादौ आरोपितव्रीह्यादेर्धीरनुवाद्यस्य असत्त्वे हि आश्रयासिद्धौ धर्मधर्मिसंसर्गरूपानुमितिवेद्य इव अनुवाद्यविधेयसंसर्गरूपवाक्यार्थो बाधितः स्यात् इति चेत् ?

---

यत्र प्रामाण्यं शब्दस्य तत्र शब्दस्य तात्पर्यम्। यत्र शब्दस्य तात्पर्यं न स्यात् तत्र शब्दस्य प्रामाण्यमपि न स्यात्। अत एव यत्परः शब्दः स शब्दार्थः इत्यभियुक्ताभ्युपगमः। तात्पर्यनिर्णायकञ्चापूर्वत्वं लिङ्गम्। प्रामाणान्तरगृहीतेऽर्थेऽपूर्वत्वाभावात् तत्र तात्पर्यमपि न सिध्येत्। प्रामाणान्तरगृहीतार्थस्यानुवादके वाक्ये तात्पर्याभावात् प्रामाण्यमपि नास्ति। उक्तञ्च अस्मिन् प्रकरणे इतः प्रागेव श्रुतेरतत्परत्वे प्राप्तत्वमात्रमेव प्रयोजकम्। अन्यथा वैफल्येन स्वाध्यायविधिग्रहणानुपपत्तेरिति। व्याख्यातञ्च तत्रैव। तच्चात्र स्मारयति—अन्यथा स्वाध्यायविधिग्रहणानुपपत्तेरुक्तत्वाच्च। स्वाध्यायो यदि ग्रहीतार्थप्रतिपादकः स्यात् तर्हि स्वाध्यायोऽध्येतव्य इति विधिना प्रयोजनवदर्थज्ञानाय स्वाध्याध्ययनं न विहितं भवेत्। अन्यतः सिद्धेऽर्थे इति। प्रमान्तरेण गृहीतेऽर्थे शास्त्रस्य तात्पर्यं न भवितुमर्हति। एतदेव भट्टपादकुमारिलवचनेन द्रढयति—मानन्तराप्राप्तेऽर्थे शास्त्रमर्थवदिति, यदपि न्यायाचार्यवचनमुपन्यस्तं तदपि मीमांसकमर्यादाविरोधीत्युपेक्ष्यम्। अन्यथा याथार्थ्यमात्रेण अनुवादस्यापि शास्त्रत्वं स्यात् ॥८॥

९—शङ्कते पूर्वपक्षी—ननु अयमनुवादो न "वायुर्वै क्षेपिष्ठा देवता" इत्यादिवत् स्तुत्यर्थः। न वा दध्ना जुहोतीत्यादिवत् अन्यविधानार्थः। अनुवाद्यत्वेऽपि अन्यविधानाय प्रमाणानूदितस्य तात्त्विकत्वनियमात्। न हि व्रीहीन् प्रोक्षतीत्यादौ आरोपितव्रीह्यादेर्धीरनुवाद्यस्यासत्त्वे हि आश्रयासिद्धौ धर्मधर्मिसंसर्गरूपानुवेद्ये इव अनुवाद्यविधेयसंसर्गरूपवाक्यार्थो बाधितः स्यात्। विश्वं सत्यमित्यादिश्रुतिः प्रत्यक्षसिद्धविश्वसत्त्वानुवादरूपा इत्युक्तं सिद्धान्तिना। तत्रेयं पृच्छा—अयमनुवादः किं

न, अस्यानुवादस्य अप्राप्तान्यप्राप्तार्थत्वात्। न च प्रमाणानूदितस्य तात्त्विकत्वनियमः। स्वप्नाध्याये शुक्तौ नेदं रजतमिति वाक्ये च व्यभिचारात्।

---

वायव्यां श्वेतमालभेत भूतिकाम इति विधेः स्तुतिरूपः वायुर्वै क्षेपिष्ठेत्यादिवत् स्यात्। नायं प्रकारः सम्भवति। अस्यानुवादस्य केनचिद्विधिना एकवाक्यत्वाभावात्। नापि दध्ना जुहोतीत्यादिवदन्यविधानार्थः। अग्निहोत्रं जुहोतीति विहितं होमं जुहोतीत्यनूद्य तत्र दधिरूपो गुणो विधीयते दध्नेति। प्राप्ते होमे दधिरूपगुणविधानाय दध्ना जुहोतीति प्राप्तं होमं जुहोतीत्यनुवदति। एवं प्रकृते न भवितुमर्हति। कस्यचिद्गुणस्य विधानाय विश्वं सत्यमिति श्रुतिः प्रत्यक्षसिद्धं विश्वसत्यत्वं नानुवदति। अन्यविधानाय अनुवाद्यमपि तात्त्विकमेव। यथा व्रीहीन् प्रोक्षतीत्यादौ प्राप्तव्रीह्यनुवादेन प्रोक्षणविधाने अनुवाद्यस्य व्रीह्यादेस्तात्त्विकत्वम्। अन्यथा व्रीह्यादेरतात्त्विकत्वे तत्र प्रोक्षणविधानासम्भवात्। अनुवाद्यस्यातात्त्विकत्वेऽतात्त्विकस्य धर्मिणोऽसिद्धौ आश्रयासिद्ध्या धर्मधर्मिसंसर्गरूपा अनुमितिर्बाधिता स्यात्। यथा पर्वतो वह्निमान् इत्यनुमितौ प्रमाणान्तरसिद्धधर्मिणं पर्वतमनूद्य तत्र विधेयवह्निसम्बन्धो विधीयते तत्रानुवाद्यस्य धर्मिणोऽसिद्धौ कुत्र वह्निसम्बन्धो विधीयेत, तथा चाश्रयासिद्ध्या अनुमितिरेव बाधिता स्यात्। एवं शाब्दबोधेऽपि अनुवाद्यविधेयसंसर्गरूपवाक्यार्थेनापि बाधितो भवेत् यद्यनुवाद्यमेवासिद्धं स्यात्। अतोऽन्यविधानाय प्रमाणानूदितस्य तात्त्विकत्वनियमः सर्वैरङ्गीकरणीयः। अनुवाद्यमात्रेण नातात्त्विकत्वमिति भावः।

सिद्धान्तमाह—न, अस्यानुवादस्याप्राप्तान्यप्राप्त्यर्थत्वात्। न च प्रमाणानूदितस्य तत्त्विकत्वनियमः। स्वप्नाध्याये शुक्तौ नेदं रजतमिति वाक्ये च व्यभिचारात्"। दध्ना जुहोतीत्यादयोऽनुवादाः दृष्टान्ततया पूर्वपक्षिणा उपात्ताः। तेषां सर्वेषामप्राप्तान्यप्राप्त्यर्थत्वात्। अनुवाद्यत्वेऽपि नावस्तुत्वम्। विश्वसत्यत्वश्रुतेस्तु कस्याप्राप्तस्य प्राप्तयेऽनुवादः क्रियते, तथा च दृष्टान्तवैषम्यात् दृष्टान्तवत्र दार्ष्टान्तिकं सेद्धुमर्हति। यच्च पूर्वपक्षिणोक्तं प्रमाणानुदितस्य तात्त्विकत्वनियम इति सोऽपि त्वसंगत एव। श्रुतौ स्वप्नाध्याये

अथ तत्र ज्ञानविषयतया निषेध्यतया च अनुवाद इति न तात्त्विकत्वम्।

तर्हि प्रकृतेऽपि नेह नानेति निषेधार्थत्वादस्यानुवादस्य न तात्त्विकत्वमिति गृहाण। अत एव न वाक्यार्थस्यासत्त्वप्रसंगः, तात्पर्यविषयस्य सत्त्वात्। अथ किञ्चनेत्यनेनैवानुवादस्य कृतत्वात् किमधिकेनेति चेत्।

---

प्रमाणरूपया श्रुत्याऽनूदितस्य स्वाप्नप्रपञ्चस्य न तात्त्विकत्वम्। यथा स्वप्ने कृष्णदन्तं पुरुषं पश्यति, स एनं हिनस्ति, यथा वा—

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने॥

इति एवं प्रमाणानूदितस्य स्वाप्नप्रपञ्चस्य अपारमार्थिकत्वदर्शनेन नियमस्य व्यभिचारात्। भ्रान्तिप्रसक्तरजतनिषेधाय भ्रान्तिप्रसक्तरजतं प्रमाणेनानूद्य यत्र निषेधः क्रियते, नेदं रजतमिति तत्रापि प्रमाणानूदितस्य रजतस्य मिथ्यात्वात् प्रमाणानूदितस्य तात्त्विकत्वनियमो न सिध्यति।

अत्र पूर्वपक्षी शंकते—अथ तत्र ज्ञानविषयतया निषेध्यतया च अनुवाद इति न तात्त्विकत्वम्। स्वाप्नज्ञाने विषयतया स्वाप्नप्रपञ्चस्य श्रुत्याऽनुवादः क्रियते एवं नेदं रजतमित्यत्र निषेध्यतया रजतमनूद्यते उभयत्र व्यवस्थाप्यतया नानूद्यते अतो न तात्त्विकत्वमिति। समाधत्ते सिद्धान्ती—तर्हि प्रकृतेऽपि नेह नानेति निषेधार्थत्वादस्यानुवादस्य न तात्त्विकत्वमिति गृहाण। अत एव न वाक्यार्थस्य असत्त्वप्रसंगः। तात्पर्यविषयस्य सत्त्वात्। निषेध्यतयाऽनुवादे यद्यनुवाद्यस्य तात्त्विकत्वं तर्हि प्रकृतेऽपि नेह नानेति श्रुत्या विश्वस्य निषेध्यत्वात् श्रुत्या निषेधाय निषेध्योपस्थापकतया विश्वसत्यत्वानुवादः अतो न विश्वस्य तात्त्विकत्वं सिध्यतीति भावः। अत एव विश्वं सत्यमिति वाक्यार्थस्यासत्त्वप्रसंगोऽपि न भवति श्रुत्योक्तनिषेधेनापेक्षणीयस्य निषेध्यस्य समर्पकत्वेन वाक्यस्य सार्थक्यात्। तात्पर्यविषयीभूतमर्थमादायैव वाक्यस्य सार्थक्यम् विश्वं सत्यमितिश्रुतेः निषेध्यसमर्पकतया अनुवादकत्वमसहमानः पूर्वपक्षी शंकते—अथ किञ्चनेत्यनेनैवानुवादस्य कृतत्वात् किमधिकेनेति

न, सामान्यतो निषेधस्य हि किञ्चनेत्यनेन निषेध्यसमर्पणेऽपि विशिष्यनिषेधे विशिष्यनिषेध्यसमर्पणस्योपयोगात् ।

अथ निषेधवाक्यस्य न निषेध्यसमर्पकवाक्यान्तरापेक्षा । अन्यथा न कलञ्जं भक्षयेदित्यादावपि निषेध्यसमर्पणार्थं कलञ्जं भक्षयेदित्यादिवाक्यान्तरसापेक्षत्वप्रसंगः इति चेत् । न, सर्वत्रापेक्षानियमाभावात् । सति सम्भवे प्रकृते त्यागायोगात् । अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीत्यादौ वाक्यान्तरप्राप्तस्य निषेधदर्शनाच्च ।

---

चेत् । नेह नानास्ति किञ्चनेति श्रुतौ किञ्चनेत्यनेनैव निषेध्यानुवादस्य कृतत्वात् अधिकेन विश्वं सत्यमिति श्रुत्याऽपि निषेध्यानुवादे प्रयोजनं नास्ति अतो विश्वं सत्यमिति श्रुतिर्न निषेध्यानुवादिनीति भावः । समाधत्ते सिद्धान्ती—न, सामान्यतो निषेधस्य हि किञ्चनेत्यनेन निषेध्यसमर्पणेऽपि विशिष्यनिषेधे विशिष्यनिषेध्यसमर्पणस्योपयोगात् । दृश्यमात्रस्याधिकरणे ब्रह्मणि दृश्यमात्रनिषेधस्य हि किञ्चनेत्यनेनैव निषेध्यसमर्पणेऽपि ब्रह्मरूपाधिकरणनिष्ठतया आकाशादिबोधनेऽपि किञ्चनेतिसर्वनाम्नः बुद्धिस्थत्वोपलक्षिताकाशत्वादिनैव बोधकत्वम् । विशिष्यनिषेधे विश्वं सत्यं न प्रमिणन्ति इत्यादिरूपेण निषेधे विशेष्यनिषेध्यसमर्पणस्योपयोगात् । विशिष्यघटाद्यधिकरणे यत्र निषेधः, तत्रैव प्रतियोगिप्रसक्तेरपेक्षणात् विश्वं सत्यमित्यादिवाक्येनैव विशिष्यनिषेध्यसमर्पणात् । अयं भावः—सामान्यतो निषेधे सामान्यतो निषेध्यप्रसक्तिरपेक्षिता, विशिष्यनिषेधे विशिष्यनिषेध्यप्रसक्तिरपेक्षणीया इति विशिष्यनिषेधाय विशिष्यनिषेध्यप्रसक्तये विश्वं सत्यमित्यादिवाक्यं विशिष्यनिषेध्यसमर्पकम्, अतो न वैयर्थ्यं विशिष्यनिषेध्यसमर्पकवाक्यस्य । निषेधवाक्यं निषेध्यसमर्पकवाक्यान्तरं नापेक्षते इति पूर्वपक्षी शंकते—अथ निषेधवाक्यस्य न निषेध्यसमर्पकवाक्यान्तरापेक्षा । अन्यथा न कलञ्जं भक्षयेदित्यादावपि निषेध्यसमर्पणार्थं कलञ्जं भक्षयेदित्यादिवाक्यान्तरसापेक्षत्वप्रसंगः । निगदव्याख्यातं मूलम् । समाधत्ते—न, सर्वत्रापेक्षानियमाभावात् । सति सम्भवे प्रकृते त्यागायोगात् । अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीत्यादौ वाक्यान्तरप्राप्तस्य निषेधदर्शनाच्च । अयं भावः—यत्र रागादिवशेन

न च तद्वदेव विकल्पापत्तिः। सिद्धे वस्तुनि विकल्पायोगात्। ग्रहणाग्रहणवाक्ययोः उभयोरपि मानान्तराप्राप्तविषयत्वेन तुल्यबलत्ववदिह सत्त्वश्रुतेर्मानान्तरप्राप्तविषयत्वेन निषेधश्रुतेश्चाप्राप्तविषयत्वेन तुल्यबलत्वाभावाच्च। अत एव निषेधवाक्यप्राबल्यात् तदनुरोधेन इतरन्नीयते।

---

निषेध्यप्रसक्तिस्तत्र निषेध्यप्रसञ्जकं वाक्यान्तरं नापेक्षते। यत्र रागादिनापि न निषेध्यप्रसक्तिस्तत्र वाक्यान्तरेणापि निषेध्यप्रसक्तिरङ्गीकरणीया। अन्यथाऽप्रसक्तनिषेधापत्तेः। इत्याह मूलकारः—सर्वत्रापेक्षानियमाभावात्। सति संभवे इति—रागादिमूलप्रत्यक्षेणेव विश्वं सत्यमित्यादिवाक्येनापि निषेध्यप्रसक्तिः सम्भवति। सम्भवन्त्यां निषेध्यप्रसक्तौ प्रकृते तत्त्यागायोगात्। प्रसक्तस्यैव निषेध्यत्वात्। कुत्रचित् निषेध्यप्रसञ्जकं वाक्यान्तरमपेक्षते; यथा अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीत्यादौ वाक्यान्तरादेव ग्रहणप्रसक्तौ वाक्यान्तरेण तन्निषिध्यते—न गृह्णातीति।

पूर्वपक्षी शङ्कते—न च तद्वदेव विकल्पापत्तिः। समाधत्ते—सिद्धे वस्तुनि विकल्पायोगात्। ग्रहणाग्रहणवाक्ययोरुभयोरपि मानान्तराप्राप्तविषयत्वेन तुल्यबलत्ववत् इह सत्त्वश्रुतेर्मानान्तरप्राप्तविषयत्वेन निषेधश्रुतेश्चाप्राप्तविषयत्वेन तुल्यबलत्वाभावाच्च। अत एव निषेधवाक्यप्राबल्यात् तदनुरोधेनेतरन्नीयते। ग्रहणाग्रहणवाक्याभ्यां यथा विकल्पः अतिरात्रयागे षोडशिग्रहणस्य ग्रहणेऽग्रहणेऽपि उभयथापि शास्त्रार्थः सिध्यतीति क्रियायां विकल्पो भवितुमर्हति, नैवं विकल्पः सिद्धे वस्तुनि भवितुमर्हति। नहि सिद्धं वस्तु एवं वा नैवं वा गृहीतं प्रमितं भवति। साध्ये वस्तुनि क्रियारूपे विकल्पो, न सिद्धे वस्तुनि। ग्रहणाग्रहणवाक्ययोरपि तुल्यबलत्वात् तुल्यबलयोर्विरोधे विकल्पः। उभयोरपि मानान्तराप्राप्तविषयत्वेन तुल्यबलत्वम्। इह तु निषेध्यप्रसञ्जकवाक्यनिषेधवाक्ययोर्न तुल्यबलत्वम्। विश्वसत्यत्वश्रुतेर्मानान्तरप्राप्तविषयत्वेनानुवादत्वात् दौर्बल्यम्। नेह नानेति निषेधश्रुतेश्च मानान्तराप्राप्तविषयत्वेनाननुवादत्वात् प्राबल्यम्। अत एव मानान्तराप्राप्तविषयत्वेन निषेधवाक्यस्य प्राबल्यात्तदनुरोधेन मानान्तरप्राप्तविषयकनिषेध्यप्रसञ्जकविश्वसत्यत्वश्रुतिर्नीयते। विश्वं सत्यमिति वाक्यमप्राप्तार्थप्रापकत्वेन

अथाप्राप्तान्यप्राप्त्यर्थत्वेऽपि अलौकिकस्य "आपश्च न प्रमिणन्ति" इत्यादिपदार्थसंसर्गस्य विधेयस्य सत्त्वान्न निषेध्यार्थानुवादकत्वमिति चेत्। न, तदन्यपरत्वस्य प्रागेवोक्तत्वात्। ननु यत्तन्नेति निषेध्यानुवाद-लिङ्गाभावात् नानुवादः, न; यत्किञ्चिल्लिङ्गाभावेन लैङ्गिकाभावस्य वक्तुमशक्यत्वात्।

ननु तर्हि तत् सत्यमित्याद्यपि न सत्तन्नासदुच्यते इति, असद्वा

---

न निषेध्यप्रसञ्जकमिति" पूर्वपक्षी शंकते—अथाप्राप्तान्यप्राप्त्यर्थत्वेऽपि अलौकिकस्य आपश्च न प्रमिणन्तीत्यादिपदार्थसंसर्गस्य विधेयस्य सत्त्वात् न निषेध्यार्थानुवादकत्वमिति चेत्। विश्वं सत्यमितिमन्त्रभागस्यानन्तरमापश्च न प्रमिणन्ति व्रतं वाम्" इत्यादिपदार्थसंसर्गस्य विधेयस्य सत्त्वात् अप्राप्तालौकिकविधेयांशस्य सम्बन्धबोधनाय एव विश्वं सत्यमित्यनुवादः। अनुवादोक्तिः विधेयांशसम्बन्धबोधनायैव। अतो नायं निष्प्रयोजनानुवादः। अस्य मन्त्रस्यार्थः प्रागेवोक्तः। विधेयबोधनायानुवादत्वान्न निषेध्यार्थानुवादकत्वम्। समाधत्ते—न, तदन्यपरत्वस्य प्रागेवोक्तत्वात्। नायं मन्त्रः—आपश्च न प्रमिणन्तीत्यादिविधेयांशसम्बन्धप्रतिपादनाय इन्द्रब्रह्मणस्पतिदेवतयोः स्तुतिप्रतिपादकोऽयं मन्त्रः। अतो नास्य विधेयपरत्वम्। किन्तु स्तुतिपरत्वमेवेति प्रागेवोक्तम्। पुनः पूर्वपक्षी अनुवादलिङ्गाभावात् नायं मन्त्रोऽनुवादो भवितुमर्हति इति शङ्कते—ननु यत्तन्नेति निषेध्यानुवादलिंगाभावात् नानुवादः। अयमर्थः—यत्तन्नेत्येवं निषेधार्थानुवादकलिङ्गस्याभावात् नायं मन्त्रो निषेधार्थानुवादः। यदिति निषेध्यमनूद्य तन्नेति निषिध्यते, यथा यद्रजतं तन्नेतिवत्। प्रकृते तु यत्तन्नेति निषेधानुवादलिङ्गाभावान्न निषेध्यार्थानुवादकता। समाधत्ते—न, यत्किञ्चिल्लिङ्गाभावेन लैङ्गिकाभावस्य वक्तुमशक्यत्वात्। यत्तन्नेति अनुवादस्य यत्किञ्चिल्लिङ्गाभावेनानुवादत्वरूपलैङ्गिकस्य लिङ्गप्रतिपाद्यस्याभावो वक्तुं न शक्यते। निषेधवाक्यस्य निषेध्यप्रसञ्जकवाक्यान्तरसाकांक्षत्वस्यात्रापि विद्यमानत्वात्। विश्वं सत्यमिति श्रुतिर्निषेध्यानुवादिकैव। पूर्वपक्षी शङ्कते—अनुवादलिङ्गाभावेऽपि अस्य मन्त्रस्यानुवादरूपत्वे तत् सत्यमित्यादिश्रुतिरपि अनुवादिनी स्यादिति—

इदमग्र आसीदिति च निषेधायं, सन् घटः, सद्घटज्ञानम्, सत्सुख-स्फुरणमित्यादिसिद्धब्रह्मसत्तानुवादि स्यात् इति चेत्।

न, ब्रह्मत्वसामानाधिकरण्येन सत्त्वस्य प्रत्यक्षादिभ्योऽप्राप्तेः, शून्यवादप्रसङ्गेन तस्य निषेधायोगाच्च। य इदं सर्वं यदयमात्मा इत्यत्र अनुवादलिङ्गसम्भवेन कल्पनाच्च। एवमानन्दश्रुतेरपि 'अदुःखमसुखं सममि'ति निषेधाय न प्रत्यक्षप्राप्तानन्दानुवादित्वम्, दुःखसाहचर्येण सुखस्यापि वैषयिकस्यैव ग्रहणेन तन्निषेधाय ब्रह्मरूपसुखानुवादायोगात्। एतच्च सर्वमुक्तं विवरणे निष्प्रपञ्चास्थूलादिवाक्यानुसारेण इदं सर्वं

---

ननु तर्हि तत् सत्यमित्याद्यपि न सत्तन्नासदुच्यते इति, असद् वा इदमग्र आसीदिति च निषेधाय, सन् घटः, सद्घटज्ञानं, सत्सुखस्फुरणमित्यादि सिद्धब्रह्मसत्तानुवादि स्यात्। तत् सत्यमित्यादिश्रुतिरपि न सत्यं नासदुच्यते, असद्वा इदमग्र आसीदिति सत्त्वनिषेधाय ब्रह्मसत्तानुवादत्वं तत्सत्यमिति श्रुतेः स्यात्। यदि तु तत् सत्यमिति श्रुतिर्न ब्रह्मसत्तानुवादिनी ब्रह्मसत्ताया मानान्तरा-प्राप्तत्वादिति शंकसे तर्हि "सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते" इति मण्डनोक्त्या सन् घट इत्यत्रापि ब्रह्मसत्ताप्रतीतेः प्रत्यक्षप्राप्तब्रह्मसत्ताया अनुवादिन्येव तत् सत्यमित्यादिश्रुतिः स्यात्। एवं—

"परागर्थप्रमेयेषु या फलत्वेन सम्मता।
सम्वित् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः॥"

इति सुरेश्वरोक्त्या सद्घटज्ञानमिति लौकिकप्रतीत्या च लौकिकघटज्ञानस्य ब्रह्मज्ञानत्वोपपत्तेः ब्रह्मणो ज्ञानात्मकत्वप्रतिपादिन्यपि श्रुतिरनुवादिनी स्यात्। एवं सत्सुखस्फुरणमित्यादिलौकिकप्रतीत्यापि सिद्धस्य ब्रह्मसुखस्यानुवादिनी ब्रह्मणो आनन्दरूपत्वप्रतिपादिनी श्रुतिः स्यात्। समाधत्ते—न, ब्रह्मत्वसामानाधि-करण्येन, सत्त्वस्य प्रत्यक्षादिरूपोऽप्राप्तेः, शून्यवादप्रसङ्गेन। तस्य निषेधायोगाच्च। इदं सर्वं यदयमात्मा इत्यत्रानुवादलिङ्गसम्भवेन न कल्पनाच्च एवमानन्दश्रुतेरपि अदुःखमसुखं सममिति निषेधाय न प्रत्यक्षप्राप्तानन्दानुवादित्वम् दुःखसाहचर्येण सुखस्यापि वैषयिकस्यैव ग्रहणेन तन्निषेधाय। ब्रह्मरूपसुखानुवादायोगात्। एतच्च सर्वमुक्तं

यदयमात्मे'त्यादीनि निषेध्यसमर्पकत्वेन एकवाक्यतां प्रतिपद्यन्ते । सुषुप्तौ निष्प्रपञ्चतायां पुरुषार्थत्वदर्शनादिति ।

---

विवरणे निष्प्रपञ्चास्थूलादिवाक्यानुसारेण इदं सर्वं यदयमात्मेत्यादिनिषेध्यसमर्पकत्वेन एकवाक्यतां प्रतिपद्यन्ते । सुषुप्तौ निष्प्रपञ्चायां पुरुषार्थत्वदर्शनादिति । सन् घट इत्यादिप्रत्यक्षेण सिद्धस्य सत्त्वस्यानुवादि तत्सत्यमित्यादिवाक्यं न भवितुमर्हति । सन् घट इत्यादिप्रतीत्या ब्रह्मत्वसामानाधिकरण्येन सत्त्वस्य प्रत्यक्षादिभ्योऽप्रतीतेः । प्रत्युत घटत्वसामानाधिकरण्येनैव प्रत्यक्षादितः प्रतीतेश्च । प्रत्यक्षादितो यत् सत्यं प्राप्तं, तन्न ब्रह्मत्वसामानाधिकरण्येन, किन्तु घटत्वादिसामानाधिकरण्येनैव । तत् सत्यमित्यादिश्रुत्या तु ब्रह्मत्वसामानाधिकरण्येन सत्त्वं प्रतीयते । अतः प्रत्यक्षाद्यप्राप्तस्य ब्रह्मत्वसमानाधिकरणसत्त्वस्य प्रतिपादिका तत् सत्यमिति श्रुतिः न प्रत्यक्षसिद्धसत्तानुवादिनी भवितुमर्हति । यच्च पूर्वपक्षिणोक्तं—न सत्तन्नासदुच्यते। असद्वा इदमग्र आसीत् इत्यादिश्रुत्या प्रतीयमानस्य सत्त्वनिषेधस्य निषेध्यसमर्पिका तत् सत्यमित्यादिश्रुतिः । तत् सत्यमित्यादिश्रुत्या निषेध्यप्रसञ्जने न सत्तन्नासदित्यादिनिषेधश्रुतिः प्रवर्तते । 'तथा च सत्त्वनिषेधश्रुत्या ब्रह्मसत्त्वमेव निषिध्यते । तन्निरस्यति—शून्यवादप्रसंगेन तस्य निषेधायोगाच्च । प्रपञ्चेन सह प्रपञ्चाधिष्ठानीभूतस्य सद्रूपब्रह्मणोऽपि निषेधे सर्वनिषेधात् शून्यवादे पर्यवसानं स्यात् । नेह नानेति श्रुत्या प्रपञ्चमात्रस्य निषेधे, न सत्तन्नासदिति, असद्वा इदमग्र आसीदिति श्रुत्या च सद्रूपब्रह्मणोऽपि निषेधे शून्यवादप्रसंगः । शून्यवादे च बाध्यबाधकभावव्यवस्था न स्यादित्युक्तम् । उच्यते च उक्तं चात्मतत्त्वविवेके—अस्तु तर्हि शून्यतैव परमं निर्वाणमिति चेन्न, सा यदि असिद्धा कथं तदवशेषमपि विश्वमभिधीयते ? वाङ्मात्रस्य सर्वत्र सुलभत्वात् । परतश्चेत् परोऽप्यभ्युपगन्तव्यः । ग्राह्यलक्षणश्चावर्जनीयमिति । स च परो यदि संवृतिरेव विश्वशून्यतयोर्न कश्चिद्विशेषः, कथं तदपि अवशिष्येत । असंवृतिश्चेत् परः परत एव तस्य सिद्धौ अनवस्था । स्वयमसिद्धश्चेत् कथं शून्यत्वमपि साधयेत् । स्वतः सिद्धश्चेत् आयातोऽसि मार्गेण । तथा हि—स्वतः सिद्धतया तदनुभयरूपम्, शून्यत्वादेव च न

तस्य कालावच्छेद इति नित्यम्, अत एव च न देशावच्छेद इति व्यापकम् अत एव तन्निर्धर्मकमिति विचारास्पष्टम्, तस्य धर्मधर्मिभावमुपादाय प्रवृत्तेः। अत एव विशेषप्रभाव इत्यद्वैतम्। प्रपञ्चस्यापारमार्थिकत्वाच्च निष्प्रतियोगिकमिति विधिरूपम्, अविचारितप्रपञ्चापेक्षया तु शून्यमिति व्यवहारः। तथापि प्रपञ्चशून्यस्यानुभवमात्रस्य प्रपञ्चेन सह कः सम्बन्धः? न च नायं प्रकाशते इति चेत्, वस्तुगत्या न कश्चित्। संवृत्या तु गगनगन्धर्वनगरयोराधाराधेयभाव इव विषयविषयीभावः स च यथा नैयायिकैः समर्थयिष्यते तथैव। वेद्यनिष्ठस्त्वसावस्मिन् दर्शने इति विशेषः। अविद्यैव हि तथा तथा विवर्तते, यथा यथा अनुभवीयतया व्यवह्रियते। तत्तन्मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारः कथमवतरति गगनमिव स्वप्नदृष्टघटकटाहकोटरकुटीकोटिभिः। तदास्तां तावत्, हिमाद्रिकिवणिजो वहित्र चिन्तया। [आत्मतत्त्वविवेकः ५०३-५०४]।

यच्चोक्तं, पूर्वपक्षिणा—अनुवादलिङ्गाभावात् 'नायमनुवाद' इति, लिङ्गभावोऽसिद्ध इत्याह—इदं सर्वं यदयमात्मा, 'यदिदं सर्वम्', यच्छब्देन प्रपञ्चमात्रमनूद्य तन्निषेधेन आत्मरूपतामात्रं प्रतिपाद्यते। अत्र यच्छब्दस्यानुवादलिङ्गस्य स्पष्टनिर्देशात् यत्रापि लिङ्गं स्पष्टं न प्रतीयते तत्रापि एतदनुसारेणैव अनुवादलिङ्गं यच्छब्दादिकं कल्प्यते। अदुःखमसुखं सममिति श्रुत्यापि निषिध्यमानं सुखं वैषयिकसुखमेव दुःखसाहचर्यात्। असुखमिति सुखनिषेधाय आनन्दश्रुत्युपात्तब्रह्मानन्दस्य प्रतियोगितया नापेक्षा वैषयिकसुखमादाय निषेधश्रुतेः पर्यवसानात्। प्रत्यक्षाप्राप्तब्रह्मानन्दस्य निषेधाय असुखमिति श्रुतिर्न प्रवृत्ता किन्तु वैषयिकानन्दनिषेधाय। आनन्दश्रुतिरपि न प्रत्यक्षप्राप्तानन्दानुवादिनी। प्रत्यक्षप्राप्तानन्दस्य वैषयिकानन्दरूपत्वात्। ब्रह्मानन्दस्य तु तद्भिन्नत्वात् नानुवाद्यानुवादकभावः। अतोऽसुखमिति श्रुत्या ब्रह्मरूपसुखमनूद्य निषिध्यते इति न संभवति। प्रत्यक्षप्राप्तवैषयिकसुखानुवादेनैवासुखमिति श्रुतेः पर्यवसानात्। विवरणेऽप्युक्तम्—सप्रपञ्चवाक्यस्य निष्प्रपञ्चवाक्यापेक्षितनिषेध्यसमर्पकतया एकवाक्यत्वम्। 'इदं सर्वं यदयमात्मा इत्यादि-

अथ निष्प्रपञ्चता न पुरुषार्थः मूर्च्छायां तत्त्वादर्शनात्। न च तदा तदज्ञानमात्रं न तु तदभाव इति वाच्यम्; समं सुषुप्तावपीति चेत्।

न, मूर्च्छायां स्वरूपसुखस्फुरणाभावात्। तथा च सूत्रम्—'मुग्धेऽर्धसम्पत्तिः परिशेषादि'ति। सुषुप्तिमुक्तिकालीननिष्प्रपञ्चतायां स्वरूपसुखानुभवेन तस्याः पुरुषार्थत्वात्। तथा च श्रुतिः द्वितीयाद्वै भयं भवतीति।

---

सप्रपञ्चवाक्यस्य निष्प्रपञ्चवाक्यापेक्षितनिषेध्यसमर्पकत्वेन एकवाक्यता। सप्रपञ्चवाक्यस्य निषेध्यसमर्पणेन निष्प्रपञ्चवाक्येन एकवाक्यतायां परमपुरुषार्थसिद्धिः। सुषुप्तौ निष्प्रपञ्चतायाः पुरुषार्थत्वदर्शनात्। सप्रपञ्चतायामपुरुषार्थत्वस्य सर्वानुभवसिद्धत्वादिति भावः।

निष्प्रपञ्चताया अपुरुषार्थत्वं समर्थयितुं शंकते पूर्वपक्षी—अथ निष्प्रपञ्चता न पुरुषार्थः मूर्च्छायां तत्त्वादर्शनात्। न च तदा तदज्ञानमात्रं न तु तदभाव इति वाच्यं समं सुषुप्तावपि इति चेत्। मूर्च्छायां निष्प्रपञ्चत्वे विद्यमानेऽपि तस्य अपुरुषार्थत्वस्य सर्वसिद्धत्वात् नहि मूर्च्छावस्थाप्राप्त्यर्थं पुरुषाणां प्रवृत्तिः। निष्प्रपञ्चत्वमात्रस्य पुरुषार्थत्वे मूर्च्छावस्थाप्राप्त्यर्थं पुरुषाणां प्रवृत्तिः स्यात्। न च तदा—मूर्च्छावस्थायां तदज्ञानमात्रं—प्रपञ्चाज्ञानमात्रं, न तु तदभावः—न तु मूर्च्छावस्थायां प्रपञ्चाभावः। मूर्च्छावस्थायां प्रपञ्चे विद्यमानेऽपि व्याधिप्रहारादिभिः प्रपञ्चग्रहणसामर्थ्यं विनश्यति इत्येतावन्मात्रम्। सुषुप्तौ च प्रपञ्चप्रविलयात् निष्प्रपञ्चत्वमेव। न प्रपञ्चज्ञानाभावमात्रं अतो मूर्च्छासुषुप्त्योर्वैलक्षण्यमिति न च वाच्यं, कुत इति चेत्—समं सुषुप्तावपि इति सुषुप्तावपि न प्रपञ्चप्रविलयः किन्तु विद्यमाने एव प्रपञ्चे प्रपञ्चग्रहणसामर्थ्यवैकल्यादग्रहणमात्रमेव मूर्च्छासुषुप्तिसाधारणम्, मूर्च्छातः सुषुप्तेर्वैलक्षण्यमसिद्धमिति पूर्वपक्षिणो भावः।

मूर्च्छातः सुषुप्तेर्वैलक्षण्यं समर्थयन्नाह सिद्धान्ती—न मूर्च्छायां स्वरूपसुखस्फुरणाभावात् तथा च सूत्रम्—मुग्धेऽर्धसम्पत्तिः परिशेषादिति। सुषुप्तिमुक्तिकालीननिष्प्रपञ्चतायां स्वरूपसुखानुभवेन तस्याः पुरुषार्थत्वात् तथा च श्रुतिः द्वितीयाद्वै भयं भवतीति।

तमः प्राबल्येन मूर्च्छायां साक्षिस्वरूपसुखस्यावृतत्वात् स्वरूपसुखं न स्फुरति। मूर्च्छायां स्वरूपसुखास्फुरणे पारमर्षं सूत्रं प्रमाणयति 'मुग्धेऽर्धसम्पत्तिः परिशेषात्,—[ब्र० सू० ३।२।१०] अस्यार्थः—मुग्धे— मूर्च्छावस्थारूपं मूढे साक्षिणि तमसा आवृते इति शेषः; अर्धसम्पत्तिः—सुषुप्तेरर्धं मूर्च्छायां ज्ञानेन्द्रियाणामुपरमेऽपि कर्मेन्द्रियाणामनुपरमेण सम्पूर्णसुषुप्त्यभावात्। कर्मेन्द्रियाणां तदानीमनुपरमश्च हस्तादिचेष्टापरिशेषादिति व्याससूत्रार्थः। सुषुप्तिकालीननिष्प्रपञ्चता न प्रपञ्चे विद्यमाने तदग्रहणमात्रं किन्तु सुषुप्तौ दशाशागतं [सुषुप्तिदशङ्गतं] जगत्प्राणे विलीनं भवति पुनः प्रबोधे पुनस्तत एव प्रादुर्भवति इति दर्शयति कौषीतकीब्राह्मणोपनिषत्, तत्राम्नायते—यत्रैतत्पुरुषः सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एकधा भवति तदेनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुःसर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैः ध्यातैः सहाप्येति। स यदा प्रतिबुध्यते यथा अग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेव एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका इति [कौ० उ० ३।३]. अन्यत्रापि च सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति इति च। माण्डूक्योपनिषदि—सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयपादः इति। [मा० उ० ५] अन्यच्च—पुनश्च जन्मान्तरकर्मयोगात् तत्स्तु जातं सकलं विचित्रम्—इत्यादिश्रुतिभिः सुषुप्तौ प्रपञ्चलयस्य तदुत्तरं प्रपञ्चोत्पत्तेश्चोक्तत्वात् सुखमहमस्वाप्समिति सुषुप्त्युत्तरस्मृतेश्च सुषुप्तौ संस्काराविद्यान्यप्रपञ्चशून्यतारूपा निष्प्रपञ्चा प्रमितैव। एवञ्च सुषुप्तिमुक्तिकालीननिष्प्रपञ्चतायां आत्मस्वरूपसुखानुभवेन तस्याः पुरुषार्थत्वात् निष्प्रपञ्चस्वरूपसुखापरोक्षतैव पुरुषार्थः। सा च सुषुप्तौ अस्त्येवेति कथं स न पुरुषार्थः स्यात्। सुषुप्तौ निष्प्रपञ्चं भासमानं सुखं साधयित्वा तस्य जाग्रदादिसुखाद्युत्कर्षे मानमाह—तथा चेति द्वितीयाद्वै भयं भवतीति श्रुतिः [बृह० उप० १।४।२] अस्याः श्रुतेरयमभिप्रायः—द्वितीयात्—आनात्मज्ञानात् भयं—दुःखसाधनमिदमितिधीप्रयुक्तो वृत्तिविशेषः, तथा च अनात्ममात्रस्य दुःखसाधनत्वेन लोकानामनुभूयमानत्वात् तस्य च श्रुत्या अनुवादात् जाग्रदादिकाले च दुःखसाधनानां सुषुप्तिकालीनाज्ञानाद्यपेक्षया बाहुल्यात् सुषुप्तिसुखं जाग्रदादिसुखापेक्षया अर्थादुत्कृष्टमिति भावः। सप्रपञ्चत्वस्य पुरुषार्थत्वं

अथ तस्मादेकाकी न रमते इति श्रुतेः सप्रपञ्चतापि पुरुषार्थः। न, तस्याः दुःखसाधनत्वेन पुरुषार्थत्वायोगात्। कर्मकाण्डवदस्याः श्रुतेः अविवेकिपुरुषपरत्वाच्च।

ननु 'पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इति भेदज्ञानस्य मोक्षहेतुत्वश्रवणात् कथं न सप्रपञ्चता पुरुषार्थ इति चेत् ॥९॥

---

शंकते पूर्वपक्षी—अथ तस्मादेकाकी न रमते इति श्रुतेः सप्रपञ्चतापि पुरुषार्थः। बृहदारण्यके "तस्मादेकाकी न रमते" इति श्रूयते। आत्मनो निष्प्रपञ्चतायां तस्य एकाकित्वं स्यात् तत्रास्य रमणाभावात् एकाकित्वस्यापुरुषार्थत्वमिति सप्रपञ्चतैव पुरुषार्थ इति भावः। समाधत्ते—न तस्याः दुःखसाधनत्वेन पुरुषार्थत्वायोगात्। कर्मकाण्डवदस्याः श्रुतेः अविवेकिपुरुषपरत्वाच्च। तस्याः सप्रपञ्चतायाः दुःखसाधनत्वेन सर्वैरनुभूयमानतया पुरुषार्थत्वायोगात्। पारलौकिकश्रेयःसाधनकर्मणः अविवेकिपुरुषैरर्थ्यमानत्वेन यथाऽविवेकिनं प्रति कर्मणः पुरुषार्थत्वं तथा सप्रपञ्चतयाऽपि पुरुषार्थत्वं अविवेकिपुरुषं प्रत्येव न विवेकिपुरुषधुरन्धरं प्रतीति भावः। पुनः प्रकारान्तरेण सप्रपञ्चतायाः पुरुषार्थत्वं शंकते पूर्वपक्षी—ननु पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति इति भेदज्ञानस्य मोक्षहेतुत्वश्रवणात् कथं न सप्रपञ्चता पुरुषार्थ इति चेत्। ननु एकधैवानुद्रष्टव्यमित्यादिवाक्यस्वारस्यादभेदज्ञानस्यैव मोक्षहेतुत्वात् निष्प्रपञ्चतैव पुरुषार्थ इत्याशंक्याह भेदज्ञानस्य मोक्षसाधनत्वे श्रुतिः प्रमाणमस्ति पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेतीति [श्वेता० उ० १।६] आत्मानं—स्वात्मानं जीवं प्रेरितारम् ईश्वरं पृथक् मत्वा जीवेश्वरयोर्भेदेन मननात् अमृतत्वं मोक्षमेति प्राप्नोतीति श्रुतिरेव जीवेश्वरभेदज्ञानात् मोक्षं दर्शयति अतः सप्रपञ्चता पुरुषार्थ एव[1] ॥९॥

---

१. उक्तञ्च अद्वैतदीपिकायां नृसिंहाश्रमश्रीचरणैः—"यत्तु पृथगात्मानं प्रेरितारञ्च मत्वा" इत्यादिभेदज्ञानात् मुक्तिरिति तदसत्। आत्मानं कार्यकारणसंघातात् पृथक् विलक्षणं मत्वा न पदार्थज्ञानमात्रान्मुक्तिरिति वाक्यार्थमीश्वरतादात्म्यमप्याह—प्रेरितारञ्च मत्वेति। पृथक्तया अवगतमेवात्मानं प्रेरितारं मत्वा ईश्वर इति ज्ञात्वा इत्यर्थः। तेन अमृतत्वं प्राप्नोति अभेदज्ञानादेव। तत्रापि मोक्षस्य

न, मतेः पूर्वं ममापि प्रेरकपृथक्त्वदृष्टेः, सगुणब्रह्मज्ञानवत् प्रेरकत्वेन ब्रह्मज्ञानस्यापि परम्परया उपकारकत्वात्। 'एकधैवानुद्रष्टव्यमि'त्यादिवाक्यस्वारस्याद् अभेदज्ञानस्यैव साक्षान्मोक्षहेतुत्वात्। अत एव प्रेरकत्वज्ञानस्य जोषहेतुत्वमुक्तम्। तथा उत्तरत्रापि 'वेदविदो विदित्वा

---

१०—समाधत्ते—न मतेः पूर्वं ममापि प्रेरकपृथक्त्वेष्टे, सगुणब्रह्मज्ञानवत् प्रेरकत्वेन ब्रह्मज्ञानस्यापि परम्परया उपकारकत्वात्। एकधैवानुद्रष्टव्यमित्यादिवाक्यस्वारस्यादभेदज्ञानस्यैव साक्षान्मोक्षहेतुत्वात्। अत एव प्रेरकत्वज्ञानस्य जोपहेतुत्वमुक्तम्। तथा उत्तरत्रापि

---

दर्शितत्वात्। प्रकारान्तरेण तदर्थकथने कथितनियमश्रुतिविरोधात्। उदरमन्तरं कुरुते अथ तस्य भयं भवति, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, नात्र काचन भिदास्ति, नैवात्र काचन भिदास्ति इति श्रुत्या भेदज्ञानस्यानर्थहेतुत्वप्रतिपत्तेः। भेदस्वरूपनिषेधाच्च, "भयं द्वितीयाभिनिवेशतः स्यादिति स्मृतेश्च, "तत्र को मोहः कः शोक एकत्वमनुपश्यत, "यस्मान्मदन्यं नास्ति कस्मान्नु बिभेमि" तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति, स इदं सर्वं भवति इत्यभेदज्ञानात् भयनिवृत्तिश्रेयःप्राप्त्योर्दर्शिताच्च। तस्मान्न भेदज्ञानान्मोक्षः। [द्वितीयपरिच्छेदः पृ० ५९] विवृतञ्चैतत् श्रीनारायणैः—आत्मानं प्रेरितारञ्च पृथङ्मत्वा अमृतत्वमेति इति नैतच्चतुरर्थः। पामराणामपि। तादृशमननसत्त्वेन अमृतत्वप्राप्तिप्रसंगात्। किन्तु शरीराद्यभेदेन गृहीतमात्मानं ततः पृथङ्मत्वा पृथक्कृतमात्मानं प्रेरितारञ्च मत्वा ईश्वरत्वेन च निश्चित्य अमृतत्वमेति इत्येवमर्थपरेयं श्रुतिरित्याह—तदसदिति आत्मानं प्रेरितारञ्च पृथङ्मत्वा इत्यर्थकथने तमेव विदित्वेत्यादिश्रुतिविरोधश्च इत्याह-प्रकारान्तरेणेति। भेदज्ञानस्यानर्थहेतुत्वात् श्रुतिबाधितविषयकत्वेन भ्रान्तित्वाच्च न मोक्षहेतुतेत्याह—उदरमिति। उत्—अपि, अरम्—अल्पम्, अन्तरं—भेदम्। अल्पमपि भेदं यः साधयतीत्यर्थः। नानेवेति—इवशब्देन नानात्वस्य मिथ्यात्वमुच्यते, तथा च मिथ्याभूतं नानात्वं पुरुषार्थतया यः पश्यति स मृत्योरनन्तरमपि पुनर्मृत्युमाप्नोतीत्यर्थः। तत्स्वरूपेति—नात्र काचन भिदेत्यादिना भेदस्वरूपस्यापि निषिद्धत्वादित्यर्थः। उक्तश्रुतिमूलकस्मृतितोऽपि द्वैतबुद्धेर्भयहेतुत्वमास्थेयमित्याह—भयं द्वितीयेति। अभेदज्ञानस्य तु अनर्थनिवर्तकत्वपुरुषार्थहेतुत्वश्रवणात्। स एव श्रुत्यर्थं इत्याह। तत्र को मोहः इति। सहायमीक्षांचक्रे इति पूर्ववाक्योक्तहिरण्यगर्भेक्षणस्वरूपमाह—यन्मदन्यन्नास्तीति। मत्तोऽन्यो नास्ति यतः अतः कस्माद्धेतोरहं बिभेमीत्यर्थः। यस्मादेवादयो ब्रह्मात्मतया ज्ञात्वा तदेवाभवन् तत्—तस्मात्, एतर्हि—इदानीमपि अहं ब्रह्मास्मीति यो वेद स सर्वात्मकं ब्रह्मैव भवतीत्यर्थः।

लीना ब्रह्मणि तत्परा ये विमुक्तास्तदात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः' इत्यभेद एव श्रूयते। अतो न भेदज्ञानस्य मोक्षहेतुत्वम्।

---

वेदविदो विदित्वा लीना ब्रह्मणि तत्परा ये विमुक्ताः तदात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः इत्यभेद एव श्रूयते। अतो न भेदज्ञानस्य मोक्षहेतुत्वम्।

अयम्भावः—प्रेरकत्वेन पृथक्त्वेन च मत्वा मुच्यते इति न श्वेताश्वतरमन्त्रस्यार्थः। किन्तु तत्त्वमतेः पूर्वं प्रेरकत्वेन पृथक्त्वेन चोपलभ्यमानम् अखण्डात्मरूपं मत्वा मुच्यते इत्यर्थः, इत्याशयवान्नाह—मतेः पूर्वं ममापि प्रेरकत्वेष्टेः तत्त्वमतेः पूर्वमीश्वरस्य प्रेरकत्वेन ज्ञानं ममापीष्टमेव। ईश्वरं प्रेरकत्वादिरूपेण मत्वा इत्यर्थकत्वेऽपि न क्षतिरित्याशयेनाह—सगुणब्रह्मज्ञानवत्। सत्यकामसत्यसंकल्पत्वादिगुणान्तरयुक्तब्रह्मज्ञान[त्व]वत् प्रेरकत्वपृथक्त्वादिगुणयुक्तब्रह्मज्ञानस्यापि परम्परया विशुद्धब्रह्मसाक्षात्कारोपकारकत्वाद्। उक्तञ्च कल्पतरुकृद्भिः अन्तरधिकरणे—

"निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥"
वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षात् अपेतोपाधिकल्पनम्॥

इति परम्परया इत्यस्य मनसो वशीकारादिद्वारा इत्यर्थः। एकधैवानुद्रष्टव्यमिति केवलार्थकैकपदेन शुद्धब्रह्मण उक्तत्वात् तत्स्वरूपविषयरूपप्रकारो धाप्रत्ययेनोच्यते। तथा च शुद्धब्रह्मविषयकमेव ज्ञानं मोक्षहेतुः न प्रेरकत्वादिविशिष्टस्य ज्ञानं मूलस्थादिपदेन शिवमद्वैतं चतुर्थं मन्यन्ते, सोऽयमात्मा स विज्ञेय इत्यादि श्रुतिसंग्रहः। ननु संख्यावाचकादेकशब्दात् धाप्रत्ययविधानातु केवलार्थकशब्दादुत्तरं धाप्रत्ययोऽसाधुरिति चेन्न कैवल्यस्यापि गौणैकत्वरूपत्वेन गौणसंख्यात्वात्। पशुना यजेत इत्यादौ हि पशवन्तराद्वित्यरूपमेकत्वमेकवचनार्थः। अन्यथा पशुद्वयस्यापि प्रत्येकं मुख्यैकत्वसंख्यासत्त्वेन एकवचनेन छागान्तरस्यानिवारणात्। एकमेवाद्वितीयमित्यादौ एकपदेन येन यातानि जीवन्तीत्यादौ एकवचनेन च कैवल्यमेव बोध्यते। एका जातिर्जातिर्ज्ञानमित्यादौ च न मुख्यैकत्व-

एतेन 'नेह नानेति' श्रुतिरेव 'विश्वं सत्यमि'त्यबाध्यस्वरूपबाधनिषेधाय विज्ञानवादिप्राप्तविश्वनिषेधानुवादिनी किं न स्यादिति निरस्तम्। भावाभावयोः परस्परविरहरूपत्वे समेऽपि भावग्रहो निरपेक्षत्वान्नाभावग्रहमपेक्षते। अभावग्रहस्तु सप्रतियोगिकतया भावग्रहमपेक्षते।

---

बोधसम्भवः, किन्तु कैवल्यस्यैव। किञ्च कैवल्यस्यैव सर्वत्र एकपदैकवचनप्रतिपाद्यत्वसम्भवेन न मुख्यैकत्वस्य तत्र भानम्। तथा च कैवल्यरूपैकत्वादिवाचकादेव घाप्रत्ययोऽनुशिष्टः। अत एव—प्रेरकज्ञानस्य साक्षान्मोक्षाहेतुत्वादेव जोपहेतुत्वमुक्तम्। ब्रह्मलोकावच्छिन्नकृतिविशेष एवात्र जोपशब्देनोच्यते। तथा च प्रेरकत्वादिरूपेण मत्वा "जुष्टः"—प्रीतः सन्, "ततः"—तादृशप्रीतिसमाप्तौ "तेन" मननेन तत्त्वसाक्षात्कारद्वारा मुच्यते। अयमेवास्याः श्रुतेरर्थः। अस्यां श्वेताश्वतरोपनिषदि अयं षष्ठो मन्त्रः। सप्तमे मन्त्रे "अत्रान्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः" इत्यभेद एव जीवब्रह्मणोः श्रूयते। "मूलेऽस्मिन् मन्त्रे ब्रह्मविदः स्थाने वेदविद इति पाठः, योनिमुक्ता इति स्थाने "ये विमुक्ता" इति पाठो दृश्यते। मन्ये लेखकप्रमादात् पाठभेदः संवृत्तः। पुनश्च अस्यामेव उपनिषदि "तदात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः" इत्यत्रापि जीवब्रह्मणोरभेद एव श्रूयते। अतो न श्वेताश्वतरोपनिषदमनुसृत्यापि भेदज्ञानस्य मोक्षहेतुत्वम्। उक्तञ्च नैष्कर्म्यसिद्धौ चतुर्थेऽध्याये—

"संसारबीजसंस्थोऽयं तद्धिया मुक्तिमिच्छति।
अक्ष्णोः निमीलनेनेव मृत्युं परिजिहीर्षति॥"

[नैष्कर्म्यसिद्धिः ४।१६] अनेनापि भेदज्ञानस्य मोक्षहेतुत्वं निराकृतम्। भेदमात्रस्याविद्यातन्त्रत्वात् भेदे विद्यमानेऽविद्याप्यवश्यं स्थास्यत्येव। अविद्या च संसारमूलम्। तथा च भेदज्ञानात् मोक्षो न सम्भवति। भेदस्य दुर्निरूपत्वाच्च तस्याविद्यातन्त्रत्वम्। एतच्च सर्वमग्रे स्फुटीभविष्यति।

एतेन नेह नानेति श्रुतिरेव विश्वं सत्यमित्यबाध्यस्वरूपबाधनिषेधाय विज्ञानवादिप्राप्तविश्वनिषेधानुवादिनी किं न स्यादिति निरस्तम्। भावाभावयोः परस्परविरहरूपत्वे समेऽपि भावग्रहो निरपेक्षत्वान्नाभावग्रहमपेक्षते। अभावग्रहस्तु सप्रतियोगिकतया भावग्रहमपेक्षते।

अतो 'नेति नेति' श्रुतिरेव सत्त्वश्रुत्यपेक्षा, न तु सत्त्वश्रुतेर्नेति श्रुत्यपेक्षा। अन्यथा अन्योन्याऽऽश्रयापत्तेः.

ननु उत्सर्गापवादन्यायोऽस्तु यथा हि "न हिंस्यात् सर्वा भूतानी'ति श्रुतिरविशेषप्रवृत्तावपि हिंसात्वसामान्यस्य प्रत्यक्षादिप्राप्तत्वात् निषेध्यो-

---

अतो नेति नेति श्रुतेरेव सत्त्वश्रुत्यपेक्षा न तु सत्त्वश्रुतेर्नेति श्रुत्यपेक्षा अन्यथा अन्योऽन्याश्रयापत्तेः। भावग्रहस्य निरपेक्षत्वात् नाभावग्रहमपेक्षते अतः पूर्वपक्षिणा यदुक्तं विश्वसत्त्वश्रुतिरपि बाधनिषेधाय नेह नानेति श्रुतिमपेक्षते इति तदपि निरस्तम्।

पूर्वपक्षिणोऽयं भावः—विज्ञानवादिरीत्या प्राप्तं यत् प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपं बाध्यत्वं तन्नेह नानेति वाक्येनानूद्य विश्वं सत्यमितिवाक्येनाबाध्यत्वरूपो यो बाधनिषेधः तस्मिन् अबाध्यत्वरूपबाधनिषेधे प्रतिपादिते नेह नानेति श्रुतिप्रतिपादितं बाध्यत्वं निषिध्यते इत्यपि स्यात्। अत्रेत्थमक्षरयोजना। विज्ञानवादिप्राप्तनिषेधानुवादिनी नेह नानेति श्रुतिरेव विश्वं सत्यमित्यबाध्यत्वरूपबाधनिषेधाय किं न स्यादिति पूर्वपक्षिणा अत्र एवमुत्प्रेक्ष्यते यत् शक्तं नाम अबाध्यत्वं तच्च बाध्यत्वाभावरूपं बाध्यत्वाभावश्च बाधनिषेधः बाधप्रतिपादिनी नेह नानेति श्रुतिस्तामपेक्षते विश्वसत्त्वश्रुतिरित्यपि वक्तुं शक्यतेऽस्माभिः।

इमां शंका निरस्यति सिद्धान्ती—भावाभावयोरिति भावाभावयोः परस्परविरहरूपत्वे समेऽपि भावग्रहो निरपेक्षत्वात् निष्प्रतियोगिकत्वात् भावग्रहो नाभावग्रहमपेक्षतेऽभावग्रहस्तु सप्रतियोगिकतया प्रतियोगित्वेन भावग्रहमपेक्षते। अतः अभावग्रहरूपतया नेति नेति श्रुतेरेव प्रतियोगिसमर्पकतया सत्त्वश्रुत्यपेक्षा। भावग्रहरूपतया सत्त्वश्रुतेः न नेह नानेति श्रुत्यापेक्षा। अन्यथा भावग्रहस्यापि अभावग्रहापेक्षायामन्योऽन्याश्रयात्। भावाभावयोरेकस्यापि ग्रहो न स्यादिति भावः। ननु सत्त्वस्यापि सत्त्वाभावाभावत्वेन सत्त्वग्रहेऽपि नेह नानेति श्रुत्यपेक्षा अस्तीति—चेन्न। उक्तरूपेण ग्रहे तदपेक्षणेऽपि सत्यतारूपेण ग्रहे तदनपेक्षणात् तदिदमुक्तं। भावग्रहो निरपेक्षत्वात् नाभावग्रहमपेक्षते इति। उत्सर्गापवादन्यायेन विश्वसत्यत्वश्रुतिर्नेह नानेति श्रुत्योरविरोधं शंकते—ननु उत्सर्गापवादः

प्रस्थितौ नाग्नीषोमीयवाक्यमपि निषेध्यसमर्पणायापेक्षते; तथा 'नेति नेती'त्यादिश्रुतिरविशेषप्रवृत्तापि प्रत्यक्षप्राप्तघटादिसत्त्वरूपनिषेध्यमादाय निराकांक्षा सती न प्रत्यक्षाप्राप्तधर्माधर्मादिसत्यत्वबोधिकां विश्वं सत्यमित्यादिश्रुतिमपि, निषेध्यसमर्पणायापेक्षितुमर्हति, यत्र तु मानान्तरेण निषेध्यस्याप्राप्तिस्तत्र निषेध्यसमर्पणाय श्रुत्यन्तरमपेक्षत एव। यथा षोडशिग्रहणाग्रहणयोः मानान्तरेण निषेध्योपस्थितावपि वाक्यापेक्षणे अग्नीषोमीयहिंसाया अपि निषिद्धत्वेन अधर्मत्वं स्यादिति चेत्।

---

न्यायोऽस्तु यथा हि न हिंस्यात् सर्वाभूतानीति श्रुतिरविशेषप्रवृत्तावपि हिंसात्वसामान्यस्य प्रत्यक्षादिप्राप्तत्वात् निषेध्योपस्थितौ नाग्नीषोमीयवाक्यमपि निषेध्यसमर्पणायापेक्षते। तथा नेति नेतीत्यादिश्रुतिरविशेषप्रवृत्ताऽपि प्रत्यक्षप्राप्तघटादिसत्त्वरूपनिषेध्यमादाय निराकांक्षा सती न प्रत्यक्षाप्राप्तधर्माधर्मादिसत्यत्वबोधिकां विश्वसत्यमित्यादिश्रुतिमपि निषेध्यसमर्पणायापेक्षितुमर्हति, यत्र तु मानान्तरेण निषेध्यस्याप्राप्तिस्तत्र निषेध्यसमर्पणाय श्रुत्यन्तरमपेक्षते एव यथा षोडशिग्रहणाग्रहणयोः मानान्तरेण निषेध्योपस्थितावपि वाक्यापेक्षणे अग्नीषोमीयहिंसाया अपि निषेध्यत्वेन अधर्मत्वं स्यादिति चेत्। सामान्यशास्त्रमुत्सर्गः विशेषशास्त्रमपवाद इति' स्थितिः। सामान्यविषयनिषेधशास्त्रस्य विशेषशास्त्रेण बाधनं स्यात् 'न हिंस्यादिति' शास्त्रं सामान्यतो हिंसां निषेधति—निषेधस्य प्रतियोगिसापेक्षत्वात् प्रतियोगिनश्च सामान्यतो हिंसात्वेन हिंसारूपस्य रागप्राप्तस्य प्रत्यक्षादिसिद्धस्य निषेध्यस्योपस्थितौ तमादायैव निषेधशास्त्रं पर्यवस्यति नाग्नीषोमीयं पशुमालभेतेति वैधहिंसाप्रतिपादिकां श्रुतिमपि निषेध्यसमर्पणाय निषेधशास्त्रमपेक्षते प्रत्यक्षादिसिद्धनिषेध्यमादायैव निषेधशास्त्रस्य चरितार्थत्वाद् तद्व्यत्क्रतेऽपि। नेति नेतीतिनिषेधश्रुतिरपि अविशेषप्रवृत्त्या प्रत्यक्षप्राप्तघटादिसत्त्वरूपनिषेध्यमादायैव पर्यवसिता सती न अतीन्द्रियधर्माधर्मादिसत्यत्वबोधिकां विश्वसत्यमित्यादिश्रुतिमपि निषेध्यसमर्पणाय अपेक्षते। निषेधश्रुतिः निषेध्यसमर्पकमानसापेक्षाऽपि मानान्तरेण निषेध्यसमर्पणे न निषेध्यसमर्पणाय श्रुतिमपेक्षते। यत्र मानान्तरेण

मेवम्, अग्नीषोमीयवाक्यस्य निषेधविषयन्यूनविषयत्वेनानन्यशेषतया स्वार्थतात्पर्यवत्त्वेन च न निषेध्यसमर्पणद्वारेण निषेधवाक्यशेषता, विश्वं सत्यमित्यादेस्तु निषेधविषयसमविषयत्वेन स्वार्थतात्पर्यरहितत्वेन च निषेध्यसमर्पणद्वारेण निषेधवाक्यशेषतोचितैव। अत एव न प्रत्यक्षाप्राप्तधर्मादिसत्त्वोपस्थापनेन वाक्यसाफल्यमपि। स्वार्थतात्पर्यरहितत्वेन च नाग्नीषोमीयवाक्यतुल्यत्वमित्युक्तम्। अतो दृश्यत्वादिहेतोर्धर्म्यंशेऽपि श्रुत्या न बाधः। अथ वा—व्यावहारिकसत्त्वपरेयं विश्वसत्यत्वश्रुतिः। न च व्यावहारिकसत्त्वे सर्वाविप्रतिपत्तेः तत्प्रतिपादनवैयर्थ्यम्, दशाविशेषे स्वर्गनरकादिसत्त्वप्रतिपादनेन तत्प्राप्तिपरिहारार्थं प्रवृत्तिनिवृत्त्योरेव तत्प्रयोजनत्वात्। व्यावहारिकत्वं च ब्रह्मज्ञानेत-

---

निषेध्यस्य प्राप्तिर्नास्ति तत्र निषेध्यसमर्पणाय निषेधश्रुतिः श्रुत्यन्तरमपेक्षते एव यथा षोडशिग्रहणाग्रहणयोः श्रुतिं विना षोडशिग्रहणं न मानान्तरेण प्राप्यते तस्यालौकिकत्वात्। मानान्तरेण निषेध्योपस्थितावपि यदि श्रुतिवाक्येनैव निषेध्योपस्थितिरपेक्षिता स्यात्तर्हि न हिंस्यादिति निषेधाय निषेध्योपस्थितये विहिताया अग्नीषोमीयहिंसाया अपि अपेक्षितत्वेन सापि निषिध्येत, अतः अग्नीषोमीयहिंसाया अपि अधर्मत्वं स्यात् निषिद्धत्वात्। न हिंस्यादिति निषेधविषयन्यूनविषयत्वेन अनन्यशेषतया च स्वार्थतात्पर्यवत्त्वेन अग्नीषोमीयवाक्यस्य न निषेध्यसमर्पणद्वारेण निषेधवाक्यशेषतेति समाधत्ते सिद्धान्ती—मेवं अग्नीषोमीयवाक्यस्य निषेधविषयन्यूनविषयत्वेनानन्यशेषतया स्वार्थतात्पर्यवत्त्वेन च न निषेध्यसमर्पणद्वारेण निषेधवाक्यशेषता, विश्वं सत्यमित्यादेस्तु निषेधविषयसमविषयत्वेन स्वार्थतात्पर्यरहितत्वेन च निषेध्यसमर्पणद्वारेण निषेधवाक्यशेषतोचितैव। अत एव न प्रत्यक्षाप्राप्तधर्मादिसत्त्वोपस्थापनेन वाक्यसाफल्यमपि। स्वार्थतात्पर्यरहितत्वेन च नाग्नीषोमीयवाक्यतुल्यत्वमित्युक्तम्। अतो दृश्यत्वादिहेतोर्धर्म्यंशेऽपि श्रुत्या न बाधः, अतो व्यावहारिकसत्त्वपरेयं विश्वसत्यत्वश्रुतिः। न च व्यावहारिकसत्त्वे सर्वाविप्रतिपत्तेः तत्प्रतिपादनवैयर्थ्यं दशाविशेषे स्वर्गनरकादिसत्त्वप्रतिपादनेन तत्प्रा-

राबाध्यत्वं न तु अबाध्यत्वं मिथ्यात्वबोधकश्रुतिविरोधात् । न चैवं दृढ-भ्रान्तिजनकत्वात् अत्यन्ताप्रामाण्यापत्तिः स्वप्नार्थप्रतिपादनवदुपपत्तेः । एतावानेव विशेषः—तत्प्रातिभासिकम् , इदन्तु व्यावहारिकमिति ।

---

प्तिपरिहारार्थं प्रवृत्तिनिवृत्त्योरेव तत्प्रयोजनत्वात् । व्यावहारिकत्वं च ब्रह्मज्ञानेतराबाध्यत्वं न तु अबाध्यत्वं मिथ्यात्वबोधकश्रुति-विरोधात् । न चैवं दृढभ्रान्तिजनकत्वात् अत्यन्ताप्रामाण्यापत्तिः स्वप्नार्थप्रतिपादनवदुपपत्तेः । एतावानेव विशेषः तत्प्रातिभासिकम् इदन्तु व्यावहारिकमिति । रागप्राप्तनिषेधबोधकत्वेनैव न हिंस्यादिति वाक्योपपत्तौ अत्र शास्त्रप्राप्तबाधकत्वस्य विकल्पापादकस्यान्याय्यत्वात् अग्नीषोमीय-हिंसादन्यहिंसानिषेधे न हिंस्यादिति वाक्यस्य तात्पर्यकल्पनात् न तेन अग्नीषो-मीयवाक्यमपेक्ष्यते इति भावः । अग्नीषोमीयवाक्यस्य न निषेध्यसमर्पणद्वारेण निषेधवाक्यशेषता निषेधवाक्यापेक्षया न्यूनविषयत्वेनाग्नीषोमीयवाक्यस्य निषेधवाक्यापवादकत्वमेव, न्यूनविषयकस्यैव अपवादकत्वात् अग्नीषोमीयवाक्या-विषये न हिंस्यादित्युत्सर्गप्रवृत्तिसम्भवात् तथा च नाग्नीषोमीयवाक्यस्य निषेध-वाक्यशेषता निषेधवाक्यापेक्षयान्यूनविषयत्वात् । कुतश्च न निषेधवाक्यशेषता इत्यत आह—अनन्यशेषतया स्वार्थतात्पर्यवत्त्वेन चेति । स्वर्गफलकज्यो-तिष्टोमाङ्गभूतत्वेनाग्नीषोमीययागस्य सफलत्वात् नान्यशेषता अतः स्वार्थे तात्पर्यवत् अग्नीषोमीयवाक्यं नार्थवादवाक्यवत् विधिशेषत्वेन स्वार्थतात्पर्यरहितम् । अतो न निषेध्यसमर्पणेन निषेधवाक्यशेषता । अग्नीषोमीयवाक्यविपरीतं विश्वं सत्यमि-त्यादिवाक्यमित्याह—विश्वं सत्यमित्यादिस्त्विति । नेह नानेति निषेध-विषयान्यूनविषयत्वेन निष्फलतया स्वार्थतात्पर्यरहितत्वेन च विश्वं सत्यमित्यादि-वाक्यं पुरुषार्थपर्यवसानाय च निषेध्यसमर्पणद्वारा निषेधवाक्यशेषताम् अनुभवति इत्येव युक्तम् । अत एव निष्फलत्वेन स्वार्थतात्पर्यरहितत्वादेव प्रत्यक्षाप्राप्तध-र्मादिसत्त्वोपस्थापनेनापि न वाक्यसाफल्यम् । अप्राप्तप्रयोजनवदर्थप्रतिपादनेनैव वाक्यं सफलं भवति नाप्राप्तार्थकत्वमात्रेण । विश्वं सत्यमिति वाक्यं स्वार्थतात्पर्य-रहितमिति न स्वार्थतात्पर्यवदग्नीषोमीयवाक्यतुल्यं सतात्पर्यकनिस्तात्पर्यक-वाक्ययोर्तुल्यत्वाभावात् । विश्वं सत्यमित्यादिवाक्यस्य देवतास्तुत्यर्थकत्वेन स्वार्थे

तात्पर्याभावात्, स्वार्थतात्पर्यरहिततया श्रुत्यां धर्माद्यंशे दृश्यत्वादिहेतोर्न बाधः। विश्वसत्यत्वे अस्याः श्रुतेस्तात्पर्याभावात्। अतः स्तुतिप्रतिपादिनी विश्वसत्यत्वश्रुतिः व्यावहारिकसत्त्वपरा। व्यावहारिकसत्त्वपरयापि श्रुत्या स्तुतेरुपपत्तेः विश्वस्य व्यावहारिकसत्त्वोपस्थापनेन च निषेध्योपस्थापनद्वारा निषेधवाक्यशेषतापि। यथा च पटादेः सत्त्वं प्रत्यक्षप्राप्तं तथा धर्मादेरपि अनुमानादिना सत्त्वं प्राप्तं नहि प्रमायाः भ्रमस्य च ज्ञानस्योत्पत्तिकाले तत्र सद्विषयकत्वरूपं प्रामाण्यमावयोर्मते ज्ञानग्राहके गृह्यते स्वतः प्रामाण्याभ्युपगमात् तथा च धीविषयस्य सर्वस्य सत्त्वप्राप्त्या तदनुवादिकैव विश्वसत्यत्वश्रुतिः। समभिव्याहृतविध्यपेक्षितस्तुतिमात्रपरेति भावः। अत एवेति। निषेधवाक्यशेषत्वादेव यद्यपि धर्मादेरपि अनुमानादिना सत्त्वं प्राप्तं तथापि न प्राप्तमिति परेणोक्तत्वात् तदनुसृत्य एवमुक्तम्। अथ वा स्वतः प्रामाण्यादुक्तरीत्या विश्वसत्त्वं ज्ञानग्राहकेण यत् प्राप्तं तत् व्यावहारिकमेव। श्रुत्या तु तात्त्विकं तत् प्रतिपाद्यते तथा च विश्वसत्यत्वश्रुतिर्नानुवादः। तत्राह—अत एवेति। धर्मादीत्यादिपदेन प्रत्यक्षप्राप्तघटादेः संग्रहः। तथा च प्रत्यक्षप्राप्तघटादेस्तदन्यधर्मादेश्चोपस्थापनद्वारा निषेधवाक्यशेषत्वादपि विश्वं सत्यमित्यादिवाक्यस्य साफल्यं भवत्येव। तथा च व्यावहारिकसत्त्वोपस्थापनेनापि विश्वं सत्यमित्यादिवाक्यस्य साफल्यसम्भवे तात्त्विकसत्त्वतात्पर्यकल्पनं व्यर्थम्। अन्यथा यजमानः प्रस्तरः इत्यादेरपि तात्त्विकाभेदपरत्वापत्तेः। मानान्तरसिद्धार्थानुवादेन वाक्यस्यान्यशेषत्वेन उपपत्तौ अद्वैतश्रुतिबाधो न युक्तः इति तु सममिति भावः।

विश्वं सत्यमित्यादिश्रुतेर्मिथ्यात्वश्रुत्यबाधकत्वे स्थिते मिथ्यात्वानुमानाबाधकत्वमपीत्याह—अतो दृश्यत्वादिहेतो······न बाध इति। अतो व्यावहारिकसत्त्वपरेयं विश्वसत्यत्वश्रुतिः व्यावहारिकसत्त्वपरत्वेऽपि न तत्प्रतिपादनवैयर्थ्यमित्याह दशाविशेषे इति। परलोकानङ्गीकर्तृत्वादिविप्रतिपत्त्या स्वर्गादौ सत्यतासन्देहदशायाम्। यद्यपि मिथ्यात्वसत्यत्वाभ्यां सन्दिग्धमपि स्वर्गादिकमुद्दिश्य प्रवृत्त्यादिकं संभवत्येव यदि न स्यादिति न्यायेन. तथापि तदलीकं न वेति सन्देहे तदसम्भवात्, अलीकवैलक्षण्यज्ञानाय श्रुत्या सत्तादात्म्यरूपं सत्त्वमुच्यते, तच्च व्यावहारिकं व्यवहारकाले प्रपञ्चस्य अबाधात्। प्रवृत्तिनिवृत्त्योरेव तत्प्रयोजनवत्त्वादिति समुदायद्वित्वसम्पादनरूपप्रयोजनवत्त्वात् विद्वद्वाक्यं यथा स्वार्थपरं तथा

ननु मिथ्यात्वश्रुतेर्लक्षणया अखण्डचिन्मात्रपरत्वेन सत्त्वबोधनात् अविरोधित्वमेव ॥१०॥

नाखण्डार्थबोधस्य द्वितीयाभावबुद्धिद्वारकत्वेन जगत्सत्यत्वविरोधित्वात् । न च प्रपञ्चसत्यत्वश्रुतेरप्रामाण्यप्रसंगः। अतत्त्वा-

---

स्वर्गप्राप्तिनरकपरिहारार्थप्रवृत्तिनिवृत्तिरूपप्रयोजनसत्त्वात् विश्वसत्यत्ववाक्यमपि स्वार्थपरमिति भावः। विश्वसत्यत्वश्रुतेः स्वार्थपरत्वेऽपि मिथ्यात्वबोधकश्रुतिविरोधात् व्यावहारिकसत्त्वबोधकत्वं न तु अबाध्यत्वरूपसत्यत्वबोधकत्वं किन्तु ब्रह्मज्ञानेतराबाध्यत्वरूपमेव । ब्रह्मज्ञानेतराबाध्यत्वरूपव्यावहारिकसत्त्वबोधकत्वे. विश्वसत्यत्वश्रुतेः दृढभ्रान्तिजनकत्वं ब्रह्मज्ञानमात्रबाध्यत्वेन दीर्घभ्रान्तिजनकत्वं मानान्तरसंवादित्वेन भ्रमत्वज्ञानाविषयत्वरूपं दृढत्वं भ्रान्तेः इत्यर्थः [स्यात्] । तथा च विश्वसत्यत्वश्रुतेः तादृशबोधजनकत्वात् अत्यन्ताप्रामाण्यापातः" इति पूर्वपक्ष्युक्तमाशंक्य समाधत्ते— स्वप्नार्थप्रतिपादनवदिति । यथा च श्रुतेः 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यती'ति स्वप्नार्थप्रतिपादनं तथा विश्वसत्यत्वश्रुतेरपि व्यावहारिकसत्त्वप्रतिपादनमिति भावः। स्वप्नार्थप्रतिपादकश्रुतितः विश्वसत्यत्वश्रुतेरयं विशेषो यत स्वप्नार्थः प्रातिभासिकः, विश्वसत्यत्वं व्यावहारिकमिति ।

मिथ्यात्वश्रुतिर्न सत्यत्वश्रुतिविरोधिनी शंकते पूर्वपक्षी—ननु मिथ्यात्वश्रुतेर्लक्षणया अखण्डचिन्मात्रपरत्वेन सत्त्वबोधनात् अविरोधित्वमेव । अत्र मिथ्यात्वश्रुतिरेकमेवाद्वितीयमित्यादिश्रुतिः, सा च लक्षणया द्वितीयाभावोपलक्षितचिन्मात्रं प्रतिपादयति, अतः विश्वसत्यत्वश्रुत्यविरोधिनी, ब्रह्मणि द्वितीयाभावबोधनेऽस्याः श्रुतेस्तात्पर्याभावात् ॥१०॥

११—समाधत्ते—नाखण्डार्थबोधस्य द्वितीयाभावबुद्धिद्वारकत्वेन जगत्सत्यत्वबुद्धिविरोधित्वात् । उपलक्षितबुद्धेर्विशिष्टबुद्धिद्वारकत्वात् विशिष्टबुद्धिपूर्विकैव उपलक्षितबुद्धिर्भवति । सदेव सोम्य इदमग्र आसीदिति पूर्ववाक्ये इदंशब्दोदितप्रपञ्चमात्रतादात्म्यापन्ने ब्रह्मणि अद्वितीयपदेन प्रसक्तप्रपञ्चात्यन्ताभावबोधनात् । प्रपञ्चात्यन्ताभावविशिष्टबुद्धौ जातायां प्रपञ्चात्यन्ताभावोपलक्षितबुद्धिर्जायते । उपलक्षितबुद्धेर्द्वारतया विशिष्टबुद्धिर्जायते द्वारीभूतविशिष्टबुद्धेः विश्वसत्यत्वबुद्धिविरोधित्वात् विश्वस्य मिथ्यात्वमेव पर्यवस्यति । कृतव्याख्यान-

वेदकत्वस्यावान्तरतात्पर्यमादाय इष्टत्वात् परमतात्पर्येण तु तत्त्वावेदकत्वं सर्वश्रुतीनां समम्। प्रातिभासिकव्यावृत्तस्य तद्वति तत्प्रकारकत्वादिरूपस्य निराकर्तुमशक्यत्वात् आसां व्यावहारिकप्रामाण्यमव्याहतमेव। असद्वा इदमग्र आसीत् इत्यादिश्रुत्यनुरोधेनापि तत्सत्यमित्यादिश्रुतिर्न ब्रह्मणि व्यावहारिकसत्त्वपरा ब्रह्मणो व्यवहारातीतत्वात्, तस्यापरमार्थत्वेन च निरधिष्ठानतया शून्यवादापत्तेः, किञ्चित्तत्त्वमगृहीत्वा च बाधानुपपत्तेः। अत एव सत्यत्वश्रुतिविरोधेन मिथ्यार्थश्रुतिरेवान्यपरेत्यपि न षड्विधतात्पर्यलिङ्गोपेतत्वेन मिथ्यात्व-

---

मेतत् 'अद्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धिपूर्वकत्वादित्यत्र ग्रन्थारम्भे एव। एवं सति विश्वं सत्यमित्यादिश्रुतेरप्रामाण्यप्रसङ्ग इति पूर्वपक्षी शंकते—न च प्रपञ्चसत्यत्वश्रुतेरप्रामाण्यप्रसंगः। प्रपञ्चसत्यत्वश्रुतेरद्वैतश्रुत्या बाधे सत्यत्वश्रुतेरप्रामाण्यप्रसङ्गः बाधितार्थकत्वादिति भावः। समाधत्ते—अतत्त्वावेदकत्वस्य अवान्तरतात्पर्यमादायेष्टत्वात् परमतात्पर्येण तु तत्त्वावेदकत्वं सर्वासां श्रुतीनां समम्। प्रातिभासिकव्यावृत्तस्य व्यावहारिकस्य तद्वति तत्प्रकारकत्वादिरूपस्य निराकर्तुमशक्यत्वात् आसां व्यावहारिकप्रामाण्यमव्याहतमेव। विश्वसत्यत्वे श्रुतेरवान्तरतात्पर्यं न चरमतात्पर्यम्। अवान्तरतात्पर्यकवेदवाक्येऽतत्त्वावेदकत्वस्येष्टत्वात नानिष्टप्रसंगः पूर्वपक्षिणा आपादितः। परमतात्पर्यकवेदवाक्ये तत्त्वावेदकत्वमेव। सर्वेषां वेदवाक्यानां परमतात्पर्यं विशुद्धे ब्रह्मण्येव तत्र वेदवाक्यानां तत्त्वावेदकत्वमेव। अवान्तरतात्पर्यकश्रुतीनामपि तद्वति तत्प्रकारकत्वरूपव्यावहारिकप्रामाण्यमेव सर्वथा अबाधितार्थकत्वरूपपारमार्थिकप्रामाण्यमवान्तरतात्पर्यकश्रुतीनां नास्त्येवेति भावः। अवान्तरतात्पर्यकश्रुत्यर्थे व्यावहारविसंवादाभावेन तासां व्यावहारिकप्रामाण्यमव्याहतमेव। व्यावहारिकप्रामाण्यञ्च तद्वति तत्प्रकारकत्वादिरूपं पूर्वमेवोक्तम्। असद्वा इदमग्र आसीदित्यादिश्रुत्यनुरोधेनापि तत्सत्यमित्यादिश्रुतिर्न ब्रह्मणि व्यावहारिकसत्त्वपरा ब्रह्मणो व्यावहारातीतत्वात्, तस्यापरमार्थत्वेन च निरधिष्ठानतया शून्यवादापत्तेः किञ्चित्तत्त्वमगृहीत्वा च बाधानुपपत्तेः। अत एव सत्यत्वश्रुतिविरोधेन मिथ्यात्वश्रुतिरेवान्यपरेत्यपि न

श्रुतेरनन्यपरतया प्रबलत्वात्। वैदिकतात्पर्यविषयस्य च तात्त्विकत्वनियमेन तात्पर्यज्ञापकानामपि लिङ्गनामर्थतथात्वे एव पर्यवसानात्। सत्त्वश्रुतिवाक्यस्थपदानां च अन्यपरत्वात् न सत्त्वे तात्पर्यलिङ्गाशङ्का।

---

पड्विधतात्पर्यलिङ्गोपेतत्वेन मिथ्यात्वश्रुतेरनन्यपरतया प्रबलत्वात्। वैदिकतात्पर्यविषयस्य च तात्त्विकत्वनियमेन तात्पर्यज्ञापकानामपि लिङ्गानाम् अर्थतथात्वे एव पर्यवसानात्। सत्त्वश्रुतिवाक्यस्थपदानां च अन्यपरत्वात् न सत्त्वे तात्पर्यलिङ्गाशंङ्का। एकमेवाद्वितीयमित्यादिश्रुतीनां तत्त्वावेदिनीनां असद्वा इदमग्र आसीदित्याद्यन्यार्थकश्रुत्यनुरोधेन तत्सत्यमित्यादिश्रुतिर्न ब्रह्मणि व्यावहारिकसत्त्वपरा भवितुमर्हति शुद्धब्रह्मणो व्यवहारातीतत्वात् इति भावः। सर्वाधिष्ठानतया ब्रह्मणः परमार्थत्वमेव। ब्रह्मणोऽपि अपरमार्थत्वे तस्याधिष्ठानत्वानुपपत्त्या प्रपञ्चविभ्रमस्य निरधिष्ठानत्वापत्तेः अध्यासोपादानाज्ञानविषयत्वमेवाधिष्ठानत्वं अज्ञानविषयत्वञ्च अज्ञानतन्त्रस्य मिथ्यावस्तुनोऽसम्भवात् परमार्थसत्त्वस्यैव। अधिष्ठानस्यापि अपरमार्थत्वे शून्यवादापत्तेः कुत्रापि बाध्यबाधकभावव्यवस्था न स्यात्। किञ्चित्तत्त्वमगृहीत्वा बाधानुपपत्तेः। उक्तञ्च शास्त्रदर्पणे अमलानन्दभगवत्पादैः—

> बाधितोऽपह्नवो मानैर्व्यावहारिकमानता।
> मानानां तात्त्विकं किञ्चित् वस्तु नाश्रित्य दुर्भणा॥

इति शास्त्रदर्पणे २।२।५ अधिकरणे मूले गृहीतत्वाच्चेति। चकारात ब्रह्मणः साक्षित्वेन बाधानुपपत्तेरिति हेत्वन्तरस्य समुच्चयः। तथा च बाध्याधिकसत्ताकत्वं बाधकत्वे प्रयोजकमिति तात्त्विकविषयकज्ञानस्यैव बाधकत्वात् न शून्यवादापत्तिरिति। बाध्यान्यूनसत्ताकविषयकत्वस्य बाधकत्वे प्रयोजकत्वमिति पक्षे च साक्षिणो बाधानुपपत्त्या न शून्यवादापत्तिरिति। साक्षिणोऽपि बाधे बाधस्यासिद्धिः स्यात् असाक्षिकस्य असिद्धत्वादिति भावः, परमार्थसत्यशुद्धब्रह्मणः साक्षिरूपस्य प्रतिपादिका तत्सत्यमित्यादिश्रुतिर्मिथ्यात्वश्रुतिः विश्वं सत्यमित्यादिश्रुत्या विरोधात् अन्यपरा न भवितुमर्हति, तथात्वे शून्यवादापत्तिः स्यात्, अत एव—शून्यवादापत्तेरेव मिथ्यात्वश्रुतिर्नान्यपरेति भावः। मिथ्यात्वश्रुतिरेकमेवाद्वितीयमित्यादिश्रुतिरित्यर्थः एकमेवाद्वितीयमित्यादिमिथ्यात्वश्रुतीनां पड्विधतात्पर्यनिर्णा-

ननु यदि सत्त्वश्रुतिः प्रत्यक्षप्राप्तार्थत्वात् न स्वार्थपरा तर्हि मिथ्यात्वश्रुतिरपि तद्विरुद्धार्थत्वात् स्वार्थपरा न स्यात् तत्प्राप्तितद्विरोधयोस्तात्पर्याभावहेत्वोरुभयत्रापि समत्वादिति चेत् ? ॥१२॥

न प्रत्यक्षापेक्षया चन्द्राधिकपरिमाणबोधकागमस्येव मिथ्यात्वबोधकागमस्यापि बलवत्त्वेन प्रत्यक्षप्राप्तानुवादिसत्त्वश्रुत्यपेक्षयापि बलवत्त्वात् अन्यथा उभयोरपि अप्रामाण्यापत्तेः। तदुक्तं संक्षेपशारीरके—

---

यक लिङ्गोपेततत्वेनानन्यपरतश्च अन्यपरविश्वं सत्यमित्यादिश्रुत्यपेक्षया प्रबलत्वात् अन्यपरानन्यपरश्रुत्योर्विरोधे अनन्यपरा प्रबला इत्येव मीमांसामर्यादा। श्रुतिवाक्यतात्पर्यज्ञापकलिङ्गानां श्रौतार्थतथात्वे यथा पर्यवसानं तथोक्तं एतत्प्रकरणप्रारम्भे एव लिङ्गानां स्वरूपं प्रदर्शयता। अत एव वैदिकतात्पर्यविषयस्य तात्त्विकत्वनियमः। विश्वं सत्यमित्यादिश्रुतिवाक्यस्थसत्यादिपादानां स्तुतिपरत्वात्। न सत्यत्वे तात्पर्यलिङ्गशंकापीत्यर्थः।

एकमेवाद्वितीयमित्यादिमिथ्यात्वश्रुतिरपि विश्वं सत्यमित्यादिश्रुतिविरुद्धतया न स्वार्थपरेति शंकते पूर्वपक्षी—ननु यदि सत्त्वश्रुतिः प्रत्यक्षप्राप्तार्थत्वात् न स्वार्थपरा तर्हि मिथ्यात्वश्रुतिरपि तद्विरुद्धार्थत्वात् स्वार्थपरा न स्यात्, तत्प्राप्तितद्विरोधयोस्तात्पर्याभावहेत्वोः उभयत्रापि समत्वादिति चेत। विश्वं सत्यमित्यदिश्रुतिः प्रत्यक्षप्राप्तप्रपञ्चसत्यत्वविषयकत्वेन गृहीतग्राहित्वात् यदि न स्वार्थतात्पर्यवती तर्हि एकमेवाद्वितीयमित्यादिमिथ्यात्वश्रुतिरपि प्रपञ्चसत्यत्वप्रतिपादकश्रुतिविरोधात् न स्वार्थपरा भवितुमर्हति प्राप्तिविरोधयोः तात्पर्याभावहेत्वोः उभयत्रापि समत्वात्। अयं भावः यथा अपूर्वतातात्पर्यलिङ्गं तदभावात् गृहीतग्राहकवाक्ये न तात्पर्यमेवं उपपत्तिरपि तात्पर्यलिङ्गं तदभावात् मानान्तरबाधितार्थकवाक्ये न तात्पर्यम्। विश्वं सत्यमिति वाक्यं यथा गृहीतग्राहकमेवं मिथ्यात्वश्रुतिरपि विश्वसत्यत्वश्रुतिबाधितार्था इत्युभयत्रापि तात्पर्याभावसाम्यमिति ॥१२॥

१३—मिथ्यात्वश्रुतेः सत्यत्वश्रुत्यपेक्षया बलवत्त्वान्नैवमिति परिहरति सिद्धान्ती—न प्रत्यक्षापेक्षया चन्द्राधिकपरिमाणबोधकागमस्येव मिथ्यात्वबोधका-

अतत्परां तत्परवेदवाक्यैर्विरुध्यमाना गुणवाद एव इति । अत एवानन्य-
शेषमिथ्यात्वश्रुतिविरोधात् न प्रत्यक्षागृहीतत्रिकालाबाध्यत्वरूपसत्यत्व-
परा जगत्सत्यत्वश्रुतिरित्युक्तम् । अद्वैतश्रुतेश्च प्राबल्ये निरवकाशत्वता-
त्पर्यवत्त्वादिकमेव प्रयोजकम्, न निषेधवाक्यत्वम् ।

---

गमस्यापि बलवत्त्वेन प्रत्यक्षप्राप्तानुवादिसत्त्वश्रुत्यपेक्षयापि बलवत्त्वात्,
अन्यथा उभयोरपि अप्रामाण्यापत्तेः । तदुक्तं संक्षेपशारीरके ।

'अतत्परा तत्परवेदवाक्यैर्विरुध्यमाना गुणवाद एवेति ।

अत एवानन्यशेषमिथ्यात्वश्रुतिविरोधात् न प्रत्यक्षागृहीतत्रिकाला-
बाध्यत्वरूपसत्यत्वपरा जगत्सत्यत्वश्रुतिरित्युक्तम् । अद्वैतश्रुतेश्च प्रा-
बल्ये निरवकाशत्वतात्पर्यवत्त्वादिकमेव प्रयोजकं न निषेधवाक्यत्वम् ।
प्रत्यक्षप्राप्तं चन्द्रपरिमाणम् अल्पपरिमाणं चन्द्रे अल्पपरिमाणग्राहकप्रत्यक्षापेक्षया
चन्द्रे अधिकपरिमाणग्राहकागमस्य यथा बलवत्त्वं तथा प्रत्यक्षप्राप्तविश्वसत्यत्वानु-
वादिश्रुत्यपेक्षयापि मानान्तराप्राप्तविश्वमिथ्यात्वबोधकागमस्यैव बलवत्त्वं प्रबलश्रुत्या
दुर्बलश्रुतेरन्यथानयनमेव युक्तम्, अन्यथा द्वयोरपि परस्परविरुद्धार्थकत्वेन अप्रामा-
ण्यापत्तेः प्रबलश्रुत्यनुरोधेन दुर्बलश्रुतेरन्यथानयनमेवोक्तं संक्षेपशारीरके—अतत्परा
स्वार्थतात्पर्यरहिता अत एव दुर्बला श्रुतिः तत्परश्रुतिवाक्येन स्वार्थतात्पर्यवत्या प्रबलया
श्रुत्या विरुध्यमाना गुणवादेन व्याख्येया शक्यार्थात् प्रच्याव्य गौण्या वृत्त्या
व्याख्येया, एकमेवाद्वितीयमित्यादिमिथ्यात्वश्रुतिः स्वार्थतात्पर्यवत्त्वेनानन्यशेषत्वात्
प्रबला तया विरुध्यमाना प्रत्यक्षगृहीतसत्त्वग्राहिणी विश्वसत्यत्वश्रुतिर्देवतास्तुतिरूपा
दुर्बला, अन्यथा नेया व्यावहारिकसत्यत्वपरतया व्याख्येया न प्रत्यक्षगृहीतत्रिकाला-
बाध्यत्वरूपसत्यत्वपरा भवितुमर्हतीति प्रागेवोक्तम् । विश्वसत्यत्वश्रुत्यपेक्षया अद्वैत-
श्रुतेः प्राबल्ये निषेधवाक्यत्वं न प्रयोजकं निषेधवाक्यत्वं न प्राबल्यज्ञापकं न
प्राबल्यव्याप्यमित्यर्थः, किन्तु निरवकाशत्वं तात्पर्यवत्त्वम् अनन्यशेषत्वं साक्षात्
पुरुषार्थपर्यवसायित्वादिकमेव । अद्वैतश्रुतेः प्राबल्यज्ञापकम् यथा विश्व-
सत्यत्वं व्यावहारिकसत्यत्वे सावकाशं नैवम् अद्वैतं व्यावहारिकं भवितु-
मर्हतीति भावः । एतेन अन्यदपि पूर्वपक्षिशङ्कितं निरस्तमित्याह सिद्धान्ती—

एतेन निषेधवाक्यत्वेन प्राबल्ये क्ङिति तद्धिते वृद्धिविधायकात् किति चेति सूत्रात् सामान्यतो गुणवृद्धिनिषेधकं क्ङिति चेति सूत्रं बलवत् स्यात्। अग्नीषोमीयवाक्यात् अहिंसावाक्यं षोडशिग्रहणवाक्यात् अग्रहणवाक्यं सत्यं ज्ञानमित्यादिवाक्यात् असद्वा इदमग्र आसीदित्यादिवाक्यं च बलवद् स्यादित्यपास्तम्। सामान्यविशेषभावादिना सावकाशत्वनिरवकाशत्वादिरूपबलवैपरीत्यात् विश्वं सत्यमित्यादेस्तु व्यावहारिकसत्यविषयतया अन्यशेषतया च सावकाशत्वादेः प्रागुक्तत्वात्। तस्मान्न सत्त्वश्रुतिविरोधः।

---

एतेन निषेधवाक्यत्वेन प्राबल्ये किति तद्धिते वृद्धिविधायकात् किति चेति सूत्रात् सामान्यतो गुणवृद्धिनिषेधकं क्ङिति चेति सूत्रं बलवत् स्यात्। अग्नीषोमीयवाक्यात् अहिंसावाक्यं षोडशिग्रहणवाक्यात् अग्रहणवाक्यं सत्यं ज्ञानमिति वाक्यात् असद्वा इदमग्र आसीदित्यादिवाक्यं च बलवत् स्यादित्यपास्तम्। सामान्यविशेषभावादिना सावकाशत्वनिरवकाशत्वादिरूपबलवैपरीत्यात् विश्वं सत्यमित्यादेस्तु व्यावहारिकसत्यविषयतया अन्यशेषतया च सावकाशत्वादेः प्रागुक्तत्वात्। तस्मान्न सत्त्वश्रुतिविरोधः। निषेधवाक्यत्वस्य प्राबल्यप्रयोजकत्वे-किति च [पा० सू० १।२।११८] इति सूत्रेण किति तद्धिते परे आचचो वृद्धिः स्यादिति वृद्धिर्विहिता। सा न स्यात् क्ङिति चेति सूत्रेण किति ङिति च प्रत्यये परे तन्निमित्तकगुणवृद्धी न स्तः, सुप्तिङ्कृत्तद्धितसाधारणे किति परे वृद्धिर्निषिद्धा तदपवादकतया किति चेति सूत्रेण वृद्धिः विहिता। वृद्धिनिषेधकं शास्त्रं बाधित्वैव वृद्धिविधायकशास्त्रस्य प्रवृत्तिः अत्र निषेधवाक्यापेक्षया विधायकवाक्यस्यैव प्राबल्यं विशेषशास्त्रत्वात् सामान्यं निषेधशास्त्रं बाधित्वैव विधायकं विशेषशास्त्रं प्रवर्तते इति पूर्वपक्षिणोऽभिप्रेतम्। तन्न संगतम्, निषेधसूत्रेण इग्लक्षणगुणवृद्ध्योर्निषेधः, किति चेति विहिता वृद्धिस्तु न इग्लक्षणा, किन्तु आचलक्षणा वृद्धिः, इग्लक्षणत्वं हि इक् पदमुच्चार्य विहितत्वं, तथा च भिन्नविषयत्वात् अत्र सामान्यविशेषन्यायोक्तिः परस्य भ्रान्त्यैवेति बोध्यम्। यदपि सामान्यविशेषन्यायेन "निषेधवाक्यापेक्षया विधायकवाक्यस्य प्राबल्ये निदर्शनमुक्तं तदपि निरस्तं, नास्माभिः निषेधवाक्यत्वेनाद्वैतश्रुतेः प्राबल्यमुक्तम्। न हिंस्यादिति

नापि असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्।
एतां बुद्धिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः॥

इत्यादिस्मृतिविरोधः, सद्विविक्तत्ववादिनो मम जगत्यसद्-वैलक्षण्याङ्गीकारेण तत्प्रतिपादकस्मृतिविरोधाभावात् ॥१२॥

---

सामान्यतः प्रवृत्तं निषेधशास्त्रं बाधित्वैव अग्नीषोमीयवाक्यं विधायकंविशेषशास्त्रं प्रवर्तते। अत्रापि सामान्यविशेषन्यायेनैव सामान्यं निषेधशास्त्रं बाध्यते विधायकेन विशेषशास्त्रेणेति भावः। नातिरात्रे षोडशिनं गृह्णातीति निषेधशास्त्रं अतिरात्रे षोडशिनं गृह्णातीति विधायकशास्त्रेणैव बाध्यते। शास्त्रविद्धिस्तस्य बाधे विकल्पः स्यात्, न तु आत्यन्तिको बाधः। अत्रापि विधिशास्त्रेणैव निषेधशास्त्रस्य बाधः, निषेधवाक्यत्वेनैव प्राबल्ये असद्वा इदमग्र आसीदित्यादिनिषेधवाक्यमेव सत्यं ज्ञानमित्यादिवाक्यात् प्रबलं स्यात्, तथा च सर्वा शास्त्रमर्यादा उन्मृदिता स्यात्, सिद्धान्तिनां सिद्धान्तोऽपि त्यक्तव्यः स्यात् इति पूर्वपक्षिणा यदुक्तं तदपास्तम्, प्रदर्शितोदाहरणेषु सामान्यविशेषभावादीनां दौर्बल्यप्राबल्ये न विधित्वेन निषेधत्वेन वा तथा सावकाशत्वात् बलवैपरीत्यं दौर्बल्यम्, निरवकाशत्वादिकं बलमित्युक्तं मूले सावकाशत्वनिरवकाशत्वादिरूपबलवैपरीत्यादिति। विश्वं सत्य-मित्यादेस्तु व्यावहारिकसत्यविषयतया अन्यशेषतया च सावकाशत्वादेः प्रागुक्तत्वादिति त्रिकालाबाध्यत्वरूपसत्यत्वं प्रत्यक्षाद्यगोचरं विश्वसत्यत्वश्रुतेः तादृग्सत्यत्वविषयकत्वे षड्विधतात्पर्यलिङ्गोपेताद्वैतश्रुतिविरोधः स्यात्। देवतास्तुतितात्पर्यकतया अबाध्य-त्वरूपसत्यत्वानपेक्षणाच्च व्यावहारिकसत्यविषयिणी श्रुतिशेषतया च विश्वसत्यत्व-श्रुतिः सावकाशा परमपुरुषार्थपर्यवसायिनी तद्विपरीतया अद्वैतश्रुत्या बाध्यते। तस्मात् प्रपञ्चमिथ्यात्वानुमापका दृश्यत्वादयो हेतवः न विश्वसत्यत्वश्रुत्या बाध्यन्ते इति भावः।

यच्च पूर्वपक्षिणा जगत्सत्यत्वप्रतिपादकगीतावचनमुद्धृतं तद्वचनविरोधेन च मिथ्यात्वसाधकदृश्यत्वादिहेतूनां बाधः शंकितः तमुद्धर्तुमाह सिद्धान्ती—

नापि असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्। १६।८
एतां बुद्धिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः॥ १६।९

इत्यादिस्मृतिविरोधः सद्विविक्तत्ववादिनो मम जगत्यसद्वै-

ननु नाभाव उपलब्धेः, वैधर्म्याच्च न स्वप्नादिवदिति सूत्रद्वयेन जगतः पारमार्थिकसत्त्वबोधनेन विरोधः। न चानेन शून्यवादिनिरासार्थेनासद्वैलक्षण्यमात्रप्रतिपादनान्न विरोधः, अर्थक्रियाकारित्वलक्षणस्य असद्वैलक्षण्यस्य शून्यवादिमतेऽपि सत्त्वेन तन्मतनिरासार्थत्वानुपपत्तेः। निषेधाप्रतियोगित्वरूपस्य असद्वैलक्षण्यस्य त्वयापि

---

लक्षण्याङ्गीकारेण तत्प्रतिपादकस्मृतिविरोधाभावात्। गीतासु उपनिषत्सु षोडशाध्याये अष्टमनवमश्लोकयोः पूर्वार्द्धद्वयम् अत्र उदाहृतम्। नायम् अखण्डश्लोकः श्लोकार्द्धद्वयं नीलकण्ठेनैवं व्याख्यातम्—असत्यं सत्यवर्जितं जगत् प्राणिजातं तथाऽप्रतिष्ठं धर्माधर्माख्या प्रतिष्ठा आश्रयः तच्छून्यम् अनीश्वरमनियन्त्रिकमाहुः। एतामनुपदोक्तां लोकायतिकानाम् अभिप्रेतां दृष्टिम् अवष्टभ्य तामाश्रित्य नष्टात्मानः कामादिवशेन नष्टधैर्याः यतोऽल्पे क्षुद्रे दृष्टसुखे एव बुद्धिर्येषां तेऽल्पबुद्धयः इति। द्वितीयार्द्धे एतां दृष्टिमिति नीलकण्ठसम्मतः पाठः, न तु एतां बुद्धिमिति। नीलकण्ठव्याख्यानुसरणे भगवद्गीतावाक्यादस्मात् प्रपञ्चमिथ्यात्ववादिनां निन्दा वा प्रपञ्चमिथ्यात्वविरोधो वा न लेशतोऽपि [न][1] स्फुरति। तथापि पूर्वपक्षिमतमनुसृत्यैव आचार्येण एतत्स्मृतिवाक्यविरोधः प्रतिक्षिप्यते। सिद्धान्ते प्रपञ्चस्य सदसद्विलक्षणत्वाङ्गीकारात् प्रपञ्चस्यासत्यत्वमरूद्रूपत्वं नाङ्गीक्रियते अतो न स्मृतिविरोध इति भावः। लघुचन्द्रिकायां पुनरेवमुक्तम्—तत्प्रतिपादकस्मृतिविरोधाभावादिति प्रपञ्चस्य सदसदन्यत्वपरायाः स्मृतेर्विरोधाभावात्। यतः।अनीश्वरम् ईश्वरोपादानशून्यम् अतोऽसत्यं सत्योपादानशून्यम् अतश्च बाधावधिरूपप्रतिष्ठाशून्यम् इति ये माध्यमिका वदन्ति, तन्निन्दया सत्योपादानकं सत्यज्ञानबाध्यं च इत्युक्तस्मृतावुक्तम् ॥१२॥

१३—प्रपञ्चमिथ्यात्वानुमाने ब्रह्मसूत्रविरोधमुद्भावयति पूर्वपक्षी—ननु नाभाव उपलब्धेः, वैधर्म्याच्च न स्वप्नादिवदिति सूत्रद्वयेन जगतः पारमार्थिकसत्त्वबोधनेन विरोधः। न चानेन शून्यवादिनिरासार्थेनासद्वैलक्षण्यमात्रप्रतिपादनान्न विरोधः अर्थक्रियाकारित्वलक्षणस्यासद्वैलक्षण्यस्य शून्यवादिमतेऽपि सत्त्वेन तन्मतनिरासार्थत्वानुपपत्तेः। निषेधा[षेधप्र]

---

१. एको नकारोऽधिकः प्रतिभाति।

अनङ्गीकारात्। असद्वैलक्षण्यमात्रस्य साधने सूत्रे स्वप्नवैलक्षण्योक्त्ययोगाच्च। व्यावहारिकसत्यत्वमात्रेण स्वप्नवैलक्षण्यस्य त्वयापि अङ्गीकारात्। असद्वैलक्षण्यमात्रस्य तन्मतेऽपि सत्त्वाच्च। तदुक्तं बौद्धैः द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशना इति चेत्? ॥१३॥

---

प्रतियोगित्वरूपस्यासद्वैलक्षण्यस्य त्वयापि अनङ्गीकारात्। असद्वैलक्षण्यमात्रस्य साधने सूत्रे स्वप्नवैलक्षण्योक्त्ययोगाच्च। व्यावहारिकसत्त्वमात्रेण स्वप्नवैलक्षण्यस्य त्वयापि अङ्गीकारात्। असद्वैलक्षण्यमात्रस्य तन्मतेऽपि सत्त्वाच्च। तदुक्तं बौद्धैः 'द्वे सत्त्वे समुपाश्रित्य बुद्धानांधर्मदेशना' इति। नाभाव उपलब्धेः [ब्र० सू० २।२।२८] वैधर्म्याच्च न स्वप्नादिवत् [ब्र० सू० २।२।२९] इति ब्रह्मसूत्रद्वयेन जगतः पारमार्थिकत्वबोधनेन प्रपञ्चमिथ्यात्वानुमानविरोधः इति पूर्वपक्षिणः शंका। पुनः पूर्वपक्षी सिद्धान्तिमतमाशंक्य निराचष्टे न चेति। असत्यमप्रतिष्ठं ते नाभाव इत्यादिस्मृतिसूत्रविरोधो नास्ति सर्वजगदत्यन्तासत्त्ववादिशून्यवादिनिन्दार्थत्वात् स्मृतेः, सूत्रस्यापि शून्यवाद्यभिमतसर्वासत्त्वनिरासकत्वात् न प्रपञ्चमिथ्यात्वसाधकानुमानविरोधः इति सिद्धान्तिना न वाच्यम्, यतः सिद्धान्तिमतेऽपि जगतोऽत्यन्तासत्त्वात् शून्यवादिनः सकाशात् अद्वैतिनां वैलक्षण्याभावात्। शून्यवादनिरासकसूत्राणाम् अद्वैतमतनिरासाय उदाहरणे न दोषः इत्यतः यदि सिद्धान्ती शून्यवादाद्वैतवादयोर्वैलक्षण्यमङ्गीकुर्यात् शून्यवादिमते जगतोऽत्यन्तासत्त्वात् अद्वैतमते जगतो असद्विलक्षणत्वाद्, इति तन्न युक्तम्, अर्थक्रियाकारित्वादिना प्रपञ्चे शशशृङ्गादिवैलक्षण्यस्य शून्यवादिमतेऽपि सत्त्वात् सूत्रस्य शून्यवादिमतमात्रनिरासकत्वानुपपत्तेः। शून्यवादनिरासकसूत्रस्य अद्वैतवादनिरासकत्वस्यापि सत्त्वात् शून्याद्वैतमतयोर्वैलक्षण्याभावात्। प्रतिपन्नोपाधौ स्वरूपतस्त्रैकालिकनिषेधप्रतियोगित्वाङ्गीकारे शून्यवादिमते इव अद्वैतमतेऽपि जगतोऽत्यन्तासत्त्वमेव प्राप्तमतः शून्यवादनिरासकसूत्राणाम् अद्वैतमतनिरासकत्वमपि युक्तम्। ननु जगति प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् अद्वैतवादिना अङ्गीकृतमस्ति असति शशशृङ्गादौ तु नास्ति शशशृङ्गादेः प्रतिपन्नोपाधेरभावात् अतोऽर्थक्रियाकारित्वादिना असद्वैलक्षण्यस्य शून्यवादिमते सत्त्वेऽपि प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वेन

न, सूत्रार्थानवबोधात्, तथा हि सद्रूपाद् ब्रह्मणो जगत्सर्गं वदतः समन्वयस्य सर्वमसदित्यनुमानेन विरोधसन्देहे ।

---

धर्मेणासद्वैलक्षण्यम् अद्वैतवादिनाऽङ्गीक्रियते इति चेत् प्रतिपन्नोपाधौ निषेधप्रतियोगित्वेन असद्वैलक्षण्यस्य अद्वैतवादिनाप्यनङ्गीकारात् इत्याह मूले निषेधप्रतियोगित्वरूपस्य असद्वैलण्यस्य त्वयापि अनङ्गीकारादिति। अयं भावः प्रतिपन्नोपाधौ स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वाङ्गीकारे शून्यवादिमते इव त्वन्मतेऽपि जगतोऽत्यन्तासत्त्वमेव प्राप्तमिति, शशशृंगवत् प्रतिपन्नोपाध्यभाव एव प्राप्तः। अतः शून्यवादिमतनिरासकसूत्राणाम् अद्वैतमतनिरासाय उदाहरणं युक्तम् । किञ्च प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं जगति अङ्गीकृत्य असद्वैलक्षण्यं यद्युच्यते तर्हि अद्वैतवादिमते वैधर्म्याच्च न स्वप्नादिवदिति स्वप्नात् वैधर्म्योक्तिरयुक्ता स्वप्नस्याद्वैतमते प्रातिभासिकत्वेन प्रतिपन्नोपाधौ निषेधप्रतियोगित्वसत्त्वेनानेनरूपेण स्वप्नजगतोः साम्यादित्याह—सूत्रे स्वप्नवैलक्षण्योक्त्ययोगाच्चेति । ननु अनेन रूपेण साम्येऽपि व्यावहारिकसत्त्वप्रातिभासिकसत्त्वाभ्यां जगत्स्वप्नयोरद्वैतमते वैधर्म्यमस्तीत्यत आह—व्यावहारिकसत्यत्वमात्रेणेति । त्वया अद्वैतवादिनेत्यर्थः । व्यावहारिकसत्यत्वमात्रेणासद्वैलक्षण्यस्य शून्यवादिमतेऽपि सत्त्वाच्च । इत्याह—असद्वैलक्षण्यमात्रस्येति । तथा च शून्यवादिमतसाम्यमेवाद्वैतमतस्येति भावः । व्यावहारिकसत्त्वं शून्यवादिनाप्यङ्गीक्रियते इति कथं ज्ञायते इत्यतस्तद्वाक्यं पठति तदुक्तं बौद्धैरिति ।

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृतिसत्यत्वं सत्त्वञ्च परमार्थतः ॥"

अन्यच्च—

"सत्त्वं तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम् ।
सांवृतं व्यावहार्यं स्यात् निवृत्तौ पारमार्थिकम् ॥

देशनोपदेशः । निवृत्तौ—संवृतिशब्दोक्ताविद्यानिवृत्तौ, तस्मात् मिथ्यात्वसाधकदृश्यत्वादिहेतूनां श्रुत्यादिभिर्बाधो दुर्वार इति भावः ॥१३॥

पूर्वपक्षः समाप्तः ।

१४—शास्त्रदर्पणोक्तरीत्या पञ्चमभावाधिकरणं रचयन्नाह—न सूत्रार्थानवबोधात् तथा हि सद्रूपाद् ब्रह्मणो जगत्सर्गं वदतः समन्वयस्य सर्वमसदित्यनुमानेन विरोधसन्देहे—

न सन्नासन्नसदसत् न चानुभयतत्त्वकम् ।
विमतं तर्कपीड्यत्वान्मरीचिषु यथोदकम् ॥

इति, ब्रह्मसाधारण्यान्निस्तत्त्वतायां प्राप्तायां सूत्रेण परिहारः । सतो ब्रह्मणो नाभावः न शून्यत्वम् । उपलब्धेः सत्त्वेन प्रमाणात् प्रतीतेः । तथा च किञ्चिन्न परमार्थसदवश्यं शून्यवादिनापि स्वीकार्यम् । अन्यथा बाधस्य निरवधिकत्वप्रसङ्गादिति सूत्रार्थः । स च न प्रपञ्चमिथ्यात्व-विरोधी । तथा चोक्तम्—

"बाधितोऽप्रह्नवो मानैः व्यावहारिकमानता ।
मानानां तात्त्विकं किञ्चिद्वस्तु नाश्रित्य दुर्भणा ॥"

इति । नापि स्वप्नवैधर्म्योक्त्ययोगः तस्याः विमतं निस्तत्त्वं तर्कपीड्यत्वात् मरुमरीचिकाजलवत् इत्यनुमाने बाध्यत्वप्रमाणागम्यत्वदोषजन्यत्वाद्युपाधिप्रदर्शनपरत्वात्, विज्ञानवादनिराकरणपरेणापि नानेन सूत्रेण विरोधः । रूपादिरहितब्रह्मजगदुपादानत्वप्रतिपादक-

---

"न सन्नासन्नसदसत् नचानुभयतत्त्वकम् ।
विमतं तर्कपीड्यत्वान्मरीचिषु यथोदकम् ॥"

इति ब्रह्मसाधारण्यान्निस्तत्त्वतायां प्राप्तायां सूत्रेण परिहारः । सतो ब्रह्मणो नाभावः न शून्यत्वम् उपलब्धेः सत्त्वेन प्रमाणात् प्रतीतेः । तथा च किञ्चित् परमार्थसदवश्यं शून्यवादिनापि स्वीकार्यम् । अन्यथा बाधस्य निरवधिकत्वप्रसंगादिति सूत्रार्थः । स च न प्रपञ्चमिथ्यात्व-विरोधी तथा चोक्तम्—

"बाधितोऽपह्नवो मानैः व्यावहारिकमानता ।
मानानां तात्त्विकं किञ्चित् वस्तु नाश्रित्य दुर्भणा ॥" इति ।

नापि स्वप्नवैधर्म्योक्त्ययोगः तस्याः विमतं निस्तत्त्वं तर्कपीड्यत्वात् मरुमरीचिकाजलवत् इत्यनुमाने बाध्यत्वप्रमाणागम्यत्वदोषजन्यत्वाद्युपाधिप्रदर्शनपूर्वकत्वात् विज्ञानवादनिराकरणपरेणापि नानेन सूत्रेण विरोधः । रूपादिरहितब्रह्मजगदुपादानत्वप्रतिपादकसमन्वयस्य लीला-

समन्वयस्य नीलाद्याकारं विज्ञानं साधयता अनुमानेन विरोधसन्देहे

> "स्वप्नधीसाम्यतो बुद्धेर्बुद्ध्याऽर्थस्य सहेक्षणात् ।
> तदभेदेनानिरूप्यत्वात् ज्ञानाकारोऽर्थ इष्यताम् ॥

विमता धीः न ज्ञानव्यतिरिक्तालम्बना धीत्वात् स्वप्नधीवत् । विपक्षे च ज्ञानाभानेऽप्यर्थभानप्रसङ्गो बाधकः । न हि भिन्नयोरश्वमहिषयोः सहोपलम्भनियमोऽस्ति तस्मान्न ज्ञानातिरिक्तं सदिति प्राप्ते परिहारसूत्रं—'नाभाव उपलब्धेरि'त्यादि ।

> बाधेन सोपाधिकतानुमाने, उपायाभावेन सहोपलम्भः ।
> सारूप्यतो बुद्धितदर्थभेदः स्थूलार्थभङ्गो भवतोऽपि तुल्यः ॥

सूत्रार्थस्तु नाभावः ज्ञानातिरिक्तस्यार्थस्य नासत्त्वम्, किन्तु व्यावहारदशाबाध्यार्थक्रियाकारित्वरूपं सत्त्वमेव । उपलब्धेः ज्ञानातिरेकेण प्रमाणैरुपलब्धेः । स्वप्नवैधर्म्योक्तिः बाध्यत्वाद्युपाधिप्रदर्शनाय । तेन बाधात् सोपाधिकत्वाच्च पूर्वानुमानं दुष्टमित्यर्थः ।

---

द्याकारं विज्ञानं साधयता अनुमानेन विरोधसन्देहे—

> "स्वप्नधीसाम्यतो बुद्धेर्बुद्ध्याऽर्थस्य सहेक्षणात् ।
> तदभेदेनानिरूप्यत्वात् ज्ञानाकारोऽर्थ इष्यताम् ॥"

विमता धीः न ज्ञानव्यतिरिक्तालम्बना धीत्वात् स्वप्नधीवत् । विपक्षे च ज्ञानाभानेप्यर्थभानप्रसंगो बाधकः । नहि भिन्नयोरश्वमहिषयोः सहोपलम्भनियमोऽस्ति तस्मान्न ज्ञानातिरिक्तं सदिति प्राप्ते परिहारसूत्रम्—

नाभाव उपलब्धेरित्यादि ।

> बाधेन सोपाधिकतानुमाने, उपायभावेन सहोपलम्भः ।
> सारूप्यतो बुद्धितदर्थभेदः स्थूलार्थभङ्गो भवतोऽपि तुल्यः ॥

सूत्रार्थस्तु नाभावः ज्ञानातिरिक्तस्यार्थस्य नासत्त्वं, किन्तु व्यवहारदशाऽबाध्यार्थक्रियाकारित्वरूपं सत्त्वमेव । उपलब्धेः ज्ञानातिरेकेण प्रमाणैरुपलब्धेः । स्वप्नवैधर्म्योक्तिः बाध्यत्वाद्युपाधिप्रदर्शनाय । तेन बाधात् सोपाधिकत्वाच पूर्वानुमानं दुष्टमित्यर्थः । तस्मान्नैवमपि

तस्मान्नैवमपि विरोधशंका। तदुक्तं तस्मान्न ज्ञानाकारोऽर्थः किन्तु बाह्यः। स चार्थक्रियाकारित्वसत्त्वोपेतोऽपि अद्वैतश्रुतिवशात् ब्रह्मणि कल्पितो न परमार्थसन्निति सिद्धान्तस्य सुगतमतादभेद इति। उक्तं चात्मतत्त्वविवेके—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनये जयश्रीः।
नोचेदनित्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः॥

इति धर्मिग्राहकमानबाधश्च प्रागेव परिहृतः इति शिवम्॥१४॥

इति विश्वमिथ्यात्वस्यागमादिबाधोद्धारः।

विरोधशंका। तदुक्तं तस्मान्नज्ञानाकारोऽर्थः किन्तु बाह्यः। स चार्थक्रियाकारित्वसत्त्वोपेतोऽपि अद्वैतश्रुतिवशात् ब्रह्मणि कल्पितो न परमार्थसन्निति सिद्धान्तस्य सुगतमताद्भेदः इति। उक्तश्चात्मतत्त्वविवेके—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनये जयश्रीः।
नोचेदनित्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः॥

इति

धर्मिग्राहकमानबाधश्च प्रागेव परिहृतः इति शिवम्।

अस्मिन् अभावाधिकरणे वर्णकद्वयमस्ति। प्रथमे वर्णके विज्ञानवादं निराकृत्य द्वितीयेन वर्णकेन शून्यवादो निराक्रियते। कल्पतरुकृदमलानन्दकृतशास्त्रदर्पणस्थं द्वितीयवर्णकं प्रथमत आश्रित्याधिकरणार्थमाह—न सूत्रार्थानवबोधादिति। कस्तर्हि सूत्रार्थ इत्यत शास्त्रदर्पणस्थं वाक्यं पठति सद्रूपाद् ब्रह्मणो जगत्सर्गं प्रतिपादयतः प्रथमाध्यायस्य सर्वमसदिति अनुमानेन विरोधसन्देहे प्राप्तं तावत्—न सन्नासन्नसदसत्······मरीचिषु यथोदकमिति। तर्कपीड्यत्वात्—तर्कविरुद्धरूपात्। तथा हि न सत् बाधयोग्यत्वात् नासत् कालसम्बन्धात् न सदसत्, विरोधात् न चानुभयतत्त्वकं तात्त्विकत्वेन सदसद्भेदयोरभावात्। ताभ्यां निर्वचनासम्भवात्। माध्यमिकमते सर्वस्य निस्तत्त्वतया ब्रह्मणोऽपि निस्तत्त्वता इत्याह—ब्रह्मसाधारण्यान्निस्तत्त्वतायां प्राप्तायाम्। नाभावः उपलब्धेरिति सूत्रेण परिहारः शून्यवादिमतस्येत्यर्थः। सूत्राक्षरयोजनया सूत्रार्थमाह—सतो ब्रह्मणो नाभावः—न शून्यत्वमुप-

लब्धेः, सत्त्वेन प्रमाणात् प्रतीतेः। ब्रह्म न बाध्यं सर्वबाधसाक्षित्वेन बाधायोग्यत्वात् अन्यथा बाधप्रसिद्धिरेव न स्यादिति भावः। पद्यमिदं शास्त्रदर्पणकृता एवं व्याख्यातं—तथा हि न तावत् ज्ञानाकारत्वमर्थस्य तन्निरासात् पूर्ववर्णकेन इति शेषः। न तत्र बाह्योऽर्थः तस्य परमाणुतत्समूहत्वविकल्पप्रसहत्वस्योक्तत्वात् चतुर्थाधिकरणे इति शेषः। तथा च न ज्ञानमपि निर्विषयज्ञानायोगात्, नापि साक्षी तस्मिन् प्रमाणाभावात्। मेयत्वे तस्यापि बाह्यमेयवत् सत्त्वायोगात्। एवञ्च विश्वं न सत् नाप्यसत् अपरोक्षत्वात्, न सदसत् सत्त्वासत्त्वयोरेकत्र विरोधात्। नापि अनुभयं एकनिषेधस्येतरविधानेनान्तरीयकत्वात् तस्मान्निस्तत्त्वतैव वस्तुनामिति प्राप्तेऽभिधीयते—

> बाधितोऽपह्नवो मानैर्व्यावहारिकमानता।
> मानानां तात्त्विकं किञ्चिद्वस्त्वनाश्रित्य दुर्भणा॥

प्रमाणैर्हि यथाभूतस्योपलब्धेः न तस्याभाव इत्यतः उक्तम्—नाभाव उपलब्धेः इति। अथ विचारेण प्रागुक्तेन प्रमाणानां तात्त्विकं प्रामाण्यं व्युदस्यते न सांव्यवहारिकं तथा च भिन्नविषयत्वादविरोध इति तन्न, तथा सति हि समस्तप्रमाणगम्यार्थविपरीतं परमार्थवस्तुगोचरयता बाधकमानेनेतरप्रमाणप्रमेयेषु तत्त्वमपह्नुत्य सांव्यावहारिकत्वं व्यवस्थापनीयम्, तच्च परमार्थवस्तु नास्ति तस्य प्रमाणतोऽनुपलब्धेः। उपलब्धौ वा शून्यवादहानात्। तदिदमुक्तं नाभाव उपलब्धेरिति। एतदेवाभिप्रेत्य उक्तं मूले तथा च किञ्चित् परमार्थसदवश्यं शून्यवादिनापि स्वीकार्यमन्यथा बाधस्य निरवधिकत्वप्रसंगात् इति सूत्रार्थः। एवं शून्यवादिमतनिरासाय नाभाव उपलब्धेरिति सुत्रे योजिते नेदं सूत्रं प्रपञ्चमिथ्यात्वविरोधि यत् पूर्वपक्षिणा शंकितमासीत् अतः मूलकृतोक्तं सूत्रार्थानवबोधादिति। शून्यवादनिरासेन प्रपञ्चमिथ्यात्ववादो निरस्तो न भवतीति भावः। शून्यवादिनापि प्रपञ्चबाधनाय किञ्चित् परमार्थसद्वस्तु अवश्यं स्वीकार्यं बाध्याधिकसत्ताकवस्तु विषयिणी धीरेव बाध्यबाधिका भवति। समानसत्ताकयोर्बाध्यबाधकभावाभावात्। शून्यवादिनापि प्रपञ्चबाधनाय बाधकज्ञानविषयत्वेन किञ्चित् परमार्थं सद्वस्तु अवश्यमङ्गीकरणीयम्? अन्यथा बाधस्य निरवधिकत्वप्रसंगादिति। बाधधाराया विश्रान्तिर्न स्यात् तथा च बाधासिद्धिरेव स्यादिति सूत्रार्थः। अनेन सूत्रेण पारमार्थिकं किञ्चित् वस्त्वस्तीति साधितम्, तथा चोक्तं शास्त्रदर्पणे इति शेषः। श्लोकस्याक्षरिकार्थस्तु

प्रानैः प्रमाणैः वस्तुनः अपह्नवो बाधः बाधितस्य व्यावहारिकमानता मानानां—बाधकमानानां तात्त्विकं किञ्चिद्वस्तु अनाश्रित्य बाधितस्य व्यावहारिकमानता दुर्भणा वक्तुमशक्येति। यच्च पूर्वपक्षिणा शंकितं प्रपञ्चमिथ्यात्ववादिमते वैधर्म्याच्च न स्वप्नादिवदिति सूत्रमसमञ्जसमिति तत्समाधत्ते—नापि स्वप्नवैधर्म्योक्त्ययोग इति। तस्या उक्तेः उपाधिप्रदर्शनार्थत्वात् न वैधर्म्योक्त्ययोगः तथा हि विमतं निस्तत्त्वं तर्कपीड्यत्वात् मरुमरीचिकाजलवदित्यनुमाने माध्यमिकप्रदर्शिते बाध्यत्वं प्रमाणागम्यत्वदोषजन्यत्वाद्युपाधिप्रदर्शनार्थत्वात्। एतदपि शास्त्रदर्पणे उक्त वैधर्म्यसूत्रं तु पूर्ववदेव मरीच्युदकदृष्टान्ते बाध्यत्वोपाधिपरत्वेन योज्यम्। मरीच्युदकदृष्टान्ते बाध्यत्वं प्रमाणागम्यत्वदोषजन्यत्वाद्युपाधीनां स्वस्थं निस्तत्त्वरूपसाध्यव्यापकत्वं, विमते पक्षे उपाधीनामसत्त्वात् साधनाव्यापकत्वं बोध्यम्। साध्यव्यापकोपाधीनां पक्षेऽसत्त्वात् पक्षे साध्यस्यापि अभावः सिध्यतीति भावः। अन्यच्च शास्त्रदर्पणे उक्तं क्षणिकत्वाच्च इति सूत्रेऽभ्युपगमादिति शेषः, अतश्च क्षणिकत्वस्याभ्युपगमात् सर्वशून्यत्वाभ्युपगमाच्च व्याहतवादी सुगत इत्यर्थः।

अभावाधिकारणस्य शून्यवादनिराकरणपरत्वं समाप्तम्।

इदानीं अस्याधिकरणस्य विज्ञानवादनिराकरणपरतया योजनं क्रियते, विज्ञानवादनिराकरणपरेणापि नानेन सूत्रेण विरोधः इति मूलम्। भाष्यभामतीकल्पतरुप्रभृतिषु इदमधिकरणं विज्ञानवादनिराकरणपरतया शून्यवादनिराकरणपरतया च व्याख्यातम्, एतच्च शास्त्रदर्पणे सुसंगृहीतम् अतस्तदनुसृत्यैव मूलकारैः अस्याधिकरणस्य विज्ञानवादनिराकरणपरतां प्रदर्शयति—नीलाद्याकारं विज्ञानं साधयतानुमानेन समन्वयस्य विरोधसन्देहे प्राप्तं तावत—

स्वप्नधीसाम्यतो बुद्धेर्बुद्ध्याऽर्थस्य सहेक्षणात्।
तद्भेदेनानिरूप्यत्वात् ज्ञानाकारोऽर्थ इष्यताम्॥

विज्ञानवादसाधकानि अनुमानानि कारिकया संगृह्य न्यायवाक्यप्रयोगारूढं करोति। विमता धीः इत्यादि। विपक्षे—ज्ञानव्यतिरिक्तालम्बनत्वे ज्ञानभानेऽपि विषयभानप्रसङ्गो बाधकस्तर्कः। बुद्ध्यार्थस्य सहेक्षणादित्यस्य तर्कप्रदर्शनपरत्वमाह नहि भिन्नयोरश्वमहिषयोः, सहोपलम्भनियमोऽस्ति इति। अतः परं शास्त्रदर्पणे अधिकं वर्तते तद्यथा—अपि च न ज्ञानं चक्षुर्वदर्थज्ञापकं तथा सति बनितज्ञान-

स्यापि ज्ञापकत्वेन अनवस्थापत्तात् । तस्मात् ज्ञानमेवार्थप्रकाशः । ज्ञानञ्च ज्ञेयानाकारं न ज्ञेयं व्यवस्थापयितुमलं ; नीलज्ञानेनापि पीतप्रतिभासप्रसङ्गात् । एकश्चायमाकारोऽनुभूयते । स चेत् ज्ञानस्य नार्थसद्भावे प्रमाणमस्ति । किञ्च बाह्योऽर्थः परमाणवो वा तत्समूहो वा, नाद्यः, परमाणूनां स्थूलनीलाकारप्रत्यालम्बनत्वात् । निरन्तरोत्पन्नाः नीलपरमाणवः स्थूलबुद्ध्यालम्बनमिति चेत् , न, नैरन्तर्यासिद्धेः । गन्धरसादिपरमाणूनामपि नीलपरमाणूनां मध्ये सम्भवेनाव्यवधानाभावात् । नापि द्वितीयः, समूहस्य समूहिपरमाणुभिरभेदे प्रथमपक्षोक्तदोषात् । भेदे च तादात्म्यायोगात् । समवायस्य च दूषितत्वात् । तस्मादेभिस्तर्कैरनुगृहीतात् प्रागुक्तानुमानात् ज्ञानाकारोऽर्थः । न च सिद्धसाधनम्, नहि वेदान्तिनः चैतन्यस्यार्थाकारतां मन्यन्ते । एवं प्राप्ते परिहारसूत्रं—नाभावः उपलब्धेरित्यादि । शास्त्रदर्पणस्थां कारिकां पठति—बाधेन सोपाधिकतानुमाने इत्यादि । कारिकाया अयमर्थः—विमता जाग्रद्धीः न ज्ञानव्यतिरिक्तालम्बना धीत्वात् स्वप्नधीवत् इत्यनुमाने बाधेन सह सोपाधिकता वर्तते इति शेषः । ज्ञानादत्यन्तभेदस्यार्थेपूपलम्भात् ज्ञानार्थयोरभेदानुमानं बाधितार्थकम् बाध्यत्वाच्चोपाधियुक्तञ्च । उपायभावेनेति । यथा प्रभारूपचाक्षुषग्रहे, उपायभूता तद्विषयीभूतापि न रूपं तथा ज्ञाने उपायभूतो विषयः ज्ञानग्रहे विषयीभूतोऽपि न ज्ञानं विषयोपरागेणैव ज्ञानग्रहात् विषयस्य ज्ञानोपायता । ननु ज्ञानेनैव सर्वव्यावहारोपपत्तेः ज्ञानान्यविषयकल्पने गौरवं तत्राह—सारूप्यतो बुद्धितदर्थभेदः इति । स्थूलार्थभङ्गेऽपि सारूप्यतो ज्ञानतदर्थयोरत्यन्तभेदः सौत्रान्तिकस्येव तव योगाचारस्यापि आवश्यकत्वेन तुल्यः । सौत्रान्तिको हि अवयविखण्डनादिभिः युक्तिभिः स्थूलार्थं खण्डयित्वा परमाणुसमूहमेव ज्ञानादत्यन्तभिन्नम् अर्थमङ्गीकृतवान् । अन्यथा ज्ञाने विषयस्य प्रतिबिम्बरूपसारूप्यानुपपत्तेः । त्वयापि विज्ञानवादिना स्थूलार्थं खण्डयता तथा अङ्गीकार्यम् अन्यथा यत् त्वदभ्युपगतं ज्ञाने विषयस्य सारूप्यं तदनुपपत्तेः ज्ञानविषययोरभेदे तादात्म्यानुपपत्तेः । नहि ज्ञानं ज्ञानमिति तादात्म्यधीः सम्भवति । न च तयोः कल्पितभेदस्वीकारेण प्रोक्तानुपपत्तिरिति वाच्यम्, भेदस्येव तादात्म्यस्यापि कल्पितत्वौचित्यादन्यस्य ज्ञानस्योत्पत्तिविनाशकल्पने गौरवात् । संसर्गखण्डनयुक्त्या ज्ञाने नीलादितादात्म्यस्य बाधात् । न चौपनिषदां मते विषयाणामुत्पत्तिविनाशकल्पनेन मया साम्यमिति वाच्यम्, अनादिविषयकज्ञानस्थले तथ

ज्ञानोत्पत्त्यादिगौरवात्, तेषां विषयस्याप्युत्पत्त्यकल्पनात्। स्वप्नधीर्बाध्येति। तत्रोपाधेः साध्यव्यापकता। जाग्रत्धीरबाध्येति तत्रोपाधेः साधनाव्यापकतेति भावः।

बाधेन सोपाधिकतानुमाने इति कारिकायाः शास्त्रदर्पणप्रदर्शिता व्याख्या लिख्यते—यदुक्तं जाग्रद्धीः न ज्ञानस्वरहितालम्बना धीत्वात् स्वप्नधीवदिति, तत्र बाध्यत्वमुपाधिः अर्थक्रियाकारित्वं हि सत्त्वं त्वन्मते। तच्च जाग्रद्गम्यस्य अबाधितमस्ति न स्वप्नधीगम्यस्य तस्यार्थक्रियायाम् विसंवादात्, तथा च न साधनव्यापकं बाध्यत्वम्। अपि च जाग्रद्धियोऽपि बाधे बाधितार्थया तया स्वप्नधियो बाधानुपपत्तेस्तन्निरालम्बनत्वासिद्धौ दृष्टान्तस्य साध्यविकलत्वं स्यात्। प्रमाणाजन्यत्वेन च सोपाधिकता। नहि स्वप्नधियो जाग्रद्धिय इव इन्द्रियलिङ्गादीनि प्रमाणानि जनकानि सन्ति। दोषजन्यत्वेन च सोपाधिकत्वम्। अस्ति हि निद्रादोषो मनसि स्वप्नधीहेतौ बाधितविषयत्वं च अनुमानस्य। प्रत्यक्षादिभिरर्थक्रियासमर्थस्य जाग्रद्वस्तुनः परिच्छेदात्, यच्च सहोपलम्भनियमात् ज्ञानार्थयोरभेद इति तत्र अर्थव्यवहारस्य उपलम्भोपायत्वनिमित्तः सहोपलम्भनियमः न ज्ञानज्ञेयाभेदकृतः। यथा हि नियमेन चक्षुः प्रभोपरक्तमेव रूपवद् वस्तु साक्षात्क्रियते, न च तावता प्रभात्मकं वस्तु। किन्तु उपायः प्रभा तत्साक्षात्कारे तद्वत्। यच्च ज्ञानस्यार्थव्यवस्थायै विषयसारूप्यमास्थितं न तेन विषयोऽपहोतुं शक्यः असत्यर्थे विषयसारूप्यस्य व्यवस्थायाश्चानुपपत्तेः। योऽपि स्थूलपदार्थस्य परमाणुत्वं तत्समूहत्वं वेति विकल्प्य भङ्गः कृतः स स्थूलार्थस्य ज्ञानाकारत्वेऽपि अविशिष्टः। तथा हि अर्थस्य ज्ञानाकारत्वं वदता अर्थो वक्तव्यः तदभावे कस्य ज्ञानाकारत्वं वर्ण्येत। तत्र तावत् स्थूलनीलाकारप्रत्ययस्य न परमाणवः आकारः तेषां तत्राप्रतिभासात्। तस्मात् परमाणुव्यतिरिक्तस्तत्समूहः तदारब्धो वा कश्चित् स्थूलार्थस्त्वयाऽपि स्वीकर्तव्यः। स तु मम मायामयः [ तव तु मायाविनः स्थायिनो निर्मातुरभावात् अनुपपन्नः। न च वासनाप्रापितोऽयमर्थः वासनाया अर्थोपलब्धिपूर्वकत्वात् अर्थोपलब्धेश्च अर्थमन्तरेणासम्भवात्। अन्ततोऽर्थस्येष्टव्यत्वात्। न च तव वासनाश्रयः क्षणिकस्यालयविज्ञानस्य ज्ञानजन्मनि तद्वासनोत्पत्तौ च अस्थायित्वेन तदाश्रयत्वायोगात्। तस्मान्न ज्ञानाकारोऽर्थः किन्तु बाह्यः, सचार्थक्रियाकारित्वसत्त्वोपेतोऽपि अद्वैतश्रुति-

वशात् ब्रह्मणि कल्पितः न परमार्थसन्निति सिद्धान्तस्य सुगतमताद्भेद इति।

शास्त्रदर्पणप्रदर्शिता व्याख्या समाप्ता।

मूलग्रन्थे तदुक्तमित्यनेन शास्त्रदर्पणवाक्यमेवोद्धृतम्, तद्वाक्यं तु इतः प्रागेव लिखितम्। आत्मतत्त्वविवेकस्थं पद्यं, मिथ्यात्वमिथ्यात्वनिरूपणप्रकरणे गौडब्रह्मानन्देनोद्धृत्य व्याख्यातं तदेवेह लिख्यते—अस्मिन् विज्ञानवादिदूषणोपसंहाररूपे पद्येऽयमर्थः—ग्राह्यमेदं घटादिबाह्यार्थं तिरस्कृत्य घटादिरूपाकाराभिन्नरूपेण ज्ञानस्य वृत्तिः सम्बन्धः क्वापि नास्ति। घटादिबहिरर्थबाधके अद्वैतब्रह्मरूपाधिष्ठानसाक्षात्कारे जाते तु बलिनि सर्वेभ्यो द्वैतवादिमतेभ्यो बलवति वेदनये वेदान्तदर्शने जयश्रीः जयोत्कर्षकाष्ठा। तस्मात् बौद्धमतापेक्षया तार्किकमते जयः तदपेक्षयापि सांख्यादिमते आत्मनोऽसंगत्वादिस्वीकारात्। तदपेक्षया वेदान्तिमते द्वैतमिथ्यात्वादिस्वीकारात्। अतो जयोत्कर्षकाष्ठा। यदि तु निष्कामकर्मानुष्ठानाय चित्तं न शुद्धं तदा श्रवणादौ सत्यपि तादृशसाक्षात्काराभावेन विश्वमनित्यतया प्रतीयमानमपि तथ्यमेव व्यावहारिकसत्यत्वात् तत्रापातः तार्किकादिभिः विश्वं ब्रह्मवत् परमार्थसत्यमिति वक्तुं शक्यं तथागतस्य बौद्धस्य तु मतस्य ज्ञानात्यन्ताभिन्नं जगदलीकमित्येवं रूपस्य कोऽवकाश इति [अ० सि० पृ० २२७]।

ननु मिथ्यात्वानुमाने मानसिद्धस्यैव पक्षत्वात् धर्मिग्राहकमानबाधः तत्राह—धर्मिग्राहकमानबाधश्चेति। धर्मिग्राहकमाने व्यावहारिकप्रामाण्यमुपजीव्यं, तच्च मिथ्यात्वानुमानेन नापसार्यते यच्च तात्त्विकं प्रामाण्यमपसार्यते तन्नोपजीव्यमित्यादिपूर्वमेवोक्तमिति—पूर्वपक्षिणा यदुक्तं—

> द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
> लोके संवृतिसत्यत्वं सत्त्वञ्च परमार्थतः॥

तन्न, बौद्धैरुद्भावितम्, किन्तु तैत्तिरीयोपनिषदि एवमाम्नायते—सत्यञ्चानृतञ्च सत्यमभवदिति [ब्रह्मानन्दवल्ली ६ अनु०] सत्यं ब्रह्म सत्यं व्यावहारिकसत्यं जगद्रूपमनृतं प्रातिभासिकं शुक्तिरजतादिकमभवत्। द्वयोः सत्ययोर्वैलक्षण्ये सत्यस्य पुनः किं सत्यभवनं स्यात्, अवैलक्षण्ये भवनमेव न स्यात्। नहि भवति घटो भवतीति तथा च श्रुतिनिष्पन्दमेव बौद्धैः स्वकीयत्वेन उद्घोषितम्। नैतत्

तेषामेव। एवं सत्यस्य सत्यमिति, प्राणा वै सत्यं तेषामेष सत्यमिति [बृ०उ०२।३।६] सत्यद्वैविध्यं व्यावहारिकपारमार्थिकसत्यद्वयकल्पनां विना कथमपि न संगच्छते। पुनरपि तदेतदमृतम्, सत्येनच्छन्नं, प्राणो वा अमृतं, नामरूपे सत्यम्, ताभ्यामयं प्राणच्छन्नः [बृ० उ० १।६।३] इत्यादिषु अपि श्रुतिषु सत्यभेदं विना सत्यद्वय-कल्पनमनुपपन्नं स्यात्। व्यावहारिकपारमार्थिकभेदेनैव सत्यद्वयं भवितुमर्हति। तथा च बौद्धैरुक्तम्—द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशनेति न तद्बौद्धैरुद्भावितम्, किन्तु उपनिषद्वाक्यात् प्रतिपादितं तैरपहृतमित्येव तत्त्वम् ॥१४॥

इति श्रीमन्महामहोपाध्यायलक्ष्मणशास्त्रिश्रीचरणान्तेवासिश्रीयोगेन्द्र-
नाथदेवशर्मविरचितायामद्वैतसिद्धिटीकायां बालबोधि-
न्यामागमबाधोद्धारविवरणं समाप्तम्

